May 1906

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 101.

अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः

# जागदीशी टीका ।

भट्टनाथस्वामिना संशोधिता ।

# THE JÂGADÎSÎ,

A COMMENTARY ON

ANUMÂNA-CHINTÂMANÎ-DÎDHITÎ

BY SIROMANI.

EDITED BY

BHATTANÂTHA SWÂMY.

FASCICULUS I.

PUBLISHED AND SOLD BY THE SECRETARY

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES.

AGENTS.—OTTO HARRASSOWITZ LEIPZIG:

PANDIT JYESHTHÂRÂMA MUKUNDJÎ, BOMBAY.

*Printed by Hari Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

*Price Rupee One.*

*Registered According to Act XXV. of 1867.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—१०१

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

NOS. 101, 102, 110, 111, 112, 115, 116, 118, 119, 120, 124, 125 & 127.

---

अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः

# जागदीशी टीका ।

ईश्वरानुमानचिन्तामणिश्च ।

काव्यतीर्थ-न्यायोपाध्यायपदवीमता

श्रीसोमनाथपाध्यायेन संशोधितौ ।

# THE JÂGADÎSÎ,

A COMMENTARY ON

ANUMÂNA-CHINTÂMAṆI-DÎDHITI

BY ŚIROMAṆI;

*And* Îśwarânumâna Chintâmaṇi.

EDITED BY

SOMANÂTHOPÂDHYÂYA-NYÂYOPÂDHYÂYA AND KÂVYATÎRTH.

---

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT;

BENARES:

AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:

PAṆḌITA JYESHṬHARÂMA MUKUNDAJI, BOMBAY.

*Printed by Hari Dâs Gupta, Proprietor.*

AT THE VIDYÂ-VILÂSA PRESS.

BENARES.

---

1908.

*Registered According to Act XXV. of 1867.*

नमः श्रीगुरुचरणेभ्यः

# भूमिका ।

इह खलु विचित्रचङ्क्रमचातुरीपरिचितरोचिष्णुक्रकचचक्रचर्याचार्ये वैरिञ्चे प्रपञ्चे प्रकृतिदुःसहनानाविधव्यथाप्रथापथात्को नाम सचेताः पृथग्भविता समीक्ष्यते परीक्षकैः । प्रतिनिमेषनिष्पतदशेषव्यसनविशेषभियाऽभियान्तो नानोच्चावचयोनिषु न क्षणमपि सुखशय्यानिद्रामुद्रया क्रोडीक्रियन्ते केपि । मन्मथमदमन्थरनाकनितम्बिनीनिकरकरचामरधीरसमीरशिशिरीकृतरत्नसिंहासनमध्यमध्यासीनमवनतसुरनरकराञ्जलिकलिकाविलसदुपवनायमानभुवनमण्डलाधीश्वरं सुरेश्वरमपि न जातु जहाति शाश्वतोदयक्लेशावेशावेषः । तदवधार्य्यते पर्य्याकुलयापि धिया, आ सुरेश्वरमा च कीटकुलं प्रतिकूलवेदनीयमेव दुःखमसुभृतां तन्निवृत्तिरेव स्थेयः श्रेय इति युक्तमेवोक्तमभियुक्ततरैः "बाधनालक्षणं दुःखं, तदत्यन्तविमोक्षोऽपवर्गः" इति । तच्च दुःखं जन्मना तदपि प्रवृत्त्या सा च रागादिदोषैस्ते च मिथ्याज्ञानेनेति मिथ्याज्ञानमेव सर्वानर्थपारावारप्रवाहनिमज्जननिदानमूर्द्धाभिषिक्तमिति तस्यैव समूलमुन्मूलनाय प्रवर्तनीयं प्रेक्षावद्भिः । मिथ्याबुद्धिवासनापिशाचिकावेशविवशा हि नित्यात्मादावनित्यदेहादितादात्म्यं वस्तुतो मन्यमाना असमानदुरभिमानाक्रान्तास्तदनुकूलतया ज्ञातेषु प्रवर्तमाना निवर्तमानाश्च प्रतिकूलतया विदितेषु सदसदर्थेषु सञ्चितैर्धर्म्माधर्म्मपाशैर्निगडिता नानायोनिषु जायमाना निमज्जन्ति दुष्पारदुःखाकूपारमहोर्मिषु, यथावद्विवेकालोकसमुत्सारिततमसश्च हेयोपादेयरागद्वेषदोषविहीनाः सर्वतोऽप्रवर्तमानाः कर्माण्यसञ्चिन्वा-

नाः प्रारब्धबीजानि ज्ञानाग्निना भस्मसात्कृत्य जन्मान्यलभमाना न बध्यन्तेऽनर्थपाशशतैः । सा च मिथ्याबुद्धिर्नित्यात्मादावनित्यदेहादिधीरित्यादिका साधर्म्यवैधर्म्याभ्यामन्वयव्यतिरेकपर्यवसन्नाभ्यां यथावदात्मतत्त्वविवेकधिया शक्यते समूलमुन्मूलयितुम्, अतः सांसारिकव्यसनचक्रभ्रमिमनभिलष्यद्भिरात्मैव तत्त्वतो जिज्ञास्यः । स्वात्मा त्वहमित्याकृत्या साक्षात्कृत्या विषयीक्रियमाणोऽपि गौरोऽहमित्याद्यारोपितदेहाद्यभेदावगाहिमत्यययततमोमलीमसदृष्टिभिर्न याथातथ्येनावगन्तुं शक्यः कुतस्तरां मनसोऽप्यगोचरो लोकोत्तरमहामहिममहनीयः सर्वजगन्नियन्ता परमात्मा, यदप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिदुर्वासनामषीलेपमलिनान्तःकरणपरवशा निःसङ्कोचक्लेशं हानोपादानवैपरीत्यं तन्वानाः परामनर्थपरम्परां दुर्दशावशादासादयन्ति । करालकालपरिपाकप्रसृमरनास्तिकवादश्रद्धाजाड्यलब्धजन्मदुर्वादिपाशसाधनाभासज्वलनज्वालाविशोषितविवेकवारिषु मन्दधीभूमिषु कथङ्कारं हार्दसौहार्दाङ्कुरं जनयेत प्रणतकल्पपादपो जगदीश्वरः, विनिर्दिष्टप्रमन्दाक्षमन्दाक्षरमप्रामाण्यवादिभिः प्रामाण्यवादिभिरपि स्वस्वमनोनुरूपतात्पर्यपर्यालोचनाबद्धश्रद्धाद्वैतवादिभिर्निर्भरमुन्मथ्यमाना विगलितेदम्पर्यनिर्द्धारणशक्तिस्तपस्विनी श्रुतिरपि न बलादलौकिकं परमात्मानं साधयितुं शक्नोतीति युक्तिवाद एव शरणीकरणीयः प्रथममनेकान्तदर्शिभिः परीक्षकैः । युक्तिवादपरमास्त्रकृतबहुतरपरिश्रमस्य कस्य नाम धीरधौरेयस्य पुनः शतशो विनिकृतमर्मा स्थातुमपि पारयति वादिवीरः किं पुनरीषदपि दुरुक्तिसाहसमासादयितुम् । अत एव युक्त्यपरार्थानुमानमार्गपरिशीलनेन दृढीकर्तव्य आत्मवादो दुर्वारवादिवीरवदनसदनमुद्रणायेति सततः समुपक्रमयति श्रुतिर्मनननिविधिम् । तर्ककर्कशप्रज्ञामतिभामभामभा-

वविहितयावद्विशेषगुणसमस्तोपसमुच्छेदाः सुखियो निरन्तरं विगलितनिखिलोपप्लवजलधिप्लुतां मुक्तिशय्यामधिशयानाः प्रकाशयन्ति दुस्तर्कतर्कशास्त्रप्रसादप्रतिष्ठानिष्ठाम् ।

तदेवमप्रतिरूपस्वरूपसंसारान्धकूपप्रतिघातविकलीकृतानसुभृतः समुद्दिधीर्षुः करुणावरुणालयो भगवान् महर्षिर्गौतमः षोडशपदार्थतत्त्वविवेकदृष्टिसिद्धौषधायमानं तर्कशास्त्रं रचयाञ्चकार । तस्यैव महर्षेः प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणचतुष्टयवादिनो मतमवलम्बमानो लोकोत्तरनव्यन्यायप्रपञ्चप्रजापतिः श्रीमद्गङ्गेशोपाध्यायः प्रमाणचतुष्टयप्रामाण्यव्यवस्थापनपरं युक्तिदीप्तिजालजटालं तत्त्वचिन्तामणिग्रन्थं प्रणीय निसर्गसुन्दरवाङ्मधुमाधुरीधोरणीभिः प्रमोदयामास निखिलं भुवनतलम् । एष च निजग्रन्थे वाचस्पतिवचःसमुद्धरणात्सर्वतन्त्रस्वतन्त्रश्रीवाचस्पतिमिश्रादर्वाक्समये मिथिलामेदिनीमलञ्चकारेत्येव ज्ञायते । अस्य च ग्रन्थस्य लोकोत्तरतया श्रीजयदेवमिश्रेण आलोकनामकव्याख्या, श्रीरुचिदत्तेन प्रकाशनामकव्याख्या, श्रीमथुरानाथतर्कवागीशेन रहस्यनामकव्याख्या, श्रीरघुनाथशिरोमणिना दीधितिनामकव्याख्या निरमायि । आसु च शिरोमणिकृतदीधितिव्याख्याया अतिसङ्क्षिप्ततया सोपपत्तिकवस्तुतत्त्वप्रकाशकतया चात्युत्तमाया वङ्गभूमीश्रवणावतंसायिताभ्यां श्रीजगदीशतर्कालङ्कार-श्रीगदाधरभट्टाचार्याभ्यां सविस्तरं विरच्यते स्म निरुपमा व्याख्या । तत्र च अनुमानखण्डस्य जगदीशकृतव्याख्यायाः स्वरूपशोभनतागुणपाशवशीभूतविद्वन्मण्डलीषु प्राप्तपठनपाठनप्रचारायाः अद्यापि कार्त्स्न्येनाऽमुद्रितायाः पुस्तकान्वेषणे बहु क्लिश्यतोऽन्तेवासिनः समीक्ष्य पुण्यलवलाभलालसासमेधितोत्साहवशीकृतः श्रीयुतहरिदासगुप्तमहोदयः प्रवर्तयामास मुद्रितपत्रपरिशोधनाय भट्टनाथस्वामिनम् ।

तस्मिंश्च पूर्वपक्षव्याप्तिपर्यन्तं परिशोध्य कार्यवशात्स्वदेशं गते तेनैव गुप्तमहोदयेन प्रोत्साहितोऽहं यथामति प्रावर्तिषि संशोधने । अस्य च वाराणसीस्थराजकीयसंस्कृतपाठशालापुस्तकालयस्थितं तदध्यक्षपण्डितवरश्रीविन्ध्येश्वरीप्रसादशर्मसमनुग्रहलब्धं पठनपाठनप्रचारपरिशुद्धं जागदीशीपुस्तकं सम्पूर्णमुपलभ्य, उपाधिवादे चैतत्पुस्तकस्याऽशुद्धिबहुलतया विश्वविख्यातवैदुषीविभवास्मद्गुरुवरपूज्यपादश्रीमहामहोपाध्यायकैलासचन्द्रभट्टाचार्यशिरोमणिमहाशयानां वङ्गाक्षरलिखितमुपाधिवादग्रन्थं, केवलान्वयिव्यतिरेक्यवयवसव्यभिचारादिग्रन्थे मध्ये खण्डिततयाऽत्रत्यरणवीरसंस्कृतपाठशालाध्यापकश्रीपण्डित–न्यायोपाध्याय–साङ्ख्यतीर्थ–लक्ष्मणशास्त्रिद्राविडमहोदयानां वङ्गाक्षरलिखितपुस्तकं, पञ्चलक्षणादिप्रकरणानां केषाञ्चिन्मल्लिखितं च पुस्तकं, चिन्तामणेः एसियाटिक्सोसायटी–मुद्रितं श्रीजीवानन्दमुद्रितं च पुस्तकं, दीधितेः श्रीजीवानन्दमुद्रितं पुस्तकं च सम्पाद्य, व्यतिरेकिप्रकरणे दीधितिजागदीश्योरभावेन मथुरानाथकृतरहस्यं च सन्निवेश्य, योग्यपाठविशेषञ्च कुण्डलीमध्ये कृत्वा यथाबुद्धिवैभवं प्रकाशितोऽसौ महान् निबन्धः। तदेवमस्मिन्महति निबन्धजलधावुदुम्बरकीटकल्पधीवैभवेन बह्वपराद्धं स्यादिति सम्भावयन् प्रकृतिसुभगशिक्षाभिक्षाभिलाषप्रवणान्तःकरणोऽहं दोषज्ञमण्डलीमण्डनायमानान्विबुधमणीन् साञ्जलिकलिकोपहारं प्रीयतामनेन क्लेशलेशेन कृतज्ञः श्रीजगदीश्वरः सर्वान्तर्यामीति समभ्यर्थये

नयपालाभिजनः

| मार्गकृष्णपञ्चम्यां<br>सोमे. सम्वत्. १९६४<br>श्रीकाशी<br>शुभम्. | } | सिग्द्याल—इत्युपनामकः<br>श्रीसोमनाथशर्म्मा.<br>न्याय–वैशेषिकोपाध्यायः<br>काव्यतीर्थश्च । |
|---|---|---|

# जागदीशी—दीधितिसहिततत्त्वचिन्तामणेः
## अनुमानखण्डस्य
## विषयसूची

—:०:—

विषयाः पृष्ठाङ्काः

## हेत्वाभासवादे—



## ईश्वरानुमाने—



इति शम् ।

# शिरोमणिकृतदीधित्याः अनुमितिग्रन्थः ॥

तत्र सङ्गतिप्रकरणं प्रारभ्यते ।

———ooo———

ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

## जागदीश्याः अनुमितिग्रन्थः ॥

तत्र सङ्गतिप्रकरणं प्रारभ्यते ।

———:o:———

सस्मिताननसरोजमङ्गणे रिङ्गमाणमतिलोलकुन्तलम् ।
रोचनोल्लसितभालमस्तु मे कैशवं मनसि शैशवं वपुः ॥
प्राच्यैरनुचितविविधक्षोदैः कलुषीकृतोऽप्यधुना ।
दीधितियुतमणिरेष श्रीजगदीशप्रकाशितः स्फुरतु ॥

परमात्मने सर्वोत्कृष्टात्मने नमः । उत्कर्षश्चात्रोत्पत्तिस्थित्यादिकर्तृत्वम् । तस्य चैकत्र संभवो न सहकार्यन्तरं विनेत्यत उक्तम् ओमिति । ब्रह्मविष्णुशिवात्मकाय नम इत्यर्थः । तथा च तत्तच्छरीरसहकारादेकस्यापि नानाकार्यकर्तृत्वं नानुपपन्नमिति भावः । यद्यपि सुखादिसमवायिकारणतावच्छेदकत्वेन [द्रव्यमानसं प्रति विषयविधया कारणतावच्छेदकत्वेन वा सिद्धाया] आत्मत्वजातेरीश्वरावृत्तित्वादात्मन इत्यसंगतम् नित्यस्येत्यादिव्याप्तेरप्रयोजकत्वेन तादृशजातेरीश्वरवृत्तित्वोपगमे तु गगनादावपि तज्जातिप्रसङ्गात् द्रव्यत्वमेव वा सुखादिसमवायिकारणतावच्छेदकं भवेदतिप्रसङ्गस्य तुल्यत्वात् अत एव लाघवेनात्मत्वजातेरेवात्मपदप्रवृत्तिनिमित्ततयात्मपदगर्भा श्रुतिरेव तत्रात्मत्वजातिसत्त्वे प्रमाणमित्युक्तावपि न निस्तारः [शक्यतावच्छेदकतया जातिसिद्धेरपसिद्धान्तत्वात्]; तथाप्यत्रात्मपदं कृपावदर्थकमित्याहुः । नमस्यताप्रयोजकं रूपान्तरमप्याह सर्वेति । सर्वभूतानि सर्वप्राणिनः विष्टभ्य स्वस्वकर्मणि नियोज्य परितिष्ठते इत्यर्थः । केचित्तु भूतपदं यथाश्रुतार्थकमेव विष्टम्भोपि संयोगविशेषः, न च विभुद्वयसंयोगास्वीकारादाकाशेन समं तदसंभवादसंगतिः नव्यमते गगनस्येश्वरानतिरेकात् अत्र च स्वप्र-

अध्ययनभावनाभ्यां सारं निर्णीय निखिलतन्त्राणाम् ।
दीधितिमधिचिन्तामणि तनुते तार्किकशिरोमणिः श्रीमान् ॥
परञ्जुष्टनयान्निवर्तमाना मननास्वाद्यरसा विशुद्धबोधैः ।
रघुनाथकवेरपेतदोषा कृतिरेषा विदुषां तनोतु मोदम् ॥
न्यायमधीते सर्वस्तनुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं के चन विज्ञातुमीशते सुधियः ॥

मान्यान्प्रणम्य विहिताञ्जलिरेष भूयो-
भूयो विधाय विनयं विनिवेदयामि ।
दूष्यं वचो मम परं निपुणं विभाव्य
भावावबोधविहितो न दुनोति दोषः ॥

पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तये शिष्याणामवधानाय च

---

तियोगिकसंयोगाविरहेपि स्ववृत्तिसंयोगानपायादित्याहुः । [ केचित्तु विष्टम्भ आरम्भकसंयोगः भूतपदं जन्यभूतपरम् जनकत्वं द्वितीयार्थः तथाच जन्यसर्वभूतजनकसंयोगानुकूलकृतिसमानाधिकरणतादृश-संयोगोत्तरस्थैर्याश्रयतावते इत्यर्थ इति प्राहुः । ] अखण्डौ नित्यौ आनन्दबोधौ यस्य तस्मै । न च सुखत्वावच्छेदेन पुण्यजन्यतया नित्यसुखासम्भवः । श्रुतिवाक्येभ्यो नित्यसुखसिद्धौ सुखत्वावा-न्तरजातेरेव पुण्यजन्यतावच्छेदकत्वकल्पनात् । आनन्दाय स्वर्गा-दिरूपाय बोधो यस्य तादृशो योऽखण्डो नित्यस्तस्मै इति वार्थः । अखण्डो दुःखानवच्छिन्न आनन्दो यस्मादेतादृशो बोधो यस्य तस्मै षष्ठ्यर्थस्य विषयतेत्यपि काश्चित् । [पूर्णाय[1] स्वानिष्ठसुखदुःखाभावगो-चरेच्छाविच्छिन्नाय]॥ निपुणं विभाव्येति । [वस्तुतो] निपुणतरविभावने स्वयमेव दोषाः प्रयास्यन्तीति भावः ॥ संगतिप्रदर्शनप्रतिज्ञयोरर्था-न्तरत्वं निराचिकीर्षुस्तयोः प्रकृतोपयोगितां दर्शयति पूर्वेत्यादिना । अत्र च संगतिप्रदर्शनस्य फलमेकवाक्यताप्रतिपत्तिः । प्रतिज्ञायास्तु फलं शिष्यावधानम् । तच्चोत्तरग्रन्थप्रवृत्त्यनुकूलव्यापाररूपम् तत्प्र-वृत्त्यनुकूलवर्तमानकृतिसाध्यताज्ञानादिपर्यवसितम् । अस्ति चोत्तर-ग्रन्थे पूर्वग्रन्थार्थसंगतार्थकत्वहेतुना पूर्वग्रन्थेन सहैकप्रयोजनहेतुप्रति-

---

(१) ' पूर्णाय अप्रतिहतेच्छाय '

# चिन्तामणेः अनुमितिग्रन्थः ॥

## तत्र सङ्गतिप्रकरणं प्रारभ्यते ।

---:o:---

प्रत्यक्षोपजीवकत्वात्प्रत्यक्षानन्तरं बहुवादिसंमतत्वादुपमानात्प्रागनुमानं निरूप्यते ॥

---

संगतिं प्रदर्शयन्ननुमाननिरूपणं प्रतिजानीते प्रत्यक्षमित्यादिना । अत्रोपजीव्योपजीवकभावः फलतः स्वरूपतश्च । प्रत्यक्षफल-

---

पत्तिकत्वरूपस्य पूर्वग्रन्थैकवाक्यत्वस्यानुमानम् । तच्चोत्तरग्रन्थज्ञानस्येष्टसाधनत्वधीपर्यवसन्नम् । अतः प्रस्तुतप्रवृत्त्युपयोगितया संगतिप्रदर्शनस्य नार्थान्तरत्वम् । एवं प्रतिज्ञा पुनरनुमाननिरूपणे लटा लब्धाया वर्तमानकृतेः साध्यत्वं बोधयन्त्युत्तरग्रन्थे प्रवृत्त्युपयोगिनी वर्तमानकृतिसाध्यताज्ञानस्य प्रयोजिकेति भावः । अत्र च व्याख्येयग्रन्थस्य स्वरसंवलितस्यैव धारणं संप्रदायसिद्धमतः प्रत्यक्षेतीत्यपहाय प्रत्यक्षवितीत्युक्तमिति तु भ्रमः । दीधितिकृतैव व्याप्त्यनन्तरमिति पक्षताग्रन्थस्य व्याप्तीतीतिप्रकारेण धृतत्वात् तादृशनियमस्य संप्रदायासिद्धत्वात् । परं तु न नियमः क्वचिदेवं क्वचिदन्यथापि धारणमिति ध्येयम् । [वस्तुतः प्रत्यक्षानन्तरमित्यस्य धारणभ्रमनिरासाय तथोक्तम् ॥] अनुमाननिरूपणस्यैव प्रतिज्ञेयत्वेऽनुमितेरप्रतिज्ञाताया अग्रे निरूपणमर्थान्तरग्रस्तं स्यादतोऽनुमितेरनुमानस्य च द्वयोरेव निरूपणस्य प्रतिज्ञेयतामावेदयितुमाह अत्र चेति । अत्र प्रत्यक्षोपजीवकत्वादित्यादिग्रन्थे । [सप्तम्यर्थः प्रतिपाद्यत्वम् ।] फलतः फलयोः साक्षात्कारानुमित्योः स्वरूपतः प्रत्यक्षप्रमाणानुमानप्रमाणस्वरूपयोः उपजीव्योपजीवकभावः प्रतिपाद्य इत्यर्थः । तथा च मूले प्रत्यक्षपदस्य प्रत्यक्षप्रमितितत्करणोभयपरतयाऽनुमानपदस्य भावकरणव्युत्पत्तिभ्यामनुमितितत्करणोभयपरतयानुमितेस्तत्करणस्य च द्वयोरेव निरूपणस्य प्रतिज्ञातत्वान्नानुमितिनिरूपणेऽर्थान्तरत्वमिति भावः । केचित्तु आचार्यमते नित्यस्य जात्यादेरप्यनुमानत्वाद्वक्ष्यमाणस्यानुमानत्वावच्छेदेन प्रत्यक्षोपजीवकत्वस्य संगतित्वलाभायोक्तं फलत

स्यानुमित्यनुव्यवसायादेरनुमित्युपजीवकत्वेपि न सर्वा प्रत्यक्षप्रमितिस्तथा। अनुमितयस्तु सर्वाः साक्षात्परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीविकाः। पुरस्कृतश्चायमुपजीवकोत्कर्षः। यद्यपि सकलमेव

---

इति [ फलद्वारेत्यर्थः तथा च प्रत्यक्षफलोपजीवकत्वमेव संगतिः तथा च स्वाश्रयकरणत्वपरंपरासंबन्धेनानुमानगतत्वम् ] साक्षात्संबन्धेन प्रत्यक्षोपजीवकत्वस्य संगतित्वलाभार्थं लिङ्गज्ञानकरणतावादिनो [मणिकारस्य] मतमवलम्ब्योक्तं स्वरूपत इत्याहुः। [तन्न। लिङ्गस्य नित्यत्वेप्यनुमितीत्यादिग्रन्थविरोधात्] ॥ ननूपजीवकत्वं न संगतिः अनन्तराभिधानव्याप्यस्यैव संगतित्वात् अनुमित्युपजीवकस्य तत्साक्षात्कारस्यानुमित्यनन्तरमनिरूप्यतया यस्य प्रमाणफलस्योपजीवकं यत्प्रमाणफलं तत्तन्निरूपणानन्तरं निरूप्यमिति व्याप्तिविरहादत आह प्रत्यक्षफलस्येति। अनुमित्यनुव्यवसायादेरित्यादिपदेनानुमित्युपनीतधर्मप्रकारकप्रत्यक्षसंग्रहः। न सर्वेति। अयं घट इत्यादिप्रत्यक्षस्यैवानुमित्यनुपजीवकत्वादिति। तथा चोपजीवकत्वमात्रस्यानन्तराभिधानव्याप्यत्वाभावेपि प्रमाणफलविभाजकोपाधिव्यापकत्वविशिष्टमुपजीवकत्वं तादृशाभिधानव्याप्यमेवेति स्यादेवोपजीवकत्वं संगतिरिति भावः॥ ननु प्रमाणफलविभाजकोपाधिव्यापकत्वविशिष्टं साक्षात्कारोपजीवकत्वमनुमितावसिद्धं शाब्दादिपरामर्शादप्यनुमित्युत्पत्त्यानुमितित्वावच्छेदेन साक्षात्कारोपजीवकत्वाभावात्कुतोस्य संगतित्वमत आह अनुमितयस्त्विति। साक्षादिति। तथा चोपजीवकत्वं प्रयोज्यतामात्रं न त्वनन्यथासिद्धत्वघटितमपीति भावः॥ नन्वेवमुक्तस्यैवोपजीवकताविशेषस्यानन्तराभिधानव्याप्यत्वे प्रत्यक्षोपजीवकत्वादित्युपजीवकत्वमात्रस्य व्याप्यताप्रत्यायको मूलग्रन्थो विरुद्ध इत्यत आह पुरस्कृत इति। अयं प्रमाणफलविभाजकोपाधिव्यापकत्वरूपः उत्कर्षो ग्रन्थकृतापि तात्पर्यविषयीकृतः सामान्यशब्दस्य लक्षणया विशेषबोधकत्वादिति भावः॥ ननु परंपरोपजीवकत्वस्यापि संगतित्वे प्रमाणफलविभाजकोपाध्यवच्छिन्नोपजीवकत्वमपि न तादृशाभिधानव्याप्यम् प्रत्यक्षप्रमितावनुमितेस्तादृशोपजीवकत्वसत्त्वेप्यनुमित्युत्तरं तदनिरूपणात् तत्कुतोऽस्य

---

(१) 'न त्वनन्यथासिद्धनियमघटितमपीति'

प्रत्यक्षफलमुपजीवत्यदृष्टजननीं समयमत्कर्तव्यतादिपरिच्छेदिका-मनुमितिम् ईश्वरप्रत्यक्षं तु न फलम् तथापि दृष्टद्वारकमिह तथा-त्वमादरणीयम् । इतरस्याविनिगम्यत्वात् । सर्वं चानुमितिकरणमि-

---

संगतित्वमित्याशङ्कते यद्यपीति । अदृष्टजननीमिति । तत्प्रयोजिका-मित्यर्थः । समयः शक्तिः । मत्कर्तव्यतादीत्यादिपदादिष्टसाधनत्वा-देः परिग्रहः । अयं भावः कार्यमात्रं प्रत्यदृष्टस्य हेतुतया साक्षात्कारं प्रत्यपि धर्मादिकं हेतुः तच्च स्वकारणीभूतं यगादिकं यागादिश्च स्वगोचरप्रवृत्तिं यागादिप्रवृत्तिश्च यागादिगतेष्टसाधनत्वधियं तादृ-शधीश्च वेदं विनानुपपद्यमाना वेदस्थपदानां शक्तिग्रहमपेक्षते इदं पद-मत्र शक्तमसति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वादित्याद्यनुमिति-रूपशक्तिग्रहं विना वेदवाक्यादर्थावगमासंभवात् एवं प्रवृत्तिजनिका यागो मत्कृतिसाध्य इत्यादिधीरपि आनुमानिक्येव मदन्तर्भावेण विधेः शक्त्यभावादिति । इदं तु चिन्त्यते यत्र शक्त्यादिघटकप्रत्येकपदार्थोप-स्थित्या मनसैव शक्तेर्मत्कर्तव्यत्वादेर्वा ग्रहात्प्रवृत्तिस्तत्रत्यादृष्टजन्य-प्रत्यक्षव्यक्तेरेवानुमित्यनुपजीवकत्वात्सकलमेवेत्याद्ययुक्तमिति किंच यत्तदन्तर्भावेण सामान्यव्याप्तौ व्यभिचारेऽपि अनुमितिनिष्ठप्रत्यक्षोप-जीवकत्वस्य ताद्रूप्येण प्रत्यक्षानन्तराभिधानव्याप्यत्वादेव तत्र संग-तिलक्षणसम्भवात्साक्षात्कारादावनुमित्युपजीवकत्वहेतोर्व्यभिचारप्र-दर्शनानौचित्यादिति दिक् । ननु प्रत्यक्षफलमात्रस्यानुमित्युपजीवक-त्वेऽपि तद्गतमनुमित्युपजीवकत्वं न प्रमाणफलविभाजकधर्मव्यापकं प्रमाणफलविभाजकस्य साक्षात्कारत्वस्य नित्यज्ञानेऽपि सत्त्वादत आह ईश्वरेति । तथा च जन्यसाक्षात्कारत्वं फलविभाजकं न तु साक्षात्का-रत्वमात्रं नित्येऽतिप्रसक्तत्वात्तद्व्यापकत्वविशिष्टमनुमित्युपजीवकत्वं च नानुमित्यनन्तराभिधानव्याप्यमिति व्यभिचारस्तदवस्थ एवेति भावः । दृष्टेति । दृष्टद्वारकत्वम् तन्मात्रद्वारकत्वम् अदृष्टाद्वारकत्वपर्य-वसितम् । तेनादृष्टद्वारकस्यापि प्रवृत्त्यादिरूपदृष्टद्वारकतया नोक्तदोषः । तथात्वं प्रमाणफलविभाजकोपाध्यवच्छिन्नमुपजीवकत्वम् । इतरस्य उक्तधर्मानवच्छिन्नोपजीवकतामात्रस्य । अविनिगम्यत्वात् अनन्तरा-भिधानरूपं यत्साध्यं तद्वत्येव वर्तते न तु तदभाववतीति विनिगम-नाया अविषयत्वात् । व्यभिचारित्वादिति यावत् ॥ यत्प्रमाणं यस्यो-

न्द्रियापेक्षोत्पत्तिकम्। अनुमितिं भावयतोऽपीश्वरज्ञानस्य तत्करणतानिर्वाहकप्रत्यासत्तिविरहेणातत्त्वात्। सर्वं पुनरिन्द्रियं नानुमानाधीनजन्म। मनःश्रवणयोरजन्यत्वात्। दृष्टद्वारा वा तत्त्वमादरणीयम्। न चोत्पत्तिमदपीन्द्रियं दृष्टद्वारकमनुमानमपेक्षते। अ-

---

पजीवकं तत्तदनन्तरनिरूप्यमिति व्याप्तेरनुमानोत्तरानिरूपिते प्रत्यक्षप्रमाणे व्यभिचारात् स्वरूपत उपजीवकतापि प्रमाकरणतावच्छेदकोपाध्यवच्छिन्नैवात्र ग्राह्या इत्याशयेनाह सर्वमिति। व्याप्तिबुद्धीनामेवानुमानत्वात्तासां च सर्वासामेव मनःस्वरूपप्रत्यक्षप्रमाणाधीनत्वादिति भावः॥ अथानुमितिप्रमाकरणतावच्छेदकं व्याप्तिज्ञानत्वं तदवच्छिन्नं च न प्रत्यक्षप्रमाणोपजीवकं व्याप्तिज्ञानत्वस्येश्वरबुद्धावपि वृत्तेरिति प्रकृतासिद्धिरत आह अनुमितिमित्यादि। भावयतो जनयतः। तत्करणतेति। अनुमितिकरणताया निर्वाहिका घटिका या प्रत्यासत्तिः संबन्धो जन्यत्ववैशिष्ट्यरूपस्तद्विरहेणातत्त्वादनुमित्यकरणत्वादित्यर्थः। व्याप्तिज्ञानत्वं नानुमितिकरणतावच्छेदकम् तथा सति तद्वतो नित्यज्ञानस्य स्वरूपयोग्यतया ततोऽनुमित्यात्मकफलावश्यंभावापत्तेः किं तु जन्यत्वविशिष्टं व्याप्तिज्ञानत्वम् तदवच्छिन्नं च भवत्येव प्रत्यक्षप्रमाणोपजीवकमतो नासिद्धिरिति भावः। अनुमानत्वावच्छेदेन प्रत्यक्षोपजीवकत्वं सम्पाद्य प्रत्यक्षत्वावच्छेदेनानुमानोपजीवकत्वस्य व्यतिरेकमाह सर्वं पुनरिति॥ ननु व्याप्तिज्ञानत्वमेवानुमितिकरणतावच्छेदकम् नित्यस्य स्वरूपयोग्यत्वे इत्यादिव्याप्तेरप्रयोजकत्वात् प्रयोजकत्वे वा समवायिकारणस्थलीयत्वात्तत्रैव प्राच्यैस्तादृशव्याप्तेः सर्वत्रोद्भावितत्वात् [तथा च हेत्वसिद्धिरत] आह दृष्टद्वारेति। दृष्टमात्रद्वारेत्यर्थः। तथा चादृष्टमद्वारीकृत्य यत्प्रमाणं यदुपजीवकं तत्तदनन्तरनिरूप्यमित्येव व्याप्तिः न तु प्रमाणतावच्छेदकोपाध्यवच्छिन्नत्वमपि निवेश्यमिति भावः॥ निरुक्तमनुमानोपजीवकत्वं न प्रत्यक्षेऽस्ति यतो व्यभिचारः स्यादित्याह न चेति। अपिना नित्येन्द्रियं सुतरां नानुमानमपेक्षत इति सूचितम्। अथादृष्टमद्वारीकृत्य यत्प्रमाणं यदुपजीवकं तत्तदनन्तरनिरूप्यमित्यपि न व्याप्तिः यत्र चक्षुर्घर्षणाप्रसविशेषपानाद्वा पूर्वचक्षुर्नाशानन्तरं चक्षुरन्तरोत्पादस्तत्राद्दष्टाद्वार-

थोपजीव्यं निरूप्यैवोपजीवकं निरूप्यमिति न नियमः क्वचित्कार्यं निरूप्यापि कारणनिरूपणात्। किं चातः। न हि सङ्गतिरनन्तराभिधानव्यप्या। आनन्तर्या(अनन्तरा)भिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः संगतिः। जायते च कार्ये कारणे वा ज्ञाते

---

कस्य घर्षणरसपानादिप्रयोजकतद्गतेष्टसाधनत्वाद्यनुमानस्योपजीवके अनुमानानन्तरानिरूपिते च घर्षणजन्यचरमचक्षुषि रसपानाधीनप्रकृष्टचक्षुषि च व्यभिचारात् न चात्रोपजीवकत्वं जन्यतारूपमेव घटकमुक्तस्थले तु चक्षुषोऽनुमानप्रयोज्यत्वमेवेत्यदोषः तथा सति अदृष्टाद्वारकत्वविशेषणवैयर्थ्यापत्तेरित्याशयेन शङ्कते अथेति। उपजीवकमिति। अदृष्टमद्वारीकृत्येत्यादिः। एवं कार्यमित्यत्रापि। क्वचिदिति। यत्रोक्तप्रणाल्या चक्षुरन्तरोत्पादस्तत्रत्यं कार्यमित्यर्थः॥ प्राच्यैरनन्तराभिधानव्याप्यस्यैव सङ्गतित्वमिष्टमतस्तन्मतमनुसृत्यैव प्राक् प्रपञ्चितम् वस्तुतस्तादृशनियमाभावेपि न क्षतिः प्रत्यक्षोपजीवकत्वादित्यत्र च पञ्चमी न हेतुतायाम् किं तु ज्ञानप्रयोज्यतायाम् सुखात्प्रवर्तत इत्यादौ तथा व्युत्पत्तेरित्याशयेन परिहरति किं चात इत्यादि॥ अनन्तराभिधानव्याप्यस्यैव संगतिपदार्थत्वे तद्दोषतादवस्थ्यमतोऽन्यथैव सङ्गतिपदार्थं निर्वक्ति अनन्तरेति। तदभिधानानन्तरं तदभिधानस्य प्रयोजिका या जिज्ञासा तज्जनकज्ञानविषयो योऽर्थः स तस्य तत्र सङ्गतिरित्यर्थः। अत्र च प्रत्यक्षं कस्यचित्कारणमिति ज्ञानोत्तरं प्रत्यक्षकार्य[त्वेन सामान्यतः प्रत्यक्षकार्य]ज्ञानं ततः सामान्यप्रकारेण ज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वाद्विशेषतः प्रत्यक्षकार्यज्ञानं भवत्वितीच्छा शिष्याणाम् सैव च किमस्य कार्यमित्याकारा ततश्च विशेषतः प्रत्यक्षकार्यज्ञानस्येष्टस्य साधनतया अनुमादिरूपप्रत्यक्षकार्यबोधकानां वाक्यानां ज्ञानात् तत्रेच्छा तत इष्टस्य तादृशवाक्यस्य साधनताज्ञानात् [कण्ठाभिघाते इच्छा तत इष्टस्य कण्ठाभिघातस्य साधनताज्ञानात्कण्ठक्रियायामिच्छा ततः] कण्ठक्रियायां गुरोः प्रवृत्तिस्ततस्तु कण्ठक्रियया तदभिघातादिक्रमेण प्रत्यक्षकार्यात्मकानुमानबोधकवाक्यस्यानन्तराभिधानरूपस्य निष्पत्तिरिति प्रत्यक्षानन्तरमनुमानाभिधानस्य परम्परया प्रयोजिकायाः किं प्रत्यक्षकार्यमित्याकारकजिज्ञा-

---

(१) 'स' निरूपिते खण्डचक्षुषि र

सायाः जनकं यत्प्रत्यक्षकार्यज्ञानमिष्टसाधनमित्याकारकं ज्ञानं तस्य विषयः प्रत्यक्षकार्यत्वमिति तत्र लक्षणसमन्वयः। जिज्ञासाजनक-ज्ञानविषयत्वमात्रस्य घटादावतिप्रसक्तत्वेन प्रयोजकान्तं जिज्ञासा-विशेषणम्। प्रत्यक्षानन्तरमनुमानस्याभिधानप्रयोजिका प्रत्यक्षका-र्याभिधानेच्छापीति तज्जनकज्ञानस्य विषये प्रत्यक्षकार्याभिधाना-दावतिव्याप्तिरतो जिज्ञासानुसरणम्। प्रत्यक्षकार्यज्ञानस्य यत्फलं सुखादि तद्गोचरज्ञानस्यापि तादृशजिज्ञासाप्रयोजकत्वात्तद्विषये सुखादावतिव्याप्तिरतस्तादृशजिज्ञासायाः प्रयोजकत्वमुपेक्ष्य जनक-त्वमुक्तम् फलेच्छयैवान्यथासिद्धस्य फलज्ञानस्योपायेच्छां प्रत्यहेतु-त्वात् तादृशजिज्ञासाजनिकायाः फलेच्छाया विषये फलादौ तथा-प्यतिव्याप्तिप्रसङ्गोतो ज्ञानपदम्। यत्र क्रमेण दण्डचक्रयोर्निरूपणो-त्तरं किं दण्डस्य कार्यमिति जिज्ञासया घटो निरूपितस्तत्र दण्डकार्यत्व-मपि घटे चक्रस्य सङ्गतिः स्यात्तस्य चक्राभिधानानन्तरं घटाभिधा-नप्रयोजकजिज्ञासाजनकज्ञानविषयत्वादत उक्तम् अर्थ इति। तज्ज्ञान-जन्यतद्विशेष्यकयथार्थस्मृतिप्रकारतापन्न इति तदर्थः। तथाचोक्त-स्थले दण्डज्ञानेनैव दण्डकार्यत्वप्रकारेण घटः स्मारितो न तु चक्रज्ञाने-नेति नातिव्याप्तिः। एवंच यत्र चक्रज्ञानोत्तरमेव दण्डकार्यत्वप्र-कारेण घटं स्मृत्वा तस्य निरूपणं तत्र दण्डकार्यत्वमपि घटे चक्रस्य प्रसङ्गरूपा सङ्गतिर्भवत्येव। न च यथार्थपदवैयर्थ्यम्। यत्र दण्डकार्यं किमिति जिज्ञासया भ्रमवशेन दण्डोत्तरं गगनादिकं निरूपितं तत्र गगनादौ दण्डकार्यत्वस्य सङ्गतित्वापत्तेः। नचैवं यत्र प्रथमत एव घटबोधेच्छया घटस्य निरूणं तत्र कस्यापि सङ्गतिर्घटे न स्यादिति वाच्यम्। इष्टत्वात्। तदनन्तरनिरूणत्वस्यैव तत्सङ्गति-नियतत्वेन निरूपणमात्रस्य सङ्गत्यनियतत्वात्। यद्यपि चैवमपि प्रत्यक्षकार्यज्ञानमिष्टसाधनमित्येवं बोधस्यैव प्रत्यक्षकार्यं किमिति जिज्ञासायाः कारणत्वात्तद्विषये [ज्ञाने] ज्ञानत्वादाविष्टसाधनत्वादौ चातिव्याप्तिः तथापि यद्धर्मविशिष्टविषयकज्ञानधर्मिकेष्टसाधनता-ज्ञानत्वेन तदनन्तरं तदभिधानप्रयोजकजिज्ञासां प्रति जनकत्वं तादृशो धर्मस्तस्य तत्र सङ्गतिरिति विवक्षितम्। अत्र च तदनन्तरं तदभिधानं प्रति यद्रूपेण जिज्ञासायाः प्रयोजकत्वं तद्रूपावच्छि-न्नकार्यताप्रतियोगिकमेव तादृशजिज्ञासाजनकत्वं वक्तव्यम् तेन यत्र

कारणत्वस्य कार्यत्वस्य वा ज्ञानात्किमस्य कार्यं कारणं वेति

---

को घटः किं च द्रव्यमिति समूहालम्बनजिज्ञासया नीलो घट इत्येवाभिधानं तत्र न द्रव्यत्वेतिव्याप्तिः । नीलो घट इत्यभिधानं प्रति को घट इत्यादिजिज्ञासात्वेनैव प्रयोजकतया तदवच्छिन्नं प्रति द्रव्यत्वविशिष्टविषयकज्ञानधर्मिकेष्टसाधनताज्ञानत्वेनाहेतुत्वात् । न च यद्धर्मविशिष्टविषयकज्ञानेच्छात्वेन जिज्ञासाया अनन्तराभिधानप्रयोजकत्वं तत्त्वमित्येव सम्यक् जनकज्ञानविषयत्वादिप्रवेशो व्यर्थ इति वाच्यम् । तस्य लक्षणान्तरत्वेपि यथासन्निवेशे वैयर्थ्याविरहात् । अत एव तदनन्तराभिधेयवृत्तित्वे सति तज्ज्ञानजन्यस्मृतिप्रकारतापन्नमित्येव सम्यगित्यपि समाहितम् । [नव्यास्तु अनन्तराभिधानेत्यादेः स्वार्थधीद्वारा अनन्तराभिधानस्य प्रयोजिका निवर्त्या या जिज्ञासा प्रत्यक्षकार्यं किमित्याकारा तस्या जनकं विषयविधया जनकतावच्छेदकं यज्ज्ञानं तस्य विषयो विषयतावच्छेदकः प्रत्यक्षकार्यत्वमित्यर्थ इति वदन्ति । ] यत्तु कार्यत्वाद्यन्यतमत्वं सङ्गतित्वमिति तन्न । तदनन्तरमनिरूपितेपि तत्कार्यत्वादेः सङ्गतित्वापत्तेः । प्रमेयनिरूपणोत्तरं प्रमेयवत्किमिति जिज्ञासया यत्र प्रमेयवान्निरूपितस्तत्र प्रमेयस्वरूपायां प्रसङ्गसङ्गताव्याप्तेः । प्रमेयभेदाप्रसिद्ध्या तदन्यतमत्वस्य दुर्वचत्वादिति ध्येयम् । सङ्गतिः षड्विधा । तदुक्तमभियुक्तैः ' सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते ' इति । तत्र निर्दिष्टोपपादकत्वमुपोद्घातः । ' चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ' इति प्राचीनगाथायामपि चिन्तापदं कृदभिहितो भावः [द्रव्यवत्प्रकाशते] इति न्यायेन चिन्तनीयपरम् । तथा च तस्या अर्थोपि प्रकृतसिद्ध्युपपादकतया चिन्तनीयत्वम् प्रकृतसिद्ध्युपपादकत्व[पर्यवसन्न]मेवार्थः । हेतुत्वं कारणत्वम् । अवसरोऽनन्तरवक्तव्यत्वम् । अनन्तरोद्दिष्टत्वं तथेति न्यायभास्करकृतः । निर्वाहकं कारणतानिर्वाहकं कार्यत्वमिति यावत् । एककार्यत्वं एकं कार्यं ययोरिति व्युत्पत्त्या एककार्यकारित्वम् । प्रसङ्गत्वं तु सङ्गतित्वे सत्युपोद्घातादिभिन्नत्वम् । स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग इति प्रवादेपि स्मृतत्वमनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मृतिविषयत्वम् उपेक्षानर्हत्वं च प्रसङ्गलक्षणे

जिज्ञासा। अतस्तयोर्द्वयोरेव सङ्गतित्वम्। इत्थं चोपजीवकतायास्तु-ल्यत्वेऽपि न क्षतिरिति मन्तव्यम्। लघवायात्रैवोपमानस्य संगतिं दर्शयति बहुवादीति। सुप्रसिद्धतया निरसनीयाल्पवादिविप्रति-पत्तिकत्वेन सुप्रतिपदतया चानुमान एव प्रथमं व्युत्पित्सो-र्जिज्ञासा। नोपमाने। अप्रसिद्धत्वात्। निरसनीयबहुवादिविप्रति-

---

उपेक्षानर्हा ये उपोद्घातादयस्तदन्यत्वम्। तेन ततोऽपि प्रागुक्तस्यैवार्थस्य लाभ इति संक्षेपः॥ कारणत्वस्य कार्यत्वस्य वेति। षष्ठ्यर्थः प्रकारि-त्वम्। तथा च कार्ये ज्ञाते कारणत्वप्रकारेण कारणस्य ज्ञाना-ऽक्रमस्य कारणमिति जिज्ञासा कारणे च ज्ञाते कार्यत्वप्रकारेण कार्यस्य ज्ञानातिक्रमस्य कार्यमिति जिज्ञासेत्यन्वयः। कार्यकारण-ज्ञानयोस्तु कारणकार्यज्ञानजनकत्वमेकसम्बन्धिज्ञानस्यापरसम्ब-न्धिस्मारकतयेति भावः। जिज्ञासेति। तदुत्तरं च कार्यादिधीजन-कवाक्यैरुक्तादिक्रमेण कार्याद्यभिधानमिति शेषः॥ इत्थं चेति। सङ्ग-तेरनन्तराभिधानव्याप्यत्वाघटितत्वे चेत्यर्थः। तुल्यत्वेऽपीति। तथा च व्याप्यतारक्षार्थं प्रागुक्त उत्कर्षो नादरणीयः। प्रत्यक्षोपजीवकत्वादिति पञ्चमी तु तज्ज्ञानजन्यजिज्ञासाप्रयोज्यतायाम् न तु हेतुतायामिति भावः॥ लाघवायेति। सङ्गतिप्रदर्शनस्य यत्फलमेकवाक्यतानुमानं तल्लाघवायेत्यर्थः। अनुमानोपमाने पक्षीकृत्य समूहालम्बनैकवा-क्यतासाध्यकानुमित्यपेक्षयोपमानधर्मिकैकवाक्यतानुमित्यन्तरकल्प-नायां गौरवादिति भावः॥ अथानुमानगतं बहुवादिसम्मतत्वं कथ-मुपमाने सङ्गतिरत आह सुप्रसिद्धतयेति। इष्टसाधनीभूतप्रतिपत्ति-कतयेत्यर्थः। सुप्रतिपदतया[२] [अनिष्टाजनकप्रतिपत्तिकत्वेन]। अत्र हेतु-र्निरसनीयेत्यादि। तथा चानुमानप्रतिपत्ताविष्टसाधनत्वबलवदनिष्टा-जनकत्वयोः सत्त्वात्तत्प्रतीत्या तत्रेच्छोत्पत्तौ बाधकं नास्तीति भावः॥ नोपमान इति। जिज्ञासेत्यनुषज्यते॥ अप्रसिद्धत्वादिति। येषामु-पमाने विमतिरेव तेषामुपमानज्ञानात्मनो धर्मिण एवासत्त्वात्कुतश्चेच्छा स्यादिति भावः॥ यस्योपमाने सम्मतिस्तस्याप्युपमानप्रतिपत्तौ बहु-

---

(१) 'विवक्षार्थम्'

(२) 'तयेति'

पत्तिकत्वेनातिदुरूहत्वाच्च । औत्सर्गिकीं रीतिमनुरुध्येदम् । तेन कस्यचिद्दुरूहजिज्ञासोदयेऽपि न क्षतिः । तथा चावसरसङ्गत्योपमाननिरूपणमिति भावः । यथा चावसरस्य सङ्गतित्वं तथा व्यक्तमाकरे । शब्दान्तरमसमयग्राहकं सप्रवृत्तिनिमित्तकत्वबोधकमन्ततः सामान्यतोदृष्टजीवनकमष्टस्यौपयिकं चानुमानमपेक्षते नि-

---

तरदुःखानुबन्धित्वग्रहाद्वेषः कथं सम्भवतीत्याह निरसनीयेति । अतिदुरूहत्वम् बहुतरदुःखानुबन्धिप्रतिपत्तिकत्वम् ॥ ननु बहुतरदुःखानुबन्धिन्यपि पदार्थे तादृशदुःखे बलवद्द्वेषाभावदशायां प्रथमं जिज्ञासा जायत एवेत्यत आह औत्सर्गिकीमिति । प्रायशो बहुतरदुःखजनकत्वग्रहे द्वेषो भवत्येवेति रीतिमनुरुध्येत्यर्थः ॥ तथा चेति । प्रथममनुमानजिज्ञासोत्पत्तौ तन्निवृत्तावुपमाननिरूपणमिति भावः ॥ ननु प्रतिबन्धकीभूतजिज्ञासानिवृत्तिरूपस्यावसरस्य कुतः सङ्गतित्वं तत्प्रकारकजिज्ञासाया अनन्तरमनभिधानादत आह यथा चेति । अवसरस्य अवसरपदार्थस्य । आकरे पञ्चमतत्त्वबोधादौ । अनन्तरवक्तव्यत्वमेवावसरः तत्र चातः परं किं वक्तव्यमिति जिज्ञासयैवानन्तराभिधानाच्च सङ्गतिलक्षणाव्याप्तिरिति भावः । अनन्तरोद्दिष्टत्वमेवावसरः अत एवावसरतः कथकाशक्तिनिरूपणमिति परिशिष्टव्याख्याने न्यायभास्करकृतोद्देशलक्षणा चात्र सङ्गतिरित्युक्तमित्यपि केचित् ॥ सार्वभौममतमाह शब्दान्तरेति । गोसदृशो गवयपदवाच्य इत्याद्यतिदेशवाक्यार्थज्ञानस्य गवादिपदशक्तिग्रहं विनानुपपत्तेः गोपदं गवि शक्तमसति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वादित्याद्यनुमानापेक्षा । उपमित्यात्मकस्य गवयादिपदशक्तिग्रहस्योपमानाधीनत्वात्पूर्वं तन्नापेक्षितमतः शब्दान्तरेत्युक्तम् । गवयादिपदस्य निःशक्तिकत्वग्रहेऽतिदेशवाक्यार्थज्ञानासम्भवात्तत्प्रतिबन्धार्थं गवयादिपदं किञ्चिदवच्छिन्नशक्तिमत्साधुपदत्वादित्येवंविधमुपमितिविषयीभूतस्य गवयादिपदस्यापि शक्त्यनुमानं प्रागपेक्षितं भवतीत्याशयेनाह सप्रवृत्तिनिमित्तेत्यादि । ननु यत्र मनसैव गवयपदवाच्यत्वग्रहसहकृतसादृश्यज्ञानादुपमितिस्तत्रोपमानस्य शक्त्यनुमानानपेक्षितत्वा-

---

(१) 'कासत्ति'

खिलमेवोपमानमितीहाप्युपजीवकत्वमेव सङ्गतिरिति केचित्। संभवति चेह निरूपणयोरपि कार्यकारणभावः।'अथ तत्पूर्वकम्'इत्यादिसूत्रे प्रत्यक्षपूर्वकत्वेनानुमाननिरूपणात्। तच्छब्देन व्याप्त्यादिप्रत्य-

---

खिलोपमानेऽनुमानापेक्षितत्वं न सम्भवत्यत आह अन्तत इति। बहुवादीत्यादिग्रन्थतस्तादृशसङ्गतेरलाभ एव केचिदित्यत्रास्वरसः॥ अथोपजीवकत्वसङ्गतेरनन्तराभिधाननियामकत्वोपेक्षायामनुमानोत्तरमेव प्रत्यक्षं किं न निरूपितमत आह सम्भवति चेति। इह प्रत्यक्षानुमानस्थले। निरूपणमत्र ज्ञानम्। न तु तदर्थकः शब्दः। प्रत्यक्षबोधकशब्दस्यानुमानबोधकशब्दं प्रत्यहेतुत्वात्। तथा च प्रत्यक्षस्य प्रागज्ञानेऽनुमानधीरेव न स्यात्कारणं विना कार्यानुत्पत्तेरतः प्राक् प्रत्यक्षं निरूपितमिति भावः॥ नन्वनुमानत्वादिरूपेणानुमानज्ञाने व्यभिचारात्प्रत्यक्षनिरूपणं नानुमाननिरूपणहेतुरत आह अथ तत्पूर्वकमिति। सामान्यतो व्यभिचारेपि प्रत्यक्षपूर्वकत्वेनानुमाननिरूपणं प्रत्यक्षज्ञानजन्यमेवेति भावः। 'अथ तत्पूर्वकमनुमानं त्रिविधं पूर्ववच्छेषवत्सामान्यतोदृष्टं च'इति सूत्रम्। अथ प्रत्यक्षानन्तरम् अनुमानम् निरूप्यते इति शेषः। तच्च त्रिविधम् तदाह पूर्ववदिति। पूर्वं कारणम् तद्वत्तल्लिङ्गकम्। यथा आर्द्रेन्धनप्रभववह्निना धूमाद्यनुमानम्। शेषः कार्यम्। तद्वत्तल्लिङ्गकम्। यथा धूमादिना वह्न्याद्यनुमानम्। कार्यकारणभिन्नलिङ्गकं तु सामान्यतोदृष्टम्। यथा पृथ्वीत्वादिना द्रव्यत्वादेरनुमानमिति। वाचस्पतिमिश्रास्तु दृष्टमिति सर्वत्रान्वितम्। तथा च पूर्वमन्वयसहचारः तद्वत्तया दृष्टं गृहीतम् शेषो व्यतिरेकसहचारस्तद्वत्तया गृहीतम् सामान्यतस्तदुभयसहचारवत्तया गृहीतमित्येवं त्रैविध्यविवरणमाहुः॥ तच्छब्देन सौत्रेण। व्याप्त्यादीति। व्याप्त्यादेः प्रत्यक्षं यस्मादिति व्युत्पत्त्या प्रत्यक्षप्रमाणपरामर्शादित्यर्थः। यथाश्रुते व्याप्त्यादिसाक्षात्कारपूर्वकत्वेनानुमाननिरूपणस्य सूत्राल्लाभेपि प्रत्यक्षप्रमाणनिरूपणस्यानुमाननिरूपणहेतुत्वालाभादसंगत्यापत्तेः॥ [2]नव्यास्तु प्रत्यक्षफलानुमानफलयोः क्रमेण निरूपणे नियामकाकाङ्क्षायामाह सम्भवति चेति तत्पूर्वक-

---

(१) 'चिकीर्षादिज्ञान (?) हेतुना प्रवृत्त्याद्यनुमानम्'

(२) 'नव्यास्तु प्रत्यक्षप्रमित्यनुमानयोः क्रमेण निरूपणयथाश्रुतार्थकमिति प्राहुः॥

अथ अनुमानलक्षणम् ।

तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः । तत्करणमनुमानम् ॥

---

क्षपरामर्शात् । अत्रापि सहचारप्रत्यक्षजन्यत्वादिना तन्निरूपणात् । तस्य च प्रत्यक्षनिरूपणाधीनत्वात् । एवमनुमानभिन्नत्वेनोपमाननिरूपणमपिं अनुमाननिरूपणापेक्षमिति संक्षेपः ॥

———:o:———

अथ अनुमानलक्षणम् ।

तत्र लक्षणस्वरूपप्रमाण्यादिभिरनुमाने निरूपणीये । करणस्य

---

मित्यादिसूत्रे चानुमानपदं भावव्युत्पत्त्यानुमितिपरम् एवं च व्याप्त्यादिप्रत्यक्षेति यथाश्रुतमेव सम्यगिति प्राहुः ॥ नन्वेतावता सौत्रक्रमस्योपपादितत्वेऽपि प्रकृतग्रन्थक्रमो नोपपादित इत्यत आह अत्रापीति । अनुमानखण्डेपीत्यर्थः । सहचारेति । अत्र प्रत्यक्षत्वमिन्द्रियसंनिकर्षजन्यज्ञानत्वरूपं [प्रत्यक्षमप्युक्तं] ग्राह्यम् । न तु साक्षात्कारत्वरूपम् । तथा सति प्रत्यक्षप्रमाणनिरूपणस्य अनुमाननिरूपणहेतुत्वाप्राप्तेरित्यवधातव्यम् । तन्निरूपणात् अनुमाननिरूपणात् ॥ तस्य चेति । प्रत्यक्षपूर्वकत्वेन सहचारप्रत्यक्षजन्यत्वेन चानुमाननिरूपणस्येत्यर्थः ॥ अनुमानोपमानयोरपि क्रमेण निरूपणे कार्यकारणभाव एव नियामक इत्याह एवमिति ॥

———:o:———

अथ अनुमानलक्षणम् ।

अथानुमानपदेन भावव्युत्पत्त्यानुमितेरपि निरूप्यत्वेन प्रतिज्ञातत्वात्तत्रत्यतच्छब्देनानुमितेः परामर्शेनुमितेरनुमितावविशेषणत्वात्सप्तम्यर्थासंगतिरतः करणव्युत्पत्त्या लब्धमनुमानमेव परामृश्य व्याचष्टे तत्रेति । निरूपणीये इति । प्रकारान्तरेण व्याप्तिज्ञानत्वानुमितिकरणत्वादिना निरूपणीयेनुमाने व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानत्वप्रकारेणानुमितेरविशेषणत्वात्तत्रेत्यत्र सप्तम्यर्थे तादृशवि-

क्रियाभेदभिन्नमूर्तिकतया क्रियालक्षणपूर्वकं तल्लक्षणमाह। व्याप्ती-

---

शेषणत्वमुपपादयितुं मध्ये पूरयति लक्षणस्वरूपप्रमाण्यादिभिरिति। तत्करणमित्यादिना लक्षणस्य तच्च लिङ्गेत्यादिना स्वरूपस्याथानुमानमित्यादिना प्रमाणयस्य च निरूपणे यदनुमानं निविष्टं तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानत्वेनैवानुमितेर्विशेषणत्वान्नासंगतिरिति भावः॥ ननु प्रागुक्तक्रमेणानुमित्यनुमानयोर्द्वयोरेव निरूपणस्य प्रतिज्ञातत्वादनुमाननिरूपणपूर्वमनुमितिः कथं निरूपिता इत्यत आह करणस्येति। क्रियाया यो भेदो व्यावर्तकधर्मो व्याप्त्यादिज्ञानजन्यज्ञानस्वरूपोऽनुमितित्वादिस्तेन भिन्ना घटिता मूर्तिः शरीरमनुमितिकरणत्वादिरूपं यस्य तादृशत्वेनेत्यर्थः। तथा च विशिष्टबुद्धेर्विशेषणज्ञानं विनानुत्पत्त्या पूर्वमनुमितिर्निरूपितेति भावः। प्राञ्चस्तु नन्वनुमानस्य निरूप्यत्वेन प्रतिज्ञातत्वादनुमितेर्निरूपणमर्थान्तरग्रस्तमत आह करणस्येतीति वदन्ति। तन्मन्दम्। तावताप्यनुमितेः प्रथमतो निरूपणेऽप्राप्तकाल[त्व]तादवस्थात्। किं च व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानकरणत्वेनानुमाननिरूपणे हेतुभूतस्य व्याप्त्यादिज्ञानजन्यत्वेनानुमितिज्ञानस्य सम्पत्त्यर्थं यदि प्रागेवानुमितेर्निरूपणं तर्हि व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं यज्ज्ञानं तत्करणमनुमानमित्येव मणिकारो ब्रूयात्। तावतैव विशेषणज्ञानसम्पत्तेः कृतमनुमित्यभिलापेन। अत्रोपजीव्योपजीवकभावेनार्थान्तरनिरास इति तु न वाच्यम् तस्य प्रकारान्तरेण सङ्गमादिति दिक्। आह मणिकार उक्तवानित्यर्थः। [व्याप्तीति स्वातन्त्र्येण पाठधारणम्। यथाश्रुते व्याप्तीत्यनेन क्रियालक्षणस्यैवोक्तत्वादसङ्गतेः।] तल्लक्षणमित्यनन्तरं वक्तुमिति पूरणीयम् आह अनुमितिलक्षणमाहेत्यपि कश्चित्। [क्रियालक्षणपूर्वकम् अनुमानरूप]क्रियाविशेषलक्षणपूर्वकमिति कः स्वार्थे तथा च अनुमानलक्षणपूर्वमित्यर्थः तल्लक्षणमाह अनुमितिलक्षणमाह कचिदाकांक्षावैचित्र्येण समासस्थैकदेशस्यापि तत्पदेन परामर्शादिति तु नव्याः। [ व्याप्तीत्यादीत्येव पाठ इत्यन्ये। व्याप्तीत्यत्र इतिशब्दस्याद्यर्थबोधकत्वमित्यपरे। तयाः सम्यक्त्वमेव यदि तादृशग्रन्थ-

---

(१) 'क्रियाभेदेनानुमितिस्तेन भिन्ना घटिता'
(२) 'व इत्यादिनार्थान्त'

ति। अत्र व्याप्तिविशिष्टत्वपक्षधर्मत्वसामानाधिकरण्यावगाहिज्ञानजन्यत्वमर्थः कर्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्यवचनत्वात् ज्ञानपदोपसंधानेन च बाधिताबाधितसाधारणतज्ज्ञानलाभात् न भ्रान्तानुमित्यव्याप्तिरित्याहुः। तन्न।

---

स्यापि पुनः पुनर्धारणम् सम्प्रदायसिद्धम्। यज्ञपतिमतमुत्थापयति] अत्रेति। अर्थ इति परेणान्वयः। व्याप्तीति। व्याप्तिसम्बन्धपक्षसम्बन्धयोः सामानाधिकरण्यं संसर्गविधया यदवगाहते वह्निव्याप्तिवैशिष्ट्यवत्पर्वतवैशिष्ट्यवान् धूम इत्याकारकं [वह्निव्याप्तिवैशिष्ट्यवत्पर्वतवैशिष्ट्यं धूमं इत्याकारकं वा] ज्ञानं तज्जन्यत्वमर्थः। पदार्थतावच्छेदकेति। न च क्तान्तस्य विशिष्टपदस्य वैशिष्ट्याश्रयबोधकत्वाद्व्याप्तिवैशिष्ट्याश्रयत्वमेव पदार्थतावच्छेदकम् तत्प्रकारं ज्ञानं नोपाध्यायमतेपि हेतुरिति वाच्यम्। भावार्थविहितक्तान्तस्य विशिष्टपदस्य वैशिष्ट्यपरतया व्याप्तेर्वैशिष्ट्यं यत्रेति व्युत्पत्त्या व्याप्तिवैशिष्ट्यस्यैव व्याप्तिविशिष्टपदार्थतावच्छेदकत्वादिति भावः। वचनत्वादिति। सामानाधिकरण्यसम्बन्धेन विशेषणतावच्छेदकविशिष्टस्य विशेष्यतावच्छेदकस्यैव कर्मधारयोत्तरभावप्रत्ययार्थत्वादिति भावः। इत्थं च नीलोत्पलत्वमित्यादौ तादृशसंसर्गेण नीलत्ववदुत्पलत्वस्यैव तादृशभावार्थस्य प्रकृत्यर्थे नीलोत्पलेऽन्वयान्नीलोत्पलीयं नीलत्ववदुत्पलत्वमित्यन्वयबोधः। एतेन तादृशभावप्रत्ययस्य यदि सामानाधिकरण्यत्वेन शक्तिस्तदा पदार्थतावच्छेदकयोरेकदेशतया तत्रान्वयासम्भवः यदि च तत्तत्पदार्थतावच्छेदकद्वयसामानाधिकरण्यत्वेन शक्तिस्तदा तादृशसामानाधिकरण्यस्याप्यवच्छेदकद्वयमात्रवृत्तित्वात्प्रकृत्यर्थस्य च तत्रानन्वयप्रसङ्गः कथं चिदवच्छेद्यत्वादिसम्बन्धेन प्रकृत्यर्थस्य तत्रान्वयसम्भवेप्युत्पलत्वे नीलोत्पलत्वमित्यादिव्यवहारप्रसङ्गः तादृश सामानाधिकरण्यस्योत्पलत्वेपि सत्त्वात् नीलोत्पलत्वं न समवतमित्यादिव्यवहारापत्तिश्चेत्यादिकं समाहितम्। यत्तु तत्तद्विशेषणतावच्छेदकादिभेदादनन्तशक्तिकल्पनापत्तेर्न कर्मधारयोत्तरभावप्रत्ययस्य उक्तरूपेण शक्तिः किं तु वृत्तित्वमात्रे तथा च नीलोत्पलत्वमित्यादौ [भाव]समान्यशक्त्योपस्थापितस्योत्पलत्वादेर्नीलान्वितवृत्तित्वेन सहा-

न्वयान्नीलवृत्त्युत्पलत्वं वाक्यार्थ इति मतम् तन्न। नीलोत्पलत्वमित्यादौ नीलोत्पलयोरभेदानुभवस्यापलापप्रसङ्गात्। वस्तुतो घटत्वमित्यादौ घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपेण घटत्वस्यानुभवः सर्वसिद्धः तत्र घटस्य घटपदादेव लाभादितरावृत्तित्वादौ भावप्रत्ययस्य शक्तिः तत्रापि इतरत्वमाश्रयो वृत्तिमान् साकल्यघटकीभूतं प्रतियोगित्वमवच्छेदकं च प्रत्येकमर्थः तथा च प्रकृत्यर्थस्य घटस्येतरत्वे तस्य चाश्रये आश्रयस्य वृत्तिमति वृत्तिमतः पुनरितरत्वेऽन्वयात् घटेतरावृत्तित्व[स्य सत्यन्तदलस्य] लाभः एवं प्रकृत्यर्थस्य घटस्य वृत्तिमति तस्य चेतरत्वे इतरत्वस्य च प्रतियोगित्वे प्रतियोगित्वस्य चावच्छेदके तस्य च पुनरितरत्वेऽन्वयाद्घटवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकाभिन्नत्वरूपस्य सकलघटवृत्तित्वस्य लाभः व्युत्पत्तिवैचित्र्याच्चैकपदार्थानां परस्परमन्वयः न च विशिष्टस्यापदार्थत्वे प्रथमं विशिष्टवैशिष्ट्यान्वयबोधो न स्यादिति वाच्यम् इष्टत्वात् काचित्कस्य [प्रथमं] विशिष्टवैशिष्ट्यबोधस्य विशिष्टे लक्षणादितोऽप्युपपत्तेः प्रकृत्यर्थे तत्त्वावच्छेदकस्य यादृशः सम्बन्धो भासते तादृशसम्बन्धावच्छिन्नवृत्तिमत्त्वादिकं ग्राह्यम् तेन घटत्वादिजातेः कालिकादिसम्बन्धेन घटेतरवृत्तित्वेऽपि न क्षतिः न वा विषयितासम्बन्धेन घटत्ववतो भेदस्य घटवृत्तित्वेऽपि घटत्वादेर्घटवृत्त्यन्योन्यभावप्रतियोगितानवच्छेदकत्वहानिः सत्त्वं प्रमेयत्वमित्यादौ च सदितरावृत्तित्वादेर्न भानमप्रसिद्धत्वात् किं तु सद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वादिरूपसकलसद्वृत्तित्वादिमात्रं भासते न चैवमपि घटत्वमित्यादितोऽभावस्य गगनादेर्वा भानप्रसङ्गः स्वात-न्त्र्येणापि वृत्तिमतोऽन्वयात् [वस्तुतः सदितरत्वावच्छेदेन वर्तमानभेदस्य प्रतियोगितावच्छेदकत्वमेव सदिरावृत्तित्वं वाच्यम् तच्च सत्तायामस्त्येव सत्त्वं घटत्वमित्यादितो नाभावस्य गगनादेर्वा लाभप्रसङ्गः तेषां समवायसम्बन्धेन प्रतियोगितावच्छेदकत्वाभावात् प्रमेयत्वादौ तु कथितरीत्या सकलप्रमेयवृत्तितामात्रं भासते न तु तदितरवृत्तित्वमप्रसिद्धेः] इत्थं च नीलोत्पलत्वमित्यादिकर्मधारयस्थलेऽपि नीलाभिन्नोत्पलस्य भावप्रत्ययार्थेन सहान्वये नीलत्वसमवायिसमवायरूपस्य पदार्थतावच्छेदकसामानाधिकरण्य-

(१) 'न वा विषयतया घटेतरत्ववतो घटज्ञानस्य घटवृ'

स्य भानं भवत्येव न चोक्तरीत्या भावप्रत्ययस्य शक्तिकल्पने गुरुत्वमित्यादितो रसवत्त्वस्य संयोगवत्त्वमित्यादितो द्रव्यत्वस्य [तद्रूपवत्त्वमित्यादितस्तद्रसवत्त्वस्य] प्रतीत्यापत्तिः प्रकृत्यर्थतावच्छेदकनिरूपितत्वविशिष्टप्रकृत्यर्थतावच्छेदकताघटकसम्बन्धेन वृत्तिमत्त्वस्यैव शक्यवर्गे प्रवेशे तु नत एव निखिलातिप्रसङ्गभङ्गादितरावृत्तित्वादौ शक्तिकल्पनायां मानाभाव इति वाच्यम् तादृरूप्येणानुभवानुरोधादेव तत्र शक्तेः कल्पनात् अव्यावर्तकस्यापि शक्यतावच्छेदकत्वादिति सम्प्रदायः । केचित्तु धर्मत्वेनैव धर्मे भावप्रत्ययस्य शक्तिः तत्र च प्रकृत्यर्थतावच्छेदकनिष्ठाधेयत्वसम्बन्धेनैव प्रकृत्यर्थान्वयस्य व्युत्पन्नत्वात् घटत्वमित्यादितो न द्रव्यत्वादेर्भानम् न वा पटादौ घटधर्मस्य द्रव्यत्वादेः सत्त्वेपि पटादौ घटत्वं नास्तीत्यस्य वाक्यस्यायोग्यत्वमित्याहुः । तन्मन्दम् । घटे घटत्वमित्यादिवाक्यस्य निराकाङ्क्षत्वापत्तेः । घटधर्मत्वावच्छिन्ने [घटत्वे] घटवृत्तित्वस्यान्वयबोधे उद्देश्यतावच्छेदकविधेययोरैक्यस्यावश्यकत्वादिति । नव्यास्तु घटयत्वमन्यत्वमित्यादिमुख्यप्रयोगसम्भवाल्लाघवेन घटत्वादिकं जातिभेदत्वादिरखण्डोपाधिः भावप्रत्ययस्य शक्यतायामवच्छेदकं घटत्वमित्यादौ तु घटत्वत्वादिप्रकारेण लक्षणयैव बुद्धिरिति प्राहुः । तन्मन्दम् । तथा सति घटवत्त्वमित्यादौ प्रकृत्यर्थस्य घटवदादेर्भावार्थघटादौ आधेयत्वसम्बन्धेन अन्वयस्यानुपपत्तेः । घटादिविशिष्टे घटादेरिव घटादौ घटादिमद्वृत्तित्वस्याप्यन्वयस्य निराकाङ्क्षत्वात् । घटवान्घटवानित्यत्रेव घटवति घट इत्यादावप्यन्वयबोधानुत्पादस्य सर्वानुभवसिद्धत्वादिति संक्षेपः । ननु वह्निव्याप्तिवैशिष्ट्यवत्पर्वतवृत्तितावद्द्रव्यत्वमित्येवंपरामर्शजन्यानुमितावव्याप्तिस्तत्र व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्मताया द्रव्यत्वेऽभावादत आह ज्ञानेति । भ्रान्तानुमितिः भ्रान्तस्यानुमितिः । तथा च तत्र व्याप्तिविशिष्टत्वसमानाधिक[illegible]नवृत्तित्वं पर्वतरूपादौ प्रसिद्धं तस्य द्रव्यत्वादावा[illegible]द्येव लक्षणभंगम इति भावः । [ यद्वा ननु काञ्चनमयपर्वतो वह्निमानित्याद्यनुमितावव्याप्तिः तादृशपक्षवृत्तित्वाप्रसिद्धेरत आह ज्ञानपदमिति । तथा वह्न्यादिव्याप्तिविशिष्टत्वसमानाधिकरणतत्तद्धर्मिवृत्तितायास्तत्तद्रूपावच्छिन्नवृत्तित्वत्वेन ज्ञानजन्यज्ञानत्वं तत्तद्रूपावच्छिन्नतत्तद्धर्मिकवन्ह्यादिसाध्यकानुमितेर्लक्षणमिति भावः ।]

परामर्शेन नियमतो व्याप्तिवैशिष्ट्यादिसामानाधिक॰

---

यत्तु ह्रदो वह्निमान्धूमादित्यादौ व्याप्तिविशिष्टत्वसमानाधिकरणह्रदधर्मत्वाप्रसिद्ध्या तज्ज्ञानासंभवादव्याप्तिरत उक्तं ज्ञानपदमित्यादि तत्तुच्छम् तत्र तादृशसामानाधिकरण्यस्याप्रसिद्ध्या तज्ज्ञानासंभवस्यानुपदं वक्ष्यमाणत्वेन संदर्भविरोधात् । केचित्तु बाधिताबाधितसाधारणेत्यस्य सदसत्साधारणेत्यर्थः तथा च सदुपरागेणासतो भानस्य टीकाकृता स्वीकारादसदेव सामानाधिकरण्यमादाय ह्रदो वह्निमानित्याद्यनुमित्यव्याप्तिनिरासाभिप्रायकोयं ग्रन्थ इत्याहुः । परे तु यत्र वह्निव्याप्तिविशिष्टत्ववद्गुणसंयुक्तत्ववान्धूम इत्यादिपरामर्शाद्गुणो वह्निमानित्यनुमितिस्तत्राव्याप्तिर्गुणसंयुक्तत्वरूपस्य पक्षधर्मत्वस्याप्रसिद्ध्या तज्ज्ञानासंभवादत आह ज्ञानेति बाधिताबाधितेत्यस्य सदसत्साधारणस्य पक्षवृत्तित्वस्य ज्ञानलाभादित्यर्थ इत्याहुः । तन्मन्दम् । सदुपरागेणासतः संसर्गमर्यादयैव भानस्य टीकाकृदादिप्राचीनसंमतत्वेन प्रकारविधयाऽलीकस्य गुणसंयुक्तत्वादेर्भानासंभवात् । अन्यथा परमताविशेषप्रसंगादिति । [ नव्यास्तु ननु बाधकालीनस्य परामर्शस्यानुव्यवसायेतिव्याप्तिः न च आद्यज्ञानेऽबाधितत्वं विशेषणम् अप्रामाण्यज्ञानविशिष्टबाधकालीनपरामर्शजन्यानुमितावव्याप्तिप्रसंगादत आह ज्ञानेति बाधिताबाधितेति बाधिताबाधितसाधारणपरामर्शत्वेन ज्ञानस्य कारणत्वलाभादित्यर्थः तथा च तादृशकारणत्वं लक्षणे निविष्टमिति नातिव्याप्तिः अत एव बाधितपदमपि साधु संगच्छत इति प्राहुः । ] केचित्तु ननु चरमज्ञानपदस्य [भ्रमपरत्वे प्रमानुमितौ] प्रमापरत्वे च भ्रमानुमितावव्याप्तिरत उक्तं ज्ञानेति इति क्रमेणावतारणिकामाहुः तच्चिन्त्यम् ॥ [वस्तुगत्या] तादृशपक्षधर्मताया ज्ञानमात्रनिवेशो धूमवान्पर्वत इति ज्ञानजन्यबुद्धावव्यतिव्याप्तिरतस्तादृशसामानाधिकरण्यावगाहिज्ञानं निवेश्यमित्याशयेन दूषयति परामर्शेनेति । अनुमितिजनकज्ञानेनेत्यर्थः । नियमत इति । तथा च वह्निव्याप्तिसंबन्धविशिष्टपर्वतसंबन्धवान् वह्निव्याप्यधूमवांश्च पर्वत इत्यादिसमूहालम्बनजन्यानुमितौ लक्षणसत्त्वेऽपि वह्निव्याप्यधूमवान्पर्वत इत्यादिधीजन्यप्रमानुमित्यव्याप्ति॰

रण्यग्रहे मानाभावात् । गौरवेण तद्विषयत्वेनाहेतुत्वाच्च । सम्बन्धसम्बन्धाग्रहेऽपि विशिष्टज्ञानत्वस्योपपादितत्वात् । भ्रमस्थले तादृशसामानाधिकरण्याप्रसिद्ध्या तज्ज्ञानासंभवात् । अस-

---

रिति भावः ॥ ननु व्याप्तिसंबन्धविशिष्टपक्षसंबन्धनिश्चयत्वेन हेतुत्वादुक्तस्थलेऽनुमितिरेवाप्रसिद्धा कुत्राव्याप्तिरत आह गौरवेणेति । लाघवात्पक्षवृत्तौ व्याप्तिविशिष्टत्वनिश्चयत्वेन पक्षे वा व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वादिति भावः ॥ [ताद्रूप्येण हेतुता मास्तु तथाप्यनुमितिहेतुपरामर्शस्य पक्षधर्मिकव्याप्तिविशिष्टत्वज्ञानत्वादिना व्याप्तिविशिष्टत्वपक्षधर्मत्वयोः सामानाधिकरण्यावगाहित्वानुमानादवश्यमुभयसामानाधिकरण्यावगाहित्वमतो नक्षत्वा(नोक्ता)नुमित्यव्याप्तिरत आह सम्बन्धेति । व्याप्तिसंबन्धपक्षसम्बन्धयोः संबन्धाग्रहेपीत्यर्थः । विशिष्टज्ञानस्य पक्षधर्मिकव्याप्तिविशिष्टज्ञानस्य । उपपादितत्वादिति । 'यत्र वह्निव्याप्यवानयमिति शाब्दपरामर्शादनुमितिः' इत्यादिग्रन्थेन मूलकृतैवोक्तत्वादित्यर्थः । तथाच तादृशपरामर्श एव व्यभिचाराप्नोक्तक्रमेणानुमानमिति भावः ।] ननु व्याप्तिविशिष्टबुद्धित्वं न व्याप्तिसम्बन्धावगाहिबुद्धित्वम् व्याप्तितत्संबन्धादिसमूहालम्बनादप्यनुमित्यापातात् किं तु व्याप्तिसम्बन्धसम्बन्धावगाहिबुद्धित्वमेव तत्कुतो लाघवमित्यत आह सम्बन्धेत्यादि तद्विशिष्टबुद्धित्वं तत्प्रकारकज्ञानत्वम् न तु सम्बन्धसम्बन्धावगाहित्वम् सम्बन्धसम्बन्धावगाहिसमूहालम्बनेऽतिप्रसक्तेः [अन्यथा दण्डी पुरुष इत्यादितो दण्डपुरुषसंयोगा इत्यस्य वैलक्षण्यानुपपत्तेः] प्रकारता च विषयताविशेषः स च स्वरूपसम्बन्धः पदार्थान्तरं वा अत एवाधिकरणाभावयोः सम्बन्धस्य स्वरूपानतिरेकेपि तदीयसमूहालम्बनविशिष्टबुद्ध्योर्भेदः न च तुल्यविषयकत्वे विषयतावैलक्षण्येन बुद्धिभेदे साकारवादापत्तिरिति वाच्यम् बाह्यवस्तूनां प्रामाणिकतयापह्नोतुमशक्यत्वादित्यादेर्बौद्धाधिकारटिप्पण्यामुक्तत्वादिति भाव इति प्राञ्चः।[(१)तन्मन्दम् विशिष्टबुद्धेः सम्बन्धसम्बन्धावगाहित्वमतेपि व्याप्तिविशिष्टबुद्धित्वापेक्षया व्याप्तिसम्बन्धविशिष्टबुद्धित्वस्य गुरु-

---

(१) इतः प्रभृति प्राचीनमतम् ।

तया तुल्यत्वायोगादिति । ] नव्यास्तु ननु व्याप्तिप्रकारकपक्षधर्मताज्ञानं नानुमितिजनकं व्याप्तिसम्बन्धपक्षसम्बन्धयोः समानाधिकरण्यावगाहिनाऽन्यत्वादित्यनुमानानुमितिप्रामाण्यकमेवेत्यत आह सम्बन्धेत्यादि व्याप्तिसम्बन्धपक्षसम्बन्धयोः सामानाधिकरण्याग्रहेऽपीत्यर्थः विशिष्टज्ञानत्वस्य विशिष्टस्य ज्ञानत्वं यत्रेति व्युत्पत्त्यानुमितिजनकीभूतविलक्षणज्ञानस्य उपपादितत्वात् मिश्रादिभिरुपपादितत्वादित्याहुः ॥ ननु व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्मताया विशिष्टवैशिष्ट्यनिरूपितविषयिताविशेषेण ज्ञानपदार्थेऽन्वयाल्लिलक्षणज्ञानलाभाञ्च वह्निव्याप्यधूमवान्पर्वत इत्यादिधीजन्यप्रमानुमित्यव्याप्तिरत आह भ्रमस्थल इति । तज्ज्ञानेति । व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्मत्वज्ञानेत्यर्थः । तथा च ह्रदो वह्निमानित्यादिभ्रमानुमितावव्याप्तिरिति भावः ॥ अथासदेव वह्निव्याप्तिविशिष्टत्वसमानाधिकरणं ह्रदवृत्तित्वं भ्रमस्थले प्रसिद्धमत आह असदिति । अलीके चक्षुः सन्निकर्षादेर्व्याप्त्यादेः शक्त्यादेश्च विरहेण प्रत्यक्षादिप्रमाणतस्तत्ख्यात्यसम्भवात् । सत्त्वे चासत्त्वव्याघातात् । विनापि प्रमाणव्यापारं तद्बुद्ध्युपगमे च शशविषाणादिप्रतीतिदशायां वन्ध्यासुतादेरपि ग्रहप्रसङ्गात् । अगृहीतशशादिकस्य पुंसः शशविषाणमित्यादिप्रतीत्यनुत्पत्त्या क्लृप्तशशादिविषयतामादाय भ्रमत्वेनैव तादृशप्रतीत्युपपत्तावतिरिक्ताखण्डालीकविषयत्वे मानाभावात् । शशविषाणयोः सम्बन्धोऽलीक इत्यादिव्यवहारस्य चापार्थकत्वात् । शशविषाणमसदित्यादिस्थले चासच्छब्दस्यात्यन्ताभावप्रतियोग्यर्थकत्वादिति भावः । [न चासतोऽप्रसिद्धया तत्ख्यातिनिषेधस्यायोगः । तदीयसंसर्गत्वावच्छेदेन तत्प्रमात्वघटकत्वोपगमेनार्थतस्तन्निरासादिति भावः । नव्यास्तु लिङ्गसंसर्गाग्रहाल्लिङ्गिकासंसर्गाग्रहस्योपेयत्वात् भ्रमस्थलेऽनुमित्यनुत्पत्तेः कुत्राव्याप्तिरत आह असदिति असतः प्रमापरमर्शादनुत्पन्नस्य ख्यातिनिरासादनुमितिभिन्नत्वनिरासादिति वदन्ति ॥] लक्षणाव्या-

---

(१) 'विशिष्टज्ञानं यत इति व्युत्पत्त्या'

(२) 'ति प्राहुः । तच्चिन्त्यम् ।'

(३) 'शशविषाणमित्यादिव्यवहारस्य चापार्थकत्वात्'

त्वख्यातिनिरासात् । अवान्तरवाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानानुदयात् । विषाणे शशसम्बन्धाभावनिश्चयदशायां शशविषाणजन्यमिदं कार्मुकमिति बुद्धेर्ब्रह्मणापि दुरुपपादत्वात् । न चात्र प्रमाण्यप्रस्तावात्प्रमैव लक्ष्या यदि च स-

---

न्निमुद्राव्य लक्षणवाक्यतः शाब्दबोधोऽप्यनुपपन्न इत्याह अवान्तरेति । अयोग्यतासंशयस्याप्रतिबन्धकत्वादुक्तं निर्णय इति । तथा च ह्रदधर्मता न व्याप्तिविशिष्टत्वसमानाधिकरणेत्यवान्तरवाक्यर्थायोग्यत्वनिश्चये तादृशपक्षधर्मतायां न ज्ञानपदार्थेऽन्वयः सम्भवतीति भावः ॥ अत्रैव दृष्टान्तयति विषाण इति । विषाणत्वावच्छेदेनेत्यर्थः । शशसम्बन्धेति । शशविषाणेत्यत्र तत्पुरुषे शशपदेन लक्षितस्य शशसंबन्धिनस्तादात्म्येन विषाणेऽन्वये शशसम्बन्धिभेदग्रहस्येव शशसम्बन्धाभावग्रहस्यापि स्वतो विरोधित्वात् । शशसम्बन्धाभावेत्यस्यैव वा शशसंबन्धेनाभाव इति व्युत्पत्त्या शशसंबन्धावच्छिन्नभेदोऽर्थः । तथा विषाणजन्यं कार्मुकमित्यादिवाक्यस्थलीयान्वयबोधाभिप्रायेण [वा] इदम् निपातार्थस्य शशसम्बन्धादेः साक्षादेव विषाणादिनामार्थेऽन्वयसंभवादिति तु परमार्थः । [ वैयाकरणमते शशविषाणमित्यादिवाक्यतः शशसंबन्धवद्विषाणमित्याकारको बोधः तैर्लुप्तविभक्तिप्रतिसंधानस्यान्वयसहकारित्वस्वीकारात् नामार्थयोर्भेदेनान्वयबोधस्य समासातिरिक्तस्थल एवाव्युत्पन्नतया मणिकृन्मतेऽपि शशपदस्य शशसंबन्धपरतया वेति तु नव्याः । अनुभवानुरोधेनासमानाकारस्यापि विरोधित्वमित्यपि कश्चित् । अपरे तु शशस्य संबन्धो यत्रेति व्युत्पत्त्या शशसंबंधाभाव इत्यस्य शशसंबन्धिभेदस्य लाभेन यथाश्रुतमेव सम्यगिति प्राहुः । तच्चिन्त्यम् ॥] नचेति । वाच्यमिति परेणान्वयः । प्रमैवेति । प्रकृतपक्षधर्मिकप्रकृतसाध्यकप्रमानुमितिरेवेत्यर्थः । तेन भ्रमानुमितेरप्यंशतः प्रमात्वेऽपि न क्षतिः । प्रमापदस्य भ्रमसामान्यभिन्नार्थकत्वे ह्रदः पर्वतश्च वह्निमानित्यादिसमूहालम्बनानुमितेरलक्ष्यत्वापत्तेरिष्टापत्तौ चोपाध्यायमतेऽपि तादृशसमूहालम्बनानुमितावेवातिप्रसङ्गसंभवादग्रे यदि चेत्यभिधानस्य संदर्भविरोधापत्तेरिति भावः । सल्लिङ्गपरामर्शादित्यत्र सल्लिङ्गपरामर्शमात्रा-

लिङ्गकपरामर्शादपि भ्रान्तानुमितिस्तदा चरमज्ञानपदं प्रमापरमिति वाच्यम् । अव्याप्यापक्षधर्मयोस्तत्त्वावगाहिना पक्षमर्शेन जनितायां वस्तुनः साध्यावगाहितया प्रमायामव्याप्तेः । लिङ्गोपहितलैङ्गिकभाननिरासेनांशिकभ्र-

---

न्तित्यर्थ इत्यपि वदंति ।] ननु भ्रमस्यालक्षत्वे पृथिवीत्वादिहेतुनायां गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यादिभ्रमानुमितौ महानसीयेतरवह्निबाधसहकृतायथार्थवह्निपरामर्शाज्जायमानायां पर्वतो महानसीयवह्निमानित्यादिभ्रमानुमितौ चातिव्याप्तिरत आह यदि चेत्यादि । पक्षतावच्छेदकसामानाधिकरण्येनैव गृहीतव्यापकतावच्छेदकरूपेणैव च पक्षे साध्यस्यानुमितिरित्युपाध्यायमतमालम्ब्योक्तं यदि चेति । प्रथमज्ञानपदस्य प्रमापरत्वे तद्दोषतावश्यमतश्चरमेति । प्रमापरमिति । प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्ताप्रमापरमित्यर्थः । तेन ह्रदो वह्निमान्पर्वतश्च वह्निमानित्यादिप्रमानुमितेरंशतो भ्रमत्वेपि न तत्राव्याप्तिनादवश्यम् ॥ यत्र व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्मत्वस्य हेतौ न भ्रमः किं तु पक्षधर्महेतौ व्याप्यत्वमात्रस्य व्याप्ये वा हेतौ पक्षधर्मत्वमात्रस्य भ्रमस्तादृशपरामर्शजन्यप्रमायामव्याप्तिमाह अव्याप्येत्यादिना । वस्तुनो वस्तुगत्या । तथा च वह्निव्याप्यद्रव्यत्ववान् गाह्यमहानसत्ववान्वा पर्वत इत्याकारकः परामर्शो यत्र द्रव्यत्वगतमेव पक्षधर्मत्वं महानसत्वगतमेव व्याप्यत्वं विषयीकरोति तत्रत्यायां पर्वतो वह्निमानिति प्रमायामव्याप्तिरिति भावः ॥ ननु अनुमितिमात्रस्यैव साध्यव्याप्यवत्पक्षावगाहित्वादुक्तस्थलीयानुमितिर्लिङ्गांशे भ्रमरूपैव सा च न लक्ष्या भ्रमसामान्याभिन्नत्वरूपस्यैव प्रमात्वस्य लक्ष्यलक्षणयोर्निवेशनीयत्वात् पर्वतो ह्रदश्च वह्निमानित्यादिसमूहालम्बनानुमितेरलक्ष्यत्वेऽपि क्षत्यभावात्कुतोव्याप्तिरत आह लिङ्गेति । साधकाभावादित्यादिः । न च धूमादिपरामर्शजन्यतावच्छेदकतयैवानुमितेर्वह्निव्याप्यधूमादिविषयकत्वासिद्धिः अन्यथा विनापि धूमादिपरामर्शं आलोकादिपरामर्शाद्वह्न्यनुमितेरुत्पत्त्या व्यभिचारादिति वाच्यम् तावतापि द्रव्यत्ववत्पर्वतध-

---

(१) तेन ह्रदो वह्निमानिति भ्रमानुमितेरप्यंशतः प्रमात्वेपि न तत्राव्याप्तिसावश्यम्'

मत्वस्यायोगात् । ईश्वरज्ञानतादृशज्ञानजन्यत्वस्य चाति-

---

मिकवह्न्यनुमितित्वावच्छिन्नं] प्रत्येव वह्निव्याप्यद्रव्यत्ववत्तानिश्चय-त्वेन हेतुतया तादृशानुमितेश्च प्रमात्वनियततोन तत्राव्याप्तितादव-स्थ्यात् । लाघवादेकविधव्याप्तेरेवानुमितिप्रयोजकत्वस्य व्यवस्था-प्यत्वादिति भावः । [परे तु वह्न्यनुमितौ उपनीतत्वनन(?)-त्वादेरिव वह्न्यंशे धूमादेरपि प्रकारतया भानात्तादृशानुमितिर्भ्रमरूपै-वेत्यत आह लिङ्गेति अनुमितिमात्रस्याभ्रमत्वेन लक्ष्याप्रसिद्धेरित्या-दिः लिङ्गोपहितं लिङ्गविशिष्टं यल्लैङ्गिकं साध्यं तस्यानुमितौ प्रका-रत्वनिरासेनेति प्राहुः । अपरे तु लिङ्गेति लिङ्गं लिङ्गतावच्छेदकं तदुपहिते तद्विशिष्टे लैङ्गिकस्य साध्यीयव्याप्यत्वस्य भाननिरासेन द्रव्यत्ववान्पर्वतो वह्निमानित्याकारकानुमितावांशिकभ्रमत्वस्याप्य-योगादित्यर्थ इत्यप्याहुः ] ॥ ननु पक्षस्य वस्तुगत्या साध्यवत्त्वे तत्रे-श्वरीयस्य व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्मताज्ञानस्य जन्य-तासत्त्वान्नाव्याप्तिरत आह ईश्वरेति । अतिप्रसञ्जकत्वाद्वह्निप्रत्यक्षा-दिसाधारणत्वात् । [इदमुपलक्षणम् व्याप्तिविशिष्टपक्षधर्मतत्वस्य वैयर्थ्यमपि [द्रष्टव्यम्] तथा च [तादृश] ज्ञानत्वाद्यनवच्छिन्नमेव जनकत्वं [जन्यतानवच्छिन्नं वा] लक्षणे प्रवेश्यम् तच्च प्रकृतानुमि-तावीश्वरज्ञानस्य नास्तीति भावः । यद्यपि व्याप्तिविशिष्टत्वसमाना-धिकरणपक्षधर्मताया विषयिताविशेषेण [ज्ञानेऽन्वयात्तादृश] ज्ञानमेव लक्षणे प्रविष्टम् अन्यथा परामर्शेन; नियमन इत्युक्तदोषतादवस्थ्यात् तत्र च प्रकृतसाध्यीयव्याप्तिप्रवेशे मानाभावात् यत्किंचित्पदार्थीय-व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्मताया विषयिताविशेषेण ज्ञान-मादाय लक्षणसंभवान्न कुत्राप्यव्याप्तिसंभावना तथापि प्रकृतव्या-प्तिविशिष्टवैशिष्ट्यनिरूपितविलक्षणविषयितासम्बन्धेन धर्मत्वस्यैव ज्ञानपदार्थेऽन्वयात्सर्वसामञ्जस्ये पक्षपदार्थपर्यन्तप्रवेशवैयर्थ्यान्नैवम-न्वयो वाच्य इत्याशयः । न च साध्यादिभेदेन व्याप्तेर्भेदादेकोपादाने ऽन्यसाध्यकाद्यनुमित्यव्याप्तिरतो जातिगर्भत्वध्रौव्ये न कुत्राप्यव्या-प्तिरिति वाच्यम् । तत्पक्षकतत्साध्यकतद्धेतुकानुमितित्वेन विशि-ष्यैव लक्ष्यतया जातिघटनाया अनावश्यकत्वादेकविधव्याप्तेरेव

---

( २ ) 'विशिष्टज्ञानत्वा'

प्रसञ्जकत्वात् । अत एव व्याप्तिविशिष्टपक्षधर्मता तज्ज्ञानं वेत्यादिकमपास्तम् । यदपि व्याप्तिविशिष्टं पक्षधर्मश्चेति द्वन्द्वाश्रयणाद्व्याप्तिविशिष्टपक्षधर्मत्वावगाहिज्ञानजन्यत्वं लभ्यते पदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदेनैव 'प्रमाणप्रमेय'इत्यादिसूत्रे अन्यत्र

---

सर्वत्रानुमितौ हेतुत्वादित्याशयादिति॥अत एव उक्तानुमित्यव्याप्तेरेव। विशर्मावधि विना कारकविभक्तिमन्तर्भाव्यैव तत्पुरुषस्य व्युत्पन्नधाराह तज्ज्ञानं वेति । व्याप्तिविशिष्टे यत्पक्षधर्मताज्ञानमिति ज्ञानान्ततत्पुरुषोपि नेत्यर्थः । आदिपदात् व्याप्तिविशिष्टा व्याप्तिसमानाधिकरणा या पक्षधर्मतेत्यादिकर्मधारयपरिग्रहः ॥ मिश्रमतमुपन्यस्यति व्याप्तिविशिष्टमिति । अथ चार्थे द्वन्द्व इति पाणिनिसूत्रेण चार्थे समस्यमानपदार्थयोर्भेदे द्वन्द्वस्य विधानदुक्तवाक्यतः तत्र सल्लिङ्गपरामर्शालाभः तत्र व्याप्तिविशिष्टस्यैव पक्षधर्मतया तदुभयोर्भेदविरहादत आह पदार्थयोरिति।ननु न्यायसूत्रे द्वादशविधस्यैव प्रमेयस्य प्रविष्टत्वात्तस्य भेदः प्रमाणेऽस्त्येवेत्यत उक्तम अन्यत्र चेति । अन्यत्र नीलघटयोरभेद इत्यादिवाक्ये । तथा च सूत्रेपि चार्थो भेदः समस्यमानपदप्रतिपाद्यतावच्छेदकयोरेव ग्राह्यः । न च प्रकृतेपि व्याप्तिविशिष्टत्वपक्षधर्मत्वयोर्भेदोऽस्त्येवेति भावः । ननु पदार्थतावच्छेदकभेदेन द्वन्द्वविधाने घटावित्यादिसरूपैकशेषो न स्यात् द्वन्द्वापवादस्य तस्य द्वन्द्वाप्रसक्तावसम्भवात् न च पदबोध्यभेद एव द्वन्द्वस्तथा च घटावित्यत्रापि घटपदबोध्यानां घटव्यक्तीनां परस्परभेदसत्त्वान्न द्वन्द्वाप्रसक्तिरिति वाच्यम् तथा सति घटकलशावित्येवमपि द्वन्द्वप्रसङ्गात् अनुशासनाभावेन तत्रैकशेषस्य कर्तुमशक्यत्वादिति चेन्न । सरूपैकशेषास्त्वपि क्षत्यभावात् । यत्र विष्णुत्वसिंहत्वादिकं विभिन्नमेव हरिपदार्थतावच्छेदकं तत्रैव तत्सम्भवाच्चेति दिक् । अत्र च नीलघटयोरभेद इत्यादिस्थले विभक्त्युपस्थाप्यं द्वित्वादिकं न विशेष्यान्वितं तस्यैकत्वेन बाधात् नापि विशेषणीभूतं नीलत्वघटत्वादावन्वितम् तयोः पदार्थतावच्छेदकत्वेनाकाङ्क्षाविरहात् । किं त्वनन्वितमेव । न चैवं द्विवचनवैयर्थ्यम् दारा इत्यत्र बहुवचनवत् [ सुप्यते इत्यत्र एकवचनवच्च ] साधुत्वार्थमेव तदुपयोगादिति ध्येयम् । स्वामिनो देवदेवरावित्यत्रेव व्युत्पत्तिवै-

च द्वन्द्वस्य दर्शनात् पदार्थद्वयाभेदबोधकाच्च कर्मधारयाद्भेदाभे-
दोदासीनपदार्थद्वयबोधजनकत्वेनैव द्वन्द्वस्य भेदात् विशिष्टपदस्य
वा धर्मपरतया व्याप्तिवैशिष्ट्यपक्षधर्मतयोर्लाभात् न चैवमालोको
वह्निव्याप्यो धूमवान्पर्वत इति ज्ञानजन्येऽतिव्याप्तिः एकत्र
तदुभयावगाहित्वस्योक्तत्वादिति केचित् तदप्यसत् । एवमपि
धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीतिज्ञानजन्येऽतिप्रसङ्गात् ।
एकरूपेण तदुभयावगाहित्वस्योक्तौ मीमांसकमतानुप्रवेशात् ।

---

चिद्यत्पदार्थतावच्छेदकेऽपि विभक्त्यर्थस्य द्वित्वादेरन्वय इ[ति अत
एव जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रे पदार्थ इत्येकवचनं
जात्यादित्रयस्यैकशक्तिविषयत्वलाभार्थमिति वार्तिकव्याख्ये]त्यपि
वदन्ति । ननु पदार्थतावच्छेदकयोर्भेदेन द्वन्द्वविधाने नीलोत्पलमि-
त्यादिकर्मधारयस्थलेऽपि तदापत्तिरत आह पदार्थेति । भेदस्तादात्म्या-
तिरिक्तः संबन्धः । अभेदस्तादात्म्यम् । तथा चैकपदार्थधर्मिकपदार्था-
न्तरवैशिष्ट्यविषयताबहिर्भूतविभिन्नधर्मावच्छिन्नपदार्थद्वयविषयता-
कबोधजनकत्वेनेत्यर्थः । तेनैकदा नीलोत्पलमित्यस्य द्वन्द्वकर्मधारयो-
भयत्वेऽपि न क्षतिः । [भेदात् भेदव्यवहारात् । ]पदार्थयोर्भेदे द्वन्द्ववि-
धानेऽपि न क्षतिरित्याशयेनाह विशिष्टपदस्येति । व्याप्तिविशिष्टपक्ष-
धर्मयोर्द्वन्द्वे अल्पस्वरस्य पक्षधर्मपदस्य विशेषविधिं विना पूर्वनिपाता-
पत्तिरत आह विशिष्टपदस्येतीत्यपि कश्चित् । ननु व्याप्तिविशि-
ष्टेन पक्षधर्मताया द्वन्द्वे वह्निव्याप्यद्रव्यत्ववान्पर्वत इत्यादिपरा-
मर्शेन व्याप्तिविशिष्टस्याविषयीकरणात्तज्जन्यानुमितावव्याप्तिरतो
वैशिष्ट्यपरतामाह धर्मेति । वैशिष्ट्यपरतयेत्यर्थः । न च विशि-
ष्टपदस्य तत्परत्वं न लक्षणया तस्य वाक्यत्वेन शक्त्यभावा-
दिति वाच्यम् । धातोरेव शक्त्या वैशिष्ट्यपरत्वात् । भावाभि-
हितक्तप्रत्ययस्य निरर्थकत्वात् । एतदाशयितुमेव प्रागपि विग्रहवा-
क्ये व्याप्तिविशिष्टमिति क्लीबनिर्देशः कृतः । नपुंसके भावे क्त
इत्यनुशासनादिति भावः । उक्तत्वादिति । 'तत्र व्याप्तिविशिष्टे'-
त्यादिमूलस्य तच्छब्देनैकधर्मिणो मूलकृतोक्तत्वादित्यर्थः । उक्तत्वा-
द्विवक्षितत्वादित्यर्थ इत्यपि केचित् ॥ द्रव्यमिति । तत्र व्याप्तिविशिष्टस्य

मिथस्तदुभयोपश्लेषावगाहित्वस्य च परामर्शाव्यापकत्वात् । न च तदुभयविषयकत्वनियतधर्मावच्छिन्नकारणताप्रतियोगिकार्यताशालित्वमर्थः । पक्षधर्मतापदोपदानवैयर्थ्यात् । व्याप्तिवि-

---

धूमस्यैव द्रव्यत्वेन पक्षधर्मत्वावगाहनादिति भावः ॥ मीमांसकेति।मीमांसकैरनुमितित्वेनाभिमते [ अनुव्यवसायात्मक ]ज्ञाने उक्तलक्षणस्यानुप्रवेशादुक्तत्वादित्यर्थः।तथा च वह्निव्याप्यवान्पर्वत इत्यादिपरामर्शे जन्यानुमितावव्याप्तेर्जातिगर्भतया वारणेपि वह्निव्याप्यो धूमो धूमवांश्च पर्वत इत्याकारकसमूहालम्बनस्यानुव्यवसायेतिव्याप्तिरिति भावः ॥ ननु व्याप्तिसंबन्धपक्षसंबन्धयोः परस्परवैशिष्ट्यावगाहित्वं वाच्यं तथा चोक्तसमूहालम्बनस्यातथात्वान्नोक्तातिव्याप्तिरत आह मिथ इति । अव्यापकत्वाद्वह्निव्याप्यधूमवान्पर्वत इत्यादिज्ञान एवाभावात् । तथा च तादृशपरामर्शस्थलीयानुमित्यव्याप्तिरिति भावः ॥ लक्षणस्थं जन्यपदं जन्यताविशेषपरमतो वह्निव्याप्यो धूमो द्रव्यं पर्वतवृत्ति इत्यादिज्ञानजन्ये नातिव्याप्तिरित्याशङ्क्य निराचष्टे न चेति । तदुभयविषयकत्वनियतेति । व्याप्तिसम्बन्धविषयकत्वाभावस्य तादृशविषयकान्यत्वस्य वा पक्षधर्मताविषयकत्वाभावस्य तादृशविषयकान्यत्वस्य वाधिकरणावृत्तीत्यर्थः। व्याप्तिविशिष्टत्वपक्षधर्मत्वोभयविषयकत्वनियतो यो धर्मः परामर्शत्वं तदवच्छिन्नकारणतानिरूपितं कार्यत्वमस्त्यनुमिताविति तत्र लक्षणसत्त्वम् परामर्शाद्यनुव्यवसाये तु न परामर्शत्वादिना हेतुत्वम् किं तु प्रत्यक्षमात्रे विषयत्वेन तच्च न तदुभयविषयकत्वनियतं घटज्ञानादौ व्यभिचारात् तत्तत्परामर्शप्रत्यक्षे विषयविधया घटादिस्मृतौ चोद्बोधकविधया तत्तत्परामर्शव्यक्तित्वेन हेतुतासत्त्वे तु धर्मपदं नानाव्यक्तिवृत्तिधर्मार्थकं वाच्यमिति भावः ॥ वैयर्थ्यादिति । स्वव्यापकतदुभयविषयकत्वसामानाधिकरण्यात्मके तदुभयविषयकत्वनियमे स्वव्यापकव्याप्तिविषयकत्वसमानाधिकरणधर्मावच्छिन्नत्वस्यैव सम्यक्त्वादिति प्राञ्चः । तदुभयविषयकत्वाभाववदवृत्तित्वलक्षणनियमस्य निवेशेऽखण्डाभावघटकतया पक्षधर्मताविषयकत्वस्य वैयर्थ्याविरहेऽप्यनतिप्रयोजनकत्वादित्यर्थ इति

शिष्टं यत्पक्षधर्मताज्ञानमिति तु स्यात् । यद्यप्यत्रापीन्धनसमानां-

---

कश्चित् । न च व्याप्तिविशिष्टबुद्धौ व्याप्तिज्ञानत्वेन हेतुत्वात्तत्रातिव्याप्तिवारणार्थमेव पक्षधर्मताप्रवेशः । तन्निवेशेऽपि व्याप्तिविशिष्टवैशिष्ट्यबुद्धावतिव्याप्तिरतस्तद्वारणार्थं चरमज्ञानस्य व्याप्यविषयकत्वेनावश्यं निवेशनीयत्वे तत एव व्याप्तिविशिष्टबुद्धावप्यतिव्याप्तेर्निरासात् । न चैवं व्याप्यविषयकत्वे सति व्याप्तिज्ञानजन्यत्वमित्यस्यैव सम्यक्त्वे व्याप्तिविषयकत्वनियतधर्मावच्छिन्नकारणत्वप्रवेशो व्यर्थ इति वाच्यम् । परमर्षीयव्याप्तिज्ञानजन्यस्य वह्न्यादिप्रत्यक्षस्य वारकतयैव तस्य सार्थकत्वात् । यद्यपि पक्षधर्मताविषयकत्वनियतधर्मावच्छिन्नकारणतेत्यादेरेव सम्यक्त्वात् व्याप्तिपदोपादानवैयर्थ्यमित्यपि वक्तुं युज्यते न चैवं धूमवत्पर्वतविशिष्टबुद्धावतिव्याप्तिश्चरमज्ञानस्य पक्षधर्मत्वाविषयकत्वेन विशेषणीयत्वे चासंभवोऽनुमितिमात्रस्यैव साध्यांशे पक्षसम्बन्धविषयकत्वादिति वाच्यम् साध्यादिभेदेन व्याप्तेरिव पक्षादिभेदेन पक्षधर्मताया अपि भिन्नतया धूमवत्पर्वतविषयकत्वनियतधर्मावच्छिन्नकारणताकत्वे सति धूमवत्पर्वताविषयकज्ञानत्वमित्युक्तावसंभवविरहात् । तथाप्यभावाविषयकत्वपर्यवसन्नस्य व्याप्यविषयकत्वस्य चरमज्ञानविशेषणत्वे लाघवम् । पक्षधर्मत्वाविषयकत्वप्रवेशे तु गौरवमेव । [ धूमत्वाविषयकत्वेनोक्तौ गौरवविरहेऽपि ] धूमवान्पर्वतो वह्निमानित्याकारिकैवानुमितिरिति लिङ्गोपधानमतस्य प्रमाणिकत्वे सर्वत्रैवोक्तप्रकारो न सम्भवतीत्याशयेन पक्षधर्मतापदमात्रस्य वैयर्थ्यमुक्तम् । संशयत्वस्य कार्यतावच्छेदकत्वे साधारणधर्म[दर्शन]विषया हेतुमत्तानिश्चयजन्ये साध्यादिसंशयेऽतिव्याप्तिभिया व्याप्तिविशिष्टपदवैयर्थ्यं नोक्तमित्यपि कश्चित् । यत्र साध्यस्यैव हेतुत्वमनुमितिस्तया चानुमितिः तादृशस्थलीयपक्षधर्मतामन्तर्भाव्योक्तक्रमेण लक्षणस्यासम्भवाद्व्याप्तिपदवैयर्थ्यं नोक्तमित्यप्याहुः ॥ इति तु स्यादिति । यद्यपि धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीत्यादिज्ञानस्यापि निरुक्तरूपवत्त्वात्तदनुव्यवसायेऽतिव्याप्तिः पक्षधर्मांशे व्याप्तिप्रकारकत्वविवक्षणे तु मिश्रोक्तग्रन्थपरित्यागानौचित्यम् तत्राप्युक्तविवक्षासंभवात् । तथापि

धिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसमाना-
धिकरणेन्धनवानयमित्यादिपरामर्शजन्येऽव्याप्तिः अखण्डव्याप्ते-
रप्रसिद्धत्वात् भ्रमानुमितेर्लक्ष्यत्वे चात्राकाशमात्मन इत्यादौ
नितरां तथा । तथापि तावत्पदार्थानां तथाविधपरस्परोपश्लेषाव-

---

व्याप्तिप्रकारकमित्यस्य व्याप्त्या प्रकारो यस्येति व्युत्पत्त्या व्याप्त्य-
वच्छिन्नप्रकारताकमित्यर्थः । तथा च ज्ञानान्तकर्मधारयेऽन्वयितावच्छेदकावच्छेदेनैवान्वयस्य व्युत्पत्तिसिद्धतया पक्षधर्मतावगाहित्वा-
वच्छेदेन व्याप्त्यवच्छिन्नप्रकारताकत्वस्य शब्दादेव लाभान्न विवक्षा।
द्वन्द्वे तु स्वातन्त्र्येणैव तद्विवक्षणीयमिति पूर्वतो वैलक्षण्यमिति भावः।
अत्रापीत्यपिकारेण प्रागुक्तसमस्तसमासः समुच्चीयते ॥ वह्निव्याप्ये-
न्धनवानित्युक्तौ साध्यवदन्यावृत्तित्वरूपव्याप्तिमादाय कदाचि-
त्प्रसिद्धिं कुर्यादतो विशिष्य निर्दिशति इन्धनसमानाधिकरणेति ।
अखण्डव्याप्तेरिति । यद्यपि तमो द्रव्यं रूपवत्त्वादित्यादौ तमःसम-
वेतत्वरूपस्य पक्षधर्मत्वस्याप्रसिद्धिरस्ति तथापि पक्षे धर्मता-
ज्ञानमिति ज्ञानान्ततत्पुरुषेण पक्षांशे धर्मतावगाहिज्ञानलाभादेव
न तद्दोष इत्याशयः । ननु साध्ये हेतुव्यापकत्वावगाहितानिरूपितं
यद्धेतौ साध्यसामानाधिकरण्यस्यावगाहित्वं तदेव व्याप्तिप्रकार-
कत्वं वाच्यमतो नोक्ताव्याप्तिरित्यत आह । भ्रमानुमितेरिति । [ ननु
साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यरूपैव व्याप्तिरत
आह भ्रमानुमितेरितीत्यपि कश्चित् । ] वृत्त्यनियामकसंयोगा-
दिसम्बन्धेन साध्यहेतुभावेऽखण्डव्याप्तेः प्रसिद्ध्या तत्रत्यानुमितौ
अव्याप्त्यसंभवात् वृत्तिनियामकसम्बन्धेन साध्यत्वसाधनत्वयोः
सूचनार्थमत्रेत्युक्तम् । नितरामिति । अव्याप्तिरिति पूर्वेणान्वयः ।
[ साध्ये हेतुव्यापकत्वावगाहि यत्साधने साध्यसामानाधिकरण्यावगा-
हि ज्ञानं तस्यैव व्याप्तिप्रकारकपदेन विवक्षया कथं चित्पूर्वोक्ताव्या-
प्तिवारणेपि ] अत्र हेतुव्यापकत्वसाध्यसामानाधिकरण्ययोरप्रसि-
द्ध्या तदुभयावगाहित्वमन्तर्भाव्यापि लक्षणस्य कर्तुमशक्यत्वाद-
व्याप्तिरेवेति भावः ॥ तावदिति । प्रागुक्तक्रमेणान्वयेव्याप्तिघटके-
त्यादिः । तथाविधमनुमित्युपयोगि यत्परस्परसम्बन्धावगाहित्वं

---

( १ ) 'यः । व्या '

गाहित्वमात्रं विवक्षितम् । न च व्यतिरेकिण्यव्याप्तिः । व्यभिचारधीविरोधिधीविषयत्वेनान्वयव्यतिरेकव्याप्त्योरनुगमात् । भवति हि धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निसमानाधिकरणधूमत्वे वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमत्वे वा गृहीते नियमतो वह्निव्यभिचारधीप्रतिरोधः । तथाविधधूमसमानाधिकरणत्वादिकं तु न तथा । रासभादौ तद्ग्रहेऽपि व्यभि-

---

विशिष्टवैशिष्ट्यविषयिताविशेषरूपं तदेव विवक्षितं व्याप्तिप्रकारकत्वेनेत्यर्थः । तेन धूमस्याधिकरणमधिकरणवृत्तिरभाव इत्याद्याकारकस्य तावत्पदार्थगोचरसमूहालम्बनस्य व्युदासः ॥ यद्यप्यन्योन्याभावादिगर्भान्वयव्याप्तिज्ञानस्थलीयानुमितावव्याप्तिः संभवति अत्यन्ताभावगर्भान्वयव्याप्तिनिविष्टवस्तूनामेव तावत्पदार्थेत्यादिना परामृष्टत्वात् तथाप्यन्वयव्याप्तीनां मध्येऽत्यन्ताभावगर्भाया: सिद्धान्तोक्तव्याप्तेरेवानुमित्युपयोगित्वमनुसृत्य शङ्कते न चेति । व्यतिरेकिणीति [ व्यतिरेकव्याप्तिज्ञानजन्यानुमितावित्यर्थः । केचित्तु निरुक्तावगाहिताशून्यपरामर्शजन्यानुमितावित्यर्थः तथा चान्योन्याभावगर्भव्याप्त्यवगाहिपरामर्शस्यापि संग्रहान्न दोषः अग्रे विरोधप्रदर्शनेऽत्यन्ताभावप्रदर्शनमुपलक्षणमिति वदन्ति । ] तत्र परामर्शस्य पक्षे साध्याभावव्यापकीभूताभावप्रतियोगित्वेन हेत्ववगाहितयान्वयव्याप्तिप्रकारकत्वाभावादिति भावः ॥व्याप्तिद्वये व्यभिचारधीविरोधित्वं ग्राहयति भवति हीति । धूमत्व इति । गृहीत इत्यग्रेऽन्वितम् ॥ ननु धूमव्यापकवह्निसमानाधिकरणधूमसमानाधिकरणरासभवान्पर्वत इति ज्ञानसत्त्वेऽपि धूमे व्यभिचारज्ञानानुदयात्तस्यापि व्यभिचारधीविरोधित्वमतस्तज्जन्यानुव्यवसायेऽतिव्याप्तिरत आह तथाविधेति । वह्निव्याप्येत्यर्थः । न तथा न पक्षधर्मांशे व्यभिचारधीविरोधि । तथा च तदवच्छिन्नविशेष्यकव्यभिचारधीविरोधिविषयप्रकारकतदवच्छिन्नवत्ताज्ञानजन्यत्वमर्थः । प्रागुक्तबुद्धिस्तु न रासभत्वावच्छिन्नविशेष्यकव्यभिचारज्ञानस्य विरोधिनी । धूमत्वावच्छिन्नव्यभिचारधीविरोधित्वेऽपि न तस्य पक्षधर्मतया भानमतो न दोष इति भावः । नव्यास्तु ननु धूमव्यापकवह्निसामानाधिकरण्यमात्र-

चारग्रहात् । व्यतिरेकसहचारेणान्वयव्याप्तिग्रहणाश्रयणाद्वा । न

---

मन्वयव्याप्तिस्तस्याश्च न व्यभिचारधीविरोधित्वं धूमव्यापकवह्नि-समानाधिकरणो रासभ इति ग्रहेऽपि रासभो वह्निव्यभिचारीति प्रत्ययात्तत्कथं व्यभिचारधीविरोधिधीविषयत्वेन तदनुगम इत्यत उक्तम् तथाविधेति तथाविधं धूमव्यापकवह्निनिरूपितं धूमनिष्ठं समानाधिकरण्यं न तथा न व्याप्तिः रासभादौ पक्षवृत्तिरासभादौ [व्याप्तिग्रहेऽपि] व्यभिचारग्रहादनुमित्यात्मककार्यस्यान्वयव्यभिचारग्रहात् तथा चैतदर्थमेव धूमव्यापकवह्निसमानाधिकरणधूमत्वपर्यन्तं प्रागुक्तमिति भाव इति प्राहुः ॥ ननु साध्यसामानाधिकरण्यस्यापि व्यभिचारधी-विरोधिधीविषयतया तत्प्रकारकस्य वह्निसमानाधिकरणधूमवान्पर्वत इति ज्ञानस्य जन्ये तदनुव्यवसायादावतिव्याप्तिः यादृशविशिष्टविषयकत्वेन व्यभिचारज्ञानविरोधित्वं तत्प्रकारकत्वोक्तौ चान्वयव्याप्त्यसंग्रहः केवलं धूमव्यापको वह्निरिति ग्रहेऽपि धूमो वह्निव्यभिचारीति ज्ञानानुदयेन धूमत्वविशिष्टे वह्निव्यभिचारग्रहं प्रति वह्नौ धूमव्यापकतानिश्चयत्वेनैव प्रतिबन्धकत्वध्रौव्ये व्याप्तिनिश्चयत्वेन पृथक् प्रतिबन्धकत्वाकल्पनात् वस्तुतः समानाकारस्यैव ज्ञानस्य प्रतिबन्धकतया द्वयोरपि व्याप्तिबुद्ध्योर्व्यभिचारधीप्रतिबन्धकत्वाभावादनुगमासम्भवः न च व्यभिचारधीपदेनान्वयव्याप्ते-र्व्यतिरेकव्याप्तेश्चाभावविषयकज्ञानविशेषमुपादाय तद्बुद्धिप्रतिबन्धकतावच्छेदकप्रकारितात्वेनान्वयव्यतिरेकव्याप्तेः प्रकारिताद्वयमनुगमय्य तादृशप्रकारितावच्छिन्नपक्षधर्मताज्ञानजन्यत्वमर्थ इति वाच्यम् धूमो वह्निव्याप्यो नेति बुद्धावधिकरणं न धूमीयमित्यादिज्ञानस्यापि विरोधितया निर्धूम[धूम]वान्पर्वत इत्यादिज्ञानस्यापि निरुक्तरूपवत्तया तज्जन्यानुव्यवसायादावतिव्याप्तेः प्रतिबन्धकतावच्छेदकादिभेदेन प्रतिबन्धकत्वस्य भेदादेवमप्यनुगमस्य कर्तुमशक्यत्वाच्चेत्यस्वरसादाह व्यतिरेकेति । तथा च व्यतिरेकव्याप्तिज्ञानं हेतुरेव न । कुतस्तज्जन्यानुमितावव्याप्तिरिति भावः । स्वयं व्यतिरेकपरामर्शजन्यबुद्धेरर्थापत्तित्वोपगमादाश्रयणादित्युक्तम् । आचार्यैराश्रयणादिति तदर्थः ॥ [अथ स्थाणुत्ववत्ययं न स्थाणुः स्थाणुर्न वेत्यादिभ्रमसंशयोत्तरं स्थाणुत्वव्याप्यवक्रकोटरादिमान-

च भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुतामते तत्रा-

---

पमित्यादिविशेषदर्शनजन्ये अयं स्थाणुरित्यादिप्रत्यक्षेऽतिव्याप्तिः व्याप्तिविशिष्टपक्षधर्मत्वज्ञानजन्यत्वस्यापि तत्र सत्त्वादित्याशङ्कते न चेति ।]भ्रमसंशयेति । यद्यपि स्वमतेऽपि विशेषणज्ञानत्वेनोपनयविधया च विशेषदर्शनस्य [भ्रम]संशयोत्तरप्रत्यक्षे हेतुत्वाद्धेतुतामत इत्यसंगतम् तथापि प्रत्यक्षादिज्ञानस्यापि कालोपाधिविधया परामर्शजन्यत्वात्तद्वारणार्थमेवावश्यं किंचिद्विशेष्यकत्वावच्छिन्नं पक्षीभूतपर्वतादिविशेष्यकत्वावच्छिन्नं वा परामर्शजन्यत्वमेव लक्षणे निवेश्यम् तथा च तत्तत्प्रकारकबुद्धित्वावच्छिन्नं प्रत्येव तत्तद्विशेषणज्ञानत्वादिना हेतुत्वात्तत्तद्विशेषणज्ञानादिजन्यतायाः किंचिद्विशेष्यकत्वानवच्छिन्नत्वान्न तामादाय दोषः । किं तु संशयोत्तरप्रत्यक्षत्वावच्छिन्नजन्यतामादायैव । तादृशजन्यतायां धर्म्यन्तर्भावस्यावश्यकत्वादिति भावः । यत्तु कालोपाधिविधया परामर्शजन्यतामादाय प्रत्यक्षादावतिव्याप्ति निराकर्तुं प्रमितिविभाजकोपाध्यवच्छिन्नमेव परामर्शजन्यत्वं लक्षणे निवेश्यम् तादृशं च न विशेषणज्ञानजन्यत्वं विशिष्टबुद्धित्वेनैव तदवच्छेदनादतो हेतुतामत इत्युक्तम् न च तथापि तदलौकिकप्रत्यक्षं तत्प्रकारकप्रत्यक्षं प्रत्येव वा तद्विषयकज्ञानत्वेन हेतुत्वात् व्याप्त्याद्युपनयजन्यतामादाय स्वमतेऽपि संशयोत्तरप्रत्यक्षेऽतिव्याप्त्या हेतुतामत इत्यसंगतमेवेति वाच्यम् तादृशहेतुतायां मानाभावात् अप्रसिद्धसाध्यकानुमितेः साध्यविशेषणकत्ववारणाय तत्प्रकारकानुभवत्वावच्छिन्नं प्रत्येव तद्विषयकज्ञानत्वेन हेतुत्वावश्यकत्वे तत एवोपनीतप्रत्यक्षसंभवादिति मतम् तच्चिन्त्यम् । एतावतापि भावस्य स्थाणुत्वादेरलौकिकप्रत्यक्षत्वावच्छिन्नं प्रत्येव तद्गोचरज्ञानत्वेन हेतुतायां बाधकाभावात् । तदुपनीतभानात्मके संशयोत्तरप्रत्यक्षे स्वमतेऽप्यतिव्याप्तिसम्भवात् । अभावसाध्यकानुमितेरेवाप्रसिद्धसाध्यकत्वेनाभावप्रकारकानुभवत्वावच्छिन्नं प्रत्येव तद्गोचरज्ञानत्वेन हेतुत्वस्य क्लृप्तत्वात् । प्रसिद्धसाध्यकपरामर्शस्य साध्यविशेष्यकानुमितिं प्रत्येव हेतुत्वात्ततः साध्यविशेषणकानुमितेरसम्भवाच्चेति ध्येयम् । अत्र संशयोत्तरप्रत्यक्षे विशेषदर्शनस्य हेतुत्वे मानाभावः विशिष्टबुद्धिसामान्यसामग्रीत एव संशयाद्युत्तरप्रत्यक्षस्यापि संभवात् एककोटि-

तिव्याप्तिः । तथाविधनिश्चयत्वेन हेतुताया विवक्षितत्वात् ।

---

टिविशेषदर्शनस्यापरकोटिविशिष्टधीप्रतिबन्धकतयोपयोगात् न चैवं तदीयसंशयोत्तरप्रत्यक्षं प्रति तदीयविशेषदर्शनस्याहेतुत्वे संशयोत्तरं विशेषदर्शनोत्पत्तिदशायामपि तद्वत्ताप्रत्यक्षस्योत्पत्तिः स्यादिति वाच्यम् इष्टत्वात् क्षणविलम्बस्य शपथनिर्णेतव्यत्वात् [न च वह्नि-व्याप्यधूमवत्तानिश्चयोत्तरं पर्वतधर्मिकवह्निविधेयकत्वावच्छिन्नं प्र-त्येव वह्निव्याप्यधूमवत्पर्वतनिश्चयत्वेन हेतुत्वमुच्यतां लाघवान्न तु तादृशानुमितित्वावच्छिन्नं प्रति हेतुत्वं गौरवात् स्वीक्रियतां च ता-दृशविधेयताकत्वमनुमिताविव भ्रमसंशयोत्तरनिश्चयात्मकप्रत्यक्षे-पीति तेनैव विशेषदर्शनोत्पत्तिकाले संशयोत्तरप्रत्यक्षवारणं सं-भवतीति वाच्यम् अनुमिताविव पक्षनिष्ठविशेष्यतानिरूपितसाध्य-प्रकारतानतिरिक्तस्य विधेयत्वस्य सर्वानुभवसिद्धतया निरस्यतया प्रत्यक्षे तस्य शङ्कानास्पदत्वादिति भावः ] किं च भ्रमसंशयौ तद्ध-र्मिकतद्विपरीतज्ञानत्वेनानुगमय्य तादृशज्ञानाव्यवहितोत्तरतद्धर्मिकत-त्प्रकारकनिश्चयात्मकप्रत्यक्षत्वावच्छिन्नं प्रत्येव तद्धर्मिकतद्व्याप्यदर्श-नस्य हेतुत्वं वाच्यम् अन्यथा व्यभिचारात् न चेदं युक्तम् अव्यवहितोत्तरत्वस्य स्वत्वादिगर्भत्वेन अननुगतत्वात् विशिष्टबुद्धि-सामान्यं प्रत्येव विपरीतनिर्णयस्य प्रतिबन्धकतया बाधभ्रमसत्त्वे तद्वत्ताप्रत्यक्षस्य विशेषदर्शनसहस्रेणाप्यसंभवात् निश्चयत्वस्यार्थस-माजग्रस्तत्वेन कार्यतावच्छेदकत्वासंभवाच्च न च तद्धर्मिकतद्वत्ताव-धारणात्मकप्रत्यक्षं प्रत्येव तद्धर्मिकतद्व्याप्यदर्शनस्य हेतुत्वम् नियमवि-षयकत्वस्यावधारणत्वस्य सर्वत्र संशयोत्तरप्रत्यक्षेऽसंभवात् त-स्याप्यर्थसमाजग्रस्ततया कार्यतानवच्छेदकत्वाच्च विषयिताविशेष-स्यावधारणत्वस्य च मानाभावेन निरस्तत्वादित्याशयेन हेतुतामत इत्युक्त्वाऽस्वरसो व्यञ्जितः ॥ तथाविधनिश्चयत्वेनेति । पक्षधर्मिक-व्याप्यवत्तानिश्चयत्वमात्रेणेत्यर्थः । न च तत्तदप्रामाण्यज्ञानानास्क-न्दितत्वस्यापि कारणतावच्छेदके प्रवेशात्तन्मात्राभिधानमयुक्तम् परा-मर्शधर्मिकतत्तदप्रामाण्यज्ञानाभावस्य स्वातन्त्र्येणैवानुमितिहेतुत्वात् अन्यथा विशेष्यविशेषणभावभेदेन गुरुतरानन्तकार्यकारणभावप्रस-ङ्गात् । गृह्यमाणाप्रामाण्यकस्यैकस्य परामर्शस्योत्तरमन्यपरामर्शात्

विशेषदर्शनस्य च भ्रमादिविरोधित्वेन तत्त्वमित्युक्तत्वात् । अत

---

क्षणविलम्बेनैवानुमितेः स्वीकारात् । तदुत्तरपरामर्शाभावविशिष्टतत्त्व-
दप्रामाण्यज्ञानत्वावच्छिन्नाभावत्वेनैव वा हेतुत्वस्य वक्तव्यत्वादिति
भावः । [ केचित्तु भ्रमेत्यादि तथाविधनिश्चयत्वेनेत्यन्तमेक एव
ग्रन्थः तेन विशेषदर्शनस्य विशेषणज्ञानविधया कुत्रचिज्जनकत्वेपि
हेतुतामत इत्यस्य नासङ्गतिरित्याहुः ॥ ननु निश्चयत्वेन
हेतुत्वविवक्षणेप्यतिव्याप्तितादवस्थ्यम् तद्विशेषदर्शनस्यापि
तद्व्याप्यवत्तानिश्चयत्वादत आह । विशेषदर्शनस्य चेति । तथा
च विशेषदर्शनस्य भ्रमादिविरोधित्वेन कारणत्वम् । अनुमितौ
तु व्याप्यवत्तानिश्चयत्वेनातो वैलक्षण्यमिति भावः ।] भ्रमादीति ।
अन्यथा तमसि घटसंशयोत्तरं विनापि व्याप्यदर्शनमालोक-
संयोगमात्रात् घटनिर्णयो न स्यादिति भावः । तत्त्वं हेतुत्वम् ।
[व्याप्यप्रकारकज्ञान]व्यावर्तकधर्मदर्शनव्यञ्जकधर्मदर्शनालोकसंयो-
गादिसाधारणं भ्रमादिविरोधित्वमप्येकं दुर्वचमित्यावेदयितुमुक्तत्वा-
दिति । वस्तुतस्तदपि वचनमात्रं न तु दोषजन्यविपरीतत्वाभावव्या-
प्यदर्शनव्यावृत्तं सम्भवतीति भावः । यद्यपि वह्निव्याप्यवत्तानिश्च-
यत्वघटकदलद्वयस्य विशेषणविशेष्यभावेन गुरुतरकार्यकारणभा-
वद्वयकल्पनामपेक्ष्य तत्पक्षकतत्साध्यकानुमितिं प्रति तद्विशेष्यकत-
द्व्याप्याभावप्रकारकज्ञानत्वेन प्रतिबन्धकताया एव लाघवेन कल्प-
नात् व्याप्यसंशयेनानुमित्यनुपपत्तिसम्भवात् व्याप्यवत्तानिश्चयत्वेन
नानुमितौ हेतुत्वम् किं तु व्याप्यप्रकारकज्ञानत्वमात्रेण तत्र च भ्रम-
त्वज्ञानानास्कन्दितत्वमेवापेक्षितम् न तु तन्निश्चयानास्कन्दितत्वम्
संशयसाधारणस्य व्याप्यवत्ताज्ञानस्य क्वचिदप्यनुमित्यनुपधायक-
त्वात् व्याप्याभावप्रकारकत्वेन प्रतिबन्धकतायामपि न भ्रमत्वनिश्च-
यानास्कन्दितत्वस्य भ्रमत्वज्ञानानास्कन्दितत्वस्य वा निवेशो भ्रम-
त्वनिश्चयास्कन्दिताद्व्याप्याभावसंशयादप्यनुमित्यापत्तेः यत्र च
व्याप्याभावस्य भ्रमात्संशयाद्वानन्तरं व्याप्यपरामर्शस्तत्र भ्रमा-
देर्नाशोत्तरमेवानुमितिः गुरुतरं व्याप्यनिश्चयत्वेन हेतुत्वमपेक्ष्य
क्षणविलम्बकल्पनाया न्याय्यत्वात् । तथापि व्याप्यतदभावसमुच्च-
यात्मकपरामर्शादनुमित्युत्पत्तये व्याप्याभावप्रकारकत्वानवच्छि-

एव लिङ्गवत्त्वादिलक्षणातिदेशवाक्यार्थज्ञानजन्योपस्थितौ नाति-
व्याप्तिः । तथाविधवाक्यार्थप्रतिसन्धानत्वेन तस्य हेतुत्वात् । न
चोपनयार्थज्ञानजन्यन्यायार्थज्ञाने तच्छब्देन संकेतितशब्दान्तरेण

---

व्याप्यप्रकारकत्वावच्छिन्नपक्षनिष्ठविशेष्यताकज्ञानत्वरूपं पक्षधर्मि-
कव्याप्यवत्तानिश्चयत्वं गुरुतरमपि [ [1]हेतुतावच्छेदकीकृतमिति
प्राञ्चः । नव्यास्तु व्याप्यप्रकारत्वान्यप्रकारत्वानवच्छिन्नपक्षनिष्ठ-
विशेष्यताकज्ञानत्वमेव पक्षधर्मिकव्याप्यवत्तानिश्चयत्वं वाच्यम्
अतस्ताद्रूप्येण हेतुतायां न विनिगमनाविरहावकाशः पक्षः साध्य-
व्याप्यवान्न वेत्यादिसंशयस्य व्याप्यप्रकारतानिरूपितं यत्पक्षनिष्ठ-
विशेष्यत्वं तदेव व्याप्यप्रकारताभिन्नेन व्याप्याभावप्रकारत्वेनाव-
च्छिन्नमतस्तादृशसंशयादनुमित्यनुत्पादः संशयमात्रस्यैव प्रकार-
ताद्वयनिरूपितैकविशेष्यत्वात् अत एव लीलावतीप्रकाशेऽपि विरो-
धिनानारूपावच्छिन्नविषयताप्रतियोगिज्ञानं संशयः समूहालम्बने
तु विरोधिप्रत्येकप्रकारतावच्छिन्ना विभिन्नैव विशेष्यता न तु विरो-
धिनानारूपनिरूपितैकेति संशयग्रन्थे स्फुटमभिहितमिति प्राहुः ॥
अत एवेति । तादृशनिश्चयत्वेन हेतुत्वस्य लक्षणाघटकत्वादेवेत्यर्थः ।
लिङ्गवत्त्वेति । लिङ्गं व्याप्यम् । तथा च व्याप्यवत्त्वरूपो योऽतिदे-
शवाक्यार्थः तस्य यज्ज्ञानं वह्निव्याप्यधूमवत्पर्वतसदृशं चत्वरपद-
वाच्यमित्याकारकं तज्जन्यायामिदं चत्वरपदवाच्यमित्याकारो-
पमितावित्यर्थः ॥ तथाविधेति । तादृशो योऽतिदेशवाक्यार्थः सादृ-
श्यं तत्प्रतिसन्धानत्वेनेत्यर्थः । न तु वाक्यार्थत्वस्यापि प्रवेशो गौर-
वान्मानाभावच्चेति ध्येयम् ॥ न चेति । वाच्यमिति परेणान्वयः । न्याया-
र्थेति चिन्तामणिकृतां मते । तैः पञ्चावयवजन्यविशिष्टबुद्धिस्वीका-
रात् । स्वमते तूपनयार्थविशेष्यकनिगमनार्थप्रकारकबोधेऽतिप्रसङ्गो
द्रष्टव्यः । ननु वह्निव्याप्यधूमवानयमित्युपनयार्थज्ञानं न पक्षे व्याप्ति-
विशिष्टप्रकारकं मतुबर्थस्य वह्निव्याप्यधूमसम्बन्धिन एव तादा-
त्म्येन तत्र प्रकारत्वात् लक्षणघटकं च तादृशमेव ज्ञानमतो नाति-
व्याप्तिः तथा चायमित्यादिप्रयोगस्तु न सर्वसम्मत इत्यत आह

---

(१) इतः प्रभृति ३७ पृष्ठे १६ पङ्क्तिस्थ 'केचित्तु विशिष्टवैशिष्ट्य' इत्यन्तो ग्रन्थ एकस्मिन् पुस्तके लेखकमौर्ख्यात्त्रुटः ।

वा व्याप्त्यादिविशिष्टोपस्थितिद्वारा जनिते शाब्दबोधेतिव्याप्ति-र्व्युत्पादयिष्यते हि महावाक्यार्थज्ञानस्यावान्तरवाक्यार्थज्ञानजन्यत्वम् तदादेश्च विशेषरूपेणोपस्थापकत्वमिति वाच्यम्। तत्रातिरिक्तस्य पदजन्यत्वस्य कारणतावच्छेदकेऽनुप्रवेशात् । निश्चय-

---

तच्छब्देनेति । ननु यत्र सोऽस्तीत्यादिवाक्यात् वह्निव्याप्यधूमवत्पर्वतोऽस्तीत्यादिधीस्तत्रैवकारखल इव व्याप्त्यादिघटकीभूतप्रत्येकपदार्थ एव तच्छब्दशक्तिज्ञानात्प्रत्येकपदार्थोपस्थित्या परस्परमन्वयबोधो न त्वाहत्यैव तत्पदात् व्याप्यवत्पर्वतस्योपस्थितिरतो नातिव्याप्तिरित्येवं यदि ब्रूयात्तत्राप्याह संकेतितेति। यत्र वह्निव्याप्यधूमवत्पर्वत एव डित्थादिपदस्य संकेतग्रहः प्रथमं जातः तत्र डित्थोऽस्तीत्यादिवाक्यजन्ये वह्निव्याप्यधूमवत्पर्वतोऽस्तीत्याकारकशाब्दबोधेऽतिव्याप्तिरित्यर्थः। शब्दान्तरे निरुक्तव्युत्पत्तेरसत्त्वादिति भावः। ननु उपनयार्थज्ञानं न न्यायार्थबुद्धौ हेतुस्तद्घटकप्रत्येकपदजन्यपदार्थस्मृतेर्महावाक्यार्थज्ञानपर्यन्तमसत्त्वेनावान्तरवाक्यार्थबोधस्य महावाक्यार्थबुद्धावहेतुत्वा[त्त]त्कथं तत्रातिव्याप्तिरत आह व्युत्पादयिष्यत इति। पदजन्यपदार्थस्मृतिमात्रं नान्वयबोधहेतुः। किं तु पदप्रयोज्यं पदार्थधीमात्रम्। तच्चावान्तरवाक्यार्थबोधमादायैव तावत्पर्यन्तमस्तीति भावः। ननु तच्छब्दाद्बुद्धिस्थत्वेनैव पदार्थोपस्थितिरतः सोऽस्तीत्यादिवाक्यजन्यबोधे कथमतिव्याप्तिरुक्तेत्यत आह तदादेश्चेति। व्युत्पादयिष्यत इति पूर्वेणान्वयः॥ व्याप्यवत्त्वादेः संस्कार इव स्मरणेऽप्युपेक्षान्यतमत्वानिश्चयत्वेन हेतुत्वस्य प्रामाणिकत्वे तत्रातिव्याप्तिवारणाय तथाविधनिश्चयत्वमात्रावच्छिन्नहेतुत्वं लक्षणे निवेश्यमित्याशयेनाह तत्रातिरिक्तस्येति । पदजन्यत्वस्येति । कारणत्वादिसंबन्धेन [घटादि]-पदादुपस्थितस्याप्याकाशादेः शाब्दबोधानुत्पत्त्या वृत्त्या पदजन्यतदुपस्थितित्वेनैव तच्छाब्दबोधं प्रति हेतुत्वादित्यर्थः॥ ननु चरमज्ञानपदस्यानुभवपरत्वेनैव स्मृतेर्वारणसम्भवात्तथाविधनिश्चयत्वमात्रेण हेतुत्वं न लक्षणे प्रवेश्यम् किं तु तादृशनिश्चयत्वेन हेतुत्वमेवा-

---

(१) 'यद्वा ननु ज्ञानपद' इति क्वचित्पाठः । तस्मिन् पुस्तके 'नातिव्याप्तिरिति भावः' (३६ पृष्ठे १३ पङ्क्तौ) इति ग्रन्थानन्तरमयं ग्रन्थः 'इत्यपि स्यात्' (३६पृष्ठे १० पङ्क्तौ) इत्यस्याभावश्च ।

त्वस्याप्रवेशाच्च । न च तथापि तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रति तत्त-
द्विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वात्तादृशशाब्दबोधे
प्रसक्ते चातिव्याप्तिः दण्डो रक्तो न वेति संशये रक्तदण्डवानयमि-

---

त्यथानुमितावपि भ्रमत्वज्ञानानास्कन्दितव्याप्यवत्तानिश्चयत्वेनैव
हेतुत्वादसंभवापत्तेस्तत्कुतः शाब्दधीवारणमत आह निश्चयत्वस्येति।
ननु तच्छाब्दबोधे तदर्थकपदज्ञानत्वेनैव हेतुत्वं तत्र च वृत्त्या स्वज-
न्यपदार्थोपस्थितेः कारणत।घटकप्रत्यासत्तित्वादेवोक्तातिप्रसङ्गनिरा-
सलंभवे पदार्थोपस्थितिहेतुतायां न पदजन्यत्वप्रवेशो मानाभा-
वादित्यतिव्याप्तितादवस्थ्यमत आह निश्चयत्वस्येतीत्यपि कश्चित् ।
स्मृतिशाब्दरूपाया एव पदार्थोपस्थितेर्व्यापारत्वात् [तस्याश्च निश्चय-
त्वनियमात्] शाब्दबोधे पदार्थस्मृतित्वेन वृत्तिज्ञानजन्यपदार्थोपस्थि-
तित्वेनैव[वा] हेतुत्वं न तु निश्चयत्वेनेति नातिव्याप्तिरिति भावः ॥ न
चेति। वाच्यमिति परेणान्वयः। तथापि पदार्थोपस्थितिजन्यतयातिव्या-
प्तेर्निरासेपि । अत्र च घटवदित्यादिविशिष्टवैशिष्ट्यबुद्धौ न घटत्वा-
दिनिश्चयत्वेन हेतुत्वं किं तु घटत्वादिप्रकारकज्ञानत्वमात्रेणाय
घटो न वेति संशयोत्तरमपि तादृशबुद्ध्युत्पादात् किं तु यत्र विशे-
षणतावच्छेदकांशे धर्मितावच्छेदकतया किंचिद्भासते तत्रैव तत्प्र-
कारकनिश्चयत्वेन हेतुत्वम् यथा नीलघटवदित्यादौ घटत्वावच्छिन्नवि-
शेष्यकनीलनिश्चयत्वेन [हेतुत्वम्] इत्यावेदयितुं तत्तदित्यभिहितमिति
ध्येयम् । वस्तुतः पर्वतो वह्निव्याप्यधूमवान्न वेति संशयदशायां वह्नि-
व्याप्यधूमवत्पर्वतत्वावच्छिन्नप्रकारताकस्येव तादृश[विशिष्ट]पर्वत-
त्वावच्छिन्नविशेष्यताकस्यापि ज्ञानस्यानुत्पादादुभयत्रैव पर्वतवि-
शेष्यकवह्निव्याप्यधूमवत्तानिश्चयत्वेन हेतुत्वम् । अन्यथा तु वह्निव्या-
प्यधूमवत्पर्वतत्वावच्छिन्नविषयताकज्ञानत्वेनैव बोध्या विशेष्यत्व-
प्रकारत्वयोर्द्वयोरपि तादृश [ज्ञानविषयताक]त्वादेवं च विशिष्टस्य
वैशिष्ट्यबुद्धौ [एक]विशिष्टेऽपरवैशिष्ट्यमिति बुद्धौ चोभयत्रापि वि-
शेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वमित्यावेदयितुं तत्तदित्य-
भिहितमिति ध्येयम् । विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमित्या-
दिज्ञानस्यापि विशिष्टवैशिष्ट्यज्ञानतया तत्र विशेषणतावच्छेदकप्र-
कारकनिश्चयस्य हेतुत्वासम्भवात् तत्तदित्युक्तमित्यपि केचित् । अले

ति ज्ञानानुदयादिति वाच्यम् । ज्ञानोपरमेऽपि विशिष्टविषयोपधाने-

---

कपोतन्यायेनैव शाब्दधीरिति मते तादृशप्रत्यक्षं प्रत्येव विशेषण-तावच्छेदकप्रकारकनिश्चयस्य हेतुत्वं शाब्दादेस्तादृशविषयतायाः पदार्थोपस्थित्यादेरेव नियामकत्वसम्भवादिति मते वा न शाब्दादावतिव्याप्तिरतः प्रत्यक्षे चेत्युक्तम् । ननु विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारज्ञानत्वेनैव हेतुत्वम् न तु निश्चयत्वेन गौरवात्तत्कुतोऽतिव्याप्तिरत आह दण्डो रक्तो न वेति । तादृशसंशयानुव्यवसायस्तु रक्तत्वेन दण्डं संदेह्मीत्याकारो रक्तत्वतदभावप्रकारकदण्डविशेष्यकज्ञानवत्त्वावगाही न तु रक्तत्वविशिष्टदण्डज्ञानावगाही । रक्तदण्डं संदेह्मीत्यनुव्यवसायस्तु रक्तदण्डकोटिकस्य तादृशधर्मिकस्यैव संशयस्य । न तु दण्डधर्मिकरक्तत्वसंशयस्य । तदीयत्वे वा विशेष्ये विशेषणमिति न्यायेनैव । न चैवं दण्डो रक्तो न वेति संशयानन्तरमयं रक्तदण्डवान् वेत्यौचित्या वर्जितः संशयो न स्यादिति वाच्यम् । इष्टत्वात् । सत्त्वे वा तस्यापि विशेष्ये विशेषणमित्यादिरीत्यैव स्वीकारात् । ] केचित्तु विशिष्टवैशिष्ट्यविषयताकस्याप्युक्तसंशयस्यानुभवसिद्धतया विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव तादृशबोधहेतुत्वं न तु तादृशनिश्चयत्वेन व्यभिचाराद्गौरवाच्च न च संशयसाधारणज्ञान[मात्र]स्याप्रामाण्यानिश्चया-[ना]स्कन्दितस्यैव कार्यजनकतया तत्तदप्रामाण्यनिश्चयत्वावच्छिन्नाभावत्वेन हेतुत्वे गौरवमिति वाच्यम् सर्वत्रैवाप्रामाण्यज्ञानस्याननुगतरूपेण तद्विरोधित्वस्य दुर्वचत्वेनाप्रामाण्यनिश्चयानां तत्तद्व्यक्तित्वावच्छिन्नाभावत्वेन हेतुतया गौरवानवकाशात् [विशेषणतावच्छेदक]प्रकारकनिश्चयत्वेन हेतुत्वपक्षे एव तदप्रामाण्यज्ञानमात्रस्य कार्यविरोधितया तत्तदप्रमाण्यनिश्चयव्य[क्तीनामिव तदप्रमाण्यसंशयव्य]क्तीनामप्यभाव[कूट]स्य तत्तद्व्यक्तित्वेनैव विशिष्टवैशिष्ट्यधीहेतुत्वकल्पनायां विपरीतगौरवापत्तेरित्याहुः ॥ विशिष्टेति । घटत्वादिविशिष्टो यो विषयस्तद्विषयकत्वेनेत्यर्थः । तथा च विनश्यदवस्थज्ञानजनितयोरिच्छाद्वेषयोर्घटमिच्छामि घटं द्वेष्मीत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षे व्यभिचाराच्च ज्ञानत्वं तदीयकारणतावच्छेदके [३]निविष्टमिति

---

(२) 'प्रस्तुत निश्च' (३) 'नित्यज्ञानज'

नेच्छाद्वेषयोः कृतेश्च साक्षात्काराद्विशेषणविषयकाद्विशिष्टसंस्का- राद्देव विशिष्टस्मरणाच्च तद्विषयकगुणानां तत्र हेतुत्वेन

---

भावः। तेनाविनश्यदवस्थज्ञानजनितेच्छादेरिच्छात्वाद्यंशे निर्विक- ल्पकप्रत्यक्षस्य तज्जनकज्ञानादिच्छात्वादिप्रकारेण तादृशेच्छादेर्द्वितीयसाक्षात्कारस्य च प्रागुपनीतघटादिविषयकेच्छात्वादिनिर्विकल्पकादेव सम्भवात्तादृशस्थले व्यभिचारासम्भवेऽपि न क्षतिः। ननु ज्ञानस्येच्छाद्वेषौ प्रति कार्यसहभावेन हेतुत्वमते विनश्यदवस्थज्ञानेन तयोरजननात् कस्य प्रत्यक्षे व्यभिचार इत्यतः स्थलान्तरमाह कृतेश्चेति। न च कृतिसाक्षात्कार एव विषयोपनीतभानार्थं विषयस्मृतेरावश्यकत्वान्न व्यभिचारः। सप्रकारकतद्विषयकत्वेनेच्छादिसाधारणेनैव तद्विषयकालौकिकप्रत्यक्षेऽपि हेतुत्वादिति भावः। ननु प्रत्यासत्ति[विषय]विधया विशिष्टविषयकस्मृतेरनपेक्षायामपि विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वानुरोधात्तदपेक्षावश्यकीति कुतो व्यभिचार इत्यत आह विशेषणविषयकादिति। तथा च विशिष्टबुद्धावपि न विशेषणज्ञानत्वेन हेतुत्वं स्मरणे व्यभिचारात्किं तु तद्विषयकत्वेनैव। तच्च कृत्यादिसाधारणमतो नैतदनुरोधेन [विषय]स्मृतेरावश्यकत्वमिति भावः। समानविषयकत्वेनैव संस्कारस्मृत्योः कार्यकारणभावाद्विशेषणविषयकसंस्कारात्कुतो विशिष्टस्मृतिरित्याशङ्कामपनेतुं विशिष्टसंस्कारादित्युक्तम्। तत्रेति। तत्तद्विशिष्टवैशिष्ट्यबोध इत्यर्थः। तथाच विशेषणतावच्छेदकीभूततत्तद्धर्माभावाप्रकारकतत्तद्धर्मप्रकारकत्वेन तत्तद्धर्मप्रकारत्वान्यप्रकारत्वानिरूपिततत्तद्विशेषणनिष्ठविशेष्यताकत्वेनैव वा तत्तद्विशिष्टवैशिष्ट्यबुद्धौ हेतुत्वाल्लक्षणे च तादृशप्रकारताकज्ञानत्वावच्छिन्नहेतुताया एव निवेशान्नातिव्याप्तिरिति भावः। यद्यपि विशेषणतावच्छेदकप्रकारतामात्रेण विशिष्टवैशिष्ट्यबुद्धिहेतुत्वे वह्निव्याप्यांशेऽनुद्बुद्धसंस्कारात्पर्वतेन्द्रियसंयोगदशायां वह्निव्याप्यधूमवान्पर्वत इत्याकारकविशिष्टवैशिष्ट्यप्रत्यक्षापत्तिः संस्कारात्मकस्यैव संनिकर्षस्य वह्निव्याप्यांशे सत्त्वात् धूमो वह्निव्याप्यो न वेत्याकारिकाया ज्ञानलक्षणप्रत्यासत्तेः सम्भवाच्च न चापाद्यतत्तत्प्रत्यक्षव्यक्तिविशेषान्प्रति तत्तदुद्बोधकस्य तत्तद्व्यक्तित्वेन हेतुत्वकल्पनात् तदभावादेव तादृशप्रत्यक्षापत्त्यसम्भवः तत्तत्प्रत्यक्षव्यक्ती-

न्यूनवृत्तिज्ञानत्वस्याप्रवेशात् । इच्छादितः संस्काराच्चानुमितेरनुदयात् । संस्काराद्यन्यत्वस्य गुरुतया ज्ञानत्वेनैव तत्र हेतुत्वात् । न च परामर्शानुव्यवसायेऽतिव्याप्तिः।सामान्यतः प्रत्यक्षे विषय-

---

नां पूर्वं स्मृतिव्यक्तीः कल्पयित्वा तत्तत्स्मृतौ तत्तदुद्बोधकव्यक्तित्वेन हेतुत्वकल्पनामपेक्ष्य तत्तत्प्रत्यक्षव्यक्तिष्वेव तत्तदुद्बोधकव्यक्तीनां हेतुत्वकल्पनायां लाघवादिति वाच्यम् [यतो] विशिष्टवैशिष्ट्यप्रत्यक्षव्यक्तीनां पूर्वं विशेषणतावच्छेदकप्रकारिकाः स्मृतिव्यक्तयोऽनुभवसिद्धास्तत्रत्यप्रत्यक्षव्यक्तीनां शाब्दानुमित्योधात्मकविशेषणतावच्छेदकप्रकारकज्ञानैर्जनितप्रत्यक्षव्यक्तीनां चापाद्यत्वात् न हि तादृशप्रत्यक्षव्यक्तिष्वपि हेतुत्वमुद्बोधकव्यक्तीनां[क्लृप्तं]येन तदभावादेव तादृशप्रत्यक्षानिरासः सम्भवति । तथापि विशेषणतावच्छेदकप्रकारकसंस्कारसत्त्वे यद्युद्बुद्धदशायां विशिष्ट[वैशिष्ट्य]प्रत्यक्षं तत्तदुद्बुद्ध्यभावविशिष्ट[तादृश]संस्कारत्वेन विशिष्टवैशिष्ट्यबोधं प्रति प्रतिबन्धकत्वकल्पनाददोषः न च ज्ञानत्वस्य कारणतावच्छेदकत्वमेपक्ष्योक्तप्रतिबन्धकत्वकल्पने गौरवम् । ज्ञानोपरमेऽपि विशिष्टविषयोपधानेन कृत्यादिसाक्षात्कारोत्पत्त्या व्यभिचारेण ज्ञानत्वस्याप्रवेशनियमेन तादृशप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवस्य प्रामाणिकत्वादित्याशयः ॥ नन्वनुमितावपि व्याप्याभावाप्रकारकव्याप्यप्रकारकत्वमात्रेण हेतुत्वम् न तु ज्ञानत्वान्तर्भावेणेत्यसम्भव एवेत्यत आह इच्छादित इति । ननु साध्यव्याप्यवत्पक्षावगाहीच्छाद्वेषयोर्द्वितीयक्षणे प्रायशोऽनुमितिस्तथापि वाच्येच्छादिजनकस्य परामर्शात्मकज्ञानस्य पूर्वं सत्त्वात् कृत्युत्तरञ्च द्वित्रिक्षणेऽनुमित्यनुत्पादो निर्णेतुमशक्य इत्यतः स्फुटं व्यभिचारस्थलमाह संस्काराच्चेति ॥ संस्कारादीत्यादिपदादिच्छाद्वेषकृतीनां परिग्रहः । ज्ञानत्वेनैवेति ।तदन्तर्भावेणैवेत्यर्थः। तत्र अनुमितौ ॥ न च परामर्शानुव्यवसायेऽतिव्याप्तिरिति । तथाविधनिश्चयत्वेन हेतुत्वस्य विवक्षितत्वादिति प्राक्तनो हेतुरनुषञ्जनीयः। सामान्यतो हीत्येव वाम्रे पाठः। तेन न चेत्यत्र हेत्वलाभेपि न क्षतिरिति ध्येयम् ॥ विषयत्वेनेति । साक्षात्करोमीति प्रतीतिसाक्षिकाविलक्षणाविषय-

---

(१) 'पुस्तवति' (२) 'स्यर्यवि'

(३) 'तत्तज्ञावादेव तादृशनियमः संभवाति'

त्वेन तत्तद्विषयकप्रत्यक्षे तत्त्वेन कदाचिज्ज्ञानादिप्रत्यक्षे ज्ञानत्वा-

---

त्वेनेत्यर्थः। तेनातीन्द्रियस्य गुरुत्वादृष्टादेः सत्यपीन्द्रियसंनिकर्षे न प्रत्य-क्षम्। न तु निर्विकल्पकविषयत्वेनेत्यर्थः। ज्ञानादेः सविकल्पकमात्रवे-द्यत्वात्तत्प्रत्यक्षे व्यभिचारापत्तेः। अत्र च कारणस्य तादात्म्यं कार्य-स्य तु लौकिकविषयत्वं प्रत्यासत्तिस्तेनातीतविषयकप्रत्यक्षेऽतीत-विषयाणामहेतुत्वेऽपि न क्षतिः। ननु लौकिकविषयत्वस्यैकस्याभावा त्कार्यतावच्छेदकसम्बन्धाननुगमात्कथमनुगतः कार्यकारणभावः लौकिकसन्निकर्षजन्यत्वादेरपि सन्निकर्षभेदेन नानात्वात् न च सा-क्षात्कारत्वनिरूपितविषयत्वमेव कार्यताघटकः सम्बन्धस्तादृशविष-यतया च प्रत्यक्षं नातीतादावतो न व्यभिचार इति वाच्यम् शुक्ति-मृगतृष्णादिधर्मिकस्य तद्रजतमेवेदं तज्जलमेवेदमित्यादिप्रत्यक्षस्य दोषविशेषजन्यस्य तादृशविषयतासम्बन्धेनातीतरजतजलादावपि सत्त्वेन व्यभिचारात् तत्रापि तद्रजतं साक्षात्करोमीत्यनुभवात् न च तत्र तादृशविषयतांशे भ्रमः मानाभावात् साक्षात्कारत्वनिरूपित-विषयताया लौकिकसन्निकर्षस्येव दोषविशेषस्यापि जन्यतावच्छेद-कत्वप्रसक्तावेकशेषस्य कर्तुमशक्यत्वात् लौकिकस्येव दोषविशेषज-न्यस्यापि रजतत्वप्रकारकप्रत्यक्षस्य रजतानयनगोचरप्रवृत्तिहेतुत-योपादानप्रत्यक्षनिष्ठप्रवृत्तिजनकतावच्छेदकत्वेन तादृशविषयताया लौ-किकसंनिकर्षजन्यदोषविशेषजन्यप्रत्यक्षविशेषसाधारणत्वाच्च वस्तु-तो विषयत्वस्य ज्ञानसमानकालीनतया निरुक्तविषयत्वावच्छिन्न-स्य घटादेः प्रत्यक्षप्राक्कालेऽसत्त्वात् तादृशविषयत्वेन हेतुत्वं व्यभिचार्येव [तादृशविषयत्वाभाववद्वृत्ति धर्मवत्त्वेन हेतुत्वे न दोष] इत्यत आह तत्तद्विषयकेति। अत्र तत्तत्पदं विषये प्रत्यक्षे चोभयत्रान्वितम् तथा च तत्तद्विषयकत्वविशिष्टतत्त-त्प्रत्यक्षव्यक्तित्वेन कार्यत्वम् तत्तद्विषयव्यक्तित्वेन हेतुत्वम् तत्र च कार्यस्य विषयता[मात्रं] कारणस्य तु तादात्म्यं प्रत्यासत्तिः न च तत्तद्विषयकत्वस्य कार्यतावच्छेदके प्रवेशो व्यर्थः तत्प्रत्यक्षव्यक्तेरेव विषयतासम्बन्धेनान्यत्रापि सत्त्वेन व्यभि-

---

(१) 'दोष स' (२) 'विशिष्या'
(३) 'लौकिकालौकिकभानविशेषसाधारणत्वाच्च'

चारवारकत्वादिति भावः । ननु तत्तत्परामर्शव्यक्तिप्रत्यक्षे तत्तत्परामर्शव्यक्तित्वेन हेतुत्वे परामर्शप्रत्यक्षसामान्यं प्रत्यपि परामर्शत्वेन हेतुत्वमावश्यकं यद्विशेषयोरिति व्याप्तेस्तथा च तदनुव्यवसायेऽतिव्याप्तिरेवेत्यत आह कदाचिदिति । प्रमाणाभावात्तादृशी व्याप्तिरेव न। सती वा तत्तत्परामर्शत्वव्यापकीभूतज्ञानत्वादिधर्मावच्छिन्नकारणतामादायैव चरितार्था न परामर्शत्वेन हेतुत्वं व्यवस्थापयतीति भावः । यद्यपि विषयस्य प्रत्यक्षं प्रति हेतुत्वे मानाभावः न च घटादिविषयस्य नाशदशायामपि तदिन्द्रियसन्निकर्षसत्त्वात्तदुत्तरकालं तत्प्रत्यक्षापत्तिरिति वाच्यम् यदा यत्र यत्कार्यस्योत्पत्तिस्तदव्यवहितप्राक्क्षणे तत्र तत्कारणमिति व्याप्तेः कारणतासंपादकतया विषयनाशकालावच्छेदेन विषयसन्निकर्षात्मककारणविरहादेव तदसम्भवात् [न च यदा यद्वृत्तिकार्यस्योत्पादस्तदव्यवहितपूर्वं तद्वृत्तिकार्यस्य कारणमित्येव व्याप्तिः कारणताया ग्राहिकेति विनष्टविषयस्य प्रत्यक्षवारणार्थं विषयस्य हेतुत्वमावश्यकमिति वाच्यम्] कार्यकारणभावान्तरकल्पनागौरवेण घटीयरूपे चक्षुःसंयुक्तसमवायसत्त्वे विद्यमानस्यासन्निकृष्टरूपान्तरस्य प्रत्यक्षप्रसङ्गेन च तादृशव्याप्तेः प्रतिहतत्वात् न च शब्दप्रत्यक्षं प्रत्यवश्यं कर्णावच्छिन्नशब्दत्वेन विषयस्य हेतुत्वमन्यथा कर्णानवच्छिन्नस्यापि तस्य प्रत्यक्षापत्तेः स्वावच्छिन्नत्वप्रत्यासत्त्या कर्णस्य तत्र हेतुत्वे कर्णावच्छिन्नसंयोगादेरपि श्रावणप्रत्यक्षप्रसंगादिति वाच्यम् तावतापि ज्ञानादिसाक्षात्कारे विषयस्य हेतुत्वाप्राप्तेः । तथापि सत्यपीन्द्रियसन्निकर्षादौ सामान्यकारणे गुरुत्वाद्यतीन्द्रियपदार्थानामप्रत्यक्षतयाऽवश्यं विषयाणां विशेषतो हेतुत्वं वाच्यम् । तद्विरहादेव गुरुत्वादेरतीन्द्रियत्वात् । यत्तु तेषामतीन्द्रियत्वानुरोधेन साक्षात्कारत्वनिरूपितविषयत्वेन [तादृशविषयतावद्वृत्तिधर्मशून्यत्वेन वा] प्रत्यक्षसामान्यं प्रति हेतुत्वम् तत्र च लौकिकसन्निकर्षजन्यतावच्छेदकतया सिद्धस्य लौकिकत्वाख्यविषयताविशेषस्य कार्यतावच्छेदकसंबन्धत्वान्न व्यभिचारः धर्मविधयैव संबन्धविधयापि कार्यतावच्छेदक[त्व]सिद्धौ बाधकाभावान्नव्यमते कारणताया अतिरिक्तपदार्थत्वेन तदवच्छेदकोपलक्षितस्यैव पूर्वसत्त्वापेक्षणादिति वदन्ति। तन्मन्दम् । कार्यताद्यवच्छेदकत्वे-

---

(१) 'गुरुत्वादिकमादाय तदकल्पनात् । के चित्तु'

दिना तद्धेतुत्वम् । न तु यावानेव तत्तदितरत्वादिर्विषयनिष्ठो धर्मः तेन तद्विषयत्वेन च कार्यकारणभावः । मैत्रावलोकितचैत्रनिर्मितनीलेतरघटतद्विषयकत्वादिना तत्त्वेऽनन्तकार्यकारणभावप्रसङ्गात् । मानाभावात् । अन्यथोपपत्तेश्च । अथ विशिष्टस्मरणे अतिव्याप्तिः न चोपेक्षान्यत्वेन तत्र हेतुत्वम् उपेक्षात्वं हि न जातिश्चाक्षुषत्वादिना संकरप्रसङ्गात्

---

न विषयत्वसिद्धावपसिद्धान्तात् । अन्यथा विशिष्टबुद्ध्यादौ विशेषणाज्ञानादिजन्यत्वं विशिष्टबुद्धित्वादिना वह्न्यनुमितिं प्रति च वह्निव्याप्यवत्तानिश्चयत्वेन हेतुत्वं न स्यात् । [लाघवात्] विषयताविशेषस्यैव तादृशजन्यतावच्छेदकत्वौचित्यादिति दिक् ॥ तत्तदितरत्वादिरिति । व्याप्यप्रकारकत्वव्याप्याभावप्रकारकेतरत्वादीत्यर्थः ॥ परामर्शत्वस्य विशेषणचतुष्टयघटितत्वात्तत्साम्यप्रदर्शनार्थं मैत्रावलोकितेत्यादिविशेषणचतुष्टयमुक्तम् । घटतद्विषयकत्वेति । द्वन्द्वात्परस्य त्वप्रत्ययस्य प्रत्येकं संबन्धात्तादृशघटत्वेन हेतुत्वम् [तद्विषयकप्रत्यक्षसामग्र्या च] तद्विषयकप्रत्यक्षत्वेन च कार्यत्वमित्यर्थः ॥ इष्टापत्तौ बाधकमाह मानाभावादिति ॥ नन्वेतादृशकार्यान्यथानुपपत्तिरेव मानं भविष्यतीत्यत आह अन्यथेत्यादि । मैत्रावलोकनादिसामग्र्या द्रव्यप्रत्यक्षादिसामग्र्या च तादृशप्रत्यक्षस्योत्पत्तेरित्यर्थः । तथा चार्थसमाजग्रस्तत्वान्नोक्तरूपं कार्यतावच्छेदकमिति भावः । [अथेति ।] विशिष्टस्मरण इति । वह्निव्याप्यधूमवत्पर्वतस्मरण इत्यर्थः । संशयोत्तरं तदाकारस्मृत्यापत्तिभयेन स्मृतिजनकतायामपि निश्चयत्वप्रवेशादित्याशयः । यद्यपि [वह्नि]व्याप्यवत्तादिसंस्कारं प्रति व्याप्यवत्त्वनिश्चयत्वेन हेतुत्वात्तादृशसंस्कारानुत्पत्त्यैव व्याप्यवत्त्वादिसंशयान्न तद्गोचरस्मृतेः संभव इत्यनुभवस्य निश्चयत्वेन [स्मृति]हेतुतायां मानाभावान्न विशिष्टस्मृतावतिव्याप्तिसंभावना । तथापि व्यापारीभूतसंस्कारं प्रत्यनुभवस्य निश्चयत्वेन हेतुत्वे फलीभूतस्मृतिं प्रत्यपि तद्रूप्येण हेतुत्वमावश्यकम् फलव्यापारौ प्रत्येकरूपेणैव करणस्य हेतुत्वादिति प्राचीनमतेनेदम् । इदं तु चिन्त्यते

आंशिकत्वोपगमाच्च नापि प्रवृत्तिनिवृत्त्यजनकत्वमभिज्ञा-

---

धूमत्वपर्वतत्वादिरूपेण बाष्पवृक्षादिगोचरादपि वह्निपरामर्शात्पर्वतो वह्निमानित्यनुमित्युत्पादादनुमितिं प्रति वह्निव्याप्तिधूमत्वपर्वतत्वादिनिरूपितविशिष्टवैशिष्ट्यावगाहि[विषय]ताविशेषेणैव हेतुत्वं न तु धूमपर्वताद्यन्तर्भावेण व्यभिचारात् [पक्षसाध्ययोर्विशिष्य प्रवेशेऽपि हेतावनथात्वात्] स्मरणे तु धूमादिकमन्तर्भाव्यैव तथात्वमन्यथा धूमत्वेन बाष्पगोचरादप्यनुभवात्ताद्रूप्येण धूमस्मरणे[2] स्मृतेरगृहीतग्राहित्वप्रसङ्गात् अनुमितिजनकतावच्छेदकरूपेण स्मृतावहेतुत्वात्कथं तत्रातिव्याप्तिप्रसक्तिरिति । [आचार्यमते त्वयं दोषः तन्मते करणीभूतज्ञाने धूमत्वादिना यादृशवस्तुनो भानं फलेऽपि तथेति तु नव्याः] यत्तु ज्ञानपदस्य करणव्युत्पत्त्यभिप्रायेण शङ्कनेऽर्थेति विशिष्टस्य स्मरणं यत इति व्युत्पत्त्या विशिष्टसंस्कारेऽतिव्याप्तिरित्यर्थ इति तन्न । संस्कारानुत्पत्त्यैवेत्याद्यग्रिमग्रन्थविरोधापत्तेः । केचित्तु यादृशस्मृतौ वह्निव्याप्यधूमवत्तानिश्चयत्वेनानुगतरूपेणोद्बोधकविधया हेतुत्वं तादृशस्मृतावतिव्याप्तिरित्यर्थ इत्याहुः । तच्चिन्त्यम् । उपेक्षान्यत्वेनेत्यादिग्रन्थस्य [व्याप्त्यविषयकत्वेनेत्यादिग्रन्थस्य च] विरोधापत्तेः । तत्र हेतुत्वमिति । स्मृतौ हेतुत्वमित्यर्थः । तथा च व्याप्यवत्तानिश्चयत्वमात्रावच्छिन्नहेतुत्वस्य लक्षणे प्रवेशान्न [विशिष्ट]स्मरणेऽतिव्याप्तिरिति भावः । [ननु] उपेक्षात्वं यद्येकं सुवचं स्यात्तदा तद्भिन्नत्वं स्मृतिजनकतावच्छेदकं भवेत् तदेव तु न संभवतीत्याशयेनाह उपेक्षात्वं हीति । संकरेति । चाक्षुषत्वं विहायोपेक्षात्वं तृणस्पार्शनादौ उपेक्षात्वं विहाय चाक्षुषत्वं कामिनीदर्शनादौ वर्तमानमेकत्र तृणचाक्षुषे संकीर्णमित्यर्थः । चाक्षुषत्वव्याप्यं नानैवोपेक्षात्वं निरुच्य तत्तद्भेदकूटमेव स्मृतिजनकतावच्छेदकं यदि ब्रूयात्तदाह आंशिकेति । [एकस्मिन्नेव ज्ञाने किंचिदंशे उपेक्षात्वस्य कचिदंशे तदभावस्यानुभवादित्यर्थः । ] न च व्यक्तेरभेदस्तुल्यत्वमित्यादावनुक्तत्वादांशिकत्वं न जातिबाधकमिति वाच्यम् । रूपहानावसंबन्धे वा तदन्तर्भावादिति भावः । [सांकर्यघटकपरस्पराभाववद्वृ-

---

(१) 'रासभ' (२) 'स्मरणप्रसङ्गात् [तथा च स्मृतेरगृहीतग्राहित्वेन प्रामाण्यापत्तेः]'

सिताविषयत्वं वा तादृशादपि स्मृत्युत्पादात् नापि संस्का-
राजनकत्वम् तज्जनकतावच्छेदकरूपान्तरापरिचयात् अन्योन्या-
श्रयप्रसङ्गात् संस्कारानुत्पत्त्यैवास्मरणसम्भवे स्मृतिजनक-

---

त्तितायां आभावत्वं निरवच्छिन्नविशेषणतया ग्राह्यम्। तथा च साक-
र्ये एवांशिकत्वस्याप्यन्तर्भाव इति कश्चित्।] नापि प्रवृत्तीत्यादि।
तथा च तद्गोचरप्रवृत्त्यजनकत्वे सति तद्गोचरनिवृत्त्यजनकं यत्तद-
न्यज्ञानत्वेन तद्गोचरस्मृतौ हेतुत्वम्। तद्गोचरप्रवृत्तिनिवृत्त्युभयजनक-
त्वेन तत्प्रत्येकजनकत्वेन वा तद्गोचरस्मृतिहेतुत्वे व्यभिचाराद्भावद्व-
यगर्भेति ध्येयम्। अजिज्ञासितेति। तथा च तत्प्रकारकस्मृतौ तद्ध-
र्मव्याप्यधर्मप्रकारकजिज्ञासाया अजनकं यद्यत्तदन्यज्ञानत्वेन हेतुत्वम्
व्याप्यधर्माणामननुगमात्तद्धर्मव्याप्यधर्मप्रकारकजिज्ञासाजनकज्ञान-
त्वमप्यननुगतमतस्ताद्रूप्येण स्मृतिहेतुत्वासंभवादत्रापि निषेधद्वयग-
र्भतावश्यकीति भावः। तादृशादपीति। प्रवृत्त्याद्यजनकादपीत्यर्थः।
नापि संस्कारेति। तथा च पर्वतधर्मिकव्याप्यवत्तास्मरणं प्रति तदा-
कारसंस्कारजनकज्ञानत्वेनैव हेतुत्वान्न व्याप्यवत्तानिश्चयत्वावच्छि-
न्नहेतुताघटितलक्षणस्य तत्रातिव्याप्तिरिति भावः। तज्जनकतावच्छेद-
करूपान्तरेति। निश्चयत्वभिन्नस्य संस्कारजनकतावच्छेदकरूपस्यापरि-
चयादित्यर्थः। तथा च निश्चयत्वमात्रस्य तथात्वे स्मृतावपि ताद्रू-
प्येणैव हेतुत्वं फलव्यापारयोः प्रत्येकरूपेण करणस्य हेतुत्वनियमादित्यु-
क्तातिव्याप्तिस्तदवस्थैवेति भावः। ननु तद्धर्मिकतत्प्रकारकस्मृताविव
तादृशसंस्कारेप्यनुभवस्य तदाकारसंस्कारजनकज्ञानत्वेनैकरूपेण
हेतुत्वं वाच्यम् अतो नातिव्याप्तिरत आह अन्योन्येति। अत्रावच्छेद्यम-
वच्छेदकीभूतं च संस्कारजनकत्वं विभिन्नव्याप्तिघटितमतोऽन्योन्या-
श्रयत्वम् इतरथा पुनरात्माश्रयो द्रष्टव्यः। [रूपान्तरापरिचयादिति
स्मृतिजनकतावच्छेदकरूपभिन्नस्यापरिचयादित्यर्थः ननु संस्कारे
स्मृतिजनकज्ञानत्वेन हेतुत्वमत आह अन्योन्येति तथा च स्मृति-
जनकताग्रहे सति संस्कारजनकत्वरूपापेक्षान्यत्वज्ञानं तज्ज्ञाने माति
स्मृतिजनकताज्ञानमित्यन्योन्याश्रय इत्यपि कश्चित्।] ननु तद्धर्मिक-
तत्प्रकारिका यावत्यो ज्ञानव्यक्तयस्तादृशसंस्कारानुत्पादिकास्तत्त-

---

(१) 'निश्चयत्वेन' (२) 'तथा च कारणतावच्छेदकभेदान्नातिव्याप्तिः'

भेदकूटवत्त्वमेवोपेक्षान्यत्वं निरुच्य तद्विशिष्टतद्धर्मिकतत्प्रकारकनिश्चयत्वेन तादृशस्मृतौ तथाविधसंस्कारे च हेतुत्वं वाच्यमतो नातिव्याप्ति[र्न वान्योन्याश्रयादि]रत आह संस्कारेति । उपेक्षात्मकज्ञानादि[त] इत्यादिः । तदप्रवेशादिति । उपेक्षान्यत्वाप्रवेशादित्यर्थः । न च स्मृताविव संस्कारेऽपि समानाकारनिश्चयत्वेनैव हेतुत्वादुपेक्षात्मकनिश्चयात्संस्कारानुत्पत्तिरेव दुर्घटेति वाच्यम् । समानाकारोपेक्षाबुद्धिव्यक्तीनां तत्तद्व्यक्तित्वेन समानाकारसंस्कारं प्रति प्रतिबन्धकत्वोपगमादुपेक्षाज्ञानोत्तरं तन्नाशे सत्येव ज्ञानान्तरेण संस्कारोत्पादादिति भावः । नव्यास्तु चाक्षुषचक्षुःसंयोगौ प्रति चक्षुष्ट्वद्रव्यत्वाभ्यां विभिन्नरूपाभ्यां चक्षुषो हेतुतया फलव्यापारौ प्रति एकरूपेण करणस्य हेतुत्वनियमे व्यभिचारात्समानाकारज्ञानत्वेनैव स्मृतिजनकत्वम् संस्कारं प्रत्येव निश्चयत्वेन हेतुतया संशयात्संस्कारानुत्पत्त्यैवास्मरणसम्भवात् न च विनिगमनाविरहः समानाकारज्ञानत्वेन संस्कारहेतुत्वे संशयजन्यानामनन्तपण्डसंस्काराणां तन्नाशकत्वेन कारणान्तराणां च कल्पनापत्तेरेव विनिगमकत्वात् तथा च स्मृतौ नातिव्याप्तिशङ्कापि न चात्यन्ताजनकसंदेहव्यावृत्तेन निश्चयत्वेन हेतुत्वसम्भवे तत्साधारेण समानाकारज्ञानत्वेन स्मृतिहेतुत्वमन्याय्यम् तथा सत्युपेक्षाज्ञानस्याप्यत्यन्ताजनकतया तद्व्यावर्तकेनोपेक्षान्यत्वेनापि स्मृतिजनकत्वस्यावश्यकत्वापातात् वस्तुतः समानप्रकारकज्ञानत्वेनापि न स्मृतिहेतुता किं तु स्मृतिसामान्ये ज्ञानत्वमात्रेण तद्धर्मिकतत्प्रकारकस्मृतिं प्रति तादृशसंस्कारत्वेन हेतुत्वस्यावश्यकतया तत एवातिप्रसङ्गभङ्गादिति प्राहुः । यत्तु संस्कारं प्रत्यपि समानाकारज्ञानत्वेनैव हेतुत्वम् न तु तादृशनिश्चयत्वेन गौरवात् संशयेन संस्कारोत्पादेऽपि उद्बोधकसमवधानाविरहादेव ततः स्मृत्यनुत्पादसम्भवादिति तन्न । संशयजन्यपण्डसंस्कारव्यक्तीनां नाशार्थं हेत्वन्तरकल्पनागौरवप्रसङ्गात् यस्य पुंसः पटसंस्कारसत्त्वेऽपि तत्सदृशवस्तुविशेषदर्शनादेव पटस्मृतिः तत्पुरुषीयपटस्मृतिसामान्यं प्रति तत्पुरुषीयतादृशवस्तुदर्शनत्वेनानुगतैकरूपेणैवोद्बोधकस्य हेतुतया संशयजन्यसंस्कारसत्त्वे तादृशवस्तुदर्शनदशायां तत्पुरुषीयपटस्मृत्यापत्तेः [ब्रह्मणापि] वारयितुमशक्यत्वाच्चेति दिक् । अन्ये तु निश्चयत्वघटकदलद्वयस्य विशेषणविशेष्यभावेन गुरुतरकार्यकारणभावद्वयकल्पनामपेक्ष्य लाघवेन तद्विशेष्यकतत्प्रकारकसंस्कारं प्रति तद्वि-

शेष्यकतदभावप्रकारकज्ञानत्वेन प्रतिबन्धकत्वं तद्विशेष्यकतत्प्रकारकज्ञानत्वमात्रेण हेतुत्वं चेत्युभयकल्पनमेवोचितं संशयोत्तरवर्तिनिश्चयादपि संदेहनाशानन्तरमेव संस्कारोत्पादसम्भवादिति प्राहुः। तन्मन्दम्। तत्प्रकारत्वान्यप्रकारत्वानिरूपिततन्निष्ठविशेष्यताकज्ञानत्वपर्यवसितेन निश्चयत्वेन हेतुतायां निश्चयत्वघटकदलद्वयस्यैवासम्भवात्। एतेन व्याप्यसंशयोत्तरं व्याप्यवत्त्वस्य संशयाकारस्मृतेरुत्पत्तिभयेन व्याप्यवत्तायाः स्मृतौ न तन्निश्चयत्वेन हेतुत्वम् किं तु व्याप्यवत्ताज्ञानत्वमात्रेण व्याप्याभावप्रकारकस्मृतिं प्रति व्याप्याप्रकारकव्याप्याभावप्रकारकज्ञानत्वेन हेतुत्वादेव व्याप्यभावप्रकारकत्वनियतस्य व्याप्यसंशयत्वस्य स्मृतावसम्भवात् न च व्याप्याभाववत्तास्मृतिं प्रति व्याप्याभाववत्तानिश्चयत्वेनेव व्याप्यवत्तास्मृतिं प्रत्यपि व्याप्यवत्तानिश्चयत्वेन हेतुतायां प्रमाणप्रसरे तदप्युचितमुभयथैव संशयाकारस्मृतेर्वारणसम्भवादिति वाच्यम् व्याप्यवत्तास्मृतौ व्याप्यवत्तानिश्चयत्वेन हेतुत्वे व्याप्याभावाप्रकारकत्वस्य हेतुतावच्छेदककोटिप्रवेशे गौरवम् व्याप्याभाववत्तास्मृतिं प्रति तु व्याप्याप्रकारकत्वघटितेन व्याप्याभाववत्तानिश्चयत्वेन हेतुत्वेऽवच्छेदकलाघवमित्यस्यैव विनिगमकत्वात् तथा च व्याप्यवत्तास्मृतौ नातिप्रसङ्गशङ्कापि तत्र निश्चयत्वेनाहेतुत्वादित्यपि मतं निरस्तम्। प्रागुक्तदिशा निश्चयत्वस्य दलद्वयाघटितत्वात्। पर्वतो वह्निव्याप्याभाववान्न वेत्यादिसंशयादपि तादृशसंशयाकारस्मृत्यापत्तिभयेन व्याप्याभाववत्तास्मृतिं प्रत्यपि व्याप्याभावाप्रकारकत्वघटितेन व्याप्याभाववत्तानिश्चयत्वेन हेतुताया आवश्यकत्वेन विपरीतगौरवाच्चेति दिक्। केचित्तु संस्कारं प्रति निश्चयत्वेन हेतुत्वोक्तावपि यत्रायं घट इत्यादिप्रत्यक्षानन्तरं दिवसान्तरेऽयं न घट इत्याकारकं ज्ञानं तत्र तादृशज्ञानद्वयेन क्रमाज्जनितस्य घटत्वतदभावगोचरसंस्कारद्वयस्य सत्त्वादयं घटो न वेति संदेहात्मकस्मृत्यापत्तिः न च विरुद्धोभयकोट्योरेकदा उद्बोधकसमवधानविरहान्न तथा स्मृतिरिति वाच्यम् यस्य पुंसो घटत्वतदभावयोः संस्कारसत्त्वे तदुभयसदृशवस्तुविशेषदर्शनादेव तदुभयस्मृतिस्तत्पुरुषीयघटत्वतदभावस्मृतिसामान्यं प्रत्येव तत्पुरुषीयतादृशवस्तुदर्शन-

(१) 'घटितस्य'

सायां तदप्रवेशाच्च नाप्यनुभवत्वेन तथात्वम् संस्कारस्य फल-
नाश्यतया सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात् समाना-

---

त्वेनानुगतरूपेणोद्बोधकस्य हेतुत्वेन तत्समवधानस्यापि सम्भवात्
तथा च तादृशसंशयाकारस्मृतेर्वारणार्थमिदंत्वावच्छेदेन घटत्व-
प्रकारकस्मृतौ तदवच्छेदेन घटत्वाभाववत्तास्मृतिसामग्र्यास्तादृश-
धर्मिकघटत्वाभाववत्तास्मृतौ च तादृशघटत्ववत्तास्मृतिसामग्र्याः
प्रतिबन्धकत्वस्य प्रामाणिकतया स्मृतिजनकतायामिव संस्कारजन-
कतायामपि निश्चयत्वं न प्रवेशनीयमन्यथैव संशयोत्तरं तदाकार-
स्मृतेर्वारणादित्याहुः । तच्चिन्त्यम् । संशयजन्य[पण्ड]संस्कारव्यक्ती-
नां नाशार्थं हेत्वन्तरकल्पनामपेक्ष्य संस्कारजनकतायां निश्चयत्व-
प्रवेशस्यैव लाघवेनोचितत्वादिति संक्षेपः । तथात्वमिति । स्मृतिहे-
तुत्वमित्यर्थः । तथा च निश्चयत्वमात्रेण स्मृतिं प्रति अहेतुत्वान्न तत्र
लक्षणातिव्याप्तिः । अनुभवत्वं च जातिर्न तु स्मृतिभिन्नज्ञानत्वम्
तेन ज्ञानत्वापेक्षया गुरुतया न तस्य स्मृतिकारणतावच्छेदकत्व-
हानिरिति भावः । द्वित्राद्यनुभवस्थले स्वजन्यस्मरणेनैकसंस्का-
रनाशेपि संस्कारान्तरसत्त्वात्तदुत्तरं स्मरणं संभवत्यत उक्तं सकृदिति ।
[अनुभवोत्तरमननुभूतस्येत्यर्थः । वस्तुतस्तु] स्वविषयकस्मृत्युत्त-
रमननुभूतस्येत्यर्थः । एतेन समानप्रकारकत्वेनैव स्मृतेः संस्कारना-
शकत्वाद्बहुशोनुभूतस्याप्येकस्मृत्या संस्कारशतनाशात्स्मरणान्त-
रासंभवे सकृत्पर्यन्तानुधावनं व्यर्थमित्यपास्तम् न चान्ततः स्वानु-
भवीयानुव्यवसायस्यैव स्वानुभवान्तरत्वात् सकृदनुभूतत्वं वस्तु-
नोऽसिद्धमिति वाच्यम् स्वतः प्रामाण्यभियानुव्यवसायस्य व्यवसा-
योल्लिखितधर्मवद्धर्मि विषयकत्वास्वाकारात् विषयान्तरसंचारादिना-
नुव्यवसायानुत्पत्तिसंभवाच्चेति भावः । स्मरणोत्तरमिति ।
कालान्तर इति शेषः । तेनैकसंस्कारेणैव क्वचित् क्रमिकस्मरणद्व-
योत्पादसंभवेपि न क्षतिः । प्रसङ्गादिति । तथा चानुभवत्वेन हेतुत्वे
व्यभिचारान्निश्चयत्वेनैव तथात्वं वाच्यमिति स्मृत्यतिव्याप्ति-
स्तदवस्थैवेति भावः । [ वस्तुतस्तु स्वजन्यत्वं विहाय स्वप्रयोज्यसं-
स्कारसंबन्धेनानुभवत्वेन स्मृतिं प्रति हेतुत्वोक्तयानातिव्याप्तिर्गेशः
न वा स्मरणोत्तरमस्मरणप्रसङ्गोपि । संस्कारं प्रत्यनुभवत्वेन तत्त्वम्

---

(१) तत्पुरुषीयोद्बोधकसमव' (२) 'बन्ध'

कारस्यैव फलस्य नाशकत्वात् समूहालम्बनादितोऽनेकैकगोचर-
क्रमिकस्मरणानुपपत्तिः, जायते च पुनः पुनः स्मरणाद्दृढतरः

---

तत्र च स्मृतिविशिष्टसंस्कारं प्रति प्रयोज्यस्मृतिसंबन्धेनानुभवत्वेन तत्त्वम्।अनुभव विशिष्टसंस्कारं प्रत्यनुभवत्वेन तत्त्वम् फलव्यापारी प्रत्येकरूपेण तत्त्वमितिव्यासेः।] ननु स्मरणात्मकं फलं न संस्कारनाश-हेतुः तथा सति घटः पटश्च द्रव्यमित्याकारकसंस्कारेणोद्बोधकवशाज्जनितया घटो द्रव्यमित्यकारकस्मृत्या तन्नाशे पश्चात्पटो द्रव्यमित्याकारकस्मृतेरनुत्पत्तिप्रसङ्गादत आह समानेति ।तथा च घटधर्मिकद्रव्यत्वप्रकारकसंस्कारनाशं प्रत्येव तादृशस्मृतित्वेन हेतुत्वात्तादृशस्मरणस्य सत्त्वेऽपि पटधर्मिकतादृशस्मृतेरभावादेव नोक्तसमूहालम्बनसंस्कारस्य नाशः।न च घटधर्मिकद्रव्यत्वप्रकारकसंस्कारनाशत्वावच्छिन्नस्य सामग्रीसत्त्वादसमूहालम्बन[स्थल] इव प्रकृतेपि तदवच्छिन्नस्य उत्पादो दुर्वार इति वाच्यम् । घटधर्मिक[द्रव्यत्व]संस्कारमात्रस्यैव सामग्रीवशेन घटे वस्त्वन्तरे वा पदार्थान्तरावगाहित्वनियमेन पदार्थान्तरगोचरतादृशस्मरणात्मकविशेषसामग्रीविरहादेव घटधर्मिकद्रव्यत्वसंस्कारनाशत्वावच्छिन्नस्योत्पत्त्यसम्भवादिति भावः ।समूहालम्बनस्यापि संस्कारस्याविरलक्रमेण प्रत्येकगोचरस्मृतिद्वयजनकत्वसम्भवात् क्रमिकेत्युक्तम् । क्रमिकदिनद्वयानन्तरोत्पन्नेति तदर्थः । यद्यप्येवमपि कालरोगादिना संस्कारनाशस्थले व्यभिचार इति कालरोगाद्यजन्यसंस्कारनाशत्वेनैव स्मृतिजन्यत्वं वाच्यम् तत्र च रोगाद्यजन्यत्वं तत्तद्भेदकूटातिरिक्तं दुर्वचम् तथा च तेषां विशेषणविशेष्यभावे विनिगमकाभावादनन्तकार्यकारणभावध्रौव्ये तत्तत्स्मृतिव्यक्तित्वेन तत्तत्संस्कारनाशं प्रति हेतुत्वमेव लाघवादुक्तमतः सकृदनुभवस्थलेपि चरमस्मृतेस्तत्तद्व्यक्तित्वेनैव तन्नाशकत्वाङ्गीकारान्न स्मरणोत्तरमस्मरणप्रसङ्गः । तथापि रोगादिनाश्यव्यावृत्तस्य संस्कारत्वव्याप्यजातिविशेषस्यैव स्मृतिनाश्यतावच्छेदकतया सिद्धत्वात् न तत्तन्नाशव्यक्तिं प्रति तत्तत्स्मृतिव्यक्तित्वेन हेतुत्वम् वस्तुतो यत्पुरुषीययत्प्रकारकसंस्कारो न रोगादिनाश्यस्तत्पुरुषीयतत्प्रकारकसंस्कारनाशसामान्यं प्रत्येव तत्पु-

कृतीय]तत्प्रकारकस्मृतित्वेन हेतुत्वे बाधकाभाव इति तत्रैव स्मरणोत्तरमस्मरणप्रसङ्ग उक्त इत्यदोषः । केचित्तु रोगकालादिजन्यतत्तत्संस्कारनाशभेदकूटस्य युगपदेव विशेषणत्वम् न त्वेकविशिष्टापर[भेद]त्वेन एकविशिष्टापरवैशिष्ट्यप्रवेशे कार्यतावच्छेदकस्य गुरुत्वापातादतोऽनन्तकार्यकारणभावशङ्कैव नेत्यपि वदन्ति । समूहालम्बनादित इत्यादिपदादेकधर्मिकनानाप्रकारकसंस्कारपरिग्रहः । अत्रेदमवधेयम् तद्विशेष्यक[तत्]संस्कारनाशं प्रति तादृशस्मृतेः कार्यसहभावेनैव हेतुत्वं वक्तव्यमन्यथा स्मरणजन्य[संस्कार]व्यक्तीनां क्षणिकत्वापत्तेः नाशकीभूतस्य स्वजनकस्मरणस्यैव सत्त्वादुत्पत्त्यनन्तरमेव नाशसम्भवात् न चैवमपि यत्र घटत्वप्रकारकानुभवोत्तरं युगपत्तादृशसंस्कारोऽनुभवान्तरं च ततो घटत्वप्रकारेण संस्कारान्तरस्मरणे तत्र द्वितीयस्य घटत्वप्रकारकसंस्कारस्य क्षणिकत्वापत्तिः द्वितीय[संस्कारकालीन]स्मरणव्यक्तेरुत्तरक्षणेपि सत्त्वादिति वाच्यम् उपेक्षान्यज्ञानस्यैव संस्कारजनकतया तत्रत्यद्वितीयाद्यनुभवस्योपेक्षात्वस्वीकारेणैव ततः संस्कारानुत्पत्तेः प्रतियोगितया संस्कारनाशत्वावच्छिन्नं प्रति प्राक्क्षणवृत्तित्वविशिष्टजनकतया स्मृतित्वेन हेतुत्वमित्यपि कश्चित् वस्तुतः संस्कारनाशं प्रति समानाकारस्मृतित्वेनैव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नशब्दानामपि नाशं प्रति सामानाधिकरण्यप्रत्यासत्त्या ज्ञान[त्वसुखत्वदुःख]त्वादिप्रत्येकरूपेणैव हेतुत्वम् न तु स्वोत्तरोत्पन्न[विभु]विशेषगुणत्वादिना तथात्वं स्वत्वस्य तत्तद्व्यक्तिविश्रान्तिकत्वेनानन्तकार्यकारणभावापत्तेः एवं च ज्ञानसु[खदुः]खादीनां स्वोत्तरक्षण एव विनाशवारणाय प्रतियोगितासंबन्धेन ध्वंससामान्यं प्रति स्वप्रतियोग्यधिकरणतादात्म्यसंबन्धेन ध्वंसत्वेनाप्यनुगतैकरूपेण हेतुत्वं कल्प्यमतो ज्ञानसुखादीनामिव स्मृति[जन्य]संस्कारस्यापि न क्षणिकत्वम् स्वप्रतियोग्यधिकरणतादात्म्यसम्बन्धेन ध्वंसवत्तायाः संस्कारादौ द्वितीयक्षण एव सम्भवात् अधिकरणत्वं [चेह] कालिकसम्बन्धेन प्रवेश्यमतो न नित्यस्य ज्ञानेच्छादेश्च क्षणिकताप्रसङ्ग इति मदेकपरिशीलितः पन्थाः । यत्तु स्मृतिजन्यसंस्कारनाशस्य तत्तच्चरमस्मृत्युत्तरनष्टसविषयकप्रतियोगिकत्वस्य लाघवेन कल्पनात्तादृशप्रतियोगिनः [प्रथम]स्मृ-

(१) 'तादृशसंबन्धेन'

त्युत्तरमसम्भवाच्च स्मृतिजन्यसंस्कारस्य क्षणिकत्वमिति तच्चुच्छम्।
तथा सति सकृदनुभवजन्यसंस्कारनाशस्यापि तत्रत्यचरमस्मृ-
तिप्राक्कालीनसर्वविषयकव्यक्तिप्रतियोगिकत्वकल्पनया तद्यक्तिवि-
रहादेव नैकस्मरणोत्तरं तदुत्पादासम्भव इत्यनुभवत्वेनापि स्मृति-
हेतुताया दुरुच्छेदापत्तेः। केचित्तु रूपादिकं प्रति रूपादेरिव
संस्कारं प्रत्यपि समानाकारसंस्कारत्वेनैव प्रतिबन्धकत्वं धारा-
वहनस्थलेऽनेकसंस्कारव्यक्तिकल्पनामपेक्ष्य तत्कल्पने लाघवादेवं
च न कस्यापि संस्कारस्य क्षणिकत्वम् प्राक्तनसंस्कारसत्त्वे स्मर-
णाव्यवहितोत्तरक्षणे संस्कारानुत्पादात् तन्नाशोत्तरमुत्पन्नस्य च
संस्कारस्य तदानीं नाशकविरहादेव क्षणिकत्वसम्भवात् न च
यत्रैकस्मृत्यनन्तरमेव स्मरणान्तरप्राक्तनसंस्कारनाशौ पश्चाच्च प्रथ-
मस्मरणेन संस्कारोत्पादस्तत्रत्यस्य संस्कारस्य क्षणिकत्वं दुर्वा-
रमिति वाच्यम् संस्कारस्य कार्यसहवर्त्तित्वेन स्मृतिहेतुत्वादेक-
स्मृतिद्वितीयक्षणे समानाकारस्मृत्यन्तरासंभवादित्याहुः। तन्मन्दम्।
यत्र घटपटावित्याकारसंस्कारोत्तरं क्रमेण सकृदनुभूतस्य घटस्य प-
टस्य च प्रत्येकं स्मरणं तत्र पुनस्तादृशघटस्मरणानुत्पत्तिप्रसङ्गात्।
क्रमिकस्मरणाभ्यां समूहालम्बनसंस्कारनाशदशायामेव घटस्मरण-
स्यापि नाशात्तेन पुनर्घटसंस्कारजननासम्भवादिति दिक्। ननु स्मृ-
तेश्च संस्कारजनकतासत्त्व एव तद्द्वारा स्मृतिजनकत्वं वाच्यम्
तदेवासिद्धम् संस्कारं प्रत्यपि अनुभवत्वेनैव हेतुत्वादत आह
जायते चेति। तथा च संस्कारं [प्रति]अनुभवत्वेन हेतुत्वे
दृढ[तर]संस्कारं प्रति पुनः पुनः स्मरणत्वेन हेतुता न
स्यात् सामान्यसामग्रीविरहादतः संस्कारं प्रत्यपि निश्च-
यत्वमात्रेण हेतुत्वमिति भावः। प्राञ्चस्तु समानाकारस्मृतित्वेन
संस्कारनाशेहतुतामतेपि अनन्तात्मगोचरसंस्कारनाशानुरोधात्पुरुष-
भेदेन कार्यकारणभावनन्त्यमावश्यकमेव तथा च तत्तदात्मीय-
संस्कारसामान्यनाशं प्रत्येव तत्तदात्मीयचरमस्मृतिव्यक्तीनां
तत्तद्व्यक्तित्वेन हेतुत्वं युक्तमन्तरानन्तसंस्कारध्वंसकल्पनायां गौ-
रवादवच्छेदकलाघवाच्च [सकल] संस्काराणां च[रम]स्मृतिपर्यन्त-
स्थायित्वेप्युद्बोधकविरहेणैव मध्ये स्मरणासम्भवात् तथा च सकृ-

(१) 'त्वेन'

संस्कारः परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाण-
व्यभिचारकेण कारणत्वकल्पनानुदयात् इदमेव चान्यत्र सामा-

---

दनुभूतस्यापि स्मरणोत्तरं स्मरणासम्भवादनुभवत्वेन स्मृतिहेतु-
तायां बाधकाभाव इत्यत उक्तम् जायते चेत्यादीत्याहुः । तच्चिन्त्यम् ।
तावता स्मृतेः संस्कारजनकत्वासिद्धावपि स्मृतिजनकत्वाप्राप्तेः ।
यत्र स्वसदृशपदार्थज्ञानत्वादिनाऽनुगतरूपेणोद्बोधकस्य स्मृतिहेतु-
त्वं तत्रान्तरा स्मरणधाराप्रसङ्गाच्च । नव्यास्तु ननु स्मृतौ न
समानाकारज्ञानत्वेन हेतुत्वम् सकृदनुभवस्थले स्मृतिजन्यानेकसं-
स्कारकल्पनागौरवापत्तेः किं तु तादृशानुभवत्वेनैव तथात्वम् न
च संस्कारस्य फलानाश्यतया सकृदनुभूतस्य स्मरणद्वयानुपपत्तिः
चरमफलमात्रवृत्तिस्मृतित्वव्याप्यजातिविशेषेणैव संस्कारनाशहेतु-
त्वादित्यतः [आह] जायते चेत्यादि तथा च दृढ[तर]संस्कारात्मककार्-
यप्रयोजकतया सकृदनुभूतस्थले पुनः पुनः स्मरणस्य प्रामाणिकतया
न तत्कल्पनागौरवम् किं तु संस्कारनाशकतावच्छेदकतया चरमस्मृति-
निष्ठजातिकल्पनायामेव तदिति भाव इत्याहुः । ननु दृढत्वं न
संस्कारगता जातिर्मानाभावात् परं झटित्युद्बोधकसम्पत्तिः सा
च न कारणनियम्या तस्याः कार्यतानवच्छेदकत्वेपि क्षत्यभावात्तत्कु-
तोनुभवत्वेन संस्कारजनकतापरित्याग इत्यत आह परित्यज्य चेति ।
तथा च विनाप्यनुभवं स्मृतेरनन्तरं संस्कारस्य सम्भाव्यतया-
नुभवत्वं सन्दिग्धव्यभिचारकमतो व्यभिचारधिया प्रतिबन्धान्न
ताद्रूप्येण हेतुत्वं कल्प्यते किं तु निश्चिताव्यभिचारकेण ज्ञानत्वे-
नैव ज्ञानं विना संस्कारस्य केनाप्यनङ्गीकारादिति भावः । अथा-
नुभवत्वं विशेषधर्मं परित्यज्य तद्व्यापकेन निश्चयत्वेन स्मृतिहेतुत्वो-
पगमे घटादिकं प्रत्यपि दण्डत्वादिकं परित्यज्य द्रव्यत्वादिना
हेतुता स्यादत आह इदमेव चेति । गृह्यमाणव्यभिचारकेण
कारणत्वकल्पनानुदय एवेत्यर्थः । [अन्यत्र विशिष्टबुद्ध्यादौ ।] तथा च
यत्र विशिष्टबुद्ध्यादौ विशेषणज्ञानत्वादिविशेषरूपेण हेतुतायां
व्यभिचारग्रहस्तत्रैव विशेषणविषयकत्वादिसामान्यधर्मेण हेतुत्वम्
घटादौ तु दण्डत्वद्रव्यत्वयोर्द्वयोश्च निश्चिताव्यभिचारकत्वाद्द-
ण्डत्वादिविशेषधर्मेणैव तद्धेतुत्वम् न तु तद्व्यापकद्रव्यत्वादिना

---

(१) 'सा च स्मरणस्यार्थसमाजमस्तस्वात्तस्याः'

न्यस्य च हेतुतावच्छेदकत्वे बीजम् अभिहितश्च तात्पर्यटी-
कायां प्रथमसूत्रेऽवयवविवेचनप्रस्तावे मिश्रैः स्मृतीनां स्वकार्य-
संस्काराविरोधिनीनामसहभावादितीति चेन्न। चरमज्ञानपदस्यानु-
भवपरत्वात्।साक्षात्तज्जन्यत्वस्य वा विवक्षितत्वादित्यपि कश्चित्।
किञ्च व्याप्यविशेष्यकात्पक्षविशेष्यकाच्च परामर्शादनुमितिदर्श-

---

ताद्रूप्येण हेतुतायामन्यथासिद्धेरिति भावः। कार्यतावच्छेदकत्वं
विशेषरूपस्यैव युक्तम् न तु सामान्यस्य सन्दिग्धव्यभिचारकत्वा-
दत एव विशेषणज्ञानजन्यत्वं विशिष्टानुभवत्वेनैव न तु तादृशज्ञा-
नत्वेनेति प्राच्यैरुक्तमित्याशयेनाह हेतुतावच्छेदकत्व इति। ननु
स्मृतेः संस्कारजनकत्वेऽपसिद्धान्त इत्यत आह अभिहितं चेति।
स्वकार्यः संस्कारो विरोधी नाशको यासामित्यर्थः। तथा चाव-
यवेभ्यो न वाक्यार्थधीसम्भवस्तद्घटकप्रत्येकपदार्थस्मृतीनां ताव-
त्कालमसत्त्वादिति टीकार्थः॥ साक्षात्तज्जन्यत्वम् व्यापारमद्वा-
द्वारीकृत्य परामर्शजन्यत्वम् [न तु स्वाव्यवहितोत्तरक्षणोत्पत्ति-
कत्वम्] तेन बाधादिस्थलीयपरामर्शतृतीयक्षणजन्यानुमितौ नाव्याप्तिः
न तु स्वाव्यवहितप्राक्काल[वृत्ति]परामर्शजन्यत्वं तदर्थः। स्मृतिवि-
शेषेऽतिव्याप्तितादवस्थ्यात्। वस्तुविशेषस्मृतिं प्रति साध्यव्याप्य-
वत्तानिश्चयत्वप्रकारेणानुगतरूपेण [उद्बोधक]हेतुत्वसम्भवे तस्या-
मतिव्याप्तिः पूर्वकल्पापेक्षाया गौरवं च कश्चिदित्युक्त्या सूचितम्॥
[ननु पक्षधर्मिकव्याप्यवत्तानिश्चयत्वेन हेतुत्वस्य लक्षणघटकत्वेनु-
मितिमात्रेऽसम्भवः लिङ्गधर्मिकपरामर्शजातायामनिव्याप्तिश्चेत्यत आह
किं चेति। प्राञ्चस्तु] ननु वह्निव्याप्यादिविशिष्टवैशिष्ट्यबुद्धौ वह्निव्या-
प्यादिप्रकारकनिश्चयत्वेनैव हेतुत्वं न तु ज्ञानत्वमनन्तभाव्य विशेषणा-
द्यंशेऽनुद्बुद्धसंस्कारसत्त्वेपि विशिष्टवैशिष्ट्यप्रत्यक्षापत्तेः तत्तद्विशिष्टवै-
शिष्ट्यप्रत्यक्षं प्रति तत्तद्विशेषणादिज्ञानव्यक्तीनां विशिष्य कारणत्वस्य
[तादृशसंस्कारस्य] प्रतिबन्धकत्वस्य वा कल्पनायां गौरवात्
न च स्मृत्यादिस्थले व्यभिचारः अग्रे निरसनीयत्वात् तथा च
वह्निव्याप्यधूमवत्पर्वतवानित्याकारप्रत्यक्षेऽतिव्याप्तिस्तद्वारणार्थं प्र-
कारान्तरानुसरणे ततोपि स्मृत्यतिव्याप्तिनिरासः सम्भवतीति
[न चरमज्ञानपदस्यानुभवपरत्वे संस्काराद्यापत्तिः इति] आशयेनाह

नाच्च तदुभयवैशिष्ट्याद्यवगाहिनिश्चयत्वेन तत्र हेतुत्वम् लक्षणघटकमपि तदेव एकतरविशेष्यकज्ञानादन्यतरविशेष्यकस्मरणाभावात् अन्यथा नियमेन स्मृतेरुभयाविशेष्यकत्वप्रसङ्गात् समानप्रकारकत्वेनैव ज्ञानस्मरणयोः कार्यकारणभावाच्च तत्र विशिष्यैव कार्यकारणभावः न तूक्तरूपेण गौरवान्मानाभावच्च इत्यपि केचित् । एवञ्च विशिष्टवैशिष्ट्यबोधादौ क्वापि नातिप्रसङ्गशङ्कापि । वह्न्याद्यनुमितौ वह्न्यादिव्यभिचारधीविरोधिधीविषयधर्मप्रकारकपक्षधर्मताज्ञानत्वेन हेतुतामते तु नितराम् । तथैव

---

किं चेति । तत्र अनुमितौ । तदेवेति । अन्यथा पक्षधर्मिकव्याप्यत्वत्ता-निश्चयत्वेन हेतुत्वस्य लक्षणे प्रविष्टत्वेऽनुमितिमात्रेऽसम्भवापत्तेरिति भावः । ननु तद्विशेष्यकतत्प्रकारस्मृतिं प्रत्यपि तदुभयवैशिष्ट्यावगाहिनिश्चयत्वेनैव हेतुत्वात्तत्रातिव्याप्तिरेवमपीत्यत आह एकतरेति । तथा चान्वयव्यभिचारान्नोक्तरूपेण तत्र हेतुत्वमिति भावः । ननु जन्यतापि तदुभयवैशिष्ट्यावगाहिस्मृतित्वेनैव वाच्या तथा च कार्यतावच्छेदकावच्छिन्नस्योत्पादान्नोक्तदोष[1] इत्यत आह अन्यथेति । नियमेन नियमतः । [अन्यथा] अनियमेन विशेषतो[2] नियामकाभावेनेत्यपि कश्चित् । प्रसङ्गादिति । एकधर्मिकस्मृतिसामग्र्या एवापरधर्मिकस्मृतिसामग्रीत्वादिति भावः । ननु तद्विशेष्यकतत्प्रकारकस्मृतौ तादृशनिश्चयत्वेन हेतुत्वं मयापि वाच्यमेव नातः स्मरणस्योभयविशेष्यकत्वम् परं तु उभयवैशिष्ट्यावगाहिनिश्चयत्वेनापि [हेतुत्वं] यद्विशेषयोरिति न्यायादेव वक्तव्यमिति स्मृत्यतिव्याप्तिस्तदवस्थैवेत्यत आह समानेति । समानप्रकारकत्वसंबन्धेनेत्यर्थः ।[तेन सामान्यहेतुतायां विषयानन्तर्भावेपि न क्षतिः ।]तथा च तत्प्रकारकस्मृतिसामान्यं प्रति तत्प्रकारकज्ञानत्वेनैव हेतुतयैव यद्विशेषयोरिति न्यायसामञ्जस्यान्न तदुभयवैशिष्ट्यावगाहिनिश्चयत्वेनापि हेतुत्वम् गौरवादिति भावः । तत्र ज्ञानस्मरणयोः । विशिष्येति । तद्विशेष्यकतत्प्रकारकज्ञानत्वादिनैवेत्यर्थः ॥ नानाविधव्याप्तेरनुमित्युपयोगित्वमतेनाह व्यभिचारेति । हेतुतामत इत्यनेन प्रागुक्तदोषः सूचितः ।

---

(१) 'पादाना' (२) 'विशेष्यतायाः निया'

लक्षणे निवेशात् । अत एव व्याप्यवत्पक्षाद्यभावग्रहं प्रति व्याप्य-
वत्पक्षादिज्ञानत्वेन हेतुत्वेऽपि न क्षतिः । व्याप्त्यविषयकत्वेन वा
जन्यज्ञानं विशेषणीयम् । एतेन स्मृतिं प्रति संस्कारद्वारा अनुभवं

---

नितरामिति । नातिप्रसङ्गशङ्कापीत्यनुषज्यते ॥ तथैव व्यभिचारधीवि-
रोधीत्यादिरूपेणैव ॥ अत एवेति । व्याप्यपक्षोभयवैशिष्ट्यावगाहि-
त्वादिना जनकत्वस्य लक्षणे प्रवेशादेवेत्यर्थः । ज्ञानत्वेन निश्च-
यत्वेन । हेतुत्वेऽपीत्यपिनाऽस्वरसः सूचितः । स च व्याप्यवत्त्वाव-
च्छिन्ने योग्यानुपलब्धिविरहात्तदवच्छिन्नाभावस्यातीन्द्रियतया न
तत्र प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं हेतुरभावलौकिक-
प्रत्यक्षं प्रत्येव तस्य हेतुत्वादित्यादिः । अधिकं सामान्यलक्ष-
णायां वक्ष्यते ॥ ननु व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वं
तदुभयनिरूपितसांसर्गिकविषयताकनिश्चयत्वम् तथा च तादृ-
प्येण हेतुत्वे वह्निव्याप्यधूमे पर्वत [इति ज्ञानस्य्यनुमित्यापत्तिः पक्षे
साध्यव्याप्याधारत्वावगाहित्वस्यावच्छेदककोटिप्रवेशे तु पर्वते वह्नि-
व्याप्यधूम] इत्यादिलिङ्गधर्मिकपरामर्शस्यासंग्रहः तत्र व्याप्यांशे
पक्षाधेयत्वस्यैव भानात् किं च पक्षधर्मिकव्याप्याभावप्रकारका-
न्यत्वे सति व्याप्यविशेष्यकपक्षाभावप्रकारकान्यव्याप्यपक्षोभय-
वैशिष्ट्यावगाहिज्ञानत्वमेव तादृशनिश्चयत्वं वाच्यम् तथा च
तस्यापि विशेषणविशेष्यभावभेदाद्दुरुत्तरकार्यकारणभावापत्तिरतो
व्याप्यवत्प[क्षनिश्चयत्वेनाधेयतया पक्षप्रकारकव्याप्यधर्मिकनिश्च-
यत्वेन वा यथानुभवमनुमितिहेतुत्वं वाच्यमतस्तादृशस्मृतावति-
व्याप्तितादवस्थ्यमेवेत्यत आह व्याप्त्यविषयकत्वेनेति । नव्यास्तु
व्याप्यप]क्षोभयवैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वस्य लक्षणघटकत्वे
त्वहुथाद्यापत्तावतिव्याप्तिरनुमिता [चि]वापत्तौ च परामर्शस्यैकरूपेण
हेतुत्वादत उक्तम् व्याप्त्यविषयकेति तथा चापत्तेः साक्षात्कारतया
परामर्शोपनीतव्याप्तेस्तद्विषयत्वनियमान्नातिव्याप्तिरित्याहुः । तन्म-
न्दम् । पक्षधर्मतांशे गृहीताप्रामाण्यकत्वस्याहार्यत्वस्य वाधिकस्याप-
त्तिजनकतायामवच्छेदकत्वादन्यथा स्थाणुत्वाद्यभावभ्रमोत्तरं स्था-
णुत्वादिप्रत्यक्षस्थलेपि व्याप्यदर्शनवशेन स्थाणुत्वादेरापत्तिप्रसङ्गा-

---

( १ ) ' व्याप्ति '

प्रति च साक्षाद्विशेषणधियो हेतुत्वस्य निर्विकल्पकात्मकस्य वा स्मरणस्यानुभवं प्रत्येव वा तस्या हेतुत्वस्य नियमतः कृतिसाक्षात्कारपूर्व्वं विषयस्मृतेश्च कल्पनात् व्याप्यवत्पक्षवत्त्वादि-

---

दिति ध्येयम् ॥ एतेन व्याप्तत्वविषयकत्वप्रवेशेन । परास्तमिति परेणान्वयः । विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वे व्यवस्थापिते विशिष्टवैशिष्ट्यबुद्धेरपि विशिष्टबुद्धितया तदर्थमपेक्षितविशेषणज्ञानस्यैव विशेषणतावच्छेदकप्रकारकत्वसम्भवाद्विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य व्यभिचारो न स्यादित्याशयेनोक्तम् विशेषणधिय इति । हेतुत्वस्येति । कल्पनादिति परेणान्वयः । ननु सम्बन्धद्वयेनैव [हेतुत्वे] प्रत्येकं व्यभिचारात् विशिष्टज्ञानत्वावच्छिन्नं प्रत्यनुगतहेतुत्वासम्भव इत्यत आह निर्विकल्पकात्मकस्य वा स्मरणस्येति । विशेषणाप्रकारकस्य वा स्मरणस्येत्यर्थः । तेन व्याप्यवत्त्वादिस्मरणस्य[1] सविकल्पकत्वेपि न क्षतिः । [हेतुत्वस्य] कल्पनादिति योजना । तथा च साक्षात्सम्बन्धेनैव सर्वत्र हेतुत्वम् [न तु सम्बन्धद्वयेनैव]इति भावः । ननु विशिष्टबुद्धित्वं स्मरणस्थले सन्दिग्धव्यभिचारकत्वान्न विशेषणधीजन्यतावच्छेदकम् किं च समानप्रकारकत्वेन ज्ञानस्मृत्योः कार्यकारणभावस्य क्लृप्तत्वान्निर्विकल्पकस्मरणस्यासम्भवोपीत्यत आह अनुभवं प्रत्येव वेति । तस्या हेतुत्वस्य कल्पनादित्यन्वयः । तस्या विशेषणधियः । नन्वेवमपि विषयोपरक्तकृत्यादिसाक्षात्कारे व्यभिचार एव इत्यत आह नियमत इति । नियमः कारणत्वम् । तदङ्गीकृत्येत्यर्थः । तथा च ल्यब्लोपे पञ्चमी । तेन यत्रापेक्षाबुद्ध्या कृतिर्जनिता यत्र वा प्रथमं चिकीर्षा ततो विषयोपरक्तमुपादानप्रत्यक्षं पश्चात्कृतिस्तत्र कृतिसाक्षात्कारपूर्वं विषयस्मृत्यकल्पनेपि नासङ्गतिरिति ध्येयम् । न चोक्तप्रणाल्या व्यभिचारवारणेपि ज्ञानत्वमन्तर्भाव्य हेतुत्वे मानाभाव इति वाच्यम् विशेषणगोचरानुद्बुद्धसंस्कारदशायां विशिष्टप्रत्यक्षानुत्पत्त्यर्थं तन्निवेशावश्यकत्वादिति भावः । नव्यास्तु यागादिव्यापारतया सिद्धस्यापूर्वस्येवानुभवव्यापारतया सिद्धस्य संस्कारस्यापि सविषयकत्वे मानाभावाद्विशेषणविषयकत्वेनैव विशिष्टानुभवे हेतुत्वं संस्कारद्वारा समानाकारनिश्चयत्वेनैव स्मृतिहेतुत्वेप्यतिप्रसङ्गाभावात् न च संस्कारस्य निर्विषयकत्वे यत्र घटपटावित्यनुभवस्य पटांश एवापेक्षात्वं तत्र तादृशाज्ञा-

(१) त्वेन ।

नस्य घटस्मृत्युपधायकस्वजन्यसंस्कारसम्बन्धेन सत्त्वात् घटस्येव पटस्यापि स्मरणापत्तिः यस्य पुंसः पटानुभवोत्तरं तत्सदृशवस्तु-दर्शनादेव पटस्मृतिस्तत्पुरुषीयपटस्मृतिसामान्यं प्रत्येव तदीयतादृ-शवस्तुदर्शनत्वेनानुगतरूपेणोद्बोधकस्य हेतुतया तत्सत्त्वदशायामु-द्बोधकाविरहस्यापि वक्तुमशक्यत्वात् इति वाच्यम् स्वजन्यसंस्का-रद्वारा तद्धर्मिकतत्प्रकारकोपेक्षान्यतादृशनिश्चयत्वेन तथाविध-स्मृतिं प्रति हेतुत्वादुक्तस्थले च पटोपेक्षान्यत्वविशिष्टस्य पटधर्मि-कपटत्वप्रकारकज्ञानस्य स्वजन्यसंस्कारद्वारा विरहादेव पटस्मृत्या-पत्त्यसम्भवात्त्वयापि संस्कारजनकतायामप्युपेक्षान्यत्वस्य प्रवेशनीय-तया गौरवानवकाशात् अन्यथोक्तस्थल एव पटत्वप्रकारकसंस्कारस्य दुर्वारत्वापत्तेः यत्तु स्वध्वंसद्वारैवानुभवस्य स्मृतिजनकत्वसंभवाद-तिरिक्तः संस्कार एव नास्ति कस्य सविषयकत्वचिन्तेति तत्तुच्छम् यस्य पुंसः पटानुभवोत्तरं क्रमिकचतुष्पञ्चप्रत्यक्षानुत्पत्त्यव्यवहितपू-र्वकाल एव दशदिनेषु पटस्य दशस्मरणान्युपेक्षात्मकान्युत्पन्नानि तस्य तत्तद्दिन एव स्मरणोत्तरमपि पटस्य पुनः स्मरणप्रसङ्गात् स्व-ध्वंसद्वारानुभवस्य सत्त्वात् तत्रत्यदशस्मरणेषूद्बोधकदशकस्य विशे-षतो हेतुत्वकल्पनया तत्र स्मृत्यनुत्पाद[संपादन]मपेक्ष्य संस्कारस्य स्मृतिहेतुत्वकल्पनयैव तत्संपादने लाघवात् संस्कारस्य फलनाश्यतया प्रथमस्मरणेन तन्नाशादेवास्मन्मते पुनः स्मरणासंभवात् न च तत्तत्स्मरणपूर्वक्षण एव तत्तत्स्मरणस्योत्पादप्रसङ्गेन संस्कार-हेतुत्ववादिनापि तत्रोद्बोधकस्य विशेषतो हेतुत्वं वक्तव्यमिति सांप्रतम् प्रत्यक्षादिसामग्र्याः प्रतिबन्धकत्वादेव तत्तत्स्मृतिप्राक्-क्षणे स्मरणासंभवादिति प्राहुः । केचित्तु स्मृतिनाश्यतावच्छेद-कतयैव संस्कारस्य सविषयकत्वसिद्धिस्तद्धर्मिकतत्प्रकारकसंस्का-रनाशं प्रत्येव तादृशस्मृतित्वेन [हेतुत्वात् स्मृतित्वेन] सामान्यतः संस्कारनाशं प्रति हेतुत्वे घटस्मरणादेव निखिलसंस्कारनाशा-दनुभवान्तरं विनोत्तरकालं पटादिस्मरणानुपपत्तेः न हि तत्र घट-स्मृतिरेव स्वजन्यसंस्कारद्वारा पटादिस्मृतिं जनयितुमीष्टे भिन्न-विषयकत्वात् अन्यथाऽतिप्रसङ्गात् न वा पटादिधीरेव तत्र संस्कारद्वारा संभवति तज्जन्यसंस्कारस्यापि घटस्मृत्यैव नाशात् न च तद्धर्मिकत्वाद्यपेक्षया लाघवेन तद्धर्मिकतत्प्रकारकस्मृतिना-

ज्ञानेऽतिव्याप्तिरित्यपि परास्तम् । साध्यादेरननुगमात् एकोपादाने अन्यानुमितौ दैवाद्व्याप्तिविषयिण्याश्च तस्यामव्याप्तिः परमवशिष्यते। सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वाविवक्षया निरसनीया। एतल्लाभायैव चानुभवार्थकं चरमज्ञानपदम्। एवञ्चान्वयव्यतिरेकव्याप्त्योः पृथक् प्रयोजकत्वेऽपि न क्षतिः।

---

श्यतावच्छेदकं संस्कारनिष्ठं वैजात्यमेव कल्पयितुं युक्तम् घटत्वप्रकारकस्मृतिनाश्यतावच्छेदकजातेर्घटत्वोभयानुभवजन्ये तदुभयस्मृतिनाश्यसंस्कारे पटत्वप्रकारकस्मृतिनाश्यतावच्छेदकजात्या संकरात् न च तत्रोभयगोचरस्मृतिनाश्यतावच्छेदकं वैजात्यान्तरं प्रत्येकस्मृतिप्रयोजकजातिविरुद्धमेव स्वीकार्यमिति वाच्यम् तथा सति अनन्तजातितदाश्रयकल्पनामनन्तनाश्यनाशकभावकल्पनां चापेक्ष्य संस्कारस्य सविषयकत्वकल्पनाया [एव लाघवेन]औचित्यमिति प्राहुः ॥ ननु तत्पक्षहेतुसाध्यकानुमितित्वं विशिष्यैव लक्ष्यतावच्छेदकं वाच्यमत आह दैवादिति । सामग्रीवशादित्यर्थः । तथा च वह्निव्याप्यो धूमो द्रव्यं पर्वतश्च वह्निमानित्याकारानुमित्यव्याप्तिरिति भावः ॥ ज्ञानवृत्तित्वं ज्ञानसमवेतत्वम् । तेन साक्षात्कारत्वादेः कालिकादिसंबन्धेन तादृशज्ञानवृत्तित्वेपि प्रत्यक्षादौ नातिव्याप्तिः । अनुभवत्वव्याप्येति । अनुभवत्वाव्यापकेत्यर्थः । तेनानुभवत्वस्यापि स्वव्याप्यत्वात्तदादाय प्रत्यक्षादौ नातिप्रसङ्गः । व्याप्यत्व भेदगर्भमित्यपि कश्चित् । यत्किंचिदनुभवावृत्तित्वेनापि जातेर्विशेषणीयत्वमित्यन्ये। जातिपदं समवायेन हेतुनालाभाय । नातः स्पन्दादौ व्यभिचारः । [अनुभवत्वजातेरसत्त्वपक्षे स्मृत्यन्यज्ञानत्वस्यैव तथात्वात्तद्व्याप्यं तादृशज्ञानत्वमपीति तद्वारणाय जातिपदमखण्डधर्मार्थकमित्यपि वदन्ति ॥ ] अथानुभवत्वव्याप्यजातेर्निवेशे मूलोक्तं चरमज्ञानपदं व्यर्थमव्यावर्तकत्वादत आह एतदिति । तथा च न स्वातन्त्र्येण ज्ञानपदार्थप्रवेश इति भावः ॥ पृथक् अन्वयव्याप्तित्वादिना। न क्षतिः नाव्याप्तिः। अनुमितित्वमादाय सर्वत्रैव लक्षणसत्त्वादिति भावः ॥ अनुभवत्वव्याप्यतमानिवेश्य मूलस्थजन्यपदस्य जन्यतावच्छेदकविशिष्टपरतया तदनुसारि[लघु]लक्षणमाह

पर्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नकारणताप्रति-योगिककार्यताया वह्निव्याप्यवत्पर्वतनिश्चयत्वावच्छिन्नकारण-ताप्रतियोगिकव्याप्त्यविषयकवृत्तिकार्यताया वा अवच्छेदिका ज्ञानवृत्तिः सामानाधिकरण्येन वावच्छेदिका या जातिस्तद्वत्त्वं

---

पर्वतवह्निव्याप्येति [अत्रावच्छेदकत्वस्य व्यासज्यवृत्तित्वमते] का-र्यतावच्छेदकत्वं तत्कार्यनिरूपितामात्रेण वाच्यमन्यथानुमितित्व-स्यापि तादृशकार्यतावच्छेदकत्वपर्याप्त्यनधिकरणत्वादसंभवापत्ते-स्तथा च वह्न्यनुमितित्वेन जन्यतायां वह्नित्वस्यापि प्रवेशात्तदा-दाय वह्न्यादावतिव्याप्तिरत उक्तं ज्ञानवृत्तिरिति ।ज्ञानसमवेतेति तद-र्थः। तेन [वह्नित्वादेरपि] कालिकादिसंबन्धेन ज्ञानवृत्तित्वेपि नोक्त-दोषः। [चरमज्ञानपदस्यैतल्लाभार्थमेव मणिकृतोक्तत्वादिति भावः।] न च तादृशजातिमज्ज्ञानत्वमेव वक्तुमुचितं ज्ञानवृत्तित्वप्रवेशे गौरवादिति वाच्यम्। तादृशजातिमज्ज्ञानत्वं हि तादृशजातिविशि-ष्टज्ञानत्वम्। तथा च तस्य लक्षणत्वे सामानाधिकरण्यात्मकवैशि-ष्ट्यस्य हेतुतावच्छेदकविधया ज्ञानत्वस्य च प्रवेशे विपरी-तमेव गौरवं स्यादिति भावः। ननु धूमपरामर्शविशिष्टानुमितित्वेन तादृशपरामर्शनाशकानुमितित्वेन वा तादृशपरामर्शजन्यत्वे ताह-शपरामर्शघटकतया ज्ञानत्वस्यापि प्रवेशात्तदादाय बुद्धिमात्रेऽति-व्याप्तिरत आह सामानाधिकरण्येन वेति। विशेष्यविधयावच्छेदिके-त्यर्थः। तेन ज्ञानत्वस्यापि तादृशजन्यतायाः समानाधिकरणत्वेपि नोक्तदोषः। वस्तुतस्तु कार्यतावच्छेदकत्वस्य व्यासज्यवृत्तित्वमसि-द्धान्तः अन्यथा कुत्रापि कार्यतावच्छेदकधर्मस्य विशेष्यविशेषण-भावभेदान्नानात्वप्रसञ्जनं शास्त्रकृतां विरुध्येत तथा च वह्न्यनु-मितित्वेन जन्यतायामनुमितित्वमेव जन्यतावच्छेदकं वह्नित्वादिकं तु तादृशजन्यतावच्छेदकतायामवच्छेदकमतो नोक्तक्रमेण ज्ञानवृत्त्या-दिपदस्य व्यावृत्तिरुन्निता किं तु वह्नित्वावच्छिन्नविधेयकानुमि-तित्वस्यैव विनिगमनाविरहात्स्वावच्छिन्नविधेयताकत्वसंबन्धेन अ-

---

(१) 'जन्यत्वात्तादृशोभयवैशिष्ट्यावगाहिज्ञानजन्यतावच्छेदकान्तर्गतज्ञानत्वमा दाय बुद्धिमात्रेऽतिव्याप्ति'

नुमितिवृत्तिवह्नित्वस्यापि परामर्शजन्यतावच्छेदकत्वात् तादृशवह्नित्वादिकमादाय वह्नयादावतिव्याप्तिवारणार्थमेव ज्ञानवृत्तिपदम् समवायसंसर्गेणैव जन्यतावच्छेदकत्वस्य विवक्षया वह्नित्वादेर्वारणसंभवाज्ज्ञानवृत्तित्वप्रवेशे गौरवमित्याशयादेव च सामानाधिकरण्येन वेति [कल्पान्तरमुक्तमिति] युक्तमुत्पश्यामः । [केचित्तु स्वावच्छिन्नविधेयतासंबन्धेन वह्नित्वस्य संबन्धान्तरेण पर्वतत्वस्यापि अवच्छेदकतया तदादाय वह्नयादावतिव्याप्तिवारणाय ज्ञानवृत्तीति ज्ञानसमवेतार्थकम् लाघवादाह समानाधिकरण्येनेति जन्यतायाः समवायेनावच्छेदिका या जातिरित्यर्थ इत्याहुः । ] यद्यपि पर्वतवह्निव्याप्योभय[वैशिष्ट्यावगाहि]निश्चयोत्तरज्ञानत्वावच्छिन्नं प्रत्येव लाघवात्तादृशवैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वे पर्वतधर्मिकवह्न्यनुमितित्वादेः कार्यतावच्छेदकाऽप्रविष्टत्वादनुमितिमात्र एवोक्तलक्षणस्यासंभवः । तथापि तत्तदप्रामाण्यज्ञानानास्कन्दिततादृशोभयवैशिष्ट्यावगाहिनिश्चयत्वेनैवानुमितिहेतुत्वं वाच्यमन्यथा भ्रमत्वेन गृह्यमाणादपि परामर्शादनुमितिप्रसङ्गात् न च परामर्शधर्मिकतत्तदप्रामाण्यज्ञानाभावस्य स्वातन्त्र्येणैवानुमितिहेतुत्वमिति नोक्तदोषः तथा सति गृहीताप्रामाण्यकस्यैव परामर्शस्योत्तरं परामर्शान्तरोत्पादेऽनुमित्यनुत्पत्त्यापत्तेः एवं च [पर्वतवह्निव्याप्योभयवैशिष्ट्यावगाहिनिश्चयोत्तरज्ञानत्वमात्रस्य तादृशनिश्चयजन्यतावच्छेदकत्वे गृहीताप्रामाण्यकात्] पर्वतवह्निव्याप्योभयवैशिष्ट्यावगाहिनिश्चयादनन्तरं स्वसामग्रीवशाज्जायमानायां पर्वते द्रव्यत्वस्य चत्वरे वह्नेर्वह्निमत्पर्वत एव वा द्रव्यत्वादेरनुमितौ पर्वते वह्निविधेयकान्वयबुद्धौ धूमेन पर्वते वह्नेरापत्तौ च व्यभिचारः स्यादित्यवश्यं पर्वतवह्निव्याप्योभयवैशिष्ट्यावगाहिनिश्चयोत्तरपर्वतधर्मिकवह्निविधेयकानुमितित्वावच्छिन्नं प्रत्येव तत्तदप्रामाण्यज्ञानानास्कन्दिततादृशोभयवैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वं वाच्यम् इत्यनुमितित्वस्यापि कार्यतावच्छेदकेऽनुप्रवेशान्नासंभवः न च तत्तदप्रामाण्यज्ञानानास्कन्दितपर्वतवह्निव्याप्योभयवैशिष्ट्यावगाहिनिश्चयोत्तरज्ञानत्वावच्छिन्नं प्रत्येव तत्तदप्रामाण्यज्ञानानास्कन्दिततादृशवैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वं वाच्यमतो न व्यभिचारः पर्वतधर्मिकवह्निविधेयकानुमितित्वापेक्षया गुरुत्वेन तत्तदप्रामाण्यज्ञाना-

भावकूटस्य तादृशनिश्चयकार्यतावच्छेदककोटयप्रविष्टत्वात् अनयैव दिशाग्रिमलक्षणेप्यसंभवो वारणीय इति परैरपरिशीलितः पन्थाः। ननु पूर्वोक्तयुक्त्या व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चय[त्वस्य दुर्वचत्वात्तद्रूप]त्वेनानुमितावपि न हेतुत्वम् अतः कल्पान्तरमाह वह्निव्याप्यवादिति। [केचित्तु व्याप्यपक्षोभयवैशिष्ट्यनिरूपितपर्वतत्वावच्छिन्नविशेष्यताकज्ञानत्वावच्छिन्नत्यर्थः एतेन व्याप्यवत्तानिश्चयत्वघटकदलद्वयापत्तया लाघवाद्व्याप्यधर्मिकपर्वतनिश्चयत्वेनैव पर्वतो वह्निमानित्यनुमितौ हेतुत्वादसंभवोपीत्यपास्तम् निश्चयत्वे दलद्वयस्याप्रवेशादिति ध्येयम्]। व्याप्तिज्ञानत्वावच्छिन्नकारणत्वप्रवेशेऽनुमितावसंभवोऽनुमितिमात्रे ज्ञानत्वेन वह्न्याद्यनुमितौ च वह्न्यादिज्ञानत्वेनैव हेतुत्वस्य स्वयं वक्ष्यमाणत्वादतस्तत्परित्यागः। यद्यपि वह्न्याद्यनुमितौ वह्न्यादिव्याप्यवत्तानिश्चयत्वेनैव [समानविषयतावच्छेदकसामानाधिकरण्येन] समानविशेष्यतावच्छेदकत्वप्रत्यासत्त्या हेतुत्वमुचितम् पर्वतत्वचत्वरत्वाद्यवच्छिन्नपक्षकानिखिलानुमितिसाधारण्यात्तत्तदात्मव्यक्तीनामपि क्वचित्पक्षतया परेषां विषयविधयैवास्माकं स्वरूपतस्तत्पुरुषीयत्वस्यावच्छेदककोटिप्रवेशेपि गौरवानवकाशात् न च पर्वतत्वाद्यवच्छेदेन साध्यवत्त्वानुमितौ तदवच्छेदेन वह्निव्याप्यवत्तानिश्चयत्वेन हेतुत्वमावश्यकमुक्तक्रमेण हेतुतायां तदनिर्वाहादिति वाच्यम् तावतापि पक्षतावच्छेदक[सामानाधिकरण्येनानुमितौ समानविशेष्यतावच्छेदकत्वप्रत्यासत्त्या परामर्शस्य हेतुतायां बाधकाभावात् साध्यतद्व्याप्यवत्तानतिरिक्तवृत्तित्वविशिष्टपक्षतावच्छेदकताघटकसंसर्गावच्छिन्नस्य विशेष्यतावच्छेदकत्वस्य] प्रत्यासत्तित्वे पक्षतावच्छेदकधर्मावच्छेदेनानुमितावप्युक्तक्रमेण हेतुतासंभवाच्च [वस्तुतः पक्षतावच्छेदकावच्छेदेनानुमितौ न तदवच्छेदेन हेतुमत्त्वानिश्चयः कारणं किं तु तदवच्छेदेन बाधाद्यनिश्चय एवेति एतेन पर्वतत्वावच्छेदेन प्रमेयत्वाद्यनुमितेः प्रमेयत्वानतिरिक्तत्वावगाहने भ्रमत्वापत्तिरित्यपि प्रत्युक्तमेतावतापि वह्न्यादिसाध्यकानुमितौ समानविशेष्यतावच्छेदकत्वप्रत्यासत्त्या वह्न्यादिपरामर्शस्य हेतुत्वे बाधकाप्राप्तेः] तथापि साध्यव्याप्यस्य धूमालोकादेरननुगमात्तादृशैकव्याप्यवत्तानिश्चयत्वेन हेतुत्वोक्तावन्यालिङ्गकाया पर्वते धूमस्य चत्वरे चालोकस्य समूहालम्बनपरामर्शा-

वा बोध्यम् । व्याप्तिभानेऽवश्यं भासमानो यस्तादृशानुमित्य-
विषयस्तदविषयत्वमात्रं वा ग्राह्यम् । यां काञ्चिदनुमितिव्यक्ति-

---

उज्ञायमानायां साध्यस्यानुमितौ व्यभिचारः स्यादतः पक्षीभूतस्य पर्व-
तादेरपि विशेष्यतावच्छेदककोटावनुप्रवेशः कृतः । यदि च तत्पु-
रुषीयवह्निव्याप्यधूमवत्तानिश्चयत्वेनैव हेतुत्वं तत्पुरुषीयवह्न्यनुमि-
तित्वेन च कार्यत्वं तत्र कारणस्य विशेष्यतावच्छेदकत्वमेव
संबन्धः कार्यस्य तु तत्पुरुषनिष्ठज्ञानीयवह्निव्याप्यधूमवत्ताप्रका-
रतानिरूपितविशेष्यतावच्छेदकत्वविशिष्टमेव विशेष्यतावच्छेदकत्वं
संबन्धः तादृशविशेष्यतावच्छेदकत्ववैशिष्ट्यं तु स्वनिरूपकज्ञानोत्तर-
ज्ञानीयत्वस्वसामानाधिकरण्योभयसम्बन्धेन ग्राह्यमित्युच्यते तदा
समानविशेष्यतावच्छेदकत्वप्रत्यासत्त्यापि परामर्शानुमित्योः कार्यका-
रणभावः संभवत्येव । परं तु विषयताया ज्ञानसमानकाल-
तया विनश्यदवस्थपरामर्शेन जनिताया अनुमितेर्विशेष्यता-
वच्छेदकीभूतपर्वतत्वादौ तदानीं तादृशपरामर्शविशेष्यतावच्छे-
दकत्वस्यासंभवादवेदमुपेक्षितमस्माभिरिति ध्येयम् । व्याप्यविशि-
ष्टवैशिष्ट्यबुद्धावतिव्याप्तिवारणाय व्याप्त्यविषयकेति । न च व्या-
प्यविशिष्टवैशिष्ट्यावगाहितामात्रस्यैव जन्यतावच्छेदकतया पराम-
र्शजन्यतावच्छेदकजातिविरहादेव न तत्रातिप्रसङ्गः । तथापि विशिष्ट-
स्मरणत्वस्य परामर्शजन्यतावच्छेदकतया तद्वति स्मरणेऽतिव्याप्तिवार-
णार्थं व्याप्त्यविषयकत्वनिवेशस्यावश्यकत्वात् । वह्न्याद्यापत्तावापत्ति-
त्वजातिमादायातिव्याप्तिवारकं तदित्यपि केचित् ॥ ननु यत्र [वह्नि]-
व्याप्यविशिष्टवैशिष्ट्यबुद्धौ धूमत्ववह्नित्वादिना बाष्पगुञ्जादिकमेव
भाति तस्या अखण्डव्याप्त्यविषयकत्वात्तत्रातिव्याप्तिरतो लाघवाच्चाह
व्याप्तिभान इति । तादृशानुमित्यविषयीभूतघटादिव्यक्त्यविषयक-
त्वस्य व्याप्तिविशिष्टवैशिष्ट्यबुद्धावपि सत्त्वाद्भासमानान्तम् व्याप्ति-
भानेऽवश्यं भासमानं साध्यतावच्छेदकीभूत वह्नित्वादिकमिति त-
दविषयकत्वं चानुमितावसंभवीत्यत उक्तं तादृशानुमित्यविषय
इति । तथा च तादृशं यदभावत्वधूमत्वादिकं तदविषयकत्वमेव
विशिष्य वक्तव्यमिति भावः ॥ ननु वह्निव्याप्यालोकपरामर्शजन्यायां
पर्वतो वह्निमानित्यनुमितौ व्यभिचाराद्वह्निव्याप्यधूमवत्पर्वतनिश्च-

मादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवान्यासमवेतधर्मसमवा-

---

यत्वेन नानुमितिहेतुत्वमित्युक्तलक्षणासंभवः न च पर्वतधर्मि-
कवह्निव्याप्यधूमवत्तादिनिश्चयविशिष्टानुमितिं प्रत्येव तादृशनिश्चय-
त्वेन हेतुत्वं वैशिष्ट्यं चाव्यवहितोत्तरत्वसंबन्धेन तच्च क्षणद्व-
यसाधारणम् तेन विनश्यदवस्थधूमपरामर्शस्थलीयानुमितावपि तद-
पेक्षेति वाच्यम् अव्यवहितोत्तरत्वस्य संबन्धत्वे मानाभावात् तादृ-
शनिश्चयसामान्याव्यवहितोत्तरत्वाप्रसिद्ध्या तत्तत्परामर्शाव्यवहितो-
त्तरतत्तद्व्यक्तीनामननुगतानामेव निवेश्यत्वेऽनुगतकार्यकारणभा-
वासंभवाच्च नापि धूमलिङ्गकपर्वतधर्मिकवह्निविधेयकानुमितिं
प्रत्येव तादृशनिश्चयत्वेन हेतुत्वं धूमलिङ्गकत्वं तु धूमान्यमात्रलि-
ङ्गका यावत्योऽनुमितयस्तत्तद्भेदकूटवत्त्वमतो न व्यभिचार इति
वाच्यम् तथा सति तावद्भेदकूटानां विशेष्यविशेषणभावभेदादनन्त-
कार्यकारणभावध्रौव्ये लाघवेन तत्तदनुमितिव्यक्तित्वावच्छिन्नं
प्रति तत्तत्परामर्शव्यक्तित्वेन हेतुत्वस्यैवोचितत्वादित्यतः स्वयं
लक्षणमाह यां कांचिदित्यादिना । न च वह्निव्याप्यधूमवत्पर्वतानि-
श्चयत्वेन कारणतायां संस्कारान्यतादृशनिश्चयनाशकविशिष्टा-
नुमितित्वमेव कार्यतावच्छेदकमित्युक्तलक्षणमेव सम्यगिति वाच्यम् ।
धूमपरामर्शगोचरकामिनीजिज्ञासानन्तरोत्पन्नतादृशपरामर्शेन स्व-
विनाशदशायामुत्पाद्यानुमितेरसंग्रहापत्तेः । कामिनीजिज्ञासायाः प्रति-
बन्धकत्वेनेष्टसाधनतादिज्ञानविरहेण च तादृशपरामर्शद्वितीयक्षणे
संस्कारभिन्नस्य ज्ञानेच्छाकृत्यादेरुत्पत्त्यसंभवात् । एवं सिद्ध्या-
त्मकधूमपरामर्शोत्तरमुत्पन्नेनापेक्षाबुद्ध्यात्मकालोकपरामर्शेन जनि-
तायां वह्न्यनुमितौ व्यभिचारात् । ज्ञानादिनाशं प्रति लाघवेन
स्वोत्तरोत्पन्नत्वेनैव जनकतया धूमपरामर्शोत्तरजातसंयोगादेरपि
तन्नाशकतया तद्विशिष्टायामालोकादिलिङ्गकानुमितावपि व्यभिचा-
राच्च । अत एव धूमपरामर्शनाशकानुमितित्वावच्छिन्नं प्रत्येव वह्नि-
व्याप्यधूमवत्तानिश्चयत्वेन हेतुत्वं [न च विनश्यदवस्थधूमपरा-
मर्शजन्यानुमित्यसंग्रहः तत्र विशिष्यैव तत्तत्परामर्शानुमितिव्य-
क्तीनां कार्यकारणभावस्वीकारात्तदतिरिक्तस्थल एवोक्तानुगतरू-
पेण हेतुत्वसंभवात्] न च विनश्यदवस्थपरामर्शजन्यानुमितिदशा-

थामपि परामर्शनाशकानुमित्यापत्तेः सामग्रीसत्त्वादिति वाच्यं कार्यसहवृत्तित्वेनैव धूमपरामर्शनाशकानुमितौ तादृशपरामर्शत्वेन हेतुत्वस्योक्तत्वादित्यपि निरस्तम् । धूमपरामर्शव्यधिकरणानुमितिव्यक्तीनामपि स्वोत्तरोत्पन्नत्वेन तादृशपरामर्शनाशकतया तत्रैव व्यभिचारादिति । नव्यास्तु वह्निव्याप्यधूमवत्पर्वतनिश्चयविशिष्टानुमितिं प्रत्येव तादृशनिश्चयत्वेन हेतुत्वम् वैशिष्ट्यं च तत्र स्वसामानाधिकरण्यस्ववृत्तिप्रागभावप्रतियोगित्वोभयसंबन्धेन ग्राह्यम् वृत्तिरपि कालिकी निवेश्येति नोक्तलक्षणस्यासंभवः न च विनश्यदवस्थपरामर्शजन्यानुमित्यसंग्रहः तत्तदनुमितौ परामर्शव्यक्तीनां विशिष्यैव हेतुत्वान्तरस्य वक्तव्यत्वात् वस्तुतो वह्निव्याप्यधूमवत्पर्वतनिश्चयविशिष्टकृतिमदनुमितिं प्रत्येव तादृशनिश्चयत्वेन हेतुत्वं वाच्यम् तेन विनश्यदवस्थपरामर्शस्थलीयानुमितेर्नासंग्रहः अत्र च निश्चयस्य वैशिष्ट्यं पूर्ववत् स्वसामानाधिकरण्यस्ववृत्तिप्रागभावप्रतियोगित्वोभयसंबन्धेन निवेश्यम् तादृशकृतिमत्त्वं तु सामानाधिकरण्यसंबन्धेन वाच्यमतो न कोपि दोषः सर्वत्र जीवनयोनियत्नमादायैव कार्यतावच्छेदकसंपत्तेः न च यत्र धूमपरामर्शोत्तरं तद्धर्मिकाप्रमाण्यग्रहात्मकालीकपरामर्शस्योत्पाददशायां बाधादिनिश्चयस्य ध्वंसः तदुत्तरवह्न्यनुमितेरपि निरुक्तकृतिमदनुमितित्वात्तदव्यवहितप्राक्काल चाप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शस्यासत्त्वाद्व्यभिचार इति वाच्यम् अप्रामाण्यज्ञानव्यक्तीनामपि विशेषत एवोत्तेजकतया तत्रत्यतद्व्यक्तेरनुत्तेजकत्वेपि क्षत्यभावादेवं च परामर्शधर्मिकाप्रामाण्यज्ञानाभावकूटस्य स्वातन्त्र्येणानुमितिप्रयोजकत्वमेवं वह्निव्याप्यधूमवत्तानिश्चयविशिष्टकृतिमत्त्वावच्छिन्नं प्रत्येव तादृशनिश्चयत्वेन हेतुत्वादनुमितित्वस्य जन्यतानवच्छेदकत्वात् जातिघटिततयोक्तलक्षणस्यासम्भवः स्यादतः स्वयं लक्षणमाह यां कांचिदित्यादिनेति प्राहुः । यत्तु वह्निव्याप्यधूमवत्पर्वतनिश्चयत्वपदेन मानसत्वव्याप्यपरामर्शत्वजातिरूपलक्षितेति तदवच्छिन्नकारणतामन्तर्भाव्यैवोक्तलक्षणसंभवः प्रागननुभूतसाध्यादिपरामर्शादनुमित्युत्पत्त्या च परामर्शत्वजातेर्न स्मृतित्वव्याप्यत्वशङ्कापीति मतम् तत्तुच्छम् । निश्चयत्वान्तेन परामर्शत्वजात्युपलक्षणे व्याप्यविषयकवृत्तीत्यस्य ज्ञानवृत्तिरि-

---

(१) 'स्थलीया' (२) 'व्याप्यवत्तया तादृशनिश्चय' (३) 'स्वमते'

त्यादेश्च व्यर्थतापत्तेः।न वा परामर्शत्वस्य जातित्वे प्रमाणमस्ति।तुल्य-न्यायतयोपायेच्छाप्रवृत्त्यादिजनकतावच्छेदकत्वेन सिद्धयेष्टसाधनता-ज्ञानत्वादिजात्या सांकार्यात्। किं चानुमितित्वावच्छिन्नं प्रति ज्ञान-त्वेनैव हेतुत्वसंभवात्ताद्दशजातौ मानाभावः। घटाद्यावरण्यस्य दण्डा-देरिवानुमितौ ज्ञानमात्रस्य स्वरूपयोग्यत्वेपि क्षतिविरहात्। किं चानु-मितिसामान्यं प्रति परामर्शत्वजात्या हेतुत्वस्वीकारेपि वह्न्यनुमि-तित्वाद्यवच्छिन्नं प्रत्यनुगतनियामकालाभः। वह्निविषयकपरामर्शत्वेन तत्र हेतुत्वे वह्निविषयकाद्धटादिसाध्यकपरामर्शादपि वह्न्यनुमिति-प्रसङ्गात्। न च पर्वतधर्मिकवह्न्यनुमितित्वस्य कार्यतानवच्छेदक-त्वात्तदवच्छिन्नस्योत्पत्तावापादकाभावः।तादृशानुमितित्वस्यापि प-रामर्शधर्मिकाप्रामाण्यज्ञानाभावस्य पक्षताविशेषस्य वा कार्यता-वच्छेदकत्वेन तदवच्छिन्नस्यापत्तिसंभवात्। इदं त्ववधातव्यम् पर्व-तधर्मिकवह्न्यनुमितित्वावच्छिन्नं प्रति जनकतावच्छेदकतया धूमा-लोकादिनानाहेतुकवह्नि[व्याप्य]परामर्शसाधारणी भ्रमत्वज्ञानास्कन्दि-तव्याप्यवत्तानिश्चयावृत्ति]मानसत्वव्याप्या परामर्शत्वजातिः [कदा चित्] कल्पयितुं शक्यत एव यदि चाक्षुषादिपरामर्शात् क्षणविलम्बेने-वानुमितिर्द्रव्यत्ववह्न्योः साध्ययोः समूहालम्बनपरामर्शाद्वा द्रव्यत्व-वह्न्योर्नानुमितिः किं तु प्रत्येकस्यैव परामर्शादन्यथा तदुभयजनकता-वच्छेदकजात्योस्तत्रैव संकरापत्तेः [एतेन धूमादिलिङ्गकत्वमेव धूमा-दिपरामर्शजन्यतावच्छेदकं तच्चानुमितित्वव्याप्यवैजात्यमित्यपि मतं व्याख्यातम्] इति दिक्। केचित्तु वह्निव्याप्यधूमवत्पर्वतनिश्चय-त्वेनैव हेतुत्वं जन्यता तु तादृशधूमविशिष्टपर्वतधार्मिकवह्न्यनुमिति-त्वेनैव न च धूमवत्पर्वतधर्मिकवह्न्यनुमितित्वेनैव लाघवादस्तु जन्य-तेति वाच्यम् नानाविधव्याप्तेरनुमित्युपयोगितया जनकज्ञानवि-षयीभूतव्याप्तीनां विशिष्यानुमितौ कार्यतावच्छेदकत्वादेकविधव्या-प्तेरेवानुमितिप्रयोजकत्वे तु धूमवत्पर्वतत्वावच्छिन्नधर्मिकवन्ह्यनुमि-तित्वेनैव जन्यत्वं वक्तव्यम् लिङ्गोपधानस्याचार्यसंमतत्वेन तस्यैव परामर्शजन्यतावच्छेदकत्वौचित्यात् तथा च पूर्वोक्तलक्षणमवे सम्यक् न चानुमितिमात्रस्य पक्षे हेत्ववगाहित्वे यत्र [बाधकाली-न]परामर्शोत्तरं पक्षे हेत्वभावस्य दोषजं लौकिकं वा प्रत्यक्षं तत्रा-नुमितिर्न स्यादिति वाच्यम् इष्टत्वात् न चैवं सति तदानीं तन्मते

प्रत्यक्षानुपादेन साक्षात्कारादिकं प्रत्यनुमितिसामग्र्या विरोधितायां सिद्ध्यभावस्यैव पक्षधर्मिकहेत्वभावनिश्चयाभावस्यापि प्रवेशे गौरवं स्यादिति वाच्यम् मणिकृन्मतेपि यत्र सिद्ध्यंशे भ्रमत्वज्ञानात्मकस्यैव परामर्शस्योत्तरं पक्षे हेत्वभावस्य निश्चयस्तदुत्तरमनुमितेरुत्पत्त्यर्थं सिद्धेरनुमितिविरोधितायां तत्तदप्रामाण्यज्ञानाभावस्य प्रवेशे गौरवस्य तुल्यत्वादस्माकं मते हेत्वभावनिर्णयेन प्रतिबन्धात्तत्रानुमितेरनुत्पत्त्या सिद्धेर्विरोधितायां [घटादेर्विरोधितायां] तत्तदप्रामाण्यज्ञानाभावस्याप्रविष्टत्वात् यत्तु लिङ्गोपधानमते [पक्षे]ऽनुमितिमात्रस्यैव विशिष्टवैशिष्ट्यबुद्धित्वेन तन्निष्ठ साध्यव्याप्यवत्तापरामर्शजन्यत्वं वह्निव्याप्यधूमवत्पर्वतत्वावच्छिन्नविषयताकत्वेनैवावच्छिद्यते तादृशप्रत्यक्षादिसाधारण्येन क्लृप्तत्वान्न तु वह्निव्याप्यधूमवत्पर्वतधर्मिकवन्ह्यनुमितित्वेन कार्यकारणभावान्तरकल्पने गौरवादिति कुतः परामर्शजन्यतावच्छेदकीभूतमनुमितित्वमादाय प्रागुक्तलक्षणसम्भवः न च तत्तत्साध्यकानुमितित्वस्य परामर्शजन्यतानवच्छेदकत्वे वह्निव्याप्यविशिष्टपर्वते वह्नेरनुमितिदशायां घटादेरपि तादृशपर्वतेनुमित्यापत्तिः पर्वतविशेष्यक[घटविधेयकानुमितित्वस्यापि घटसाध्यकपक्षताजन्यतावच्छेदकतया तदवच्छिन्नस्यापादनसंभवादिति वाच्यम् लिङ्गोपधानपक्षे पर्वतधर्मिकघटानुमितिमात्रस्यैव घटव्याप्यवत्पर्वतत्वावच्छिन्नविषयताकत्वनियमेन तदवच्छिन्नं प्रति हेतोर्घटव्याप्यवत्तया पर्वतनिश्चयस्य विरहादेव तदानीं] घटविधेयकानुमित्यसंभवात् व्यापकधर्मावच्छिन्नसामग्रीसहिताया एव विशेषधर्मावच्छिन्नसामग्र्याः कार्यजनकत्वादिति तत्तुच्छम् पक्षतावच्छेदकसामानाधिकरण्येन व्याप्यवत्तापरमर्शात्तदवच्छेदेन साध्यानुमित्यनुत्पत्त्या तदवच्छेदेन साध्यानुमितित्वावच्छिन्नं प्रत्यवश्यं तदवच्छेदेन साध्यव्याप्यवत्तापरामर्शत्वेन हेतुत्वादनुमितित्वस्याप्यवश्यं परामर्शजन्यतावच्छेदकेऽनुप्रवेशात्पर्वतत्वाद्यवच्छेद्यत्वाविशिष्टसंयोगसंबन्धेन वह्निव्याप्यधूमवत्पर्वतधर्मिकवह्न्यनुमितिं प्रति पर्वतत्वाद्यवच्छेदेन वह्निव्याप्यधूमवत्ता[परामर्श]निश्चयत्वेन हेतुतायाः सुवचत्वादित्याहुः।तच्चिन्त्यम्। तद्व्यक्तीत्यादि। अनुमितिसमवेतत्वोक्तावनुमितित्वप्रवेशे [गौरवमतस्तदप्रवेशे] लाघवं सूचयितुं [प्रथमं] व्यक्तिपदम्। जातीतरस्यापि स्वरूपतः प्रकारतायाः क्वचिदिष्टतया व्यक्तिगतधर्मान्तरस्याभानेपि क्षत्यभावात्। यत्तु अनुमितिसमवेतत्वोक्तावनुमिति-

यित्वमिति वा वक्तव्यम् । अनुभवत्वजात्यनङ्गीकारे तु तद्व्यक्ति-

---

त्वप्रवेशे लघुनस्तस्यैव लक्षणत्वसंभवे शेषवैयर्थ्यापत्तेरतस्तद्व्यक्तित्वेन प्रवेशः कृत इति तन्न । स्वरूपतोऽनुमितित्वस्य प्रवेशेऽपि हेतुतावच्छेदक-रूपेणाप्रविष्टतया लक्षणत्वासंभवात् । प्रत्यक्षत्वमादायातिव्याप्तिवारणा-र्थं [माद्यं समवेतान्तम । प्रत्यक्षत्वस्याप्यनुमितौ कालिकादिसंबन्धेन सत्त्वात्समवेतेति । अनुभवत्वमादाय प्रत्यक्षाद्यतिव्याप्तिवारणार्थ]मनु-भवत्वान्येति । यद्यप्यनुभवत्वप्रतियोगिकभेदस्यानुभवत्वेऽपि सत्त्वा-दुक्तदोषतादवस्थ्यम् अनुभवत्वत्वावच्छिन्नप्रतियोगिताकभेदस्योक्तौ च तद्घटकीभूतं यत्सकलानुभववृत्तित्वं तदवच्छिन्नभेदस्यैव सम्यक्के ज्ञानत्वादिवारकस्यानुभवान्यासमवेतत्वस्य वैयर्थ्यम । तथाप्यनुभू-तिरित्याकारकयत्किंचिद्बुद्धिप्रकारत्वावच्छिन्नभेदस्यैवानुभवत्वान्य-पदेनोक्तत्वाददोषः । सकलानुभववृत्तित्वस्य तत्राप्रविष्टत्वात् । बाधनिर्णयादिप्रतिबध्यतावच्छेदकतया परोक्षत्वजातेः प्रामाणिकत्वे सकलानुभववृत्तिभिन्नां तादृशजातिमादाय शाब्दबोधादावतिव्या-प्तिवारणार्थमनुभवान्यासमवेतपदस्यावश्यकत्वाच्चेति ध्येयम । [ज्ञान-त्वादिवारणार्थमनुभवान्यासमवेतेति ।] अनुमितित्वस्यापि कालिका-दिसंबन्धेनानुभवादन्यत्र वृत्तेः समवेतत्वप्रवेशः । तादृशधर्मात्मक-स्यानुमितित्वस्य कालिकादिसंबन्धेनतरभेदव्यभिचारित्वात्समवा-येन तस्य हेतुत्वलाभार्थं समवायित्वमुक्तम् ॥ ननु स्वर्गाद्यनुमितौ स्वर्गमनुभवामीत्यनुव्यवसायविरहात्साक्षात्कारत्वमेवानुभवत्वं तथा चानुभवत्वान्येत्यस्य वैयर्थ्यमेव तद्व्यक्तिसमवेतदलेनैव प्रत्यक्षत्व-वारणात् तत्परित्यागेऽप्यनुमितित्वमप्यनुभवान्यसमवेतमित्यसंभवः तत्र अनुभवपदस्य स्मृत्यन्यज्ञानपरत्वे च स्मरणान्यज्ञानभिन्नास-मवेतत्वं फलितार्थमपेक्ष्य स्मरणासमवेतत्वमेव लघुतरं निवेशयितु-मुचितमित्याशयेनाह अनुभवत्वेत्यादि । नव्यास्तु यां कांचिदनुमिति-व्यक्तिमित्यस्यानुमितिः स्मृतिभिन्ना इत्याकारकानुमितिव्यक्तिमित्यर्थः तद्व्यक्तिसमवेतेत्यस्य च तस्यास्तादृशानुमितिव्यक्तेर्या व्यक्तिर्विषय-तासंबन्धेन आश्रयस्तत्समवेतेत्यर्थः तथा चानुभवत्वमादाय प्रत्य-

---

(१) 'मनुभवान्यासमवेतेति क्वचित्' ।

समवेतस्मरणासमवेतधर्मसमवायित्वं वक्तव्यम् । व्याप्तिज्ञानत्वाव- च्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकावच्छिन्ना या विशि- ष्टपरामर्शत्वावच्छिन्नकारणताप्रतियोगिककार्यता तत्समानाधि- करणानुभवत्वव्याप्यजातिमत्त्वं तत्त्वमित्यपि केचित् । परे तु

---

त्वादावतिव्याप्तिवारणायानुभवत्वान्येति सकलानुभववृत्तिभिन्नमात्रा- र्थकम् तादृशानुमितिविषयनिष्ठस्य स्मृतित्वस्य वारणार्थमनुभवा- न्यासमवेतेति अथानुभवत्वं न जातिः किं तु स्मृत्यन्यज्ञानत्वं तथा च तदन्यत्वस्य निवेशो व्यर्थः एवं स्मृत्यन्यज्ञानाभिन्नासमवेतत्वस्वरूपम- नुभवान्यासमवेतत्वमपेक्ष्य स्मरणासमवेतत्वं लघुतरं तावतैव स्मृति- त्वस्य वारणसंभवादत आह अनुभवत्वेति प्राहुः । ज्ञानत्वादिवा- रणाय स्मरणासमवेतेति । यद्यपि प्रत्यक्षासमवेतेत्युक्तेवापि तद्वारणा- संभवः । तथापि प्रत्यक्षासमवेतत्वघटितनिरुक्तेरनुभवत्वजात्यङ्गी- कारेऽनङ्गीकारे चोभयथैव सम्यक्त्व[मितस्य तु तदनङ्गीकारे एव स म्यक्त्व]मिति विशेषः ॥ [चक्रवर्तिलक्षणमाह] व्याप्तीत्यादि । व्याप्य- विशिष्टवैशिष्ट्यबुद्धिवारणार्थमवच्छिन्नान्तं कार्यताविशेषणम् । व्याप्ति- विशिष्टबुद्धिवारणाय परामर्शत्वावच्छिन्नेत्यादि । यद्यपि धूमलिङ्गक- वह्न्यनुमितित्वमेव धूमघटितव्याप्तिज्ञानस्य जन्यतावच्छेदकं तदव- च्छिन्नं प्रति च न वह्निव्याप्यधूमवत्पर्वतनिश्चयत्वेन हेतुत्वं धूम- लिङ्गिकायां महानसं वह्निमदित्याद्यनुमितौ व्यभिचारात् किं तु पर्वत- पक्षकतादृशानुमितित्वावच्छिन्नं प्रत्येव तथात्वेन हेतुत्वं तथा चैका- वच्छेदेन व्याप्तिज्ञानपरामर्शोभयजन्यत्वाभावादनुमितावसंभवः । तथापि धूमघटितव्याप्तिज्ञानस्य स्वजन्यपरामर्शद्वारानुमितिकारण- तायां धूमलिङ्गकपर्वतपक्षकवह्न्यनुमितित्वस्यैव कार्यतावच्छेदक- त्वादेकावच्छेदेनोभयजन्यत्वसंभवः । अन्यथा धूमगतव्याप्यवगा- हिना वह्निव्याप्यालोकपरामर्शेन जनितायां पर्वतो वह्निमानित्यनु- मितौ व्यभिचारेण स्वजन्यपरामर्शद्वारा धूमीयव्याप्तिज्ञानस्यानु- मितिकारणत्वानुपपत्तेरित्याशयः । जन्यतावच्छेदकावच्छिन्नान्तभा- गस्य तादृशव्याप्तिज्ञानजन्यतावच्छेदकधर्मघटितरूपावच्छिन्नार्थक- त्वाददोष इत्यप्याहुः । अत्र पूर्वोक्तयुक्त्यानुमितौ परामर्शत्वेन

पक्षधर्मतेत्यत्र पक्षता विशेषणम् तथाच पक्षतासहकृततादृश-परामर्शजन्यत्वमर्थः यथोक्ताया विशेष्याद्यभावरूपाया वा पक्षतायाः प्रत्यक्षवारणाय परामर्शस्योपादानम् तत्त्वेन जनक-त्वमेकावच्छेदेन तदुभयजन्यत्वञ्च विवक्षितम् तेन बाधादि-

---

हेतुत्वासंभवो न वा व्याप्तिज्ञानत्वेन तथात्वमनुमितिसामान्ये ज्ञानत्वेन हेतुत्वस्याग्रे व्यवस्थाप्यत्वादित्यस्वरसः केचिदित्यनेन सूचितः ॥ मिश्रमतमाह परे त्विति । पक्षताजन्यत्वस्य शब्दाल्ला-भार्थमाह विशेषणमिति । ज्ञानरूपविशेष्यान्वयि यज्जन्यत्वं तेनान्वि-तमित्यर्थः । पक्षधर्मताज्ञानेत्यत्र पक्षतावद्वृत्तित्वघटकतया सह-कृतत्वसंबन्धेन मात्तादेव वा पक्षत्वं ज्ञाने विशेषणमिति भावः । यथोक्ताया इति । विशिष्टाभावरूपायाः पक्षतायाः प्रत्यक्षस्य वारणा-येत्यर्थः । ननु विशिष्टाभावरूपायाः पक्षतायाः कालाद्यतीन्द्रियघटित-त्वान्न स्वगोचरप्रत्यक्षहेतुत्वमत आह विशेष्येति । विशेष्यं सिद्धि-स्तथा च यत्पक्षसाध्यस्थले सिद्धिदशायां कदाप्यनुमितिर्न जाता तत्र सिद्ध्यभावमात्रं पक्षता सा च योग्यत्वात्प्रत्यक्षहेतुरेवेति तत्रैवातिव्याप्तिरिति भावः । ननु पक्षविशेष्यकसाध्यप्रकारकनि-र्णयत्वमेव सिद्धित्वं तदवच्छिन्नाभावश्च न योग्यो निश्चयत्व-स्यातीन्द्रियेश्वरज्ञानादिघटितत्वात्तादृशनिश्चये चाप्रमाण्यज्ञानाद्यना-स्कन्दितत्वप्रवेशे सुतरामयोग्यत्वमत आह आदीति । विशेषणा-भावरूपाया वेति तदर्थः । तथा च यत्र स्थलविशेषे सिद्धिकाली-नपरामर्शसमानकालीनैकविधानुमित्सयैवानुमितिर्जनिता तत्र विशेष-णाभावरूपा तादृशानुमित्सैव पक्षतेति तत्प्रत्यक्षेऽतिव्याप्तिवारणार्थं परामर्शोपादानमिति भावः । तत्त्वेनेति । परामर्शत्वेनेत्यर्थः । तत्त्वेन जनकतयाः फलमाह तेनेति । बाधादीत्यादिना सत्प्रति-पक्षसंग्रहः । तथा च तदानीमनुमितिसामग्र्यभावान्न तत्संभा-वनापीति । प्रतियोगीति । पक्षतायाः प्रतियोगिनी या सिद्धिस्तद्वि-षयकेनेत्यर्थः । तथा च [सिद्ध्यभाव] लौकिकप्रत्यक्षत्वरूपैकधर्मावच्छिन्नं प्रत्येव विषयविधया सिद्ध्यभावस्य सिद्धित्वरूपप्रतियोगिताव-च्छेदकप्रकारकप्रतियोगिज्ञान[त्वेन च परामर्शस्य हेतु]त्वमिति भावः ।

कालीनेन दैवात् प्रतियोगिविषयकेण परामर्शेन जन्ये पक्ष-
तायाः प्रत्यक्षे तदुभयसमूहालम्बने वा नातिप्रसङ्गः तद्वृत्त्यनु-
भवत्वव्याप्यजातिमत्त्वविवक्षया च नाव्याप्तिरित्याहुः । तच्चिन्त्यम् ॥

---

एकावच्छेदेनेत्यस्य फलमाह तदुभयेति । पक्षतापरामर्शोभयेत्यर्थः ।
न च परामर्शप्रत्यक्षं विषयत्वादिनैव तस्य हेतुत्वम् न तु परा-
मर्शत्वेनेति प्रागुक्तम् तथा च तत्त्वेन जनकत्वविवक्षयैव समूहाल-
म्बनव्युदासः सम्भवतीति वाच्यम् । वह्निव्याप्यधूमवत्पर्वतं जानामी-
त्याकारकस्य परामर्शानुव्यवसायस्य ज्ञानधर्मिकव्याप्यविशिष्टवैशि-
ष्ट्यबुद्धितया तत्र पर्वतधर्मिकव्याप्यप्रकारकनिश्चयत्वेन हेतुत्वस्या-
वश्यकत्वात् । यद्यपि पक्षताजन्यतावच्छेदकं तत्पक्षकतत्साध्यकानु-
मितित्वम् तच्च न परामर्शजन्यतावच्छेदकं तल्लिङ्गकत्वस्याप्यधिकस्य
तत्र प्रवेशादित्येकावच्छेदेन तदुभयजन्यत्वमनुमितावप्यसिद्धं तथापि
पक्षताजन्यतावच्छेदकघटितधर्मावच्छिन्नं परामर्शजन्यत्वं विवक्षितम्
पक्षताया अपि लिङ्गविशेषानियन्त्रितत्वमग्रे वाच्यमतो वा नोक्तदोषः ।
वस्तुतो विषयतासंबन्धेनैव तदुभयजन्यतयोरवच्छेदकस्यैक्यं वा-
च्यम् तथा च विषयविधया परामर्शजन्यतावच्छेदकस्य वह्निमत्पर्व-
तस्य पक्षताजन्यतायामपि विषयतयावच्छेदकत्वान्नोक्तदोषः ।
एतेन पक्षताजन्यत्वेत्यत्राभावजन्यत्वमेव लाघवात्प्रवेशयितुमुचितं
विशिष्टवैशिष्ट्यबोधस्य ग्राह्याभावनिश्चयाभावजन्यत्वेपि धर्मिताव-
च्छेदकनियन्त्रितस्य तज्जन्यतावच्छेदकत्वस्य विशेषणतावच्छेदकप्र-
कारकनिश्चयजन्यतानवच्छेदकत्वादेकावच्छेदेनाभावपरामर्शोभयज-
न्यत्वाभावादेव तत्रातिव्याप्त्यसंभवादिति परास्तम् । विषयाविधया
बाधनिश्चयाभावजन्यतावच्छेदकस्यैव विषयतया विशेषणतावच्छे-
दकप्रकारकनिश्चयजन्यतावच्छेकतया तत्रैवातिप्रसङ्गापत्तेरिति दिक् ।
नाव्याप्तिरिति । अन्यथैकसाध्यादिकमन्तर्भाव्य परामर्शद्युपादानेऽ-
न्यसाध्यकानुमितावव्याप्तिः स्यादेवेति भावः । तच्चिन्त्यमिति । पू-
र्वोक्तयुक्त्या परामर्शत्वेनानुमितिहेतुत्वमेव नास्ति पक्षतायाश्च हेतु-
त्वमग्रे स्वयं निराकर्तव्यमित्यादिकमत्र चिन्ताबीजम् ॥

तत्करणमिति । न च व्याप्त्यादिज्ञानजन्यज्ञानकरणत्वेनेतरभेदसाधने व्याप्तिज्ञानत्वं तादात्म्यसम्बन्धेन व्याप्तिज्ञानमेव वा गमकं व्याप्तेरननुगमेऽपि अधिकस्य भागासिद्धवारणमात्रप्रयोजनत्वादिति वाच्यम्। फलोपहितस्य लक्ष्यतया व्याप्तिज्ञानत्वादेरतिप्रसक्तत्वात्।करणत्वनिष्ठव्याप्तेस्तादृशज्ञानत्वत्वाद्यनवच्छेद्यत्वात्।व्यतिरेकव्याप्तेर्गमकतया वैयर्थ्यशङ्कानवकाशाच्चेति॥

---

न चेति। वाच्यमित्यग्रिमेणान्वयः । व्याप्तिज्ञानत्वमिति । व्याप्तिप्रकारकज्ञानत्वमित्यर्थः।न च परामर्शजन्यज्ञानकरणत्वरूपेऽनुमानलक्षणे व्याप्तिज्ञानत्वत्वेन तस्याप्रवेशान्न वैयर्थ्यमिति वाच्यम्। व्याप्तिप्रकारकनिश्चयत्वावच्छिन्नकारणताघटितनिरुक्तस्तद्घटितमूर्तिकत्वात्। व्यापकताविशेषात्मनः कारणत्वस्य तादृशनिश्चयत्वत्वेन निश्चयत्वग्रहं विना दुर्ग्रहत्वादिति भावः । तादृशनिश्चयवदन्यावृत्तितत्कत्वरूपव्याप्तेः कारणताघटकत्वं त्वाह व्याप्तिज्ञानमेवेति । व्याप्तिप्रकारकज्ञानमेवेत्यर्थः। ननु साध्यादिभेदेन व्याप्तेर्विभिन्नतया व्याप्तिज्ञानत्वादिकमनुमानमात्रस्य पक्षत्वे भागासिद्धमतो व्याप्तिविशिष्टज्ञानजन्यवृत्त्यनुभवत्वव्याप्यजातिमत्करणत्वं हेतुः कर्तव्यमत आह व्याप्तेरिति । अधिकस्य तादृशजातिमत्करणत्वस्य । भागासिद्धीति। तथा च व्यभिचारावारकत्वाद्वैयर्थ्यमिति भावः॥ फलेति । अनुमितिरूपं यत्फलं तदुपधायकस्यैव लक्ष्यतया स्वेतरभिन्नत्वेन ज्ञाप्यतया व्याप्तिज्ञानत्वस्यानुमित्यनुपधायकवृत्तित्वेन व्यभिचारित्वान्न हेतुत्वमतस्तादृशजातिमत्फलोपहितकरणत्वमेव हेतूकृतमिति भावः॥ स्वरूपयोग्यस्य लक्ष्यत्वेऽपि न क्षतिरित्याशयेनाह करणत्वेति। तथा च धर्मिभेदान्न वैयर्थ्यमिति भावः ॥ ननु [अनुमिति]करणत्वं करणतावच्छेदको धर्मः स च प्रकृते व्याप्तिज्ञानत्वमेवेति न धर्मिभेदसंभव इत्यत आह व्यतिरेकेति। व्यतिरेकिस्थले साध्याभावस्यैव हेत्वभावव्याप्यताग्रहान्न वैयर्थ्यशङ्केति भावः॥

अथ अनुमानस्वरूपम् ।

## तच्च लिङ्गपरामर्शो न तु परामृश्यमानं लिङ्गमिति वक्ष्यते ॥

---

अथ अनुमानस्वरूपम् ।

लिङ्गस्य नित्यत्वेऽप्यनुमितिकरणस्य स्वरूपतः प्रत्यक्षोपजीवकत्वं व्यवस्थापयन्नाह तच्चेति। अनुमितेर्ज्ञानाकरणकज्ञानत्वेन प्रत्यक्षमितिमध्यनिवेशे तत्करणस्यापि प्रत्यक्षप्रमाणान्तर्भावः स्यादिति तन्निरस्यति तच्चेत्यपि कश्चित् ॥

---

अथ अनुमानस्वरूपम् ।

तच्चेत्यादि मूलस्य लक्षणपरीक्षयोरनुपयोगादन्यथा तदुत्थापयति लिङ्गस्येति । अनित्यलिङ्गानामदृष्टादिद्वारा कदाचिदिन्द्रियोपजीवकत्वसंभवान्नित्यत्वेपीति पर्यन्तमनुसृतम् । अनुमितिकरणस्य तत्सामान्यस्य । ज्ञानेति ॥ ज्ञानाकरणकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वमर्थः । तेन विशिष्टवैशिष्ट्यादिप्रत्यक्षे नाव्याप्तिः । साक्षात्कारत्वादिस्वरूपलक्षणान्तरस्य ज्ञानहेतुकस्यैवातिरिक्तानुमानस्य च संभवादेवं युक्तमित्यस्वरसेन कश्चिदित्युक्तम् । ननु तादृशजातिमत्करणत्वहेतुनेतरभेदसाधने जातिमदन्तभागो व्यर्थः चक्षुरादेरप्यनुमानतया करणत्वमात्रस्यैव हेतुत्वसंभवादित्यतस्तच्चेत्यादिमूलमिति नव्याः । केचित्तु लिङ्गस्य करणत्वे जगत एवानुमानतया तदितराप्रसिद्ध्या कथमुक्तलक्षणस्येतरभेदानुमापकत्वमतस्तच्चेत्यादीति प्राहुः । तच्चिन्त्यम् । कार्यमात्रं प्रत्यकारणपारिमाण्डल्यादावेवानुमितिकारणेतरत्वस्य प्रसिद्धिसौलभ्यादाचार्यमतेपि तद्धेतुकानुमितौ परामर्शस्यैव कारणत्वादिति दिक् ॥

---

( १ ) ज्ञानकरणकावृत्त्यनु' ( २ ) इदमनवधानमूलकम् ।

अथ अनुमानप्रामाण्यम् ।

अथानुमानं न प्रमाणं योग्योपाधीनां योग्यानुपलब्ध्याभावनिश्चयेऽप्ययोग्योपाधिशङ्कया व्यभिचारसंशयात् शतशः सहचरितयोरपि व्यभिचारोपलब्धेश्च लोके धूमादिदर्शनानन्तरं वह्न्यादिव्यवहारश्च सम्भावनामात्रात् संवादेन च

---

अथ अनुमानप्रमाण्यम् ।

अनुमानप्रामाण्यं परीक्षितुं चार्वाकमतमुत्थापयति अथेति। अनुमानमनुमानत्वेनाभिमतं धूमादिज्ञानम् असत्ख्यात्युपनीतमनुमानमेव वा। संवादेन संवादाभिमानेन। सम्भावितस्यासतोऽनुगताकारस्य परमार्थसत्स्वलक्षणमात्रसाक्षिणाध्यक्षेणानुल्लेखात् अध्यक्षमूलकविकल्पोल्लिखितत्वाद्वा संवादः। अनुमानाप्रमाण्ये च

---

अथ अनुमानप्रमाण्यम् ।

बौद्धस्यानुमानत्वाप्रसिद्ध्या तादृप्येण पक्षत्वासंभवाद्व्याचष्टे अनुमानत्वेनेति । अनुमानत्वाप्रसिद्ध्या तदभिमतत्वमपि तथैत्यतो विशिष्याह धूमेति । अनुमानशब्दस्य लाक्षणिकत्वापत्तेः कल्पान्तरमाह असदिति । पारमार्थिके धूमादिज्ञानेऽसतोनुमानत्वस्य संबन्धायोगात् अनुमितिकारणत्वविशिष्टस्यालीकान्तरस्यैवासत्त्वमिति भावः ॥ निर्विकल्पकसमानविषयकत्वरूपसंवादस्य संभावनायामसंभवादाह संवादाभिमानेनेति ॥ संवादासंभवे बीजमाह संभावितस्येति । असत इत्यत्रैव हेतुरनुगताकारस्येति। वह्नित्वाद्यनुगतधर्मवत इत्यर्थः । अध्यक्षेणानुगताकारस्यानुल्लेखे

(१) 'मानाप्र' 'मित्यप्र'

प्रामाण्याभिमानादिति नाप्रत्यक्षं प्रामाण्यमिति । न । अप्रमाणसाधर्म्येणाप्रामाण्यसाधने दृष्टसाधर्म्यस्यानुमानत्वात् । एतद्वाक्यस्य सन्दिग्धविपर्यस्तान्यतरं प्रत्यर्थवत्त्वात् । तयोश्च परकीययो-

---

तन्मूलकसमयनिर्णयाद्यधीनप्रवृत्तिकयोः शब्दोपमानयोः सुतरामप्रमाण्यान्नाप्रत्यक्षं प्रमाणमित्याह इतीत्यादि ॥ अप्रमाणसाधर्म्येण प्रमाणताप्रयोजकरूपशून्यत्वेन दृष्टसाधर्म्यस्य

---

हेतुगर्भविशेषणमाह परमार्थेत्यादि । परमार्थसत्त्वमेव लक्षणं व्यावर्तकं यस्य तन्मात्रसाक्षिणेत्यर्थः । परेषामभेदेनैव धर्मधर्मिभावादिति भावः ॥ विकल्पद्वयेऽपि परस्परसंवादव्यवहारात्प्रकारान्तरेण संवादपदार्थं निरुच्याह अध्यक्षेत्यादि । संभावितस्य [इत्यर्थ इ]-त्यनुषज्यते । तथा च संभावितस्याध्यक्षमूलकविकल्पोल्लिखितत्वादध्यक्षमूलकविकल्पविषयकत्वरूपः संवादः संभावनायामस्त्येवेति भावः । विकल्पसमानविषयकत्वस्यानादिवासनामूलके शशशृङ्गादिविकल्पेऽतिप्रसक्तत्वादध्यक्षमूलकत्वेन विकल्पो विशेषितः ॥ समयादीनां ज्ञानमात्रस्योपयोगे तत्संभावनासहकारेणैव शब्दादेः प्रामाण्यं स्यादत उक्तं निर्णयेति । आदिना तात्पर्यनिर्णयादेः परिग्रहः ॥ अप्रमाणसाधर्म्येण हेतुतायां चक्षुरादौ व्यभिचारादाह प्रमाणतेति । न चेन्द्रियत्वमिव व्याप्तिनिश्चयत्वमपि प्रमाणताप्रयोजकम् अतस्तत्सामान्यशून्यत्वं पक्षे स्वरूपासिद्धमिति वाच्यम् । योग्योपाधीनामित्यादिग्रन्थोक्तक्रमेण क्वचिदपि व्याप्तिनिश्चयस्यासम्भवेन तत्त्वस्य प्रमाणताप्रयोजकत्वासंभवादिति भावः ॥

---

(१) 'तात्पर्यादेः'

रप्रत्यक्षत्वात् । अनुमानमप्रमाणमिति वाक्यस्य प्रामण्याप्रामाण्ययोर्व्याघातश्च । अपिचानुमाना- प्रामाण्ये प्रत्यक्षस्याप्यप्रमाणत्वापत्तिः। प्रामाण्य-

---

साधर्म्यदर्शनस्य वा ॥ नन्वभिहितमेव साधर्म्यदर्शनं सम्भा- वनां भावयति सम्भावनेनैव च बहुशो व्यवहारहेतुरित्यत आह अनुमानमिति । ननु न वयमापाततो भ्रमजनकत्वलक्षणमप्रा- माण्यं निरूपयामो येन भ्रमस्य विषयबाधाधीनतया प्रामाण्यं सम्भाव्येतापि परन्तु प्रमाकरणत्वव्यतिरेकमत आह अपि चेति ॥ स्वत इति। न चानुगताकारासंस्पर्शिनि परमार्थसत्स्वलक्षणसाक्षि- णि स्वसंवेदनसंविदितप्रामाण्ये निर्विकल्पकज्ञाने नाप्रामाण्यं मन्दिह्यते परन्तु तदुत्तरभाविनि समुल्लिखितालोकानुगताकारे

---

मणिकृता लिङ्गस्यानुमानत्वनिरासात्तन्मते पूरयति साधर्म्यदर्शन- स्येति ॥ अभिहितमेवेत्येवकारः संभावनामित्यनन्तरं योज्यः । तथा चाभिहितं यत्साधर्म्यदर्शनं प्रमाणताप्रयोजकरूपशून्यत्वदर्शनरूपं त- त्संभावनमनुमानेऽप्रामाण्यस्य संभावनामेवोत्पादयति न त्वनुमितिम् । यतोनुमानेनैव तदप्रामाण्यसाधने व्याघातः स्यादिति भावः । बहुश इति । तथा च परकीयसंदेहादिकमपि संभाव्यैव तदुच्छेदाय शब्दः प्रयोक्तव्य इति न द्वितीयोपि दोष इति भावः ॥ यावदसत्ख्या- तिर्न व्यवस्थाप्यते तावदेव भ्रमजनकत्वरूपमप्रमाण्यं नोच्यते तस्याः सिद्धौ तु भ्रममात्रस्यैवासत्ख्यातिरूपत्वादनुमानं न प्रमाणमिति वाक्यस्य भ्रमजनकत्वसिद्धावप्यनुमानस्य न प्रामाण्यसिद्धिरित्या- शयेनोक्तमापातत इति ॥ न चेति । वाच्यमिति परेणान्वयः ।

---

(१) 'तस्मात्'

स्यानुमेयत्वात् । स्वतश्च प्रामाण्यग्रहे तत्संश-
यानुपपत्तेः ॥

व्याप्तिग्रहोपायश्च वक्ष्यते ।

---

सविकल्पक एवेति वाच्यम् । निर्विकल्पकस्य सन्मात्रावलम्बन-
त्वसविषयत्वप्रामाण्यावगाहित्वानामनुमानाधीनसिद्धिकत्वात् ॥

सर्वमिदं सति व्याप्तिनिश्चये स्यात् स एव तु न संभवत्युपाया-
भावादित्यत आह व्याप्तीति ॥

---

सन्मात्रावलम्बनत्वम् सदन्याविषयकत्वम् प्रामाण्यावगाहित्व [स-
द्विषयकत्वावगाहित्वम्] न च सन्मात्रावलम्बनत्वादेरपि स्वानतिरि-
क्तत्वादनेनैव स्वग्रहसंभवः । तस्यास्तद्घटितमूर्तिकत्वेनातिरिक्त-
त्वात् । संभावनया चाध्यक्षनिष्ठस्य सन्मात्रावगाहित्वाद्ग्रहे तेषा-
मप्रामाणिकत्वापत्तेः । संभावनामात्रस्यैवाप्रमात्वादिति भावः ॥

[ इदम् अनुमानप्रामाण्यदूषणादिकम् । व्याप्तिनिश्चये सतीति ।
व्याप्ति निश्चयत्वं प्रमाणताप्रयोजकरूपम् । तच्छून्यत्वं पक्षे नास्तीति
स्वरूपासिद्ध्यानुमानप्रामाण्यं न साधयितुं शक्यत इति भावः ॥ ]

[3]इति जगदीशतर्कालंकारविरचितानुमितिदीधितिटिप्पणी ॥

(१) 'त्वात् स्वतन्त्रे ग्रह' (२) 'च साध्यनि' (३) इति श्रीजगदीशतर्कालङ्कारभट्टाचार्यविरचितायामनुमानदीधितिटीकायामनुमानप्रामाण्यादि समाप्तम् ॥

—:0:—

## चिन्तामणेः पञ्चलक्षणप्रकरणम् ॥

नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः । न ताव-दव्यभिचरितत्वम् । तद्धि न साध्याभाववदवृत्तित्वं साध्यवद्भिन्नसाध्याभाववदवृत्तित्वं साध्यवत्प्रतियोगिका-

---

## शिरोमणिकृतदीधित्याः पञ्चलक्षणप्रकरणम् ॥

समारब्धानुमानप्रामाण्यपरीक्षणकारणीभूतव्याप्तिग्रहोपाय-प्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते नन्वित्यादिना ॥ साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाश-ङ्क्याह साध्यवद्भिन्नेति । साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृ-

---

## जागदीश्याः पञ्चलक्षणप्रकरणम् ॥

समारब्धेति । समारब्धं यदनुमानप्रामाण्यपरीक्षणं तत्कार-णीभूतं यद्व्याप्तिग्रहोपायप्रतिपादनं तन्निदानं व्याप्तिस्वरूपनिरूप-णमित्यर्थः । तथा च प्रामाण्यव्यवस्थापनोपोद्घातसङ्गत्या व्याप्ति-स्वरूपनिरूपणमिति भावः ॥ अव्याप्यवृत्तीति । कपिसंयोगी एतद्वृ-क्षत्वादित्यादावव्याप्तिरित्यर्थः । इदं च येन रूपेण येन सम्बन्धेन च साध्यत्वं तदवच्छिन्नप्रतियोगिताकसाध्याभावस्य प्रवेशमाहत्य । अ-न्यथा तु व्याप्यवृत्तिसाध्यकस्थलेपि विशिष्टाभावादिकमादाय दोषो बोध्यः। अव्याप्यवृत्तिसाध्यकेप्याकाशादिहेतावव्याप्त्यभावादाह स-द्धेताविति। वृत्तिमद्धेतावित्यर्थः॥ ननु साध्यवद्भिन्नो यः साध्याभाववा-नित्यर्थे साध्याभाववत्पदवैयर्थ्यं साध्यवद्भिन्नावृत्तित्वस्यैव सम्य-

त्तित्वमर्थः । कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह

---

क्त्वात् न चावृत्तित्वेन समं साध्यवद्भिन्नस्यान्वयाविवक्षणात्साध्याभाववता सममेव तादात्म्येनान्वयविवक्षणान्न वैयर्थ्यमिति वाच्यम् तथा सति साध्यवद्भिन्नात्मको यो मतुबर्थः सम्बन्धी तदवृत्तित्वस्यैव सम्यक्त्वेन साध्याभावपदव्यर्थताध्रौव्यात् अतः सप्तमीसमासं समर्थ्य व्याचष्टे साध्यवद्भिन्न इति । तथा च साध्यवद्भिन्नस्यावृत्तावनन्वयाद्यथासन्निवेशे न वैयर्थ्यम् । साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणं त्वव्याप्यवृत्तिसाध्यकसङ्ग्रहार्थमेवेत्याशयः । साध्यवद्भिन्नवृत्तिद्रव्यत्वादिमति धूमादेः सत्त्वादव्याप्तिरसम्भवो वा स्यात् अतः साध्याभावेति । न च कपिसंयोगी एतद्वृक्षत्वादित्यादेः सङ्ग्रहार्थमधिकरणभेदेनाभावभेदमादायैव लक्षणमिदं कार्यम् तथाच साध्यवद्भिन्ने योभावस्तद्वदवृत्तित्वमित्यस्यैव सम्यक्त्वात्साध्य पदं व्यर्थमिति वाच्यम् प्रतियोगितासंसर्गेण साध्यीयत्वेनैव साध्याभावस्य प्रवेशः न त्वभावत्वेनापीति तद्वैयर्थ्यशङ्कानवकाशात् । वस्तुतस्तु स्वप्रतियोगितावच्छेदकसंसर्गेण साध्यवद्भिन्ने वर्तते यः साध्यतावच्छेदकसम्बन्धेन साध्यीयोऽभावस्तद्वदवृत्तित्वमर्थः । तथा च साध्यतावच्छेदकसम्बन्धेन साध्यीयत्वार्थकस्य साध्यपदस्यानुक्तौ स्वप्रतियोगितावच्छेदकीभूतसमवायादिसंसर्गेण वह्न्यादिमतोऽन्यस्मिन्पर्वतादौ वर्तते यः समवायसम्बन्धाद्यवच्छिन्नवह्न्यभावस्तद्वति धूमादेः सत्त्वादव्याप्तिः स्यादतस्तदुपात्तमिति नव्याः । केचित्तु व्याप्यवृत्तित्वाव्याप्यवृत्तित्वादिरूपविरुद्धधर्माध्यासात्संयोगाद्यभावस्यैव द्रव्यगुणाद्यधिकरणभेदेन भेदो न तु गगनाद्यभावस्यापि मानाभावात् तथा च साध्यवद्भिन्नगगनाद्यभाववति धूमादेः सत्त्वादव्याप्तिरतः साध्यपदमित्याहुः । तन्मन्दम् । गुणे गगनाद्यभावे गुणत्वादिसामानाधिकरण्यं न तु द्रव्ये गगनाद्यभावे तथात्वमित्यादिप्रतीत्या गगनाद्यभावस्यापि गुणत्वसामानाधिकरण्यतदभावयोर्विरुद्धधर्मयोः सम्भवादिति दिक् । न च घटत्वघटाकाशसंयोगान्यतरत्वावच्छिन्नाभाववान् गगनत्वादित्यत्राव्याप्तिः साध्यवद्भिन्ने घटे वर्ते-

न्योन्याभावासामानाधिकरण्यं सकलसाध्याभाववन्निष्ठा-

साध्यवदिति । हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह सकलेति। साकल्यं साध्याभाववति साध्ये च बोध्यम्। साध्याभावो

मानस्य गगनघटसंयोगात्मकस्य साध्याभावस्याधिकरणे गगनत्वहेतोः सत्त्वादिति वाच्यम्। अभावाभावस्यातिरिक्ततामते एवैतल्लक्षणकरणादिति भावः॥भिन्नत्व इति ।द्रव्यनिष्ठसंयोगाभाववतो भिन्नत्वे इत्यर्थः । मानाभावादिति । तथा चात्राव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरिति भावः ॥ हेतोरिति । न च साध्यवत्प्रतियोगिकान्योन्याभावस्य केवलान्वयित्वादसम्भव एव वक्तुमुचितो नाव्याप्तिरिति वाच्यम् । वह्निमान् गगनादित्यत्र अवृत्तिगगनादिहेतौ लक्षणसम्भवात् । तस्यापि सद्धेतुतायाः स्वयं वक्ष्यमाणत्वादिति भावः । साध्यपदस्य सिद्धिकर्मतत्तद्व्यक्तिपरतया तत्तद्व्यक्त्यवच्छिन्नान्योन्याभावासामानाधिकरण्यरूपपर्यवसितार्थस्य द्रव्यं पृथिवीत्वादित्यादावेव लक्षणसम्भवाद्गन्धवती पृथिवीत्वादित्यादावव्याप्तिकथनमित्यपि वदन्ति ॥ ननु सकलस्य साध्यप्रतियोगिकाभावस्याधिकरणाप्रसिद्ध्या व्यभिचारिण्यतिव्याप्तिवारणार्थं यदि साध्याभावस्य विशेषणं साकल्यं तदा वह्निमान्धूमादित्यादिसद्धेतावव्याप्तिः तत्रापि तत्तद्विपक्षावृत्तित्वावच्छिन्नाभावरूपस्य तत्तत्सपक्षवृत्तित्वावच्छिन्नाभावरूपस्य वा साध्यप्रतियोगिकाभावस्तोमस्याधिकरणाप्रसिद्धेरत आह साकल्यं साध्याभाववतीति। तथा च साकल्यं न साध्याभावविशेषणमतो नाप्रसिद्धिरिति भावः [केचित्तु ननु धूमवान् वह्नेरित्यादिव्यभिचारिण्यतिव्याप्तिः साध्याभाववद्यत्किञ्चिन्निष्ठाभावप्रतियोगित्वादत आह साध्याभाववतीत्याहुः]॥नन्वेवमपि साध्याभाववन्निखिलान्तर्गते महानसादौ वर्तमानस्याभावस्य प्रतियोगित्वं धूमादौ नास्तीत्यव्याप्तितादवस्थ्यमत आह साध्ये चेति । तथा च सपक्षो महानसादिर्न सकलसाध्यस्याभाववान् इत्यदोषः ।प्राञ्चस्तु व्यभिचारिण्यतिव्याप्ति-

वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः । न वा नानाव्यक्तिसाध्यकसद्धेताव्याप्तिः । अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् । हेत्वभावोऽपि

---

वारणार्थं साध्याभाववति यावत्त्वविशेषणे दत्ते एव साध्ये यावत्त्वमव्याप्तिवारकतया सार्थकं भवतीत्यतः साध्याभाववत्येव साकल्यं प्राग्योजयति साकल्यमित्यादिनेत्यवतारयन्ति। तन्मन्दम्।साध्याभाववति साकल्यानुक्तावप्यतिव्याप्तिवारकतयैव साध्ये साकल्यविशेषणस्य प्रथमतः सार्थक्यसम्भवात् । अन्यथा गगनावृत्तिधर्मवान् द्रव्यत्वादित्यादौ पटत्वादिलक्षणतत्तत्साध्यव्यक्त्यभाववद्गुणादिनिष्ठाभावप्रतियोगिनि द्रव्यत्वादावतिप्रसङ्गादिति ध्येयम् [इत्थं च प्रथमतः साध्ये साकल्यविशेषणोपादाने गुणत्वादेरपि संग्रहात्तदभाववान्न गुणादिः किं तु गगनमात्रं तत्र हेतोर्वृत्तित्वान्नातिव्याप्तिः]॥ ननु साध्यवत्यपि द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य सकलसाध्यप्रतियोगिकाभावस्य सत्त्वादसम्भवः किं च सकलपदोत्तरनाम्ना सकलसाध्यप्रतियोगिकाभाववतोनुपस्थापनात्तेन समं सकलपदस्य कर्मधारयोप्यनुपपन्न इत्यत आह साध्याभावो वेति । तथा च साध्याभाववत्येव साकल्यं देयम् । न तु साध्येपीति भावः ॥ साध्याभाववति साकल्यप्रयोजनमाह तेनेति । विपक्षैकदेशः कश्चिद्विपक्षः॥ साध्यनिष्ठसाकल्यस्य साध्यतावच्छेदकावच्छिन्नाभावस्य वा विवक्षायाः फलमाह न वेति । एकव्यक्तिसाध्यके सकलसाध्योक्तावप्यव्याप्तिरग्रे स्थास्यतीत्याशयेन नानेत्युक्तम् [न चैकव्यक्तिसाध्यकस्थलेपि द्वित्वाद्यवच्छिन्नाभावमादायासम्भव एव सम्भवति न त्वव्याप्तिरिति वाच्यम् । व्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणेनैव तद्वारणसम्भवात्] ॥ अव्याप्यवृत्तीति । कपिसंयोग्येतत्त्वादित्यादावित्यर्थः । यद्यप्यग्रे हेत्वभावस्यापि प्रतियोगि-

प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः। तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यम्। तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः। न वा विशिष्टसत्तात्वादिना तादृशाभाव-

---

वैयधिकरण्यावच्छिन्नस्यैव निवेशः करणीय इत्यव्याप्यवृत्तिहेतावव्याप्तिः सम्भवति। तथापि यथाश्रुतमूलस्य न तत्राव्याप्तिरित्यावेदयितुं व्याप्यवृत्तिहेतूक्तिः। व्यभिचारिणीति। एतद्वृक्षत्ववान् कपिसंयोगादित्यादावित्यर्थः। अभावद्वय इति। साध्याभावे हेत्वभावे चेत्यर्थः। अत्र च साध्याभावे प्रतियोगिवैयधिकरण्यं साध्यताघटकसम्बन्धेन प्रतियोगिनो यदनधिकरणं तद्वृत्तित्वम्। तेन धूमाद्यभाववतोप्ययःपिण्डादेः कालिकादिसम्बन्धेन धूमादिमत्त्वेपि नातिव्याप्तिः। हेत्वभावे प्रतियोगिवैयधिकरण्यं तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वघटितं वाच्यम्। तेनायमात्मा ज्ञानादित्यादौ साध्याभाववतो घटादेर्विषयतया हेत्वभावप्रतियोगिमत्त्वेपि नाव्याप्तिः॥ हेत्वभावोपीति। अपिना साध्याभावसमुच्चयः। तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः। यद्यपि साध्याभावोपीत्येव क्रमानुरोधाद्वक्तुमुचितम्। अपिशब्दादेव हेत्वभावस्य लाभसम्भवात्। तथापि तत्प्रतियोगित्वं चेत्यग्रेतनतत्पदेनानिर्दिष्टहेत्वाभावपरामर्शासम्भवाद्धेत्वाभावप्रतियोगित्वं चेत्यभिधाने च ग्रन्थगौरवं स्यादितीत्थमभिधानम्। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगीति। प्रतियोगिपदं प्रतियोगितावच्छेदकताघटकसम्बन्धेनावच्छेदकस्य वैशिष्ट्यलाभाय। तेन ह्रदादौ कालिकादिसम्बन्धेन धूमत्वाद्यवच्छिन्नस्य काष्ठादेः संयोगसम्बन्धेन सत्त्वेपि नाव्याप्तिः॥ तत्प्रतियोगित्वं हेत्वभावप्रतियोगित्वम्। हेतुतावच्छेदकरूपेणेति। हेतुतावच्छेदकसम्बन्धेनेत्यपि बोध्यम्। तेनात्मभिन्नं द्रव्यत्वादित्यादौ साध्याभाववत्यात्मनि वर्तमानस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्य कालिकादिसम्बन्धावच्छिन्नद्रव्यत्ववत्त्वावच्छिन्नाभावस्य प्रतियोगित्वेपि द्रव्यत्वस्य नातिव्याप्ति। न च हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्योक्त्यैवातिव्याप्तिवारणसम्भवात्

भावप्रतियोगित्वं साध्यवदन्यावृत्तित्वं वा । केवलान्वयिन्यभावात् ॥

---

प्रतियोगिनि सत्तादावतिप्रसङ्गः। यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिस्तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह साध्यवदिति। अत्रान्योन्याभावस्य साध्यतत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम्। नहि भवति नीलो घटो घटान्य इति ॥

---

हेतुतावच्छेदकसम्बन्धेन प्रतियोगित्वविवक्षा व्यर्थेति वाच्यम् । तथा सति निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ निर्वह्नित्वभेदमादायैव लक्षणसम्भवे निर्धूमत्वव्याप्येत्याद्युत्तरग्रन्थे वक्ष्यमाणाव्याप्त्यलग्नकतापत्तेरिति ध्येयम् ॥ हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यविवक्षायाः फलमाह तेन द्रव्यत्वादाविति । अन्यथा साध्याभाववति गुणादौ विशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणत्वादव्याप्तिरेव स्यादिति भावः। अत्र द्रव्यत्वस्य साध्यतायां सकलसाध्याप्रसिद्ध्याऽव्याप्तेरुक्तविवक्षयाप्यप्रतीकारादादिपदम् । तेन गुणवत्त्वादिसाध्यस्योपसङ्ग्रहः।द्रव्येतरासमवेतमात्रं वा प्रकृते द्रव्यत्वमिति ध्येयम् ॥ हेतुतावच्छेदकरूपेण हेत्वभावप्रतियोगित्वविवक्षायाः फलमाह न वेति । सत्त्वादाविति। द्रव्यत्वादौ साध्ये इत्यनुवर्तते॥ यत्रैकव्यक्तिकमिति । तथा च द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः तत्र सकलसाध्याप्रसिद्धेरित्यर्थः । नन्वितोऽप्यस्वरसात्साध्यसामान्याभावस्यैव निवेशितत्वात्साध्ये साकल्यं न देयमेवेत्यत आह विपक्षो वेति । एकव्यक्तिक इत्यनुषज्यते । तथा च यत्रैकव्यक्तिरेव साध्याभाववती तत्र गगनावृत्तिधर्मवान् गगनान्यत्वादित्यादावव्याप्तिः।साध्याभाववतः साकल्याप्रसिद्धेरित्यर्थः । ननु साध्यादिभेदेन व्याप्तेर्भेदाद्यत्रैक एव विपक्षस्तत्रत्यलक्षणे साध्या-

भाववति साकल्यविशेषणं न देयमशेषत्वरूपं वा साकल्यं निवेश्य-मतो दोषान्तरमाह निर्धूमत्वव्याप्य इति । निर्धूमत्वस्य साध्यत्वे यत्रैकव्यक्तिकमित्यनेनैव गतार्थता स्यादतो व्याप्यपर्यन्तम् । निर्धूमत्वव्याप्यस्याऽपि स्नेहादेः स्नेहत्वादिना साध्यत्वे वह्न्यभावस्य व्यभिचारित्वादसङ्ग्रहो न दोषायेत्यत उक्तम् तत्त्वेन साध्ये इति । निर्धूमत्वव्याप्यत्वेन साध्य इत्यर्थः । प्रत्येकमिति । तथा च हेत्वभावस्य महानसीयवन्हेः साध्याभाववत्सकलान्तर्गतपर्वताद्यवृत्तित्वादव्याप्तिरिति भावः । अत्र निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ तु नैष दोष इति ध्येयम् ॥ ननु साध्यवत्प्रतियोगिकान्यत्वस्य धूमादिमति सत्त्वादव्याप्तिरत आह अत्रेति । तथा च साध्यवत्पदेन निरूढलक्षणयोपस्थापितस्य साध्यतावच्छेदकविशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकस्यान्यपदार्थैकदेशेऽन्यत्वे तादात्म्येनान्वयात्साध्यवति च विशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदासत्त्वान्नाव्याप्तिः गुरुधर्मस्यावच्छेदकत्वोपगमाच्च द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्वत्वविशिष्टद्रव्यत्वावच्छिन्नभेदाप्रसिद्ध्या नाव्याप्तिरिति भावः ॥ तद्धर्मविशिष्टबोधकपदसमभिव्याहृतेनान्यादिपदेनोपस्थापितेन्यत्वादौ तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैव तादात्म्येनान्वयो न तु तद्धर्माश्रयप्रतियोगिताकत्वेनेत्यत्र व्युत्पत्तौ प्रमाणमाह न हीति । तथा च तादृशव्युत्पत्त्यस्वीकारे नीलघटे घटप्रतियोगिकभेदसत्त्वान्नीलो घटो घटान्य इत्यपि व्यवहारः स्यादिति भावः । अत्र च द्रव्यं घटान्यदित्याद्यप्रयोगात् यन्निष्ठप्रतियोगिताकत्वेनान्यादिपदेन भेदो बोध्यते तदवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वात् तत एव घटो घटान्य इत्यस्य वारणसम्भवात् नीलघटत्वस्यानुयोगितावच्छेदकत्वपर्यन्तानुधावनमिति मन्तव्यम् । नीलो घटो घटान्य इत्येव सम्यक् पाठः । तथैव प्रकृतोपयोगित्वसङ्गतेः । घटादन्य इति पाठस्तु साध्यवदन्येत्यत्र पञ्चमीसमासे लुप्तविभक्तिस्मारितप्रतियोगित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वस्य संसर्गमर्यादया भानमादृत्य कथं चित्सङ्गमनीयः । घटः पटो नेत्यादौ तु पटपदं मुख्यार्थपरमेव न तु प्रकृत इव पटत्वावच्छिन्नप्रतियोगिताकपरम् । निपातातिरिक्तस्थले एव नामार्थयोर्भेदा-

न्वयस्याव्युत्पन्नतया नञोपस्थापिते भेदे पटत्वावच्छिन्नप्रतियो- गिताकत्वसंसर्गेणैव पटस्यान्वयसम्भवात्। पटत्वावच्छिन्नप्रतियो- गिताकत्वं तु पटत्वमवच्छिन्नत्वं प्रतियोगित्वं चेति त्रितयमेव वि- शेष्यविशेषणभावापन्नं संसर्गः। न तु वस्तुगत्या पटत्वावच्छिन्नं य- त्प्रतियोगित्वं तन्मात्रम्। पटो नेत्यत्र पटत्वावच्छिन्नत्वस्याप्यनुभव- सिद्धत्वात्।अन्यथा प्रतियोगिताव्यक्तिभिरेव तत्तद्विशिष्टबुद्ध्युपपत्तौ पटत्वादेस्तदवच्छेदकत्वमेव न स्यात्।मानाभावात्।अत एव केवला- न्वयिग्रन्थे वह्निर्नास्तीत्यत्र वह्नित्वं तदवच्छिन्नत्वं प्रतियोगित्वं च संसर्गमर्यादया भासत इति स्वयमप्युक्तम्।इत्थमेव च प्रमेयं नास्ति कम्बुग्रीवादिमान्नास्तीत्यादिशाब्दबोधानां संसर्गकोटावेव प्रतियोगि- तायां प्रमेयत्वावच्छिन्नत्वावगाहितया भ्रमत्वम्। संसर्गप्रकारसाधा- रणविशेष्यविशेषणभावस्यैव भ्रमत्वघटकत्वात्। अन्यथा स्वरूपस- म्बन्धेन प्रमेयत्वाद्यवच्छिन्नप्रतियोगित्वस्यालीकतयाऽखण्डतत्स- म्बन्धेन प्रमेयस्याभावे धर्मिण्यन्वयासम्भवेन भ्रमत्वानुपपत्तेः। स- दुपरागेणाप्यसतः संसर्गमर्यादया भानस्यानङ्गीकारात्। कलृप्तेन पटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन चाभावे प्रमेयस्य सत्त्वेन ता- दृशसम्बन्धेन भ्रमत्वस्य वक्तुमशक्यत्वात्। पटत्वादेरन्वयितानव- च्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वादिविशिष्ट- स्यान्वये निराकाङ्क्षत्वाच्च। अन्यथा घटवत्यपि घटो नास्तीत्यादेः प्रमाणत्वापत्तेः। तत्तद्घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटवि- शिष्टस्य घटविशेषाभावस्य तत्र सत्त्वात्। एतेन सत्तासमवायिन्यपि गुणादौ विशिष्टसत्तात्वावच्छिन्नस्य समवायेनासत्त्ववत् घटत्वाव- च्छिन्नप्रतियोगित्वसम्बन्धेन घटत्वावच्छिन्नवतोपि घटाद्यभावस्य न तादृशसम्बन्धेन प्रमेयत्वावच्छिन्नवत्त्वमतः प्रमेयं नास्तीत्यादौ घटत्वा- वच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वावच्छिन्नस्यैवाभावांशे भ्रम- त्वमित्यपि प्रत्युक्तम्। घटत्वादेरन्वयितानवच्छेदकतया तदवच्छिन्न- प्रतियोगितासम्बन्धेन प्रमेयत्वविशिष्टस्यान्वये निराकाङ्क्षतया तथा- शाब्दस्यासम्भवादिति ध्येयम्। नीलो घटो नास्तीत्यादौ तु नीलघ- टत्वस्यान्वयितावच्छेदकत्वे तादृशधर्मावच्छिन्नप्रतियोगित्वमेव सं- सर्गः।न तु नीलत्वघटत्वादिप्रत्येकावच्छिन्नप्रतियोगित्वम्। नीलघट- स्य पीतघटस्य चाधिकरणे तादृशप्रयोगापलापापत्तेः।नीलोपलक्षितस्य

घटत्वमात्रस्यान्वयितावच्छेदकत्वे तु घटत्वावच्छिन्नप्रतियोगित्वमेव तथा । संयोगेन घटो नास्तीत्यादौ तु तृतीयाविभक्तेर्नावच्छिन्नत्वमर्थः । संसर्गीभूतप्रतियोगितायां तदन्वयासम्भवात् । किं त्ववच्छिन्नप्रतियोगिताकत्वम् । प्रतियोगित्वमात्रं वा । अवच्छिन्नत्वसंसर्गेण संयोगादेः तत्रान्वयादेव विशिष्टलाभसम्भवात् । न चैवं संयोगेन घटाभावस्यैव समवायेन घटविशिष्टद्रव्यत्वाभावतया समवायेन कपाले घटो नास्तीति व्यवहारापत्तिः । तृतीयान्तसमभिव्याहारस्थले तदुपस्थाप्यप्रतियोगित्वस्यैव संसर्गतया व्युत्पन्नत्वात् । समवायावच्छिन्नघटप्रतियोगिताकाभावस्य च कपाले विरहात् । अस्तु वा घटत्वावच्छिन्नत्वस्येव संयोगसम्बन्धावच्छिन्नत्वस्यापि प्रतियोगित्वांशे संसर्गमर्यादयैव भानम् । तृतीयान्तसमभिव्याहारस्य नियामकत्वाच्च नातिप्रसङ्गः । घटानधिकरणं भूतलमित्यादौ तु लक्षणयाधिकरणपदमेव घटाधिकरणार्थकम् । घटपदं तात्पर्यग्राहकम् । अन्यथानधिकरणपदेनाधिकरणसामान्यभिन्नत्वोक्तौ भूतले तस्य बाधः स्यात् । न च घटान्वितस्यैवाधिकरणस्य भेदस्तत्र नञा बोधनीयः । समासान्तर्गतनञामुत्तरपदार्थमात्रान्वयित्वव्युत्पत्तेः । अन्यथा नीलाघटो घट इत्यादौ नीलघटान्यस्य घटत्वं नीलाप्रमेयः पट इत्यादौ च नीलप्रमेयान्यस्य पटत्वं प्रतीयेत । वस्तुतः ससम्बन्धिकपदस्थले व्युत्पत्तिवैचित्र्यात् प्रतियोगितानवच्छेदकं घटानधिकरणं भूतलमित्यादौ घटाद्यन्वितस्यैवाधिकरणादेर्भेदो भासते अन्यत्र त्रिपदतत्पुरुषानुपगमेऽपि घटस्य नाधिकरणं प्रतियोगिताया नावच्छेदकमित्यादिरीत्या त्रिपदतत्पुरुषेण विशिष्टलाभसम्भवादिति तु परमार्थः । पीतः शङ्खो नास्तीत्यादौ शाब्दबोधस्तु न शङ्खत्वावच्छिन्नतया प्रतियोगित्वमवगाहते तन्मात्रस्यान्वयितानवच्छेदकत्वात् । शङ्खवत्तया निश्चिते धर्मिण्यपि तादृशप्रयोगात् । परं तु पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेन संसर्गमर्यादया प्रतियोगित्वमवगाहते । नञादिपदानां यद्धर्मविशिष्टवैशिष्ट्यावगाहिस्वोपस्थाप्याभावधर्मिकान्वयबोधजनकत्वं तद्धर्मावच्छिन्नप्रतियोगितात्वेन प्रतियोगितासंसर्गकान्वयबोधजनकत्वव्युत्पत्तेः । इयांस्तु विशेषः यद्घटो नास्तीत्यादिशाब्दे सांसर्गिकी प्रतियोगित्वावगाहिता प्रसिद्धेन घटत्वावच्छिन्नप्रतियोगितात्वेन निरूपिता पीतः शङ्खो नास्तीत्यादौ तु पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेनाप्रसिद्धेनैवेत्यादिकं बहुतरमूहनीयम् ॥ इति जागदीशी पञ्चलक्षणी सम्पूर्णा ॥

## चिन्तामणेः सिंहव्याघ्रलक्षणे ॥

नापि साध्यासामानाधिकरण्यानधिकरणत्वं साध्य-

## शिरोमणिकृतदीधित्याः सिंहव्याघ्रलक्षणे ॥

नापीति । साध्यमसमानाधिकरणं यस्य यदधिकरणानधिकरणं साध्यं तत्त्वम् साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम्

## जागदीश्याः सिंहव्याघ्रलक्षणे ॥

साध्यासामानाधिकरण्यपदस्य साध्यवह्निभिन्नवृत्तित्वार्थकत्वे साध्यवैयधिकरण्यंत्याद्युत्तरलक्षणेन पौनरुक्त्यापत्तिरतो व्याचष्टे साध्यमसमानाधिकरणं यस्येति। तत्त्वमिति परेणान्वयः। वह्निमात्रस्यैव व्यधिकरणतत्तद्धूमसमानाधिकरणत्वात् वह्निमान्धूमादित्यादावव्याप्तेराह यदधिकरणेति । यदधिकरणमनधिकरणं यस्येति व्युत्पत्त्या यस्याधिकरणं साध्यानधिकरणं तत्त्वमित्यर्थः । तत्तद्धूमाधिकरणन्तु न वह्निसामान्यानधिकरणमतो नाव्याप्तिरिति भावः । ननु घटादिस्वरूपयत्किञ्चिद्व्यक्त्यधिकरणं साध्यीभूतधूमाद्यनधिकरणं तद्व्यक्तित्वानधिकरणत्वं वह्न्यादेरप्यतो धूमवान्वह्नेरित्यादावतिव्याप्तिः यद्यद्व्यक्त्यधिकरणं साध्यानधिकरणं तत्तद्व्यक्तित्वानधिकरणत्वोक्तौ तु महागौरवमत आह साध्यनिष्ठेति । साध्यनिष्ठाभावप्रतियोगित्वं सद्धेतोरप्यस्तीत्यतः सामानाधिकरण्याभाव उक्तः । न च साध्यनिष्ठस्य सामानाधिकरण्याभावस्य प्रतियोगित्वं सामानाधिकरण्य एव न तु वह्न्यादावित्यसद्धेतावतिव्याप्तिः । साध्यनिष्ठाभावप्रतियोगिवृत्तित्वनिरूपकाधिकरणवृत्तित्वस्य विवक्षितत्वात् । वस्तुतः असामानाधिकरण्यं सामानाधिकरण्यसम्बन्धेनाभाव इति प-

वैयधिकरण्यानधिकरणत्वं वा । तदुभयमपि साध्यान-

---

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत् तदन-
धिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूप-
कत्वात्तद्वृत्तौ नातिप्रसङ्गः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरण-
त्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः ।

---

रमार्थः । [तदनधिकरणत्वमित्यत्राधिकरणत्वं स्वाश्रयाधिकरणत्व-
सम्बन्धेन ग्राह्यम् तेन सामानाधिकरण्याभावप्रतियोगित्वस्य सा-
मानाधिकरण्यमात्रनिष्ठतया साक्षात्सम्बन्धेन तदनधिकरणत्वस्य
व्यभिचारिसामान्ये सत्त्वेपि नातिव्याप्तिरिति तु नव्याः । ] न चैवं
द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः । सामानाधिकरण्याभावस्य व्या-
प्यवृत्तित्वेन साध्येऽसत्त्वात् । एतदस्वरसेनैव वा कल्पान्तरानुस-
रणादित्यपरे । नन्वेवमपि वह्निमान्धूमादित्यादिविषमव्याप्तहेता-
वव्याप्तिः महानसीयवन्हिनिष्ठस्य पर्वतवृत्तित्वाद्यभावस्य प्रतियो-
गिभूतं यदाधेयत्वं तन्निरूपके पर्वतादौ धूमादेर्वर्तमानत्वात् सा-
ध्यसामान्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वोक्तौ
च महागौरवमत आह साध्यनिष्ठाधेयत्वेति । अत्राधेयत्वं साध्य-
ताघटकसम्बन्धेन ग्राह्यम् । तेन रूपवान्महाकालत्वादित्यादौ सम्बन्ध-
सामान्येन रूपनिष्ठाधेयत्वानिरूपके गगनादौ हेतोरवृत्तित्वेपि नाति-
व्याप्तिः॥ तद्वृत्तौ साध्यवद्भिन्नवृत्तौ ॥ ननु साध्यनिष्ठाधेयत्वानिरूप-
काधिकरणवृत्तित्वमवश्यं हेतुताघटकसम्बन्धेन वाच्यमन्यथा वन्हि-
निष्ठाधेयत्वानिरूपके स्वावयवे समवायादिना धूमादेः सत्त्वादव्या-
प्त्यापत्तेः तथा च सत्तावान्द्रव्यत्वाद्धूमाद्वेत्यादावव्याप्तिः साध्यनि-
ष्ठाधेयत्वानिरूपके जात्यादौ समवायेन संयोगेन वा वृत्त्यप्रसिद्धेः
किं च द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः द्रव्यत्वनिष्ठाधेयत्वानि-
रूपकगुणादिवृत्तित्वस्य विशिष्टसत्तायां सत्त्वादित्यत आह साध्य-
निष्ठेति । धूमनिष्ठाधेयत्वानिरूपके जलादौ वन्ह्याद्यधिकरणत्वाभा-
वसत्त्वाद्व्यभिचारिण्यतिव्याप्तिरतो व्यापकेति । व्यापकत्वं तु प्रति-
योगिवैयधिकरण्याघटितमेव ग्राह्यम् । तेन संयोगेन वन्ह्यधिकरण-

तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः। साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वम् ॥ चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय द्वयमेकोक्त्या अनूद्य दूषयति तदुभयमपीति।

---

त्वस्याव्याप्यवृत्तितया तदभावस्य तप्तायःपिण्डवृत्तित्वेपि नातिव्याप्तिः। वन्ह्यधिकरणत्वगगनोभयत्वाद्यवच्छिन्नाभावस्य धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादतिव्याप्तिरतः सामान्यपदम्। तथा च हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसामान्याभावत्वेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वं तद्धर्मवत्त्वमर्थः। तेन वन्हिनिष्ठाधेयत्वानिरूपकाधिकरणजलादौ कालिकसम्बन्धेन धूमाधिकरणतायाः सत्त्वेपि नाव्याप्तिः। न वा वन्ह्यधिकरणत्वाभावस्यापि प्रमेयत्वादिना धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वेप्यतिव्याप्तिः। न च हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाभावत्वेन तादृशाधिकरणताव्यापकत्वमित्यस्यैव सम्यक्त्वेधिकरणत्वाभावपर्यन्तानुप्रवेशो व्यर्थ इति वाच्यम्। वृत्त्यनियामकसम्बन्धेन हेतुतायामव्याप्तिप्रसङ्गात्। तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः। अस्माकं तु तादृशसम्बन्धेन यद्धेतुसम्बन्धित्वं तस्य स्वरूपसम्बन्धावच्छिन्नाभावप्रतियोगित्वमादाय लक्षणसम्भवात्। किं चाधिकरणत्वाप्रवेशे वह्न्यादेः साध्यत्वे संयोगादिसम्बन्धेन रूपादिहेतावतिव्याप्त्यापत्तिः संयोगेन रूपाद्यभावस्य केवलान्वयितया वह्निनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादिति भावः॥ साध्यवद्भिन्नेति। अत्रापि साध्यवद्भिन्नत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षो बोध्यः। तेन सत्तावान्द्रव्यत्वादित्यादौ नाव्याप्तिः॥ ननु प्रागुक्तस्यार्थस्य शब्दान्तरेणाभिधानमनुवादः स चात्रासम्भवी साध्यं यदधिकरणानाधिकरणं तत्त्वानधिकरणत्वस्य साध्यवद्भिन्नवृत्तित्वानधिकरणत्वस्य च प्रागुक्तस्य साध्यानधिकरणानधिकरणत्वशब्देनाबोधनादत आह चरमेति। तत्त्वाधिकरणत्वाभावे तत्त्वाभावस्याप्रवेशाद्वैयर्थ्यमसम्भवीत्यत उक्तम् अनतिप्रयोजनकतयेति। तथा च प्रकृतलक्षणवाक्यस्य साध्यं यदधिकरणानधिकरणं तत्त्वाभावे साध्यस्य

धिकरणानधिकरणत्वम् । तच्च तत्र यत्किञ्चित्साध्यानधिकरणाधिकरणे धूमे चासिद्धम् ॥

---

साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वाभावः साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः ॥ तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकाधिकरणत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः क्वचिद्व्यभिचारिण्यतिप्रसङ्गश्चाद्ये। द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवलान्वयिनि यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः ॥ केचित्तु साध्यासामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे

---

यदनधिकरणं तद्वृत्तित्वाभाव एव च तात्पर्यात् प्रागभिप्रेतार्थस्य शब्दान्तरेणाभिधानमेवानुवादः स चात्र सम्भवत्येवेति भावः ॥ साध्यमित्यादि । साध्यानधिकरणेत्यादौ मध्यवर्तिनञो व्यत्यासेन चरमाधिकरणत्वांशेन सहान्वयादेव तल्लाभ इत्याशयः ॥ केवलान्वयिनीति । अव्याप्तिरिति परेणान्वयः। अव्याप्तेर्हेतुमाह । साध्यनिष्ठेति । नानाव्यक्तिसाध्यके चेति मूलोक्तं धूमहेतुमभिप्रेत्य [अथ वा नानाव्यक्तिसाध्यके नानासाध्यआधेयके चेत्यर्थः]। तेन शब्दवान् गगनत्वादित्यादौ नानाव्यक्तिसाध्यकाव्याप्तिविरहेऽपि न क्षतिः। न्यूनतां परिहरति । क्वचिदिति। विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरित्यर्थः। विशिष्टधर्मावच्छिन्नाधिकरणत्वस्यैव तदवच्छिन्नाधेयत्वस्यानतिरिक्तत्वादिति भावः॥ यत्किञ्चिदिति। साध्यवत्तत्तद्व्यक्तित्वावच्छिन्नेत्यर्थः। नानाधिकरणसाध्यके इति । यत्र साध्यतावच्छेदकावच्छिन्नाधिकरणं नाना तत्रेत्यर्थः। तेन कस्याञ्चिदपि वह्निव्यक्तेर्नानाधिकरणवृत्तित्वविरहेऽपि न वन्हिसाध्यकधूमाद्यसंग्रहः। सर्वत्र केवलान्वयिनि तद्भिन्ने च ॥ सार्वभौममतमुत्थापयति

तेनैव सम्बन्धेन साध्यवदवृत्तित्वाभावस्तदधिकरणभिन्नत्वमर्थः तेन धूमस्य स्वावयवे संयोगेन वह्निमति च समवायेनावृत्तावपि न क्षतिः

---

केचित्त्विति। हेत्वधिकरण इति। सप्तम्यर्थोऽवच्छेद्यत्वम्। तच्च साध्यवदवृत्तित्वाभावेऽन्वितम्। तेनैवेति। हेतुतावच्छेदकसम्बन्धेनैवेत्यर्थः। तस्य च साध्यवदवृत्तित्वेन सहान्वयः। साध्यवत्त्वमपि येन सम्बन्धेन येन रूपेण साध्यता तत्सम्बन्धेन तद्रूपावच्छिन्नवत्त्वं बोध्यम्। तेन समवायेन वह्नेः साध्यत्वे धूमे विशिष्टसत्त्वसाध्यके सत्त्वादौ नातिव्याप्तिः। तदधिकरणभिन्नत्वमिति। तदत्यन्ताभाववत्त्वोक्तौ द्रव्यं सत्त्वादित्यादावतिव्याप्तिः। गुणाद्यवच्छेद्यद्रव्यवृत्तित्वाभावस्यैव द्रव्यावच्छेदेन सत्तायामभावसत्त्वादतो भिन्नत्वपर्यन्तानुसरणम्। भेदस्तु नाव्याप्यवृत्तिः। तदव्याप्यवृत्तित्वे तु तादृशवृत्तित्वाभाववती यावती व्यक्तिस्तत्तद्भेदकूटवत्त्वं वक्तव्यमिति भावः। हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरण इत्यस्य फलमाह स्वावयवे संयोगेनेति। अवृत्तावपि न क्षतिरित्यन्वयः। तथा च तादृशसम्बन्धेन हेत्वधिकरणत्वाप्रवेशे स्वावयवावच्छेदेन धूमस्य वह्निमत्संयुक्तत्वाभाववत्त्वाद्वह्निमान्धूमादित्यादावव्याप्तिः स्यान्न पुनरसम्भवः। इदं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिनि लक्षणसम्भवादिति भावः। अत्र चोत्पत्तिकालावच्छिन्ने घटे पृथिवीत्वे रूपवदवृत्तित्वं नेत्यादिप्रतीत्या घटाद्यवच्छेदेन पृथिवीत्वादौ रूपवदवृत्तित्वाभावाभ्युपगमे हेत्वधिकरणनिष्ठमवच्छेदकत्वं निरवच्छिन्नं ग्राह्यम्। तेन रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः। तत्र घटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादिति ध्येयम्। तेनैवेत्यस्य फलमाह वह्निमति च समवायेनेति। हेतुतावच्छेदकसम्बन्धेन साध्यवदवृत्तित्वानुक्तौ सम्बन्धसामान्येन हेत्वधिकरणावच्छेद्यसाध्यवदवृत्तित्वसामान्याभावो न निवेश्यः। साधनाधिकरणाद्यवच्छेद्यतादृशाभावस्याप्रसिद्धेः। किं तु यत्किंचित्सम्बन्धेन साध्यवदवृत्तित्वाभावः प्रवेशनीयः। तथा च हेत्वधिकरणपर्वताद्यवच्छेदेन धूमादौ वह्निमत्समवेतत्वाद्यभावसत्त्वादसम्भव एव स्यात् यदि तेनैव सम्बन्धेन साध्यवदवृत्तित्वप्रवेशो न स्यादिति भावः। ननु हेत्वधिकरणावच्छेद्यत्वविशिष्टस्य साध्यव-

तादृशाभावश्च सम्बन्धान्तरेण तत्रैव वर्तमाने सुलभः व्यभिचारिणस्तु

---

यद्वृत्तित्वाभावस्याधिकरणाप्रसिद्ध्या लक्षणमिदमसम्भवि तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकतया गगनजलत्वादौ वह्निमत्पर्वतसंयुक्तत्वाभावस्य धूमवत्पर्वतानवच्छेद्यत्वादत आह तादृशाभावश्चेति । हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभावश्चेत्यर्थः । सम्बन्धान्तरेण हेतुतावच्छेदकसम्बन्धान्यसम्बन्धेन । तथा च हेतुमत्पर्वतावच्छेद्यत्वविशिष्टस्य वह्निमत्संयुक्तत्वाद्यभावस्याधिकरणत्वं पर्वतीयरूपादावेव प्रसिद्धमिति भावः । यद्यपि रूपादौ वह्निमत्संयुक्तत्वाद्यभावस्य व्याप्यवृत्तित्वात् तत्र पर्वतादिकं नावच्छेदकं भावाभावयोरेकत्र वृत्त्यर्थमेवावच्छेदकभेदस्वीकारादित्यप्रसिद्धितादवस्थ्यम् न च महानसादिसंयुक्ते कालिकादिसम्बन्धेन पर्वतादिनिष्ठघटादौ वह्निमत्संयुक्तत्वाभावस्य पर्वतावच्छेद्यत्वप्रसिद्ध्या न दोष इति वाच्यम् इत्थमपि एतद्रूपवानेतद्रसादित्यादावेतद्रसाधिकरणावच्छेदेन एतद्रूपवत्समवेतत्वाभावस्याप्रसिद्धेर्दुर्वारत्वात्। तथापि पर्वतावच्छेदेन तदीयरूपे न वह्निमत्संयुक्तत्वमित्यादिप्रतीत्या व्याप्यवृत्तेरवच्छेदकत्वस्वीकारादित्थमभिधानम् । हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वे वा ग्रन्थतात्पर्यम् तथा च व्याप्यवृत्तेरवच्छेदकत्वासत्त्वेपि साध्यवद्वृत्तित्वाभावविशिष्टस्य तस्याधिकरणत्वमादायैव लक्षणसङ्गतिः। न च वस्तुगत्या साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वोक्तौ वह्निमान्धूमादित्यादावव्याप्तिः स्वावयवावच्छेदेन वह्निमत्संयुक्तत्वाभाववतो धूमस्याधिकरणतायाः साधनवत्पर्वतादौ सत्त्वात् साध्यवद्वृत्तित्वभावविशिष्टयद्व्यक्तित्वावच्छिन्नाधिकरणत्वं हेतुमतस्तदन्यत्वोक्तौ तु वह्निमान् धूमादिदं वाच्यं ज्ञेयत्वादित्यादौ सर्वत्रैवासम्भवः साध्यवदसंयुक्तत्वादिविशिष्टतत्तद्रूपादिव्यक्तित्वस्य गुरुतया [प्रमेयरूपत्वावच्छिन्नाया: प्रतियोगिताया इव] तदवच्छिन्नाधिकरणत्वाप्रसिद्धेः केवलस्यातिप्रसङ्ग एव विशिष्टधर्मस्याधिकरणतानिरूपकतावच्छेदकत्वकल्पनादिति वाच्यम् । सार्वभौमानां मते प्रतियोगिताया इवाधिकरणताया अपि

व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्वम् सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यनुभवात् न चैवं गुणकर्मान्यत्वविशिष्टसत्त्वेऽव्याप्तिः, विशिष्टस्यातिरिक्तत्वात्, अनति-

---

गुरुधर्मावच्छेद्यत्वोपगमात्। अन्यथा समवेतत्ववत्त्वादिकमपेक्ष्य सत्तावत्समवेतत्ववत्त्वस्य गुरुतया साध्यवद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या सत्तावान्द्रव्यत्वादित्यादावव्याप्तिप्रसङ्गात्। ननु साध्यसमानाधिकरण्यवतो न तदभाववत्त्वमतो द्रव्यं सत्त्वादित्यादौ व्यभिचारिण्यतिप्रसङ्ग इत्यत आह व्यभिचारिणस्त्विति। तादृशीति। हेतुताघटकसम्बन्धेन हेतुमतीत्यर्थः। तादृशाभाववत्त्वं साध्यवद्वृत्तित्वाभाववत्त्वम्। अत्रैवानुभवं प्रमाणयति सत्तायामित्यादि। एवं सत्तायामपि द्रव्यत्वसामानाधिकरण्यविरहे। विशिष्टसत्त्व इति। विशिष्टसत्त्वशब्दप्रतिपाद्यहेतावित्यर्थः। यथाश्रुते गुणकर्मान्यत्वविशिष्टसत्ताव्यक्तावव्याप्त्याशङ्कायामुत्तरग्रन्थेन तदनिरासादसङ्गत्यापत्तेः। अतिरिक्तत्वादिति। विशेष्यविशेषणाभ्यां भिन्नत्वादित्यर्थः। तथा च गुणादिकं न हेत्वधिकरणमतो नाव्याप्तिः। उभयत्वमपि एकविशिष्टापरत्वमेव। तच्चातिरिक्तमेव। नातः स्पर्शवान् मूर्तत्वभूतत्वोभयस्मादित्यादावव्याप्तिरिति भावः। यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेनेत्युक्तावपि विशिष्टसत्तादिहेतौ नाव्याप्तिः न च धूमाधिकरणमहानसाद्यवच्छेदेन पर्वतीयादिधूमे वह्निमत्संयुक्तत्वाभावस्य चालनीन्यायेन सत्त्वादव्याप्तिः महानसादेरपि कालिकादिसम्बन्धेन पर्वतीयधूमाधिकरणत्वात् तत्र साध्यवद्वृत्तित्वाभाववत्तायामवच्छेदकत्वादिति वाच्यम् स्वावच्छिन्नाधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभाववद्वृत्तिधर्मवत्त्वमित्यस्यैव फलितार्थस्य तत्तद्धूमत्वधर्ममादायैव धूमादौ लक्षणसंभवेन धूमत्वस्य हेतुतावच्छेदकत्वेपि क्षत्यभावात्। तथापि विशिष्टस्यातिरिक्तत्वात् तत एवाव्याप्तिवारणसम्भवे हेतुतावच्छेदकावच्छिन्नाधिकरणत्वप्रवेशे गौरवम्। असंभवो वा। विशिष्टनिरूपकाधिकरणत्वाप्रसिद्धेः। एवं धूमत्वादेर्व्याप्यतानवच्छेदकत्वे ताद्रूप्येण कथायां हेतोरुपन्यासो न स्यादित्याद्य-

---

१ 'ाधिकरणतायां इव'

रिक्तत्वे तु विशेषणविशेष्यसम्बन्धस्यैव परम्परया व्याप्तत्वात् केवलान्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुः। त-

---

थः। ननु विशिष्टस्यातिरिक्तत्वे मानाभावः न च गुणो विशिष्टसत्तावानिति प्रतीत्यभाव एव मानम् गुणस्य विशिष्टनिरूपिताधिकरणत्वविरहादेव तादृशप्रतीत्यसम्भवात् न च विशिष्टनिरूपितमधिकरणत्वं यद्यतिरिक्तं तदा विशिष्टमेवातिरिक्तमस्तु विशिष्टाधिकरणतायाः क्लृप्ताधिकरणस्वरूपत्वाभ्युपगमात् किं च विशिष्टस्यातिरिक्तत्वे द्रव्यं विशिष्टसत्तावदिति निर्णयदशायामपि द्रव्यं न सत्तावदिति प्रत्ययप्रसङ्गः सत्ताभावबुद्धिं प्रति सत्तानिश्चयस्यैव विरोधितया तदसत्त्वात् स्वातन्त्र्येण विरोधितान्तरकल्पने गौरवात् एवं विशेषणविशेष्योभयग्राहकसामग्रीविरहेपि विशिष्टग्रहप्रसङ्गः तदुभयग्राहकसामग्र्या विशिष्टस्य ग्रहे हेतुत्वकल्पनेपि गौरवान्तरं स्फुटमेवेत्यत आह अनतिरिक्तत्वे त्विति। गुरवस्तु विशिष्टस्यातिरिक्तत्वादितिग्रन्थस्य विशिष्टनिरूपिताधिकरणत्वस्यातिरिक्तत्वादित्यर्थः तथा च हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेन तादृशावृत्तित्वाभाववत्त्वमपि निवेश्यमतो नाव्याप्तिरित्याशयः ननु विशिष्टाधिकरणत्वं यदि नातिरिक्तं विशिष्टसत्तावानितिप्रतीतेः प्रत्येकनिरूपिताधिकरणताद्वयावगाहितयैवोपपत्तेः अन्यथा विशेषणाभावनिर्णयदशायामपि विशिष्टसत्तावत्त्वप्रतीत्यापत्तेः विशिष्टसत्ताबुद्धौ विशेषणाभाववत्ताज्ञानस्य प्रतिबन्धकतायाः स्वातन्त्र्येण कल्पनापातादित्युच्यते तदाप्याह अनतिरिक्तत्वे त्वितीति प्राहुः।

विशेषणेति। विशेषणं गुणकर्मान्यत्वं विशेष्यं सत्ता। तयोः समानाधिकरण्यात्मकसम्बन्धस्यैवेत्यर्थः। साक्षात्सम्बन्धेन तस्य व्यभिचारित्वादाह परम्परयेति। अवच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः। सत्त्वगुणकर्मान्यत्वयोर्द्रव्ये एव सामानाधिकरण्यमिति प्रतीत्यावच्छेदकतासम्बन्धेन तदुभयसामानाधिकरण्यस्य द्रव्य एव सत्त्वान्न व्यभिचार इति भावः। नन्वेवं ज्ञेयत्वाधिकरणपटाद्यवच्छेदेन वाच्यत्ववदवृत्तित्वाभावस्य पटीयरूपादावेव सत्त्वात्तदधिकरणभिन्न-

च्छिन्नम्। सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमितिप्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यवच्छेदकत्वाभावं परम्परासम्बन्धेन सा-

———

त्वमस्त्येव ज्ञेयत्वादिहेतोरित्यग्रे केवलान्वयिन्यव्याप्तिप्रदर्शनमसङ्गतमत आह केवलान्वयिनीति। द्वितीयेति। तत्र साध्यवद्भिन्नस्याप्रसिद्धत्वादिति भावः। यद्यपीदं वाच्यं प्रमेयादित्यादौ तादात्म्येन केवलान्वयिनि प्रथमलक्षणेऽव्याप्तिः सम्भवति प्रमेयावच्छेदेन वाच्यत्ववत्तादात्म्यकत्वविरहिणोऽप्रसिद्धेः न च घटाद्यवच्छेदेन वाच्यत्ववत्तादात्म्यविरहो घटत्वादौ सुलभः तथा सति घटत्वं घटे न वाच्यमिति प्रतीत्यापत्तेः। तथापि स्वाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावोऽत्र लक्षणघटक इत्यभिप्रायेण द्वितीयलक्षणाभिधानम्। स्वपदस्य तत्तत्साधनव्यक्तिपरतया तादात्म्येन पटात्मकहेत्वधिकरणीभूतपटव्यक्तिनिरूपिततादात्म्येन वाच्यत्ववत्तादात्म्यकत्वाभावस्य पटावच्छेदेन पटत्वादावेव प्रसिद्धेः। वस्तुतस्तु केवलान्वयित्वं वृत्तिमदत्यन्ताभावाप्रतियोगित्वमात्रम्। न त्ववच्छेदकगर्भम्। तथा च तादात्म्येन किञ्चिदपि प्रमेयं न केवलान्वयीति द्वितीयलक्षणे एव तादृशकेवलान्वयिन्यव्याप्तिसम्भवात् यथाश्रुतमेव सम्यगिति ध्येयम्। नव्यास्तु केवलान्वयिनि चाव्याप्तेरिति केवलान्वयिसामान्येऽव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्यर्थः प्रथमलक्षणे यत्किञ्चित्केवलान्वयिनि तादात्म्येन प्रमेयादिहेतावव्याप्तावपि न क्षतिरित्याहुः॥ सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमितिप्रतीतिः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यस्यावच्छेदकत्वाभावं गुणादाववगाहते इत्यत्र समानाकारकप्रतीतिं दृष्टान्तयति द्रव्यत्वे गुण इति। न तूक्तप्रतीतेर्गुणावच्छेदेन द्रव्यत्वे पृथिवीत्वसामानाधिकरण्याभावो विषयः। गुणस्य द्रव्यत्वानधिकरणतया तन्निष्ठपृथिवीवृत्तित्वाभावावच्छेदकत्वासम्भवात्। किं तु द्रव्यत्वनिष्ठं यत्पृथिवीत्वसामानाधिकरण्यं तदवच्छेदकत्वाभाव एव गुणे विषय इति तद्बुद्धिरियमपि इति भावः।

मानाधिकरण्यस्य वा अभावं गुणेऽवगाहते । न तु सत्तायामेव द्रव्यवृत्तित्वाभावम् । सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्वजनसिद्धप्रतीतिबाधितत्वात् । बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः ।

---

अवच्छेदकत्वाभावमिति। प्रात्यक्षिकप्रत्ययाभिप्रायेणेदम्। सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यादिशाब्दस्थलेऽवच्छेदकत्वोपस्थापकपदान्तरविरहात्तदभावस्य गुणादौ बोधयितुमशक्यत्वात् । किन्तु सत्तानिष्ठं द्रव्यत्वसामानाधिकरण्यं न गुणावच्छेद्यमित्याकार एव तत्र बोधः । गुणादावित्यत्र सप्तम्यर्थस्य नञर्थेऽन्वयादिति ध्येयम् । नन्वेवं तादृशप्रतीतेः सामानाधिकरण्याभावविषयकत्वमनुभवसिद्धं विरुध्येत सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तदवच्छेदकत्वाप्रसिद्ध्या तादृशावच्छेदकत्वाभावविषयकप्रतीतेर्भ्रमत्वापत्तिश्च स्यादत आह परम्परासम्बन्धेनेति । निरूपकताख्यस्वरूपसम्बन्धेनेत्यर्थः । न त्ववच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः। तथा सति सत्तायां द्रव्ये न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिप्रसङ्गात् । सामानाधिकरण्यस्य व्याप्यवृत्तितया कुत्राप्यवच्छेदकत्वसम्बन्धेन तस्यासत्त्वात् ॥ न त्विति । तथा च द्रव्यं सत्त्वादित्यादावतिव्याप्तिरिति भावः ॥ ननूक्तदृष्टान्तस्थले बाधकसत्त्वादवच्छेदकत्वाभावोस्तु प्रतीतेर्विषयः प्रकृते तु साक्षात्सामानाधिकरण्याभावविषयकत्वे न किञ्चिद्बाधकमस्तीत्यतो बाधकमाह सत्ता नेति । तथा च सत्तायां द्रव्यवृत्तित्वाभावसत्त्वे द्रव्यवृत्तित्वाभाववद्भिन्नत्वधीस्तत्र न स्यादिति भावः। ननु द्रव्यवृत्तित्वाभावोऽव्याप्यवृत्तिरेवेति तद्भेदोऽप्यव्याप्यवृत्तिर्वाच्यः तथा च द्रव्यगुणात्मकविभिन्नावच्छेदेन तयोः सत्तायां समवेशात्कुतो विरोध इत्यत आह द्रव्यवृत्तित्वाभाव इति ॥ नन्वेवं मूले न कपिसंयोगीति प्रतीत्या वृक्षादौ कपिसंयोगाभावोपि न सिद्ध्येत् तत्रापि वृक्षनिष्ठसंयोगावच्छेदकत्वाभावस्य मूलेवगाहनसम्भवादत आह बाधकाभावादिति । कपिसंयोगाभावो न वृक्षवृत्तिरित्यादिप्रत्ययस्यासम्भवादिति भावः॥ ननु द्रव्यवृत्ति-

अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च। तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धेः। नच तदभाववदवृत्तित्वेन तत्र तदनुमेयम्। तद्वदवृत्तिभिन्नत्वस्योपाधित्वात्। किञ्च इदमिदानीमितिप्रतीतिनियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः। तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः॥

---

त्वाभावो न सत्तावृत्तिरिति प्रतीतिरेवासिद्धा द्रव्यवृत्तित्वाभावो गुणावच्छेदेन सत्तावृत्तिरिति प्रत्ययात् एकशेषस्य कर्तुमशक्यत्वादतो दोषान्तरमाह अतीन्द्रियेति। मनस्त्ववदणुत्वादित्यादावित्यर्थः॥ तत्र अतीन्द्रियसाध्यके अतीन्द्रियासद्धेतौ॥ ननु प्रत्यक्षासम्भवेऽप्यणुत्वं मनस्त्वसामानाधिकरण्याभाववन्मनस्त्वाभाववदवृत्तित्वात् पृथिवीत्ववदित्यनुमानेनैव तत्र सामानाधिकरण्याभावः सेत्स्यतीत्यत आह न चेति॥ तद्वदवृत्तीति। साध्यवदवृत्तिभिन्नत्वस्येत्यर्थः। तथा चोक्तानुमाने मनस्त्ववदवृत्तिभिन्नत्वमुपाधिः। तस्य च साध्यव्यापकत्वं घटत्वादौ साधनाव्यापकत्वं द्रव्यत्वादौ ग्राह्यम्। भेदस्याव्याप्यवृत्तित्वे तु साध्यवदवृत्तितत्तद्व्यक्तित्वावच्छिन्नभेदकूट उपाधिर्बोध्यः॥ ननूक्तोपाध्यप्रतिसन्धानदशायामुक्तानुमानादेव साध्यवदवृत्तित्वाभावसिद्धिस्तत्र भविष्यति अन्यथा व्याप्त्यन्तरस्यापि तत्रातिप्रसङ्गादित्यत आह किञ्चेदमित्यादि। तथा च कालो गोमान् गोत्वादित्यादौ कालिकसम्बन्धेन हेतावव्याप्तिः। कालिकसम्बन्धेन हेतुमति महाकाले तेन सम्बन्धेन कालवृत्तित्वाभावस्य कुत्राप्यसत्त्वात्। न च कालावच्छेदेन गगनादावेव साध्यवदवृत्तित्वाभावस्य प्रसिद्धिः। कालस्य गगनाद्यनधिकरणत्वेन तन्निष्ठवृत्तित्वाभावे कालावच्छेद्यत्वासम्भवात्। कालिकसम्बन्धेन गगनादेर्वृत्तिमत्त्वस्वीकाराच्च। यद्यपि गोत्वाद्यधिकरणतत्तत्क्षणावच्छेदेन कालवृत्तित्वाभावस्य तत्तत्क्षणासमानकालीने तत्तत्क्षणगोचरज्ञाने प्रसिद्धिः तत्तत्क्षणस्यापि विषयतया स्वविषयकज्ञानाधि-

करणतया तन्निष्ठताद्दशवृत्तित्वाभाववत्तायामवच्छेदकत्वसम्भवात् । तथापि महाकाल एव कालिकसम्बन्धेनाधिकरणम् उपाधीनां तत्तद्वृत्तितायामवच्छेदकत्वमात्रमिति प्राचीनसिद्धान्तमनुसृत्येदम् । महाकालनिरूपितविशेषणतया वा हेतावव्याप्तिर्द्रष्टव्या । इदमिदानीमित्याकारकप्रतीतिनियामकविशेषणतायां यो विशेषस्तेन हेतुतायामिति व्याख्यया तादृशविशेषणतायाः प्राप्तेः । सामान्यत एव विभिन्नकालीनयोर्नाधाराधेयभाव इति मते नानुपपत्तिगन्धोपि । क्षणानां स्वसमानकालीनविषयतयाऽप्यनधिकरणत्वेन तदवच्छेदेन ज्ञाने साध्यवदवृत्तित्वाभावप्रसिद्ध्यसम्भवादिति ध्येयम् । अत्र हेतुतावच्छेदकसम्बन्धेन स्वाधिकरणं स्वनिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवदवृत्तित्वाभावस्य विवक्षायां न कोपि दोषः साधनीभूतगोत्वाधिकरणमहाकालावच्छेदेन गोत्वनिरूपितकालिकसम्बन्धेन साध्यवदवृत्तित्वाभावस्य घटादाविव प्रसिद्धत्वात् साध्यसामानाधिकरण्यत्वं यद्धर्मावच्छिन्नाधिकरणावच्छेद्यहेतुवृत्तिकात्यन्ताभावप्रतियोगितानवच्छेदकं तद्धर्मवत्त्वं वा विवक्षितम् इत्थं च वाच्यं प्रमेयादित्यादौ प्रमेयव्यक्तीनां भेदेपि न व्याप्तिभेद इत्यस्मद्गुरुचरणाः । केचित्तु स्वनिष्ठं यत्साध्यवदवृत्तित्वं हेत्वधिकरणावच्छेद्यतदभावाधिकरणभिन्नत्वमित्यर्थः तादृशाभावाधिकरणत्वं सद्धेतुस्थले स्वभिन्नव्यक्ताविव प्रसिद्धमतो नाव्याप्तिरित्याहुः । साध्यवदवृत्तित्वाभावाधिकरणत्वसामान्ये यन्निष्ठत्वयदधिकरणावच्छेद्यत्वोभयाभावस्तत्त्वं व्याप्तिः पर्वतीयरूपनिष्ठं यत्पर्वतावच्छेद्यं वह्निमत्संयुक्तत्वाभावाधिकरणत्वं न तद्धूमनिष्ठं यच्च धूमनिष्ठं न तद्धूमाधिकरणावच्छेद्यमधिकरणभेदेन तस्य नानात्वात् अन्यथा पर्वते तदीयरूपे न वह्निमत्संयुक्तत्वमितिवत्पर्वते धूमे न वह्निमत्संयुक्तत्वमित्यादिप्रतीत्यापत्तेः अतो वह्निमान्धूमादित्यादौ नाव्याप्तिः व्याप्यवृत्तेरवच्छेदकत्वास्वीकारे तु तादृशाभावाधिकरणत्वसामान्ये यदधिकरणावच्छेद्यत्वसामान्याभावस्तत्त्वमित्येव वाच्यमित्यादिकं पुनरुदक्षरत्वादुपेक्षितम् । वाच्यत्वादिसाध्यके तादात्म्येन हेतावव्याप्तेश्च । वाच्यत्ववत्तादात्म्याभावाप्रसिद्धेः । एतेन सत्तायां कर्मणि न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतौ कर्मण इव कर्मसत्त्वयोः समवायस्याप्यवच्छेदकत्वं भासते अन्यथा इदानीं

सत्तायां न द्रव्यत्वसामानाधिकरण्यमित्यादिप्रतीत्यापत्तेः एतत्कालस्य कर्मानतिरेकात् एवं च यद्धेतुव्यक्त्यधिकरणीयहेतुतावच्छेदकसम्बन्धे साध्यवद्वृत्तित्वाभावावच्छेदकत्वं नास्ति तत्त्वमित्यर्थः कालो गोमान् गोत्वादित्यादौ कालवृत्तित्वाभावावच्छेदकत्वस्य द्रव्यत्वादिनिष्ठात्मसमवेतत्वादौ प्रसिद्धस्य गोत्वाधिकरणीयकालिकसम्बन्धे विरहान्नाव्याप्तिरित्यपि निरस्तमिति सङ्क्षेपः ॥

इति सिंहव्याघ्रलक्षणद्वयविवरणं समाप्तम् ॥



## चिन्तामणेः व्यधिकरणप्रकरणम् ॥

अथेदं वाच्यं ज्ञेयत्वादित्यत्र समवायितया वाच्यत्वाभावो घट एव प्रसिद्धः व्यधिकरणधर्मावच्छिन्नप्र-

## शिरोमणिकृतदीधित्याः व्यधिकरणप्रकरणम् ॥

समवायितयेति। वाच्यत्वं न यथा समवायि तथा वक्ष्यते। घटादिसमवायितयेत्यर्थ इत्यप्याहुः। प्रमेयसाध्यके च भावत्वेनाभावानाम् अभावत्वेन भावानां वह्नित्वेन निर्वह्नौ अवृत्तिमात्रवृत्तिग-

## जागदीश्याः व्याधिकरणप्रकरणम् ॥

नन्वीश्वरेच्छारूपस्य वाच्यत्वस्य गुणत्वादिसमवायित्वात् समवायित्वं न तद्व्यधिकरणधर्म इत्यत आह वाच्यत्वमिति। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वं पदार्थान्तरं वा वाच्यत्वम्। न तु तादृशेच्छामात्रमतिप्रसक्तत्वात्। तच्च न कस्यापि समवायीति भावः। समवायितयेति मूलस्य समवायिकारणतयेत्यर्थ इत्यप्याहुः॥ नन्विदं वाच्यं ज्ञेयत्वादित्यादौ समवायितया वाच्यत्वाभावरूपस्य साध्याभावस्य प्रसिद्धावपि प्रमेयवान् वाच्यत्वादित्यादिकेवलान्वयिनि तदप्रसिद्धेरनुद्धारात् मूलस्य न्यूनत्वमत आह प्रमेयेति। भावत्वेनाभावानामभावः सर्वत्र सुलभ इत्यन्वयः। ननु भावत्वेनाभावो नास्तीति प्रतीतिरभावस्यैवाभावत्वेन भावो नास्तीति प्रतीतिर्भावस्यैव प्रतियोगित्वमवगाहते न चैतावता प्रमेयमात्रप्रतियोगिकाभावसिद्धिरत आह वह्नित्वेनेति। वह्नित्वेन निर्वह्नौ सर्वेषामभावः सुलभ इति योजना। ननु जले वह्नित्वेन प्रमेयं नास्तीति प्रतीतिर्वह्निमात्रप्रतियो-

तियोगिताकाभावस्य केवलान्वयित्वात् न चैवं घट एव व्यभिचारः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचारः न च वाच्यत्वाभावस्तादृशो घट इति चेत्तर्हि तादृशसाध्याभावसामानाधिकरण्या-

———

गनत्वादिना विरुद्धघटत्वपटत्वाभ्याञ्च सर्वत्र प्रमेयमात्रस्याभावः सुलभः ॥ ननु पारिभाषिकमेवाव्यभिचरितत्वं तथाहि यत्समाना-

———

गिकाभावमवगाहते न तु प्रमेयसामान्यप्रतियोगिकं वह्निमति तादृशप्रतीत्यनुत्पत्त्या वह्निप्रतियोगिकाभावावगाहित्वस्यावश्यकत्वादत आह अवृत्तीति। तथा च गगनत्वेन प्रमेयं नास्तीति प्रतीत्यैव प्रमेयसामान्यप्रतियोगिकाभावसिद्धिः। न हि तत्रापि गगनमात्रप्रतियोगिकत्वं भासते इति वक्तुं शक्यते। विनिगमनाभावेन प्रमेयमात्रप्रतियोगिकत्वावगाहने बाधकाभावात्। कालिकसम्बन्धेन गगनत्वादिविशिष्टस्य प्रमेयस्य सर्वत्र नाभावः सम्भवतीत्यत उक्तम् अवृत्तिमात्रवृत्तीति। तथा च यादृशसम्बन्धेन गगनत्वादेर्वृत्तिमदवृत्तित्वं तादृशसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताको गगनत्वादिना प्रमेयसामान्याभावो वाच्य इति भावः। ननु कालिकसम्बन्धेन प्रमेयसाध्यके तेन सम्बन्धेन साध्याभावस्यैव प्रसिद्धिः कार्या सा च कालिकसम्बन्धेन गगनत्वेन प्रमेयं नास्तीति प्रतीत्या न सम्भवति तत्सम्बन्धेन गगनादेर्वृत्तिमत्त्वमते तादृशप्रतीतेर्गगनप्रतियोगिकत्वावगाहितयैवोपपत्तौ प्रमेयान्तरप्रतियोगिकत्वे मानाभावादत आह विरुद्धेति। तथा च घटत्वपटत्वाभ्यां प्रमेयं नास्तीति प्रतीत्या निखिलप्रमेयप्रतियोगिकस्तत्राप्यभावः सुलभ इति भावः। इदमुपलक्षणम्। संयोगादिसम्बन्धेन घटत्वादिकमपि प्रमेयत्ववदवृत्ति इति तत्सम्बन्धेन घटत्वाद्यवच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावोपि बोध्यः॥ अप्रसिद्धिदोषस्यापि सत्त्वान्मूले प्रतियोग्यवृत्तीत्यादिदोषान्तरं किमित्युपाक्षमतस्तदवतारार्थमाशङ्कते नन्विति। पारिभाषिकमेवेत्येवकारेण

न व्यभिचारोऽव्यभिचार इति योगार्थो व्यवच्छिद्यते । अव्यभिचरितत्वमिति । अथेदं वाच्यमित्यादिग्रन्थाभिप्रेतमिति शेषः । तथा च न चैवं घट इत्यादिमूलस्य केवलान्वयिनो व्यभिचरितत्वेनालक्ष्यताप्रदर्शनपरत्वान्न पूर्वमूलासङ्गतिरिति ध्येयम् । यदित्यादि । अत्र यत्समानाधिकरणा इत्यस्यानुक्तौ साध्यातावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकस्यात्मत्वसामान्याभावस्यापि यावदन्तर्गतत्वात्तस्य च व्यापकताघटकसमवायसम्बन्धेन प्रतियोग्यधिकरणे केनापि सम्बन्धेनावृत्तित्वादयमात्मा ज्ञानादित्यादावव्याप्तिरतस्तदुपात्तमित्यग्रे स्फुटीभविष्यति । न चात्मत्वाद्यभावोपि समानकालीनत्वादिसम्बन्धेन प्रतियोग्यधिकरणवृत्तिः । तथाविधसम्बन्धानां वृत्त्यनियामकत्वात् । क्वचिदपि तेन सम्बन्धेन वृत्तित्वाप्रतीतेः । इत्थं च हेतुसमानाधिकरणत्वमपि हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणाधेयत्वं ग्राह्यम् । तेनात्मत्वाद्यभावस्यापि हेत्वधिकरणसम्बन्धित्वान्नोक्तदोषतादवस्थ्यम् । न च हेतुसमानाधिकरणा इत्यपहाय साध्यसमानाधिकरणा यावन्तस्तादृशाभावाः स्वविशिष्टयद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणास्तद्धर्मवत्त्वमित्येव कुतो लक्षणं न कृतमिति वाच्यम् । द्रव्यमात्मत्वादित्यादौ महाकाले साध्यसमानधिकरणस्य द्रव्यत्वादिसामान्याभावस्य स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्या तत्राव्याप्तिप्रसङ्गात् । [दैशिकविशेषणतासम्बन्धेन साध्याधिकरणवृत्तित्वोक्तौ च गौरवात् वस्तुतो द्रव्यं सत्तावद्वा आत्मत्वादित्यादावव्याप्तिः । पृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावस्य गुणान्यत्वविशिष्टसत्ताभावस्य वा दैशिकविशेषणतया साध्यसमानाधिकरणस्य केनापि संबन्धेन हेत्वधिकरणेऽवर्तमानत्वात् ।] यत्तु यत्समानाधिकरणा यावन्तस्तादृशाभावाः साध्यसमानाधिकरणास्तत्त्वमित्येवास्तु लक्षणं स्वस्वप्रतियोगिसामानाधिकरण्यस्य प्रवेशे बीजाभावादिति तन्तुच्छम् । तथा सति यत्समानाधिकरणा यावन्तोऽभावाः साध्यसमानाधिकरणास्तत्त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका इत्यस्य व्यर्थतापत्तेः । तन्मात्रोक्तौ च विनापि व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेत्यादेरवतारकत्वानुपपत्तिः । यदपि यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका-

धिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियो-
गिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वम् सर्वत्र

---

यावन्तोऽभावा दैशिकविशेषणतयोभयवृत्तयस्तत्त्वमित्येव लक्षणम-
स्तु स्वस्वप्रतियोगिसामानाधिकरण्यान्तर्भावे गौरवात् हेतुसमा-
नाधिकरणस्य तत्तद्योगोलकान्यत्वाभावस्यैव दैशिकविशेषणत-
योभयवृत्तित्वाभावाद्धूमवान्वह्नेरित्यादावतिव्याप्तिविरहादिति तन्म-
न्दम् । हेतुसमानाधिकरणस्य वह्निसंयोगाद्यात्मकाभावस्य दैशि-
कविशेषणतयोभयवृत्तित्वविरहेण वह्निमान्धूमादित्यादावव्याप्तिप्र-
सङ्गात् । न च भावभिन्नस्यैव हेतुसमानाधिकरणाभावस्य प्रवेशा-
न्नैव दोषः । तद्घटभिन्नं घटत्वादित्यादावतिव्याप्त्यापत्तेः । तद्घट-
भिन्नत्वाद्यभावस्य तद्घटत्वादिस्वरूपत्वेन भावत्वात् । पटत्वादि-
ना तद्घटभिन्नत्वाद्यभावस्य चोभयवृत्तित्वादिति । [अत्र च हेतु-
समानाधिकरणा यावन्तस्तादृशाभावाः स्वप्रतियोगिमत्ताग्रहविरो-
धिताघटकसम्बन्धेनोभयवृत्तयस्तत्त्वमिति कृते न काप्यनुपपत्ति-
रित्यलं पल्लवितेन ।] अत्र च यत्पदं यद्धर्मावच्छिन्नपरम् । अग्रे च
तत्त्वमित्यस्य हेतुतावच्छेदकीभूततद्धर्मवत्त्वमित्येवार्थः । तेन सक-
लधूमव्यक्त्यनुगताया वह्निव्याप्तेर्नालाभः । न वा ज्ञानवा-
न्मनोन्यत्वे सति आत्ममनःसंयोगादित्यादौ मनसि हेतुसमा-
नाधिकरणस्यात्मत्वसामान्याभावस्य स्वविशिष्टहेतुतावच्छेदकाव-
च्छिन्नहेत्वधिकरणाप्रसिद्धिनिबन्धनाव्याप्तिः । यत्तु द्रव्यं गुण-
कर्मान्यत्वे सति सत्त्वादित्यादौ हेतुसमानाधिकरणस्य द्रव्यत्वाद्य-
भावस्यातथात्वादव्याप्तिरतो यत्पदस्य यद्धर्मावच्छिन्नपरत्वमिति
तन्न । द्रव्यत्वाद्यभावस्यापि कालिकादिसम्बन्धेन स्वविशिष्टं यद्धेतु-
तावच्छेदकावच्छिन्नहेत्वधिकरणं जन्यद्रव्यादि तदवच्छेदेन प्रति-
योगिसामानाधिकरण्यात्तत्राव्याप्तिविरहात् ।साध्यतेत्यादि। साध्य-
तावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदिका यदभाव-
प्रतियोगिता तादृशाभावा इत्यर्थः । अत्र च विशिष्टसत्तावान् जा-
तेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावस्यैव सत्तास्वरूपसाध्यव्या-

पकतावच्छेदकप्रतियोगिताकतया तस्य स्वविशिष्टहेत्वधिकरणाव-च्छेदेन प्रतियोगिसामानाधिकरण्यादतिव्याप्तिरतः साध्यतावच्छे-दकावच्छिन्नेति । तथा च द्रव्यत्वाद्यभावस्यैव निरुक्तयावदन्तर्ग-तस्यातथात्वान्नातिव्याप्तिः । साध्यवत्त्वं चात्र साध्यतावच्छेदकस-म्बन्धेन निवेश्यम् । तेन वस्तुमात्रस्यैव विषयतासम्बन्धेन ज्ञानवत्त्वा-द्घटत्वादिना वाच्यत्वाभावस्यैव साध्यतावच्छेदकावच्छिन्नव्याप-कतावच्छेदकप्रतियोगिताकत्वेपि समवायेन ज्ञानस्य साध्यत्वे द्र-व्यत्वादिहेतौ नातिप्रसङ्गः । समवायसम्बन्धावच्छिन्नज्ञानवन्निष्ठा-भावप्रतियोगितानवच्छेदकप्रतियोगिताकस्यात्मत्वाभावस्यैव प्रति-योगिसमानाधिकरणत्वात् । अत्र च साध्यवन्निष्ठाभावः प्रतियोगि-व्यधिकरणत्वेन विशेषणीयः । तेन साध्यवन्मात्र एव समवायि-त्वावच्छिन्नवाच्यत्वाभावप्रतियोगित्वेन घटाद्यभावसत्त्वेपि न सा-ध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकाभावस्याप्रसि-द्धिः । इत्थं च तत्सम्बन्धेन स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभा-वप्रतियोगितावच्छेदको यो यस्तदन्यत्वे सति तत्सम्बन्धावच्छिन्ना-धेयतावच्छेदकत्वरूपतत्सम्बन्धेन साध्यव्यापकतावच्छेदकत्वं नि-रुच्य तादृशव्यापकतावच्छेदिका यदभावप्रतियोगिता तादृशाभा-वाः प्रवेशनीयाः । न च तत्सम्बन्धावच्छिन्नाधेयतेत्यादिकं व्यर्थम् । द्रव्यत्वाद्यभावप्रतियोगितायामपि संयोगसम्बन्धेन वह्न्यादिव्याप-कतावच्छेदकत्वापत्त्या यावदन्तर्गतस्य तत्सम्बन्धेन द्रव्यत्वाद्यभा-वस्य साध्यव्यापकताघटकीभूतसंयोगादिसम्बन्धेन प्रतियोगिसामा-नाधिकरण्याप्रसिद्ध्या सद्धेतुमात्र एवासम्भवस्य वारणार्थं तदुपादा-नात् । संयोगसम्बन्धावच्छिन्नाधेयत्वस्य द्रव्यत्वादावसत्त्वेन द्रव्य-त्वादिनिष्ठप्रतियोगित्वस्य तादृशाधेयतानवच्छेदकत्वात् । तत्सम्बन्धेन स्वावच्छिन्नानधिकरणत्वं च तत्सम्बन्धेन स्वावच्छिन्नाधिकरणसा-मान्यभेदः । तेन वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणग-गनोभयभेदस्य घटत्वादिना वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधि-करणभेदस्य च वह्न्यादिसाध्यवति सत्त्वेपि न क्षतिः । अत्राभावा इति स्वरूपकथनम् । वस्तुतः साध्यवन्निष्ठाभावस्य तत्सम्बन्धावच्छिन्न-प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमेव तत्सम्बन्धेन साध्यव्यापकतावच्छेदकत्वं वाच्यम् । तत्र च साध्यवन्निष्ठत्वम-

वाच्यत्वाद्यभावस्य तथात्वाद्यावत्त्वोपादानम् अत एव भूतत्वमु-

---

भावस्य स्वरूपसम्बन्धेन ग्राह्यम् । तेन स्पन्दः कालत्वादित्यादौ स्पन्दत्वाद्यभावस्यापि कालिकसम्बन्धेन साध्यवति वृत्त्या यावदन्तर्गतत्वात् समवायित्वेन वाच्यत्वाद्यभावस्य च तादृशप्रतियोगिसमानाधिकरणत्वेपि नातिव्याप्तिः । इत्थं च जातिसामान्याभावादेरपि वह्न्यादिव्यापकतया तत्प्रतियोगिकस्य जात्यादिस्वरूपस्य हेतुसमानाधिकरणाभावस्य जातिसामान्याभावात्मकप्रतियोग्यसमानाधिकरणत्वादसम्भवापत्तिरतोऽभावा इत्युक्तम्। भावभिन्ना इति च तदर्थः । यथा च सामानाधिकरण्यनानवच्छेदकत्वघटितायां व्यापकतायां न दोषस्तथाग्रे प्रपञ्चयिष्यते । नव्यास्तु साध्यतावच्छेदकेत्यादि साध्यतावच्छेदकावच्छिन्नाधिकरणानि यावन्ति तत्प्रत्येकवृत्तिवृत्तिप्रतियोगिताकेत्यर्थः न चैकमात्रवृत्तिसाध्यकसद्धेताव्याप्तिः तत्र यावत्त्वस्यानुपादेयत्वात् शब्दैक्यस्याकिञ्चित्करत्वात् यद्वा साध्यतावच्छेदकावच्छिन्नसमानाधिकरणा यावन्तो धर्मास्तत्प्रत्येकसमानाधिकरणवृत्तिप्रतियोगिताकेत्यर्थः इति प्राहुः । यत्तु साध्यवदवृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताकेत्यर्थ इति तन्न। केवलान्वयिसाध्यकसद्धेतौ तादृशप्रतियोगित्वाप्रसिद्ध्याव्याप्तेः गगनस्वरूपाभावस्य तादृशत्वेपि हेतुसमानाधिकरणत्वासम्भवादिति। अत्र व्यापकतावच्छेदकप्रतियोगिताका इत्यत्र व्यापकताया अवच्छेदो ययेति बहुव्रीहौ कप्रत्ययः तेन प्रतियोगितया समभवच्छेदिकापदस्य समासे कोपधत्वेपि पुंवद्भावः । तद्धितवुन्कोपधस्यैव पुंवद्भावनिषेधादित्यभियुक्ताः। सर्वत्रेति। सद्धेतावसद्धेतावित्यर्थः। तथा च यावत्त्वानुक्तावतिव्याप्तिरेव स्यान्नाव्याप्तिरिति भावः। सकलव्यभिचारिणीत्यर्थ इत्यन्ये । केचित्तु सर्वत्रेति सकलहेत्वधिकरणावच्छेदेनेत्यर्थ इत्यप्याहुः। वाच्यत्वाद्यभावस्येति। घटत्वादिना वाच्यत्वाभावस्य चेत्यर्थः । तथात्वात् प्रतियोगिसमानाधिकरणत्वात् । तथा च धूमवान्वह्नेरित्यादावतिव्याप्तिवारणार्थमेव यावत्पदोपादानमिति भावः। ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावोक्त्यैव वाच्यत्वाद्यभावमादायोक्तस्यातिप्रसङ्गस्य व्युदास-

सम्भवात् साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावानां यावत्त्वोपादानं गौरवग्रस्तमत आह अत एवेति। निरुक्ताभावे यावत्त्वोपादानादेवेत्यर्थः। अन्यथा भूतत्वाद्यभावस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकान्यत्वाद्भूतत्वमूर्तत्वोभयत्वाद्यवच्छिन्नाभावस्य च तादृशप्रतियोगिताकस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिः स्यादेवेति भावः। यत्तु साध्यप्रतियोगिको यत्किञ्चिदभावो यद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वमित्येव लक्षणमस्तु कृतं यावत्त्वगर्भनिरुक्त्या धूमवान्वह्नेरित्यादौ घटत्वेन धूमाभावस्यापि तादृशहेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादतिव्याप्त्युदासादित्याशङ्कात एवेत्यादिकमवतारयन्ति तत्तुच्छम्। तादृशशङ्कायां धूमवान्वह्निरित्यादिप्रसिद्धस्थल एव वह्निधूमोभयत्वावच्छिन्नाभावमादायातिव्याप्तिसम्भवे भूतत्वमूर्तत्वोभयवानित्याद्यनुधावनस्य सन्दर्भविरोधापत्तेः। यदपि यादृशाभावस्य प्रतियोगिताया व्यापकं साध्यतावच्छेदकं तादृशः कश्चिदभावो यद्धर्मावच्छिन्नाधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वं व्याप्तिरित्युक्त्यैव वाच्यत्वाद्यभावमादायातिव्याप्तिवारणसम्भवाद्यावत्त्वगर्भलक्षणं गौरवग्रस्तमत उक्तं अत एवेत्यादीति तदप्यसङ्गतम्। प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसितत्वेन वह्निधूमोभयत्वादेस्तदव्यापकत्वासम्भवाद्वह्निधूमोभयवान्धूमादित्यादावव्याप्तिभयेन तादृशानिरुक्तेः शङ्कितुमप्यशक्यत्वात्। ननु प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोग्यधिकरणत्वं साध्यनिरूपितसाध्यतावच्छेदकसम्बन्धेन ग्राह्यमित्यलं यावत्त्वनिवेशेनेत्यत आह अत एवेत्यादीत्यपि वदन्ति। नव्यास्तु ननु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठयादृशप्रतियोगिताको यत्किञ्चिदभावो यदधिकरणावच्छेदेन तादृशप्रतियोगिताश्रयसमानाधिकरणस्तत्त्वमित्यस्यैव सम्यक्त्वे यावत्त्वगर्भलक्षणारम्भो गौरवग्रस्तः प्रमेयवान् वाच्यत्वादित्यादौ विरुद्धघटत्वपटत्वोभयगगनाद्यवच्छिन्नप्रतियोगिताकप्रमेयाभावमादाय लक्षणसम्भवात् गगनादेर्वृत्तिमत्त्वलक्षणधर्मत्वाभावात् सामान्याभावीयान्यप्रतियोगित्वं स्वरूपसम्बन्धेन प्रत्याश्रयं विभिन्नमुपेयमतो विरुद्धघटत्वपटत्वाभ्यां प्रमेयमात्रस्याभावमा-

तत्वोभयवान्मूर्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगि-
सामानाधिकरण्येऽपि भूतत्वमनोन्यत्वाद्यभावस्यातथात्वान्नातिप्र-

---

सक्त्यैव धूमवान्वह्नेरित्यादौ नातिप्रसङ्गः न चानवच्छिन्नान्तवैयर्थ्ये वह्निधूमोभयत्वावच्छिन्नाभावमादाय धूमवान्वह्नेरित्यादावतिव्याप्तेर्वारकत्वात्साध्यनिष्ठपदमपि तदर्थमेव अन्यथा गगनाद्यवच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावमादाय व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेरित्यत आह अत एवेति इत्थं च भूतत्वविशिष्टमूर्तत्वाद्यभावस्य साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नप्रतियोगिताकतया तस्य प्रतियोगिसामानाधिकरण्यं नातिव्याप्तिं सम्पादयतीत्याशयेन द्वित्वाद्यवच्छिन्नाभावपर्यन्तस्य प्रतियोगिसामानाधिकरण्यमपि साधु सङ्गच्छते परं तु प्रकृतसाध्यव्याप्यतावच्छेदकप्रतियोगिताको यः कश्चिदभावो यदधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तत्त्वमेवाव्यभिचरितत्वं कुतो नोक्तम् भूतत्वमूर्तत्वोभयत्वावच्छिन्नप्रतियोगिताव्यक्तेस्तादृशोभयात्मकसाध्यव्याप्यतावच्छेदकत्वाभावादेव तादृशोभयाभावमादायातिव्याप्त्यसम्भवादिति विभावनीयमिति प्राहुः।[केचित्तु ननु साध्यतावच्छेदकावच्छिन्नपदस्य व्यर्थतया साध्यव्यापकतावच्छेदकप्रतियोगिताकाभाव एव यावत्त्वविशेषणमुचितमित्यत आह अत एवेति उक्ताभावे यावत्त्वोपादानादेवेत्यर्थः इति प्राहुः] भूतत्वमात्मभिन्नत्वे सति विशेषगुणवत्त्वम् तच्च न व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितकल्पे भूतत्वमूर्तत्वोभयस्य व्यापकं तादृशोभयवति घटादावुत्पत्तिक्षणावच्छेदेन विशेषगुणत्वाद्यवच्छिन्नाभावसत्त्वादत उक्तं मनोन्यत्वेति।साध्यस्यैवाभावमादाय नातिव्याप्तिः सुतरां वस्त्वन्तरस्यैवेति कैमुतिकन्यायेनोक्तं मनोन्यत्वेतीत्यपि वदन्ति। अतथात्वादिति। स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादित्यर्थः। मनस्येव व्यभिचारादिति भावः। ननु यत्समानाधिकरणा यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्नेत्यादि व्यर्थम् न च [साधनसमानाधिकरणगोत्वाद्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादसंभव इति वा-

सङ्गः साधनसमानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्यव्य-क्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि येन सम्बन्धेन हेतुः तेनैव तदधिकरणं बोध्यम् तेनात्मत्वे साध्ये समवायेन हेतो-र्ज्ञानस्य विषयतयाऽधिकरणे घटादौ वर्तमानस्य साध्याभावस्या-तथात्वेऽपि न क्षतिः एवं दलान्तरेऽपि सम्बन्धभेदनिबन्धनो

---

व्यम्] तस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमा-नाधिकरणत्वात् [न चैवंरीत्या] व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् अभावस्य स्वसमानाधिकरणधर्मावच्छिन्नस्वकीययत्प्रतियोगिताश्र-यसामानाधिकरण्यं तदन्यप्रतियोगिताया एव व्याप्यवृत्तितानिरूपक-तया धूमाद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगिता-या अतथात्वेन धूमवान्वह्नेरित्यादावतिव्याप्त्ययोगादत आह साधने-त्यादि।गोत्वादीत्यादिपदेन गगनादिसंग्रहः। तथाच तद्दलानुक्तावस-म्भव एव स्यादिति भावः।नन्वेवं यत्समानाधिकरणा यावन्तः साध्य-प्रतियोगिकाभावाः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमाना-धिकरणास्तत्त्वमित्येवोच्यतां तावतैव गोत्वाद्यभावमादायासम्भवस्य व्युदासादत आह तत्तदिति । तथा चोक्तविवक्षायां द्रव्यत्वाद्येक-व्यक्तिसाध्यकसद्धेतौ लक्षणसम्भवेपि वह्निमान् धूमाज्जातिमान् सत्त्वादित्यादौ साध्यप्रतियोगिकानां तत्तद्व्यक्त्यभावानामात्मत्वाद्य-भावानां च प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरिति भावः । न च साध्यव्यापकप्रतियोगिका इत्यस्यैव सम्यक्त्वे व्यापकतावच्छे-दकप्रतियोगिताकपर्यन्तं व्यर्थमिति वाच्यम् । तत्तत्साध्यव्यक्तीनां गगनादीनां च प्रमेयत्वादिप्रकारेण साध्यव्यापकतया तदभावमादा-यासम्भवापत्तेः । न च वृत्तिमत्त्वे सति स्वानधिकरणसाध्यवन्निष्ठा-भावाप्रतियोगित्वेन साध्यव्यापकत्वं निरुच्य तत्प्रतियोगिकाभाव एव निवेश्यतामिति वाच्यम् । तस्य लक्षणान्तरत्वेप्युक्तलक्षणस्या-दुष्टत्वादिति भावः । यत्समानाधिकरणा इत्यत्र हेत्वधिकरणत्वं विशिनष्टि येनेत्यादिना । तदधिकरणमिति । तत्सम्बन्धीत्यर्थः । तेन तादात्म्येनाधिकरणाप्रसिद्धावपि तत्सम्बन्धेन सद्धेतौ नाव्याप्तिः ।

दोषः सम्बन्धैक्यविवक्षया निरसनीयः रूपादिसामान्याभावे साध्ये

---

अतथात्वेपीति। प्रतियोग्यधिकरणवृत्तित्वविरहेपीत्यर्थः। यद्यपि प्रतियोगिसामानाधिकरण्यमवश्यं स्वविशिष्टहेत्वधिकरणावच्छेदेनाग्रे विवक्षणीयम् तथा च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणानुक्तौ कालिकसम्बन्धेन धूमस्याधिकरणं महाकाले वर्तमानस्य प्रलयान्यत्वाद्यभावस्यापि यावदन्तर्गतत्वात् स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिः सम्भवति। तथापि स्वविशिष्टहेत्वधिकरणेत्यादेरुक्तावनुक्तौ चोभयथैव अयमात्मा ज्ञानादित्यत्राव्याप्तिः वह्निमान् धूमादित्यत्र स्वविशिष्टेत्याद्युक्तावेव तथेत्याशयेन प्रसिद्धोदाहरणं परित्यक्तम्। यत्तु महाकालस्यैव प्रलयान्यत्वाद्यभावविशिष्टहेत्वधिकरणत्वसम्भवात् स्वविशिष्टेत्याद्युक्तावपि वह्निमान् धूमादित्यादौ नाव्याप्तिः महाकालस्य हेतुताघटकसंयोगसम्बन्धेन धूमाधिकरणत्वाभावेपि हेतुसम्बन्धित्वानपायात् तादात्म्येन हेतोः सङ्ग्रहार्थं हेतुतावच्छेदकसम्बन्धेन यो हेतुसम्बन्धी तद्वृत्तियावदभावानामेव निवेशितत्वादिति मतं तत्तुच्छम्। संयोगमात्रेण धूमहेतोः प्रभामण्डलादौ वह्नेर्व्यभिचारितया पर्वतादिनिरूपितसंयोगेनैव तस्य हेतुत्वात्तादृशसंयोगेन च धूमस्याधिकरणे पर्वतादौ प्रलयत्वादिस्वरूपस्य प्रलयान्यत्वाद्यभावस्य वैशिष्ट्याप्रसिद्धेरावश्यकत्वात्। विभिन्नकालीनयोर्विषयतान्यसम्बन्धसामान्येनैवाधाराधेयभावविरहादिति दिक्। ननु पृथिवीत्ववान् महाकालकपालान्यतरत्वादित्यादावतिव्याप्तिः साधनसमानाधिकरणस्य महाकालान्यत्वाद्यभावस्यापि हेत्वधिकरणमहाकालाद्यवच्छेदेन कालिकसम्बन्धेन प्रतियोगिसमानाधिकरणत्वादत आह एवमिति। दलान्तरेपि प्रतियोगिसामानाधिकरण्यदलेपीत्यर्थः। एकसम्बन्धेन व्यापकत्वमन्यसम्बन्धेन प्रतियोगिसामानाधिकरण्यमित्येवं सम्बन्धभेदनिबन्धनः प्रोक्तातिव्याप्तिरूपो दोषः साध्यव्यापकताघटकसम्बन्धेन सार्द्धं प्रतियोगिसामानाधिकरण्यघटकसम्बन्धस्यैक्यविवक्षया निरसनीय इत्यर्थः। यत्सम्बन्धेन स्वावच्छिन्नानाधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदकं

यद्यत्तदन्यप्रतियोगिताकः साध्यवन्निष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकान्यप्रतियोगिको वा योभावस्तादृशसम्बन्धेन प्रतियोगिनो यदधिकरणं तद्वृत्तित्वं विवक्षितमिति फलितोर्थः । पृथिवीत्वाभावप्रतियोगित्वं तु न कालिकसम्बन्धेन पृथिवीत्वादिव्यापकतावच्छेदकं नित्यपृथिव्यां व्यभिचारात्। किं तु समवायेनैव। तेन च सम्बन्धेन पृथिवीत्वाद्यभावस्य हेत्वधिकरणमहाकालावच्छेदेन प्रतियोगिसामानाधिकरण्याभावान्नोक्तातिव्याप्तिरिति भावः । यत्तु येन सम्बन्धेन व्यापकत्वं तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्योक्तावपि नित्यज्ञानमीश्वरसविषयकत्वादित्यत्रातिव्याप्तिः साधनसमानाधिकरणस्येच्छाभिन्नत्वाद्यभावस्यापि साध्यव्यापकताघटकविषयितासम्बन्धेन यावद्धेत्वधिकरणे प्रतियोगिसमानाधिकरणत्वात् न च येन येन सम्बन्धेन व्यापकत्वं तेन तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यविवक्षणान्नोक्तदोषः तथा सति यावत्पदवैयर्थ्यापत्तेः विशेषणतासामान्येनेव साध्यवन्निरूपितविशेषणतयापि वाच्यत्वादेः साध्यव्यापकतया घटत्वादिना वाच्यत्वाद्यभावस्यैव तादृशसम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहात् धूमवान् वह्नेरित्यादौ व्यभिचारिण्यतिव्याप्तिविरहात् इति तन्मन्दम् । विषयितासम्बन्धेन व्यापकताया एवासत्त्वाद्विषयितासम्बन्धेन स्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्या स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठेत्यादिव्यापकतायास्तेन सम्बन्धेनासम्भवात् । न च तेन सम्बन्धेन स्वावच्छिन्नसम्बन्धित्वमेव व्यापकतायां निवेशनीयम् । त्वदुक्तातिप्रसङ्गभयेनैव तस्यानिवेशनीयत्वात् । न च तत्सम्बन्धावच्छिन्नायाः साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकधर्मवत्त्वलक्षणं व्यापकत्वं विषयितासम्बन्धेन सुलभं साध्यवति नित्यज्ञाने वस्तुमात्रस्यैव विषयितासम्बन्धेन सत्त्वेपि नित्यज्ञानान्यत्वाविशिष्टघटादेर्विषयितासम्बन्धेनाभावस्य तत्र सत्त्वे बाधकाभावादिति वाच्यम्। विषयिताया वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः । यदपि मनस्त्ववत् अणुत्वादित्यत्रातिव्याप्तिः परमाणुत्वसमानाधिकरणस्य मनस्त्वाद्यभावस्यापि साध्यव्यापकताघटकदिक्कृतविशेषणतया सर्वत्रैव परमाणौ प्रतियोगिसमा-

नाधिकरणत्वादिति तदपि तुच्छम् । नित्यानामव्यावर्तकत्वाज्जन्यानामेव मूर्तानां दिगुपाधितया परमाणौ दिक्कृतविशेषणतया कस्याप्यसत्त्वात् तेन सम्बन्धेन साध्यव्यापकत्वविरहात् । अन्यथा वस्तुमात्रस्यैव कालोपाधित्वसम्भवात्तदपि जन्यमात्रस्य न स्यात् । अत एव प्रलयदशायां दिग्देशविभागो नास्तीत्यादिसिद्धान्तः सङ्गच्छते । अन्यथा परमाणूनां सत्त्वात्तदानीमपि दिग्विभागप्रसङ्गादिति दिक् । यदि च स्पन्दो महाकालत्वादित्यादावतिव्याप्तिः साधनसमानाधिकरणस्य महाकालान्यत्वाद्यभावस्यापि साध्यव्यापकताघटककालिकसम्बन्धेन महाकाले प्रतियोगिसमानाधिकरणत्वात् न चायं स्पन्द इत्याकारकयत्किञ्चिद्बोधव्यक्तेर्विषयतासम्बन्धेनैव स्पन्दत्वव्यापकत्वात् यावदन्तर्गतस्य तदभावस्यैव साध्यव्यापकताघटकविषयतासम्बन्धेन हेत्वधिकरणमहाकाले प्रतियोगिसमानाधिकरणत्वाभावान्नातिव्याप्तिः न हि तादृशबोधव्यक्तौ कालिकसम्बन्धेनापि स्पन्दत्वव्यापकत्वं भाविभूतेषु स्पन्देषु व्यभिचारादिति वाच्यं विषयतायाः ज्ञानसमानकालीनतया तद्बुद्धिव्यक्त्यभावदशायामेव स्पन्दत्ववति विषयतासम्बन्धेन तत्तद्बुद्धिव्यक्त्यभावस्य सत्त्वाद्विषयतासम्बन्धेनायं स्पन्द इत्याकारकजन्यबुद्धेः साध्यव्यापकत्वासम्भवात् किं च व्यधिकरणधर्मावच्छिन्नाभावस्यासत्त्वेपि व्यधिकरणसम्बन्धावच्छिन्नवाच्यत्वाद्यभावमादायैव केवलान्वयिसाध्यकस्थले लक्षणसमन्वया-प्रतियोग्यवृत्तिश्चेत्यादिमूलस्य तद्दूषकत्वानुपपत्तेः न च साध्यवन्निष्ठाभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमेवस्वरूपव्यापकतायां व्यधिकरणधर्मावच्छिन्नाभावमादायासम्भववारकस्य सामानाधिकरण्येनेत्यस्य व्यर्थतायामेव तन्मूलग्रन्थस्य तात्पर्यमिति वाच्यं सामान्यधर्मेण विशेषाभावमादाय व्यापकत्वस्याप्रसिद्धेर्वारणार्थमेव सामानाधिकरण्यदलस्य व्यापकतायामवश्यं निवेशनीयत्वादित्याकं विभाव्यते तदा सम्बन्धैक्यविवक्षयेति ग्रन्थस्य साध्यव्यापकत्वस्य तदवच्छेदकप्रतियोगित्वस्य प्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वस्य चैकसम्बन्धावच्छिन्नत्वविवक्षयेत्यर्थः । तथा च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रति-

योगिसमानाधिकरणा इत्यर्थलाभात् यावदन्तर्गतस्य समवायादिसम्बन्धेन नित्यज्ञानत्वमनस्त्वस्पन्दत्वाद्यभावस्य स्वप्रतियोगितावच्छेदकीभूतसमवायादिसम्बन्धेन यावद्धेत्वधिकरणे प्रतियोग्यसमानाधिकरणत्वात् नित्यज्ञानं नित्यमविषयकत्वात् मनस्त्ववत् अणुत्वात् स्पन्दो महाकालत्वादित्यादौ कुत्रापि नातिव्याप्तिः । नचैवं वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः व्यधिकरणधर्मावच्छिन्नवाच्यत्वाद्यभावस्यैव तत्र घटकतया तस्य प्रतियोगितावच्छेदकसम्बन्धसत्त्वे मानाभावादिति वाच्यम् । स्वरूपसम्बन्धेन घटत्वादिना वाच्यत्वं नास्तीत्यादिप्रतीत्यनुरोधेन तादृशाभावस्यापि प्रतियोगितावच्छेदकसम्बन्धस्वीकारात् । अन्यथा भूतलं संयोगेन पटत्वावच्छिन्नघटवदित्येवं निर्णयसत्त्वेऽपि भूतले संयोगेन पटत्वेन घटो नास्तीति प्रत्ययप्रसङ्गात् । न चैवमपसिद्धान्तः । व्यधिकरणधर्मावच्छिन्नोऽपि चेदभावः प्रामाणिकस्तदा सर्वैः सम्बन्धैस्तत्प्रतियोगिता अवच्छिद्यन्तामिति ग्रन्थकृतैव सामान्याभावे वक्ष्यमाणत्वात् । केचित्तु सम्बन्धैक्यविवक्षयेत्यस्य साध्यवत्त्वं साध्यव्यापकत्वं प्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वं चैकेन साध्यतावच्छेदकसम्बन्धेन विवक्षणीयमित्यर्थः तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकीभूततादृशसम्बन्धावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणा इत्यर्थलाभान्न कुत्राप्यतिव्याप्तिः न च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षणं व्यर्थमिति वाच्यम् तदनुक्तौ वाच्यत्वादिभेदमादायैव केवलान्वय्यादौ लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिमूले तन्निराकरणस्यासङ्गतत्वापत्तेः न चैवमपि सर्वत्र वाच्यत्वाद्यभावस्येत्यादिग्रन्थविरोधः वाच्यत्वादेः संयोगादिसम्बन्धेन धूमाद्यव्यापकत्वादिति वाच्यम् वाच्यत्वाद्यभावस्येत्यादिपदसत्त्वात् यत्र स्वरूपसम्बन्धेन साध्यता तत्र वाच्यत्वाद्यभावमादाय संयोगादिसम्बन्धेन साध्यतायां च द्रव्याद्यभावमादायातिव्याप्तिपरतयैव तत्सङ्गतेरित्याहुः । तन्मन्दम् । मनोन्यत्वाद्यभावस्येत्याद्युक्तग्रन्थविरोधात् । भूतत्वमूर्तत्वोभयस्य समवायेन साध्यतायां मनोन्यत्वस्य तत्सम्बन्धेन साध्यव्यापकत्वासम्भवात् । वृत्त्यनियामकसम्बन्धेनाधिकरणत्वस्य प्रतियोगित्वस्य चाप्रसिद्ध्या

तेन साध्यतायां धनी चैत्रत्वादित्यादिसद्धेतावव्याप्तिः । तद्रूपान्य-रूपं रूपत्वादित्यादावतिव्याप्तेश्च । साध्यताघटकसमवायेन साध्य-व्यापकतावच्छेदकप्रतियोगिताकानां व्यधिकरणधर्मावच्छिन्नगुण-त्वाद्यभावानां सर्वेषामेव स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियो-गिसमानाधिकरणत्वादिति । यत्तु विशेषणताविशेषेण साध्यव्याप-कत्वं तेनैव च प्रतियोगित्वं प्रतियोगिसामानाधिकरण्यं च सम्ब-न्धैक्यविवक्षेत्यस्यार्थमाह तदपि गवाद्यभावस्यात्मत्वाद्यभावस्येत्या-दिग्रन्थस्यालग्नकतापत्तेरुपेक्षितमिति । नन्वेतावताप्ययमात्मा ज्ञाना-दित्यादावव्याप्तिरेव घटत्वादिनात्मत्वसामान्याभावस्यापि स्ववि-शिष्टस्य हेतोर्विषयतयाधिकरणे घटादौ व्यापकताघटकसमवायेन प्रतियोगिसामानाधिकरण्याभावादत आह दलान्तरेति पश्चादुक्ते-हेत्वधिकरणावच्छेदेनेत्यत्र हेत्वधिकरणदलेपीत्यर्थः [ सम्बन्धभेद-निबन्धनो दोषः एकसम्बन्धेन हेत्वधिकरणत्वं स्वविशिष्टहेत्वधिक-रणेत्यत्रान्यसम्बन्धेन हेत्वधिकरणत्वनिबन्धनोऽव्याप्तिरूपो दोष इत्यर्थः ] सम्बन्धैक्यविवक्षयेति हेतुसमानाधिकरणा इत्यत्र हेत्व-धिकरणत्वं येन सम्बन्धेन स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यत्र हेत्वधिकरणत्वं तेनैव सम्बन्धेनेति विवक्षयेत्यर्थः इत्थं च दला-न्तरपदमपि साधु सङ्गच्छत इति तु नव्याः । यद्वा धूमवान्वह्नेरि-त्यत्रातिव्याप्तिः धूमसामान्याभावस्यापि हेत्वधिकरणायोगोलका-वच्छेदेन स्वप्रतियोगित्वस्य कालिकसम्बन्धेनाश्रयीभूतवह्न्यादेः स-मानाधिकरणत्वादत आह दलान्तरेपीति । प्रतियोगिसामानाधिकर-ण्यमित्यत्र प्रतियोगिताश्रयदलेपीत्यर्थः । सम्बन्धभेदनिबन्धनो दो-षः प्रकृतसाध्यव्यापकत्वस्यैकसम्बन्धावच्छिन्नावच्छेदकताकप्रति-योगितकाभावस्यान्यसम्बन्धावच्छिन्नप्रतियोगिताश्रयीभूतवह्न्यादेः सामानाधिकरण्यनिबन्धनो दोषः सम्बन्धैक्यविवक्षया यत्सम्बन्धेन व्यापकतावच्छेदकत्वं प्रतियोगिसामानाधिकरण्यमित्यत्रापि तेन स-म्बन्धेन प्रतियोगिताश्रयत्वविवक्षयेत्यर्थ इति संक्षेपः । अत्र सम्बन्धै-क्याविवक्षायां रूपसामान्याभाववान् पृथिवीत्वाज्जन्यपृथिवीत्वाद्वे-त्यादिविरुद्धहेतावप्यतिव्याप्तिः साधनसमानाधिकरणस्य पृथिव्यन्य-त्वाद्यभावस्यापि हेत्वधिकरणपृथिव्यवच्छेदेन जन्यपृथिव्यवच्छेदेन वा दिक्कृतविशेषणतया प्रतियोगिसमानाधिकरणत्वात् मूर्तमात्र-

पृथिवीत्वादिकं सद्धेतुरेव प्रलये परमाणावुत्पत्तिकाले चावयविनि तत्सत्त्वात् नच प्रतियोगिवत्तद्ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वम् मानाभावात् अतएव अन्तराश्यामे रक्तं रूपं नास्तीति

---

स्यैव दिगुपाधित्वोपगमात् न च तस्यालक्ष्यत्वे नीरूपमित्याकारकयत्किञ्चित्प्रमाव्यक्तेर्विषयतासम्बन्धेन साध्यव्यापकत्वाद्यावदन्तर्गतस्य तदभावस्यैव हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः तादृशबुद्धिव्यक्तेर्विभिन्नकालीनघटादौ केनापि सम्बन्धेनासत्त्वादिति वाच्यम् विषयताया ज्ञानसमानकालीनतया तादृशबुद्ध्यभावदशायामेव रूपशून्ये गगनादौ विषयतासम्बन्धेन तद्बुद्ध्यभावप्रतियोगित्वावच्छिन्नाभावसत्त्वात्तादृशज्ञानव्यक्त्यभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावात् स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठत्यादिव्यापकतायास्तद्बुद्धिव्यक्तौ सत्त्वेपि प्रतियोगिवैयधिकरण्याघटितव्यापकत्वस्य तद्बुद्धिव्यक्तावसत्त्वेनोक्तस्थलेऽतिव्याप्तेरावश्यकत्वादिति भ्रमं निराकुरुते रूपसामान्येत्यादिना । पृथिवीत्वादिकमिति । नित्यपृथिव्या दिगुपाधित्वे मानाभावादादिपदम् । तेन जन्यपृथिवीत्वाद्युपग्रहः । सद्धेतु-प्रतिकूलविरोधं निरस्यति प्रलय इति । महाप्रलय इत्यर्थः खण्डप्रलये तु पार्थिवपरमाणौ रूपमस्त्येव अन्यथोत्तरसर्गे पार्थिवद्व्यणुकस्य रूपोत्पत्त्यर्थं परमाणौ पाकान्तरकल्पनापत्तेरिति प्राञ्चः। प्रलय इत्यस्य पाकेन रूपादेः प्रलयदशायामित्यर्थः तेन महाप्रलयानभ्युपगमेपि न क्षतिः उत्पत्तिकाले चेत्यत्र चकारेण निरुक्तप्रलयस्यानुकर्षणाच्चावयविन्यपि पाकदशायां तत्सत्त्वात् न ग्रन्थन्यूनतेत्यपरे । ननु विरोधविरहे घटाद्यवच्छेदेन व्यभिचारित्वात्कुतः सद्धेतुत्वमत आह उत्पत्तीति । यद्यपि पाकेन श्यामादिरूपनाशकालेपि अवयविनि रूपसामान्याभावसत्त्वं तथापि पीलुपाकवादिमते तदसम्भवात् अपच्यमानावयव्यनुरोधाच्च उत्पत्तिकालमात्रानुसरणम् । तत्सत्त्वादिति । रूपादिसामान्याभावसत्त्वादित्यर्थः । प्रतियोगिवदिति । प्रतियोगिन इवेत्यर्थः । विरोधित्वं एकदैकदेशावृत्तित्वम् । मानाभावादिति । प्रलयाद्यवच्छेदेन परमाण्वादौ रूपादि-

प्रत्ययः न चैष रक्तिमध्वंसाद्यवगाही पूर्वापररक्तिमध्वंसप्राग-
भाववति रक्तेऽपि तथाप्रत्ययप्रसङ्गात् तत्सामानाधिकरण्यञ्च

———

सामान्याभावे तु योग्यसन्निकर्षाभावात् प्रत्यक्षासम्भवेऽप्यनुमा-
नादिकमानमस्तीत्याशयः। यत्तु घटादावुत्पत्तिकालावच्छेदेन रूप-
सामान्याभावस्य प्रत्यक्षमेव सम्भवति तदानीं चक्षुःसंयुक्तविशे-
षणतायास्तत्रासत्त्वेऽपि द्रव्यसमवेतवृत्त्यभावप्रत्यक्षहेतोश्चक्षुःसंयु-
क्तसमवेतविशेषणतायाः सत्त्वेन संनिकर्षसम्भवादिति तत्तुच्छम्।
चक्षुःसंयुक्तसमवेतद्व्यणुकविशेषणतया रूपाद्यभावचाक्षुषापत्त्या
चक्षुर्योग्यसंयुक्तसमवेतविशेषणताया एव अभावग्राहकत्वेन द्र-
व्यान्यद्रव्यसमवेतवृत्त्यभावचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वा-
त्। अन्यथा त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारापत्तेः। वस्तुतः
स्वोत्पत्तेः पूर्वं चक्षुःसंयुक्तसमवेतस्य घटादेरसत्त्वात्तद्विशेषणताया
अपि तदानीमसत्त्वात्तदुक्तक्रमेण हेतुतैव नास्तीति ध्येयम्। अत
एवेति। ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे मानाभावादेवेत्य-
र्थः। रक्तिमध्वंसप्रागभावयोः सत्त्वमावेदयितुमन्तरापदम्। रक्तं
रूपमिति। न च गुणे शुक्लादयः पुंसीत्यनुशासनात् रक्तो नास्ती-
त्येव प्रयोगो युक्त इति वाच्यम्। वस्त्वन्तरविशेषणतानापन्नस्यैव शु-
क्लादिशब्दस्य पुंस्त्वानुशासनात्। अत एव शुक्लं रूपमिति प्रयोगः
समासे मणिकृतैव वक्ष्यत इति ध्येयम्। एष रक्तं रूपं नास्तीति प्र-
त्ययः। पूर्वेत्यादि। पूर्वरक्तस्य ध्वंसवति उत्तररक्तस्य प्रागभाववति
इदानीं रक्तेपीत्यर्थः। न च रक्ततादशायां वर्तमानस्यापि रक्तान्तर-
ध्वंसादेस्तदानीं रक्तत्वावच्छिन्नप्रतियोगिताकत्वविरहान्न तादृशा-
प्रत्ययस्तस्याव्याप्यवृत्तित्वादिति वाच्यम्। ध्वंसादिप्रतियोगित्वस्य
किञ्चिद्धर्मानवच्छेद्यत्वात्। तत्तदनन्तध्वंसप्रागभावादिषु रक्तत्वा-
वच्छिन्नप्रतियोगिताकत्वकल्पनामपेक्ष्य रक्तत्वावच्छिन्नात्यन्ताभाव-
सम्बन्धस्यैवान्तराश्यामादिषु कल्पनाया लघुत्वाच्च। न च यावन्ति
रक्तरूपाणि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियो-
गिताकाभावकूटैरेव रक्तं रूपं नास्तीति प्रत्ययः क्रियते प्रकृते च वि-
द्यमानरूपप्रतियोगिकस्य तादृशाभावस्यासत्त्वान्न तथा प्रतीतिरिति

स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम् तेन गोत्व-जन्यद्रव्यत्व-प्र-

---

वाच्यम् । तथा सत्यन्तरा श्यामे रक्तं रूपं नास्तीत्याकारकनिर्णयेपि तत्र रक्तं रूपमस्तीति प्रत्ययापत्तेः । विरोधिनः सामान्याभावस्यानिश्चयात् । विशेषाभावकूटनिर्णयस्याप्रतिबन्धकत्वात् । अन्यथा सामान्याभाव एव न सिद्ध्येदिति भावः । प्राञ्चस्तु प्रतियोगितासम्बन्धेन रूपत्वमात्रावच्छिन्नप्रकारताकः संसर्गाभावविशेष्यकः प्रत्ययो रूपत्वावच्छिन्नप्रकारताकबुद्धेर्विरोधीति रूपत्वं प्रतियोगितावच्छेदकमत्र नेति श्यामतादशायां रूपत्वावच्छिन्नाभाव एव रूपं नास्तीतिप्रतीतेर्न विषयः किमनुरोधेन रूपध्वंसादिमति तदत्यन्ताभावसिद्धिरित्याहुः । तन्मन्दम् । अन्तरा श्यामे समवायेन रक्तं रूपं नास्तीतिप्रतीतेः प्रामाण्यानुरोधेनैव ध्वंसात्यन्ताभावयोर्न विरोधः । अन्यथा समवायावच्छिन्नप्रतियोगिताकध्वंसाद्यप्रसिद्ध्या तत्प्रतीतेर्भ्रमत्वापत्तेरिति तु परमार्थः । तत्सामानाधिकरण्यं चेति । प्रतियोगिसामानाधिकरण्यं चेत्यर्थः । स्वविशिष्टेति । स्वपदं लक्षणघटकतत्तदभावव्यक्तिपरम् । तथा च तत्तदभावाश्रयीभूतं यद्धेतुताघटकसम्बन्धेन हेतुतावच्छेदकधर्मावच्छिन्नाधिकरणं तदवच्छेदेन तत्तदभावे स्वस्वप्रतियोगिसामानाधिकरण्यं ग्राह्यमित्यर्थः । तेन हेतुसमानाधिकरणस्य घटत्वादिना वह्न्याद्यभावस्यापि कालिकसम्बन्धेन धूमाद्यधिकरणस्पन्दादौ व्यापकताघटकसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्याभावेपि वह्निमान् धूमादित्यादौ नाव्याप्तिः । न वा द्रव्यं विशिष्टसत्त्वादित्यादौ घटत्वादिना द्रव्यत्वाद्यभावस्य हेत्वधिकरणाद्यवच्छेदेन प्रतियोग्यसमानाधिकरणत्वेपि क्षतिः । गुणादीनां विशिष्टसत्तानधिकरणत्वात् । यद्यपि व्याप्यवृत्तेरवच्छेदकसत्त्वे मानाभावाद्द्रव्यत्वाद्यभावनिष्ठं यत्प्रतियोगिसामानाधिकरण्यं तदवच्छेदकत्वं न हेत्वधिकरणस्येत्यसम्भवः कथितातिव्याप्तितादवस्थ्यं च न च स्वविशिष्टहेत्वधिकरणताव्यापकीभूतप्रतियोग्यधिकरणतावद्वृत्तित्वं वाच्यं स्वविशिष्टपदवैयर्थ्यापत्तेः प्रतियोग्यकरणीभूतस्वविशिष्टयावद्धेत्वधिकरणवृत्तित्वस्योक्तौ द्रव्यं तद्घटत्वादित्यादावव्याप्तिः यावद्धेत्वधिकर-

लयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरणधर्म्यवच्छेदेन तद्वति काले महाकाले वा वृत्तावपि यदा गोत्वं तदा गौर्यत्र कालत्वं तत्र जन्यद्रव्यम् प्रलयावृत्ति वेत्यादौ नातिप्रसङ्गः हेतुमति

---

णाप्रसिद्धेः। तथापि यावन्तो हेतुमद्वृत्तिधर्माः हेत्वधिकरणत्वानि वा यावन्ति तत्प्रत्येकाश्रयीभूतप्रतियोग्यधिकरणवृत्तित्वस्य विवक्षितत्वाददोषः। एकमात्रवृत्तिहेतोरपि तत्तत्क्षणवृत्तित्वविशिष्टस्य बहून्यधिकरणत्वानि सन्तीति न तत्राव्याप्तिः। न च प्रतियोग्यधिकरणवृत्तिस्वविशिष्टयावद्धेत्वधिकरणताकत्वमात्रं सम्यक् स्वविशिष्टपदस्य हेतुसमानाधिकरणा इत्यस्य च वैयर्थ्यापत्तेरिति भावः। प्रागुक्तमपि स्वविशिष्टपदं हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे एवार्थवद्भवति इत्यतः पश्चादुक्तस्यापि तस्य प्रथमं प्रयोजनमाह तेनेति। गोत्वादिना गवाद्यभावस्य तद्वति काले वृत्तावपि यदा गोत्वं तदा गौरित्यादौ नातिप्रसङ्ग इति योजना। इदमुपलक्षणम्। तत्तद्योगोलकान्यत्वाद्यभावस्यापि प्रतियोगिसमानाधिकरणत्वाद्धूमवान्वह्नेरित्यादावतिप्रसङ्गो द्रष्टव्यः। गवाद्यभावस्य प्रतियोग्यधिकरणे दैशिकसम्बन्धेनापि वृत्तित्वमुपपादयितुमाह गवाद्यनधिकरणेति। इदानीं चत्वरे गौर्नास्तीतिप्रत्ययात् गोमत्यपि काले कालिकसम्बन्धावच्छिन्नगवाद्यभावस्य गवानधिकरणकालाद्यवच्छेदेन वृत्तौ न विरोधः। न चैतत्प्रत्ययस्य चत्वर एवैतत्कालावच्छेदेन गवात्यन्ताभावो विषय इति वाच्यम्। देशे वृत्तौ कालस्येव काले वृत्तौ देशस्यावच्छेदकत्वानुभवादेकशेषस्य कर्तुमशक्यत्वात्। इदानीं गगने गौर्नास्तीतिप्रतीतेर्गवाद्यभावस्यैतत्कालावच्छेदेन गगनवृत्तित्वावगाहितायां भ्रमत्वापत्तेश्च। गवाद्यभावस्य गगनादौ सार्वदिकत्वेन व्याप्यवृत्तितया कालावच्छेद्यत्वासम्भवादिति भावः। तद्वतीति। गवादिमतीत्यर्थः। काले जन्यकाले। ननु चरमध्वंसात्मकस्य प्रलयात्यन्ताभावाभावस्यापि यावदन्तर्गतत्वात्तस्य सृष्टिकाले प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरत आह महाकाले वेति। तथाच तस्यापि महाकाले प्रतियोगिसामानाधिकरण्यात्तस्य कालिकसम्बन्धेन जगदाधारत्वादिति भावः। ननु गोत्वादिजातेः प्रलये कालिकसम्बन्धेन

प्रलये तत्सामानाधिकरण्याभावात् स्वविशिष्टेति विशेषणात्कपि-

---

सत्त्वे प्रमाणाभावाद्यदा गोत्वं तदा गौरिति सद्धेतुरेवेति यदि ब्रूया-
त्तदाप्याह यत्र कालत्वमिति। उक्तविवक्षानादरे घटादिसाधारणरूपे-
ण गोः साध्यतायामतिव्याप्तिरित्याशयेन साध्यान्तरमाह जन्यद्र-
व्यमिति। द्रव्यस्य साध्यतायां कालत्वं सद्धेतुरेव प्रलये कालिक-
सम्बन्धेन परमाण्वादेः सत्त्वात् कार्यद्रव्यानधिकरणीभूतत्वे सति
द्रव्यवत्त्वेनैव धर्मिग्राहकप्रमाणेन तत्सिद्धेरतो व्यभिचारित्वसम्प-
त्तये जन्यपदम्। ननु महाप्रलयानङ्गीकारे प्रागुक्तहेतुद्वयमेव लक्ष्यं
खण्डप्रलयेपि ब्रह्माण्डान्तरे जन्यद्रव्यसत्त्वात् अतः साध्यान्तरमाह
प्रलयावृत्ति वेति। खण्डप्रलयावृत्ति वेत्यर्थः। यद्यपि प्रतियोगिनो
यदधिकरणं तद्वृत्तित्वस्य दैशिकसम्बन्धेन विवक्षायामपि यदा
गोत्वं तदा गौरित्यादावतिव्याप्तिवारणं सम्भवति प्रलयाद्यवृत्तित्वा-
वच्छिन्नाभावस्य प्रतियोग्यधिकरणे महाकालादौ दैशिकविशेषण-
तासम्बन्धेन वृत्तित्वविरहात् न च द्रव्यं महाकालत्वादित्यादाव-
व्याप्तिः कालिकसम्बन्धेन महाकालनिष्ठस्य द्रव्यत्वाद्यभावस्य स्व-
प्रतियोग्यधिकरणे दैशिकविशेषणतया वृत्त्यभावादिति वाच्यं हे-
तुसमानाधिकरणत्वस्यापि तादृशविशेषणतया विवक्षणीयत्वात् त-
थापि रूपभिन्नं गुणत्वादित्यादौ साधनसमानाधिकरणस्य रूपान्य-
त्वाद्यभावस्य रूपभिन्नत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्य च रूप-
त्वादिस्वरूपतया दैशिकविशेषणतासम्बन्धेन वृत्तित्वविरहेण या-
वदन्तर्गतत्वात् घटत्वादिना रूपभिन्नत्वाद्यभावस्य च सर्वस्यैव
तादृशाभावस्य महाकालादौ स्वप्रतियोगिसमानाधिकरणत्वादति-
व्याप्तिरतः स्वविशिष्टहेत्वधिकरणेत्यादिविवक्षानुसरणमिति वद-
न्ति। वस्तुतो दैशिकविशेषणताघटितस्य लक्षणान्तरत्वादेकेनापर-
स्यान्यथा कर्तुमशक्यत्वादुक्तलक्षणे न वैयर्थ्यमिति परमार्थः। यत्तु-
हेत्वधिकरणे विशेषणतया वर्तमानानां निरुक्तयावदभावानां प्रति-
योगिवृत्तित्वमेव विशेषणतासम्बन्धेनोचितं प्रतियोग्यधिकरणवृत्ति-
त्वप्रवेशे गौरवात् सर्वत्र व्यभिचारिस्थलान्यत्वाद्यभावमादायाति-
व्याप्त्यभावादिति तत्तुच्छम्। स्ववृत्तित्वविशिष्टानां केवलान्वयिध-

संयोगाभाववान् मेयत्वादित्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो न तु धूमाद्यभावो जलादावपि तदभावप्रत्ययप्रसङ्गात् यत्समानाधिकरणानां

———

गाणामत्यन्ताभावस्य स्वप्रतियोग्यवृत्तित्वेनासम्भवापत्तेः । न हि वाच्यत्वादिवृत्तित्वविशिष्टानां वाच्यत्वादीनामभावो वाच्यत्वादिरूपप्रतियोगिवृत्तिरिति दिक् । प्राचां मते संयोगसामान्याभावसाध्यकं मेयत्वं द्रव्य एव व्यभिचारीत्यतः कपिपदम् । प्रतियोगिवैयधिकरण्यघटितमेव साध्यव्यापकत्वमत्र प्रवेशितम् । यथासन्निवेशे वैयर्थ्यविरहादतस्तदवच्छेदकत्वस्य संयोगाभावनिष्ठप्रतियोगित्वेऽप्यक्षतेरित्याशयेन संयोगात्मकाभावस्याभिधानम् । तद्घटितसाध्यव्यापकतायाः प्रवेशे तु गगनत्वादिविशिष्टवाच्यत्वाद्यभावगगनत्ववाच्यत्वोभयत्वावच्छिन्नाभावद्वैयावदन्तर्गतत्वात्तस्य च हेत्वधिकरणीभूतगगनावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरतः स्वविशिष्टपदम् । एतदभिप्रायेणैव संयोगाद्यात्मकाभावेत्यत्राद्यपदमुदात्तम् । वस्तुतः सत्तावान् द्रव्यत्वात् गुणत्ववान् रूपत्वात् इत्यादौ काले जन्यरूपे च हेतुसमानाधिकरणस्य सत्ताभावस्य गुणत्वसामान्याभावस्य च केनापि सम्बन्धेनात्मगगनादौ नित्यरूपे चावृत्तित्वाद्धेत्वधिकरणावच्छेदेन तस्यैव यावदन्तर्गतस्य प्रतियोगिसामानाधिकरण्यविरहादव्याप्तिः स्याद्यदि स्वविशिष्टपदं न स्यादिति दिक् । ननु धूमाद्यभावनिष्ठो जलादिवृत्तित्वविशिष्टगोत्वाभावस्याभावो धूमाभाव एवाभावप्रतियोगिकस्याभावाधिकरणकाभावस्याधिकरणस्वरूपत्वात् तथा च धूमादौ साध्ये वह्न्यादिहेतावतिव्याप्तिर्धूमाद्यभावस्य हेत्वधिकरणावच्छेदेन गोत्वाद्यभावरूपप्रतियोगिसमानाधिकरणत्वादत आह जलादिवृत्तीति । न च तादृशाभावस्य धूमाभावस्वरूपत्वेपि जलादेर्न तादृशाभावत्वावच्छिन्नाधिकरणत्वम् किं तु धूमाभावत्वावच्छिन्नाधिकरणत्वमेवेति न प्रत्ययातिप्रसङ्ग इति वाच्यम् । एवं सत्यभावमात्रस्यैव प्रायेणाभेदप्रसङ्गात् । उक्तक्रमेणैवातिप्रसङ्गवारणसम्भवादिति भावः । ननु

तथापि धूमवान् वह्नेरित्यादावतिव्याप्तिः समनियताभावानामैक्याद्धूमाभावस्य वह्निधूमोभयाभावादभिन्नस्यायोगोलकान्यत्वाभावादेश्चायोगोलकभेदत्वादिना भेदसामान्याभावादभिन्नस्य हेत्वधिकरणावच्छेदेनैव वह्न्यादिभेदाद्यात्मकप्रतियोगिसामानाधिकरण्यादिति चेदत्राहुः यावत्पदस्य फलतः प्रतियोगिताविशेषणत्वेन साध्यव्यापकतावच्छेदकीभूतयद्यत्प्रतियोगिताकोभावस्तस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षितम् तथा च धूमादिसामान्याभावस्य धूमादिनिष्ठतादृशप्रतियोगिताकस्य धूमादिनिष्ठप्रतियोगिताश्रयेण धूमादिना हेत्वधिकरणावच्छेदेन सामानाधिकरण्यविरहान्नातिव्याप्तिः न च यत्समानाधिकरणा इत्यस्य वैयर्थ्यम् आत्मत्वसामान्याभावीयप्रतियोगितायाः अपि साध्यव्यापकतावच्छेदकतया तत्प्रतियोगिताकस्यात्मत्वसामान्याभावस्य तादृशप्रतियोगिताश्रयसामानाधिकरण्यविरहादयमात्मा ज्ञानादित्यादावव्याप्तिवारकत्वात् जलादिवृत्तित्वविशिष्टेत्यादिग्रन्थस्तु वस्तुगतिमनुरुध्यैवोक्तस्तेन तादृशाभावस्य धूमाभावस्वरूपत्वेपि तस्य हेत्वधिकरणावच्छेदेन साध्यव्यापकतावच्छेदकीभूतधूमनिष्ठप्रतियोगिताव्यक्त्याश्रयसामानाधिकरण्यविरहादेवातिव्याप्त्यसम्भवेपि न क्षतिः न च धूमत्वेन धूमाभावस्य धूमनिष्ठं यत्प्रतियोगित्वं तदेव धूमत्वेन प्रमेयसामान्याभावस्य प्रमेयसामान्यनिष्ठं प्रतियोगित्वं लाघवान्न तु तद्भिन्नं प्रतियोगित्वान्तरं गौरवादित्युक्तविवक्षयाप्यप्रतीकार इति वाच्यम् स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः सामान्याभावस्थलेपि प्रतियोगिभेदेनैव भिन्नत्वादिति साम्प्रदायिकाः । वस्तुतः साध्यव्यापकतावच्छेदिकायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नाया यादृशप्रतियोगिताया निरूपकोभावस्तस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन तादृशप्रतियोगिताश्रयसामानाधिकरण्यमेव वक्तव्यम् तथा च धूमादिसामान्याभावस्य धूमत्वादिना प्रमेयसामान्याभावानतिरेकेपि तदीयं प्रमेयसामान्यनिष्ठं प्रतियोगित्वं स्वन्यूनवृत्तिनैव धूमत्वधर्मेणावच्छिन्नमतो न तादृशप्रतियोगिताश्रयसामानाधिकरण्यमादायातिप्रसङ्ग इति युक्तमुत्पश्यामः । यत्तु समनियताभावानामैक्यमते धूमवान्वह्नेरित्यादावतिव्याप्तिवारणार्थं येन येन सम्बन्धेन व्यापकत्वं तेन तेन प्रत्येकं प्रतियोगिसामाना-

साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियो-
गिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामाना-

———

धिकरण्यं विवक्षितम् तथा च व्यभिचारिमात्र एव यत्राधिकरणे व्यभिचारस्तदन्यत्वस्य स्वात्मकस्वरूपसम्बन्धेनापि साध्यव्यापकत्वात्तदभावस्य च हेत्वधिकरणावच्छेदेन तादृशान्यत्वनिरूपितस्वरूपसम्बन्धेन प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः अत एव विषयितासम्बन्धस्य व्यापकताघटकत्वेपि नित्यज्ञानं नित्यसविषयकत्वादित्यादौ नातिव्याप्तिः नित्यज्ञानत्वाद्यभावस्य व्यापकताघटकीभूतसमवायसम्बन्धेन प्रतियोग्यसमानाधिकरणत्वादिति मतं तत्तुच्छम् । घटत्वादिना वाच्यत्वाद्यभावस्यैव घटत्वादिनायःपिण्डान्यत्वाद्यभावरूपतया तस्य व्यापकताघटकायःपिण्डान्यत्वनिरूपितस्वरूपसम्बन्धेन यावद्धेत्वधिकरणे प्रतियोगिसामानाधिकरण्यविरहादेव धूमवान् वह्नेरित्यादावतिव्याप्तिविरहाद्यावत्पदस्य स्वविशिष्टेत्यस्य यत्समानाधिकरणा इत्यस्य च व्यर्थतापातादिति दिक् । ननु व्यधिकरणधर्मावच्छिन्नाभावासत्त्वेपि सर्वत्र सद्धेतौ घटत्वादिविशिष्टवाच्यत्वाद्यभावं गगनवाच्यत्वोभयाभावं वा समादाय प्रोक्तलक्षणसम्भवात्प्रतियोग्यवृत्तिश्चेतिमूलावतारानुपपत्तिः। न च वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन व्यापकतावच्छेदकीभूतप्रतियोगिताया विशेषणीयत्वान्नैवमिति वाच्यं व्यभिचारावारकत्वेन तादृशविशेषणस्य व्यर्थत्वात् अन्यथा व्यधिकरणधर्मावच्छिन्नाभावसमानकालीनत्वेनापि हेतुं विशिष्यैव ग्रन्थावतारणं कुतो न समर्थयेदतो लक्षणान्तरमाह यत्समानाधिकरणानामिति। वह्निमान्धूमात्सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः साध्यव्यापकप्रतियोगिकानां जलत्वविशिष्टद्रव्यत्वाभावगुणत्वविशिष्टसत्त्वाद्यभावानां स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगितावच्छेदकीभूतजलत्वविशिष्टद्रव्यत्वत्वाद्यवच्छिन्नसामानाधिकरण्याभावादत उक्तं रूपावच्छिन्नेति । तथा च जलत्वविशिष्टद्रव्यत्वत्वादेः साध्यव्यापकतानवच्छेदकत्वाददोषः । यत्तु साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य घटत्वेन वह्न्यभावस्य यावद्धेत्वधिकरणे घटत्वाव-

भावो व्याप्तिः तथा चाप्रसिद्धिः। प्रतियोग्यवृत्तिश्च धर्म्मो न प्रतियोगितावच्छेदकः। तद्विशिष्टज्ञानस्याभावधीहेतु-

---

धिकरणं तत्त्वं वा तत् ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ एव शेषं दर्शितदिशावसेयम् अत आह प्रतियोग्यवृत्तिश्चे-

---

च्छिन्नसामानाधिकरण्याभावाद्व्यापकतावच्छेदकरूपावच्छिन्नेति तदत्यन्तमसत्। घटत्वेन वह्न्यभावस्यैव वह्नित्वेन घटाभावतया तस्यापि यावद्धेतुमति स्वप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नसमानाधिकरणत्वात्। ननु समवायित्वस्य वाच्यत्वव्यापकतानवच्छेदकत्वात्तदवच्छिन्नस्य वाच्यत्वाद्यभावस्य मूलोक्तस्यैतल्लक्षणाघटकत्वादाह ज्ञेयत्वत्वादिनेति। शेषमित्यादि। येन सम्बन्धेन हेतुस्तेन सम्बन्धेन हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्तित्वमभावे ग्राह्यम्। तेनायमात्मा ज्ञानात् घटान्यत्वविशिष्टात्मघटसंयोगाद्वेत्यादावात्मत्वसामान्याभावस्यातथात्वेपि नाव्याप्तिः। एवं येन सम्बन्धेन व्यापकता तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं बोध्यम्। अतो न व्यधिकरणधर्मावच्छिन्नाभावासत्त्वेपि व्यधिकरणसम्बन्धावच्छिन्नवाच्यत्वाद्यभावमादाय लक्षणसम्भवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तिः। न वा जलत्वादेः समवायेन साध्यतायां महाकालत्वादावतिव्याप्तिः। प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम्। तेन द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाद्यभावस्य काले हेतुमति प्रतियोगिसामानाधिकरण्येपि नातिव्याप्तिः। इदं त्ववधातव्यं साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वरूपमेव व्यापकतावच्छेदकत्वमत्र पूर्वत्र च निवेश्यं न तु प्रतियोगिवैयधिकरण्यघटितं तथा सति व्यधिकरणधर्मावच्छिन्नाभावसत्त्वेपि सर्वं प्रमेयमित्याकारकयत्किञ्चिज्जन्यबुद्धिविषयत्वसामान्याभावमादायैव सर्वत्र लक्षणसमन्वयात्प्रतियोग्यवृत्ति-

श्चेत्यादिग्रन्थावतारानुपपत्तिः अन्यज्ञानव्यक्तिविषयत्वस्य तादृशबु-द्धिदशायामेव सत्त्वेन तदसत्त्वदशायामेव तादृशज्ञानविषयत्वा-भावस्य हेतुसमानाधिकरणत्वात् एवं चात्र स्वविशिष्टपदं न कपि-संयोगात्मकाभावं गगनत्वादिविशिष्टवाच्यत्वाभावं वादाय कपिसं-योगाभाववान्प्रमेयत्वादित्यादावव्याप्तिवारकं कपिसंयोगाभावत्वा-देरुक्तव्यापकतावच्छेदकत्वाभावात् किं तु हेतुमति काले वर्तमानस्य सत्त्वसामान्याभावस्यापि निरुक्तरूपशालित्वात्तस्य चात्मादावसत्त्वेन यावद्धेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्य-विरहात्सत्तावान् द्रव्यत्वादित्यादावव्याप्तिवारकमेव स्वविशिष्टपदम्। न च साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकधर्मावच्छिन्नप्र-तियोगिताको यत्किञ्चिदभावो यद्धेत्वधिकरणावच्छेदेन स्वावच्छे-दकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणस्तत्त्व-मित्येव सम्यक् वाच्यत्वत्वादिना घटाभावमादायैव वाच्यं ज्ञेयत्वा-दित्यादौ लक्षणसमन्वयादिति वाच्यम् । स्वरूपसम्बन्धावच्छिन्न-प्रमेयत्वावच्छिन्नाभावाप्रसिद्ध्या प्रमेयवान् ज्ञेयत्वादित्यादावव्या-प्तिः । गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या प्रमेयवह्निमान् धूमादि-त्यादावव्याप्तेः । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत-या गोमी चैत्रत्वादित्यादौ स्वामित्वादिसम्बन्धेन गवादेः साध्य-तायामव्याप्तिश्चेति दिक् । ननु वह्नित्वेन धूमवदवृत्तिसामान्याभावो धूमीयसंयोगसम्बन्धेन द्रव्यसामान्याभावो वा धूमाभाव एव तथायोगोलकभेदतदभावान्यतरत्वेनायोगोलकावृत्तेरभावोऽयोगोल-कान्यत्वस्वरूपसम्बन्धेन भेदसामान्याभावो वाऽयोगोलकभेदाभाव एव समनियताभावानामैक्यात् तथा च धूमाद्यभावस्य प्रतियोगिताव-च्छेदकं यद्वह्नित्वादिकं तदवच्छिन्नेन समं यावद्धेत्वधिकरणे धूमाद्य-भावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यात् धूमवान्व-ह्नेरित्यादावतिव्याप्तिः सामान्यधर्मेण विशेषाभावाभ्युपगमे तु सुत-रां तथा धूमत्वेन धूमाद्यभावानामेव प्रमेयत्वादिना धूमाद्यभाव-तया तस्य प्रतियोगितावच्छेदकीभूतप्रमेयत्वावच्छिन्नसामानाधि-करण्यादिति चेत् । अत्रापि यावत्त्वस्य फलतः प्रतियोगित्वस्य वि-शेषणतया साध्यव्यापकतावच्छेदकरूपावच्छिन्नयद्यत्प्रतियोगिताको यत्समानाधिकरणोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तत्तत्प्र-

ति। केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणसाध्याभावस्य प्रतियोगिताया अनवच्छेदकं हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्र-

---

तियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वमिति पर्यवसितार्थः तथाच धूमादिनिष्ठतादृशधूमत्वावच्छिन्नप्रतियोगिताकाभावस्य धूमादिनिष्ठं यत्प्रतियोगित्वं तदवच्छेदकीभूतधूमत्वावच्छिन्नेन सार्धं हेत्वधिकरणावच्छेदेन सामानाधिकरण्यविरहान्नातिव्याप्तिरिति साम्प्रदायिकाः। वस्तुतोऽत्रापि साध्यव्यापकतावच्छेदकरूपावच्छिन्नायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नयादृशप्रतियोगिताया निरूपकोऽभावस्तादृशप्रतियोगिताया यदवच्छेदकं तदवच्छिन्नेन सामानाधिकरण्यं वक्तव्यम्। धूमत्वादिना धूमाद्यभावस्तु न प्रमेयत्वादिना धूमाद्यभावः सामान्यधर्मेण विशेषाभावानभ्युपगमात् तदभ्युपगमे तु यादृशप्रतियोगिताकाभावे प्रतियोगितावच्छेदकावच्छिन्नवदवृत्तित्वस्य जगदवृत्तिभिन्नत्वस्य च द्वयोर्व्यतिरेकः साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां तादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं वाच्यमतो न कश्चिद्दोष इति ध्येयम्॥ चक्रवर्तिलक्षणान्याह केचित्त्विति। अनवच्छेदकमिति यत्साध्यतावच्छेदकमिति परेणान्वितम्। घटत्वादिना वह्न्यभावमादाय वह्निमान् धूमादित्यादौ लक्षणसङ्गतिः। व्यभिचारिणि तु हेतुसमानाधिकरणस्य साध्यसामान्याभावस्यैव प्रतियोगितावच्छेदकं साध्यतावच्छेदकमतो नातिव्याप्तिः। कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिवारणार्थं व्याप्यवृत्तेरिति। वह्नित्वादिना घटाभावमादायाव्याप्तिरतः साध्येति। अत्र च प्रतियोगिता साध्यतावच्छेदकसम्बन्धेन ग्राह्या। तेन समवायादिसम्बन्धेन वह्न्याद्यभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वादेर्नासम्भवः। प्रतियोगिवैयधिकरण्यप्रवेशो वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धेरतस्तत्परित्यागः। व्याप्यवृत्तित्वं निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वं हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावव्यक्तित्वं तत्त्वं वा। एवं चैतल्लाभार्थमेव हेतुसमानाधिकरणस्येत्युक्तम्। न तु स्वातन्त्र्येण

तियोगिव्यधिकरणस्य वा अभावस्य प्रतियोगितायाः सामाना-
धिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामाना-

------

तद्विशेषणं वैयर्थ्यात्। यत्किञ्चित्त्वनिवेशाच्च संयोगाभावस्य हेत्वधिकरणीभूतद्रव्यनिष्ठाभावप्रतियोगित्वेऽपि संयोगि सत्त्वादित्यादौ-नातिव्याप्तिः। ननु समनियताभावानामैक्यात् घटत्वेन वह्न्यभावस्यैव वह्नित्वेन घटाभावतया हेतुसमानाधिकरणस्यैव तादृशसाध्यप्रतियोगिकाभावस्य प्रतियोगितावच्छेदकं वह्नित्वादिकमित्यव्याप्तिः अतः समनियताभावैक्यमते निरुक्तिमाह हेतुसमानाधिकरणस्येति। व्याप्यवृत्तेरभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकमिति योजना। नन्वत्रापि हेतुसमानाधिकरणस्य वह्नित्वेन वह्निधूमोभयाभावस्य वह्नित्वेन पर्वतावृत्तेरभावस्य च प्रतियोगितायाः समानाधिकरणं सदेव वह्नित्वमवच्छेदकमित्यव्याप्तिः तादृशप्रतियोगिताया अन्यूनवृत्तित्वे सति यदवच्छेदकं तदन्यत्वोक्तावपि तथा पर्वते वह्नित्वेन तार्णतार्णदहनोभयं नास्तीतिप्रतीतिसिद्धस्यैव तादृशाभावस्य प्रतियोगितावच्छेदकत्वाद्वह्नित्वस्य न च तादृशाभावप्रतियोगितावच्छेदकत्वं न वह्नित्वमात्रे पर्याप्तं किं तु तार्णतार्णोभयत्वेऽपि अन्यथा तादृशप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नवति पर्वतादौ तादृशाभावासत्त्वप्रसङ्ग इति वाच्यम् सोन्दडमते प्रतियोगितावच्छेदकधर्मावच्छिन्नवत्तामात्रस्याभावाविरोधित्वात् अन्यथा घटवति घटत्वेन पटाभावस्यापलापापत्तेः किं तु प्रतीतिबलाद्व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वसिद्धौ सत्यां प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नेनैव सार्धमनायत्याऽभावस्य विरोधित्वं वाच्यं तदेतद्वह्नित्वादिना तार्णतार्णोभयाभावादिसत्त्वेऽपि न क्षतिकरम् अत एव च द्रव्यत्वेन वह्निर्नास्ति वह्नित्वेन तद्वह्निर्नास्तीति प्रतीत्या सामान्यधर्मेण विशेषाभावोऽभ्युपेयते न च तत्र वह्नित्वस्यैव प्रतियोगितावच्छेदकत्वं भासते द्रव्यत्वस्य तु वैशिष्ट्यमात्रं विषय इति वाच्यम् वह्निमानयमित्येवं निर्णयसत्त्वेऽपि द्रव्यत्वेन वह्निर्नास्तीतिप्रत्ययात् द्रव्यत्वस्यैवावच्छेदकतया भानात् अन्यथा वह्नित्वावच्छिन्नवह्निनिष्ठप्र-

तियोगिताकत्वेन वह्न्यभावबुद्धिं प्रति वह्नित्वेन वह्निविशिष्टनिश्च-
यस्यैव विरोधित्वात्तादृशप्रतीत्यसम्भवापत्तेः अस्माकं तु द्रव्यत्वा-
वच्छिन्नवह्निनिष्ठप्रतियोगिताकत्वेन वह्न्यभावबुद्धिं प्रति द्रव्यत्वेन
वह्निविशिष्टनिश्चयस्यैव विरोधित्वात्तदसत्त्वादेव तादृशाभावप्रतीति-
सम्भवात् इत्यतो लक्षणान्तरमाह प्रतियोगिव्यधिकरणस्य वेति ।
केचित्तु सामानाधिकरण्यमभेदः तथा च हेतुसमानाधिकरणाभा-
वीयस्वाभिन्नप्रतियोगितावच्छेदकं यद्यत्त्वं तदन्यत्वं साध्यतावच्छे-
दके विवक्षितं प्रतियोगित्वं स्वरूपसम्बन्धविशेषः स च सामान्या-
भावस्थले प्रतियोगितावच्छेदकस्वरूप एव न तु प्रतियोगिस्वरूपः
अननुगमादभेदेनाधाराधेयभावानुपपत्तेश्च सामान्यधर्मेण विशेषा-
भावस्थले च प्रतियोग्यंशे प्रकारीभूतो विशेषधर्म एव तथा न तु
सामान्यधर्मः अतिप्रसक्तत्वात् व्यधिकरणधर्मावच्छिन्नाभावस्थले
च प्रतियोगितावच्छेदकादिस्वरूपं न प्रतियोगित्वं किं त्वतिरिक्त-
मेवान्यथा प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनैव सार्धमभावस्य
विरोधात् तदवच्छिन्नवति तादृशाभावस्यासत्त्वप्रसङ्गात् विवादोऽप्य-
तिरिक्तायां प्रतियोगितायामेव अन्यथा समनियताभावैक्येन निखिल-
व्यधिकरणधर्मावच्छिन्नाभावस्यैव गगनाभावात्मकतया गगनाभाव-
स्वीकर्तॄणां चिन्तामणिकाराणां तदनङ्गीकारानुपपत्तेः इत्थं च प-
र्वते वह्नित्वेन तार्णातार्णवह्नी न स्त इति प्रतीतिबलात्तादृशाभाव-
प्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्त्वेऽपि तादृशप्रतियोगित्वं न
वह्नित्वाभिन्नं किं तु तादृशोभयत्वाभिन्नमतिरिक्तमेवेति स्वाभिन्नायाः
साधनवन्निष्ठाभावप्रतियोगिताया यदवच्छेदकं तदन्यत्वस्य वह्नित्वे
सत्त्वान्न तस्य धूमव्यापकतावच्छेदकत्वहानिः नन्वत्र लक्षणे हेत्व-
धिकरणवृत्तित्वमभावस्य सम्बन्धमात्रेण न वाच्यम् वह्निसामान्या-
भावस्यापि कालिकादिसम्बन्धेन धूमवति सत्त्वादव्याप्त्यापत्तेः ना-
पि दैशिकविशेषणतया घटभिन्नं द्रव्यत्वादित्यादावतिव्याप्त्यापत्तेः
घटत्वरूपस्य साध्याभावस्य दैशिकविशेषणतया वृत्तित्वविरहादि-
त्यतो लक्षणान्तरमाह प्रतियोगिव्यधिकरणस्य वेति प्राहुः । अपरे
तु प्रागुक्तं व्याप्यवृत्तित्वं यत्किञ्चित्त्वघटितत्वेन दुर्वचमतः प्रतियो-
गिव्यधिकरणस्येत्यादिलक्षणान्तरमुक्तमित्यप्याहुः । अन्ये तु कालि-
कसम्बन्धावच्छिन्नप्रतियोगिकाकाशाभावाभावादौ साध्ये आत्मत्वे

हेतावव्याप्तिः आकाशाभावात्मकस्य साध्याभावस्य निरवच्छिन्नवृत्तिकतया तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमतः प्रतियोगिव्यधिकरणस्य वेति लक्षणान्तरमित्याहुः । हेतुसमानाधिकरणस्य प्रतियोगिव्यधिकरणस्याभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकमिति योजना । अथात्र प्रतियोगिव्यधिकरणत्वं न स्वप्रतियोगिसमानाधिकरणभिन्नत्वं समनियताभावानामभिन्नतया घटाभावादेरपि घटत्वेन प्रमेयसामान्याभावस्वरूपत्वात्तस्य च प्रमेयात्मकप्रतियोगिसमानाधिकरणतया तदन्यत्वासम्भवात् एवं स्वप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणो यो यस्तदन्यत्वमपि न तथा घटत्वेन घटाभावादेरपि प्रमेयत्वादिना घटाद्यभावस्य द्रव्यत्वेन घटवद्वृत्तेरभावस्य वा तादात्म्योपगमात् अप्रसिद्ध्यापत्तेः व्यधिकरणधर्मावच्छिन्नाभावस्यापि तत एव वारणसम्भवेऽव्याप्तिवारकस्य सामानाधिकरण्येनेत्यस्य वैयर्थ्यापाताच्च न च साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिताश्रयानधिकरणं तादृशप्रतियोगित्वं प्रतियोगितान्तार्थः तथा च वह्नित्वेन घटाभावीयं घटनिष्ठप्रतियोगित्वमपि तादृशमतस्तदवच्छेदकत्वं वह्नित्वेऽप्यस्तीति सामानाधिकरण्यपदं तेन तादृशप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकाप्रसिद्ध्या तद्भिन्नप्रतियोगितैव लक्षणघटिकेति वाच्यं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेर्गुणादीनामपि विशिष्टसत्तानिष्ठप्रतियोगिताश्रयाधिकरणत्वात् घटवान् महाकालत्वादित्यादावव्याप्तिप्रसङ्गाच्च हेतुमतो महाकालस्य साध्यताघटककालिकसम्बन्धेन घटाद्यभावप्रतियोगिताश्रयाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरिति चेदत्राहुः साध्यताघटकसम्बन्धेन स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणयावद्वृत्त्यधिकरणिका यावत्यः प्रतियोगितास्तदन्यप्रतियोगित्वं प्रतियोगितान्तार्थः तथा च वह्नित्वेन घटाद्यभावस्यापि घटादिनिष्ठा प्रतियोगिता तादृशीति तदवच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यतः सामानाधिकरण्यपदम् घटवान् महाकालत्वादित्यादौ गगनाभावीयं गगननिष्ठमेव तादृशं प्रतियोगित्वं सुलभमिति न कोपि दोषः । वस्तुतो धूमवति वह्नित्वेन घटो नास्तीतिवद्धूमवान्वह्नित्वेन न घटवान् किं तु घटत्वेनेति प्रतीतिबलाद्व्यधिकर-

णधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकान्योन्याभावोप्यस्ति अत एव समवायितया वाच्यत्ववच्छेदो घटादौ पक्षधरमिश्रैः स्वीकृतः तथा च यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिताश्रयाधिकरणान्यत्वं हेतुमतस्तादृशप्रतियोगितासमानाधिकरणवृत्तित्वावच्छिन्नप्रतियोगिताकतादृशप्रतियोगितावच्छेदकत्वाभाववत्त्वं तादृशप्रतियोगितावच्छेदकान्यत्वं वा साध्यतावच्छेदके विवक्षितं तथा च घटादिनिष्ठस्य वह्नित्वेनैव घटाद्यभावप्रतियोगित्वस्यापि तादृशत्वेन वह्नित्वादेस्तदवच्छेदककत्वाद्व्याप्तिरतः सामानाधिकरण्येनेत्युक्तम् तथा च वह्नित्वस्य तादृशप्रतियोगितावच्छेदकत्वात्यन्ताभावस्य तत्र सत्त्वान्नाव्याप्तिः कालो घटवान् महाकालत्वादित्यादौ तु घटादिसामान्याभावप्रतियोगिताया अतथात्वेपि घटत्वेन पटाद्यभावप्रतियोगितामादायैव लक्षणसमन्वयः कालः पटत्वेन पटवान् न तु घटत्वेनेत्यनुभवात् वह्नित्वादिसामान्यधर्मेण महानसीयवह्न्याद्यभावसत्त्वे तु यादृशप्रतियोगितावच्छेदकेत्यत्रावच्छेदकत्वमनतिरिक्तवृत्तित्वं ग्राह्यम् तच्च तदतिरिक्तवृत्तित्वे सति तत्समानाधिकरणं यद्यत्तदन्यत्वं नातो व्यधिकरणधर्मावच्छिन्नप्रतियोगितायास्तत एव वारणसम्भवे सामानाधिकरण्यदलवैयर्थ्यमित्यस्मद्गुरुचरणाः । यत्तु यत्प्रतियोगितावच्छेदकविशिष्टस्य यत्प्रतियोगिताश्रयस्य च द्वयोः साध्यतावच्छेदकसम्बन्धेनानधिकरणं हेत्वधिकरणं तादृशप्रतियोगित्वं प्रतियोगितान्तार्थः तथा च वह्नित्वेन घटाद्यभावस्य घटनिष्ठप्रतियोगिताया अपि तादृशत्वाद्वह्नित्वादेस्तदवच्छेदकत्वमादायाव्याप्तिः अतः सामानाधिकरण्येनेति प्रागुक्तार्थकम् एतन्मते च सामान्यरूपेण विशेषाभावानभ्युपगमः नातो वह्नित्वेन तद्वह्न्यभावमादायाव्याप्तिः न च स्वरूपसम्बन्धात्मकप्रतियोगितायाः प्रतियोगिभेदेन भिन्नत्वाद्वह्निमान् धूमादित्यत्राव्याप्तिः वह्निसामान्याभावीयं यन्महानसीयवह्निनिष्ठप्रतियोगित्वं तदवच्छेदकीभूतवह्नित्वविशिष्टस्य तत्प्रतियोगिताश्रयीभूतमहानसीयवह्नेश्च द्वयोरनधिकरणत्वस्य हेतुमति पर्वते सत्त्वादिति वाच्यं प्रतियोगिव्यक्तीनां भेदेपि एकधर्मावच्छिन्नप्रतियोगिताया लाघवेनैक्यस्वीकारादिति न च कालो घटवान्महाकालत्वादित्यादौ तादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिः गगनाद्यभा-

धिकरण्यं व्याप्तिः एवञ्च व्याप्तेरव्यभिचारिसम्बन्धरूपतापि सङ्गच्छते हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववदवृत्तित्वस्येव साध्यतावच्छेदके हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् अवच्छेदकत्वञ्चेह तत्पर्याप्त्यधिकरणत्वम् तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य

---

षीयप्रतियोगिताश्रयीभूतगगनस्याधिकरणाप्रसिद्ध्या तादृशप्रतियोगिताया लक्षणाघटकत्वादिति वाच्यम् महाकालान्यत्वविशिष्टघटाद्यभावस्य तादृशविशिष्टघटत्वाद्यवच्छिन्नप्रतियोगिताव्यक्तेरेव तथात्वात् यत्प्रतियोगितावच्छेदकविशिष्टयत्प्रतियोगिताश्रयोभयत्वं वा हेत्वधिकरणयत्किञ्चिन्निष्ठाधिकरणतावच्छेदकं तादृशप्रतियोगिताया एव निवेश्यतया गगनाभावादिकमादायैव लक्षणसम्भवाच्चेति तन्न। प्रतियोगिभेदेपि प्रतियोगितावच्छेदकाभेदेन प्रतियोगिताया यद्यभेदस्तदा वह्नित्वेन घटाभावस्य या वह्नित्वावच्छिन्ना घटनिष्ठप्रतियोगिता सैव वह्नित्वादिना वह्निधूमोभयाभावस्यापि वह्नित्वावच्छिन्ना धूमादिनिष्ठा प्रतियोगिता लाघवात् तथा च सामानाधिकरण्येनेत्यस्य वैयर्थ्यं दुर्वारं वह्नित्वेन घटाभावीयं यद्घटनिष्ठप्रतियोगित्वं तदवच्छेदकीभूतवह्नित्वविशिष्टस्य तादृशप्रतियोगिताश्रयीभूतवह्निधूमादेश्च द्वयोरधिकरणत्वस्य सर्वत्रैव हेतुमति सत्त्वेन वह्नित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वादिति दिक्। एवं चेति। तथा चास्य पारिभाषिकत्वानादरेपि न क्षतिरिति भावः। वह्नित्वाद्यवच्छिन्नघटाद्यभाववति धूमादेर्वर्तमानत्वादुक्तं साध्याभावेति । अत्र साध्याभावो व्याप्यवृत्तिर्बोध्यः। एवं परत्रापि। विशिष्टेति । महानसीयत्वादिविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकस्येत्यर्थः। ननु विशिष्टस्यातिरिक्तत्वान्महानसीयत्ववह्नित्वयोर्वैशिष्ट्यस्यैव वा परंपरया तत्रावच्छेदकत्वान्नैष दोष इत्यत आह ह्रदत्ववह्नित्वेति। ननु व्याप्यवृत्तित्वघटितलक्षणयोः संयोगिसत्त्वादित्यत्रातिव्याप्तिः स्वसमानाधिकरणाभावाप्रतियोगित्वस्याव-

च प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः सत्त्ववति गुणादौ संयोगाद्यभावोऽपि व्याप्यवृत्तिः वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यम् भवति च गुणत्वगुणावृत्तित्वद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियो-

---

च्छिन्नवृत्तिकान्यत्वरूपस्य वा व्याप्यवृत्तित्वस्य संयोगाभावेऽसत्त्वादत आह सत्त्ववतीति । तथाच हेतुसमानाधिकरणस्य व्याप्यवृत्तेरित्यन्तेन निरवच्छिन्नहेत्वधिकरणवृत्तित्वं हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठाभावाप्रतियोगित्वं वा ऽभावस्य विवक्षितमिति भावः । गुरुधर्मेण साध्यतायां व्यभिचारिण्यतिव्याप्तिवारणाय पारिभाषिकावच्छेदकत्वानुसरणस्यावश्यकत्वे व्याप्यवृत्तित्वस्य प्रकृतनिरुक्तावप्रवेशेपि न क्षतिरित्याशयेनाह वक्ष्यमणं वेति । यथाश्रुतस्य प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्योक्तौ सत्तावान् जातिमत्त्वादित्यादावव्याप्तिः तादृशप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वानतिरिक्तवृत्तित्वात्सत्तात्वस्येत्यतो वक्ष्यमाणमिति । सिद्धान्तलक्षणे वक्ष्यमाणमित्यर्थः । तथा च हेतुमन्निष्ठाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं तदेव पारिभाषिकावच्छेदकम् तदन्यत्वं साध्यतावच्छेदके वाच्यमिति भावः । ननूत्पत्तिदशायां गुणसामान्याभावस्य संयोगवति घटादौ सत्त्वाद्गुणत्वस्य संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वविरहान्न तमादाय संयोगत्वस्य पारिभाषिकावच्छेदकत्वसम्भावनापीत्यत आह गुणावृत्तित्वेति । गुणासमवेतत्वेत्यर्थः । घटादावुत्पत्तिदशायामपि गुणासमवेतस्य द्रव्यत्वादेः सत्त्वान्न तदभाव इतिं भावः। संयोगी गुणान्यत्वे सति सत्त्वादित्यादौ गुणावृत्तित्वमादाय संयोगत्वस्य न पारिभाषिकावच्छेदकत्वं सम्भवति गुणावृत्तित्वावच्छिन्नाभावस्य हेत्वसमानाधिकरणत्वात् अतः संयोगसाध्यकव्यभिचारिमात्रे यद्धर्ममादाय संयोगत्वस्य पारिभाषिकावच्छेदकत्वं तद्धर्ममाह द्रव्यमात्रेति । द्रव्या-

गिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरिक्तवृ-त्त्येव संयोगत्वमित्याहुः । साध्यतावच्छेदकावच्छिन्नसाध्यसामा-नाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वं यत्स-

---

म्यासमवेतत्वेत्यर्थः । उक्ताभावानामव्याप्यवृत्तित्वे संयोगात्मकस्व-प्रतियोग्यधिकरणवृत्तित्वेन कदाचिद्गुणत्वादिरूपाणां तत्प्रतियो-गितावच्छेदकानां संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगिता-नवच्छेदकत्वं न स्यात् तदेव नास्ति तेषां व्याप्यवृत्तितया संयोगा-त्मकस्वप्रतियोग्यधिकरणावृत्तित्वादेतावन्मात्रं सूचयितुमुक्तं व्या-प्यवृत्तीति ॥ प्रगल्भलक्षणं दूषयितुमुपन्यस्यति साध्यतावच्छेदकेति। स्वपदं विशिष्टहेतुपरम्। तथा च यद्धर्मावच्छिन्नसमानाधिकरणसा-ध्याभावत्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिक-रण्यं तद्धर्मवत्त्वं पर्यवसितमवच्छेदकत्वं चा[न्यूना]नतिरिक्तवृत्तित्वं व्यभिचारिणि तु हेतुसमानाधिकरणस्य साध्यसामान्याभावस्यैव साध्यसामानाधिकरण्यविरहान्नातिप्रसङ्गः। विशिष्टसत्तावान् जाते-रित्यादौ यावत एव हेतुसमानाधिकरणस्य साध्याभावस्य सत्तारूपसा-ध्यसामानाधिकरण्यादतिव्याप्तिः अतः साध्यतावच्छेदकावच्छिन्ने-ति। तथा च विशिष्टसत्ताभावस्यैव तादृशस्य विशिष्टसत्तारूपसाध्य-समानाधिकरणत्वाभावान्नातिप्रसङ्गः।अत्र च साध्यसामानाधिकरण्यं येन सम्बन्धेन साध्यता तेन सम्बन्धेन साध्यस्याधिकरणे दैशिक-विशेषणतया वृत्तिमत्त्वरूपं ग्राह्यम्। तेन द्रव्यत्वादिसमानाधिकर-णस्य ज्ञानाद्यभावस्य विषयतया ज्ञानाद्यधिकरणे वृत्तावपि समवा-येन ज्ञानसाध्यके द्रव्यत्वादिहेतौ नातिव्याप्तिः। न वा कालः प्रमेय-त्वादित्यादौ सर्वेषामेव साध्याभावानां साध्यवति काले कालिकस-म्बन्धेन वृत्तावप्यतिप्रसङ्गः । साध्याभावनिष्ठं हेतुसामानाधिकर-ण्यमपि हेतुतावच्छेदकसम्बन्धेन प्रकृतहेतोर्यदधिकरणं तत्र विशे-षणतया वृत्तिमत्त्वरूपं बोध्यम् । तेनायमात्मा ज्ञानादित्यादौ विष-यतया ज्ञानस्य हेतोरधिकरणे वर्तमानस्यात्मत्वाभावस्य द्रव्यं वि-शिष्टसत्त्वादित्यादौ च सत्तासमानाधिकरणस्य द्रव्यत्वसामान्या-भावस्य साध्यसामानाधिकरण्यविरहेपि नाव्याप्तिः । न वा कालः

मानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति

---

कालपरिमाणाद्वित्यादौ हेत्वधिकरणे कालिकसम्बन्धेन वर्तमानस्य कालत्वादिसामान्याभावस्य साध्यवति दैशिकाविशेषणतया वृत्तिमत्त्वविरहेऽपि क्षतिः। साध्याभावस्तु पूर्वोक्तद्वितीयरीत्या बोध्यः। तेन व्यधिकरणधर्मावच्छिन्नाभावासत्त्वेऽपि साध्यस्य विशिष्टाभावादिकमादायैव लक्षणसम्भवान्न प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारासङ्गतिः। कपिसंयोगी सत्त्वादित्यादौ तु कपिसंयोगाद्यभावस्य साध्यसामानाधिकरण्येऽपि द्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिः। कालिकसम्बन्धावच्छिन्नप्रतियोगिताके गगनाभावस्याभावे साध्ये यत्र प्रमेयत्वादिकं हेतुस्तत्र हेतुमति दैशिकविशेषणतया वर्तमानस्याकाशाभावात्मकस्य साध्याभावस्य साध्यवति दैशिकविशेषणतया वृत्तावपि हेतुसमानाधिकरणस्य नित्यत्वादिसामान्याभावस्यापि निरुक्तसाध्याभावतया तस्यैव साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिः। यत्समानाधिकरणेति। यत्समानाधिकरणसाध्याभावप्रमासामान्य इत्यर्थः। तेन धूमवान्वह्नेरित्यादौ व्यधिकरणधर्मावच्छिन्नसाध्याभावप्रमाव्यक्तेः साध्यवत्ताज्ञानाविरोधित्वेऽपि साध्यसामान्याभावप्रमाया एव साध्यवत्ताज्ञानविरोधितया नातिव्याप्तिः। व्यधिकरणधर्मावच्छिन्नसाध्याभावस्य साध्यसामान्याभावत्वभ्रमदशायां पर्वतो वह्निमानित्याकारकसाध्यवत्ताज्ञानविरोधित्वादसम्भवः स्यादतः प्रमात्वोपादानम्। प्रमात्वं चात्र भ्रमसामान्यभिन्नज्ञानत्वम्। नातस्तादृशबुद्धेरपि अंशतः प्रमात्वादुक्तदोषतादवस्थ्यम्। ह्रदादौ वह्निसामान्याभावप्रमायाः साध्यवत्ताज्ञानविरोधित्वादव्याप्तिरतो यत्समानाधिकरणेति फलतः प्रमाविशेषणम्। तथा च यद्धर्मावच्छिन्नवद्विशेष्यकसाध्याभावप्रमासामान्ये इत्यर्थः। तेन वृक्षत्वसमानाधिकरणस्य संयोगसामान्याभावस्यैव गुणे धर्मिणि प्रमायाः साध्यवत्ताज्ञानविरोधित्वेऽपि संयोगि वृक्षत्वादित्यादौ नाव्याप्तिः। यत्तु साध्यवत्ताज्ञानविरोधित्वं हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकं यत्साध्यवत्ताज्ञानं तद्विरोधित्वरूपं वाच्यं तथा

तत्त्वं वा व्याप्तिरिति तु न युक्तम्। सर्वत्र साध्याभावपदवैयर्थ्यात्।

---

च गुणो न संयोगीति प्रमाया गुणः संयोगीत्याकारकबुद्धिविरोधित्वेपि तादृशी साध्यवत्ताधीर्न हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यिका गुणत्वादेर्हेतुमदन्यवृत्तित्वादतो नोक्तदोष इति तत्तुच्छम् । यत्समानाधिकरणेत्यस्य व्यर्थत्वापत्तेः । साध्याभावप्रमासामान्ये यद्वन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानस्य विरोधित्वं नास्ति तत्त्वमित्यस्यैव सम्यक्त्वात् । जलादिधर्मिकवह्निसामान्याभावप्रमायाः साध्यवत्ताधीविरोधित्वेपि धूमवन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकं यद्वह्निमत्ताज्ञानं तद्विरोधित्वाभावादेव वह्निमान् धूमादित्यादावव्याप्त्यसम्भवादिति दिक् । अत्र च साध्यतावच्छेदकेन सम्बन्धेन तेन रूपेण च साध्यवत्ताज्ञानं बोध्यम् । तेन पर्वतो न समवायेन वह्निमानित्यादिप्रमायाः समवायेन वह्निमत्ताबुद्धिं प्रति पर्वतो महानसीयवह्निमान्नेति प्रमायाश्च संयोगेन महानसीयवह्निमत्ताबोधं प्रति प्रतिबन्धकत्वेपि वह्निमान् धूमादित्यादौ नाव्याप्तिः । प्रतिबन्धकत्वं चावच्छेदकधर्मवत्ताज्ञानव्यावृत्तं ग्राह्यम् । तेन वह्निसामान्याभावावच्छेदकतया गृहीतस्य महानसीयवह्न्यभावादेः पर्वतादौ प्रमायाः संयोगसम्बन्धावच्छिन्नपर्वतधर्मिकवह्निमत्ताबुद्धिविरोधित्वेपि नासम्भवः ॥ सर्वत्रेति । साध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणत्वकत्वमित्यत एव प्रथमस्य द्वितीयस्य च यत्समानाधिकरणप्रमासामान्ये साध्यवत्ताज्ञानविरोधित्वं नास्ति तत्त्वमित्यत एव सामञ्जस्यादिति भावः । यत्तु यत्समानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्यं तत्त्वमेव प्रथमलक्षणार्थः तथा च धूमसमानाधिकरणस्य घटादिसामान्याभावस्य वह्नित्वाद्यवच्छिन्नघटाद्यप्रसिद्ध्या साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याभावादसम्भवः स्यादतः साध्याभावपदम् न चैवमपि प्रतियोगिपदं व्यर्थमेवेति वाच्यम् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वे साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याभावस्याखण्डस्यैव निविष्टत्वात् एवं द्वितीयलक्षणेपि साध्यतावच्छेदकावच्छिन्नप्रतियोगिमत्ताग्रहविरोधित्वं

यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति

---

निवेश्य साध्याभावपदस्य सार्थक्यं बोध्यमिति तन्मन्दम् । प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुरोधेन साध्याभावस्य पूर्वोक्तद्वितीयरीत्यैव वक्तव्यतया हेतुसमानाधिकरणस्य वह्नित्वेन घटाभावादेरेव साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याप्रसिद्ध्या तादृशपदप्रक्षेपेऽप्यसम्भवतादवस्थ्यात् । न च घटत्वेन वह्न्यभावो वह्नित्वेन घटाभावात्मकः समनियताभावानामैक्यात् तथा च तस्यापि साध्यतावच्छेदकविशिष्टवह्निस्वरूपप्रतियोगिनः सामानाधिकरण्यमक्षतमेवेति वाच्यम् । तथा सति घटसामान्याभावादेरपि घटत्वादिना प्रमेयसामान्याभावात्मकतया तस्यापि साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रमेयरूपप्रतियोगिसमानाधिकरणतया तमादायासम्भववारकस्य साध्याभावपदस्य व्यर्थताया वज्रलेपत्वादिति ॥ प्रगल्भस्यैव लक्षणान्तरमुपन्यस्यति यत्त्विति । यद्वृत्ताविति । यन्निष्ठसाध्याभाववद्वृत्तित्वसामान्य इत्यर्थः । तेन वह्निनिष्ठस्य व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वस्य धूमसाध्यकानुमित्यविरोधित्वेपि धूमवान्वह्नेरित्यादौ नातिव्याप्तिः।धूमादिनिष्ठेन्धनत्वाद्यवच्छिन्नवह्न्यभाववद्वृत्तित्वस्यापि इन्धनत्वादिप्रकारेण वह्न्यनुमितेर्विरोधित्वाद् सम्भवः स्यादतः प्रकृतेति । साध्यतावच्छेदकेन सम्बन्धेन रूपेण च प्रकृतसाध्यकेत्यर्थः । तथा च तादृशसाध्याभाववद्वृत्तित्वस्य वह्नित्वेन वह्न्यनुमितिं प्रत्यविरोधित्वाददोषः । प्रकृतानुमितिविरोधित्वं न प्रकृतानुमितिविरोधिज्ञानविषयत्वमात्रं धूमनिष्ठवृत्तित्वस्यापि वह्न्यनुमितिविरोधिनो व्यभिचारभ्रमस्य विषयत्वसम्भवात् किं तु विषयितया प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वम् तथा च वह्निनिष्ठवृत्तित्वमात्रस्य धूमसाध्यकानुमितिविरोधितावच्छेदकत्वाभावाद्व्यभिचारिण्यतिव्याप्तिरतः साध्याभाववतीति । तथा च यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं प्रकृतानुमितिप्रतिबन्धकतानवच्छेदकं तत्त्वमर्थः । न च घटाभाववद्वृत्तित्वादौ साध्याभाववद्वृत्तितात्वभ्रमदशायामपि धूमसाध्यकानुमित्यनुत्पत्त्या वह्निनिष्ठनिर्धूमवृत्तित्वस्य धूमसाध्यकानुमितिप्रतिबन्धकतानवच्छेदकत्वाद्व्यभि-

तत्त्वं व्याप्तिरिति तन्न । अनुमित्यविरोधित्वज्ञानस्यानुमितिजनकत्वे साध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितया व्यभिचारिण्यतिप्रसङ्गात् । केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावास्तद्वत्त्वं तत्त्वम् साजात्यञ्च

———

चारिण्यतिव्याप्तितादवस्थ्यमिति वाच्यम् । यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यस्योक्तत्वात् साध्याभावस्तु पूर्वोक्तद्वितीयरीत्या प्रवेशनीयः । तेन न पूर्वोक्तदोषः ॥ अनुमित्यविरोधित्वज्ञानस्येति । अनुमित्यविरोधित्वं हि न साक्षादनुमितिप्रतिबन्धकत्वं व्यभिचारविषयः साक्षादतथात्वेन व्यभिचारिमात्रेऽतिप्रसङ्गापत्तेः । किं त्वनुमितिजनकज्ञानविरोधित्वम् । तज्जनकं च यदि निरुक्तव्याप्तिज्ञानं तदा तादृशज्ञानं प्रति न साध्याभाववद्वृत्तित्वज्ञानं विरोधि किं तु साध्याभाववद्वृत्तित्वमनुमितिविरोधीत्याकारकज्ञानमेव तथेति व्यभिचारिण्यतिव्याप्तिः । यदि तु साध्याभाववदवृत्तिर्हेतुरित्याकारकज्ञानं प्रकृतानुमितिजनकं तदा निरिक्तव्याप्तेरनुमित्यनुपयुक्ततया तदभिधानमर्थान्तरग्रस्तमिति भावः । एतेन यदि प्रकृतानुमितिपदं प्रकृतहेतुधर्मिकसाध्याभाववदवृत्तित्वानुमितिपरं [न तु प्रकृतसाध्यकानुमितिपरं] विरोधित्वं चात्र साक्षादेव निवेश्यते तदा व्यभिचारिण्यतिप्रसङ्ग इत्यपास्तम् । तादृशव्याप्तेरनुमित्यनुपयुक्ततया तदभिधानेऽर्थान्तरतादवस्थ्यमिति ॥ मिश्रलक्षणमेव परिष्कृत्योपन्यस्यति केचित्त्विति । केवलान्वयिनि प्रसिद्धावपि वह्न्यादिसाध्यके व्यतिरेकिणि यावन्तः साध्याभावास्तत्तत्सजातीयत्वं तत्तदधिकरणवृत्तित्वाभावे तादृशान्यतररूपात्मकमप्रसिद्धमत उक्तं प्रत्येकमिति । यावन्तः साध्याभावास्तेषाम्प्रत्येकमपि सजातीयत्वं एकस्मिन्नभावे नास्त्यत उक्तं तत्तत्सजातीया इति । तदधिकरणवृत्तित्वाभावा इत्युक्ते तत्पदेन यावत्साध्याभावपरामर्शे वह्निमान् धूमात् रूपसामान्याभाववान् वायुत्वादित्यादौ साध्याभावात्मकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावयावद्रूपाद्यधिकरणाप्रसिद्ध्याऽव्याप्तिरतस्तत्तदधिकरणेति । तथा च प्रातिस्विकरूपेण साध्याभावानुपादाय तत्तु-

समानासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण साध्याभावश्च पूर्वोक्ताद्वितीयरीत्या प्रत्येतव्यो व्याप्यवृत्तिश्च मति-

---

त्सजातीयस्तत्तदधिकरणवृत्तित्वाभावो ग्राह्य इति भावः । व्यधिकरणधर्मावच्छिन्नसाध्याभावसजातीयं घटत्वादिना तत्तदधिकरणवृत्तित्वाभावमादाय व्यभिचारिण्यतिव्याप्तिवारणाय यावन्त इति । तथा च साध्यसामान्याभावसजातीयस्य तदधिकरणावृत्तित्वाभावस्य तत्रासत्त्वाददोषः । साध्यसामान्याभाववद्वृत्तित्वस्यैव व्यधिकरणधर्मावच्छिन्नाभावो व्यभिचारिण्यप्यस्तीत्यतः सजातीया इत्युक्तम् । ननु घटत्वेन निर्धूमवृत्तित्वस्याभावोपि अभावत्वादिना धूमसामान्याभावसजातीय एवेत्यतिव्याप्तितादवस्थ्यमत आह साजात्यं चेति। यद्यपि साध्याभावनिष्ठं यत्समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपं तेनैव रूपेण साजात्यं वाच्यम् तथा च वह्निसामान्याभावादिनिष्ठं यत्तादृशान्यतररूपं वह्निनिष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वस्वरूपं तस्य निर्वह्निवृत्तित्वसामान्यभावेऽसत्त्वादसंभवः तथापि यावन्तः समानाधिकरणधर्मावच्छिन्नाभावास्तावदन्यतमत्वतद्भिन्नत्वान्यतररूपेण साजात्यं वाच्यमित्यदोषः । समनियताभावानामैक्यात् गगनाभाव एव निखिलव्यधिकरणधर्मावच्छिन्नाभाव इति मते तु गगनाभावत्वतदन्यत्वान्यतररूपेणैव साजात्यं वाच्यम्। तेन घटत्वेन निर्धूमवृत्तित्वाभावस्यैव गगनत्वादिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकतया धूमसामान्याभावसजातीयत्वेपि नातिव्याप्तिः । साध्याभावश्चेति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावोऽत्र साध्याभावपदेनोक्त इत्यर्थः। साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वरूपप्रथमरीत्याभिधाने घटत्वविशिष्टवाच्यत्वाद्यभावस्यापि साध्याभावपदार्थतया तत्तत्सजातीयस्य तदधिकरणवृत्तित्वाभावस्यापि हेतावसत्त्वादसम्भवः स्यादतस्तत्परित्यागः । अत्र साध्यव्यापकताघटकसम्बन्धेनैव साध्यव्यापकस्याभावो ग्राह्यः । तेनैकसम्बन्धेन साध्यव्यापकस्य सम्बन्धान्तरावच्छिन्नाभाववति हेतोर्वृत्तावपि न क्षतिः । यत्तु साध्यतावच्छेदकस-

योगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो वा तेन तत्तत्सा-

———

म्बन्धेन साध्यव्यापकत्वं तेनैव साध्यव्यापकस्याभावो निवेश्य इति मतं तत्तुच्छम्। यत्र तादात्म्यसम्बन्धेन प्रमेयमात्रं साध्यं तत्र तेन सम्बन्धेन साध्यव्यापकतावच्छेदकं यत्प्रमेयत्वादिकं तादात्म्येन तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या तत्र सद्धेतावव्याप्तिः। प्रमेयत्वेन घटपटोभयभेदस्वीकारेण कथं चित्तत्राव्याप्तिवारणेपि वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः। साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः। किं चैवं धूमवान्वह्नेरित्यादावतिव्याप्तिः। संयोगेन धूमसामान्याभावस्याव्याप्यवृत्तितया धूमत्वेन घटाद्यभावस्यैव तादृशस्य यावदन्तर्गतत्वेन तत्सजातीयस्य तदधिकरणवृत्तित्वाभावस्य वह्नौ सत्त्वात्। अस्माकं तु स्वरूपसम्बन्धेनायःपिण्डभेदस्यापि धूमव्यापकतया वह्नेस्तदभाववदवृत्तित्वाभावादेवातिव्याप्तिनिरासादिति बोध्यम्। ननु कपिसंयोगि एतद्वृक्षत्वादित्यत्राव्याप्तिः कपिसंयोगसामान्याभावस्यापि प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन यावदन्तर्गतत्वात्तत्सजातीयस्य तदधिकरणवृत्तित्वाभावस्य हेतावभावादत आह व्याप्यवृत्तिश्चेति। व्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वम्। संयोगी सत्त्वादित्यादौ तु द्रव्यत्वादिसामान्याभावस्यापि साध्याभावतया हेतोस्तदधिरकणवृत्तित्वादेव नातिव्याप्तिः।ननु रूपवान्पृथिवीत्वादित्यादावव्याप्तिः रूपत्वेन नित्यसमवेताभावस्यापि निरुक्तयावत्साध्याभावान्तर्गतत्वात्तत्सजातीयस्य तदधिकरणवृत्तित्वसामान्याभावस्यापि हेतावसत्त्वात् सामान्यधर्मेण विशेषाभावस्वीकारे तु रूपत्वेन तद्रूपाभावमादायाप्यव्याप्तिरत आह प्रतियोगितावच्छेदकावच्छिन्नेत्यादि। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणत्वं च यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगिताकत्वं बोध्यम्। तेन नित्यरूपात्मकेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिना सामानाधिकरण्यविरहेप्युक्ताभावस्य न संग्रहः। न वा वाच्यत्वत्वेन प्रमेयत्वाद्यभावस्यैव ज्ञेयत्वत्वेन वाच्यत्वाद्यभावतया

ध्यव्यक्तेरव्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्तावपि हेतोर्नाव्याप्तिः तद्वद्वृत्तित्वाभावश्च तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तित्व-

---

व्याधिकरण्यधर्मावच्छिन्नाभावमात्रस्यैव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्येपि तदसङ्ग्रहः । अत्र च निरुक्तायास्तदन्यप्रतियोगिताया एव साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वं बोध्यम् । तेन संयोगात्मकस्यैव साध्याभावस्य समवेतसामान्याभावनिष्ठनिरुक्तप्रतियोगिताकत्वकपिसंयोगाभावत्वरूपसाध्यव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वयोः सत्त्वेपि कपिसंयोगाभाववान्वाच्यत्वादित्यादौ रूपत्वेन नित्यसमवेताभावस्यैव नित्यरूपसामान्याभावतया तत्र नित्यरूपत्वावच्छिन्ननिरुक्तप्रतियोगिताकत्वसाध्यव्यापकतावच्छेदकीभूतरूपत्वावच्छिन्नप्रतियोगिताकत्वयोः सत्त्वेपि रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः । समवेतसामान्याभावत्वाद्यवच्छिन्नप्रतियोगितायाः साध्यव्यापकतावच्छेदकरूपानवच्छिन्नत्वादिति ध्येयम् । द्वितीयरीतेः प्रवेशफलमाह तत्तत्साध्यव्यक्तेरिति । अभाववति हेतोर्वृत्तावपि नाव्याप्तिरित्यन्वयः । अव्याप्यवृत्तित्वादेः फलमाह आव्याप्यवृत्तेर्वा साध्यस्येति । तत्तत्साध्याभावेत्यादि । सामान्यतः साध्याभाववद्वृत्तित्वत्वव्यापकेत्युक्तौ वह्निसामान्याभावसजातीयव्यधिकरणधर्मावच्छिन्नाभावसाधारणसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्याप्रसिद्ध्या व्यतिरेकिमात्रेव्याप्तिरतस्तत्तदिति साध्याभावस्य विशेषणम् । तथा च निर्वह्निवृत्तित्वसामान्याभाव एव निर्वह्निवृत्तित्वत्वव्यापकप्रतियोगिताकस्तत्र साध्याभावसजातीयत्वमस्तीत्यदोषः । नन्वेवमपि जलवृत्तित्वत्वेन निर्धूमवृत्तित्वाभावस्य निरुक्तरूपशालिनो वह्नौ सत्त्वादतिव्याप्तिः न च व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं परित्यज्य स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमेव प्रतियोगिताया विशेषणं वाच्यमतो नोक्तदोषः तथापि गुणभेदाभावसजातीयस्य पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाभावस्य हेतौ सत्त्वाद्गुणभिन्नं सत्त्वादित्या

त्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताको वा बोध्यः तेन साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य

---

दावतिप्रसङ्गादत आह तत्तत्साध्याभाववदवृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताको वा बोध्य इति । अयं पाठः क्वाचित्कः । तत्र चातिरिक्तान्तेन निर्वह्निवृत्तित्वसामान्याभावादेः सङ्ग्रहः । अन्यथा वह्निसामान्याभावसजातीयस्य समानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् । न च निर्धूमत्वादिसजातीयस्य निर्धूमवृत्तित्वत्वादिना वह्न्यवृत्तेरभावस्य हेतौ सत्त्वाद्धूमवान्वह्नेरित्यादावतिव्याप्तेर्हेतुताघटकसम्बन्धावच्छिन्नवृत्तितामात्रनिष्ठत्वेन प्रतियोगितायाः निवेशनीयत्वेपि निर्धूमवृत्तित्वेन जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावमादायातिव्याप्तितादवस्थ्यमिति वाच्यम् । एतदस्वरसेनैव यद्वेत्यादिलक्षणान्तरस्य वक्ष्यमाणत्वात् । यद्यपि तत्तत्साध्याभाववदवृत्तित्वत्वावच्छिन्नभाव इत्यस्यैव सम्यक्त्वे सामानाधिकरणधर्मादिकं प्रक्षिप्य निषेधद्वयप्रवेशो निरर्थकः सर्वत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववदवृत्तित्वत्वेन घटाद्यभावस्यैव तादृशस्य साध्याभावसजातीयस्य सम्भवात् । तथापि यथासन्निवेशे न वैयर्थ्यम् । यत्र तादात्म्येन सम्बन्धेन हेतुता तत्र सद्धेतौ व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्तादात्म्यस्य जगत्स्वरूपतया तादृशतादात्म्यत्वस्य केवलान्वयित्वेन तदवच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तिः स्यादतो वा निषेधद्वयगर्भता। यत्तु तत्तत्साध्याभाववदवृत्तित्वत्वावच्छिन्नाभावा इत्युक्तावसम्भवः स्याद्व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः तादृशवृत्तितात्वमपेक्ष्य लघुवृत्तित्वत्वमात्रस्यैवोक्ताभावप्रतियोगितावच्छेदकत्वादिति तत्तुच्छम् । गुरोः प्रतियोगितावच्छेदकत्वमङ्गीकृत्यैव लक्षणकरणात् । अन्यथा महाकालभेदे साध्ये अन्यत्वविशिष्टघटादेः कालिकसम्बन्धेन हेतुतायामव्याप्तिप्रसङ्गात् । महाकालभेदाभाववद्वृत्तित्वत्वमपेक्ष्य लघुना वृत्तित्वत्वमात्रेणैव महाकालभेदाभाववद्वृत्तित्वाभावप्रतियोगितायाः अवच्छेदात् । महाकालभेदाभावसजातीयस्य तद्वद्वृत्तित्वत्वा-

द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यम् तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न दोषः इत्थञ्च साध्याभावोऽपि हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्तमानो ग्राह्यः तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः

---

तिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धेरिति ध्येयम्। तादृशावृत्तित्वत्वव्यापकेत्यस्य प्रयोजनमाह साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्येति। आभावमादाय नातिप्रसङ्ग इत्यन्वयः। ननु व्यभिचारनिरूपकाधिकरणव्यक्त्यन्यत्वस्याभावस्यापि साध्याभावतया तद्वद्वृत्तित्वसामान्याभावस्य व्यभिचारिण्यसत्त्वात् कुतोऽतिव्याप्तिरत आह पार्थिवत्वादीति। पार्थिवत्वविशिष्टं यन्निर्धूमवृत्तित्वं तद्वह्नौ नास्ति वह्नेरपार्थिवत्वादित्यतिप्रसङ्ग इति भावः। आदिना जलत्वादिपरिग्रहः। व्यासज्यवृत्तिधर्मानवच्छिन्नेत्यस्य प्रयोजनमाह द्वित्वाद्यवच्छिन्नस्य वेति। निर्धूमवृत्तित्ववह्निभेदोभयत्वावच्छिन्नस्य वेत्यर्थः। न दोष इति। अन्यथा निर्वह्निसंयुक्तत्वाभावस्य साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावान्निर्वह्निवृत्तित्वसामान्याभावस्य च धूमे सत्त्वादव्याप्तिरेव स्यादिति भावः। इत्थं च साध्याभाववद्वृत्तित्वस्य हेतुतावच्छेदकसम्बन्धेनोक्तौ चेत्यर्थः। तादृशसम्बन्धेन हेत्वधिकरणत्वानुप्रवेशे गौरवमतः कस्य चिदित्युक्तम्। तथा च हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावद्वृत्तित्वं साध्याभावविशेषणमित्यर्थः। सत्त्वादित्यादावित्यादिपदेन वह्निमान् धूमादित्यादेः परिग्रहः। तत्रापि जातिसामान्याभावादेः साध्याभावतया तद्वति संयोगसम्बन्धेन वृत्त्यप्रसिद्धेरव्याप्तिसम्भवात्। ननु द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिः विशिष्टसत्त्वस्य केवलसत्त्वानतिरेकेण द्रव्यत्वाभाववति वृत्त्या द्रव्यत्वाभावसजातीयस्य तद्वद्वृत्तित्वाभावस्य हेतावसत्त्वात् नचैवं विशिष्टहेत्वधिकरणे वर्तमान एव साध्यीयो गृह्यतां तावतैवोक्तदोषव्युदासादि-

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम्,

---

ति वाच्यम् तथापि धूमवान्वह्नेरित्यत्रातिव्याप्तिर्निर्धूमवृत्तित्वसामान्याभावस्य महानसीयवह्नौ सत्त्वात् न च हेतुतावच्छेदकधर्मावच्छेदेन तादृशवृत्तित्वाभाववत्त्वं विवक्षितम् तथा सत्यपि निर्धूमत्वादिसजातीयं निर्धूमवृत्तित्वत्वेन रूपेण वह्न्यवृत्तेरभावं ताद्रूप्येण जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावं चादायातिव्याप्तितादवस्थ्यादत आह यद्वेति वह्नित्वावच्छिन्नधूमाभावसजातीयस्य तद्व्यापकीभूतस्य तस्यैवाभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वाद्यवच्छिन्नं प्रति व्यापकतावच्छेदाद्व्यभिचारिण्यतिव्याप्तिरतो यावन्त इति। तथा च धूमादिसामान्याभावस्यापि साध्याभावतया यावदन्तर्गतत्वात्तद्व्यापकीभूताभावप्रतियोगितावच्छेदकेन तत्तद्वह्नित्वादिना वह्न्यादिकं प्रति व्यापकत्वाभावान्नातिव्याप्तिः तत्तद्वह्न्यभावसजातीयस्य तद्व्यापकीभूताभावस्य प्रतियोगितावच्छेदकेन तत्तद्वह्नित्वादिना धूमादिकं प्रति व्यापकत्वाभावादसम्भवः स्यादित्यस्तादृशाः साध्याभावा इति। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावा इति तदर्थः। तत्तद्वह्नित्वादिकं तु न साध्यव्यापकतावच्छेदकमतस्तदवच्छिन्नाभावमादाय नोक्तदोषः। तादृशयावत्साध्याभावसाजात्यं तादृशसाध्याभाववृत्तिप्रागुक्तान्यतररूपवत्त्वम् तच्च व्यतिरेकिण्यप्रसिद्धमतः प्रत्येकमिति। यद्यपि तादृशयावत्साध्याभावानां प्रत्येकनिरूपितमपि साजात्यं न कुत्राप्यभावेस्तीति व्यतिरेकिण्यव्याप्तितादवस्थ्यम्। तथापि तेषामित्यत्र तस्य तस्य तस्येत्येकशेषकरणात् यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयस्य तत्तद्व्यापकीभूताभावस्य लाभाददोषः। धूमादिसामान्याभावव्यापकस्य वह्नित्वादिना घटाद्यभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्न्यत्वाद्यवच्छिन्नं प्रति व्यापकत्वाद्व्यभिचारिण्यतिव्याप्तिरतः सजातीयस्येति। साजात्यन्तु

---

(१) 'धूमत्वादिना'

प्रागुक्तदिशा ग्राह्यम्। तेन संयोगादिसम्बन्धावच्छिन्नद्रव्यत्वाद्यभावप्रतियोगितावच्छेदकेन द्रव्यत्वत्वादिना वह्न्यादिव्यापकत्वसत्त्वेन धूमवान्वह्नेरित्यादौ नातिव्याप्तिः। तादृशाभावस्य धूमादिसामान्याभावसाजात्यविरहादिति ध्येयम्। धूमादिसामान्याभावसजातीयस्य तद्व्यापकीभूतस्य च वह्निसंयोगाद्यभावस्य प्रतियोगितावच्छेदकेन वह्निसंयोगत्वादिना वह्न्यादिकं प्रति व्यापकत्वादतिव्याप्तिरतो व्याप्यवृत्तेरिति। वस्तुतो वह्नित्वेन धूमवद्वृत्तेरभावस्य प्रतियोगितावच्छेदकेन वह्नित्वेन वह्निं प्रति व्यापकत्वादतिव्याप्तिरतो व्याप्यवृत्तितानिरूपकप्रतियोगितायाश्च लाभाय व्याप्यवृत्तिपदम्। तेन यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगिताया एव लक्षणघटकत्वान्नोक्तदोषः। धूमाद्यभावसजातीयस्य वह्न्याद्यभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्न्यादिकं प्रति व्यापकत्वाद्धूमवान्वह्नेरित्यादावतिव्याप्तिरतो व्यापकीभूतस्येति। यद्यपि तत्तद्व्यभिचारस्थलान्यत्वाभावस्यापि निरुक्तसाध्याभावतया तत्समानाधिकरणस्य तत्सजातीयाभावस्य प्रतियोगितावच्छेदकेन धर्मेण तत्तदयोगोलकभेदत्वादिना वह्नित्वाद्यवच्छिन्नं प्रति व्यापकत्वाभावात्सामानाधिकरण्यमात्रोक्तावपि नातिव्याप्तिः तथापि साध्याभावव्यापकत्वघटितनिरुक्तौ साध्याभावसजातीयाभावे साध्याभावसामानाधिकरण्यस्याप्रविष्टतया न व्यापकीभूतपर्यन्तस्य व्यर्थतेति ध्येयम्। यत्तु साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकताया यदवच्छेदकं तेन सम्बन्धेन तद्रूपावच्छिन्नाभावोत्र साध्याभावपदार्थः तथा चायोगोलकभेदत्वस्य न संयोगात्मकसाध्यतावच्छेदकसम्बन्धेन धूमव्यापकतावच्छेदकत्वमिति तदवच्छिन्नाभावो न साध्याभावः किं तु धूमाद्यभावः एवं च तत्समानाधिकरणस्य वह्न्याद्यभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वाद्यवच्छिन्नं प्रति व्यापकत्वादतिव्याप्तिरतः समानाधिकरणस्येत्यपहाय व्यापकीभूतस्येत्युक्तम् न चैवं वह्निमान्धूमादित्यत्रैवाव्याप्तिः संयोगेन वह्न्याद्यभावस्यापि साध्याभावतया तस्य केवलान्वयितया तत्सजातीयतद्व्यापकीभूतव्याप्यवृत्त्यभावाप्रसिद्धेरिति वाच्यम् यावन्तो व्याप्यवृत्तयः साध्याभावास्तेषामेव प्रवेश्यतया वह्नि-

साधनस्य तादृशाभावप्रतियोगित्वं तदवच्छेदकत्वं वा साधनताव-

---

सामान्याभावस्य निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वरूपव्याप्यवृत्ति-त्वविरहेण यावदनन्तर्गतत्वात् धूमाद्यभावस्तु वह्निमदयोगोलक एव तादृशव्याप्यवृत्तिरिति तन्न । तादात्म्येन प्रमेयमात्रस्य साध्यतायामव्याप्तेः । तत्र प्रमेयत्वादेरेव तादात्म्येन साध्यव्यापकतावच्छेदकतया तादात्म्येन तदवच्छिन्नाभावाप्रसिद्धेः । अन्ये तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयनिष्ठं यद्यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावव्यापकतावच्छेदकं तत्तद्रूपेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वमर्थः तत्र च साध्याभावव्यापकतावच्छेदकत्वमपहाय साध्यभावसमानाधिकरणवृत्ति वोक्तौ गुणान्यत्वविशिष्टसत्ताभाववान् द्रव्यान्यत्वविशिष्टसत्त्वाभावादित्यत्रातिव्याप्तिः गुणान्यत्वविशिष्टसत्ताभावाभावरूपस्य द्रव्यान्यत्वाद्यभावरूपस्य वा निरुक्तसाध्याभावस्य सजातीये समानाधिकरणे च सत्तास्वरूपेऽभावे वर्तते यद्द्रव्यान्यत्वविशिष्टसत्ताभावत्वस्वरूपधर्मावच्छिन्नप्रतियोगिताकाभावत्वं तेन द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपधर्मेण हेतुतावच्छेदकावच्छिन्नं प्रति व्यापकतावच्छेदात् साध्याभावव्यापकतावच्छेदकत्वोक्तौ तु द्रव्यान्यत्वविशिष्टसत्त्वाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वं न गुणान्यत्वविशिष्टसत्ताभावाभावाद्यात्मकस्य द्रव्यान्यत्वाद्यभावरूपस्य वा साध्याभावस्य व्यापकतावच्छेदकं द्रव्य एव व्यभिचारादतो नोक्तदोष इति प्राहुः । द्रव्यं विशिष्टसत्त्वादित्यादौ व्यापकीभूततादृशाभावप्रतियोगितावच्छेदकेन द्रव्यत्वत्वादिना [गुणकर्मान्यत्वविशिष्ट]सत्तादिकं प्रति व्यापकतानवच्छेदादव्याप्तेराह यद्रूपावच्छिन्नेति । न चैवं गमनं स्पन्दत्वादित्यादौ तादृशगतित्वाद्यभावस्य प्रतियोगितावच्छेदकीभूतगतित्वत्वादिनापि कालिकसम्बन्धेन स्पन्दत्वव्यापकत्वादतिव्याप्तिरिति वाच्यम् । तादृशाभावस्य यत्सम्बन्धावच्छिन्नप्रतियोगिताया अवच्छेदको यो धर्मस्तत्प्रतियोगितावच्छेदकसम्बन्धेन हेतुव्यापकत्वस्योक्तत्वादिति भावः । परैः परिष्कृतं निरसि-

(१) 'दकेन [धर्मेण] गुणकर्मान्यत्व[विशिष्टसत्ता]त्वादिना'

च्छेदकस्येति तु न वक्तव्यम् द्रव्यं सत्त्वादित्यादौ सत्त्वादेर्गुण-कर्मान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्नप्रतियोगिताकतादृशाभावप्रति-योगित्वादतिव्याप्तेः ज्ञेयं प्रमेयादित्यादौ प्रमेयत्वादेस्तादृशप्र-तियोगितानवच्छेदकत्वादव्याप्तेश्च प्रमेयत्वव्यधिकरणप्रतियोगि-

---

तुमाह साधनस्येत्यादिना । तादृशेति । यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयव्यापकीभूताभावेत्यर्थः । तदवच्छेदकत्वमिति । तत्तत्साध्याभावसजातीयतद्व्यापकीभूताभावप्रतियोगितावच्छेदक-त्वं वेत्यर्थः । प्रथमे दूषणमाह द्रव्यमित्यादि । तादृशाभावेति । सा-ध्याभावसजातीयव्यापकीभूताभावेत्यर्थः । द्वितीये दूषणमाह ज्ञेयं प्रमेयादित्यादि । प्रमेयत्वादेरिति । नच सामान्यधर्मेण विशेषाभाव-स्यापि व्यवस्थापितत्वात् प्रमेयत्वेन गगनाभावस्यैव प्रागुक्तक्रमेण साध्याभावसजातीयस्य प्रतियोगितावच्छेदकत्वे मेयत्वमादाय ना-व्याप्तिरिति वाच्यम् । वह्नित्वेन महानसीयवह्न्यभावमादाय धूमसा-ध्यकवह्नावतिव्याप्तिभिया स्वाधिकरणदेशवृत्तिधर्मानवच्छिन्नप्रतियो-गितायाः प्रवेश्यत्वात् प्रमेयत्वेन गगनाभावप्रतियोगितायाश्चातथा-त्वात् । तथापि विषयत्वाद्यपेक्षया गुरोः प्रमाविषयत्वस्य प्रतियोगि-तानवच्छेदकत्वेनोक्ताव्याप्तितादवस्थ्यादिति भावः । नव्यास्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयो यस्तत्तत्समानाधिकरणो व्याप्य-वृत्त्यभावः तत्प्रतियोगित्वमेव व्याप्तिः व्याप्यवृत्तित्वं तु प्रकृतहेतुसामा-नाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववत्त्वं तेन धूमसामान्याभावसमानाधिकरणस्य तत्तत्सजातीयस्य वह्निधूमोभय-त्वाद्यवच्छिन्नाभावस्य प्रतियोगित्वेऽपि धूमसाध्यकवह्न्यादौ नातिव्या-प्तिस्तादृशोभयाभावस्य निरुक्तव्याप्यवृत्तित्वाभावात् एवं च यत्रा-भावे प्रकृतसाध्यसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभि-न्नत्वोभयाभावः स एव साध्याभावपदार्थः तेनाऽभाववान् प्रमेयत्वा-दित्यादौ साध्यप्रतियोगिकस्य घटावृत्तित्वावच्छिन्नाभावस्याधिकर-णे घटादौ वर्तमानस्य तत्तत्सजातीयहेत्वभावस्य निरुक्तव्याप्यवृत्ति-त्वाप्रसिद्धावपि नाव्याप्तिः । इत्थं च द्रव्यं सत्त्वादित्यादौ गुणान्य-

त्वस्याप्रसिद्धेः यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं त-त्प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमव-च्छिद्यते तद्रूपवत्त्वं वा तत्त्वमित्याहुः। परे तु वृत्तिमदवृत्तयो या-

———

त्वाद्यभावस्यापि निरुक्तसाध्याभावत्वात्तदधिकरणे गुणादौ वर्तमा-नस्य तत्सजातीयाभावस्य निरुक्तव्याप्यवृत्तित्वाप्रसिद्ध्यैव नातिव्या-प्तिः वाच्यं प्रमेयादित्यादौ तु व्यधिकरणधर्मावच्छिन्नवाच्यत्वाद्य-भावसमानाधिकरणस्य विरुद्धघटत्वपटत्वाभ्यां प्रमेयाभावस्य घट-त्वादिना वाच्यत्वाद्यभावस्यैव वा निरुक्तव्याप्यवृत्तिताशालि-नः प्रतियोगितामादाय लक्षणसम्भव इति यथाश्रुतमेव मिश्रलक्ष-णं सम्यगिति प्रतीमः [न च वह्निमान् धूमादित्यादावव्याप्तिः यावत्साध्याभावान्तर्गतद्रव्यसामान्याभावसजातीयनिरुक्तव्याप्यवृ-त्तिसमानाधिकरणाभावप्रतियोगित्वस्य धूमादावसत्त्वात् संयोगेन धूमस्याव्याप्यवृत्तितया धूमाद्यभावस्य लक्षणाघटकत्वादिति वा-च्यम् संयोगेन द्रव्यस्य व्याप्यवृत्तित्वाद्धूमद्रव्यान्यतराभावस्य नि-रुक्तरूपशालितः प्रतियोगित्वस्य धूमादौ सत्त्वाच्च मिश्रलक्षणम्] इति प्राहुः। व्यापकीभूतस्य सजातीयस्येत्यादिपरित्यागेन लघुलक्ष-णमाह यद्वेति। तादृशा इति। प्रकृतसाध्यव्यापकतावच्छेदकरूपाव-च्छिन्नप्रतियोगिताकाभावा इत्यर्थः। अत्रापि येन सम्बन्धेन साध्य-व्यापकता तत्सम्बन्धावच्छिन्नाभावानां प्रतियोगितावच्छेदकधर्मैस्त-त्सम्बन्धेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते इति पर्यवसि-तार्थः। तेन गमनं स्पन्दत्वादित्यादौ गमनत्वाद्यभावप्रतियोगिताव-च्छेदकैर्गमनत्वत्वादिभिः कालिकसम्बन्धेन स्पन्दत्वादिहेतुव्यापक-त्वेपि नातिव्याप्तिः। न वा वाच्यत्वादिभेदप्रतियोगितावच्छेदकमादा-यैव केवलान्वयिस्थले लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थाव-तारानुपपत्तिः। न च धूमत्वेन धूमाभावस्यैव वह्नित्वेन धूमवद्भे-दभावत्वादयःपिण्डान्यत्वाभावस्य चायःपिण्डान्यत्वनिरूपितस्वरू-पसम्बन्धेन भेदत्वावच्छिन्नाभावत्वात्तत्प्रतियोगितावच्छेदकीभूतव-ह्नित्वभेदत्वादिभिर्वह्नित्वाद्यवच्छिन्नं प्रति व्यापकतावच्छेदात् धूम-वान्वह्नेरित्यादावतिव्याप्तिरिति वाच्यम्। यत्प्रतियोगिताकाभावे स्वा-

वन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः येन सम्बन्धेन हेतुता तेनैव वृत्तिमत्त्वं बोध्यम् तेन व्यधिकरणधर्मावच्छि-न्नवह्न्यभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्तमा-

---

वच्छेदकावच्छिन्नवद्वृत्तित्वव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगिताया एवावच्छेदकधर्मस्य लक्षणघटकत्वादिति सङ्क्षेपः ॥ परे त्विति । साध्याभाववद्वृत्तित्वस्य घटत्वादिनाऽभावमादाय व्यभिचारिण्यतिव्याप्तिरतो यावन्त इत्युक्तम् । तादृशवृत्तित्वाभाववत्त्वमत्र दैशिकविशेषणतया ग्राह्यम् । तेन निर्धूमवृत्तित्वादिसामान्याभावस्यापि कालिकादिसम्बन्धेन वह्न्यादिवृत्तित्वाद्यावत्त्वोपादानेपि नातिव्याप्तितादवस्थ्यम् । वह्निमान् धूमाद्वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्संयुक्तत्वत्वादिसमनियतप्रतियोगिताकस्य संयुक्तत्वादिसामान्याभावस्य हेतावसत्त्वात् अतो वृत्तिमद्वृत्तयः इत्युक्तम् । तदनुक्तावसम्भवस्तु नास्ति तादात्म्यसम्बन्धेन सद्धेतावेव निरुक्तलक्षणसङ्गमनात् । व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्तादात्म्यप्रतियोगिकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वस्तुगत्या तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकतया तथाविधयावदभावस्यैव हेतौ सत्त्वादिति ध्येयम् । येन सम्बन्धेन हेतुता वृत्तिमद्वृत्तय इत्यत्रापि वृत्तिमत्त्वं तेन बोध्यमिति पाठः । तदभावस्येति । तत्सामान्याभावस्येत्यर्थः । जात्यादाविति । समवेतत्वघटितजातित्वोक्त्या सम्बन्धान्तरेण यो वृत्तिमान्तद्वृत्तित्वमुपदर्शितम् । न क्षतिः नाव्याप्तिः । हेतुताघटकसम्बन्धेन यो वृत्तिमान् तदवृत्तित्वेन तादृशाभावस्य यावदनन्तर्गतत्वादिति भावः । अत्र वृत्तिमद्वृत्तिता दैशिकविशेषणतया ग्राह्या । तेन वाच्यं द्रव्यत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नवाच्यत्वाभाववत्समवेतत्वसमनियतप्रतियोगिताकस्य समवेतत्वसामान्याभावस्य हेतुताघटकसमवायसम्बन्धेन वृत्तिमति स्पन्दादौ कालिक सम्बन्धेन वर्तमानस्य दैशिकविशेषणतया द्रव्यत्वादिहेतावसत्त्वेपि नाव्याप्तिः । इत्यत्रापीत्यपिकारेण साध्याभाववति वृत्तिरपि हेतुताघट-

नस्य धूमादावसत्त्वेऽपि न क्षतिः साध्याभावश्च पूर्ववद्बोध्यः

---

कसम्बन्धेन वाच्येति व्यञ्जितम्। तेन तत्तद्धूमावयवान्यत्वाभावस्यापि पूर्वोक्तद्वितीयरीत्या साध्याभावत्वेन तद्वति सम्बन्धसामान्येन या वृत्तिस्तदभावस्य तत्तद्धूमावयवासामानकालिकद्रव्यवृत्तेर्धूमहेतावसत्त्वेपि वह्निमान् धूमादित्यादौ नाव्याप्तिः। ननु साध्यप्रतियोगिकाभावमात्रस्य प्रवेशे धूमस्य तत्तद्वह्न्यभाववद्वृत्तित्वेन वह्निमान्धूमादित्यादावव्याप्तिः साध्यतावच्छेदकधर्मावच्छिन्नाभावप्रवेशे तु गगनादेः साध्यत्वे द्रव्यत्वादावतिव्याप्तिः साध्याभावस्य केवलान्वयित्वात् एवं घ्राणग्राह्यगुणवान् प्रमेयवान्वा पृथिवीत्वादित्यादावव्याप्तिः तादृशधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्धेरत आह साध्याभावश्चेति। पूर्ववदिति। प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिश्चाभावोत्र साध्याभावपदार्थः इत्यर्थः। [यथाश्रुते साध्याभावत्वप्रवेशेनासङ्गत्यापत्तेः] अत्रापि येन सम्बन्धेन व्यापकता तत्सम्बन्धेन तादृशरूपावच्छिन्नाभावो ग्राह्यः। तेन ज्ञानवानात्मत्वादित्यादौ स्वरूपसम्बन्धेन साध्यव्यापकस्य प्रमेयत्वादेः कालिकसम्बन्धेनाभावाधिकरणसमवेतत्वाभावस्य स्पन्दत्वनिष्ठस्य हेतावसत्त्वेपि न क्षतिः। यत्तु साध्यतावच्छेदकसम्बन्धेन तादृशरूपावच्छिन्नाभावनां विवक्षणात् ज्ञानवानात्मत्वादित्यादावपि नाव्याप्तिः कालिकसम्बन्धेन प्रमेयत्वाभावस्य साध्यताघटकसमवायसम्बन्धानवच्छिन्नत्वात् इत्थं च व्यापकतापि तेनैव ग्राह्या तेन विषयतया साध्यव्यापकस्य ज्ञानादेः साध्यताघटकसमवायेनाभाववति हेतोर्वर्तमानत्वेपि द्रव्यं पृथिवीत्वादित्यादौ नाव्याप्तिः इति तन्तुच्छम्। वृत्त्यनियामकसम्बन्धेन साध्यतायां तदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्या सद्धेतावव्याप्तेः। धूमवान् वह्नेरित्यादावतिव्याप्तेश्च। संयोगेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव व्याप्यवृत्तितया तद्वद्वृत्तित्वाभावस्यापि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वात्। प्रमेयं द्रव्यत्वादित्यादौ तादात्म्येन साध्यतायामव्याप्तेश्च। साध्यताघटकतादात्म्येन प्रमेयत्वादेरेव सा-

तद्वद्वृत्तित्वाभावोऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्व-

———

ध्यव्यापकतावच्छेदकतया तत्सम्बन्धेन तदवच्छिन्नाभावाप्रसिद्धे-
रिति दिक् । वह्निमान् धूमादित्यादावव्याप्तिः वह्निसंयोगाभावस्या-
पि साध्यव्यापकतया तदभावात्मकवह्निसंयोगवद्वृत्तित्वसामा-
न्याभावस्य घटादिनिष्ठस्य हेतावसत्त्वादतो व्याप्यवृत्तित्वेनाभावो
विशेषितः । वस्तुतो निरुक्तसाध्याभावाधिकरणत्वमवश्यं विशेषण-
ताविशेषसम्बन्धेन प्रवेश्यम् । अन्यथा द्रव्यं गुणादित्यादौ द्रव्य-
त्वाभावस्य कालिकसम्बन्धेनाधिकरणे गुणस्य वृत्तेर्द्रव्यत्वाभावव-
त्समवेतत्वसामान्याभावस्य ज्ञानादिनिष्ठस्य हेतावसत्त्वादव्याप्तेः। त-
था च वह्निसंयोगाद्यात्मकाभावस्य तादृशसम्बन्धेनाधिकरणाप्रसि-
द्धेस्तमादायाव्याप्तिवारणार्थं न व्याप्यवृत्तिपदम् । परं तु रूपवान्
पृथिवीत्वादित्यादौ नित्यत्वादिना रूपाद्यभावस्यापि तादृशधर्माव-
च्छिन्नाभावतया तद्वत्समवेतत्वाभावस्य नित्यरूपादिनिष्ठस्य हेताव-
सत्त्वादव्याप्तिरतो व्याप्यवृत्तिपदम् । न च तस्यापि व्याप्यवृत्ति-
त्वादुक्तदोषतादवस्थ्यम् । यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्ब-
न्धेन स्वावच्छेदकावच्छिन्नवद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्ना-
भावभिन्नत्वस्य द्वयोर्व्यतिरेकः साध्यव्यापकतावच्छेदकरूपावच्छि-
न्नतादृशप्रतियोगिताकाभावस्योक्तत्वान्नित्यत्वादिना रूपाद्यभावस्य
व्यधिकरणधर्मावच्छिन्नाभावभिन्नस्य स्वावच्छेदकीभूतनित्यत्वाद्य-
वच्छिन्नवद्वृत्तित्वादेव व्युदासः । एतेन संयोगाभावत्वादेः साध्य-
वन्निष्ठाभावप्रतियोगितावच्छेदकतया, प्रतियोगिवैयधिकरण्याघ-
टितसाध्यव्यापकतानवच्छेदकत्वेपि न व्याप्यवृत्तिपदवैयर्थ्यमिति
ध्येयम् । ननु वह्निमान् धूमादित्यादावालोकाद्यवृत्तित्वादिनालोका-
वृत्तिसामान्याभावोपि साध्याभाववद्वृत्तित्वाभावो यावदन्तर्गतः
संयोगादिसम्बन्धेन वह्निसामान्याभाववद्वृत्तित्वस्याप्यालोकावृ-
त्तिमध्ये निवेशात् एवमिन्धनत्वावच्छिन्नवह्न्यभावाधिकरणीभूत-
महानसवृत्तित्वादेर्महानसवृत्तित्वत्वादिना योऽभावः सोपि साध्या-
भाववद्वृत्तित्वाभावो यावदन्तर्गतस्तयोर्धूमादावसत्त्वादसम्भव इत्य-
त आह तद्वद्वृत्तित्वाभावोपीति । मिश्रलक्षण इवात्रापि तत्तत्सा-
ध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगि-

व्यापकप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्ते-न समानाधिकरणेन वृत्तित्ववृत्तिना वा धर्मेणानवच्छिन्नप्रतियो-

---

ताकत्वप्रवेशे आलोकावृत्तित्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य हे-तावसत्त्वाद्वह्निमान् धूमादित्यत्राव्याप्तिरतोऽन्यथा व्याचष्टे स्वव्या-पकेति। स्वं प्रतियोगिता। तद्व्यापकीभूतं यत्तत्तत्साध्याभाववद्वृत्ति-त्वत्वं तद्व्यापकप्रतियोगिताकत्वमित्यर्थः। व्यधिकरणधर्मावच्छि-न्नसाधारणसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्य-धिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वाद्व्यभिचारिण्यति-व्याप्तिरत उक्तं तत्तदिति। तथा च निर्धूमवृत्तित्वाभावस्यैव स्वव्या-पकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकतया तस्य व-ह्न्यावसत्त्वान्नातिव्याप्तिरिति भावः। स्वनिष्ठवृत्तित्वत्वेन वृत्तित्वसामा-न्याभावस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसम-नियतप्रतियोगिताकस्य हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वात् सद्धेतुमा-त्रेऽसम्भवापत्तेः कल्पान्तरमाह तत्तदिति। समानाधिकरणध-र्मानवच्छिन्नप्रतियोगिताकस्य यावदभावस्यैव व्यभिचारिण्यतिप्र-सञ्जकत्वादतिरिक्तान्तम् तत्रापि निर्धूमवृत्तित्वत्वस्यापि सामान्यतः साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मतया तदवच्छि-न्नसामान्याभावमादायातिव्याप्तिवारणायोगात् तत्तदित्युक्तम्। न-चैवमपि व्यधिकरणधर्मावच्छिन्नद्रव्यत्वाभाववद्वृत्तित्वत्वेन घ-टवृत्तित्वजातित्वान्यतराभावं घटावृत्तेरभावमादाय द्रव्यं पृ-थिवीत्वादित्यादावव्याप्तिः। हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्ति-त्वभिन्नावृत्तित्वेनापि प्रतियोगिताया विशेषणीयत्वात्। अत एव तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावा इत्युक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः साध्याभाववद्वृत्तित्वत्वावच्छिन्नं य-द्धेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तिप्रतियोगित्वं ता-दृशप्रतियोगिताकस्य वृत्तिमद्वृत्त्यभावस्याप्रसिद्धत्वादतो निषे-धद्वयगर्भता। तेन घटत्वादिना तादृशवृत्तित्वाभावमादायैव लक्षणसङ्गतिः। केचित्तु यद्यपि तत्तत्साध्याभाववद्वृत्तित्वत्वाव-च्छिन्ना यावन्तोऽभावा इत्येव लाघवाद्वक्तुमुचितं तथापि वाच्यं

प्रमेयादित्यादौ तादात्म्येन हेतौ जगत एव साध्याभाववत्तादात्म्यतया तादृशतादात्म्यत्वावच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तिरतो निषेधद्वयगर्भता इत्थं च विरुद्धघटत्वपटत्वाभ्यामेव तादृशवृत्तित्वाभावः सुलभ इति प्राहुः । यत्तु वृत्तित्वत्वमपेक्ष्य गुरोर्वाच्यत्वाभाववद्वृत्तित्वत्वस्य प्रतियोगितानवच्छेदकतया केवलान्वयिन्यव्याप्तिभिया तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावा नोक्ता इति तत्तुच्छम् । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमादायैव लक्षणकरणात् । अन्यथैतत्कल्पे वृत्तिमद्वृत्तिपदवैयर्थ्यापत्तेः । वृत्तित्वत्वमात्रस्यैव तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मतयैव तदवच्छिन्नाभावमादायाव्याप्त्यभावात् । किं चैवं गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे तद्घटभिन्नं द्रव्यत्वादित्यादावतिव्याप्तिरपि स्यात् । तद्घटवृत्तित्वत्वापेक्षया गुरुत्वेन तद्घटभेदाभाववद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः । तद्घटवृत्तित्वत्वस्य साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मतया तदवच्छिन्नाभावस्य लक्षणाघटकत्वात् । एवं स्नेहशून्यं द्रव्यत्वादित्यादौ स्नेहशून्यत्वाभाववद्वृत्तित्वत्वादेर्जलवृत्तित्वत्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्ध्यातिव्याप्तिर्द्रष्टव्येति दिक् । यस्य कस्य चित्सामानाधिकरण्यमव्यावर्तकमतस्तत्तत्प्रतियोगितासामानाधिकरण्यनिवेशापेक्षया लाघवमनुसृत्याह वृत्तित्ववृत्तिना वेति। [तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तेनेति पूर्वेणान्वयः। तथा च तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तवृत्तित्ववृत्तिधर्मानवच्छिन्नेत्यर्थः] साध्याभाववद्वृत्तित्ववृत्तिना वेति पाठे साध्याभववत्पदं सम्पातायातम् । यद्यपि वृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य धूमत्वादिसामान्याभावस्य घटाद्यन्यत्वाभावस्य वा हेतावसत्त्वाद्वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः तादृशधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावविवक्षणेपि घटभेदत्वेन घटभेदनिर्वह्निवृत्तित्वान्यतराभावस्य तादृशस्य हेतावसत्त्वात् तथापि पूर्ववदत्रापि कल्पे [हेतुतावच्छेदकसम्बन्धावच्छिन्न] वृत्तित्वभिन्नावृत्तित्वेन प्रतियोगित्वं विशेषणीयमित्यदोषः । स्वन्यूनवृत्तिधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताया एव तादृशावृत्तित्वत्वातिरिक्तवृत्तित्वनिष्ठधर्मानवच्छिन्नत्वं विवक्षितमिति केचित् । वृत्तित्ववृत्तिना धर्मेण वेति पाठे तु धूमत्वाद्यभावमादायासम्भ-

गिताको बोध्यः तेनालोकाद्यवृत्तित्वेन रूपेण यो व-
ह्निसामान्याभाववदवृत्तित्वस्य यश्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावा-
धिकरणीभूतमहानसवृत्तित्वादेरभावस्तस्य धूमादौ स्वनिष्ठसाध्या-
भाववदवृत्तित्वविरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वेऽपि न क्ष-

---

त्यापत्तेरेव धर्मेण वेति कल्पान्तरोल्लेखः। तथा च धूमत्वत्वघटभे-
दत्वादेस्तादृशवृत्तित्वत्वातिरिक्तधर्मत्वादेव तदवच्छिन्नाभावमादाय
नासम्भवः। वाच्यं प्रमेयादित्यादौ तु तादात्म्येन हेतौ विरुद्धघटत्व-
पटत्वाभ्यामवृत्तिगगनादिना वा वृत्तित्वाभावमादाय लक्षणसमन्वय
इति ध्येयम्। स्वव्यापकतत्तत्साध्याभाववदवृत्तित्वत्वेत्यस्य फल-
माह आलोकाद्यवृत्तित्वेनेति। निर्वह्निवृत्तित्वस्येति प्रतियोगिताया-
स्तत्तत्साध्याभाववदवृत्तित्वत्वव्यापकत्वप्रदर्शनार्थम्। न च स्वव्या-
पकवृत्तित्वत्वकेत्युक्तावपि आलोकावृत्तित्वत्वावच्छिन्नाभावस्य वा-
रणसम्भवात्प्रतियोगिताव्यापकत्वदिशि तत्तत्साध्याभाववत्त्वप्रवेशो
व्यर्थ इति वाच्यम्। आलोकावृत्तित्वाभावमादायाव्याप्तिवारणार्थं त-
स्यावश्यकत्वात्स्वसमानाधिकरणात्यन्ताभावाप्रतियोगितत्तत्साध्या-
भाववदवृत्तित्वत्वनिष्ठात्यन्ताभावाप्रतियोगिप्रतियोगिताकत्वरूपपर्य-
वसितार्थे तत्तत्साध्याभाववतः सकृदेव निविष्टतया वैयर्थ्यशङ्कानव-
काशाच्चेति भावः। तत्तत्साध्याभाववदवृत्तित्वत्वव्यापकप्रतियोगि-
तेत्यस्य फलमाह यश्चेति। आदिना वाच्यत्वत्वादेः परिग्रहः। घटत्वा-
देः साध्यव्यापकतावच्छेदकत्वाभावात्तदवच्छिन्नवह्न्यभावस्य ल-
क्षणाघटकत्वादत उक्तं इन्धनत्वादीति। इन्धनत्वावच्छिन्नाभावस्य
महानसादावसत्त्वात्तमादाय क्षतिविरहादाह वह्न्यभावेति। तादृ-
शवृत्तित्वत्वव्यापकप्रतियोगिताकेत्यस्यानुक्तावसम्भव एव स्यान्न तु
वह्निमान्धूमादित्यत्राव्याप्तिमात्रम्। प्रमेयमात्रस्य हेतुतास्थले तत्तत्प्रमे-
यनिष्ठवृत्तित्वाभावस्य प्रमेयान्तरवृत्तेस्तत्तत्प्रमेये विरहादित्येवमावे-
दयितुं सर्वसाधारण्येनाह स्वनिष्ठेति। स्वनिष्ठं यत्साध्याभाववदवृत्ति-
त्वं तत्सामान्याभावस्येत्यर्थः। अत्र घटत्वादौ साध्ये स्वीयविशे-
षणतया घटान्यत्वादिहेतावतिव्याप्तिः साधनस्यैव हेतुतावच्छेद-
कसम्बन्धेन वृत्तिमत्तया तन्निष्ठयावदभावस्यैव हेतौ सत्त्वात्। न

तिरित्याहुः । अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमु-
दायाधिकरणवृत्तित्वाभावास्तद्वत्त्वम् तादृशवृत्तित्वाभावश्च स्वव्या-

———

चैतस्य विरुद्धत्वात्साध्यसमानाधिकरणत्वेन हेतुविशेषणादेव
नातिव्याप्तिरिति वाच्यम् तथापि द्रव्यत्वादौ साध्ये स्वीयस-
मवायादिना सत्त्वादिहेतावतिव्याप्तिः तादृशसम्बन्धेन हेतोरे-
व वृत्तिमत्तया तन्निष्ठयावदभावस्य साध्यसामानाधिकरण्यस्य
च हेतौ सत्त्वात् एवं महाकालान्यो घटादित्यादौ कालिकसम्ब-
न्धेन हेतावतिव्याप्तिः वृत्तिमन्मात्रस्यैव हेतुताघटककालिकसम्ब-
न्धेन महाकालवृत्तेस्तेन सम्बन्धेन तद्वृत्तित्वाभावासंभवात् न च
महाकालवृत्तित्वसामान्याभावस्यापि प्रलयावच्छेदेन पटादावेव वृ-
त्तिमद्वृत्तित्वान्नातिव्याप्तिरिति वाच्यम् सामानाधिकरण्यस्य व्या-
प्यवृत्तित्वात् अन्यथा घटादिहेतावपि खण्डकालावच्छेदेन महाकाल-
वृत्तित्वाभावसत्त्वादुक्तातिव्याप्तितादवस्थ्यात् एवं द्रव्यत्वादेः साध्य-
तायामवृत्तिगगनादिहेतावतिव्याप्तिर्विशिष्टसत्तायामव्याप्तिः द्रव्यान्य-
स्मिन् गुणादौ विशिष्टसत्ताया वृत्तिमत्त्वादिति वदन्ति।यदि च वृत्तिम-
द्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वावच्छिन्नाधि-
करणतासामान्यकधर्मवत्त्वं व्याप्तिरिति विवक्ष्यते तदा नैतेषामे-
कोपि दोषः पदमादधाति वृत्तिमद्वृत्तय इत्यादौ सर्वत्र दैशिकविशेष-
णतासम्बन्धेन वृत्तेर्निवेशनीयत्वात् अन्यथाधिकरणत्वमात्रस्यैव
संयोगादिसम्बन्धेनावर्तमानत्वाद्धूमवान् वह्नेरित्यादावतिव्याप्तिरि-
ति ध्येयम् ॥ [कूटपदप्रवेशेन सार्वभौमीयं लक्षणं परिष्कुर्वन्नाह]
अन्ये त्वित्यादि । अत्र साध्याभावकूटाधिकरणवृत्तित्वस्य घटत्वा-
दिनाभावमादाय व्यभिचारिण्यतिव्याप्तिरतो यावन्त इति । तथा
च तादृशवृत्तित्वसामान्याभावस्य हेतावसत्त्वान्नातिप्रसङ्गः। न च ता-
दृशवृत्तित्वत्वावच्छिन्नाभाववत्त्वोक्तावपि तादृशातिव्याप्तिव्युदासः
सम्भवतीति वाच्यम् । तथापि तादृशवृत्तित्वत्वेन घटादेरभावमादा-
याव्याप्तितादवस्थ्यात्।तादृशवृत्तित्वत्वस्य गुरुतया तदवच्छिन्नाभा-
वाप्रसिद्धेश्च।अत एव तादृशवृत्तित्वसामान्याभाववत्त्वमपि न विवक्षि-
तम् केवलान्वयिन्यव्याप्तेः।वाच्यत्वाभावकूटवद्वृत्तित्वसामान्याभा-

वस्य हेतावसत्त्वादिति भावः। इत्थमपि वाच्यत्वाभावकूटवद्वृत्तित्वसामान्याभावस्यैव यावदन्तर्गतस्य ज्ञेयत्वादिहेतावसत्त्वाद्वाच्यं ज्ञेयत्वादित्यादावव्याप्तिरतो वृत्तिमद्वृत्तय इत्युक्तम्। तथा चैतस्य वृत्तिमद्वृत्तित्वान्न तस्य निरुक्तयावदन्तर्गतत्वं किं तु घटत्वादिना तादृशवृत्तित्वाभावस्यैव स च ज्ञेयत्वादिहेतौ वर्तते इति नाव्याप्तिः। अत्र वृत्तिमत्त्वादिकं पूर्वलक्षणदिशावसेयम्। तेन न प्रागुक्तदोषः। ननु प्रलयभिन्नं गोत्वादित्यादौ कालिकसम्बन्धेन हेतावतिव्याप्तिः महाकालस्य कालिकसम्बन्धेन प्रलयान्यत्वाभावकूटवत्त्वेन तत्र हेतुताघटकसम्बन्धेन या वृत्तिस्तस्याः व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात् न च दैशिकविशेषणतया साध्याभावकूटवत्त्वं विवक्षितमतस्तादृशकूटवत्प्रलयवृत्तित्वसामान्याभावस्याधुनिकघटादिवृत्तेर्गोत्वहेतावसत्त्वान्नातिव्याप्तिरिति वाच्यम् घटत्वाभाववान् पटत्वादित्यादावभावसाध्यकेऽव्याप्तिप्रसङ्गात् साध्याभावकूटान्तर्गतस्य घटत्वस्वरूपसाध्याभावस्य विशेषणतयाधिकरणाप्रसिद्धेः दैशिकविशेषणतया वृत्तिमतामेव साध्याभावानां प्रवेशे तु घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिर्व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव तत्र दैशिकविशेषणतया वृत्तिमत्तया तत्कूटवद्वृत्तित्वस्यापि तादृशधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात् एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताके गगनत्वाभावस्याभावे साध्ये ज्ञानादिहेतावव्याप्तिः गगनत्वाद्यभावघटितकूटस्य दैशिकविशेषणतासम्बन्धेन यदधिकरणं तद्वृत्तित्वसामान्याभावस्य वृत्तिमति शब्दादौ प्रसिद्धस्य ज्ञानादिहेतावभावादिति चेन्न। साध्यतावच्छेदसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धेः संसर्गविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेन वृत्तिमतः साध्याभावकूटस्य तादृशसम्बन्धेनैवाधिकरणत्वस्योक्तत्वात्संयोगाभाववान् प्रमेयत्वादित्यादौ च संयोगादिरूपसाध्याभावो न तादृशसम्बन्धेन वृत्तिमान् निरवच्छिन्नसमवायादिसम्बन्धेनैव संयोगादिनिश्चयस्य तद्विरोधित्वमतो न तत्राव्याप्तिः। केवलान्वयिनि तादृशाभावप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धिर्भ्रमरूपैव सुलभा। सत्यां हि घटत्वेन वाच्यत्वं नास्तीति बुद्धौ जात्वपि घटत्वेन वाच्यत्वमस्तीति ज्ञानानुदयात्।घटत्वाद्यभाववत्ताबुद्धिं प्रति च समवा-

पकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः प्रयोजनञ्चो-

---

यादिना घटत्वादिमत्तानिश्चयस्य प्रतिबन्धकत्वादेवोक्ताव्याप्तयादेर्व्यु-दासः। तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकत्वप्रवेश एव समुदायपदं सार्थकं भवत्यतः प्रागेव वृत्तित्वाभावं व्याचष्टे तादृशेति । स्वेति । स्वं प्रतियोगिता।तद्व्यापकं यत्साध्याभावकूटवद्वृत्तित्वत्वं तद्व्यापकप्रतियोगिताकेत्यर्थः।प्रयोजनं चेति। वह्निमान् धूमादित्यत्रालोकावृत्तिसामान्याभावस्य साध्याभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य यावदन्तर्गतस्य हेतावसत्त्वादव्याप्तिरतः स्वव्यापकेति । तथा चालोकावृत्तित्वावच्छिन्नप्रतियोगित्वस्य व्यापकं न निर्वह्निवृत्तित्वत्वं धूमत्वादौ व्यभिचारादित्ययमभावो न लक्षणघटक इति नाव्याप्तिः । प्रतियोगितायां तादृशवृत्तित्वत्वव्यापकत्वानुक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः प्रतियोगिताव्यापकसाध्याभावकूटवद्वृत्तित्वत्वकस्य घटवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य हेतावसत्त्वात् तदुपादाने च तादृशाभावप्रतियोगित्वं न वाच्यत्वाभावकूटवद्वृत्तित्वत्वव्यापकं पटवृत्तित्वे व्यभिचारादित्येतस्य लक्षणाघटकत्वान्नाव्याप्तिरिति भावः । अत्र च प्रतियोगित्वं स्वन्यूनवृत्तिधर्मानवच्छिन्नं ग्राह्यम् ।तेनेदं वाच्यं ज्ञेयत्वादित्यादौ घटवृत्तित्वत्वेन वृत्तित्वसामान्याभावस्य घटान्यत्वादिवृत्तेर्हेतावसत्त्वेपि नाव्याप्तिः । सार्वभौममते एकविशिष्टापरत्वमेवोभयत्वम् । तेन घटवृत्तित्वघटान्यवृत्तित्वोभयाभावमादाय नाव्याप्तिः । तादृशप्रतियोगितायास्तादृशवृत्तित्वत्वाव्यापकत्वादिति ध्येयम् । स्वव्यापकत्वदलस्य पूर्वोक्तलक्षणोक्तैव व्यावृत्तिः तादृशवृत्तित्वत्वव्यापकत्वदलस्य तु न प्रागिव वह्निमान् धूमादित्यादावव्याप्तिः तत्र महानसादेः साध्याभावकूटानधिकरणत्वात् किं तु केवलान्वयिस्थल एवेत्याशयेनाह उक्तप्रायमिति । न च स्वव्यापकेत्याद्यपेक्षया लाघवात् साध्याभावकूटवद्वृत्तित्वत्वावच्छिन्नाभावा एव यावन्तो निवेश्यन्तां तादृशवृत्तित्वत्वेन घटादेरभावमादाय केवलान्वयिनि लक्षणसम्भवादिति वाच्यम् । वह्निमान् धूमाद्वाच्यं ज्ञेयत्वादित्यादौ सर्वत्रासम्भवापत्तेः।निर्वह्निवृत्तित्वत्वाद्यपेक्षया गुरुत्वेन वह्न्यभावकूटवद्वृत्तित्वत्ववाच्यत्वाभावकूटवद्वृत्तित्वत्वादेः प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसि-

क्तप्रायम् साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नस्यैवाभावस्य वृत्तिमद्वृत्तित्वाद्व्यभिचारिण्यतिव्याप्तिरतः समुदायेति साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्यः तेन समवायेन वह्नेः साध्यत्वे धूमे संयो-

---

द्धेरिति भावः। ननु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावास्तद्वत्त्वमेवोच्यतां कृतं कूटपदनिवेशेनत्यत आह साध्याभावेति। साध्यप्रतियोगिकाभावेत्यर्थः। व्यधिकरणेति। साध्यप्रतियोगिकाभाववद्वृत्तित्वसामान्याभावस्यावृत्तिमात्रनिष्ठत्वादिति भावः। अत इति। तथा च धूमाभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य निर्धूमवृत्तित्वसामान्याभावस्यैव वह्न्यादिहेतावसत्त्वान्न व्यभिचारिण्यतिव्याप्तिः। न चैवं गगनाभाववान्वाच्यत्वादित्यादावव्याप्तिः गगनस्यापि साध्याभावतया तदधिकरणाप्रसिद्धेरिति वाच्यम्। वृत्तिमत्त्वेनापि साध्याभावस्य विवक्षणीयत्वात्। नव्यमते गगनस्य स्वाभावविरहत्वे मानाभावाच्चेति भावः। अत्र साध्याभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगितेत्यत्र कूटपदस्य फलं ग्रन्थकृतैवोक्तम् प्रतियोगिताव्यापकसाध्याभाववद्वृत्तित्वत्वमित्यत्र कूटपदस्य फलं तु नालोकावृत्तेरभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणं तादृशाभावस्य स्वव्यापकवृत्तित्वत्वकप्रतियोगिताकेत्युक्तावपि वारणसम्भवाद्धूमत्वादावपि तदभावप्रतियोगितासत्त्वात् परं त्वालोकावृत्तिवृत्तित्वस्याभावमादायाव्याप्तिवारणमेव तत्फलमिति प्राञ्चः। तत्तुच्छम्। स्वाश्रयनिष्ठात्यन्ताभावाप्रतियोगिनः साध्याभावकूटवद्वृत्तित्वत्वस्याश्रये वर्तमानस्याभावस्याप्रतियोगिप्रतियोगिताकाभावेनैव तादृशवृत्तित्वाभावानां निवेशात्। तत्र च सकृदेव कूटपदस्यान्तर्भावेणोभयथा तन्निवेशे फलानुसन्धानस्य वायसदन्तानुसन्धानसमानत्वात्। अन्यथा साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यापि प्रतियोगिताव्यापकसाध्याभावकूटवद्वृत्तित्वत्वकत्वाभावादेव व्युदासात्तमादाय व्यभिचारिण्यतिव्याप्तिवारणार्थे ग्रन्थकृता कूटपदोपन्यासानौचित्यापत्तेरिति ध्येयम्। धूम इति।

गेन च तथात्वे वह्न्यवयवत्वे पर्वतवह्न्यवयवसंयोगे च पर्वतस्य वह्न्यवयवस्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेऽपि

---

नातिव्याप्तिरिति परेणान्वयः । एवमग्रेपि । इदमापाततः साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावप्रवेशेऽप्यत्रातिव्याप्तेर्दुरुद्धरत्वात् । साध्याभाववत्संयुक्तत्वसामान्याभवस्य कुत्रापि संयोगेन वृत्तिमत्त्वसत्त्वात् । वह्न्यवयवमात्रसंयुक्तवस्तुनोऽसत्त्वादिति ध्येयम् । ननु सम्बन्धविशेषाविवक्षायां प्रलयोत्पन्नकर्मतद्ध्वंसनित्यरूपादिकमेव वह्न्यभावकूटाधिकरणं वाच्यम् जन्यविभुमूर्तानां यथायोगं कालिकसंयोगदिक्कृतविशेषणताभिर्वह्निमत्त्वेन द्रव्यस्य वह्न्यभावकूटवत्त्वविरहाद्वह्न्यसमानकालीनस्य धूमसंयोगिद्रव्यस्यासत्त्वात् तथा च तत्र साध्याभावकूटवति हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्धैव न धूमेऽतिव्याप्तिः समवायेन धूमस्य हेतुत्वं तु विरुद्धत्वादेव तद्व्युदासासंभवादत आह संयोगेन चेति । तथात्वे वह्नेः साध्यत्वे । तथा चात्र वह्न्यभावाधिकरणं यन्नित्यरूपादिकं तत्र हेतुतावच्छेदकसम्बन्धेन तद्वृत्तित्वस्य रूपत्वादौ प्रसिद्धस्याभवो वर्तत एव वह्न्यवयवत्वे इत्यतिव्याप्तिः स्याद्यदि साध्यतावच्छेदकसम्बन्धेन साध्याभावस्य प्रवेशो न स्यादिति भावः । ननु समवायेन वह्न्यभावस्य वह्न्यवयवत्वासमानाधिकरणत्वात् अग्रे वक्ष्यमाणेन साध्याभावानां हेतुसामानाधिकरण्यविशेषणेनैव न तादृशाभावमन्तर्भाव्योक्तहेतावतिव्याप्तिरतो हेत्वन्तरमाह पर्वतेति । अत्र समवायेन वह्न्यभावस्य पर्वते संयोगेन वह्न्यभावस्य च वह्न्यवयवे हेतुसमानाधिकरणत्वात् तदुभयघटितसाध्याभावकूटाधिकरणं यन्नित्यरूपादिकं तत्समवेतत्वाभावस्य तादृशसंयोगहेतौ सत्त्वाद्भवत्यतिव्याप्तिः । यत्तु संयोगेन वह्नेः साध्यत्वे वह्न्यवयवत्वस्य विरुद्धत्वात् हेतौ साध्यसामानाधिकरण्यविशेषणेनैव वारयितुं शक्यत्वात् पर्वतेत्यादि हेत्वन्तरमिति तत्तुच्छम् । वह्न्यवयवेपि वह्न्यन्तरस्य संयोगेन वृत्तौ विरोधविरहात् । तादात्म्येन साध्यत्वानुरोधात्सम्बन्धितामात्रस्यैव सामानाधिकरण्ये प्रवेश्यत्वादिदिति भावः । सम्बन्धद्वयेति । पर्वतस्य संयोगावच्छिन्नवह्न्यभावान-

नातिव्याप्तिः तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रति-
योगिताकोऽपि बोध्यः तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्त-
द्विपक्षावृत्तित्वाद्यवच्छिन्नप्रतियोगिताकाभावकूटाधिकरणमप्रसि-
द्धं तत्र सद्धेतौ पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाव-

---

धिकरणत्वात् वह्न्यवयवस्य च समवायावच्छिन्नवह्न्यभावानधि-
करणत्वादिति भावः। [नातिव्याप्तिरिति।] प्रागुक्तरीत्या सा-
ध्याभावकूटवति नित्यरूपादौ हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसि-
द्धया वह्निमान् धूमादित्यादावव्याप्तिर्वेत्यपि द्रष्टव्यम्। अत्र च वृत्त्य-
नियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वमत एवेदमुक्तम्। तेन ध-
नी चैत्रत्वादित्यादौ स्वामित्वादिसम्बन्धेन साध्यतायां नाव्याप्तिः।
साध्यतावच्छेदकसम्बन्धातिरिक्तसमानाधिकरणसंसर्गानवच्छिन्नप्र-
तियोगिताकसाध्याभावो ग्राह्य इति तु न युक्तम्। धनी द्रव्यत्वादि-
त्यादौ व्यधिकरणसम्बन्धेन साध्याभावस्यैव तादृशत्वेनातिव्याप्तिप्र-
सङ्गात्। ननु साध्याभावो यदि साध्यतावच्छेदकरूपेण विवक्षित-
स्तदा प्रमेयं वाच्यत्वादित्यत्राव्याप्तिः प्रमेयत्वावच्छिन्नप्रतियोगित्वा-
प्रसिद्धेः न च साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मानव-
च्छिन्नप्रतियोगिताकाभाव एवाभावो वक्तव्यः तथा चावृत्तिगगना-
दिना प्रमेयादेरभाव एव तत्र सुलभ इति वाच्यं घ्राणग्राह्यगुणवान्
द्रव्यत्वादित्यादावतिव्याप्तिस्तादृशगुणत्वस्य ग्राह्यगन्धत्वापेक्षया गु-
रुत्वेन प्रतियोगितानवच्छेदकतया व्यधिकरणधर्मावच्छिन्नाभावा-
नामेव तादृशसाध्याभावत्वादत आह तथेति।स्वं प्रतियोगिता। प्रति-
योगिताव्यापकसाध्यतावच्छेदकेत्यस्य फलमाह पृथिवीत्वाभावा-
दाविति। तत्तद्विपक्षो घटादिः। तथा च घटावृत्तित्वावच्छिन्ना-
भावघटितसाध्याभावकूटाधिकरणाप्रसिद्ध्या पृथिवीत्वाभाववज्जल-
त्वादित्यादौ नाव्याप्तिः। प्रतियोगितायाः पटत्वादावपि सत्त्वेन सा-
ध्यातवच्छेदकस्य तद्व्यापकतया तादृशाभावानां लक्षणाघटकत्वात्।
प्रतियोगिभेदेपि एकधर्मावच्छिन्नप्रतियोगिताया एकत्वादिति भावः।
सद्धेताविति। नाव्याप्तिरित्यन्वयः। वह्निमान्धूमादित्यत्र साध्यताव-
च्छेदकसम्बन्धेन विपक्षीभूततत्तज्जलावृत्तित्वावच्छिन्नाभावकूटस्य

वति सामान्यादाववर्तमाने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिरतिव्याप्तिर्वा नाप्यभावत्वादिना अभावादौ साध्ये तत्तत्साध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरित्याहुः । तन्न ।

---

गुणादौ द्रव्यं पृथिवीत्वादित्यादौ च विपक्षीभूतरूपरसादिप्रत्येकासमवेतसामान्याभावकूटस्य जात्यादावधिकरणतासत्त्वात्तदप्रसिद्धिनिबन्धनाव्याप्तेरुक्तस्थले विरहात्तदुभयं नोदाहृतम् । ननु यावतामैकाधिकरण्यं तावत्समुदायस्य विवक्षायां नोक्तव्याप्तिरत आह पृथिवीत्वादाविति । साधनसमानाधिकरणत्वेन साध्याभावस्य विशेषणीयत्वेन जातित्वावच्छिन्नाभावमादाय नातिव्याप्तिसम्भव इत्यादिपदमुपात्तम् । तथा च जलासमवेतत्वावच्छिन्नाभावस्य तेजोसमवेतत्वावच्छिन्नाभावस्य च साधनसमानाधिकरणत्वात् तदुभयघटितसाध्याभावकूटवति जात्यादौ प्रकृतहेतोरसत्त्वादतिव्याप्तिरिति भावः । द्रव्यत्वस्य समवायेन हेतुत्वे तादृशसाध्याभावकूटवति जात्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्धैव नातिव्याप्तिः स्यादत उक्तं द्रव्यत्वप्रकारकेति । सामान्यादौ स्वरूपसम्बन्धेन वृत्तिर्वाच्यत्वादावेव सुलभा । प्रमाविशेष्यत्वादाविति ।नातिव्याप्तिरित्यन्वयः ।तादृशाप्रतीतिविषयत्वं भ्रममादाय जात्यादावपीत्यतः प्रमेति। अत्र प्रतियोगितांव्यापकत्वं साध्यतावच्छेदकताघटकसम्बन्धेन ग्राह्यम्। तेन नित्यज्ञानवतस्तादात्म्येन साध्यतायामीश्वरत्वादिहेतौ घटान्यभेदस्य पटान्यभेदस्य च द्वयोर्विषयतासम्बन्धेन प्रतियोगिताव्यापकीभूतानित्यज्ञानात्मकसाध्यतावच्छेदकव्यापकप्रतियोगिताकयोरेकाधिकरणाप्रसिद्धावपि नाव्याप्तिः । न वा तादृश एव साध्ये द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यत्र पृथिव्यादौ साधनसमानाधिकरणस्य पृथिव्यादिनवद्रव्याणां प्रत्येकभिन्नद्रव्यभेदस्य कूटवति गुणादौ हेतोरसत्त्वेप्यतिव्याप्तिः। न चैवं वह्निधूमोभयभवान् धूमादित्यत्राव्याप्तिः प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसितत्वेन तां प्रति पर्याप्त्याख्यसाध्यतावच्छेदकताघटकसम्बन्धेन कस्याप्यव्यापकतया निरुक्तसाध्याभावाप्रसिद्धेरिति वाच्यम्। एकविशिष्टापरत्वानतिरिक्तस्योभयत्वस्य सार्वभौममते पर्याप्तिभिन्नसम्बन्धेनैव साध्यतावच्छेदकत्वादिति भावः। सा-

ध्यतावच्छेदकव्यापिका प्रतियोगितेत्यस्य फलमाह नापीति। घटत्वाभा-
वत्वेन साध्यत्वे साध्याभावकूटवत्त्वं घटस्यैव सुलभमत उक्तम् अ-
भावत्वादिनेति। आदिना प्रमेयत्वादेरुपग्रहः। तथा चाभाववान्
प्रमेयवान्वा घटत्वादित्यत्र साधनसमानाधिकरणस्य तत्तद्घटान्यत्वा-
भावकूटस्याधिकरणाप्रसिद्ध्याव्याप्तिः स्यादतः साध्यतावच्छेदकव्या-
पकेति। साध्यतावच्छेदकीभूताभावत्वादिव्यापकप्रतियोगिताकत्वा-
भावादेव तत्तद्घटान्यत्वाभावानां लक्षणाघटकत्वादिति भावः। अ-
त्र स्वन्यूनवृत्तिधर्मानवच्छिन्नाया एव प्रतियोगितायाः साध्यताव-
च्छेदकसमनैयत्यं वाच्यम्। तेन घटत्वाभावत्वेन पटत्वाभाववेन
चाभावप्रमेयसामान्याभावयोरेकाधिकरणाप्रसिद्धावपि नोक्ताव्या-
प्तितादवस्थ्यम्। घटत्वाभावत्वादेः प्रमेयसामान्यनिष्ठप्रतियो-
गितान्यूनवृत्तित्वेन तादृशप्रतियोगिताकाभावानां लक्षणाघटकत्वा
त्। एवं साध्यसामानाधिकरण्यमपि हेतौ वक्तव्यम्। तेन
सत्तावत्समवेतत्वत्वसमनियतप्रतियोगिताकस्य व्याधिकरणधर्मा-
वच्छिन्नाभावस्यैव वृत्तिमदवृत्तित्वात्तादृशस्य च यावत एव हेतौ
सत्त्वेपि जात्यभाववान् द्रव्यत्वादित्यादिविरुद्धहेतौ नातिव्याप्ति-
रिति ध्येयम्॥ यद्यपि घटवृत्तित्वविशिष्टवाच्यत्वाभावस्य घटान्य-
वृत्तित्वविशिष्टवाच्यत्वाभावस्य च द्वयोरेकाधिकरणाप्रसिद्ध्या वा-
च्यं ज्ञेयत्वादित्यादावव्याप्तिः न च घटादिवृत्तित्वविशिष्टवाच्यत्वत्वं
न प्रतियोगितावच्छेदकम् तदपेक्षया लाघवाद्घटादिवृत्तित्वविशिष्ट-
त्वस्यैव तथात्वात् तादृशवैशिष्ट्यावच्छिन्नाभावानां साध्यताव-
च्छेदकसमव्याप्तप्रतियोगिताकत्वाभावादेव व्युदासः घटवृत्तित्ववि-
शिष्टवस्तुमात्र एव तत्प्रतियोगितासत्त्वादिति वाच्यम् वाच्यत्व-
निष्ठाधेयताविशेषेण घटावच्छिन्नप्रतियोगिताकाभावस्य तादृशसम्ब-
न्धेन घटान्यावच्छिन्नप्रतियोगिकाभावस्य च द्वयोस्तथाप्येकाधिक-
रणाप्रसिद्ध्याव्याप्तितादवस्थ्यात् न चाधेयताविशेषेण घटादेः प्र-
तियोगितावच्छेदकत्वे मानाभावः तस्य त्वयाप्यवश्यं वाच्यत्वात्
अन्यथा घटवृत्तित्वविशिष्टवाच्यत्ववान् द्रव्यत्वादित्यादावतिव्या-
प्त्यापत्तेः गुरुतरतादृशवाच्यत्वत्वावच्छिन्नाभावस्याप्रसिद्ध्या घटवृत्ति-
त्वविशिष्टत्वावच्छिन्नाभावस्य साध्यतावच्छेदकसमनियतप्रतियोगि-
ताकत्वाभावेन व्यधिकरणधर्मावच्छिन्नस्यैव घटवृत्तित्वविशिष्टवा-

द्रव्यत्वपृथिवीत्वोभयवान् द्रव्यत्वादिसादौ तदुभयान्यतरत्वाव- च्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः । अपि च इदं पृथि- व्यन्यद्रव्यत्ववत् द्रव्यत्वादिसादौ द्रव्यत्वत्वाद्यवच्छिन्नाभावकूटाधि- करणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तेः । द्रव्यत्वत्वा- द्यवच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्त- त्वात् । किञ्च रूपाभावसाध्यके सद्धेतौ साध्याभावसमुदायनिवि-

---

व्यत्वाभावस्य लक्षणघटकत्वात् तथापि दूषणमिदं स्फुटतयोपेक्ष्या- ह द्रव्यत्वेत्यादि ॥ ननु सार्वभौमानां मते विरुद्धयोरुभयत्वस्यातिरि- क्ततायामपि समानाधिकरणयोरेकविशिष्टापरत्वमेवोभयत्वं तथा च पृथिवीत्वविशिष्टद्रव्यत्वत्वं द्रव्यत्वविशिष्टपृथिवीत्वत्वमेव साध्य- तावच्छेदकं पर्यवसितमिति तत्समनियतप्रतियोगिताकत्वाभावादे- तदुभयान्यतरत्वावच्छिन्नाभावमादाय नातिव्याप्तिः तत्प्रतियोगिता- याः पृथिवीत्वेपि सत्त्वेन निरुक्तसाध्यतावच्छेदकस्य तदव्यापकत्वा- दत आह अपि चेति । उद्देश्यविधेयस्थले समानलिङ्गकत्वस्यातन्त्रत्वात् पृथिव्यामन्यत्वविशिष्टद्रव्यत्वस्य साध्यताभ्रमं निराकर्तुं पक्षमुल्लिख- ति इदमिति । पृथिवीति । पृथिव्यन्यत्वे सति द्रव्यान्यासमवेतसक- लद्रव्यसमवेतवदित्यर्थः । नच सकलद्रव्यवृत्तित्वान्तर्भावेण द्रव्य- त्वस्य साध्यत्वे द्रव्यान्यासमवेतत्वावच्छिन्नाभावस्य तादृशसाध्यता- वच्छेदकसमनियतप्रतियोगिताकत्वाभावाद्गुरुतरसकलद्रव्यवृत्ति- त्वघटितद्रव्यत्वत्वावच्छिन्नात्यन्ताभावस्य चाप्रसिद्धत्वादग्रे द्रव्यत्व- त्वावच्छिन्नाभावमादायातिव्याप्तेरसङ्गत्यापत्तिरिति वाच्यम् । द्रव्यत्व- त्वादीत्यत्र द्रव्यत्वत्वपदेन द्रव्यमित्याकारकतद्बुद्धिप्रकारत्वस्यैवाग्रे वक्तव्यत्वात्तस्य च द्रव्यान्यासमवेतत्वमपेक्ष्यापि लघुत्वेन प्रति- योगितावच्छेदकत्वसम्भवादिति भावः । द्रव्यत्वत्वादीत्यत्रादिना पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वस्य पृथिवीवृत्तित्वविशिष्टद्रव्यत्वत्वस्य च द्वयोरेवावच्छेदकयोः परिग्रहः ॥ ननु साध्यतावच्छेदकान्यसमा- नाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभाव एव साध्यभावपदार्थो वाच्यः तथा च विशिष्टद्रव्यत्वस्य साध्यतायां द्रव्यत्वसामान्याभा-

ष्टसकलरूपव्यत्त्यधिकरणाप्रसिद्धिः । यावतामभावानामैकाधिकरण्यं तावतां समुदाये विवक्षितेऽपि इदंपृथिवीवृत्तिगुणशून्यं सत्तान्यपृथिवीसमवेतशून्यं वा वायुत्वात् रूपवदन्यत्वाद्वेत्यादावति-

---

व्याप्तेस्तथात्वान्नातिव्याप्तिः गुरुधर्मस्य प्रतियोगितावच्छेदकत्वोपगमाच्च ताद्रूप्येण साध्यतायामपि नातिव्याप्तिरत आह किं चेति । ननु विशिष्टस्यातिरिक्तत्वमते द्रव्यत्वादिसामान्याभावस्य विशिष्टसाध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावादेव तमादाय नातिव्याप्तिरत आह किं चेतीति प्राञ्चः । सद्धेतौ वायुत्वादौ । अप्रसिद्धिरिति । कालस्य सकलरूपवत्त्वेऽपि साध्यवत्ताधीविरोधिताघटकसमवायसम्बन्धेन तदनधिकरणत्वादिति भावः ॥ शङ्कते यावतामिति । तथा च व्यधिकरणधर्मावच्छिन्नाभावैरैकाधिकरण्यापन्नस्य तद्रूपस्याधिकरणे वृत्तित्वप्रसिद्ध्यैव नाव्याप्तिरिति भावः । विवक्षितेपीत्यपिना तदविवक्षायामपि वक्ष्यमाणातिव्याप्तिः सूचिता । ननु यावतां मिथः सामानाधिकरण्यं तावत्समुदायो विवक्षितः किं वा यावतां साध्याभावानामभावान्तरेण सामानाधिकरण्यं तावत्समुदायोऽभिप्रेतः प्रथमे इदमिति । अत्रेदमिति पृथिव्याः विशेषणम् । न तु पक्षनिर्देशः । तथासति घटतद्वायुद्वित्वपटतद्वायुद्वित्वकुड्यतद्वायुद्वित्वादीनामेव तद्वायौ मिथः सामानाधिकरण्यापन्नसाध्याभावानामधिकरणे तद्वायौ वृत्तित्वादेव वायुत्वादिहेतावतिव्याप्त्यनुपपत्तेः । एतत्पृथिवीसमवेतप्रतियोगिकाभावस्य साध्यत्वे वायुत्वादेः सद्धेतुत्वात्समवेतत्वापेक्षया गुरुत्वेनैतत्पृथिवीसमवेतत्वावच्छिन्नाभावाप्रसिद्ध्यैव साध्यत्वायोगादूगुणपदम् । नन्वेतत्पृथिवीवृत्तिगुणत्वावच्छिन्नाभावसाध्यकमपि वायुत्वादिकं सद्धेतुरेव प्रलये परमाणावुत्पत्तिकाले चावयविनि वायौ तत्सत्त्वात् अतः साध्यान्तरमाह सत्तान्येति । अत्र पृथिवीपदमेतत्पृथ्वीपरम् । अन्यथा प्रागुक्तद्वित्वादिव्यक्तीनां तद्वायौ मिथःसामानाधिकरण्यापन्नसाध्याभावतया वायुत्वादेस्तत्कूटाधिकरणीभूतवायुवृत्तित्वेनैवातिव्याप्त्यसम्भवापत्तेरिति ध्येयम् । अत्राप्येतत्पृथिवीसमवेतप्रतियोगिकाभावस्य केवलान्वयितया तत्साध्यकवायुत्वादेः सद्धेतुत्वात्समवेतत्वा-

व्याप्तिः । तत्र तादृशसाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वति तद्धेतोरवृत्तेः । वस्तुतो निखिलानामेव रूपाणां तादृशाभावसहस्रसमानाधिकरणत्वात्समानाधिकरणयावदभावाधिकरणाप्रसिद्धिर्दुर्वारैव । किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभाववति

---

पेक्षया गुरुत्वेनैतत्पृथिवीसमवेतत्वावच्छिन्नाभावस्य चाप्रसिद्ध्या साध्यत्वायोगात्सत्तान्यपदम् । न च सत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावोऽप्यप्रसिद्धः द्रव्यत्वत्वस्यैव तदवच्छेदकत्वादिति वाच्यम् । सकलद्रव्यवृत्तित्वादिघटितद्रव्यत्वत्वस्यैव तादृशसमवेतत्वापेक्षया गुरुत्वेनानवच्छेदकत्वात्सत्तान्यसमवेतत्वावच्छिन्नाभावस्याप्रसिद्धत्वात् । समवेतत्वावच्छिन्नाभावस्य साध्यत्वे समवेतमात्रस्यैव तदभावत्वेन मिथः सामानाधिकरण्यापन्नसमवेतकूटवति वायौ हेतोः सत्त्वादेव नातिव्याप्तिरतः पृथिवीपदम् । ननु वायुत्वस्योक्तसाध्यसामानाधिकरण्याभावादेव न तत्रातिव्याप्तिरतो हेत्वन्तरमाह रूपवदिति । अयं हेतुर्गुणादौ साध्यसमानाधिकरणः । रूपात्यन्ताभावस्य पृथिव्यामुत्पत्तिकालावच्छेदेन सत्त्वात्तत्रातिव्याप्त्यसम्भवाद्रूपवदन्यत्वानुधावनम् । रूपवद्भेदस्यापि तदानीं पृथिव्यामुपगमे त्वाह इत्यादाविति । आदिना वायुरूपान्यतरत्वादेः परिग्रहः ॥ तादृशेति । मिथः सामानाधिकरण्यापन्नेत्यर्थः ॥ द्वितीये त्वाह वस्तुत इति । तादृशाभावेति । व्यधिकरणधर्मावच्छिन्नसाध्याभावेत्यर्थः । सहस्रेति । अवच्छेदकभेदेनाभावभेदमभ्युपेत्योक्तम् । दुर्वारैवेति ॥ ननु यावतामेकव्यक्तिवृत्तित्वं तावत्कूटवत्त्वोक्त्या नाप्रसिद्धिः न वा प्रागुक्तातिव्याप्तिः किं च सत्तान्यैतत्पृथिवीसमवेतशून्यस्वाभावो द्रव्यत्वस्वरूप एव लाघवात् न तु सत्तान्यैतत्पृथिवीसमवेतमात्रं बहूनां तथात्वे गौरवादतः परस्परसामानाधिकरण्यापन्नतादृशद्रव्यत्वादिस्वरूपसाध्याभावस्तोमवति हेतोः सत्त्वादेव नातिव्याप्तिरिति यदि ब्रूयात्तदा दोषान्तरमाह किं चेति । यत्तु रूपसामान्याभावस्याभावोऽनुगतप्रतीतिबलादतिरिक्त एवेति तद्वति हेतोः सत्त्वासत्त्वाभ्यां नोक्तातिव्याप्त्यव्याप्त्योः सम्भव इत्यतः किंचेति । तत्तुच्छम् । इदानीमेवाभावाभावस्यातिरिक्तत्वमङ्गीकृत्य दोषनिरासे भूतत्वमूर्तत्वान्यतरत्वावच्छि-

वृत्तिस्तदभावो वक्तव्यः। अन्यथा धूमादावव्याप्तिः साध्यतावच्छेद-
कसम्बन्धेन साध्याभाववति कालादौ वृत्तिमन्मात्रस्यैव वृत्तेर्व्य-
भिचारिण्यतिप्रसङ्गो वा। तथा च सत्तादिसाध्यके संयोगेन समवा-
येन वा हेतावव्याप्तिः । साध्याभाववति तेन सम्बन्धेन वृत्तेरप्र-
सिद्धेः। साधनसमानाधिकरणत्वेन साध्याभावा विशेषणीया इति

---

ष्ट्राभावाभावस्यातिरिक्तत्वादग्रे भूतत्वमूर्तत्वेत्यादिनातिव्याप्त्यभिधा-
नस्य संदर्भविरोधापत्तेः। साध्याभावकूटवदवृत्तित्वस्य संयोगसमवा-
यादिप्रत्येकसम्बन्धेन प्रवेशमभिप्रेत्याह धूमादाविति। अव्याप्तिरिति।
निर्वह्निसमवेतत्वत्वावच्छिन्नाभावस्य यावदन्तर्गतस्य धूमादावसत्त्वा-
दिति भावः। सम्बन्धसामान्येन तादृशवृत्तित्वस्य प्रवेशमभिप्रेत्याह
साध्यतेति। कालादावित्यादिपदेन दिशः परिग्रहः। व्यभिचारिणि
पृथिवी द्रव्यत्वादित्यादौ। ननु धूमवान्वह्नेरित्यादौ। तत्र हेतुतावच्छेद-
कसम्बन्धेन वृत्तित्वविवक्षायामप्यतिव्याप्तेर्ध्रौव्यात् धूमाभाववत्का-
लदिगादौ मूर्तमात्रस्यैव संयोगसम्बन्धेन वृत्तेः तत्सामान्याभावस्य
हेतुताघटकसम्बन्धेन यो वृत्तिमान् तदवृत्तित्वेन लक्षणाघटकत्वा-
दिति ध्येयम्॥ सत्तादीत्यादिना समवेतादेः परिग्रहः॥ शङ्कते सा-
धनेति। तथा च सद्धेतुस्थले व्यधिकरणधर्मावच्छिन्नसाध्याभा-
वस्यैव साधनसमानाधिकरणत्वात् तत्कूटवदवृत्तित्वस्यापि तादृशा-
भावमादायैव लक्षणसङ्गतिः। इत्थं च वृत्तिमदवृत्तिपदस्य सार्थक्यं
व्यतिरेकिण्यपि सम्भवतीति द्रष्टव्यम्। यथा चैवं साध्यतावच्छेदके
प्रतियोगिताव्यापकत्वदलस्य सार्थक्यं तथोपपादितं प्रागेव।
यद्यपि हेतुसमानाधिकरणत्वेन साध्याभावानां निवेशे तादृशसाध्या-
भावकूटवदवृत्तित्वत्वे प्रतियोगिताव्यापकत्वस्योपादानं विफलं वह्नि-
मान् धूमादित्यादावालोकावृत्तित्वावच्छिन्नाभावमादायाव्याप्ति-
प्रसङ्गस्य तादृशाभावे साधनसमानाधिकरणे साध्याभावकूटवदवृ-
त्तित्वत्वव्यापकप्रतियोगिताकत्वाभावादेव व्युदासात् न चात्र
कल्पे तादृशवृत्तित्वत्वस्य प्रतियोगिताव्यापकत्वं न देयमेवेति वा-
च्यम् तथा सति हेतुसमानाधिकरणसाध्याभावकूटवदवृत्तित्व-

चेद्विशेष्यन्ताम्। तथापि भूतत्वमूर्तत्वाद्योरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः। तादृशसाध्याभावसमुदायवति पृथिव्या-

———

त्वव्यापकप्रतियोगिताकस्य द्रव्यवृत्तित्वसामान्याभावस्यैव स्पर्शवदन्यत्वहेतावसत्त्वादग्रे भूतत्वमूर्तत्वेत्यादिनातिव्याप्तेरसङ्गत्यापत्तेः तथापि वृत्तित्वालोकान्यत्वोभयत्वावच्छिन्नाभावस्यैव हेतुसमानाधिकरणसाध्याभावकूटघदवृत्तित्वत्वव्यापकप्रतियोगिताकस्य वृत्तिमद्वृत्तेर्धूमहेतावसत्त्वेन तमादायाव्याप्तिवारकत्वादेव तस्य सार्थक्यम्। न च पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावमादायाव्याप्तिवारणार्थं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगितावश्यं विशेषणीयेति तत एव वृत्तित्वालोकान्यत्वोभयाभावस्य व्युदासात्तादृशवृत्तितात्वे प्रतियोगिताव्यापकत्वस्योपादानं विफलमिति वाच्यम्। पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयात्वावच्छिन्नाभाववारणाय-वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगिताया वाच्यत्वात् तादृशप्रतियोगिताकत्वस्य च वृत्तित्वालोकान्यत्वोभयाभावेऽपि सत्त्वादिति ध्येयम्॥ भूतत्वमूर्तत्वान्यतरप्रतियोगिकाभावस्य केवलान्वयित्वात्तत्त्वेन साध्ये स्पर्शवदन्यत्वादिकं सद्धेतुरेवेत्यत उक्तम् अन्यतरत्वेनेति॥ तादृशेति। हेतुसमानाधिकरणो यो भूतत्वमूर्तत्वोभयघटितसाध्याभावस्तोमस्तद्वतीत्यर्थः। पृथिव्यादावित्यादिना जलतेजोऽनिलानां परिग्रहः। अत्र भूतत्वं विशेषगुणवत्त्वे सत्यात्मभिन्नत्वम्। न तु बहिरिन्द्रियग्राह्यजातीयविशेषगुणवत्त्वम्। मूर्तत्वं स्पर्शवन्मनोऽन्यतरत्वं जातिविशेषो वा। न त्ववच्छिन्नपरिमाणवत्त्वम्। तथा सति मनःपरिमाणशब्दयोरेव साधनसमानधिकरणतादृशसाध्याभावयोरेकाधिकरणाप्रसिद्ध्यातिव्याप्त्यसम्भवादिति द्रष्टव्यम्॥ ननु साधनाधिकरणयत्किञ्चिद्व्यक्तिवृत्तिसाध्याभावकूटस्य निवेशान्नैव दोषः क्वचिदपि स्पर्शवद्भिन्ने भूतत्वमूर्तत्वोभयोरसत्त्वात्तदुभयान्यतरघटितसाध्याभावकूटवत्याकाशे मनसि च हेतोः सत्त्वात् वस्तुतः समनियताभावानामैक्यमते भूतत्वमूर्तत्वान्यतरत्वावच्छिन्नाभाव एव भूतत्वमनस्त्वान्यतरत्वावच्छिन्नस्य मूर्तत्वगगनत्वावच्छिन्नस्य चाभावः तथा च मनस्त्वगगनत्वयोरपि भूतत्वमूर्तत्वान्यतरत्वा-

दौ तस्यावृत्तेः । किञ्च महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः । तादृशसाध्याभावसमुदायवति महाकाले तेन सम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः ।

---

वच्छिन्नाभावस्य साध्यस्याभावत्वात् हेतुसमानाधिकरणतदुभयघटितसाध्याभावकूटाधिकरणाप्रसिद्ध्या नातिव्याप्तिः अस्तु वा यावन्ति निरुक्तसाध्याभावत्वानि तावतां प्रत्येकावच्छिन्नस्य यदधिकरणं तदूवृत्तित्वाभावा वृत्तिमदूवृत्तयो यावन्तस्तद्वत्त्वमेव व्याप्तिः तथा च भूतत्वमूर्तत्वान्यतराभावाभावत्वावच्छिन्नस्याधिकरणे मनस्येव हेतोः सत्त्वान्नातिव्याप्तिरत आह किं चेति । ननु भूतत्वमूर्तत्वान्यतरत्वावच्छिन्नाभावाभावोनुगतव्यवहारादतिरिक्त एव न तु भूतत्वमूर्तत्वोभयस्वरूपः तथा च साधनसमानाधिकरणातादृशाभाववति गगने मनसि हेतोः सत्त्वान्नातिव्याप्तिरतः किं चेतीत्यपि वदन्ति । गुरुचरणास्तु ननु हेतुसमानाधिकरणा यावन्तः पदार्थाः साध्यावदूवृत्तित्वव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववन्तस्तावत्पदार्थकूटाधिकरणवृत्तित्वाभावा वृत्तिमदूवृत्तयो यावन्तस्तद्वत्त्वं विवक्षितं तथा च हेतुसमानाधिकरणयोर्गगनत्वमनस्त्वयोरेव तादृशपदार्थयोरेकाधिकरणाप्रसिद्ध्या नातिव्याप्तिः निरुक्तोभयाभाववतां घटत्वपटत्वादीनामेकाधिकरणाप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्तिरतो हेतुसामानाधिकरण्योपादानमित्यतः किं चेतीति प्राहुः। कालान्यत्वसाध्यकस्य कालिकसम्बन्धेन हेतोर्विरुद्धत्वादेव तत्र नातिव्याप्तिरत उक्तं महेति । तथा च महाकालान्यो घटादित्यादावित्यर्थः । वृत्तिमन्मात्रस्यैवेति । तथा च महाकालवृत्तित्वसामान्याभावस्य वृत्तिमदूवृत्तित्वाभावाद्व्यधिकरणधर्मावच्छिन्नाभावस्य च यावत एव हेतौ सत्त्वादतिव्याप्तिरिति भावः । अत्र केचित् सार्वभौममते सामानाधिकरण्यस्य व्याप्यवृत्तित्वात् खण्डकालावच्छेदेन घटादावेव वृत्तिमति वर्तमानस्य माहाकालवृत्तित्वसामान्याभावस्य यावद्व्यधिकरणावच्छेदेन हेतावसत्त्वान्नातिव्याप्तिः वृत्तिमदूवृत्तयो यावन्तस्तादृशवृत्तित्वाभावा यावद्व्यधिकरणावच्छेदेन तद्वत्त्वस्य विवक्षितत्वात् अत एवैतद्रूपाभिन्नं गुणत्वादित्यादावे-

तद्रूपभिन्नसमवेतत्वत्वसमनियतप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेऽपि नातिव्याप्तिः एतद्रूपावच्छेदेन गुणत्वादावेव वर्तमानस्यैतद्रूपभिन्नसमवेतत्वसामान्याभावस्य हेत्वधिकरणीभूतगुणान्तरावच्छेदेन हेतावसत्त्वादित्याहुः। तच्चिन्त्यम्। यत्तु वृत्तिमद्वृत्त्य इत्यस्य वृत्तिमद्वृत्तित्वसाध्यावद्वृत्तित्वप्रतियोगिकत्वोभयानधिकरणत्वमर्थः तथा च महाकालवृत्तित्वसामान्याभावस्यापि साध्यवद्वृत्तित्वप्रतियोगिकत्वविरहेण निरुक्तोभयानधिकरणस्य हेतावसत्त्वात् महाकालान्यो घटादित्यादौ नातिव्याप्तिः न च महाकालवृत्तित्वत्वापेक्षया लघोः कालिकसम्बन्धावच्छिन्नवृत्तित्वत्वस्यैव महाकालवृत्तित्वाभावप्रतियोगितावच्छेदकतया महाकालवृत्तित्वसामान्याभावस्य न निरुक्तवृत्तिमद्वृत्तित्वम् वृत्तिमद्वृत्तेस्तस्य साध्यवद्वृत्तित्वप्रतियोगिकत्वादिति वाच्यम् यावन्ति कालिकसम्बन्धेन महाकालवृत्तित्वानि तावदन्यतमत्वावच्छिन्नाभावस्य तावद्धर्मिकयत्किञ्चिद्बुद्धिविशेष्यत्वावच्छिन्नाभावस्य वा निरुक्तोभयानधिकरणस्य हेतावसत्त्वेनातिव्याप्तिसम्भवात् कालिकसम्बन्धावच्छिन्नवृत्तित्वत्वमपेक्ष्य तावदन्यतमत्वलक्षणाखण्डभेदस्यैव लाघवेन प्रतियोगितावच्छेदकत्वौचित्यादिति तन्मन्दम्। तथापि नित्यज्ञानभिन्नं घटादित्यादौ विषयितासम्बन्धेन हेतावतिव्याप्तेर्वज्रलेपत्वात्। नित्यज्ञानविषयतासामान्याभावस्याप्रसिद्धत्वात्। व्यधिकरणधर्मावच्छिन्नतादृशविषयत्वाभावस्य यावत एव हेतौ सत्त्वात्। नव्यास्तु साधनसमानाधिकरणा व्याप्यवृत्तयो यावन्तः साध्याभावाः साध्यसामानाधिकरण्यापन्नतावत्कूटवद्वृत्तित्वाभावो विवक्षितः तथा च व्यभिचारिमात्र एव साध्यसामान्याभावघटितकूटस्य साध्यसामानाधिकरण्याप्रसिद्ध्या नातिव्याप्तिः यावन्तस्तादृशाः साध्याभावाः तत्कूटाधिकरणस्य वा साध्यवत्त्वं विवक्षितम् लाघवात् तादृशवृत्तित्वाभावस्य च वृत्तिमद्वृत्तित्वं यावत्त्वं वा नापेक्षितं वैयर्थ्यात् इत्थं च साधनसमानाधिकरणा यावन्तस्तादृशाःसाध्याभावाः साध्याश्रयीभूततावत्कूटवद्वृत्तित्वमपि लक्षणं साधीय इति प्राहुः। वस्तुतः पूर्वलक्षण इवात्रापि वृत्तिमद्वृत्तयो यावन्तः साध्याभावकूटवद्वृत्तित्वाभावास्तत्तत्त्वावच्छिन्नाधिकरणतासामान्यकधर्मवत्त्वमेव व्याप्तिर्वाच्या तत्र वृत्तिमद्वृत्तित्वं साध्याभाववद्वृत्तित्वं च दैशिकविशेषण-

एतेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वं व्याप्तिः केवलान्वयिनः संयोगा-

---

तथैव वक्तव्यमतो न कोपि दोषः पदमाद्धातीत्यवधातव्यमिति दिक्॥

एतेनेति । महाकालान्यो घटादित्यादावतिव्याप्तिप्रसङ्गेनेत्यर्थः । परास्तमिति परेणान्वयः । अत्र वाच्यं ज्ञेयत्वात्सत्तावान्द्रव्यत्वादित्यादिनानाव्यक्तिवृत्तिसाध्यकसद्धेतौ तद्व्यक्तिवृत्तित्वविशिष्टसाध्याभावस्य तदन्यव्यक्तिवृत्तित्वविशिष्टसाध्याभावस्य च द्वयोः साधनसमानाधिकरणयोरेकाधिकरणाप्रसिद्ध्या साधनाधिकरणयत्किञ्चिद्व्यक्तिवृत्तिकूटवद्वृत्तित्वसामान्याभावानां हेतावसत्त्वेनाव्याप्तिरतः प्रतियोगिकान्तं यावदभावविशेषणम्। विशिष्टसत्तावान् जातेरित्यादौ जातिसमानाधिकरणस्य साध्यभूतसत्त्वव्यापकतावच्छेदकरूपावच्छिन्नाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वनियमाद्वृत्तिमद्वृत्तेस्तत्कूटवद्वृत्तित्वाभावस्य यावत एव हेतौ सत्त्वादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति । तथा च गुणान्यत्वाभावकर्मान्यत्वाभावयोरप्युक्तरूपावच्छिन्नप्रतियोगिताकत्वादुभयघटितकूटाधिकरणाप्रसिद्धैव नातिव्याप्तिः । अत्रापि येन सम्बन्धेन व्यापकता तेनाभावो ग्राह्यः । तेन समवायावच्छिन्नवह्न्यभावघटितकूटवद्वृत्तित्वाभावस्य वह्न्यवयवत्वादिनिष्ठस्य हेतावसत्त्वेपि वह्निमान् तत्पर्वतत्वादित्यादौ नाव्याप्तिः । न च विशेषणताविशेषेणैव साध्यव्यापकत्वं तेन सम्बन्धेन तादृशरूपावच्छिन्नाभावश्च ग्राह्यः । साध्यस्य गुणसामान्यस्याभाव इत्याद्युत्तरग्रन्थविरोधात् । गुणस्य दैशिकविशेषणतासम्बन्धेन गुणाव्यापकत्वात् । यत्तु साध्यतावच्छेदकसम्बन्धेनैव व्यापकत्वं तादृशरूपावच्छिन्नाभावं च निवेशयन्ति तत्तुच्छम् । वृत्त्यनियामकसम्बन्धेन साध्यतायां तदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् । धूमवान्वह्नेरित्यादावतिव्याप्तेश्च । संयोगेन द्रव्यस्याव्याप्यवृत्तितया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानामेव संयोगेन द्रव्याभावानां व्याप्यवृत्तित्वात् तत्कूटवद्वृत्तित्वसामान्याभावस्य वृत्तिमत्यवृत्तेः। तादात्म्येन प्रमेयव्यापकताव-

द्यभावस्याभावाः संयोगादयो न व्याप्यवृत्तयः एवं साध्यस्य गुणसामान्यस्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्तमानोऽपि न व्याप्यवृत्तिः उक्तरूपावच्छिन्नप्रतियोगिताकाः क्वचिदप्रसिद्ध्या-

---

च्छेदकं यत्प्रमेयत्वादि तेन सम्बन्धेन तदवच्छिन्नाभावाप्रसिद्ध्या तादात्म्येन प्रमेयसाध्यकसद्धेतावव्याप्तेरसकृदावेदितत्वाच्च । न च द्रव्यं घटादित्यादौ कालिकसम्बन्धेन हेतावतिव्याप्तिः साधनसमानाधिकरणस्य द्रव्यत्वाभावकूटस्य कालिकसम्बन्धेनाधिकरणमहाकाले हेतुतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेरिति वाच्यम् । दैशिकविशेषणतया तादृशयावदभावाधिकरणत्वस्य निवेशनीयत्वादिति भावः । तद्घटभिन्नं घटत्वादित्यादौ साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावाधिकरणीभूततद्घटवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावो घटत्वेपीत्यत उक्तं यावन्त इति । न च दैशिकविशेषणतया तद्घटभिन्नत्वाभावस्याधिकरणाप्रसिद्ध्यैव नातिव्याप्तिः कथं यावत्त्वविशेषणमिति वाच्यम् । तथापि तद्घटान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि यावदन्तर्गतस्य साध्याभावस्य तादृशसम्बन्धेन तदधिकरणीभूततद्घटवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्य घटत्वहेतौ सत्त्वादतिव्याप्तिरतो यावन्त इति। वह्निसंयोगसामान्याभाववान् संयोगसामान्याभाववान् वा धूमादित्यादावव्याप्तिः साधनसमानाधिकरणस्य साध्यव्यापकतावच्छेदकीभूतसंयोगसामान्याभावत्वावच्छिन्नप्रतियोगिताकस्य वह्निसंयोगाद्यात्माभावकूटस्याधिकरणाप्रसिद्धेरतो व्याप्यवृत्तिपदमित्याह केवलेत्यादिना। केवलान्वयिन इत्यनेन साध्यव्यापकत्वमाविष्कृतम्। संयोगादीत्यादिना वह्निसंयोगत्वावच्छिन्नाभावस्योपग्रहः । तेन प्राचां मते द्रव्ये संयोगसामान्याभावस्यासत्त्वेपि न क्षतिः। दैशिकाव्याप्यवृत्तिसाध्यके प्रयोजनमुक्त्वा कालिकाव्याप्यवृत्तिसाध्यके तदाह एवमिति। ननु तादृशरूपावच्छिन्नप्रतियोगिताकानां वास्तवाभावानामेव लक्षणघटकत्वात्संयोगाद्यात्मकाभावमादाय नाव्याप्तिरत उक्तम् एवमितीत्यपि केचित् । न व्याप्यवृत्तिरिति । तथा च गुणसामान्याभावस्य साधनसमानाधिकरणत्वेपि व्याप्यवृत्ति-

दिसम्पादकाः पुनरभावा न हेतुसमानाधिकरणाः उक्तसमुदाया-
धिकरणवृत्तित्वतदभाववृत्तिमत्त्वानि पूर्वोक्तरीत्या प्रत्येतव्यानीत्या-
दिकमपास्तम्॥

---

त्वाभावादेव गुणवान् द्रव्यत्वादित्यादौ नाव्याप्तिः। अन्यथा गुण-
सामान्याभावस्यापि साधनसमानाधिकरणसाध्याभावतया तद्घ-
टितकूटाधिकरणसमवेतत्वसामान्याभावस्य वृत्तिमति नित्यैकत्वादौ
प्रसिद्धस्य द्रव्यत्वहेतावसत्त्वादव्याप्तिरेव स्यादिति भावः। स्वसमा-
नाधिकरणेत्यस्य व्यावृत्तिमाह उक्तरूपेति। साध्यव्यापकतावच्छेद-
करूपावच्छिन्नेत्यर्थः। क्वचिदिति। वह्निमान् धूमादित्यादौ घटपटा-
द्यात्मकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटस्यापि निरुक्ताभावत-
या तदधिकरणाप्रसिद्धिनिबन्धनाव्याप्तिवारणार्थमेव स्वसमानाधि-
करणेत्युक्तमिति भावः। तद्घटभिन्नं पटत्वादित्यादौ वाच्यं ज्ञेय-
त्वादित्यादौ च साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिता-
काभावकूटवत्त्वं तद्घट एव प्रसिद्धमतस्तत्राव्याप्त्यसम्भवात् क्वचि-
दित्युक्तम्। अत्र च हेत्वधिकरणयत्किञ्चिद्व्यक्तौ दैशिकविशेषण-
तया वर्तमानत्वमेव हेतुसामानाधिकरण्यं बोध्यम्। तेन पृथिवी
द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जले तेजसि च साधनसमा-
नाधिकरणस्य जलावृत्त्यभावस्य तेजोऽवृत्त्यभावस्य च निरुक्तरूपाव-
च्छिन्नप्रतियोगिताकत्वात् तदुभयघटितकूटवज्जात्यादौ हेतोरवृत्ति-
त्वेपि नातिव्याप्तिः हेत्वधिकरणजलादिप्रत्येकनिष्ठं यत्तादृशकूटं त-
दधिकरणजलादौ हेतोः सत्त्वादिति भावः। उक्तसमुदायेति। ता-
दृशाभावकूटवद्वृत्तित्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यम्। तेन द्रव्य-
भिन्नं सत्त्वादित्यादौ साधनसमानाधिकरणसाध्याभावकूटाधिकरणे
महाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन वृत्तावपि नातिव्या-
प्तिः। तादृशवृत्तित्वाभावस्तादृशवृत्तित्वत्वसमनियतप्रतियोगिताको
ग्राह्यः। तेन पर्वतवृत्तित्वादिसामान्याभावस्य वृत्तित्वालोकान्यत्वोभ-
यत्वावच्छिन्नाभावस्य च हेतावसत्त्वेपि वह्निमान्धूमादित्यादौ वा-
च्यं ज्ञेयत्वादित्यादौ नासम्भवः। अधिकमभिहितं प्राक्। वृत्तिमद्वृ-
त्तय इत्यत्रापि वृत्तिमत्त्वं हेतुतावच्छेदकसम्बन्धेनैव ग्राह्यम्। तेन

स्वात् । अन्यथा निर्विकल्पकादपि घटो नास्तीति प्रतीत्यापत्तेः । गवि शशशृङ्गं नास्तीतिप्रतीतेरप्रसिद्धेः । शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः ॥

---

तद्विशिष्टेति । विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् । अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमगाहते। न स्वातन्त्र्येण । घटो नास्तीत्येव प्रतीतेः। तदिहाभावप्रत्ययो यदि व्यधिकरणधर्मेण विशिष्टं प्रतियोगिनं

---

संयुक्तत्वसामान्याभावस्यापि तादृशस्य समवायेन वृत्तिमति जात्यादौ प्रसिद्धस्य हेतावसत्त्वेपि वह्निमान् धूमादित्यादौ नाव्याप्तिरित्यर्थः । साध्यवत्ताधीविरोधिताघटकसम्बन्धेन कूटाधिकरणतायाः पूर्वमुक्तायाः प्रकृतलक्षणाघटकत्वात्तन्नोक्तम्। इत्यादिकमित्यादिपदेन गुरोः प्रतियोगितावच्छेदकत्वमते तादृशवृत्तित्ववत्वावच्छिन्नाभावावृत्तिमद्वृत्तयो यावन्तस्तद्धत्त्वमित्यादेः सूचनम् ॥

अभावबुद्धौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानत्वेन हेतुतायाः स्वयमनङ्गीकाराद्भावार्थमाह विशेषणेति ॥ ननु घटत्वेन पटो नास्तीत्यादिबुद्धेः घटत्वादिविशिष्टवैशिष्ट्यावगाहित्वमेवासिद्धमत आह अभावेत्यादि ॥ न स्वातन्त्र्येणेति । न घटत्वादेः प्रतियोगिवृत्तित्वमविषयीकृत्येत्यर्थः।तद्धर्मावच्छिन्नप्रतियोगित्वसंसर्गकाभावप्रत्ययस्य तादृशसम्बन्धेन तद्धर्मविशिष्ट्यवैशिष्ट्यावगाहित्वनियमादिति भावः॥ ननु तद्घटत्वेन घटो नास्तीत्याकारकसमानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्षे व्यभिचारान्नोक्तनियम इत्यत आह घटो नास्तीत्येवेति । तथा च विशेषधर्मेण सामान्याभावोप्यसिद्ध एव।तद्व्यक्तित्वेन घटो नास्तीति प्रतीतेः घटे तद्व्यक्तित्वाभावमात्रावगाहित्वादतस्तत्र हेत्वभावादेव न व्यभिचारः।अन्यथा सामान्यरूपेण विशेषाभावस्यापि स्वीकारापत्तेर्घोऽन्यत्वेन घटो नास्तीत्यपि प्रत्ययप्रसङ्गादिति भावः॥ प्रकृते योजय-

नावगाहते नावगाहत एव तदा तस्यापि प्रतियोगितावच्छेदकत्वम्। अथावगाहते तर्हि भ्रम एव।नच ततोऽर्थसिद्धिरिति भावः। यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिप्रत्ययो न तदा तादृशाभावनिवारणं गीर्वाणगुरूणामपि शक्यमिति मन्तव्यम्॥

---

ति तदिहेति। इह घटत्वेन पटो नास्तीत्यभिलापस्थले। तस्य व्यधिकरणधर्मस्य॥ अथावगाहत इति। व्यधिकरणधर्मेण विशिष्टं प्रतियोगिनमित्युक्तेनान्वयः॥ न च तत इति। प्रमाया एवार्थसाधकत्वादिति भावः। ननूक्तव्याप्त्यभावप्रयोजकत्वाद्घटत्वादेः प्रतियोगिवृत्तित्वमनवगाह्यापि तदवच्छेदकत्वावगाहिप्रत्ययसम्भवाद्व्यधिकरणधर्मावच्छिन्नाभावः सेत्स्यतीत्यत आह यदि पुनरिति। स्वरसवाही यथार्थः। स च पटे घटत्वानवगाहन एव सम्भवतीति भावः। घटत्वेन पटो नास्तीत्यादिपदेन घटत्वेन द्रव्यं नास्ति द्रव्यत्वेन घटो नास्ति इत्याद्यनुभवस्योपग्रहः। तुल्ययुक्त्या तदवृत्तिधर्मेण तस्यैव विशेषरूपेण सामान्यस्य सामान्यरूपेण च विशेषस्याभावे बाधकाभावादिति ध्येयम्। घटत्वेन घटो नास्तीतिपाठे घटत्वेनेत्यस्य घटत्वत्वविशिष्टेनेत्यर्थः। तेन तद्रूपेण प्रतियोग्यंशे घटत्ववत्तामनवगाह्य जातेः समानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्ष एवोक्तनियमस्य व्यभिचारो दर्शितः। तादृशाभावेति। स्वसमनियतान्यधर्मावच्छिन्नप्रतियोगिताकाभाववारणमित्यर्थः। तेन सामान्यरूपेण विशेषस्य विशेषरूपेण च सामान्यस्याभावः संगृहीतः। यत्तु द्रव्यत्वेन घटो नास्तीतिप्रतीतेर्घटत्वाद्यवच्छिन्नाभावेनैवोपपत्तौ सामान्यरूपेण च विशेषाभावादौ मानाभाव इति तत् प्रागेव दूषितमिति। यदपि संयोगसंसर्गकघटत्वाद्यवच्छिन्नाभावत्वावच्छेदेन लाघवात्तादृशसम्बन्धेन घटत्वावच्छिन्नस्य विरोधित्वकल्पनात् संयोगेन घटादिमति घटत्वादिना पटाद्यभावस्यासम्भव इति कैश्चिदुक्तं तदपि मन्दम्। तावतापि गगनत्वादिना घटादेर्वाच्यत्वत्वादिना ज्ञेयत्वादेश्च व्यधिकरणधर्मावच्छिन्नाभावस्य दुर्वारत्वादिति।गगनादेरधिकरणस्य स्वरूपसंसर्गकवाच्यत्वत्वाद्यवच्छिन्नाभावस्य चाप्रसिद्ध्या तत्र विरोधस्य कल्पयितुमशक्यत्वादिति दिक्॥

## चिन्तामणेः पूर्वपक्षग्रन्थः ॥

अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः- केवलान्वयिनि साध्यासामानाधिकरण्यं निरधिकरणे आकाशादौ प्रसिद्धमिति चेन्न ।

---

## शिरोमणिकृतदीधित्याः पूर्वपक्षग्रन्थः ॥

साध्येति । साध्यस्यासामानाधिकरण्यं येषु तेषामनधिकरणत्वम् । तदभाववत्त्वमिति यावत् । तस्मिन् सति साधिकरणत्वं तदवच्छिन्नाधिकरणताकत्वम् । सति सप्तम्यावच्छेदकत्वलाभात् ।

---

## जागदीश्याः पूर्वपक्षग्रन्थः ॥

ननु साध्यासामानाधिकरण्यं न साध्यानधिकरणावृत्तित्वम् केवलान्वयिनीत्याद्युत्तरग्रन्थासङ्गतेः नापि साध्याधिकरणवृत्तित्वम् द्रव्यं सत्त्वादित्यादावतिव्याप्तेः साधिकरणपदवैयर्थ्याच्चेत्यतो व्याचष्टे साध्यस्येति ॥ साध्यासमानाधिकरणस्य गगनादेरधिकरणाप्रसिद्ध्या केवलान्वयिन्यव्याप्तेराह तदभाववत्त्वमिति ॥ तस्मिन् साध्यासमानाधिकरणपदार्थाभाववत्त्वे । साध्यासमानाधिकरणधूमत्वाद्यभावस्य धूमादिसत्त्वतावसत्त्वादाह तदवच्छिन्नेति । साध्यवदवृत्तिपदार्थाभाववत्त्वावच्छिन्नेत्यर्थः ॥ अवच्छेदकत्वांशस्योदक्षरतां निरस्यति सतीति । साध्यवदवृत्तिपदार्थाभाववत्त्वे हेत्वधिकरणतावच्छेदकत्वं न तदनतिरिक्तवृत्तित्वम् वाच्यं ज्ञेयत्वादित्यादौ हेत्वधिकरणत्वाभावाप्रसिद्ध्या तदनतिरिक्तवृत्तित्वाप्रसि-

---

( १ ) पूर्वपक्षशेष इति नामोचितम् पूर्वस्य व्यधिकरणधर्मावच्छिन्नाभावप्रकरणमिति ।

तच्चेहान्यूनवृत्तित्वम् । एवञ्च साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वमिति तु फलितार्थः । यथासन्निवेशे अधिकरणत्वस्य न वैयर्थ्यम् । हेतुतावच्छेदकसम्बन्धलाभाय वा तत् । येन येन सम्बन्धेन यो यः साध्यवदवृत्तिः तेन तेन सम्बन्धेन तत्तदभावो बोध्यः । एतेन साध्यवदवृत्तित्वं यदि साध्यतावच्छेदकसम्बन्धेन विवक्षितं तदा समवायेन साध्यतायां सा-

---

ध्वेः वह्निमान् धूमादित्यादावव्याप्तेश्च वह्निमदवृत्तिपदार्थविरहवत्त्वस्य धूमाधिकरणत्वाभाववत्ययःपिण्डे सत्त्वात् एवं धूमवान्वह्नेरित्यादावतिव्याप्तिरपीत्यत आह तच्चेति ॥ ननु धूमवदवृत्तिजलत्वाभावस्य वह्न्यधिकरणताव्यापकत्वात् धूमवान्वह्नेरित्यादावतिव्याप्तिरत आह एवं चेति । सकलेति । तथाच धूमवदवृत्तिसकलान्तर्गतायःपिण्डत्वाभावस्यैव वह्न्यधिकरणताव्यापकत्वविरहान्नातिव्याप्तिरिति भावः ॥ ननु तादृशाभाववत्त्वं यदन्यूनवृत्ति तत्त्वमित्यस्यैव सम्यक्त्वे अधिकरणताप्रवेशो व्यर्थ इत्यत आह यथेति । हेत्वधिकरणताव्यापकत्वे हेतुव्यापकत्वाप्रवेशान्न वैयर्थ्यमित्यर्थः ॥ नन्वेवमप्यनतिप्रयोजनकत्वमेवेत्यत आह हेतुतावच्छेदकेति । तत् अधिकरणत्वम् । अन्यथा हेतुमति कालादौ साध्यवदवृत्तिस्पन्दत्वादेः सत्त्वेन तदभावस्य हेतुव्यापकत्वानुपपत्तिरिति भावः॥ ननु कालः प्रमेयत्वादित्यादौ साध्यवदवृत्तिरवृत्तिरेव तथाच तदभावस्य हेतुव्यापकत्वात्तत्राति व्याप्तिरत आह येन येनेत्यादि । तथाच कालत्ववति समवायादिसम्बन्धेनावर्तमानस्य घटत्वादेः समवायेनाभावस्य प्रमेयत्वाव्यापकत्वान्नोक्तदोषः ॥ एतेनेति । प्रत्युक्तमिति परेणान्वितम् । साध्यवदसमवेतस्येति । प्रमेयत्वादेरिति शेषः । साध्यवदवृत्तिपदार्थस्य यत्किञ्चित्सम्बन्धेनाभावप्रवेशे द्रव्यं सत्त्वादित्यादावतिव्याप्तिः द्रव्यासमवेतस्य गुणत्वादेरपि संयोगादिसम्बन्धेनाभावस्य सत्त्वव्यापकत्वादतः सम्बन्धसामान्येनैव साध्यवदवृत्ति पदार्थस्याभावो वाच्य इत्याशयेनाह । सकलतच्छून्याप्रसिद्धिरिति । तथाच द्रव्यं पृथिवीत्वादित्यादावव्याप्तिरिति भावः ।

ध्यवदसमवेतस्य सार्वत्रिकत्वात्सकलतच्छून्याप्रसिद्धिः अथ तद्-भावोपि तेनैव सम्बन्धेन वाच्यः तदा जातिमान् प्रमेयत्वादित्यादा-वतिव्याप्तिः जातिमदसमवेतानां समवायेनाभावस्य केवलान्वयि-त्वात् अत एव न संयोगेन समवायेन वा इदं न जातिमज्जाति-त्वादित्यादौ साध्यवत्समवेताद्यप्रसिद्धेश्च नापि साधनतावच्छेदक-सम्बन्धेन इदमेतद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तेः नापि वि-षयतया घटभिन्नं मेयत्वादित्यत्राप्यतिव्याप्तेः सविषयकमात्रस्यैव घटभिन्नविषयत्वात् घटनिर्विकल्पकेऽपि घटत्वादिभानात् नापि

---

तद्भावोपि साध्यवद्वृत्तिपदार्थस्याभावोपि। तेनैव साध्यतावच्छेद-कसम्बन्धेनैव । तथाच द्रव्यत्ववदसमवेतस्य समवायेनाभावो द्रव्यादावेव सुलभ इति नोक्तदोषः । केवलान्वयित्वादिति । तथाच सुतरां तस्य हेतुव्यापकत्वमिति भावः । अत एव उक्तातिव्याप्तेरेव। समवायेनेति । साध्यवद्वृत्तित्वं तदवच्छिन्नाभावश्च समवायेनेत्यपि नेत्यर्थः । ननु हेतुनिरूपितसमवायेन साध्यवद्वृत्तित्वादिकं वाच्यम् तथाच प्रमेयत्वसमवायाप्रसिद्धेरेव नोक्तातिव्याप्तिरत आह इदं न जा-तिमदिति । समवेतादीत्यादिना संयुक्तसंग्रहः ।नापीति। साध्यवद्वृ-त्तित्वं तदवच्छिन्नाभावश्च साधनतावच्छेदकसम्बन्धेनेत्यपि नेत्यर्थः । जात्यभाववति हेतुताघटकस्वरूपसम्बन्धेनावर्तमानस्य द्रव्यगु-णान्यतरत्वादेस्तेन सम्बन्धेनाभावस्य हेतुव्यापकत्वादुक्ताव्याप्त्यस-म्भवादाह एतद्रूपभिन्नमिति । एतद्रूपभिन्नासमवेतानां समवायेना-भावस्य केवलान्वयितया सुतरां गुणत्वव्यापकत्वादिति भावः । इत्य-त्रापीत्यपिना तद्रूपभिन्नं गुणत्वादित्यस्य संग्रहः।सविषयकमात्रस्येति। तथाच घटभिन्नाविषयकं निर्विषयकमेव । तस्य विषयतासम्बन्धे-नाभावः प्रमेयत्वस्य व्यापक एवेति भावः । ननु घटभिन्नाविषयकस्य घटनिर्विकल्पकस्यैव विषयतासम्बन्धेनाभावो न प्रमेयत्वव्यापको घटे व्यभिचारादित्यत आह घटनिर्विकल्पकेपीति । इदमापाततः । तद्व्यक्तित्वेन तद्घटस्मरणस्यैव घटभिन्नाविषयकत्वेन विषयतया ता-दृशस्मरणाभावस्य हेत्वव्यापकत्वात्।तद्व्यक्तित्वस्य तद्घटव्यक्तिस्वरू-

सम्बन्धमात्रेण द्रव्यं सत्त्वादित्यादावतिव्याप्तेः वृत्तिमन्मात्रस्यैव स्वरूपसम्बन्धेन महाकाले वृत्तेरवृत्तेरभावस्य च केवलान्वयित्वा-दिति प्रत्युक्तम् । विशेषणताविशेषेण वा साध्यवदवृत्तित्वं वक्तव्य-म् । सर्वत्रैव तत्तद्व्यक्तित्वे तत्तदन्यान्यत्वे तत्प्रकारकप्रमाविषयत्वे वा तत्सुलभम् । तेनैव सम्बन्धेन तदवच्छिन्नसामान्याभावो वाच्य इति ।

———

पत्वात् तद्घटीयरूपरसादिस्वरूपत्वे तद्घटोत्पत्तिदशायां तद्व्य-क्तित्वाभावापत्तेः । न च जातीतरस्य तद्व्यक्तित्वस्य स्वरूपतः प्रकारताविरोधात्तादृशस्मृतौ धर्मान्तरभानमावश्यकम् । घटोऽस्ति तद्व्यक्तिरस्तीत्यादिप्रत्ययानां वैलक्षण्याननुभवेन तादृशविरोधास्वी-कारात् । न च विशेष्यतया साध्यवदवृत्तित्वाद्युक्तौ न कोपि दोषः घटभिन्नाविशेष्यकस्य घटमात्रविशेष्यकज्ञानस्य विशेष्यतासम्बन्धे-नाभावस्य हेत्वव्यापकत्वादिति वाच्यम् । यन्मात्रविशेष्यकं ज्ञानम-प्रसिद्धं तद्धेतुसाध्यकप्रमेयत्वादावतिव्याप्तितादवस्थ्यादिति भावः ॥ येन येन सम्बन्धेनेत्यत्र विशेषणताविशेषस्यापि निवेशात्तत एवाति-प्रसङ्गादिभङ्गे सम्बन्धान्तरप्रवेशो व्यर्थ इत्याशयेनाह विशेषणतावि-शेषेण वेति॥नन्वेवं व्यभिचारिण्यतिव्याप्तिः विशेषणतया धूमादिम-त्यवर्तमानस्यायःपिण्डत्वादेर्विशेषणतया अभावस्य वह्न्यादिव्याप-कत्वादित्यत आह सर्वत्रेति । व्यभिचारिणीति शेषः । तत्तद्व्यक्तित्व इति । व्यभिचारनिरूपकतत्तदधिकरणव्यक्तित्व इत्यर्थः । तथाच त-दभावस्यैव हेत्वव्यापकत्वान्नातिव्याप्तिरिति भावः । ननु तत्तद्व्य-क्तित्वं तत्तदयोगोलकादिस्वरूपं तदीयरूपादिस्वरूपं वा तस्य च विशेषणतयाऽभावो वह्न्यादिव्यापक एवेत्यत आह तत्तदन्यान्यत्व इति । ननु तत्तदन्यान्यत्वं तत्तायःपिण्डादिस्वरूपमेवेत्युक्तदोषताद-वस्थ्यमत आह तत्प्रकारकेति । तत्तद्व्यक्तित्वप्रकारकेत्यर्थः । तादृ-शभ्रमविषयत्वस्य साध्यवत्यपि सत्त्वात्प्रमेति । तत् साध्यवदवृत्ति-त्वम् । नच साध्यवदन्यत्व एव तत्सौलभ्यादेतावत्पर्यन्तानुधाव-नमफलम् । भेदस्याप्यव्याप्यवृत्तित्वे सर्वत्र व्यभिचारिणि तत्सौल-भ्यासम्भवादिति भावः । साध्यवदवृत्तितत्तद्व्यक्तित्वावच्छिन्नाभाव-कूटप्रवेशे गौरवादाह तेनैव सम्बन्धेनेति । तदवच्छिन्नेत्यादि । विशे-

केचित्तु नञ्व्यत्यासेनासाध्यानि साध्यविरोधीनि साध्यासमानाधिकरणानीति यावत् तानि सामानाधिकरण्यानधिकरणानि यस्य तत्त्वम् साध्यसामानाधिकरण्याभावव्यापकाभावप्रतियोगिसामानाधिकरण्यसामान्यकत्वमिति फलितार्थः अत्र च साध्यसामानाधिकरण्यं साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुतावच्छेदकसम्बन्धेन वृत्तिः परञ्च सामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेतुमति तेनैव वृत्तिः तेन समवायेन पृथिवीत्वादेः साध्यतायां

---

षणताविशेषेणैव साध्यवदवृत्तित्वावच्छिन्नसामान्याभाव इत्यर्थः॥ मिश्रमतमुपन्यस्यति केचित्त्विति। नञ्व्यत्यासेन साध्यपदोत्तरनञः तत्पूर्वप्रक्षेपेण। ननु साध्यभिन्नस्य धूमादेः साधनसामानाधिकरण्याधिकरणत्वाद्वह्निमान्धूमादित्यादावव्याप्तिः प्रमेयवान्वह्नेरित्यादौ साध्यभिन्नाप्रसिद्धिश्चेत्यत आह साध्यविरोधीनीति। असुरादिपदे नञो विरोधिबोधकताया व्युत्पन्नत्वादिति भावः। ननु साध्यविरोधित्वं साध्याभावव्याप्यत्वम् तच्च केवलान्वयिन्यप्रसिद्धमत आह साध्यासमानाधिकरणानीति। साध्यासमानाधिकरणानां असामानाधिकरण्यस्योक्तौ केवलान्वयिन्यव्याप्तितादवस्थ्यमतो बहुव्रीहिमाश्रित्य व्याचष्टे तानीति।साध्यासमानाधिकरणानीत्यर्थः। ननु साध्यासमानाधिकरणस्य जलत्वादेः साधनसामानाधिकरण्यानधिकरणत्वाद्धूमवान्वह्नेरित्यादावतिव्याप्तिरत आह साध्यसामानाधिकरण्याभावेति। वह्निसामानाधिकरण्यगगनोभयत्वावच्छिन्नाभावस्य धूमसामानाधिकरण्याभावव्यापकत्वादुक्तातिव्याप्तितादवस्थ्यमतः साधनसामानाधिकरण्यत्वावच्छिन्नाभावत्वेन व्यापकत्वमाविष्कर्तुं सामान्यपदमुपात्तम्। साध्यवतीति। साध्यतावच्छेदकविशिष्टसाध्यवतीत्यर्थः। तेन विशिष्टसत्तासाध्यकजातिमत्त्वादौ नातिप्रसङ्गः। परञ्च हेतुनिरूपितं च।हेतुमतीति। हेतुतावच्छेदकविशिष्टेत्यादिः। तेन द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः। तेनैव हेतुतावच्छेदकसम्बन्धेनैव। साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वप्रवेशस्य फलमाह तेनेति। हेताविति। नातिप्रसङ्ग इति परेणान्वयः। समवायेन पृथिवीत्ववति कालिकेनावर्तमानस्य प्रलया-

व्यभिचारिणि कालिकसम्बन्धेन हेतौ द्रव्यत्वादेश्च समवायेन सा-
ध्यतायां समवायेन हेतौ सत्त्वादौ नातिप्रसङ्गः न वा संयो-
गेन वह्न्यादौ साध्ये समवायेन तद्व्याप्यस्य रूपविशेषादेः कालि-
कसम्बन्धेनाधिकरणे काले स्पन्दे च कालपरिमाणस्पन्दत्वादेः स-
मवायेन तदधिकरणे घटादेः संयोगेन वृत्तावपि चाप्रसङ्गः सम्ब-

---

देः कालिकेन हेतुमति महाकालेऽवृत्तित्वविरहान्नातिव्याप्तिः । अन्य-
था प्रलयादेरपि पृथिवीत्ववन्महाकालादिवृत्तित्वा[त्पृथिवीत्ववद-
वृत्तित्वमवृत्तिगगनादावेव तत्र हेत्वसामानाधिकरण्यसत्त्वा]दति-
व्याप्तिः स्यादेवेति भावः । पूर्वदलप्रविष्टहेतुतावच्छेदकसम्बन्धाव-
च्छिन्नवृत्तेः फलमाह द्रव्यत्वादेश्चेति । द्रव्यत्ववत्यसमवेतस्य गुण-
त्वादेरेव हेत्वसामानाधिकरण्यविरहान्नातिप्रसङ्गः । अन्यथा वृत्ति-
मन्मात्रस्यैव द्रव्यत्ववति महाकाले वृत्त्या द्रव्यत्ववदवृत्तित्वमवृत्ति-
गगनादावेव स्यात् तच्च सर्वं हेत्वसमानाधिकरणमेवेत्यतिव्याप्ति-
रिति भावः । द्रव्यत्वे साध्ये गुणत्वस्य विरुद्धतया साध्यसामानाधि-
करण्यविवक्षयापि निरासः सम्भवतीत्यतः सत्त्वपर्यन्तमनुसृतम् ।
सत्त्वगुणत्वादावित्यपि क्वचित्पाठः।तत्र सत्ताया हेतुत्वे हेत्वसामाना-
धिकरण्यस्य साध्यासामानाधिकरण्यव्यापकत्वाभावो हेतुभिन्न ए-
वानुसरणीयः । गुणत्वस्य हेतुतायां तु तत्रैवायं सुग्रह इत्याशयेन
गुणत्वस्य पश्चादुक्तिः । हेतुतावच्छेदकसम्बन्धेन हेतुमत्त्वोक्तेः फल-
माह न वा संयोगेनेति । स्पन्दत्वादेरिति । वृत्तावपीति परेणान्वयः।
तथाच वह्निमान्पर्वतरूपादित्यत्र वह्निमदसमवेतस्य कालपरिमाणादेः
कालिकसम्बन्धेन पर्वतीयरूपवति काले समवेतत्वेपि हेतुताघटकस-
मवायसम्बन्धेन तादृशरूपवति पर्वतादावसमवेतत्वान्नाव्याप्तिरिति
भावः । कालस्यापि संयोगेन वह्निमत्त्वात्साध्यवदसमवेतत्वं न काल-
परिमाणस्यातः स्पन्दत्वमनुसृतम् । केचित्तु महाकालस्य कालिक-
सम्बन्धेन रूपाद्यधिकरणत्वे मानाभावः इदानींतदानीमित्यादि-
प्रत्ययेन कालोपाधीनामेव तथात्वावगाहनादिति मतेऽव्याप्तिसम्प-
त्तये स्पन्दत्वपर्यन्तमित्यप्याहुः।तेनैवेत्यस्य प्रयोजनमाह समवायेनेति।
तदधिकरण इति।वह्निव्याप्यस्य रूपविशेषादेरधिकरणे पर्वतादावित्य-

साध्यासामानाधिकरण्यं हि न साध्यानधिकरणाधिकरणत्वं साध्याधिकरणानधिकरणत्वं वा केवलान्वयिनि यत्किञ्चित्साध्याधिकरणानधिकरणे धूमे चाव्याप्तेः ॥

नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम् पर्वतीयवह्नेर्महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । द्रव्यत्वादेरव्याप्यवृत्त्यव्याप्यतापत्तेश्च । न च प्रतियोगिविरोधित्वं व्याप्यवृत्तित्वं वा अभावविशेषणं देयम् । संयोगादौ साध्ये स-

---

न्धविशेषेण व्याप्यत्वलाभाय साधिकरणत्वमित्याहुः । तच्चिन्त्यम् । यथाश्रुतं यथासम्भवं विकल्प्य दूषयति नेत्यादि ॥

नन्वप्रतियोगिपदेन प्रतियोगितानवच्छेदकावच्छिन्नं वक्तव्यमत आह द्रव्यत्वादेरिति ॥ प्रतियोगिविरोधित्वं प्रतियोग्यधिकरणावृत्तित्वम् । व्याप्यवृत्तित्वं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् ॥ अधिकरणेति । तथा सत्यभाव एव न सिद्ध्येदिति भावः ।संयोगाद्यस-

---

र्थः ॥ तच्चिन्त्यमिति । एतद्रूपाभिन्नं गुणत्वादित्यत्रातिव्याप्तिः गुणत्ववदसमवेतत्वस्यैतद्रूपाभिन्नासमवेतत्वव्यापकत्वात् एवं वाच्यत्वसाध्यके तादात्म्येन विषयतया वा ज्ञानादिहेतावव्याप्तिः वाच्यानात्मकत्वस्य वाच्याविषयत्वादेश्चाप्रसिद्धेः । न च साध्यस्य हेतोश्च सामानाधिकरण्यं विशेषणताविशेषेण प्रवेश्यमतो न कोपि दोष इति वाच्यम् । तस्य व्याप्तिग्रहोपाये स्वयमेव वक्ष्यमाणत्वादिति भावः ॥ यथाश्रुतमिति । अन्यथा साध्यवदवृत्तित्वस्यैव लक्षणघटकतया साध्यानधिकरणवृत्तित्वमादाय दोषप्रदर्शनस्यासङ्गत्यापत्तेरिति भावः ॥

प्रतियोग्यनधिकरणहेतुमन्निष्ठत्वरूपस्य प्रतियोगिविरोधित्वस्य निरवच्छिन्नहेतुमद्वृत्तिताकत्वरूपस्य वा व्याप्यवृत्तित्वस्य प्रवेशो वक्ष्यमा-

त्त्वादेरनैकान्तिकत्वाभावप्रसङ्गात् । न हि प्रतियोगि-
विरोधी संयोगादेरपरोऽत्यन्ताभावोऽस्ति । अधिकरणभेदे-
नाभावभेदाभावात् ॥

नापि साधनवन्निष्ठान्योऽन्याभावाप्रतियोगि-
साध्यवत्कत्वं व्याप्तिः । मूले वृक्षः कपिसंयोग-
वान्नेत्यबाधितप्रतीतेः । तदन्योऽन्याभावस्यापि तत्र स-
त्त्वात् । न चैवं भेदाभेदः अवच्छेदकभेदेन तत्सत्त्वाभ्यु-
पगमात् । साधनवन्निष्ठान्योऽन्याभावाप्रतियोगि साध्य-

---

न्ताभावस्य द्रव्ये प्रतियोगिसामानाधिकरण्यम् अव्याप्यवृत्तित्वञ्च
प्रतियोग्यधिरणीभूतद्रव्यवृत्तित्वं स्वाधिकरणीभूतद्रव्यनिष्ठासन्ता-
भावप्रतियोगित्वम् गुणे च प्रतियोग्यसामानाधिकरण्यं व्याप्यवृत्ति-
त्वञ्च प्रतियोग्यनधिकरणीभूतगुणवृत्तित्वं स्वाधिकरणीभूतगुण-
निष्ठात्यन्ताभावाप्रतियोगित्वम् । एतानि च न भेदकान्यविरोधात् ।

---

णातिव्याप्त्यसङ्गतेराह प्रतियोगीति ॥ तथा सतीति।नास्तीत्यनुगतप्रती-
तेरननुगताधिकरणव्यक्तिभिरसम्भवादेवातिरिक्तोऽभावः सिध्यति-
सोऽपि चेदधिकरणभेदाद्भिन्नस्तदा अधिकरणव्यक्तिभिरेवाभावव्यव-
हारोऽस्त्विति कृतमतिरिक्ताभावेनेति भावः ॥ ननु प्रतियोगिसामाना-
धिकरण्यतदसामानाधिकरण्यव्याप्यवृत्तित्वाव्याप्यवृत्तित्वलक्षण-
विरुद्धधर्माध्यास एव द्रव्यगुणवृत्तिसंयोगाभावयोर्भेदकोऽस्त्वत आह
संयोगेति । द्रव्यनिष्ठेति । प्रतियोगित्वं वैशिष्ट्यव्यासज्यवृत्तिधर्मानव-
च्छिन्नं ग्राह्यम् ।अतो न द्वित्वाद्यवच्छिन्नाभावमादाय गुणेऽपि संयोगाभा-
स्याव्याप्यवृत्तित्वम् एवमुत्तरत्रापि बोध्यम् ॥ अविरोधादिति । संयो-
गाधिकरणद्रव्यवृत्तित्वतदनधिकरणगुणवृत्तित्वयोर्गगनाद्यभावे स-

वद्यस्येति षष्ठ्यर्थव्याप्यव्यापकभावानिरूपणात् । सा-
ध्यसाधनत्वयोर्व्याप्तिनिरूप्यत्वात् । वह्निमत्पर्वतस्य धूमव-

---

सामान्यतश्चाव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे च न त-
थात्वव्यतिरेक इति भावः ॥

ननु साध्यवान् यस्येति साध्यवति सम्बन्धो-
ऽन्वेष्टव्यः स चाधिकरणत्वं साध्यसाधनयोरपि सामा-
नाधिकरण्यमेवेत्यतो दूषणान्तरमाह साध्येति । साध्यत्वसाधनत्वे
व्याप्तिप्रतियोगित्वानुयोगित्वे ॥ यत्तद्भ्यामेव व्याप्तिर्निर्वक्तव्येत्यत

---

त्वादिति भावः ॥ ननु स्वसमानाधिकरणात्यन्ताभावप्रतियोगि-
त्वतत्सामान्याभावादिलक्षणविरुद्धधर्म एव भेदको वाच्य इत्यत
आह सामान्यत इति । न तथात्वव्यतिरेक इत्यन्वयः । तथा चा-
व्याप्यवृत्तित्वसामान्याभावः प्रतियोगिसामानाधिकरण्यसामान्या-
भावः संयोगाभावे नास्त्येव को भेदकः स्यादिति । इदं च सामा-
नाधिकरण्यस्य व्याप्यवृत्तितामनुसृत्य । अन्यथा प्रतियोगिसामा-
नाधिकरण्यतत्सामान्याभावयोर्द्रव्यगुणात्मकावच्छेदकभेदेन संयो-
गसामान्याभावे वृत्तावपि क्षत्यभावादिति ध्येयम् ॥

साध्यवानिति । साधनवन्निष्ठान्योन्याभावाप्रतियोगीति प्रकृ-
तम् । साध्यवतीति । समस्यमानपदार्थ एवान्वयस्यौत्सर्गिकत्वादिति
भावः । स चेति । तथा च साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्
यस्याधिकरणं तत्त्वं वाक्यार्थः । अधिकरणत्वं च सम्बन्धित्वम् । अत-
स्तादात्म्येन गगनादिहेतौ नाव्याप्तिः । यस्य साध्यवान् साधनवन्निष्ठा-
न्योन्याभावाप्रतियोगीत्येवमन्वयेऽपि न क्षतिः साधनसामानाधिकर-
ण्यरूपस्यैव यत्पदार्थसम्बन्धस्य साध्येऽनुप्रवेशादित्याशयेनाह साध्य-
साधनयोरपीति । सामानाधिकरण्यमेवेति । सम्बन्ध इत्यनुषज्यते ॥
सिद्धिकर्मत्वादिरूपस्य साध्यत्वादेर्व्याप्त्यनिरूप्यत्वादन्यथा व्याचष्टे
साध्यत्वेति ॥ यत्तद्भ्यामिति । तथा च यद्वन्निष्ठान्योन्याभावाप्रतियो-

न्महानसनिष्ठान्योऽन्याभावप्रतियोगित्वाच्च। विशेषाभाव-कूटादेवाभावव्यवहारोपपत्तौ सामान्याभावे मानाभावात्॥

---

आह वह्निमदिति॥ ननु यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नं न भवति तद्रूपावच्छिन्नेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः न च धूमसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्निः धूमवान् वह्निमान्नेत्यप्रतीतेरत आह विशेषेति। य एव प्रत्येकं वह्निमद्भेदाः धूमसमानाधिकरणास्त एव चैकाधिकरणवृत्तित्वावच्छिन्ना वह्निमत्सामान्यभेदबुद्धिं जनयन्ति तत्प्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्निरिति भवत्यव्याप्तिः॥

---

गी यद्वांस्तेन समं तस्य सामानाधिकरण्यं व्याप्तिरिति फलितम्॥ प्रतियोगितावच्छेदकमिति भावप्रधानो निर्देशः। प्रतियोगितावच्छेदकत्वमित्येव वा पाठः। तेन वह्नित्वावच्छिन्नस्य वह्निमात्रस्यैव धूमसमानाधिकरणतत्तद्वह्निमत्त्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वेपि न क्षतिः। तादृशप्रतियोगितावच्छेदकत्वस्य वह्नित्वेनानवच्छेदादिति ध्येयम्। ननु तत्तद्वह्निमत्त्वावच्छिन्नभेदस्यैव प्रतियोगितावच्छेदकत्वं वह्नित्वावच्छिन्नं वाच्यमित्यव्याप्तिरेवेत्यत आह न चेति। वह्नित्वावच्छिन्नो वह्निर्यावान्वह्निः। तथाच यावद्वह्निनिष्ठमेवाभावस्य प्रतियोगितावच्छेदकत्वं वह्नित्वावच्छिन्नमित्येकवह्निनिष्ठस्य प्रतियोगितावच्छेदकत्वस्य वह्नित्वावच्छेद्यत्वविरहान्नाव्याप्तिरतस्तत्रैव युक्तिमाह धूमवान्वह्निमान्नेत्यप्रतीतेरिति। केचित्तु यद्रूपविशिष्टं तादृशप्रतियोगितावच्छेदकत्वपर्याप्त्यधिकरणं तदन्यरूपावच्छिन्नसामानाधिकरण्य विवक्षितमित्याहुः॥ ननु सामान्याभावासत्त्वेपि लक्षणस्य को दोष इत्यत आह य एवेति। वह्निमद्भेदाः तत्तद्वह्निमत्त्वावच्छिन्नभेदाः। एकाधिकरणेति। अन्यथा वह्निमत्यपि वह्निमान्नेति प्रतीत्यापत्तेरिति भावः॥

नापि साधनसमानाधिकरणयावद्धर्मनिरूपितवैयधिकरण्यानधिकरणसामानाधिकरण्यम् । साधनसमानाधिकरणस्य प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धेः । महानसादौ

---

साधनेति । वैयधिकरण्यं तदनधिकरणवृत्तित्वम् । तच्च केवलान्वयिनः साधनस्याप्रसिद्धम् अतिप्रसञ्जकञ्च पृथिवी द्रव्यत्वादित्यादौ अतः समानाधिकरणोपादानम् । धूमादेरपि न वह्न्यादिसमानाधिकरणद्रव्यत्वाद्यनधिकरणवृत्तित्वमतो यावदिति । यद्यपि पृथिवी-

---

तदधिकरणावृत्तित्वरूपस्य वैयधिकरण्यस्य प्रवेशे प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धेरितिमूलासङ्गतिर्गगनादावेव तत्प्रसिद्धेरतो व्याचष्टे वैयधिकरण्यमिति ॥ ननु साधनवैयधिकरण्यानधिकरणत्वप्रवेशेनैव सामञ्जस्ये समानाधिकरणपदं व्यर्थमत आह तच्चेति । साधनसमानाधिकरणोक्तावपि केवलान्वयिसाधनवैयधिकरण्याप्रसिद्धिरेव साधनस्यापि स्वसमानाधिकरणयावद्धर्मान्तर्गतत्वादतो दूषणान्तरमाह अतिप्रसञ्जकं चेति । पृथिवीत्वस्य द्रव्यत्वानधिकरणवृत्तित्वानाधिकरणत्वादिति भावः । अत इति । तथाच द्रव्यत्वादिसमानाधिकरणीभूतजलत्वाद्यनधिकरणवृत्तित्वस्य पृथिवीत्वे सत्त्वान्नातिव्याप्तिरिति भावः । अत्र च येन येन सम्बन्धेन यो यः साधनसमानाधिकरणस्तेन तेन सम्बन्धेनैव तत्तदनधिकरणे साध्यतावच्छेदकसम्बन्धेनैव वृत्तिमत्त्वं तादृशवैयधिकरण्यान्तार्थो ग्राह्यः । तेन साधनसमानाधिकरणस्यायःपिण्डत्वादेः सम्बन्धसामान्येनानधिकरणे गगनादौ धूमादेरवृत्तित्वेपि धूमवान्वह्नेरित्यादौ नातिव्याप्तिः । न वा ज्ञानवानात्मत्वादित्यादौ साधनसमानाधिकरणस्यात्मत्वादेरनधिकरणे कालिकादिसम्बन्धेन साध्यस्य ज्ञानादेर्वृत्त्याव्याप्तिः ॥ धूमादेरिति । समवायेन साध्यतामभिप्रेत्य । संयोगेन तथात्वे द्रव्यत्वानधिकरणसंयुक्तत्वाप्रसिद्ध्या द्रव्यत्वमात्राद्यातिव्याप्त्यसम्भवादिति ध्येयम् । नच समवायेन धूमस्य

त्वादिसमानाधिकरणघटत्वपटत्वाद्यनधिकरणवृत्तित्वं द्रव्यत्वादेः तदनधिकरणमात्रवृत्तित्वञ्च निखिलघटपटादिरूपाणाम् । तथापि तादृशधर्मानधिकरणमात्रवृत्तित्वानवच्छेदकसाध्यतावच्छेदकवत्त्वं बोध्यम् । नहि पृथिवीत्वसमानाधिकरणस्तादृशः कश्चिदेको धर्मो यदनधिकरणमात्रवृत्तितावच्छेदकं रूपत्वादि । धूमत्वादिकञ्च व-ह्न्यादिसमानाधिकरणायोगोलकत्वाद्यनधिकरणमात्रवृत्तितावच्छे-दकम् । तदवच्छेदकत्वञ्च तदनतिरिक्तवृत्तित्वम् तच्च तच्छून्यधर्मा-वृत्तित्वम् । तेन मेयत्वसमानाधिकरणगुणत्वाद्यनधिकरणमात्रवृत्ति-

---

साध्यतायां वह्न्यादिहेतोर्विरुद्धत्वात् साध्यसामानाधिकरण्याप्रसि-द्ध्यैव नातिव्याप्तिर्यावत्त्वोपादानमफलमिति वाच्यम् । तथापि संयो-गेन धूमस्य साध्यतायामपि स्वसमानाधिकरणस्य वह्न्यादेः साध-नाधिकरणवृत्तेरनधिकरणं जलादौ तादृशसंयुक्तत्वप्रसिद्ध्यातिव्या-प्तिरतो यावदिति ॥ द्रव्यत्वादेरिति । तथाच द्रव्यं पृथिवीत्वादित्या-दावव्याप्तिरिति भावः । ननु तदनधिकरणमात्रवृत्तित्वमेव वैयधि-करण्यं वाच्यम् तथा च द्रव्यत्वस्य घटत्वाद्यनधिकरणमात्रवृत्ति-त्वाभावान्नाव्याप्तिरत आह तदनधिकरणेति । तथाच मात्रपदप्रवेशे-पि रूपवान् पृथिवीत्वादित्यादावव्याप्तिरिति भावः ॥ तादृशेति । सा-धनसमानाधिकरणयावद्धर्मेत्यर्थः । बोध्यं मूलस्थसाध्यान्तभागेन॥रूप-वान् पृथिवीत्वादित्यादावव्याप्तिमुद्धरति न हीति ॥ धूमवान्वह्नेरि-त्यादावतिव्याप्तिं निरस्यति धूमत्वादिकं चेति ॥ नन्ववच्छेदकत्वमत्र न स्वरूपसम्बन्धविशेषः मानाभावात् गुरुधर्मे तदभावेन प्रमेयधूम-त्वादिना साध्यतायां व्यभिचारिण्यतिव्याप्तेश्च नाप्यन्यूनवृत्तित्वम् प्रमेयवान् धूमादित्यादावव्याप्तेः पर्वतत्वाद्यनधिकरणमात्रवृत्तित्वा-न्न्यूनवृत्तित्वात्प्रमेयत्वस्येत्यत आह तदवच्छेदकत्वमिति । तदनति-रिक्तेति । तादृशधर्मानधिकरणमात्रवृत्तित्वशून्यावृत्तित्वमित्यर्थः । तादृशवृत्तिताशून्यवृत्तित्वं च साध्यतावच्छेदकताघटकसम्बन्धेन ग्राह्यम् । तेन वह्निसमानाधिकरणायःपिण्डत्वाद्यनधिकरणमात्रवृ-त्तित्वशून्येऽयःपिण्डीयवह्न्यादौ धूमत्वादेः कालिकसम्बन्धेन वृत्ता-

तानधिकरणगगनादिवृत्तित्वेऽपि द्रव्यत्वस्य द्रव्यसाध्यकमेयत्वे नातिव्याप्तिः। वस्तुतस्तु तादृशधर्मानधिकरणमात्रवृत्तित्वावच्छिन्नाधिकरणताकत्वं तदवच्छेदकत्वं वाच्यम्। तेन सत्ताद्रव्यत्वोभयवान्

---

वपि न तादृशावच्छेदकत्वहानिः॥तच्चेति। तदपीत्यर्थः।तच्छून्येति। तदनधिकरणमात्रवृत्तिताशून्येत्यर्थः॥ तेन धर्मपदप्रवेशेन। नातिव्याप्तिरिति। तादृशवृत्तिताशून्यो यः सत्तादिरूपो धर्मस्तद्वृत्तितामादायैव द्रव्यत्वस्यावच्छेदकत्वसम्भवादित्याशयः। न च गगनादेरपि कालिकादिसम्बन्धेन वृत्तिमत्त्वादुक्तदोषतादवस्थ्यम्।सम्बन्धसामान्येनैव तेषामवृत्तित्वोपगमात्। वस्तुतः साध्यतावच्छेदकसम्बन्धेन सम्बन्धित्वरूपमेवात्र धर्मत्वं वाच्यम्। अन्यथा तादात्म्येन गगनसाध्यकशब्दवत्त्वादावव्याप्त्यापत्तेः। साधनसमानाधिकरणद्रव्यत्वाद्यनधिकरणमात्रवृत्तिताशून्ये वृत्तिमति घटादौ गगनत्वस्यावृत्तित्वात् तथाच गगनादेः कालिकतादात्म्यादिसम्बन्धेन धर्मत्वेऽपि समवायसम्बन्धेन तथात्वविरहाद्द्रव्यसाध्यकमेयत्वादिहेतौ नोक्तातिप्रसङ्गः। यद्यप्येवं संयोगेन द्रव्यसाध्यके सत्त्वादावतिव्याप्तिः साधनसमानाधिकरणगृहत्वाद्यनधिकरणमात्रसंयुक्तत्वशून्ये गृहवृत्तिदण्डादौ वर्तमानतया द्रव्यत्वस्य निरुक्तावच्छेदकत्वाभावात् गुणत्वाद्यनधिकरणमात्रसंयुक्तताशून्यस्य संयोगेन वृत्तिमतोऽप्रसिद्ध्या साधनसामानाधिकरणगुणत्वादिकमुपादाय तद्वारणासम्भवात्। तथापि तादृशधर्मानधिकरणमात्रवृत्तिताशून्यत्वनिरुक्तवृत्तिमत्त्वोभयाभाववत्स्वाश्रयसामान्यकत्वं विवक्षितमित्यदोषः। द्रव्यत्वावच्छेदेनैव गुणत्वानधिकरणमात्रसंयुक्तताशून्यत्वसंयुक्तत्वोभयाभाववत्त्वेन द्रव्यत्वस्य निरुक्तावच्छेदकत्वादिति भावः॥ ननु साधनसमानाधिकरणगुणत्वानधिकरणमात्रवृत्तिताशून्ये सत्त्वादौ द्रव्यत्वसत्त्वोभयत्वादेः साध्यतावच्छेदकस्य वृत्तित्वाद्द्रव्यत्वसत्त्वोभयवान् जातेरित्यादावतिव्याप्तिरत आह वस्तुतस्त्विति। तादृशेति। साधनसमानाधिकरणधर्माधिकरणावृत्तीत्यर्थः। पूर्वकल्पे विशिष्टाभावघटकतया सार्थकत्वेऽप्यत्र कल्पे तादृशधर्मानधिकरणवृत्तित्वांशस्य प्रवेशवैयर्थ्यात्। नचैवं प्रमेयत्वादेरित्यभ्रममूलास-

गुणान्यत्वविशिष्टसत्तावान् वा जातिमत्त्वादित्यादौ नातिप्रस-ङ्गः। सत्ताया गुणत्वाभाववन्मात्रवृत्तित्वविरहेऽपि उभयत्वाद्यव-च्छिन्नाधिकरणतायाः गुणत्वाभाववन्मात्रवृत्तित्वात् ॥ प्रमेयत्वादे-रिति ॥ ननु व्यतिरेकित्वेन धर्मो विशेषणीयः वस्तुतस्तु यावत्पदं

---

ङ्गतिः प्रमेयत्वाद्यधिकरणावृत्तित्वरूपस्य तद्वैयधिकरण्यस्य गगनादौ प्रसिद्धेरिति वाच्यम्। तद्ग्रन्थस्य वैयधिकरण्यावच्छेदकाप्रसिद्धि-परत्वादिति भावः।अत्र स्वावच्छिन्नाधिकरणत्वं साध्यताघटकसम्ब-न्धेन ग्राह्यम्।तेन समवायावच्छिन्नवह्न्यधिकरणतायाः साधनसमाना-धिकरणपर्वतत्वाद्यनधिकरणमात्रवृत्तित्वेऽपि न वह्निमान् धूमादित्या-दावव्याप्तिः। स्वरूपसम्बन्धात्मकस्याधिकरणत्वस्याधिकरणभेदाद्भे-दोपगमे साध्यताघटकसम्बन्धेन स्वावच्छिन्नाधिकरणत्वसामान्यं नि-वेशनीयम्। तेन महानसनिष्ठाया वह्नित्वावच्छिन्नाधिकरणताव्यक्तेः पर्वतत्वाद्यनधिकरणमात्रवृत्तित्वेऽपि नोक्तदोषः। न चैवं घटवान् म-हाकालत्वादित्यादावव्याप्तिः कालिकसम्बन्धेन साध्यतायां महा-कालान्यत्वविशिष्टघटत्वादेः कथञ्चिदवच्छेदकत्वसम्भवेऽपि महा-कालनिरूपितविशेषणतया साध्यतायां कुत्राप्यवच्छेदकत्वाप्रसिद्धे-रिति वाच्यम्। तादृशधर्मानधिकरणमात्रवृत्त्यधिकरणत्वसामान्या-भिन्नं यत्साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्याधिकरणत्वं तत्सामानाधिकरण्यं व्याप्तिरिति वर्तुलार्थे तात्पर्यादिति ध्येयम् ॥ ननु गुणत्वाद्यनधिकरणमात्रवृत्तिताशून्ये सत्त्वादौ द्रव्यत्वसत्त्वो-भयत्वादेः साध्यतावच्छेदकत्वघटकपर्याप्तिसम्बन्धेनावृत्तेस्तस्याव-च्छेदकत्वमक्षतमेवेत्यत आह गुणान्यत्वेति॥ नन्वित्यादि। व्यतिरेकि-त्वं भेदप्रतियोगितावच्छेदकत्वम्। तच्च साधनाधिकरणवृत्तिताघ-टकसम्बन्धेन ग्राह्यम्। तेन गगनाभावसंयोगाभावादेर्व्युदासः। ननु यावद्धर्मोक्तावपि तत्समुदायाधिकरणाप्रसिद्ध्या प्रातिस्विकरूपेण त-त्तद्धर्मवैयधिकरण्यं वाच्यम् तथाच येषां वैयधिकरण्यं प्रसिद्धं साधनसमानाधिकरणतत्तद्धर्माणामेव विशिष्य प्रवेशात् सर्वसामञ्ज-स्ये व्यतिरेकित्वनिवेशो व्यर्थः तादृशयावदवच्छेदकभेदप्रापकतयैव मूलोक्तयावत्पदस्य सार्थकत्वसम्भवात् अन्यथा व्यतिरेकिणोऽपि हे-

समवायितया वह्निवह्निमतोरत्यन्तान्योन्याभावयोः सत्त्वात् धूमादावप्युक्तलक्षणाभावाच्च ॥

---

तादृशस्य कस्यापि न वैयधिकरण्यावच्छेदकमेतावन्मात्रस्फोरणाय तथा च साधनसमानाधिकरणधर्मनिरूपितवैयधिकरण्यावच्छेदकं यद्यत्तद्भिन्नधर्मवता यावत्तादृशावच्छेदकत्वशून्यधर्मवता वा समं सामानाधिकरण्यमिति पर्यवसितम् अतो दोषान्तरमाह महानसादाविति । तथा च तदनधिकरणत्वं तदभावाधिकरणत्वं तद्भिन्न-

---

तुसमानाधिकरणयावद्धर्मान्तर्गतस्य द्रव्यत्वादेरनधिकरणे संयोगेन वृत्त्यप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्त्यापत्तेरित्यतस्तथैवाह वस्तुत इति । तादृशस्येति । साधनसमानाधिकरणस्येत्यर्थः । तथा चेत्यादि । साधनसमानाधिकरणतत्तद्धर्मानधिकरणमात्रवृत्तित्वावच्छिन्नाधिकरणताकं यद्यदित्यर्थः । यद्यपि तादृशधर्मानधिकरणमात्रवृत्त्यधिकरणतावच्छेदकत्वावच्छिन्नभेदोक्तावपि न क्षतिः । तथापि यावत्पदसार्थक्याय भेदकूटोक्तिः । तद्भिन्नधर्मेत्यादौ धर्मपदं साध्यतावच्छेदकधर्मपरम् । ननु तादृशपर्वतत्वाद्यनधिकरणमात्रवृत्तित्वावच्छिन्नाधिकरणताकं महानसीयवह्नित्वमपि तद्भिन्नत्वं च न वह्नित्वे इत्यव्याप्तिरत आह यावत्तादृशेति । साधनसमानाधिकरणतत्तद्धर्मानधिकरणमात्रवृत्त्यधिकरणतानिरूपकतावच्छेदकताकूटशून्येत्यर्थः । तथा च महानसीयवह्नित्वनिष्ठं यद्व्यासज्यवृत्त्यवच्छेदकत्वं तच्छून्यत्वं शुद्धवह्नित्वेऽस्त्येवेत्यदोषः । न चैवं यावन्ति तादृशधर्मानधिकरणमात्रवृत्त्यधिकरणतावच्छेदकत्वानि तत्प्रत्येकावच्छिन्नभेदोक्त्या पूर्वकल्पोपि सम्यक् विशिष्टपर्याप्तं यदवच्छेदकत्वं तदवच्छिन्नभेदस्य शुद्धवह्नित्वे सत्त्वादिति वाच्यम् । तत्तदवच्छेदकत्वावच्छिन्नभेदस्य बहुतरावच्छेदकव्यक्तिघटितमूर्तिकतया गौरवेण तस्यानुक्तत्वादिति भावः ॥ मूलोक्तयोरत्यन्तान्योन्याभावयोः सङ्गमार्थमाह तथा चेति । इत्थञ्च साधनसमानाधिकरणधर्मत्वेन वह्निरेवाभि-

अथानौपाधिकः सम्बन्धो व्याप्तिः उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः व्यापकत्वन्तु तद्वन्निष्ठात्यन्ताभावा-

———

त्वं वा द्वयमपि दुष्टमित्यर्थः । एतेन तदधिकरणावृत्तित्वमत्र वैयधिकरण्यमिति निरस्तम् । समवायितया महानसवृत्तित्वं वह्नौ नास्तीति प्रतीतेर्वह्न्यादेरपि तादृशवैयधिकरण्याधिकरणत्वात् । सम्बन्धविशेषेण वैयधिकरण्यविवक्षायान्तु नोक्तदोष इति ध्येयम् ॥

उपाधिपदस्य साध्यसमव्याप्तवचनतया आत्माश्रयप्रसङ्गादाह साध्यव्यापकेति। व्यापकत्वं व्याप्तिनिरूपकत्वमात्माश्रयादिग्रस्तमत आह तद्वन्निष्ठेति । यत्रोपाधिरव्याप्यवृत्तिर्नानाव्यक्तिको वा तत्रापि व्याप्यवृत्तिरखण्डश्चान्ततस्तद्व्यक्तिभिन्नत्वप्रकारकप्रमाविशेष्यत्वा-

———

प्रेत इति ध्येयम् ॥ एतेनेति । विभिन्नसम्बन्धेन वैयधिकरण्यमादाय दोषेणेत्यर्थः ॥ दोषमेवाह समवायितयेत्यादिना । वह्नाविति । यथाश्रुतं मूलमभिप्रेत्य निरुक्तलक्षणाभिप्राये तु वह्न्यधिकरणतायामिति बोध्यम् । तादृशेति । साधनसमानाधिकरणीभूतं यन्महानसत्वादिकं तदधिकरणावृत्तित्वरूपवैयधिकरण्यवत्त्वादित्यर्थः ॥ सम्बन्धविशेषेणेति । प्रथमकल्पे येन सम्बन्धेन धर्मस्य साधनसमानाधिकरणत्वं तेनैव यत्तदनधिकरणं तन्मात्रवृत्तित्वस्य द्वितीयकल्पे च साध्यतावच्छेदकसम्बन्धेन स्वरूपसम्बन्धेन वा तदधिकरणावृत्तित्वस्य विवक्षायां न सम्बन्धभेदनिबन्धनो दोष इत्यर्थः ॥

आत्माश्रयेति । साध्यसमव्याप्तस्य व्यभिचारसम्बन्धेनाभावरूपायामनौपाधिकत्वव्याप्तौ साधननिष्ठप्रकृतसाध्यव्याप्तेरपि साध्यसमव्याप्यत्वांशे प्रवेशादिति भावः ॥ आत्माश्रयादिग्रस्तमिति । साध्यस्यापि साध्यनिष्ठव्याप्तिनिरूपकत्वेन साध्यनिष्ठायामेव साध्यीयव्याप्तौ तादृशव्यापकत्वप्रवेशादात्माश्रयो बोध्यः ॥ ननु द्रव्यं सत्त्वादित्यत्रानौपाधिकत्वलक्षणातिव्याप्तिः तत्र संयोगादेरव्याप्यवृ-

प्रतियोगित्वम् व्यभिचारे चावश्यमुपाधिः प्रतियोगित्वं न विरोधित्वं सहानवस्थानानियमलक्षणम् गोत्वाश्वत्वयोरतथात्वात् अन्योऽन्याभावप्रतियोगिन्यसत्त्वाच्च किन्तु यथा-

---

भावादिरेवास्ति । यदि च तस्यापि विशेषणान्तरविशिष्टस्य द्वित्वाद्यवच्छिन्नस्य वा तत्राभावसम्भवस्तदा साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकीभूतसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वं दलद्वयार्थो बोध्यः । अनवस्थान्निरासितुमाह प्रतियोगित्वमिति । सहेति । एकदेशकालाव-

---

च्छिन्नतया संख्यापरिमाणादेश्चालनीन्यायेन साध्यवन्निष्ठाभावप्रतियोगितयोपाधित्वाभावादत आह यत्रेत्यादि। यत्साध्यक इत्यर्थः। यत्राधिकरणे व्यभिचारस्तद्भिन्नत्वादेरेवाखण्डस्य सर्वत्र सौलभ्यादन्तत इत्युक्तम् । तद्भिन्नत्वेति । साध्यवद्भिन्नत्वप्रकारकेत्यर्थः । तद्वत्त्वप्रकारकप्रमाविशेष्यत्वस्य विशेष्यभेदेन नानात्वादखण्डत्वासम्भव इत्यतोऽभावद्वयगर्भानुसरणम् ॥ विशेष्यवन्निष्ठस्य विशिष्टाभावस्य विशेषणाभावपर्यवसायिनः प्रतियोगित्वं विशेषण एव न तु विशेष्य इति प्राचीनप्रवादमनुसृत्य यदि चेत्युक्तम् । तस्यापि अखण्डस्यापि। तत्र साध्यवति । साध्यसमानाधिकरणेत्यादि । यद्यपि प्रतियोगिताद्वयं वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नं ग्राह्यमित्येतावतैव मूलं समञ्जसम् तथाप्यार्द्रेन्धनत्वादिरूपेणोपाधिव्यवहारं समर्थयितुमवच्छेदकपर्यन्तानुसरणम् ॥ सहानवस्थाननियम इत्यत्रानौपाधिकत्वरूपनियमस्य प्रकृतसाध्यीयत्वाभावादात्माश्रयासम्भवादाह अनवस्थामिति ॥ एकेति । तत्तदभाववत्त्वानवच्छेदकीभूततत्तद्देशकालानवच्छिन्नं यत्तत्तदभावाधिकरणवृत्तित्वं तदन्यत्वमर्थः। तेन गोत्वाद्यभावस्य व्याप्यवृत्तेर्देशानवच्छिन्नवृत्तिकत्वेपि न तत्प्रतियोगितायामव्याप्तिः । तदनवच्छेदकत्वं चेह अवच्छेदकतासम्बन्धेन तदभा-

च्छेदेनेति पूरणीयम् । तेन नाव्याप्यवृत्तेरभावस्य प्रागभावादेश्च प्रतियोगितायामव्याप्तिः । अन्योन्येति । अत्र समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति महानसादौ संयोगादिना वह्न्यदेर्वृत्तेर्येन सम्बन्धेनाभावः तद्वति तेनावृत्तिर्वक्तव्या । इत्थञ्च तेन सम्बन्धेनासम्बद्धत्वोक्तौ नायं दोषः । अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकतया तद्वति तेन सम्बन्धेन प्रतियोगिनोऽसम्बद्धत्वात् । परन्तु समवायेन सत्ताया अभावस्य प्रतियोगितायामव्याप्तिः । तद्वति समवायेन वृत्तेरप्रसिद्धेः । तादृशस्वसम्बन्धाधिकरणावृत्तितत्कत्वाभिधाने च व्यधिकरणसम्बन्धावच्छिन्नाभावप्रतियोगितायामव्याप्तिः सिद्धान्तलक्षणवक्ष्यमाण-

---

वधत्वमिति न कश्चिद्दोषः ॥ तेनेति । संयोगाद्यभावस्यैकदेशावच्छेदेन घटादिप्रागभावस्य चैककालावच्छेदेन प्रतियोगिना सादेश्याभावादिति भावः ॥ अभावविरोधित्वं नाभावविरहव्याप्यत्वं येनानवस्था स्यात् किन्त्वभाववदवृत्तित्वमेव तथा वाच्यमित्याशयेन स्वयं भेदप्रतियोगिनि तदव्याप्तिमुद्धर्तुमाह अत्रेति । यथाश्रुते तु मूलाभिप्रेतस्य नियमघटितप्रतियोगित्वस्याव्याप्तेरुक्तग्रन्थेनानुद्धारात्तद्विरोधश्चिन्तनीयः । वक्तव्येति । अन्यथात्यन्ताभावप्रतियोगिन्यप्यव्याप्तिसम्भवेऽन्योन्यान्याभावमात्रप्रतियोगिन्यव्याप्त्यभिधानं मूलकृतो विरुद्धमिति भावः ॥ इत्थं सम्बन्धविशेषस्य निवेशे । तद्वति समवायेन सत्त्वाभाववति ॥ तादृशेति । प्रतियोगितावच्छेदकसम्बन्धेन यत्प्रतियोगिसम्बन्धि तदवृत्त्यभावकत्वमित्यर्थः । अत्रावृत्तित्वं तादृशप्रतियोगिसत्ताबुद्धिविरोधिताघटकसम्बन्धेन ग्राह्यम् । तेन सत्त्ववति महाकालादौ तद्विरहस्य कालिकादिसम्बन्धेन वृत्तावपि नाव्याप्तिः । न चैवं सत्तारूपस्य सदन्यत्वाभावस्य प्रतियोगिन्यव्याप्तिः सदन्यत्ववति जात्यादौ तद्विरोधिताघटकेन समवायेन वृत्तेरप्रसिद्धेरिति वाच्यम् । स्वसम्बद्धाधिकरणावृत्त्यभावाधिकरणतासामान्यकत्वस्योक्तत्वात् । अभावमात्रस्यैव भावभिन्नत्वोपगमाद्वैशि-

# अनुमितिग्रन्थस्य शोधनम् ।

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| १ | १३ | पमात्मने | [ओं नम इति ।] परमात्मने |
| ,, | २१ | कारणतावछेद | कारणतावच्छेद |
| २ | १२ | दित्याहुः । [केचित्तु | दित्याहुः।[वस्तुत आकाशानतिरिक्तत्वं मन्यमानानां मते आत्मावृत्तिविशेषगुणवत्त्वमेव भूतत्वम् तथा च आकाशस्यात्मानतिरेकाद्भूतत्वं पृथिव्यादिचतुष्टयमात्रवृत्तीति नोक्तदोष इति ध्येयम् । केचित्तु |
| ,, | २० | दुःखानवछिन्न | दुःखानवच्छिन्न |
| ,, | २१ | पष्ठ्यर्थस्क | षष्ठ्यर्थस्तु |
| ,, | २२ | चरंच्छावच्छिन्नाय]॥ निपु | चरंच्छावच्छिन्नाय ॥ इदानीं ग्रन्थस्य निगूढार्थकत्वं दर्शयति परजुष्टेति ॥ इदानीमात्मनो निगूढत्वं व्यञ्जनया प्रतिपादयति न्यायमिति ॥ इदानीं विनयपुरःसरं ग्रन्थस्य निर्दोषत्वं व्यञ्जनया प्रतिपादयति मान्यानिति ॥] निपु |
| ३ | ५ | गनुमनं | गनुमानं |
| ,, | ६ | प्रत्यक्षविल्यादिना | प्रत्यक्षवित्यादि |
| ,, | २३ | भावः प्रतिपाद्य | भावः [प्रत्यक्षोपजीवकत्वादित्यादिग्रन्थ]प्रतिपाद्य |
| ४ | ३ | जीवको | जीवकतो |
| ,, | १२ | फलस्येति । अनु | फलस्येति । [ननु विषयतानवच्छिन्नोपजीवकत्वं तथा वाच्यम् तथा चोक्तस्थलेऽनुमितिर्विपर्यव- |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| | | | घयैवोपजीविकेत्यत आह आदी-ति । ]अनु |
| ,, | २२ | घटितमपीति भावः | घटितमपीति [तथा च शाब्दादि-परामर्शस्थलेपि पदादिसाक्षात्का-रोपजीवकत्वमेव परम्परयेतिं ] भावः । |
| ५ | २२ | जान्य | जन्य |
| ६ | २८ | सूचितम् । | सूचितम् ॥ |
| ७ | ३ | धानव्यप्या । | धानव्याप्या । |
| ,, | १४ | ज्ञानप्रयोज्यतायाम् | ज्ञान[जन्यजिज्ञासा]प्रयोज्यता-याम् |
| ,, | २४ | अनुमादि | अनुमानादि |
| | ३१ | 'स' निरूपिते खण्डचक्षुषि र | 'निरूपिते खण्डचक्षुषि रस' |
| ८ | २२ | निरूणं | निरूपणं |
| ,, | २३ | निरूण | निरूप्य |
| ९ | १ | कार्यं कारणं वेति | करणं कार्यं वेति |
| ,, | १० | तापन्नमि | तापन्नत्वमि |
| १० | ९ | किमस्य | त्किमस्य |
| ,, | १४ | तुल्यत्वे पीतितथा | तुल्यत्वेपीति । [यथा प्रत्यक्षोप-जीवकत्वमनुमाने तथानुमानोप-जीवकत्वस्य प्रत्यक्षे सत्त्वेपीत्यर्थः] तथा |
| ११ | ४–५ | बोधकमन्ततः सा-मान्यतोदृष्टजी-घनक | बोधकं सामान्यतोदृष्टमन्ततोऽ-दृष्टजनक |
| ,, | ११ | त्पत्तौ तन्निवृ | त्पत्तौ [तन्निरूपणेन] तन्निवृ |
| १३ | ९ | प्रमाण्या | प्रामाण्या |
| ,, | २३ | तत्रत्यतच्छ | तत्रत्यत्र तच्छ |
| १४ | २ | ण्यादिभिरिति।तत्क | ण्यादिभिरिति [आदिना विभाग- |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| | | | परिग्रहः। अत्र तृतीयार्थः प्रकारता। सप्तम्यर्थो विशेष्यत्वम्। निरूपणीये कर्तव्यनिरूपण इति बोध्यम्॥] |
| ,, | २९ | नुभिति | नुमिति |
| १५ | २६ | समेवत | समवेत |
| १६ | १२ | व्युत्यत्ति | व्युत्पत्ति |
| १७ | २९ | तथा वह्न्यादि | तथा च वह्न्यादि |
| १८ | ३ | उक्त ज्ञानपद | उक्तं ज्ञानपदे |
| ,, | १५ | नव्यास्त्क | नव्यास्तु |
| ,, | २७ | पर्वतसंबन्धवान् | पर्वतसंबन्धवान् धूमो |
| १९ | ११ | नक्षत्वा(नोक्ता)नुमित्य | न कुत्राप्यनुमिताव |
| ,, | १२ | विशिष्टज्ञानस्य | विशिष्टज्ञानत्वस्य |
| ,, | १३ | विशिष्टज्ञानस्य | विशिष्टवत्त्वज्ञानस्य |
| २० | २ | समानाधि | सामानाधि |
| ,, | ७ | दित्याहुः॥ ननु | दित्याहुः। [अन्ये तु गौरवेणेति दीधितिकृन्मतपरामर्शोत्तरमुपाध्यायमतपरामर्शकल्पनागौरवेणेत्यर्थः न तु निरुक्तसामानाधिकरण्येन नन्वेवं तुल्योनुयोग इत्याह संबन्धसंबन्धेत्यादि उपाध्यायमतपरामर्शाभावेपि विशिष्टज्ञानस्य प्राच्यैरुपपादितत्वादित्याहुः॥]ननु |
| २१ | ३ | बुद्धेर्भ्र | शाब्दबुद्धेर्भ्र |
| ,, | ४ | प्रमाण्य | प्रमाण |
| ,, | १२ | सम्बधा | सम्बन्धा |
| ,, | १३ | वछिन्न | वच्छिन्न |
| ,, | १८ | न्वयसह | न्वयबोधसह |
| २२ | १ | लिङ्गक | ल्लिङ्गक |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| ,, | ३ | साध्याव | साध्यवत्पक्षाव |
| ,, | २५ | लिङ्गेति । साध | लिङ्गेति । [लिङ्गोपहिते लिङ्गविशिष्टपक्षे लैङ्गिकस्य साध्यस्य भाननिरासेन । तथा चात्रार्यानुमितिनिरासेनेत्यर्थः । ] साध |
| २३ | १ | ईश्वरज्ञानतादृश | ईश्वरतादृश |
| ,, | ५ | नीतकात्वतम (?) | नीतकाञ्चनमय |
| ,, | ७ | मात्रस्याभ्रम | मात्रस्य भ्रम |
| २४ | १ | विशिष्टपक्ष | विशिष्टे पक्ष |
| ,, | ३ | विशिष्टक्ष | विशिष्टत्वपक्ष |
| ,, | ११ | धानदुक्त | धानादुक्त |
| २५ | १५ | त्यर्थः । तेनै | त्यर्थः । [तथा च बहिर्भूतान्तस्य बहुव्रीह्यादिवारणार्थं पदार्थभेदद्वन्द्ववादिनोऽप्यावश्यकतया तेनैव ममापि कर्मधारयवारणमिति भावः] तेनै |
| ,, | २७ | भावः । उक्तत्वादिति । | भावः [तदुभयं व्याप्तिविशिष्टत्वपक्षधर्मत्वोभयम् । अवगाहित्वं संसर्गमर्यादया । तथा चैकधर्मिनिष्ठविषयितानिरूपिततदुभयसंसर्गताख्यविषयिताशालिज्ञानजन्यत्वलाभः ।] उक्तत्वादिति । |
| २६ | ९ | भावः ॥ ननु | भावः। [केचित्तु मीमांसकेति मीमांसकेन वह्निव्याप्यवान्पर्वत इति परामर्शान्नानुमितिरित्युच्यते तथैव तादृशलक्षणवादिना त्वयाप्यवश्यं वक्तव्यम् अन्यथा तज्जन्यानुमित्यव्याप्तिरतस्तन्मतप्रवेश इत्याहुः । तन्न । जातिगर्भतयैवाव्याप्तिवारणे तन्मतानवलम्बनेपि |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| | | | क्षत्यभावादिति ध्येयम् ॥] ननु |
| २७ | १ | शिष्टं यत्पक्ष | शिष्टं व्याप्तिप्रकारकं यत्पक्ष |
| ,, | ५ | निवेशनीयत्वे | विशेषणीयत्वे |
| २८ | ७ | वच्छेदेनैवान्वयस्य | वच्छेदेन विधेयतावच्छेदकावच्छिन्नान्वयस्य |
| २९ | पृष्ठे | "केचित्तु"(१४ पङ्क्तौ) इत्यादिः "वदन्ति"(१७ पङ्क्तौ) इत्यन्तो ग्रन्थो "भावः" (१९ पङ्क्तौ) इत्यस्यानन्तरं पठनीयः । | |
| ३० | २० | व्याप्तेः | व्याप्त्योः |
| ३१ | १२ | दिति भावः । | दिति भावः । [विशेषपदर्शनस्य विशेषदर्शनत्वेन हेतुतामत इत्यपि कश्चित् । ] |
| ,, | २७ | प्रसिद्धसाध्यक | अप्रसिद्धसाध्यक |
| ,, | २९ | संशयो | [भ्रम]संशयो |
| ३२ | ४ | तद्वत्ताप्रत्यक्ष | तद्वत्ता[निश्चयात्मक]प्रत्यक्ष |
| ,, | ६ | योत्तरं पर्वत | योत्तरं [वह्न्यनुमितिदर्शनात्] पर्वत |
| ,, | २० | संभवाच्च न च | संभवाच्च [न चाव्यवहितोत्तरत्वसंबन्धेन तद्धर्मिकतत्संशयादिविशिष्टतादृशप्रत्यक्षत्वमेव कार्यतावच्छेदकम् सम्बन्धाननुगमस्यापि दोषावहत्वात्] नच |
| ३४ | १ | तिदश | तिदेश |
| ,, | ९ | संशस्य | संशयस्य |
| ,, | १७ | व्याप्यम् । तथाच | व्याप्यम् । [आदिपदेन पक्षपरिग्रहः । लक्षणपदं स्वरूपपरम्] तथाच |
| ३५ | १ | शान्द | शाब्द |
| ,, | १५ | यिष्यत इति । पदज | यिष्यत इति । [तद्घटकप्रत्येकपदजन्यपदार्थस्मृतेर्महावाक्यार्थबो- |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| | | | धपर्यन्तमसत्त्वेपि] पदज |
| १५ | १९ | तदादेश्चेति। व्युत्पा | तदादेश्चेति। उपस्थापकत्वमिति। व्युत्पा |
| ३७ | १८ | प्रामाण्यानिश्च | प्रामाण्यनिश्च |
| ,, | २२ | [विशेष | [प्रत्युत विशेष |
| ३८ | ११ | भावः। ननु | भावः [ननु कृत्यादेरुत्पत्त्यनन्तरं विशिष्टविषयकस्मृत्यैव क्षणविलम्बेन तदुपहितकृत्यादेः साक्षात्कारो जायत इति यदि ब्रूयास्तदा स्फुटव्यभिचारस्थलमाह विशेषणेति। विशेषणांशे विशेषणान्तराविषयकादित्यर्थः। विशिष्टस्मरणादित्यस्य विशिष्टवैशिष्ट्यस्मरणादित्यर्थः। यद्वा] ननु |
| ३९ | ६ | [यतो] | [यत्र] |
| ,, | ११ | सम्भति। | सम्भवति। |
| ४० | ७ | त्कार्यताय | त्कार्यताव |
| ४१ | ६ | व्यपस्थाप | व्यवस्थाप |
| ,, | ११ | विषयसंनि | विषये संनि |
| ४२ | ११ | तरत्वादीत्यर्थः | तरत्वादिरित्यर्थः |
| ,, | २० | भावः। [अथेति।] | भावः॥ [अथेति।] |
| ,, | २३ | व्याप्यवत्त्वनिश्च | व्याप्यवत्त्वादिनिश्च |
| ४३ | ८ | सङ्घात् अनुमिति | सङ्घात् [तथाच] अनुमिति |
| ,, | १७ | विरोधापत्तेः। तत्र हे | विरोधापत्तेः। [नन्वत्र विषयतासम्बन्धेन कार्यकारणभावो वाच्यः तथा च विषयतया बाष्पादावेव कारणस्य सत्त्वान्न व्यभिचार इति स्मृतावपि तादृशधूमाद्यनन्तर्भावेण कारणत्वादितिव्याप्तिस्तदवस्थैवेति चेन्न। पुरुषा- |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| | | | न्तरीयज्ञानमादायातिप्रसङ्गवारणाय तत्पुरुषीयत्वनिवेशस्यावश्यकत्वेन स्मृतौ तथाविधनिश्चयत्वमात्रावच्छिन्नजनकत्वाभावात् न च तत्पुरुषीयज्ञानविषयतासम्बन्धेन तथा वाच्यम् तथा च स्मृतौ तादृशजन्यत्वमात्रमप्रत्यूहमिति वाच्यम् तथा निश्चयविषयतासम्बन्धस्यैव निवेशे स्मृतिकारणतायां ज्ञानत्वमात्रनिवेशादेव सामञ्जस्ये तथाविधानिश्चयत्वप्रवेशादेव स्मृतावतिव्याप्तिविरहादित्यस्मद्गुरुचरणाः। [तत्र हे |
| ४३ | २३ | चाक्षुषत्वव्या | चाक्षुषत्वादिव्या |
| ,, | २८ | भावः। [सांकर्यघट | भावः। [आंशिकत्वोपगमादव्याप्यवृत्तित्वोपगमात् । तथा च न हि जातिरव्याप्यवृत्तिरिति भावः। सांकर्यघट |
| ४५ | ९ | भावः। नव्यास्तु | भावः। [केचित्तु संस्कारं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुतयोपेक्षात्मकज्ञानात्संस्कारानुत्पत्त्या स्मृतेरसम्भवोतः स्मृतिजनकतायामुपेक्षान्यत्वाप्रवेशादतिव्याप्तिरित्याहुः। तच्चिन्त्यम्। फलव्यापारौ प्रत्येकरूपेण कारणत्वमिति व्याप्तभवद्भिरेव स्वीकृतत्वात्। अन्यथा स्मार्तं प्रति ज्ञानत्वेनैव हेतुत्वम् न तु निश्चयत्वेन। तत्कुतो विशिष्टस्मरणेऽव्याप्तिरिति ध्येयम्।] नव्यास्तु |

| पृष्ठ | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| ,, | २२ | भङ्गादिति प्राहुः । | भङ्गादिति[ न च सामान्याकारज्ञानत्वेनैव स्मृतिहेतुतास्तु संस्कारस्य तु संस्कारत्वेन व्यापारतास्त्विति वाच्यम् तथा सति तत्रत्यांशिकोपेक्षात्मकज्ञानादुपेक्षितांशेपि स्मृत्यापत्तेस्तज्ञन्यत्वेनैव प्रत्यासत्तित्वादिति] प्राहुः । |
| ४६ | ९ | व्याप्यभाव | व्याप्याभाव |
| ,, | २७ | धानिवर | धानविर |
| ४७ | १७ | 'वस्तुतस्तु' इत्यादिः 'पास्तम्' (२० पङ्क्तौ) इत्यन्तो ग्रन्थो २४ पङ्क्तिस्थ 'चेति भावः । ' इतिग्रन्थानन्तरं पठनीयः ॥ | |
| ४८ | २८ | हेतुत्वम् वस्तुतो | हेतुत्वम् । वस्तुतो |
| ,, | २९ | र्पायितत्प्रकारकसंस्कारनाशसामान्यं प्रत्येव तत्पु | र्पायसंस्कारनाश[सामान्य]म्प्रत्येव [तत्पु- |
| ४९ | ७ | [तत्] संस्का | [तत्प्रकारक]संस्का |
| ,, | २४ | ज्ञानसुखादीनामिव | ज्ञानसुखादिकं न कालिकसम्बन्धेन घटध्वंसप्रतियोग्यधिकरणं उत्पत्तिक्षणे अधिकरणताया अभावात् । इत्थं चोक्तकारणाभावान्न तेषां क्षणिकत्वम्। तेषामिव |
| ,, | २८ | प्रसङ्ग इति मदेकपरिशीलितः पन्थाः । यत्तु | प्रसङ्गः [अन्यथा घटध्वंसप्रतियोगिनः विषयतासम्बन्धेन अधिकरणं यन्नित्यज्ञानादिकं तत्तादात्म्यसम्बन्धेन घटध्वंसवत्त्वात् नित्यज्ञानादेः क्षणिकत्वं स्यादिति भावः] इति मदेकपरिशीलितः पन्थाः।[केचित्तु नच समानाकारत्वेन नाश्यनाशकभावे स्मृतिज- |

| पृष्ठे | पङ्क्तौ | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| | | | न्यप्रथमसंस्कारव्यक्तीनां स्मृति-समानकालोत्पन्नसंस्काराणां च क्षणिकत्वापत्तिरिति वाच्यम् द्वि-तीयक्षणोत्पन्नसंस्कारादेव उत्तर-स्मृतिसम्भवात् अनायत्या तत्रत्य-स्मृतिव्यक्तीनां विशेषतो नाशक-त्वं वाच्यम् । तथा च सामान्य-सामग्रीसत्त्वेपि विशेषसामग्री-विरहादेव न तत्संस्कारनाशः । सकृदनुभूतस्थले चानुपपत्तिवि-रहान्न विशेषसामग्र्यन्तरकल्पन-मित्याहुः । ] यत्तु |
| ५० | २६ | भावनन्त्य | भावानन्त्य |
| ५१ | १५ | दृढत्वं | दृढतरत्वं |
| ,, | २६ | वेत्यर्थः । [अन्य | वेत्यर्थः । [इदं निश्चिताव्यभिचा-रकत्वमित्यन्ये । अन्य |
| ५२ | १० | तं चेति । | तं चेति । [तात्पर्यटीकायां प्रमाण-प्रमेयेत्यादितात्पर्यटीकायां मिश्रै-र्वाचस्पतिमिश्रैः स्मृतीनामिति।] |
| ५३ | ९ | किं चेति । तत्र | किं चेति । [व्याप्यविशेष्यकादि-ति । वह्निव्याप्यो धूमः पर्वत इ-त्यस्मादित्यर्थः। पक्षविशेष्यकादि-ति।वह्निव्याप्यधूमवान् पर्वत इत्य-स्मादित्यर्थः। तदुभयेति। व्याप्य-पक्षोभयवैशिष्ट्यावगाहीति] तत्र |
| ,, | ११ | रेति । तथा | रेति । [पञ्चम्यर्थश्च तत्र विशि-ष्यैव कार्यकारणभाव इत्यभिमेणै-वकारेणान्वयी । ] तथा |
| ,, | २२ | समान | [समान |
| ,, | २७ | त्यर्थः ॥ नाना | त्यर्थः ॥ [एवंचेति । व्याप्यपक्षो-भयवैशिष्ट्यावगाहिनिश्चयत्वेन |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
|---|---|---|---|
| | | | लक्षणघटकत्वे । ] नाना |
| ५५ | १ | निवि | निर्वि |
| ,, | ३ | पूर्व विषयस्मतेश्च | पूर्वं विषयस्मृतेश्च |
| ,, | २० | एव इत्यत | एव [तत्र विशेषणबुद्धेः कारणत्वाभावात्] इत्यत |
| ५७ | २० | कश्चित् । यत्किञ्चि | कश्चित् । [व्याप्यत्वं न्यूनवृत्तित्वमित्यपि कश्चित्] यत्किञ्चि |
| ५९ | १२ | कार्यतावच्छेद कोश्य | कार्यतावच्छेदककोठ्य |
| ६२ | ३० | द्वस्थपरा | द्वस्थधूमपरा |
| ६३ | २१ | क्षत्यभावादेवं च | क्षत्यभावात् [प्रागभावस्यानुपगमे तदपहाय स्ववृत्तिभेदप्रतियोगितावच्छेदकध्वंसवत्त्वं निवेश्यम्] एवं च |
| ,, | २७ | जातिरूपल | जातिरुपल |
| ,, | २९ | जोत | जाते |
| ६४ | २८ | पूवार्क्तलक्षणमवे | पूर्वोक्तलक्षणमेव |
| ६५ | १ | प्रत्यक्षानुपादने | प्रत्यक्षाद्युत्पादेन |
| ,, | २९ | सुवचत्वादित्याहुः। तच्चिन्त्यम् । तद्व्यक्तीत्यादि । | सुवचत्वात् [एवं क्वचित्संयोगेन क्वचित्समवायादिना साध्यस्यानुमितौ भानार्थमपि साध्यव्याप्यवत्पक्षधर्मिकसाध्यानुमितित्वावच्छिन्नं प्रति साध्यव्याप्यवत्पक्षनिश्चयत्वेन हेतुत्वात्] इत्याहुः । तच्चिन्त्यम् । [लिङ्गोपधाने पर्वतो वह्निव्याप्यवान्निर्वह्नित्वादित्यादौ सर्वानुभवसिद्धस्यानुमित्युत्पादस्यापलापापत्तेः । विरोधिनोरेकनिश्चयाविषयत्वेनात्र निर्वह्नित्ववत्पर्वतो वह्निव्याप्यवानिश्चयस्यानु(?)मितेरुत्पत्त्यसम्भवात् । अत |

| पृष्ठे | पङ्क्तौ | दुष्टम् | अदुष्टम् |
| --- | --- | --- | --- |
| | | | एव साध्यत्वसाधनत्वयोर्विरोधित्वमते साधनत्वहेतुकसाध्यत्वानुमानं गुरुणापि दुर्घटमिति विधिवादे मिश्रा अप्याहुः] । तद्वयक्तीत्यादि । |
| ६६ | २८ | वेतत्यर्थः तथा | वेतत्यर्थः [तदाश्रयसमवेतं स्मृतित्वमनुभवत्वं च] तथा |
| ६७ | २९ | प्याहुः । अत्र | प्याहुः [इदं तु न सम्यक् एवं सति वह्निव्याप्यवत्पर्वतवान् देश इत्याकारकविशिष्टवैशिष्ट्यबोधातिप्रसङ्गः स्यात् । तादृशबोधवृत्तिवह्निव्याप्यधूमवत्पर्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिकजन्यताया व्याप्तिज्ञानजन्यतावच्छेदकव्याप्तिप्रकारतानिरूपितधूमप्रकारत्वेनावच्छिन्नत्वात् । न चैवं भवन्मतेऽप्येष दोषः । मया तु व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकत्वपर्याप्त्यधिकरणधर्मावच्छिन्नत्वस्यावच्छिन्नान्तदलेन विवक्षितत्वात् तथा चापत्तिवृत्तितादृशजातिमादाय प्रत्यक्षमात्रेऽतिव्याप्तेः] । अत्र |
| ६९ | १७ | विषयतया | विषयितया |
| ,, | २० | तावच्छेदकत्वस्य | तावच्छेदकस्य |
| ,, | २६ | साध्यकानुमि | साध्यकाद्यनुमि |
| ७० | ३ | ननुनमेपि अधिकस्य भागासिद्ध | ननुगमेपि अधिकस्य भागासिद्धि |
| ७३ | १८ | साधर्म्येण | साधर्म्यत्वेन |

धिकरणाभावयोः स्वरूपविशेषः सम्बन्धः, तथा प्रतियो-
गित्वमनुयोगित्वमपि अभावविरहात्मत्वं वेति चेत् । य-

---

रीया च खण्डशः प्रसिद्ध्या तत्परिहारोऽपीति ध्येयम् । अभा-
वविरहात्मत्वमिति । न चान्योन्याभावप्रतियोगितत्त्वावच्छेदकयो-
रप्रसक्त्यतिप्रसक्ती प्रकृतोपयोगिप्रतियोगितामात्रस्य लक्ष्यत्वे तु
लक्षणेऽत्यन्ताभावपदवैयर्थ्यम् सर्वत्र नित्यस्यनित्यसाधारणरूपाव-

---

कस्वरूपसम्बन्धेनावृत्तित्वं वाच्यमिति तु भ्रमः । गगनाभावस्य
कालिकसम्बन्धेन यो विरहस्तदभावप्रतियोगिन्यव्याप्तेः । तादृशविर-
हाभावस्य गगनाभावात्मकस्य तादृशविरहात्मकप्रतियोगिमति नित्य
द्रव्यादौ स्वरूपसम्बन्धेन वृत्तेरिति ध्येयम् । व्यधिकरणेति । संयो-
गेन रूपाद्यभावस्थले संयोगेन रूपादिसम्बद्धाधिकरणाप्रसिद्धेरिति
भावः । सिद्धान्तेति । यत्प्रतियोगितावच्छेदकसम्बन्धसामान्ये यदी-
यत्वयदभावाधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्ते-
न सम्बन्धेन तस्य तदभावप्रतियोगित्वमिति क्रमेणेत्यर्थः । तत्परि-
हार इति । संयोगसामान्य एव रूपीयत्वतादृशरूपाभावाधिकरणा-
नुयोगिकत्वोभयाभावसत्त्वाद्व्यधिकरणसम्बन्धेनाभावस्य प्रतियोगि-
तायां नाव्याप्तिरित्यर्थः । यथाश्रुते घटत्वादेरपि द्रव्यत्वाद्यभाव-
प्रतियोगित्वापत्तिः स्वीययदभावाधिकरणानुयोगिकत्वेत्युक्तौ च
स्वप्रतियोगिकत्वपर्यवसायिनः स्वीयत्वस्य विनाऽतिरिक्तस्वप्रति-
योगितां दुर्वचत्वमित्यादिदोषसम्भवान्निर्दोषत्वासम्भवादाह अ-
पीति ॥ न चेति । वाच्यमिति परेणान्वयः।घटादिभेदस्य प्रतियोगिन्य-
व्याप्तिः।तस्य भेदविरहत्वाभावात्। एवं तत्प्रतियोगितावच्छेदके घट-
त्वादावतिव्याप्तिः । तस्य घटादिभेदविरहस्वरूपत्वादित्यर्थः । ननु
प्रकृतानौपाधिकत्वरूपव्याप्तिनिविष्टस्यैव प्रतियोगित्वस्य निर्वचना-
दन्योन्याभावप्रतियोगिन्यव्याप्त्यादिकं न क्षतिकरम् साध्यवन्निष्ठा-
त्यन्ताभावविरहान्यत्वे सति साधनवन्निष्ठात्यन्ताभावविरहात्मक-
स्योपाधेर्यत्र विरहस्तत्रैवानौपाधिकत्वव्याप्तेः पर्यवसानादित्यत आह

च्छिन्नस्य वा उपाधितासम्भवात् इतरथा तु भेदप्रतियोगितावारणाय संसर्गाभावपरतया तस्य सार्थकत्वादिति वाच्यम्। विरहपदस्य तज्ज्ञानप्रतिबन्धकज्ञानविषयार्थकत्वात्। प्रतिबन्धाति हि

---

प्रकृतेति। लक्षणे मूलोक्तोपाधिलक्षणे। वैयर्थ्यमिति। साध्यवन्निष्ठो योभावस्तद्विरहान्यत्वेनैव धूमवान्वह्नेरित्यादावार्द्रेन्धनादेरुपाधितया व्याप्तिलक्षणातिव्याप्तिव्युदासादिति भावः। ननु आर्द्रेन्धनादेर्धूमसमानाधिकरणध्वंसादिविरहस्वरूपतया तदन्यत्वाभावादनुपाधित्वं स्यादतो ध्वंसप्रागभाववारकतयैवात्यन्तपदं सार्थकं स्यादत आह सर्वत्रेति। नित्यस्येति। व्यभिचारस्थलान्यत्वस्वरूपस्यायःपिण्डभेदादेरित्यर्थः। नित्यस्यापि साध्यवन्निष्ठस्य स्वीयविशिष्टाभावादिविरहस्वरूपतया अनुपाधित्वापत्तिरतो अवच्छेदकत्वप्रवेशाध्रौव्ये जन्यस्याप्यार्द्रेन्धनादेस्तत्साधारणरूपेणोपाधित्वं सम्भवतीत्याह नित्यसाधारणेति। तथाच साध्यवन्निष्ठाभावविरहत्वानवच्छेदकीभूतसाधनवन्निष्ठाभावविरहत्वावच्छेदकधर्मवत्त्वमेवोपाधित्वमिति तन्नायःपिण्डभेदार्द्रेन्धनान्यतरत्वादिनार्द्रेन्धनस्याप्युपाधित्वं सुवचमिति भावः। इतरथेति। यद्यद्रूपेणोपाधिव्यवहारस्तद्रूपावच्छिन्नप्रतियोगित्वस्य लक्ष्यत्व इत्यर्थः। भेदेति। तथा चायःपिण्डभेदत्वादेः साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकत्वात्तद्रूप्येणोपाधिव्यवहारो न स्यादतोऽत्यन्तपदमुपाधिलक्षणे सार्थकं स्यादितिस भावः। प्राञ्चस्तु इतरथा भेदसाधरणप्रतियोगितामात्रस्य लक्ष्यत्वे। तथा चायःपिण्डभेदत्वादेः साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकत्वादयःपिण्डान्यत्वादिकमुपाधिर्न स्यादतस्तत्सङ्ग्रहार्थं भेदप्रतियोगितावारकमत्यन्तपदं सार्थकमित्याहुः। तच्चिन्त्यम्। अयःपिण्डभेदत्वादिरूपेणोपाधित्वाभावेपि व्यभिचारनिरूपकाधिकरणीभूतायःपिण्डभिन्नत्वरूपेणैवार्द्रेन्धनादेरयःपिण्डभेदादेश्चोपाधित्वसम्भवात्। न हि धूमवत्ययःपिण्डभेदत्वावच्छिन्नस्य भेदसत्त्वेप्ययःपिण्डभिन्नत्वावच्छिन्नस्य भेदसम्भवः।धूमवन्मात्रस्यैवायःपिण्डभिन्नत्वात्। नच घटाभावान्यो वाच्यत्वादित्यादौ व्यभिचारस्थानस्य घटाभावस्य यदन्यत्वं तदवच्छिन्नभेदोपि घटाभावान्यत्वस्य साध्यस्य समानाधिकरणस्तादृशभेदस्य च

तादात्म्येन प्रतियोगिज्ञानमन्योन्याभावबुद्धिम् । प्रतिबन्धकत्वञ्चा-त्रैककालावच्छेदेन एकत्रावर्तमानत्वम् । अभावपदस्य स्वाभाव-परत्वात् । वस्तुतस्त्वेकसम्बन्धावच्छिन्नायास्तत्समानाधिकरणाभा-वप्रतियोगिताया अनवच्छेदकमपि भवत्येव सम्बन्धान्तरावच्छिन्ना-

---

घटाभावस्वरूपत्वादतस्तत्रैव व्यभिचारस्थानान्यत्वप्रकारेणोपाधित्वा-सम्भव इति वाच्यम् । घटाभावत्वस्यैव घटाभावान्यत्वावच्छिन्नभे-दस्वरूपत्वात्तस्य च घटाभावान्यत्वरूपसाध्यासमानाधिकरणत्वा-त्। अन्यथा घटाभावस्य तथात्वे निर्घटे भूतलादावप्ययं देशो न घटा-भावान्य इति प्रतीतिप्रसङ्गादिति दिक् ॥ तज्ज्ञानेति । अभावज्ञानवि-रोधिज्ञानप्रकारार्थकत्वादित्यर्थः ॥ भेदप्रतियोगिन्यव्याप्तिमुद्धरति प्रतिबध्नाति हीति ॥ कारणीभूताभावप्रतियोगित्वलक्षणप्रतिबन्धक-त्वस्य प्रतियोगिताघटितत्वेनात्माश्रयापत्तेराह प्रतिबन्धकत्वं चेति । तथा च तत्तदभावगोचरज्ञानेन सहैककालावच्छेदेनैकत्रावर्तमानस्य ज्ञानस्य तेन सम्बन्धेन प्रकारत्वं तत्सम्बन्धावच्छिन्नतत्तदभावप्रतियो-गित्वमिति समुदितार्थः । यत्र वस्तुविशेषतदभावयोरेकेनैव पुंसा वेदनं तत्राभावज्ञानेन सह एकत्रावर्तमानस्य प्रतियोगिज्ञानस्याप्र-सिद्ध्याऽव्याप्तिरत उक्तम् एककालावच्छेदेनेति । प्रतियोगिज्ञानमा-त्रस्यैव परमेश्वरीयाभावज्ञानेन सहैककालावच्छेदेन वर्तमानत्वाद-सम्भवः स्यादत उक्तम् एकत्रेति ॥ ननु भेदबुद्धौ प्रतियोगितावच्छे-दकवत्ताज्ञानस्य प्रतिबन्धकत्वात्तदवच्छेदकेऽतिव्याप्तिः वह्न्यादिव्या-प्यवत्ताज्ञानस्य वह्न्याद्यभावबुद्धिविरोधित्वात्तद्विषयेपीत्यत आह अभावपदस्येति । घटादिभेदश्च न घटत्वादेरभाव इति नातिप्रसङ्ग इति भावः ॥ प्रतियोगितामात्रस्य लक्ष्यत्वेप्यत्यन्तपदं न देय-मेव संसर्गविशेषस्य निवेशध्रौव्ये तत एव भेदप्रतियोगितावा-रणादित्याशयेनाह वस्तुतस्त्विति । एकसम्बन्धेति । तथा च साध्यवन्निष्ठात्यन्ताभावप्रतियोगितासामान्यानवच्छेदकत्वघटितोपा-धिर्धूमवान्वह्नेरित्यादिव्यभिचारिण्यपि दुर्घटः तप्तायःपिण्डभे-दत्वादेरपि धूमवन्निष्ठसंयोगसम्बन्धानवच्छिन्नाभावप्रतियोगिता-वच्छेदकत्वात् । न च भेदत्वस्यैव लघोः संयोगादिसम्बन्धा-

याः तस्या अवच्छेदकम् । अतो यत्सम्बन्धावच्छिन्नायाः साध्यसमानाधिकरणाभावप्रतियोगितायाः अनवच्छेदकं तत्सम्बन्धावच्छिन्नाया एव साधनसमानाधिकरणाभावप्रतियोगिताया अवच्छेदकं तद्वाच्यम् । तथा च संसर्गाभावत्वमनुपादेयमेव । वाशब्दोऽत्रास्वरससूचनाय । स च व्यधिकरणसम्बन्धेन सर्वस्य प्रतियोगिनस्तादृशभ्रमे मानाभावात् स्वाभावसम्बन्धित्वस्य स्वाभावज्ञानविषयत्वस्य वा लघोः सर्वत्र सम्भवित्वात् स्वाभावे-

---

वच्छिन्नाभावप्रतियोगितावच्छेदकत्वादयःपिण्डभेदत्वस्य गुरोरनवच्छेदकत्वमेवेति वाच्यम् । अयोगोलकानिरूपितस्वरूपसम्बन्धेनायःपिण्डभेदत्वावच्छिन्नात्यन्ताभावस्य धूमवत्यवश्यं वाच्यत्वात् न हि तादृशसम्बन्धावच्छिन्नाभावस्यापि प्रतियोगितावच्छेदकं भेदत्वमात्रं शक्यते वक्तुम् । तादृशसम्बन्धेन भेदत्वावच्छिन्नस्यायःपिण्डे सत्त्वात् तत्र तादृशसम्बन्धेनायःपिण्डभेदाभावस्यानुपपत्तेरिति भावः ॥ तत्सम्बन्धावच्छिन्नेति । अन्यथा वह्निमान् धूमादित्यादौ समवायेन साध्यव्यापकस्य द्रव्यत्वादेः संयोगेन साधनाव्यापकत्वात्तस्योपाधितापत्तेरिति भावः । तत् उपाधित्वम् ॥ सदातनसंसर्गाभावत्वरूपस्यात्यन्ताभावत्वस्य सदातनत्वांशोऽत्यन्ताभावं निवेशयतामपि त्याज्य एव निष्प्रयोजनत्वादित्याशयेनाह संसर्गाभावत्वमित्यादि । प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वलाभार्थमेवात्यन्तपदं मौलमिति तु वस्तुगतिः ॥ स चेति । अस्वरसश्चेत्यर्थः । मानाभावादित्यादिभिः पञ्चम्यन्तैरन्वयः । व्यधिकरणेति । अभावज्ञानासमानकालीनां प्रतियोगिमत्त्वप्रमामादायैव समानाधिकरणसम्बन्धावच्छिन्नाभावस्थले लक्षणसमन्वयाद्व्यधिकरणेत्युक्तम् । ननु तत्तत्सम्बन्धावच्छिन्नस्वाभावज्ञानेन सह एककालावच्छेदेनैकत्रावर्तमानज्ञानविषयत्वमात्रं विवक्षितम् तच्च स्वाभावज्ञानासमानकालीनां यथाकथंचित्प्रतियोग्युपस्थितिमादायैव व्यधिकरणसम्बन्धावच्छिन्नाभावप्रतियोगिन्यपि स्यादित्यत आह स्वाभावेति । विशिष्टधीजनकत्वादिगर्भस्य स-

त्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्मनिषेधो न धूमादौ । प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मश्च सिद्ध्यसिद्धिभ्यां न निषेद्धुं शक्यः। यावत्साध्यव्यापके प्रमेयत्वादौ साधनाव्यापकत्वं यावत्साधनाव्यापके च घटत्वादौ साध्यव्यापकत्वं निषिध्यत इति चेन्न । व्यधिकरणत्वत् ॥

---

स्वादौ षष्ठ्यर्थप्रतियोगितायाः प्रवेशात् तत्र स्वरूपसम्बन्धस्य शरणीकरणीयतया तस्यैवावश्यकत्वेन तथात्वौचित्याच्च अभावत्वप्रतिबन्धकत्वयोः प्रतियोगिताघटितत्वात् तथाविधव्यवहारगोचरस्यापि विना प्रतियोगितां निर्वक्तुमशक्यत्वाच्च ॥

---

म्बन्धत्वस्य प्रवेशे गौरवादाह स्वाभावश्चेति । ननूक्तनिरुक्तावेतयोरप्रवेशाद्गौरवं न क्षतिकरम् अन्यथा घटत्वापेक्षया गुरुत्वेन कम्बुग्रीवादिमत्त्वमपि लक्षणं न स्यादत आह स्वाभावेत्याद्याविति । अभावेत्याद्यंश इत्यर्थः । यत्तु लाघवात्तदेव तर्हि प्रतियोगित्वमस्तु इत्यतः तत्रापि दूषणमाह स्वाभावेत्याद्याविति इति तत्तुच्छम् । तथा सत्युक्तदोषेणैव मूलोक्तलक्षणस्य निरस्तत्वे अभावत्वप्रतिबन्धकत्वयोश्चेत्यादिना अग्रे पुनस्तत्र दोषोद्भावनस्य सन्दर्भविरोधापत्तेः । तथात्वम् प्रतियोगित्वम् । ननु उक्तनिरुक्तावंशान्तरे स्वरूपसम्बन्धरूपप्रतियोगित्वस्यानिवेशात्स्वाभावेत्याद्यावित्यादिपदमसङ्गत मत आह अभावत्वेति । यद्यभावत्वं न भावत्वावच्छिन्नप्रतियोगिताको भेदः किन्तु भावाभावसाधारणः स्वरूपसम्बन्धविशेषः तदाप्याह प्रतिबन्धकत्वेति । एकदैकत्र वर्तमानत्वत्वावच्छिन्नप्रतियोगिताकाभावरूपस्य प्रतिबन्धकत्वस्य घटकीभूतप्रतियोगतायाः स्वरूपसम्बन्धताध्रौव्ये सर्वत्रैव तादृशप्रतियोगित्वौचित्यादिति भावः । ननु स्वीयतया व्यवह्रियमाणतत्तद्भावकत्व-

यावत्साधनाव्यापकमव्यापकं यत्साध्यस्य याव-त्साध्यव्यापकं व्यापकं वा यस्य तत्त्वं तदिति चेन्न। सोपाधेरपि तथात्वात्। तथाहि। साधनस्य वह्नेरव्यापकं

---

यत्साध्यस्य यत्समानाधिकरणसाध्यस्य ॥ तथाहीत्यादि। यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकम् यावत् साध्य-समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं साध्यसमानाधिक-रणात्यन्ताभावप्रतियोगितानवच्छेदकं यावत् यत्समानाधिकरणात्य-न्ताभावप्रतियोगितानवच्छेदकम् तत्त्वमित्यर्थे तु नोक्तदोष इति ध्येयम्। प्रतियोगितयोश्चैकसम्बन्धावच्छिन्नत्वं विशेषणताविशे-

---

मेव तत्तदभावप्रतियोगित्वं वाच्यमतस्तत्र प्रतिबन्धकत्वाद्यप्रवेशा-न्नोक्तदोष इत्यत आह तथाविधेति। स्वीयत्वस्य स्वप्रतियोगितान-तिरेकात्तत्रापि प्रतियोगित्वानुयोगित्वघटितत्वेन तद्दोषतादवस्थ्य-मिति भावः॥

यदभिन्नसाध्यस्येत्यर्थे तत्त्वमित्यनेनापि साध्यस्यैवोप-ग्रहे व्यधिकरणत्वादित्युक्तदोषतादवस्थ्यमतः अन्यथा व्याच-ष्टे यत्समानेति। यस्य साध्यं यत्साध्यमिति व्युत्पत्त्या त-थार्थलाभादिति भावः॥ नोक्तदोषः सोपाधेरपि तथात्वा-दिति मूलोक्तदोषो नेत्यर्थः॥ प्रतियोगित्वयोः साधनवह्निष्ठाभावस्य साध्यवह्निष्ठाभावस्य च प्रतियोगित्वयोरित्यर्थः। एकेति। रूपं गुणत्वा-दित्यत्रातिव्याप्तिः साधनवह्निष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रति-योगितावच्छेदकानां यावतामेव रूपत्वस्वरूपसाध्यवह्निष्ठाभावीयसं-योगलक्षणैकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात् साधनवह्नि-ष्ठाभावप्रतियोगित्वं यद्यत्सम्बन्धावच्छिन्नं साध्यवह्निष्ठाभावप्रतियो-गित्वमपि तत्तत्सम्बन्धावच्छिन्नं ग्राह्यमित्युक्तौ चाननुगमो गौरवं चेत्यत आह विशेषणतेति। विशेषेति कालिकादिव्यावृत्त्यै। तेन नित्य-

पावच्छिन्नत्वं वा वक्तव्यम् । तेन प्रतियोगितावच्छेदकमात्रस्यैव यत्किञ्चित्सम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि एकसम्बन्धावच्छिन्नसाध्यसमानधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकस्य सम्बन्धान्तरावच्छिन्नसाधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि च न क्षतिः । व्यभिचारिणि तु यत्राधिकरणे व्यभिचारो विशेषणताविशेषावच्छिन्नतन्निष्ठाभवप्रतियोगितावच्छेदकं साध्यवत्त्वप्रकारकप्रमाविषय-

---

रूपं नित्यगुणत्वादित्यादौ कालिकविशेषणतावच्छिन्नप्रतियोगितामादाय नाव्याप्तिः ॥ प्रथमनिरुक्तः सम्बन्धविवक्षायाः फलमाह तेनेति । प्रतियोगितावच्छेदकमात्रस्येति । तथा च धूमवान्वह्नेरित्यादावतिव्याप्तिः । अयःपिण्डभेदत्वादेरप्ययःपिण्डनिरूपतस्वरूपसम्बन्धावच्छिन्नायाः साध्यवन्निष्ठाभावप्रतियोगिताया अवच्छेदकत्वादिति भावः । नचैवमपि तत्रातिव्याप्तिः विषयितासम्बन्धेनायःपिण्डभेदत्ववतो ज्ञानादेः स्वरूपसम्बन्धेनाभावस्य धूमवति सत्त्वादयःपिण्डभेदत्वादेरपि साध्यवन्निष्ठविशेषणतासम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । स्वरूपसम्बन्धेन ज्ञानाभावस्य केवलान्वयितया तत्प्रतियोगिताया भेदत्वादिनैव विषयितया अवच्छेदादयःपिण्डभेदत्वादेस्तदपेक्ष्य गुरुत्वादिति भावः । यत्समानाधिकरणाभावप्रतियोगित्वं यावत्साध्यसमानाधिकरणाभावप्रतियोगितात्मकं तत्त्वं व्याप्तिः अवच्छेदकत्वाप्रवेशेन लाघवादिति तु नव्याः । द्वितीयनिरुक्तः सम्बन्धविवक्षायाः फलमाह एकेति । सामान्यतः साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वोक्तौ धूमवान्वह्नेरित्यादावतिव्याप्तिः गुरुधर्माणामेव तादृशानवच्छेदकत्वादतो यत्किञ्चित्सम्बन्धावच्छिन्नायाः साध्यवन्निष्ठाभावप्रतियोगितायाः अनवच्छेदकत्वं निवेश्यम । तथा च वह्निमान्धूमादित्यादावव्याप्तिरित्यर्थः ॥ लक्षणद्वयस्यैवातिव्याप्तिमुद्धरति व्यभिचारिणीति ॥ ननु नव्यमते गुरुधर्मस्याप्यवच्छेदकत्वादुक्तलक्षणद्वयमेव धूमान्वह्नेरित्यत्रातिव्याप्तं विषयितया अयोगोलकभेदत्वावच्छिन्नस्य ज्ञानादेः

यावदार्द्रेन्धनन्तत् प्रत्येकमव्यापकं साध्यधूमस्य । द्वितीये साध्यधूमस्य व्यापकमार्द्रेन्धनं तद्व्यापकं महानसीयवह्नेः ॥

---

त्वत्वं विशेषणताविशेषावच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति नातिप्रसङ्गः । वस्तुतस्तु हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यावद्यद्धर्मावच्छिन्नयत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकम् तद्धर्मावच्छिन्नसामानाधिकरण्यम् साध्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकम् यावत्स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकम् तत्त्वं वा व्याप्तिरिति ध्येयम् ॥

---

स्वरूपसम्बन्धेनाभावस्य धूमवति सत्त्वात् भेदत्वस्येवायोगोलकभेदत्वादेरपि साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वात् प्रतियोगितावच्छेदकत्वयोरप्येकसम्बन्धावच्छिन्नत्वप्रवेशे चातिगौरवादतः प्रतियोगित्वयोरेकसम्बन्धावच्छिन्नत्वाप्रवेशेन लघुतरं कल्पान्तरमाह वस्तुतस्त्विति । न च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वमेवान्योन्याभावत्वमित्यत्रापि प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वं निविष्टमेवेति वाच्यम् । नव्यमते भेदत्वस्याखण्डोपाधित्वात् । अवच्छेदकत्वयोरेकसम्बन्धावच्छिन्नत्वं पुनरत्रापि देयमेव । तेन साधनवन्निष्ठभेदप्रतियोगितावच्छेदकस्यायोगोलकान्यत्वादेः साध्यवन्निष्ठस्य सर्वविषयकज्ञानभेदस्य प्रतियोगितावच्छेदकत्वेपि धूमवान्वह्नेरित्यादौ नातिव्याप्तिरिति ध्येयम् । वस्तुतोऽत्यन्ताभावगर्भव्यापकत्वस्य प्रवेशे साधनाव्यापकं यावदव्यापकं यस्येत्यादिमूले व्यापकादिपदस्य व्यापकतावच्छेदकादौ लक्षणा स्यात् अन्योन्याभावगर्भव्यापकत्वस्य प्रवेशे तु नैवमित्याशयेनैव वस्तुत इत्याद्युक्तमिति युक्तमुत्पश्यामः ॥

नापि साध्यं यावद्व्यभिचारि तदव्यभिचारित्वमनौपाधिकत्वम्।साध्याव्यभिचारित्वस्यैव गमकत्वसम्भवात्।तच्च दूषितम् ॥

नापि कात्स्न्र्येन सम्बधो व्याप्तिः । एकव्यक्तिके तदभावात् । नानाव्यक्तिकेऽपि सकलधूमसम्बन्धस्य प्रत्येकवह्निावभावात् । अत एव न कात्स्न्र्ये-

---

साध्यमिति । यावतां तेषामित्यर्थः॥ दूषितं केवलान्वयिन्यव्याप्त्या । सा च यथोक्तलक्षणेऽपि । गौरवं परमतिरिच्यत इति॥

कात्स्न्र्यं साधनस्य साध्यस्य साध्याश्रयस्य साध्यसमानाधिकरणस्य साधनाश्रयस्य साधनसमानाधिकरणस्य वा । आद्ये कृत्स्नसाधनसामानाधिकरण्यं साध्ये, कृत्स्नेषु साधनेषु साध्यसामानाधिकरण्यं वार्थः । प्रथमे एकेति नानेति च

---

साध्याभिन्नं यावदित्यभेदभ्रमं निराकर्तुमाह यावतामिति । तदेवाव्यभिचारि यस्येत्यर्थे वह्निमान्धूमादित्यादावव्याप्तिः यावदन्तर्गतस्य द्रव्यत्वादेः साधनाव्यभिचारित्वाभावादत आह तेषामिति । तथाच साध्यं यावतां अव्यभिचारि तेषामव्यभिचारित्वं फलितार्थः ॥ दूषितमित्यत्र मणिकृता हेत्वनुपन्यासात् स्वयं तमाह केवलेति ॥ नन्वेवमव्याप्तिभयादेव साध्याव्यभिचारित्वस्य परित्यागेऽप्युक्तलक्षणे बाधकाभाव इत्यत आह सा चेति । प्रमेयत्वादिसाध्यं यस्याव्यभिचारि तादृशाप्रसिद्ध्या प्रकृतलक्षणेपि केवलान्वय्यव्याप्तिरित्यर्थः ॥

वक्ष्यमाणदोषान्त्सङ्क्रमयितुं साध्याश्रयसमानाधिकरणयोः कात्स्न्र्यस्यानभिधानेन मूलस्य न्यूनतामपाकर्तुञ्च कात्स्न्र्याश्रयं वितर्कयति कात्स्न्र्यमित्यादिना । सकलधूमसम्ब-

न साध्येन सम्बन्धो व्याप्तिः। विषमव्याप्ते तदभावाच्च।

---

व्याप्तेश्चाहेतुवृत्तित्वम् । पृथिवी पृथिवीत्वव्यापकजातेरित्यादाव-
तिव्याप्तिश्च । अत एव नेतरः ॥ अर्थाभिधानपूर्वकं द्वितीयं
निरस्यति अत एवेति । अतएव एकव्यक्तिसाध्यकाव्याप्तेरेव ॥
विषमव्याप्ते समव्याप्तेऽपि च संख्यापरिमाणादावेकत्र साधने सक-

---

ग्धस्येति मूलमुपपादयितुमाद्यं विकल्पयति आद्य इति । साधनस्य
कात्स्न्र्यकल्प इत्यर्थः ॥ अथाशेषसाधनस्य प्रत्येकसमानाधिकरण-
वृत्तिसाध्यतावच्छेदकवत्त्वस्य विवक्षणान्नोक्तदोषद्वयावकाशः साध-
नस्याशेषत्वं च प्रकृतसाधनवद्वृत्तियावद्धर्माणां तादृशयावदधिक-
रणताव्यक्तीनां वा प्रत्येकाश्रयवृत्तित्वं तच्चैकव्यक्तिसाधनस्थलेपि
न दुर्घटम् इत्यतः स्वयं दूषणमाह व्याप्तेश्चेति ॥ अथाशेषसाधना-
धिकरणवृत्तिसाध्याधिकरणताकत्वं वाच्यमत आह पृथिवीत्या-
दि ॥ समवायावच्छिन्नस्वानधिकरणपृथिवीनिष्ठाभावाप्रतियोगित्व-
रूपं पृथिवीनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपं वा पृथि-
वीत्वव्यापकत्वमसमवेतस्य गगनादेरपीति पृथिवीत्वे तत्समानाधि-
करणत्वाभावादतिव्याप्तिर्न स्यादतो गगनादिव्यावृत्तये जातिपदं
समवेतार्थकम् । द्रव्यत्वादिरूपायाः तादृशजातेः प्रत्येकं हेतुताया-
मेकव्यक्तिकं तदभावादित्यनेनैव गतार्थत्वमतोऽनुगतरूपानुधाव-
नम् । न चैवं पृथिवीसमवेतादित्यस्यैव सम्यक्त्वे व्यापकत्वप्रवेशो
व्यर्थ इति वाच्यम् । कृत्स्नसाधनैकाधिकरणवृत्तित्वप्रवेशेऽप्यति-
व्याप्तिदानार्थं तदुपादानादिति भावः ॥ अत एवेति । उक्तातिव्याप्ते-
रेवेत्यर्थः । नेतरः न कृत्स्नसाधनेषु साध्यसामानाधिकरण्यं व्या-
प्तिरित्यर्थः ॥ पूर्वमेकव्यक्तिसाधनस्यैवोक्तत्वात्तत्परामर्शकत्वास-
म्भवादन्यथा व्याचष्टे एकव्यक्तिसाध्यकेति ॥ वह्निमान्धूमादित्या-
दिविषमव्याप्ते इव संख्यावान्परिमाणादित्यादिसमव्याप्तेप्यव्याप्ति-
सम्भवान्मूलस्य न्यूनताभङ्गार्थं पूरयति समव्याप्तेपि चेति । सं-
ख्यापरिमाणादाविति । संख्यासाध्यकपरिमाणादावित्यर्थः । तद्-

नच यावत्साधनाश्रयाश्रितसाध्यसम्बन्धः। साधनाश्रये महानसादौ सकले प्रत्येकं वह्नेराश्रितत्वाभावात् । नापि

---

लसाध्यसम्बन्धस्याभावात् । भावाच्च शब्दवान् द्रव्यत्वादित्यादौ । तृतीये साध्याश्रययावद्वृत्तित्वम् चतुर्थे साध्यसमानाधिकरणयावत्सामानाधिकरण्यमर्थः । तत्र च यथासम्भवमेकमात्रवृत्तिसाध्यके वह्न्यादौ साध्ये धूमादावव्याप्तिरतिव्याप्तिश्च सत्त्वादौ ॥ अर्थपरिष्कारपूर्वकं पञ्चमं निरस्यति न चेति । एकमात्रवृत्तिसाधने चाव्याप्तिश्च ॥ तथैव षष्ठं निरस्यति नापीति । तादृ-

---

भावादिति मूलस्य सकलसाध्यसम्बन्धाप्रसिद्धेरिति नार्थः सत्त्वप्रमेयत्वादावेव तत्सौलभ्यादतस्तस्यान्यमर्थं व्याकरोति एकत्र साधने इत्यादि ॥ ननु हेतुविशिष्टस्याशेषसाध्यस्य प्रत्येकाधिकरणं यद्धर्मावच्छिन्नाधिकरणं तादृशधर्मवत्त्वं विवक्षितमिति नोक्तदोषत्रयमित्यत आह भावाच्चेति । सकलसाध्यसम्बन्धस्येत्यनुषज्यते । कृत्स्नसाध्यस्यैकाधिकरणप्रवेशेऽप्यतिव्याप्त्यर्थं धूमवान्वह्नेरित्यादिकमुपेक्षितम् ॥ स्वाशङ्कितयोस्तृतीयचतुर्थयोरर्थं परिष्कृत्य दूषणमाह तृतीय इत्यादिना ॥ अत्र एतयोः एकमात्रवृत्तिसाध्यके शब्दवान्गगनत्वादित्यादौ तृतीयस्यैवाव्याप्तिः न चतुर्थस्य साध्यसमानाधिकरणयावद्धर्माणां सामानाधिकरण्यस्य तत्राप्यनपायादित्याशयेनोक्तं यथासम्भवमिति । वह्न्यादाविति । धूमस्य वह्निमदयःपिण्डावृत्तित्वेनोभयत्रापि वह्निमान्धूमादित्यत्राव्याप्तिरित्यर्थः । अतिव्याप्तिश्चेति । सत्तायां वह्न्यधिकरणयावद्वृत्तित्वस्य वह्निसमानाधिकरणयावद्धर्मसामानाधिकरण्यस्य च सत्त्वाद्वह्निमान्सत्त्वादित्यत्रातिव्याप्तिरित्यर्थः ॥ साधनाश्रयस्य कार्त्स्न्योक्तौ साधनाश्रयैर्यावद्भिः सम्बन्धो वाक्यार्थः स्यात्तत्र च सम्बन्धो नाश्रितत्वम् हेतुमात्रेऽतिप्रसक्तेः नापि सामानाधिकरण्यं साधनाश्रयैः पर्वतादिभिः सामानाधिकरण्यस्य धर्मे विरहादव्याप्तेरत उक्तम् अर्थपरिष्कारेति ।

साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामा-
नाधिकरण्यम् । यावद्धर्मसामानाधिकरण्यं हि यावद्ध-
र्माधिकरणाधिकरणत्वम् । तच्चाप्रसिद्धम् । साधनसमा-
नाधिकरणसकलमहानसत्वाद्यधिकरणाप्रतीतेः ॥

---

शानां सर्वेषां महानसत्वादीनां प्रत्येकनिरूपितान्यपि सामाना-
धिकरण्यानि न कुत्रापि वह्नौ । अथ यद्धर्मावच्छिन्नसामानाधि-
करण्यत्वेन साधनसामानाधिकरण्यव्यापकत्वं तद्धर्मावलीढसा-
मानाधिकरण्यं विवक्षितमिति चेत् इतोऽपि लघुतया साधनव्या-
पकतावच्छेदकरूपावच्छिन्नसामानाधिकरण्यमेव व्याप्तिरिति सि-
द्धान्तयिष्यते ॥

---

तथा चाश्रितसाध्यसामानाधिकरण्यमेव सम्बन्धपदस्य परिष्कृतो-
ऽर्थ इति भावः ॥ ननु यद्धर्मावच्छिन्नाश्रयेयवति साध्यवत्त्वं तादृशध-
र्मवत्त्वं वाच्यमत आह एकमात्रेति । द्रव्यं शब्दादित्यादौ साधना-
श्रयस्य यावत्त्वाभावादव्याप्तिरित्यर्थः ॥ उक्तक्रमेणासङ्गतेराह त-
थैवेति । परिष्कारपूर्वकमेवेत्यर्थः ॥ ननु साधनसमानाधिकरण-
यावद्धर्माणां प्रत्येकं सामानाधिकरण्यं निवेश्यमतो नाप्रसिद्धमित्यत
आह तादृशानामिति । साधनसमानाधिकरणानामित्यर्थः । न
कुत्रापीति । तथा चैकव्यक्तिसाध्यकसद्धेतौ लक्षणसम्भवेपि
वह्निमान्धूमादित्यादावव्याप्तिरेव । पर्वतीयादिवह्नेर्महानसीयधूमाद्य-
समानाधिकरणत्वादिति भावः । नच साधनसमानाधिकरणयाव-
द्धर्माणां प्रत्येकसमानाधिकरणवृत्तित्वं साध्यतावच्छेदकस्य वक्त-
व्यमित्युक्तदोषायोग इति वाच्यम्। तथा सति रूपत्वन्यूनवृत्तिजाति-
मत्वान् रूपवत्त्वादित्यादावव्याप्त्यापत्तेः । साध्यतावच्छेदकीभू-
तनीलत्वादिजातेस्तादृशयावद्धर्मसमानाधिकरणवृत्तित्वाभावादिति-
भावः ॥ धूमादिसामानाधिकरण्यस्यापि प्रमेयत्वादिप्रकारेण व-

नापि स्वाभाविकः सम्बन्धो व्याप्तिः । स्वभावजन्यत्वे तदाश्रितत्वादौ वा व्याप्त्यतिव्याप्तेः ॥

नाप्यविनाभावः । केवलान्वयिन्यभावात् ॥

---

अविनेति । साध्यं विना साध्याभाववति यो भावो वृत्तिमत्द्विरहः । साध्यं विना अभावः साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति वा ॥

---

द्रव्यादिसामानाधिकरण्यव्यापकत्वादतिव्याप्तिरत उक्तं सामानाधिकरण्यत्वेनेति । विवक्षितमिति । साधनसमानाधिकरणा यावन्तो धर्माः समानाधिकरणा यस्येति व्युत्पत्त्या तादृशार्थलाभात्तत्र यावत्पदस्य व्यापकतायामेव पर्यवसानादिति भावः । लघुतयेति । सामानाधिकरण्यद्वयाप्रवेशलाघवेनेत्यर्थः । इदमापाततः । सिद्धान्तलक्षणस्य स्वप्रतियोगिवैयधिकरण्यादिघटितत्वेन विपरीतगौरवात् अन्योन्याभावस्याप्यव्याप्यवृत्तिताया दुर्वचत्वाच्च । अत एव दीधितिकृद्भिरपि व्याप्तिग्रहोपाये स्वसमानाधिकरणा यावन्तो धर्माः यादृशसाध्यसमानाधिकरणाः तादृशसाध्यसामानाधिकरण्यमेव व्याप्तिः स्वीकरिष्यत इति ध्येयम् ॥

गगनेन विनाभावस्य वृत्तिमन्मात्र एव सत्त्वादव्याप्तेरतः पूरयति । साध्यमिति । विनाशब्दार्थस्याभाववतस्तादात्म्येन भावान्वये प्रकृतासङ्गतिरतः सप्तमीमन्तर्भाव्य तदर्थमाह साध्याभाववतीति । भावपदस्योत्पत्तिपरत्वे द्रव्यं जातेरित्यादावतिव्याप्तिरत आह भावो वृत्तिरिति । पूर्वस्थनञा विनाभावस्यान्वयेनाह तद्विरह इति । साध्याभाववद्वृत्तिभिन्नत्वमेव प्रागाशङ्कितमिति नाभेद इति भावः ॥ ननु साध्याभाववद्वृत्तिर्हेतुतावच्छेदकसम्बन्धेनैव ग्राह्या तथा च सत्तावान्द्रव्यत्वादित्यादावव्याप्तिः सामान्यादौ समवायेन वृत्तेरप्रसिद्धेरतः कल्पान्तरमाह साध्यं विना अभाव इति । साध्याभाववत्त्वावच्छेदेनाभावस्यान्व-

अथ सम्बन्धमात्रं व्याप्तिः व्यभिचारिसम्बन्धस्यापि केनचित् सह व्याप्तित्वात् धूमादिव्याप्तिस्तु विशिष्यैव निर्वक्तव्येति । तन्न । लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे लक्षणाभिधानस्यार्थान्तरत्वात् । न च सम्बन्धमात्रं तथा । तद्बोधादनुमित्यनुत्पत्तेः । नापि व्याप्तिपदप्रवृत्तिनिमित्तमिदम् । सम्बन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात् ॥

---

अथेति । सम्बन्धः सामानाधिकरण्यम् । व्यभिचारिसम्बन्धस्येति केनचित्किञ्चिद्रूपावच्छिन्नेन । धूमादेरपि द्रव्यत्वादिना वह्निव्यापकत्वात् ॥ तद्बोधादिति । न च व्यभिचाराग्रहसहकृतस्तद्बोधस्तथा । व्यभिचारतद्व्यतिरेकयोः अनुपस्थितावपि समानाधिकरणधर्मवत्ताज्ञानमात्रादनुमित्युत्पादस्य सर्वानुभवसिद्ध-

---

यात् साध्याभावव्यापकीभूतोऽभावो लभ्यते अवच्छेदकत्वस्य व्यापकत्वे पर्यवसानात् प्राग्वृत्तिनञा च पुनस्तथाविधाभावस्यान्वयात्तादृशाभावाभावत्वरूपं प्रतियोगित्वं प्राप्यत इति न व्यभिचारिण्यतिप्रसङ्गशङ्कापीत्याशयेन फलितार्थमाह साध्याभावेति ॥

ज्ञानादेर्घटादौ विषयतासम्बन्धस्य व्याप्तित्वाभावादाह सामानाधिकरण्यमिति ॥ एकनिरूपितसामानाधिकरण्यस्यान्यदीयव्याप्तित्वायोगादाह किञ्चिद्रूपेति । तथा च वह्नौ धूमसामानाधिकरण्यमेव द्रव्यत्वावच्छिन्नधूमस्य व्याप्तिरिति भावः ॥ व्यापकसामानाधिकरण्यं व्याप्तिरिति सिद्धान्तिमतेऽपि व्यभिचारिसम्बन्धेऽवश्यं व्याप्तित्वमस्तीत्याशयेनाह धूमादेरपीति ॥ तद्बोधादिति मूलस्य व्यभिचारग्रहदशायामित्यादिरित्याशयेन श-

त्वात् । हेत्वन्तरे तत्रैव च रूपान्तरेण व्यभिचारग्रहे हेतुतावच्छेदकाग्रहेऽप्यनुमित्युत्पादाच्च । विवदन्ते च सामानाधिकरण्यज्ञानस्यैव हेतुतायाम् । व्यभिचारज्ञानाभावकारणत्वमपेक्ष्य कारणीभूतसामानाधिकरण्यज्ञाने लाघवेनाव्यभिचारस्य विषयतयावच्छेदकत्वमुचितम् । न च व्यभिचारसंशयेऽनुमित्यनुत्पादादव्यभिचारनिश्चयत्वेन कारणत्वोक्तौ गौरवम् व्यभिचारज्ञानस्य हि

---

क्तुते न चेति । तद्बोधः सम्बन्धमात्रबोधः । तथा अनुमितिहेतुः ॥ शङ्कां निरस्यति व्यभिचारतद्व्यतिरेकयोरिति ॥ तदानीमनुमित्यनुत्पादं सर्वजनसिद्धत्वं विवादग्रस्तमत आह हेत्वन्तर इति । हेत्वन्तरे व्यभिचारग्रहेऽप्यनुमित्युत्पादाच्चेत्यन्वयः ॥ ननु तद्धेतुकानुमितौ तद्धेतुगोचरव्यभिचारज्ञानस्याभावो हेतुर्वक्तव्य इत्यत आह तत्रैव रूपान्तरेणेति । तथा च द्रव्यत्वरूपेण धूमव्यभिचारग्रहेपि धूमत्वावच्छिन्नहेतुकानुमितिर्न स्यादिति भावः । ननु साध्यसमानाधिकरणवृत्तितद्धर्मावच्छिन्नवत्ताज्ञानजन्यानुमितौ तद्धर्मावच्छिन्ने व्यभिचारज्ञानाभावो हेतुरतस्तत आह हेतुतावच्छेदकेति । तथा च वह्निसमानाधिकरणवान्पर्वत इत्यादौ हेतुतावच्छेदकधूमत्वाद्यग्रहादनुमितिर्न स्यादिति भावः ॥ साध्यसमानाधिकरणवान्पक्ष इत्यादिस्थालीयानुमितौ व्यभिचारज्ञानाभावस्याहेतुत्वेपि न क्षतिः यदि च वह्निसमानाधिकरणो वह्निव्यभिचारीतिज्ञानदशायां साध्यसमानाधिकरणवत्ताज्ञानान्नानुमितिस्तदा तादृशानुमितौ साध्यसमानाधिकरणत्वावच्छिन्नधर्मिकव्यभिचारज्ञानाभाव एव हेतुर्वक्तव्य इत्यत आह विवदन्ते चेति । तथा च सन्दिग्धव्यभिचारकत्वात्साध्यासामानाधिकरण्यज्ञानं नानुमितिहेतुरितिभावः ॥ ननु व्यापकसामानाधिकरण्यावगाहिज्ञानस्यानुमितिहेतुतावादिमते सामानाधिकरण्यज्ञानं निश्चिताव्यभिचारकमेवेति तन्मते तस्य हेतुत्वे बाधकाभाव इत्यतआह व्यभिचारेति । अव्यभिचारस्येति । हेतुव्यापकत्वांशस्य साध्यांशेप्रकारतया अवच्छेदकत्वं युक्तमित्यर्थः । न च ममापि व्यभिचारज्ञानाभावसहितसहचारज्ञानत्वेन हेतुत्वे व्यभिचारज्ञानाभावो अवच्छेदक

भ्रमत्वनिश्चयदशायामेवाविरोधितया भ्रमत्वेनानिश्चीयमानस्य विरोधित्वं वाच्यम् । अव्यभिचारनिश्चयस्य च भ्रमत्वशङ्कायामप्यनुमित्यजनकतया भ्रमत्वेनागृह्यमाणस्यैव हेतुत्वमिति तवैव गौ-

---

रवेति वाच्यम् । तथापि ज्ञानस्य द्वेधा प्रवेशेनावच्छेदकगौरवात् । विनिगमकाभावेन सहचारज्ञानसहितव्यभिचारज्ञानाभावत्वेनापि हेतुत्वान्तरापत्तेश्चेति भावः ॥ गौरवमिति । यद्यपि स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाह्यनिश्चयस्यैवानुमितिहेतुत्वाद्व्यभिचारसंशयदशायां च विशेषणतावच्छेदकीभूतव्याप्यत्वप्रकारकनिश्चयाभावात्कारणबाधेन तादृशविशिष्टवैशिष्ट्यावगाहिनिर्णयानुत्पत्त्यैवानुमित्यनुत्पादसम्भवादव्यभिचारांशे निश्चयत्वं नापेक्षितम् । तथापि विशेष्ये विशेषणमिति न्यायेन परामर्शादप्यनुमितिर्जायत इति प्राचीनमतेनेदम् । अन्यथा धूमव्यापकतावच्छेदकेन तदन्येन वा वह्नित्वेनावच्छिन्नवह्निसमानाधिकरणधूमवान्पर्वत इत्यादिज्ञानादप्यनुमित्यापत्तेः । न चाव्यभिचारनिश्चयत्वस्य प्रवेशेपि तद्घटितगुरुतरैकरूपेण हेतुत्वमेवोचितम् व्यभिचाराज्ञानसहचारज्ञानयोः कारणताद्वयकल्पनमपेक्ष्य लाघवादिति वाच्यम् । अव्यभिचारनिश्चयत्वघटकदलद्वयस्य विशेष्यविशेषणभावेन कार्यकारणभावद्वयस्य तवाप्यावश्यकत्वादिति भावः ॥ तवैवेति । व्यभिचारज्ञानस्याप्रामाण्यं व्यभिचाराभाववद्विशेष्यकव्यभिचारप्रकारकत्वम् । तथाच तन्निश्चयत्वघटकस्य तदभावाप्रकारकत्वस्य व्यभिचारनिश्चयत्वघटकव्यभिचाराप्रकारकत्वापेक्षया गुरुत्वान्न भ्रमत्वनिश्चयानास्कन्दितव्यभिचारज्ञानाभावत्वेन हेतुत्वं किन्तु भ्रमत्वज्ञानानास्कन्दिताव्यभिचारनिश्चयत्वेनैवेत्यर्थः । नच व्यभिचारज्ञानान्तरं भ्रम इति निश्चयेपि व्यभिचारसन्देहदशायामनुमित्यनुत्पादाद्भ्रमत्वनिश्चयविशेषाणामेव तत्तद्व्यक्तित्वेनोत्तेजकत्वमिति भ्रमत्वनिश्चयत्वेनाप्रवेशात् कुतो गौरवमिति वाच्यम् । व्यभिचारज्ञानत्वावच्छेदेन भ्रमत्वनिर्णयानां तादृशभ्रमत्वनिश्चयत्वेनानुगतरूपेणैव निविष्टत्वात् तथाविधान्तर्निर्णयानां तत्तद्व्यक्तित्वेनाभावकूटस्योत्तेजकत्वे गौरवात् । यदि

रवात् । नानाविधव्यभिचारज्ञानाभावानां नियतपूर्ववर्तित्वेन क्लृ-
प्तानामपि हेतुत्वमपेक्ष्य वक्ष्यमाणैकविधाव्यभिचारज्ञानस्यैव हेतुत्वे
युक्तमित्यप्याहुः । सामानाधिकरण्यविशिष्टपक्षधर्मत्वं तु पक्षे सा-

---

च व्यभिचारस्य ज्ञानसामान्यमप्रमेति ज्ञानसत्त्वेपि इदं ज्ञानं व्य-
भिचारविषयकं न वेदं ज्ञानं प्रमेत्येवं वा गृहीतस्य व्यभिचार-
ज्ञानस्योत्तरमनुमित्यनुत्पादाद्व्यभिचारज्ञानत्वावच्छेदेनाप्रामाण्यज्ञान-
स्यापि नानुगतरूपेणोत्तेजकत्वं किन्तु विशेषत एवेति विभाव्य-
ते तदापि तत्तदप्रामाण्यज्ञानाभावविशिष्टव्यभिचारज्ञानाभावत्वेन
हेतुतायां तत्तदप्रामाण्यज्ञानाभावव्यक्तीनां विशेष्यविशेषणभाव-
भेदेन गुरुतरानन्तकार्यकारणभावापत्तिः । अव्यभिचारनिश्चयत्वे-
नैव हेतुत्वे तु तद्धर्मिकाप्रामाण्यज्ञानानां तत्तद्व्यक्तित्वावच्छिन्नाभा-
वत्वेन स्वातन्त्र्येणाप्यनुमितिहेतुतयाऽस्मन्मतेऽवच्छेदकगौरवासम्भ-
वात् । नच तत्तदप्रामाण्यनिश्चयानास्कन्दितव्यभिचारज्ञानत्वाव-
च्छिन्नप्रतियोगिताकत्वेनोपलक्षितस्याखण्डाभावस्य तत्तद्व्यक्ति-
त्वेनैवानुमितिहेतुत्वाद्गौरवानवकाश इति वाच्यम् । विशिष्टाभावस्य
विशेष्यविशेषणप्रत्येकाभावानतिरेकेणोभयसाधारणस्य तत्तद्व्य-
क्तित्वस्यासम्भवात् । अस्तु वा विशिष्टाभावोतिरिक्तः तथापि
प्रतियोग्यविशेषितस्यापि तस्य तद्व्यक्तित्वेन हेतुत्वे घटादिज्ञान-
विशेषाणां प्रत्येकस्य तादृशव्यभिचारज्ञानस्यान्यतरत्वावच्छिन्न-
प्रतियोगिताकत्वेनोपलक्षितानामप्यखण्डाभावानां तत्तद्व्यक्तित्वे-
नानुमितिहेतुतापत्तिः । किञ्चैवं सामानाधिकरण्यधीरपि अनुमिति-
हेतुर्न स्यात् । आत्मनि यद्यद्गुणदशायां नानुमितिः तत्तत्कालावच्छि-
न्नतत्तद्गुणान्यतमत्वावच्छिन्नाभावस्याखण्डस्यैव तत्तद्व्यक्तित्वेन
हेतुतायामतिप्रसङ्गाभावात् । तस्मादखण्डतत्तदभावत्वेन हेतुताया-
मपद्यमन्यथासिद्धत्वं स्वीकार्यम् । एतेन कार्यान्तरेप्यखण्डाभा-
वो व्याख्यातः । किञ्च व्यभिचारधियोनुमितिविरोधित्वे व्य-
भिचारव्याप्यानां व्यभिचारावच्छेदकानां चानन्तधर्माणां तद्रूपेण
ज्ञानाभावा अप्यनन्ता अनुमितिहेतवो वाच्याः तत्सत्त्वेप्यनुमित्यनु-

केवलान्वयिनि केवलान्वयिधर्मसम्बन्धो व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वं अनुमितिमात्रे पक्षधर्मतैव प्रयोजिका नचातिप्रसङ्गः विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्यजनकत्वनियमादिति केचित्। तदपि न। साध्यवदन्या-

---

ध्यग्रहं विना दुर्ग्रहमिति। केवलान्वयित्वस्याग्रहे सामानाधिकरण्यमात्रग्रहादनुमित्यनुत्पत्तेस्तद्ग्रहोऽपि वाच्यः। तच्च वृत्तिमदसन्ता-

---

त्पत्तेरित्यधिकं गौरवम्। अस्माकं तु हेतौ व्यभिचारव्याप्यवत्त्वादिग्रहदशायां व्याप्तिनिर्णयविलम्बादेवानुमितिविलम्बः। एतेन व्याप्तिनिर्णयस्य हेतुत्वे तद्धर्मिकाणां नानाविधभ्रमत्वज्ञानानामभावा अप्यनुमितिहेतवो वाच्या इति लाघवात् भ्रमत्वेनानिश्चीयमानव्यभिचारज्ञानाभाव एक एवानुमितिहेतुरित्यपास्तम्। तथापि व्यभिचारावच्छेदकतत्तद्धर्मवत्ताज्ञानाभावानामनन्तहेतुत्वस्यावश्यकत्वादिति सङ्क्षेपः॥ नानाविधेति। साध्यनिष्ठहेत्वव्यापकत्वसाधननिष्ठसाध्याभाववद्वृत्तित्वादिरूपेत्यर्थः। आहुरित्यस्वरसबीजन्तु यादृशव्यभिचारज्ञानं हेतुस्त्वयोच्यते तद्विरोधिनो लघुतरस्यैव व्यभिचारस्य ज्ञानाभावो मयापि हेतुर्वाच्यः। लघुव्याप्तेर्ज्ञानसत्त्वे व्यभिचारान्तरज्ञानदशायामनुमित्युत्पत्तेस्त्वयापि स्वीकारादित्यादिकं द्रष्टव्यम्॥ ननु साध्यसामानाधिकरण्योपलक्षितहेतुमत्त्वज्ञानं नानुमितिहेतुः किन्तु पक्षे तद्विशिष्टहेतुमत्त्वनिश्चय एव तथाति तादृशज्ञानसत्त्वे व्यभिचारज्ञानदशायामप्यनुमित्यङ्गीकाराद्व्यभिचारज्ञानाभावो न हेतुर्वाच्यः कुतो गौरवं दत्तमित्यत आह सामानाधिकरण्येति। साध्यग्रहं विनेति। पर्वते वह्निमत्त्वसन्देहदशायां वह्निमद्वृत्तित्वविशिष्टधूमवान्पर्वत इत्याकारकज्ञानानुत्पत्त्या तद्धर्मिकतत्सामानाधिकरण्यविशिष्टवत्ताबुद्धिं प्रति तद्धर्मिकतद्वत्ता-

वृत्तित्वस्य धूमेऽसत्त्वात् वह्निमत्पर्वतान्यस्मिन् धूमसत्त्वात् नच सकलसाध्यवदन्यावृत्तित्वम् वह्निमतां प्रत्येकं तथात्वात् । सर्वत्र लक्षणे साध्यत्वसाधनत्वतदभिमतत्वानां व्याप्तिनिरूप्यत्वेनात्माश्रयः । साध्यत्वं हि न सिद्धिकर्मत्वं सिषाधयिषाविषयत्वं वा। महानसीयवह्नौ तदभावात् । नच सामान्यतो व्याप्त्यवगमोऽस्त्येव परस्य कथमन्यथा दूषणेनासाधकतां साधयेदिति वाच्यम् । स्वार्थानुमानोपयोगिव्याप्तिस्वरूपनिरूपणं विना कथायामप्रवेशादिति ॥

---

भावाप्रतियोगित्वादिकमन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा । तथा च सर्वसाधारण्याय लाघवात्साधनवतस्तद्वृत्तित्वस्य वा वृत्ते-

---

निश्चयत्वेन हेतुत्वस्यावश्यकत्वादिति भावः । दुर्ग्रहमिति । तथाच्च तदर्थं पक्षे साध्यनिश्चयध्रौव्ये विनाऽनुमित्सामनुमितिः कुत्रापि न स्यादिति भावः॥ ननु साध्यवत्सामान्यभिन्नावृत्तित्वविवक्षणे मूलोक्तदोषाभावात् केषांचिन्मते स्वयं सिद्धान्तमाह केवलेति । सामानाधिकरण्यमात्रेति । मात्रपदेनाव्यभिचारग्रहनैरपेक्ष्यमुक्तम् । तद्ग्रहेऽपि केवलान्वयित्वग्रहेऽपि ॥ तच्च केवलान्वयित्वं च । अप्रतियोगित्वादिकमित्यादिपदेन तादृशप्रतियोगितानवच्छेदकधर्मवत्त्वादेः संग्रहः । कपिसंयोगाद्यभावस्य केवलान्वयित्वार्थं वृत्तिमदत्यन्ताभावस्य व्याप्यवृत्तित्वेन विशेष्यतया तदप्रवेशेन लाघवादाह अन्योन्येति ॥ आद्यमभिप्रेत्याह साधनवत इति । वृत्तेर्विशेषणत्वमुचितमित्यन्वयः । अन्त्यमभिप्रेत्याह तद्वृत्तित्वस्य वेति । साधनवद्वृत्तित्वस्येत्यर्थः । अन्योन्याभावस्य विशेषणत्वमुचितमित्यन्वयः ।

रन्योन्याभावस्य वा विशेषणत्वमुचितमिति सिद्धान्तरहस्यम् । शेषं केवलान्वयिखण्डने वक्ष्यामः ॥

---

तथाच साधनाश्रयवृत्तिमदत्यन्ताभावाप्रतियोगित्वं साधनवद्वृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा साध्ये निवेश्यैकविधैव केवलान्वयिव्यतिरेकिसाधारणी व्याप्तिरनुमितिप्रयोजिकास्तु केवलान्वयित्वसाध्यवदन्यावृत्तित्वयोरुभयोस्तत्त्वापेक्षया लाघवादिति भावः ॥ ननु उक्तव्याप्तेः साधनभेदेन नानात्वादेकसाध्यकानुमितिस्थलेपि तज्ज्ञानस्यानेककार्यकारणभाव इति लाघवात् केवलान्वयिसाध्यसम्बन्धः साध्यवदन्यावृत्तित्वं वा व्याप्तिरनुमितौ हेतुरस्त्वित्यत आह शेषमिति । केवलान्वयित्वाग्रहेपि अनुमितेरानुभविकत्वात्तज्ज्ञानं न हेतुः किन्तु साध्यवदन्यावृत्तित्वज्ञानमेव साधनभेदेप्यभेदादित्यादिकमित्यर्थः ॥

समाप्तोयं पूर्वपक्षग्रन्थः ॥

---

## चिन्तामणेः सिद्धान्तलक्षणम् ॥

अत्रोच्यते । प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।

अन्यनिष्ठवह्नेर्धूमवत्पर्वतवृत्त्यत्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगिता न वह्नित्वेनावच्छिद्यते, धूमवति वह्निर्नास्तीत्यप्रतीतेः ।

## दीधित्याः सिद्धान्तलक्षणम् ॥

प्रतियोग्यसामानाधिकरणेति । प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो

## जागदीश्याः सिद्धान्तलक्षणम् ।

वन्हित्वावच्छिन्नस्य सर्वस्यैव धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वाद्यवच्छिन्नत्वादव्याप्तिरित्यन्यथा व्याप्ते प्रतियोगितानवच्छेदको यो धर्म इति । तथा च प्रतियोगितावच्छेदकेत्यस्य भावप्रधाननिर्देशतयाऽवच्छिन्नपदस्यावच्छिन्नप्रतियोगिताकपरतया तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभिन्नत्वं लभ्यत इति मूलेनाऽवच्छिन्नपदवैयर्थ्यमिति ध्येयम् ।

धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूप-
विशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः । दण्ड्या-

---

यद्यपि महानसीयवह्निर्नास्तीत्यादिप्रतीतिसिद्धस्य हेतुमन्निष्ठाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तितादवस्थ्यम्, न च तादृशावच्छेदकतापर्याप्त्यधिकरणत्वं न वह्नित्वस्येत्यदोषः, प्रत्येकमुभयत्र पर्याप्तिसम्बन्धेनाऽसतोऽवच्छेदकत्वस्योभयत्र पर्याप्तिसम्बन्धेन सत्त्वायोगात्।तथापि साध्यतावच्छेदकतदितरोभयावच्छेद्यभिन्नाया एव प्रतियोगिताया अनवच्छेदकत्वस्य विवक्षितत्वाददोषः।न च प्रमेयाश्रयवान् धूमादित्यादावव्याप्तिः साध्यतावच्छेदकेतरस्याप्रसिद्धेरिति वाच्यम् । तदितरपदेन स्वानवच्छिन्नप्रकारतावच्छेदकस्य विवक्षितत्वात् । साध्यतावच्छेदकभिन्नो यः साध्यनिष्ठो धर्मस्तदनवच्छेद्या प्रतियोगिता तु न निवेश्या । तथा सति तादृशप्रतियोगिताशून्यसाध्यसामानाधिकरण्यस्यैव व्याप्तित्वसम्भवे साध्यतावच्छेदकस्य तादृशप्रतियोगितानवच्छेदकत्वानुसरणवैयर्थ्यापत्तेरिति ध्येयम् । अपि च प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः तथा हि साध्यतावच्छेदकातिरिक्तं साध्यवृत्ति यद् घटत्वादिकं तदनवच्छेद्यप्रतियोगिताकस्य हेतुसमानाधिकरणाभावस्याप्रसिद्धेरिति तु नव्याः । द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये वा तत्तद्वह्निव्याप्यत्वस्य वारणार्थं विशिष्य लक्ष्यं निर्दिशति तद्रूपविशिष्टस्येत्यादिना । तद्धर्मावच्छिन्नहेतुकतादृशधर्मावच्छिन्नविधेयकानुमितेर्जनकतायां विषयविधयावच्छेदिका इति तदर्थः।तेन व्याप्तिपदेनापि तादृशसामानाधिकरण्योक्त्या न पौनरुक्त्यम् । व्याप्तेः सामान्यरूपतालाभाय यावदिति ॥ ननु दण्डिमान् दण्डसंयोगादित्यत्राव्याप्तिः चालनीन्यायेन दण्डमात्रस्यैव प्रतियोगितावच्छेदकत्वात् । न च शुद्धसाध्यतावच्छेदकस्थले प्रतियोगितानवच्छेदकत्वमित्यत्रावच्छेदकत्वं निरवच्छिन्नमिव विशिष्टसाध्यतावच्छेदकस्थले येन रूपेण साध्यतावच्छेदकत्वं तत्तदितरोभयानवच्छिन्नप्रतियोगितावच्छेदकत्वं ग्राह्यम् । अन्यथा पर्वते महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यादिप्रतीत्या विशिष्टजातेस्तादृशाभावप्रतियोगितावच्छेदकतया वह्निमान् धू-

दौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो

---

मादित्यादाविव जातिमत्वान् घटत्वादित्यादावव्याप्तिप्रसङ्गात्, घटे पटसमवेतत्वविशिष्टजातिर्नास्तीत्यादिप्रतीत्या विशिष्टजातेस्तादृशाभावप्रतियोगितावच्छेदकत्वात्, तथा च तद्दण्डवान्नास्तीतिप्रतीत्या तत्ताविशिष्टदण्डव्यक्तेरेवावच्छेदकत्वावगाहनात् शुद्धदण्डव्यक्तीनां दण्डत्वतदितरोभयानवच्छिन्नं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं तदभावसत्वान्नाव्याप्तिरिति वाच्यं। प्रमेयदण्डवान्नास्तीत्यादौ प्रमेयत्वोपलक्षितस्येव तद्दण्डवान्नास्तीत्यादावपि तत्तोपलक्षितदण्डमात्रस्यैवावच्छेदकत्वकल्पनात्। केवलस्यावच्छेदकत्वासम्भव एव विशिष्टस्य तथात्वस्वीकारात् अन्यथा प्रमेयत्वविशिष्टदण्डादेरपि तथात्वापत्तेरत आह दण्ड्यादाविति। हेतुमति दण्डसामान्याभावसत्वात् दण्डत्वमपि तादृशावच्छेदकमेवेत्यत उक्तं परम्परासम्बद्धमिति। तथा च स्वाश्रयवत्वरूपपरम्परासम्बन्धेन दण्डत्ववतो दण्डिनः साधनवत्यभावविरहान्नाव्याप्तिः। साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाया एव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायाः प्रविष्टत्वात्। अन्यथा विषयितया रूपत्वादिमतो ज्ञानस्य समवायेनाभावस्य हेतुमति सत्वाद्रूपवान् पृथिवीत्वादित्यादावव्याप्तिप्रसङ्गादिति भावः। यदि च शुद्धदण्डव्यक्तेरवच्छेदकत्वावगाहिप्रत्ययान्तरासत्वात् तद्दण्डी नास्तीति प्रतीत्या तत्ताविशिष्टदण्डव्यक्तेरेवावच्छेदकत्वं युक्तं दण्डी नास्तीति प्रतीत्यन्यथानुपपत्त्या दण्डस्यावच्छेदकत्वसिद्धौ प्रमेयदण्डवान्नास्तीत्यादेरपि तन्मात्रावच्छेदकत्वेनैव सामञ्जस्ये विशिष्टस्य तत्रावच्छेदकत्वाकल्पनात् तथा च कथमुक्ताव्याप्तिरित्युच्यते तदा रूपत्वन्यूनवृत्तिजातिमत्वान् रूपादित्यादावव्याप्तिः सर्वस्या एव नीलत्वपीतत्वादिरूपायाः रूपत्वन्यूनवृत्तिजातेः साधनवन्निष्ठाभावप्रतियोगिताया निरवच्छिन्नावच्छेदकत्वाद् रूपवति नीलो नास्तीत्यादिप्रत्ययादित्याशयेन दण्ड्यादावित्यादिपदमुपात्तम्। तथा च तत्रापि स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेन रूपत्वमेव साध्यतावच्छेदकमिति भावः। साध्यतावच्छेदकमिति। अनुमितिविधेयतावच्छेदकमित्यर्थः। तथा चोक्तव्याप्तिज्ञानाद्दण्डवंशे

नाव्याप्तिः । इत्थञ्च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्वादित्यादौ

— ———

दण्डत्वप्रकारिका दण्डत्ववत्वानित्येवानुमितिः न तु दण्डिमानिति दण्डप्रकारिकापि तस्य व्यापकतावच्छेदकत्वेनाग्रहात् कारणबाधेन तदवच्छिन्नविधेयताकानुमित्यसम्भवादिति भावः । वस्तुतो दण्डत्वस्य साध्यतावच्छेदकत्वे दण्डिमानित्यनुमितिर्न स्यात् दण्डानां व्यापकतानवच्छेदकत्वादित्यस्वरसादेव दण्डत्वादिकमित्यत्रादिपदमुपात्तम् । तेन तत्र दण्डव्यक्तीनामेव स्ववृत्तिदण्डत्वावच्छिन्नवत्तालक्षणपरम्परासम्बन्धेन साध्यतावच्छेदकत्वलाभात् दण्डिमानित्यनुमितेर्नानुपपत्तिलेशोपीति ध्येयम् । केचित्तु साध्यसाधनभेदेन व्याप्तिग्रहानुमित्योः कार्यकारणभावभेदात् यत्र दण्डत्वादिविशिष्टं साध्यतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदको यो धर्मस्तद्विशिष्टावच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिस्तद्विशिष्टावच्छिन्नविधेयकानुमितिप्रयोजिका एवं यत्र परम्परया दण्डत्वादिकमेवानुमितौ विधेयतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदको यो धर्मः परम्परया तदवच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिः प्रयोजिकेति सामानाधिकरण्यांशे दण्डादेः प्रवेशाप्रवेशकृत एव दण्डिमान् दण्डत्ववत्वानित्यनुमित्योर्दण्डादिविषयकत्वनियम इत्याहुः । यत्तु दण्डत्वधर्मिकनिरुक्तानवच्छेदकत्वज्ञानस्यैव कार्यतावच्छेदकं दण्डावच्छिन्नविधेयताकानुमितित्वमित्यनुमितौ दण्डप्रकारकत्वं नानुपपन्नमिति । तत्तुच्छम् । परम्परया दण्डत्वावच्छिन्नविधेयकानुमितित्वस्यापि तादृशज्ञानकार्यतावच्छेदकतया सर्वत्र दण्डिमान् दण्डत्ववत्वानित्युभयाकारानुमित्यापत्तेरुभयधर्मावच्छिन्नस्यैव सामग्रीसम्भवादिति दिक् । अपरे तु नोक्तव्याप्तिज्ञानं दण्डिमान् दण्डिसंयोगादि[वह्निसंयोगवान्वे]त्याद्यनुमितौ हेतुः किं तु वक्ष्यमाणान्योन्याभावघटितव्याप्तिज्ञानमत एव यथायथमित्यादिग्रन्थोपि सङ्गच्छत इत्याहुः । नव्यास्तु दण्डिमानित्यादौ न संयोगेन दण्ड्यादेः प्रकारत्वं किं तु स्ववृत्तिपुरुषत्वावच्छिन्नाधिकरणत्वसम्बन्धेन । नचैवमनुभवापलापापत्तिः । दीधितिकृन्मतेपि दण्डस्य साध्यतावच्छेदकधर्मविधया संयोगस्य साध्यतावच्छेदकताघटक-

सत्त्वाद्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः। साधनस्य विशिष्टसत्त्वादेर्गुणादाववृत्तेः। सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याऽधिकरणताव-

---

संसर्गविधयाऽवगाहितापलापापत्तेरिति प्राहुः॥ यद्रूपविशिष्टेत्यस्य फलमाह इत्थं चेति। चोऽवधारणे। इत्यादौ। इत्यादिन्यायस्थलीयहेतौ। तथा च न्यायः पक्षनिर्देशं विना नास्त्यत इदंपदेन तन्निर्देशः एवमग्रेपि। यत्तु द्रव्ये धर्मिणि तादात्म्येन गुणकर्मणोः साध्यताभ्रमं निरसितुं इदमिति पक्षनिर्देश इति। तन्मन्दम्। एवमपि इदंत्वविशिष्टद्रव्ये गुणकर्मणोः साध्यताभ्रमस्यानिरासादिति। गुणादावपृत्तेरिति। गुणादावभावादित्यर्थः। तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्येति भावः। यद्यप्यवश्यं क्लृप्ताभिः पर्वतत्वचत्वरत्वादितत्तद्धर्मविशिष्टधूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तिभिरेव धूमवानितिप्रतीत्युपपत्तौ धूमत्वावच्छिन्नाधिकरणतायां मानाभावात् वह्निमान् धूमादित्यादावव्याप्तिः हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेः, तथापि हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तथाविधहेतुतावच्छेदकाश्रयाधिकरणमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितं वह्निमान् धूमादित्यादौ च तादृशहेत्वधिकरणं धूमस्याधिकरणमात्रं द्रव्यं विशिष्टसत्वादित्यादौ च तादृशं हेत्वधिकरणं द्रव्यमेव न तु गुणादि विशिष्टसत्तात्वे तन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोधिकरणतावच्छेदकत्वस्य च द्वयोः सत्वादिति ध्येयम्। साध्यसाधनभेदेन व्याप्तेर्भेदात् यत्र साधनतावच्छेदकं नाधिकरणतावच्छेदकं तत्र तदाश्रयसमानाधिकरणत्वमेव निवेश्यमित्यपि वदन्ति। ननु सामानाधिकरण्यस्य व्याप्तित्वे तस्य प्रतिधूमं भिन्नत्वेन धूमसामान्ये वह्निसामान्यस्यैका व्याप्तिरिति व्यवहारोनुपपन्न इत्यत आह सामानाधिकरण्येति। तथा च वह्नित्वधूमत्वाद्यनुगमादेव तत्र व्याप्तेरैक्यव्यवहारो न तु वस्तुगत्या-

च्छेदकस्य चैक्याद्व्याप्तेरैक्यम् । वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वात् धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः । आद्या भिन्ना द्वितीया त्वभिन्नैवेति ध्येयम् । अयं कपिसंयोगी एतद्वृक्ष-

---

पि व्याप्तेरैक्यमिति भावः । नन्वेवं [सामान्यलक्षणाऽस्वीकारे] महानसीयवह्निसामानाधिकरण्यस्य स्मृतस्य पक्षवृत्तिधूमादावसत्वात् पर्वतीयवह्निसामानाधिकरण्यस्य च प्रागननुभवात् कुतः परामर्श इत्याशङ्कायामेकैव हि सा व्याप्तिरिति परामर्शसिद्धान्तग्रन्थोऽसङ्गत इत्यत आह वस्तुतस्त्विति । रासभादीति । तथा च धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादिति भावः।न च धूमादि व्यापकवह्न्यादिसमानाधिकरणधूमादिमत्तानिश्चयत्वेनैव परामर्शस्य धूमादिलिङ्गकानुमितौ हेतुत्वादुक्तव्याप्ते रासभादिसाधारण्येपि न क्षतिरिति वाच्यं। पक्षधर्मांशे विषयतयाऽनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्र निवेशे तद्घटितस्यैव व्याप्तित्वादिति भावः । धूमत्वादिमतीति । तथा च तस्येति मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्र एवान्वितमिति भावः । ननु साध्यनिष्ठसामानाधिकरण्यस्य व्याप्तित्वे एकैव हीत्यादि ग्रन्थानुपपत्तिस्तद्वस्थैव विशिष्टसत्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्वस्य गुणादौ परामर्शाद् गुणेपि द्रव्यत्वानुमितिः प्रमा स्यादत आह तद्वतीति । तादृशसामानाधिकरण्यवतीत्यर्थः । तथा च तादृशसामानाधिकरण्यविशिष्टधूमत्वं व्याप्तिस्तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुः । तत्र च नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव स्वरूपत एव धूमत्वस्य भानं न तु धूमत्वत्वेन यतो गौरवमिति भावः । आद्येति । तथा च तामुपादायैव पर्वतीयवह्निधूमयोरसन्निकर्षात्तयोः कथं व्याप्तिग्रह इति परामर्शीयपूर्वपक्षग्रन्थ इति भावः।द्वितीयेति।तथा च तामभिप्रेत्यैव एकैव हि सा व्याप्तिरिति परामर्शीयसिद्धान्तग्रन्थ इति भावः । यत्रैकमेव साध्याधिकरणं तत्रैतद्रूपवानेतद्रसादित्यादावाद्याप्यभिन्नैव यत्र च द्रव्यत्वादौ साध्ये रूपत्वव्याप्यजातिमतो हेतुत्वं तत्र हेतुतावच्छेदकी-

त्वादिसादिसंग्रहाया ऽसमानाधिकरणान्तम्। यत्तु इदं संयोगि द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत्, संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभाववृत्तावविरोधात् तत्र चातीन्द्रियस्य संयोगस्य सत्त्वात्परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इत्यादि नाध्यक्षमिति। तन्न। द्रव्ये संयोगसामान्याभावे

---

भूतानां नीलत्वादिजातीनां नानात्वेन द्वितीयापि क्वचिद्भिन्नैवेति मन्तव्यं। [ आद्या भिन्ना अनुमितेर्विषयविधया जनकतावच्छेदकाद्भिन्ना किन्तु व्यवहारौपयिकीति, द्वितीयात्वभिन्ना विषयतयाऽनुमितिजनकतावच्छेदकादभिन्नैवेत्यर्थ इत्यपि कश्चित् ] कपिसंयोगिन्येतत्पदार्थस्य साध्यताभ्रमखण्डनार्थमयमिति पक्षनिर्देशः। साम्प्रदायिकमते संयोगसामान्याभावस्य द्रव्येऽभावात् कपीति। वृक्षमात्रे कपिसंयोगाभावादेतदिति। न चाभावे हेतुसामानाधिकरण्यस्यैव हेत्वधिकरणे निरवच्छिन्नवृत्तित्वरूपस्य निवेशादुक्ताव्याप्तिव्युदासम्भवात् प्रतियोगिवैयधिकरण्यनिवेशो मूलकृतामनुचित इति वाच्यम्। अग्रे समाधास्यमानत्वादिति भावः। तत्। असमानाधिकरणान्तम्। ननु शाखामूलादिसर्वावयवावच्छेदेन सर्वत्र द्रव्ये गगनादिसंयोगस्य सत्वात्कुतस्तत्सामान्याभावस्य द्रव्ये सम्भव इत्यत आह। संयोगस्येति। वृक्षत्वेति। शाखाद्यवच्छेदेन तत्तत्संयोगसत्वेपि वृक्षत्वावच्छेदेन कस्याश्चिदपि संयोगव्यक्तेरसत्वात्तदवच्छेदेनैव संयोगसामान्याभावसम्भवः अवच्छेदकभेदेनैकत्र भावाभावयोः समावेशादिति भावः। नन्वेवं वृक्षे संयोगसामान्याभावस्य कुतो नाध्यक्षमित्यत आह तत्र चेति। तत्र संयोगसामान्याभावे सत्वादित्यस्य प्रतियोगितासम्बन्धेनेत्यादि। तथा च संयोगसामान्याभावस्यायोग्यप्रतियोगिकत्वान्नाध्यक्षमिति भावः। ननु प्रतियोगितावच्छेदकविशिष्टयत्किञ्चित्प्रतियोगिनो योग्यत्वमत्यन्ताभावग्रहे तन्त्रं न तु योग्यमात्रप्रतियोगिकत्वम् अन्यथा गुणेपि संयोगसामान्याभावस्य तादृशप्रत्यक्षं न स्यादित्यतआह परित इति। परितः सर्वावयवावच्छेदेन प्रतियोगिग्रहात्मकदोषाद्वेत्यर्थः। न चै-

मानाभावात्। न च यो यदीययावद्विशेषाभाववान् स तत्सामान्या-
भाववानिति व्याप्तेर्यावत्संयोगाभावा एव मानम् । यत्तदर्थयोर-

---

थमपि प्रतियोगिग्रहोत्पत्तिदशायां प्रत्यक्षं कुर्वारं, प्रतियोग्युपल-
म्भकसामग्र्या अपि दोषत्वोपगमात् प्रतियोगिन उपलब्धिर्यया इति
व्युत्पत्त्या तस्या एव प्रस्तुतत्वादिति भावः । प्रतियोग्युपलम्भरूप-
दोषाभावस्य संयोगसामान्याभावप्रत्यक्षे कार्यसहभावेन हेतुत्वोप-
गमान्नोक्तदोष इत्यपि वदन्ति । न चेति । मानमिति परेणान्वयः ।
यो यदीयेति । यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्न-
यत्संबन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्न-
तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः । तेन न स्वरूपा-
सिद्धिर्न वा सिद्धसाधनम् । जात्युपादानात् गुरुधर्मस्य प्रतियोगि-
तानवच्छेदकत्वे तदवच्छिन्नाभावाप्रसिद्ध्यापि न व्यभिचारः । न
च सत्वगुणत्वाद्यवच्छिन्नाभावमादाय स्वरूपासिद्धेर्वारकस्योभया-
वृत्तिपदस्य वैयर्थ्यम् । व्यभिचारवारकस्येवासिद्धिवारकस्यापि वि-
शेषणस्य सार्थकतायाः पक्षधरमिश्रादिसम्मतत्वात् । अत एव नि-
त्यत्वसाध्यकानुमाने सामान्यवत्वे सति विशेषगुणान्तरासमाना-
धिकरणैकमात्रवृत्तिगुणत्वहेतौ शब्देतरार्थकस्यान्तरपदस्य शब्दम-
ण्यालोके सार्थकत्वं तैः समर्थितम् । यद्वा यदीयानां यद्धर्माव-
च्छिन्नप्रतियोगित्वानां यावतां विशेषाभाववान् प्रत्येकावच्छिन्नप्रति-
योगिताकयावदभाववान्यः स तद्धर्मावच्छिन्नप्रतियोगिताकाभाव-
वानित्यर्थः । तथा च संयोगत्वावच्छिन्नप्रतियोगिताव्यक्तीनां प्र-
त्येकावच्छिन्नाभावकूटवत्वस्य पक्षे सत्वान्नासिद्धिर्न वा व्यर्थवि-
शेषणत्वमिति ध्येयम् । यो यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नयावदभा-
ववान् स तद्धर्मावच्छिन्नाभाववानित्यर्थस्तु संयोगत्वन्यूनवृत्तिध-
र्मावच्छिन्नप्रतियोगिताकस्य घटावृत्तिसंयोगत्वादिवृक्षान्यासमवे-
तत्वाद्यवच्छिन्नाभावस्य यावदन्तर्गतस्य वृक्षादौ पक्षे स्वरूपासि-
द्धत्वादनुपादेयः । संयोगयावद्विशेषाभावाइति । न च सर्वावयवाव-
च्छेदेन वृक्षे गगनादेरेक एव संयोगो लाघवादिति तस्यैवाभाववि-
रहात्संयोगयावद्विशेषाभाववत्वं पक्षे स्वरूपासिद्धमिति वाच्यम् ।

ननुगमात् एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च। एतेन अयं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादिति निरस्तम्। व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गुणत्वादेरुपा-

---

अतिप्रसङ्गभङ्गाय शाखादितत्तदवयवावच्छिन्नवृत्तिकसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्यावश्यकतया वृक्षे व्याप्यवृत्तिगगनसंयोगस्यासम्भवादिति भावः। प्राचां मते यत्तदर्थयोरनुगमादाह एकावच्छेदेनेति। इदमुपाधेः साधनव्यापकत्वरक्षायै। न चैवं तत्तत्संयोगाभावस्य गुणे व्याप्यवृत्तित्वादेकावच्छिन्नत्वेन साध्यव्यापकत्वं दुर्घटम् [व्याप्यवृतेरवच्छेदकानङ्गीकारात्] इति वाच्यम्। एकावच्छेदेनेत्यनेन निरवच्छिन्नवृत्तिकत्वविशिष्टस्य विवक्षितत्वात्। न च तथापि कपिसंयोगसामान्याभाववति वृक्षे निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्वादुपाधेः साध्याव्यापकत्वमिति वाच्यं। जात्यवच्छिन्नाभावस्यैवोक्तव्याप्तौ साध्यविधया प्रवेशात् कपिसंयोगाभावस्य चातथात्वेन तं प्रति तदीययावद्विशेषाभावस्योक्तरूपेणाव्यापकत्वेपि क्षत्यभावात्। न चाभिघातादिसामान्याभावस्य वृक्षे सत्वात् तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्वादेवमप्युपाधेः साध्याव्यापकत्वमिति वाच्यम्। गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशात्। केचित्तु एकावच्छेदेनेत्यस्यावच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशस्याऽवच्छेद्यतासम्बन्धेनाभाववत्वेनेत्यर्थः तथा च तद्विशिष्टयावद्विशेषाभाववत्वमुपाधिरित्याहुस्तच्चिन्त्यम्। यत्वेकावच्छेदेनेत्यस्य परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टेत्यर्थमाह। तन्न। व्याप्यवृत्तिरूपादीनां विशेषाभावस्यावच्छेदकाप्रसिद्ध्या तदनवच्छेदकस्याप्यसम्भवेन तत्रैव साध्याव्यापकत्वतादवस्थ्यादिति दिक्। यतदूभ्यां विनाकृतमनुगतानुमानमाशङ्क्य निषेधति एतेनेति। वक्ष्यमाणदोषेणेत्यर्थः। व्यर्थेति। संयोगसामान्याभावस्य त्वन्मते केवलान्वयितया तत्साध्यतायामभाववत्वादित्यस्यैव सम्यक्त्वादिति भावः। अथास्त्वभाववत्वादिति तर्हि हेतुरत आह। अप्रयोजकत्वादिति। [अनुकूलतर्करहितत्वादित्यर्थः] ननु निरुपाधिकत्वमेव प्रयोजकमत आह। निर्गुणत्वादेरिति। आ-

धित्वाच्च। न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वं, गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गात्। यथा च घटपूर्ववर्त्तित्वस्य प्रतिदण्डं वह्निसामानाधिकरण्यस्य वा प्रतिधूमं भिन्नत्वेऽपि दण्डत्वं धूमत्वं वा तत्सामान्यस्यावच्छेदकं तथैव संयोगसामान्यस्यावच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वाच्चेति सम्प्रदायविदः। नवीनास्तूत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रलयावच्छेदेन गगनादौ संयोगस्य सामान्याभावो वर्त्तते,

---

विना द्रव्यभिन्नत्वादेरुपग्रहः। अत्र यद्यपि निर्गुणत्वोपाधेः स्वाभावेन साध्याभावोन्नायकतया न दोषत्वं संयोगस्यैव साध्याभावतया वृक्षादौ तस्येष्टत्वात् नापि व्यभिचारोन्नायकतया तत एव, तथापि स्वव्याप्यत्वेन साध्यस्य पक्षावृत्तित्वोन्नायकतया दूषकत्वं बोध्यम्। संयोगसामान्याभावो न वृक्षवृत्तिः निर्गुणत्वव्याप्यत्वादित्यनुमानेनापि वृक्षः संयोगसामान्याभाववानित्यनुमितेः प्रतिरोधादिति ध्येयम्। ननु यो यद्धर्मस्यानवच्छेदकः स तदभावस्यावच्छेदक इति व्याप्त्यैव वृक्षत्वादेः संयोगसामान्याभावावच्छेदकत्वं सेत्स्यतीत्याशङ्क्य निराचष्टे न चेति। गुणादीति। तथा च व्यभिचारान्नोक्तव्याप्तिरिति भावः। ननु वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादिति विशिष्यैव व्याप्तिर्वाच्या प्रमेयत्वसत्वादेः पक्षसमत्वादतः स्वरूपासिद्धिमाह यथा चेति। प्रतिदण्डमिति। भिन्नत्वेऽपीति परेणान्वयः। नन्वव्यवहितपूर्ववर्तितायाः अवच्छेदकं न दण्डत्वमतिप्रसङ्गात् किं त्वव्यवहितपूर्ववर्तिजातीयतायाः सा चाभिन्ना अतः संयोगस्थलएवानुरूपं दृष्टान्तमाह वह्नीति। तत्सामान्यस्येति। घटपूर्ववर्तित्वसामान्यस्य वह्निसामानाधिकरण्यसामान्यस्य चेत्यर्थः। केचित्तु कथितव्याप्तावप्रयोजकत्वमन्यथा तदभावानवच्छेदकत्वहेतुना तदवच्छेदकत्वमेव कुतो न वृक्षत्वादेः साध्यते वृक्षत्वाद्यवच्छेदेन तत्तत्संयोगव्यक्तीनामसत्त्वेपि संयोगसामान्यस्य सम्भवादित्यभिप्रायकोऽयं ग्रन्थ इत्याहुः। गुणस्येति। सामान्याभाव इति परेणान्वयः। नन्वाद्यक्षणे घटे गुणो नास्तीति प्रत्यक्षमसम्भवि सन्निकर्षाद्यभावात्

तथा धूमवत्यपि विरहो दहनस्य, इह पर्वते नितम्बे हुताशनो न शिखर इति प्रतीतेः संयोगेन द्रव्यस्याप्यव्याप्यवृत्तित्वात्, वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्वाच्च, एवं प्रतियोगिमतोरपि कालदेशयोर्देशकालभेदावच्छेदेन तदभावः तथा च तत्तत्साध्यकाव्याप्तिवारणाय तत्। नोपादेयश्च सर्वथैव

---

प्रथमक्षणे घटे गुणो नास्तीत्यादिव्यवहारादिकं च सन्दिग्धप्रामाण्यकमतः स्थलान्तरमाह प्रलयावच्छेदेनेति। तदानीं जन्यभावसत्वे प्रलय एव व्याहन्येतेति भावः। ननु महाप्रलये मानाभावात्तदवच्छेदेनेत्ययुक्तमत आह तथेति। ननूक्तप्रतीतिः पर्वतवृत्तिहुताशनावच्छेदकत्वाभावं शिखरे शिखरावच्छिन्नपर्वतवृत्तित्वाभावं वा हुताशनेऽवगाहते न तु पर्वत एव हुताशनाभावमिति यदि ब्रूयात्तदाप्याह वृत्तेरिति। वृत्तेः सम्बन्धस्य, वृत्तिमतः सम्बन्धवतः, तथा च यो यदवच्छेदेन यदीययत्सम्बन्धाभाववान्स तदवच्छेदेन तत्सम्बन्धावच्छिन्नतदभाववानिति व्याप्त्यापि शिखरावच्छेदेन संयोगसम्बन्धावच्छिन्नवह्न्यभावसिद्धिरिति भावः। ननूक्तव्याप्तावप्रयोजकत्वमन्यथा तुल्यन्यायेन यो यदीययत्सम्बन्धवान् स तत्सम्बन्धेन तद्वानिति व्याप्त्याऽपि कुण्डादिसंयोगिनो वदरादेः संयोगेन कुण्डादिमत्त्वापत्तेरित्युक्तावाह एवमिति। भेदो विशेषः। घटवत्यपि काले इदानीं तन्तौ न घट इति प्रतीत्या तन्त्ववच्छेदेनैतत्काले घटाभावः तथा घटवत्यपि कपाले घटनाशदशायामिदानीमिह कपाले न घट इत्यनुभवात्तत्कालावच्छेदेन घटसामान्याभावः सिद्ध्यति। न चेदानीं तन्तुषु न घट इत्यादिप्रतीतेरेतत्कालावच्छेदेन तन्तुष्वेव घटाभावो विषयो न तु तन्त्ववच्छेदेनैतत्काले तथेति वाच्यम्। तन्तुषु घटाभावस्य व्याप्यवृत्तितयैतत्कालस्य तदवच्छेदकत्वावगाहने उक्तप्रतीतेर्भ्रमत्वापातात्। न च तथाप्येतत्कालवृत्तिघटस्याभाव एव तन्तुषु भासतां तत्रेति वाच्यम्। कालस्य प्रतियोगिकुक्षावप्रवेशेऽपि तादृशप्रतीतेस्तन्त्ववच्छेदेन समये घटाभावावगाहित्वस्याऽनुभविकत्वादिति भावः।तथा चेति।गुणवत्संयोगवद्वा द्रव्यत्वात्, वह्निमान् धू-

व्याप्यवृत्तिसाध्यके, साध्यसाधनभेदेन व्याप्तिभेदादिति वदन्ति।

---

मात्, समयो घटवानेतत्कालत्वात्, कपालं घटवत् घटध्वंसादित्यादावव्याप्तिवारणायेत्यर्थः। तदिति। असमानाधिकरणान्तदलमित्यर्थः। नोपादेयमिति। येन सम्बन्धेन येन रूपेण च यद्व्याप्यवृत्ति तेन सम्बन्धेन तेन रूपेण च तत्साध्यतायां नोपादेयमित्यर्थः। तेन संयोगत्वेनाव्याप्यवृत्तेरपि संयोगस्य समवेतत्वेन रूपेण साध्यतायां कालिकतयाऽव्याप्यवृत्तेरपि द्रव्यत्वस्य समवायेन साध्यतायां च न प्रतियोगिव्यधिकरणपदमिति परं तु समवायेन व्याप्यवृत्तेरपि द्रव्यत्वसत्वादेः कालिकेन साध्यतायां तूपादेयमेव। अव्याप्यवृत्तिसाध्यके संयोगाभाववान् गुणत्वादित्यादौ क्वचिदेव न देयम् व्याप्यवृत्तिसाध्यके तु प्रयोजनविरहात् सर्वत्रैव न देयमित्यावेदयितुं सर्वथैवेत्युक्तं। साध्यसाधनभेदेनेति। साध्यताघटकसम्बन्धादेरप्युपलक्षणम्। यद्यपि व्याप्यवृत्तिसाध्यकस्थले तदप्रवेशे सत्तावान् जातेरित्यादावव्याप्तिः साधनवति स्पन्दादौ समवायेन सत्ताभावस्यापि कालिकादिसम्बन्धेन वृत्तेः। न चाभावे हेत्वधिकरणवृत्तित्वस्य विशेषणतया विवक्षणान्नोक्तदोषः। तथा सत्यपि द्रव्यत्वशून्यं सत्वादित्यादावतिव्याप्तेः द्रव्यत्वरूपसाध्याभावस्य विशेषणतया वृत्तित्वविरहात् द्रव्याभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि द्रव्यत्वानतिरिक्तत्वात्। न चाभावत्वप्रतीतेः प्रमात्वरक्षार्थमभावाभावस्यातिरिक्ततयोक्तातिव्याप्तिवारणमिति वाच्यम्। अभावत्वं चेत्यग्रिमग्रन्थेन भावाभावसाधारणस्याभावत्वस्य निर्वचनविरोधापत्तेः, घटत्वाद्यभावस्य कालिकसम्बन्धावच्छिन्नाभावे स्वरूपसम्बन्धेन साध्ये गगनत्वादिहेतावव्याप्तेस्तथाप्यनुद्धाराच्च। विशेषणतया गगननिष्ठस्य घटत्वाभावस्यैव तादृशघटत्वाभावाभावाभावत्वकल्पनात्तावतैवाऽभावत्वप्रतीतेः प्रमात्वसम्भवात्। अत एव साध्यताघटकसम्बन्धेन साध्यवत्वबुद्धेर्विषयाविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेन सम्बन्धेन हेतुसामानाधिकरण्यमभावस्य ग्राह्यमित्युक्तावपि न निस्तारः तथाविधसम्बन्धेन हेतुसामानाधिकरण्याप्रसिद्ध्या प्रागुक्तगगनत्वादिहेतौ द्रव्यत्वाभाववज्जातित्वादित्यादौ चा-

प्रतियोग्यसामानाधिकरण्यञ्च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं, तेन अयं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः

---

व्याप्तेः । तथापि साध्यतावच्छेदकसम्बन्धेन प्रतियोगिमत्ताबुद्धेर्विषयतया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेन हेत्वाधिकरणवृत्तित्वमभावस्य विवक्षितमित्यदोषः। तथा च द्रव्यत्वाभाववज्जातित्वादित्यादौ विशेषणता विशेषेण जातित्वाभावबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यःस्वरूपसम्बन्धस्तेन जातित्वरूपाभावस्य प्रसिद्धेरिति भावः । वस्तुतो व्याप्यवृत्तित्वमत्र साध्यतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपं ग्रन्थकृतोऽभिप्रेतं, तादृशसाध्यकञ्च समवायादिनात्मत्वादेः साध्यतायां ज्ञानवत्त्वादिकं समवायेनात्मत्ववति समवायावच्छिन्नात्मत्वाभावस्य केनापि सम्बन्धेनावृत्तेः । तथाच तादृशसाध्यकएव नोपादेयम् । सत्तावान् जातेरित्यादौ पुनरुपादेयमेव सत्त्ववति स्पन्दादौ समवायावच्छिन्नसत्त्वाद्यभावस्यापि कालिकादिसम्बन्धेन वर्त्तमानतया सत्तादेर्निरुक्तव्याप्यवृत्तित्वाभावात् व्याप्यवृत्तिताघटकस्य स्वाधिकरणवृत्तित्वस्य सम्बन्धसामान्येन प्रविष्टत्वात् । एतल्लाभार्थमेव सर्वथैव व्याप्यवृत्तेरित्युक्तं, तस्य सम्बन्धविशेषानियन्त्रितत्वात् । व्यभिचारादिस्तु सम्बन्धो न वृत्तिनियामकस्तेनात्मत्वादेरपि न व्याप्यवृत्तिताहानिरिति ध्येयम् । सर्वथैव व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याघटितव्याप्तिविशिष्टहेतुमत्तानिश्चयोत्तरानुमितौ नोपादेयम् प्रतियोग्यसमानाधिकरणांशो जनकतावच्छेदके नोपादेयः साध्यसाधनभेदेन कार्यकारणभेदेन व्याप्तेः कारणताघटकव्याप्तेर्भेदात् भिन्नत्वादित्यपि वदन्ति । एकधर्मावच्छिन्नप्रतियोगितायाः प्रतियोगिव्यक्तीनां भेदेऽप्यैक्यमिति नव्यमते वह्न्यादिसामान्याभावमादायाव्याप्त्यसम्भवादतिव्याप्तिवारणमेव प्रयोजनमाह तेनेति । न च विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमिति वाच्यम् । जातौ विशिष्टसत्त्वव्यभिचारज्ञानदशायामपि विशिष्टसत्त्वधर्मिकजातिमन्निष्ठप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वज्ञानाद्विशिष्टसत्त्वसाध्यका-

भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादिसाध्यौ नातिव्याप्तिः । न चो-
भयत्वमेकविशिष्टापरत्वं विशिष्टञ्च केवलादन्यदिति तदभावो
मनसि सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम् । उभयत्वं
हि न विशिष्टत्वादनतिरिक्तं न वा तदवच्छिन्नाभावस्तदवच्छिन्ना-
भावात्, वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्योभयत्वेन त-
दभावस्य च प्रत्यक्षसिद्धत्वात्। न च तत्र व्याप्तिरेवोभयत्वाधिक-

---

नुमितिप्रसङ्गस्यैव प्रकृतेऽतिप्रसङ्गपदार्थत्वात् विशिष्टसत्वस्या-
प्युक्तरीत्या व्याप्यवृत्तित्वविरहाच्च । विशिष्टस्यातिरिक्तत्वमते तत्रा-
तिव्याप्त्यसम्भवादाह भूतत्वेति । प्राञ्चस्तु विशिष्टसत्वस्य व्या-
प्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशात् भूतत्वे-
त्यादिसाध्यान्तरम् तत्र च भूतत्वमात्मान्यत्वे सति वि-
शेषगुणवत्वम् मूर्तत्वमवच्छिन्नपरिमाणवत्वं तदुभयं चाव्याप्य-
वृत्त्येव घटादावुत्पत्तिकालावच्छेदेन तदुभयस्याभावसत्वादित्याहुः ।
सार्वभौममतमाशङ्कते न चेति । वाच्यमित्यन्वयः । तदभावः । भूत-
भूतत्वमूर्तत्वोभयाभावः । सहजत एवेति । प्रतियोगितावच्छेदकाव-
च्छिन्नत्वाप्रवेशेपीत्यर्थः । ननूभयत्वस्य विशिष्टत्वातिरिक्तत्वेपि
सहजतः प्रतियोगिव्यधिकरणस्य विशिष्टत्वावच्छिन्नाभावस्य प्रति-
योगितावच्छेदकमेवोभयत्वमतो नातिव्याप्तिः विशिष्टत्वावच्छिन्ना-
भावस्योभयाभावानतिरेकादत आह न वेति । तदवच्छिन्नाभावः ।
उभयत्वावच्छिन्नाभावः । तदवच्छिन्नाभावात् वैशिष्ट्यावच्छिन्ना-
भावात् । लिङ्गव्यत्ययेन नातिरिक्त इत्यनुषज्यते तथा चातिरिक्त
एवेति भावः । न चान्यत्रोभयाभावस्य विशिष्टाभावातिरिक्तत्वेपि
प्रकृते भूतत्वविशिष्टमूर्तत्वाभावस्यैव तदुभयत्वावच्छिन्नप्रतियोगि-
ताकत्वं समनियताभावयोर्लाघवेनैकत्वादिति वाच्यम् । तावता-
पि हेतुमतो यादृशप्रतियोगिताश्रयानधिकरणत्वं तादृशप्रतियोगि-
तानवच्छेदकत्वस्य भूतत्वमूर्तत्वोभयत्वेऽनपायादतिव्याप्तितादव-
स्थ्यादिति भावः । उभयत्वस्येति । प्रत्यक्षसिद्धत्वादिति परेणा-
न्वयः । तथा च विरुद्धयोरप्युभयत्वमतिरिक्तमेव । उभयत्रैवो-

रणस्य मूर्त्तत्वस्य मनसि सत्त्वादिति वाच्यम्। तथात्वेऽप्युभयत्वेन रूपेण तत्रासत्त्वात् नात्रोभयमिति प्रतीतेर्दुर्व्वारत्वात्। अत्यन्त-पदञ्चात्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्य अत्यन्ता-भावत्वनिरूपकप्रतियोगितायाश्च लाभाय, अन्यथा सर्वस्यैवा-भावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वात्तद्भेदस्य स्वस्वरूपा-नतिरिक्ततया प्रतियोग्यसामानाधिकरण्यस्यैव दुर्ल्लभत्वापत्तेः, स-

---

भयत्वप्रतीत्योः समानाकारत्वात् भूतत्वमूर्तत्वयोर्विरुद्धत्वभ्र-मदशायामप्युभयत्वप्रत्ययाच्चेति भावः। न चेति। वाच्यमिति परे-णान्वितम्। तत्राभूतत्वमूर्त्तत्वोभयवान्मूर्तत्वादित्यादौ। व्याप्तिरेवेति। तथा च तस्य लक्ष्यतया तद्वारणप्रयासोऽनुचित इति भावः। तथा-त्वेपीति। उभयत्वाश्रयस्य मूर्तत्वस्य मनसि सत्त्वेपीत्यर्थः। तथा च हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणावच्छेदेन साध्यतावच्छे-दकावच्छिन्नवत्तास्थल एव व्याप्तिरतो नैतल्लक्ष्यमिति भावः। वृत्ति-मति व्याप्यभावस्य व्यभिचारनियतत्वाद्व्यभिचारं ग्राहयति नेति। अत्रेत्यर्थः। मूर्तत्वाश्रये मनसीत्यर्थः। ननु वह्न्यादिभेदमादाय व्याप्तेः प्रतियोग्यसमानाधिकरणपदेनैव वारणादत्यन्तपदं व्यर्थमत आह अत्यन्तपदं चेति। अत्यन्ताभावत्वनिरूपकं यत्प्रतियोगित्वं तदा-श्रयवैयधिकरण्यविवक्षायाः फलमाह अन्यथेति। तद्भेदस्य। स्वसमा-नाधिकरणाभावान्तरभेदस्य। स्वरूपानतिरिक्ततयेति। अनवस्थाभयेने-त्यादिः। दुर्लभत्वापत्तेरिति। हेतुसमानाधिकरणाभावमात्रस्यैव स्वा-त्मकभेदप्रतियोगि यदभावान्तरं तत्समानाधिकरणत्वादिति भावः [न च भावस्वरूपाभावस्यैव प्रतियोग्यसामानाधिकरण्यं सुलभमि-ति वाच्यम्। तस्यापि स्वसमानाधिकरणाभावभिन्नत्वादभावमात्रा-धिकरणक इवाभावमात्रप्रतियोगिको विशिष्टाभावाद्यनात्मकोऽभावो-धिकरणभिन्नो नेष्यते लाघवात्] अग्रे विवक्षणीयस्य साध्यताघट-कसम्बन्धेन प्रतियोग्यसामानाधिकरण्यस्य वह्निमान्धूमादित्यादौ घ-टाद्यभावे सत्त्वान्न सर्वत्राप्रसिद्धिः किं तु स्वरूपसम्बन्धेन [अभावस्य] साध्यतायामेवेति सूचयितुमप्रसिद्धिमपहाय दुर्लभत्वमुक्तम्। अत्य-न्ताभावत्वानिरूपकप्रतियोगितानवच्छेदकत्वाविवक्षायाः फलमाह

र्वेषामेवाभावानां हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियो-
ग्यसमानाधिकरणाभावान्तरात्मकस्य स्वभेदस्य प्रतियोगित्वादभा-
वसाध्यकाव्याप्तेश्चेति सम्प्रदायविदः। अथ यदा गोत्वं तदा गौ-
रित्यत्राऽतिव्याप्तिः। प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावान-

---

सर्वेषामिति। भावभेदस्यातिरिक्ततास्वीकारादाह अभावसाध्यके-
ति। तथा च घटभिन्नं पटत्वादित्यादौ पटत्वसमानाधिकरणनिरुक्त-
प्रतियोगिव्यधिकरणगोत्वाद्यभावस्य घटभेदभिन्नत्वात्तादृशभेदस्य
च गोत्वाद्यभावरूपत्वात्तत्प्रतियोगितावच्छेदकमेव घटभेदत्वमित्य-
व्याप्तिरिति भावः। सम्प्रदाय इत्यस्वरसः तद्बीजं तूक्तविवक्षायां सर्वे-
षां हेतुसमानाधिकरणात्यन्ताभावानामत्यन्ताभावत्वनिरूपकेन पूर्व-
क्षणादिवृत्तित्वविशिष्टस्वाभावात्मकेन प्रतियोगिनासमं सामाना-
धिकरण्यादभावसाध्यकाव्याप्तितादवस्थ्यम् यादृशप्रतियोगिताव-
च्छेदकविशिष्टस्यानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानव-
च्छेदकत्वप्रवेशे तु व्यर्थमेवात्यन्तपदमिति ध्येयम्। गोध्वंसवत्त्वेने-
ति [प्राचीनमते] गवात्यन्ताभावस्य गोध्वंसविरोधित्वादित्याशयः।
न च दैशिकविशेषणतया यद्गोध्वंसस्याधिकरणं तत्रैव गवात्यन्ता-
भावस्य विरोधित्वात् कालिकसम्बन्धेन गोध्वंसवत्यपि प्रलये तद-
त्यन्ताभावसत्त्वे बाधकाभावान्नातिव्याप्तिरिति वाच्यम्। प्राचां मते
भूतलादिदेशस्येव कालस्यापि दैशिकविशेषणतया गोध्वंसवत्त्वात्।
अत एव त्वक्संयुक्तकाले विशेषणतया वायुस्पर्शनाशस्य साक्षा-
त्कारः शब्दानित्यतायां मिश्रैरुक्तः। यद्यप्येवमपि नातिव्याप्ति सम्भ-
वः कालिकसम्बन्धावच्छिन्नगवात्यन्ताभावस्यैव प्रलये कालिकस-
म्बन्धेन वर्तमानत्वात् ध्वंसादिमति दैशिकसम्बन्धेनैवात्यन्ताभाव-
स्यानभ्युपगमात्। तथापि प्रतियोगिवैयधिकरण्याघटितस्य व्याप्य-
वृत्तिसाध्यकस्थलीयलक्षणस्यावश्यं दैशिकविशेषणतयाऽभावे हेतु-
सामानाधिकरण्यघटितत्वात् तस्यैवातिव्याप्तिर्बोध्या। न च का-
लिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य दैशिकसम्बन्धेन हेतुमन्नि-
ष्ठात्यन्ताभावस्याप्रसिद्ध्या तथापि नातिव्याप्तिरिति वाच्यम्। सृष्टि-

धिकरणत्वात्संसर्गाभावमात्रोक्तावपि यदा स्पन्दस्तदा द्व्यणुकं, यदा अदृष्टं तदा जन्यं ज्ञानं दुःखं वा, यदा तस्याऽदृष्टं तदा तदीयं

———

कालवृत्तित्वविशिष्टगोत्वादेरत्यन्ताभावस्यैव तादृशस्य प्रसिद्धत्वादिति भावः। मिश्रमतं निरसितुमाह संसर्गाभावेति। अत्यन्ताभावपदेनेत्यादिः। तथा च प्रलये गोत्वावच्छिन्नध्वंसवत्त्वादेव नातिव्याप्तिरिति भावः। न च गोध्वंसस्य गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेऽपि साध्यतावच्छेदकसम्बन्धीभूतकालिकविशेषणतावच्छिन्नप्रतियोगिताकत्वविरहात् कुतस्तमादायातिव्याप्तिव्युदास इति वाच्यम्। साध्यतावच्छेदकसम्बन्धान्यसम्बन्धानवच्छिन्नस्यैव हेतुसमानाधिकरणाभावप्रतियोगित्वस्य लक्षणे प्रवेशनीयत्वात् तस्य च ध्वंसप्रतियोगितासाधारण्यादिति भावः। यदा स्पन्द इति। स्पन्दवति खण्डप्रलये सर्गान्तरीयद्व्यणुकप्रागभाववत्त्वेन द्व्यणुकत्वावच्छिन्नध्वंसविरहादतिव्याप्तिः। [न च खण्डप्रलये स्पन्दसत्त्वे मानाभावः, ब्रह्मणो वर्षशतमायुरित्यागमप्रसिद्धेरेव मानत्वात्। न हि क्रियां विना मुहूर्तादिघटितस्य वर्षस्य सम्भव इति] ननु महाप्रलयपूर्वतृतीयक्षणे द्व्यणुकत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिस्तदानीमपि चरमद्व्यणुकनाशानुगुणस्य परमाणुस्पन्दस्य सत्त्वात्तत्कालोत्पन्नपरमाणूत्तरसंयोगेन प्रलयपूर्वक्षण एव पश्चात्तस्य विनाश्यत्वात् तादृशपरमाणूत्तरसंयोगस्य च कार्यद्रव्येण सहैव स्वीकारादनित्यत्वमाश्रयनाशादेव तन्नाशसम्भवादत आह यदादृष्टमिति। केचित्तु स्वमते द्व्यणुकस्याभावात् स्पन्दस्य च खण्डप्रलये वृत्तौ बलवत्तरप्रमाणाभावाद्यदादृष्टमित्याद्युक्तमित्याहुः। तच्चिन्त्यम्। नित्यज्ञानमादाय सद्धेतुत्ववारणाय जन्यमिति। नित्यसुखाभिव्यक्तेर्मोक्षत्वमते सद्धेतुत्वमाशङ्क्य साध्यान्तरमाह दुःखं वेति। ननु कार्यमात्रं प्रत्यदृष्टस्य हेतुत्वात् प्रलयप्राक्क्षणेऽपि तस्य सत्त्वं तथा च तदानीमेव दुःखत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिः दुःखादेः स्वसाक्षात्कारनाश्यतया तदानीमसम्भवात् उत्तरक्षणे साक्षात्कारासम्भवादविदिते प्रमाणाभावाच्च, किं च यावद्ब्रह्माण्डानां युगपत्प्रलयानभ्युपगमे ब्रह्माण्डान्तरवर्तिदुःखमादाय सद्धेतुरेवायमत आह। यदा तस्येति। अत्र च तदीयसुषु-

ज्ञानमित्यादावतिव्याप्तिः।द्व्यणुकत्वादेर्द्व्यणुकादिशून्यखण्डप्रलया-दिनिष्ठध्वंसप्रागभावप्रतियोगितानवच्छेदकत्वात्। न हि तयोः सा-मान्याभावत्ववादिमतेऽपि एकविशेषप्रागभावविशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नध्वंसप्रागभावयोः सम्भव इति चेन्न। प्र-तियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ताभाववत्त्वेऽविरो-धात्। अन्यथा अत्यन्ताभावस्य कालमात्रावृत्तित्वप्रसङ्गात्।

---

त्यादिसमये तदीयज्ञानविरहाद्व्यभिचारः स्फुट एव [द्व्यणुकत्वादे-रिति। खण्डप्रलये केषांश्चित् ध्वंसस्य केषांचित्प्रागभावस्य सत्वा-त्तस्य प्रतियोगितातिरिक्तवृत्तित्वेनानवच्छेदकत्वादिति भावः। ननु द्व्यणुकत्वावच्छिन्नानधिकरणकालवृत्तित्वविशिष्टस्यैव तद्ध्वंसस्य प्र-तियोगितावच्छेदकमेव द्व्यणुकत्वम्। अवच्छेदकत्वं चान्यूनवृत्तित्व-मेवेत्यत आह नहीति।] ध्वंसादिप्रतियोगितायां गोत्वादिधर्मा-वच्छिन्नत्वे मानाभावः गौर्नष्टेत्यादिप्रतीतेर्गोप्रतियोगिकध्वंसाद्यवगा-हितयैवोपपत्तेः बाधनिश्चयादिप्रतिबन्धकत्वाद्यनुरोधेनैव भेदात्यन्ता-भावयोर्गोत्वाद्यवच्छिन्नप्रतियोगिकत्वोपगमात्। न चैवं तद्गोत्वाद्यव-च्छिन्नवत्ताबुद्धिं प्रति तद्गोत्वावच्छिन्नाभाववत्तानिश्चयत्वेन विरो-धितया तद्गवात्यन्ताभावस्येव तद्गोध्वंसस्यापि तद्गोत्वावच्छिन्नप्रति-योगिताकत्वमावश्यकमिति वाच्यम्। एकसम्बन्धेन तद्गवात्यन्ताभा-वग्रहेऽपि सम्बन्धान्तरेण तद्गोमत्ताबुद्ध्युत्पादात्सम्बन्धविशेषमन्तर्भा-व्यैवात्यन्ताभावग्रहस्य प्रतिबन्धकतया ध्वंसवत्ताग्रहसाधारण्या-सम्भवात् ध्वंसत्वस्याभावत्वाघटितत्वेन तदवगाहिबुद्धेरत्यन्ताभाव-साधारण्यायोगाच्चेत्याशयेनाह मतेऽपीति। ननु प्रतियोगिमत इवे-त्यसिद्धं तत्रात्यन्ताभावानुपगमादत आह अन्यथेति। अत्यन्ताभा-वस्येति। गोत्वादिना गवादेरत्यन्ताभावस्येत्यर्थः। तेन गगनाद्यभाव-स्य गोविशिष्टगोत्वाद्यभावस्य वा प्रलयवृत्तित्वेऽपि न क्षतिः। कालमा-त्रेति। अत्र गवात्यन्ताभावस्य दैशिकविशेषणतया कालमात्रावृत्ति-त्वं प्राचीनैरिष्यत एव सदातनत्वव्यवहारस्य कालिकविशेषणतयैव स-म्भवादिति तु विभावनीयम्। ननु प्रतियोगिविशिष्टेऽपि काले तद्गत्य-

इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं तथात्वमपरस्य तु स्वरूपावच्छिन्नमिति। देशे कालस्येव कालेऽपि देशस्यावच्छेदकत्वात् तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात्। न च संसर्गाभावविशेषोऽत्यन्ताभावः संसर्गाभाववत्त्वञ्च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपं जन्यताघटकनियमघटितमिति वा-

---

न्ताभावसत्वे गवाद्यवच्छेदेनेदानीं गोत्वं नास्तीत्यपि प्रतीतिः कथं न स्यादत आह इयांस्त्विति। एकस्य। प्रतियोगिमतः कालस्य।देशभेदः। प्रतियोग्यनाधारदेशः। तथात्वम्। अत्यन्ताभाववत्त्वम्। अपरस्येति। ध्वंसादिमतः कालस्येत्यर्थः। स्वरूपावच्छिन्नमिति। निरवच्छिन्नमित्यर्थः। तथात्वमिति। पूर्वेणान्वयः।नन्विदानीमश्वे न गोत्वमित्यादिप्रतीतेः कालवृत्तितयाऽश्ववृत्तितया च गोत्वाभावावगाहितयैवोपपत्तौ देशस्य कालवृत्तितावच्छेदकत्वे मानाभाव इत्यत आह देश इति। इवार्थः सादृश्यं तच्चानुभूयमानत्वेन। तथाचानुभव एव देशस्य कालवृत्तितावच्छेदकत्वे मानम्। अन्यथा गृहे नेदानीं गौरित्यादिप्रत्ययबलात् गृहादिदेशस्य गवात्यन्ताभाववत्तायामपि कालो नावच्छेदकः स्यात् तत्र गवाभावे गृहवृत्तित्वैतत्कालवृत्तित्वोभयावगाहितायाः सुवचत्वादिति भावः। नन्वेवमपि प्रतियोगिवैयधिकरण्यघटितस्याव्याप्यवृत्तिसाध्यकस्थलीयव्याप्तिलक्षणस्य गोमान् गोत्वादित्यादावतिव्याप्तिरेव गवाद्यभावस्य सृष्टिकाले प्रतियोगिसमानाधिकरणतया लक्षणाघटकत्वादत आह तच्छून्येति। गवादिशून्ये चेत्यर्थः। तथा च यत्किञ्चिद्धेत्वधिकरणावच्छेदेन प्रतियोगिवैयधिकरण्यं यदग्रे वाच्यं तस्य गवाद्यभावेऽपि सत्वान्न तत्रातिव्याप्तिरिति भावः। न चेति। वाच्यमित्यन्वयः। संसर्गाभावविशेष इति। सदातनसंसर्गाभाव इत्यर्थः। संसर्गेति। स्वप्रतियोगितावच्छेदकसंसर्गेण यः प्रतियोग्यारोपस्तज्जन्यप्रतीतिविषयो योऽभावस्तत्त्वमित्यर्थः। संसर्गस्तु तादात्म्यभिन्नो ग्राह्यस्तेन भेदव्युदासः। ध्वंसप्रागभावयोरप्युत्तरकालपूर्वकालावेव प्रतियोगितावच्छेदकसम्बन्धाविति ताभ्यामेव सम्बन्धाभ्यां प्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षहेतुरतस्तयोर्नाव्याप्तिरिति प्राचामाशयः।

च्यम् । तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात् । एवं नि-
यमान्तरस्यात्र प्रवेशेऽपि न क्षतिरित्याहुः । वक्ष्यते च नियमा-
घटितमेव संसर्गाभावादिलक्षणम् । अनुपदमेव च विवेचयिष्यते।
संसर्गाभावत्वप्रवेशे प्रयोजनविरहोऽव्याप्तिश्च । अथ ज्ञानवान्

---

घटितमिति । तथा च चक्रकादिप्रसङ्ग इति भावः । तत्र । जन्यत्वे ।
नियमान्तरस्य । साध्यसम्बन्धितावच्छेदकरूपवत्त्वादिस्वरूपस्येत्यर्थः ।
नन्वभावबुद्धौ प्रतियोग्यारोपस्य हेतुतास्वीकारे मानाभावादुक्तसंस-
र्गाभावत्वघटितव्याप्तिलक्षणस्यासम्भवः कथञ्चिदभावलौकिकप्रत्यक्षं
प्रत्यारोपस्य हेतुतास्वीकारेऽप्यतीन्द्रियसाध्यके व्यभिचारिण्यतिव्या-
प्तिः तत्र हेतुसमानाधिकरणसाध्याभावस्यातीन्द्रियतया निरुक्तसंस-
र्गाभावत्वविरहादत आह वक्ष्यते चेति । भेदभिन्नाभावत्वं संसर्गा-
भावत्वं सदातनत्वविशिष्टं च तदेवात्यन्ताभावत्वं भेदत्वं तु संसर्ग-
विधया तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वमनुयोगिताविशेषो
वेत्याशयः । यत्तु भेदत्वादिवत्संसर्गाभावत्वमप्यखण्डोपाधिरिति ।
तत्तुच्छम् । भेदत्वादिवदखण्डस्य संसर्गाभावत्वस्यानुभवेना-
विषयीकरणात् तान्त्रिकव्यवहारस्य भेदभिन्नाभावत्वादिनाप्युपप-
त्तेः । वस्तुगतिमनुरुध्याह अनुपदमिति । विवेचयिष्यत इति ।
तदपि वा नोपादेयमित्यादिग्रन्थेनेति शेषः । साध्यतावच्छेदकसम्ब-
न्धेन प्रतियोगिवैयधिकरण्यघटितलक्षणमभिप्रेत्याह प्रयोजनविरह
इति । धूमादिसमानाधिकरणस्य वन्ह्यादिभेदस्य प्रतियोगिसमाना-
धिकरणत्वादेव तमादायाव्याप्तिविरहादिति भावः । व्याप्यवृत्ति-
साध्यकस्थलीयलक्षणस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियो-
गिताघटितत्वात् तदभिप्रेत्याह अव्याप्तिश्चेति । तादात्म्येन गवादेः
साध्यतायां तत्सम्बन्धावच्छिन्नात्यन्ताभावाप्रसिद्ध्या सास्नावत्त्वा-
दावव्याप्तिरित्यर्थः । इदमप्यभाववृत्तिरभावो नाधिकरणस्वरूपो न वा
धर्मात्यन्ताभाव एव धर्मिणो भेद इति मतेन । अन्यथा पटभेदस्वरू-
पस्य घटभेदत्वात्यन्ताभावस्य पटत्वात्यन्ताभावस्य च पटनिष्ठप्रति-
योगितायामेव तादात्म्यसम्बन्धावच्छिन्नत्वादव्याप्तिविरहादिति ध्ये-

द्रव्यत्वात्, विशेषगुणवान् मनोऽन्यद्रव्यत्वात्, जातिमान् भावत्वा-
दित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः। साध्यशू-
न्यानामपि हेतुमतां विषयत्वविशेषणत्वैकार्थसमवायैः साध्यव-
त्त्वादिति चेत्। नैवम्। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियो-
गिनो यदधिकरणं सम्बन्धि वा तद्वृत्तित्वाभावस्योक्तत्वात्।

---

यम्। ननु विषयताया वृत्त्यनियामकत्वमते ज्ञानाभावस्य गग-
नादौ सहजत एव प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिरत आह
विशेषगुण इति। अत्र व्यभिचारनिरूपकः कालो दिक् च। तत्र
काले कालिकसम्बन्धेन दिशि दैशिकसम्बन्धेन विशेष-
गुणस्य सत्वात्तदभावो न प्रतियोगिव्यधिकरण इति भव-
त्यतिव्याप्तिः। विशेषपदं व्यभिचारित्वरक्षार्थं। द्रव्यत्वादित्युक्तौ
सम्बन्धसामान्येन विशेषगुणस्य मनस्यसत्वान्नातिव्याप्तिसम्भवः,
कालोपाधित्ववद्दिगुपाधित्वस्यापि मनस्यसत्वाद्व्यावर्त्तकत्वात् अ-
न्यथा मनसः कालोपाधित्वमपि स्यादत उक्तं मनोन्येति।यत्तु मूर्तमा-
त्रस्य दिगुपाधित्वं महादिग्वृत्तितायामवच्छेदकत्वं नत्वधिकरण-
त्वमिति प्राचां मते सम्बन्धसामान्येनैव तस्य विशेषगुणानधिक-
रणत्वान्मनोन्यपदमिति। तन्मन्दम्। एवमप्यवच्छेदकतासम्बन्धेनैव
मनसो विशेषगुणवत्तायास्सम्भवेन मनोन्यपदवैयर्थ्यापत्तेः। ननु
स्वमते दिक्कालयोरपीश्वरानतिरिक्तत्वादत्र व्याप्तिरेवेत्यत आह जाती-
ति। न च जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्र-
वेशादेव नातिव्याप्तिरिति वाच्यम्।समवायेनाव्यापकत्वग्रहदशायाम-
पि सम्बन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितव्यापकत्वज्ञाना-
त् समवायेन जात्यनुमित्यापत्तेरेव प्रकृतेऽतिव्याप्तिपदार्थत्वात् जा-
त्यादेरपि प्रागुक्तव्याप्यवृत्तित्वविरहाच्च। अतिव्याप्तिं योजयति सा-
ध्यशून्येति। विशेषणता दिक्कृता कालिकी च। एकार्थेति।समवाय-
स्यापि स्वात्मक एव स्वरूपसम्बन्ध इति तत्रापि जात्येकार्थसम-
वायोस्तीत्याशयः। [जातिः सतीतिवत्समवायः सन्निति प्रतीतेरवि-
शेषात्] भावत्वात् समवेतत्वादित्यपि केचित्।प्रतियोगितेति।तथा च

ज्ञानाद्यभावस्य तादृशेन समवायसम्बन्धेन घटादौ प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिः। न च तादृशयत्किञ्चित्सम्बन्धेन प्रतियोगिसामानाधिकरण्याभावोक्तौ वह्निसामान्याभावस्यापि धूमवत्पर्वतावच्छेदेन महानसीयसंयोगेन प्रतियोग्यसमानाधिकरणत्वात् वह्निमान् धूमादित्यादावव्याप्तिः स्वप्रतियोगितावच्छेदकसम्बन्धसामान्येन तथात्वोक्तौ च जातिमान् जातित्वादित्यादावतिव्याप्तिः समवायेन जात्यभावस्यैव तादात्म्येन जातिमद्भेदत्वात् तस्य च स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन यज्जातिसम्बन्धि तदवृत्तित्वेन प्रतियोगिव्यधिकरणत्वाभावादिति वाच्यम्। स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन यत्प्रतियोगिसम्बन्धि तदवृत्तित्वाभावस्योक्तत्वात् संयोगसामान्यावच्छिन्नवह्न्यभावप्रतियोगिताया महानसीयसंयोगत्वादिविशिष्टानवच्छेद्यतया वह्न्यभावस्य पर्वतादौ महानसीयसंयोगसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेऽप्यव्याप्त्यभावादिति ध्येयम्। ननु समवायावच्छिन्नवह्न्यभावमादाय धूमादावव्याप्तिवारणार्थमग्रे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगित्वं निवेशनीयं तथा च कपिसंयोगवतस्तादात्म्येन साध्यतायामव्याप्तिः भेदमात्रस्यैव स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन प्रतियोगिवैयधिकरण्याप्रसिद्धेरत आह सम्बन्धि वेति। न च तादात्म्येन वस्तुमात्रस्यैव व्याप्यवृत्तित्वात्तादृशसम्बन्धेन प्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमिति वाच्यम्। मूलावच्छेदेन कपिसंयोगवद्भेदस्य वृक्षादौ स्वयमङ्गीकारात्तादात्म्येन कपिसंयोगवतोऽप्यव्याप्यवृत्तित्वात्। न चैवं प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावेत्यग्रिमनिष्कर्षेऽप्यप्रतीकारः। प्रतियोगितावच्छेदकसम्बन्धेन ये प्रतियोगिसम्बन्धिनस्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटविशिष्टहेतुमदवृत्तित्वस्यैव तत्र वक्तव्यत्वात्। वस्तुतस्तु तादात्म्यसम्बन्धेनापि न कस्यचित्प्रागुक्तव्याप्यवृत्तित्वमतो यथाश्रुतमेव सम्यक्। केचित्तु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां यद्धर्मावच्छिन्नत्वयत्सम्बन्धावच्छिन्नत्वोभयाभाव इत्यादिवक्ष्यमाणनिष्कर्षस्य तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तिरतः प्रतियोग्यनधिकरणत्वं परित्यज्य प्रतियोग्यसम्बन्धित्वमवश्यं तत्र निवेश्यमित्याशयेन सम्बन्धित्वमुक्तमित्याहुः। ननु कपिसंयोगाभावस्या-

भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः। तद्विशिष्टस्य च हेत्वधिकरणवृत्तित्वं वाच्यं तेन नाव्याप्यवृत्तिसाध्यकासंग्रहः। तद्वद्वृत्तिभिन्नत्वन्तु नार्थः अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिप्रसङ्गात्। अत्र सामानाधिकरण्यवतो न तदभाववत्त्वं प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येसा-

---

पि गुणादौ प्रतियोग्यसमानाधिकरणत्वात् कपिसंयोगि एतत्वादित्यादावव्याप्तिरत आह तद्विशिष्टस्येति। प्रतियोगिसामानाधिकरण्याभावविशिष्टस्येत्यर्थः, तथा च हेतुमति वृक्षादौ संयोगवद्वृत्तित्वाभावविशिष्टः संयोगाभावो नास्तीति नाव्याप्तिः। विशिष्टनिरूपिताधेयत्वमप्यतिरिक्तमित्याशयेनेदम्। यद्वा तद्विशिष्टेत्यस्य हेत्वधिकरणेऽन्वयः तत्र च षष्ठ्यर्थोऽधिकरणत्वं तेन प्रतियोगिसामानाधिकरण्याभावविशिष्टस्याधिकरणं यद्धेत्वधिकरणं तद्वृत्तित्वमभावे वाच्यमित्यर्थः। यद्यपि प्रतियोग्यसमानाधिकरणत्वं हेतुविशेषणीकृत्य प्रतियोग्यसामानाधिकरण्यविशिष्टो यो हेतुस्तदधिकरणवृत्त्यभावस्य प्रतियोगितानवच्छेदकत्वं वाच्यं तावतैव संयोग्येतत्वादित्यादौ नाव्याप्तिसम्भावना वृक्षस्य प्रतियोगिवैयधिकरण्यावच्छिन्नहेत्वधिकरणत्वाभावात्, तथापि कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण इत्यग्रिममूलस्वरसेन हेतुसमानाधिकरणाभावस्यैव विशेषणं प्रतियोग्यसमानाधिकरणदलमत एतावान्प्रयास इत्यवधेयम्। ननु भेदस्य व्याप्यवृत्तितया प्रतियोगिसमानाधिकरणभिन्नत्वोक्त्यैव प्रागुक्ताव्याप्तिवारणसम्भवे तद्विशिष्टस्येत्यादिकं विफलमत आह तद्वद्वृत्तीति। प्रतियोगिमद्वृत्तिभिन्नत्वमित्यर्थः। अत्रेति। अस्वरसादित्यन्वयः। न तदभाववत्त्वमिति। तथा च संयोगी सत्वादित्यादावतिव्याप्तिरिति भावः। ननु संयोगाभावे गुणे न संयोगसामानाधिकरण्यमिति प्रतीतिबलादेव गुणाद्यवच्छेदेन संयोगाभावे प्रतियोगिसामानाधिकरण्याभावसत्वान्नातिव्याप्तिरत आह प्रतीतेरिति। उक्तप्रतीतिस्तु संयोगाभावनिष्ठस्य संयोगसामानाधिकरण्यस्याव-च्छेदकत्वाभावमेव गुणादौ संयोगानधिकरणीभूतगुणवृत्तित्वमेव

दिविशेषणं वक्ष्यति तच्च हेत्वधिकरणे बोध्यम् । प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः । ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्य चित्तत्सामान्यस्य प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नस्य वा अनधिकरणमुक्तम् । आद्ये अव्याप्यवृत्तिसाध्यकाव्याप्तिः एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात् । द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यादावतिव्याप्तिः

———

वा संयोगाभावादाववगाहत इति भावः । वक्ष्यति । मूलकारः । तच्च । तदपि । हेत्वधिकरण इति । तेन कपिसंयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकीभूतगुणाद्यवच्छिन्नत्वेपि कपिसंयोगी एतत्त्वादित्यादौ नाव्याप्तिः । ननु हेत्वधिकरणं प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं प्रतियोगिसामानाधिकरण्यानवच्छेदकीभूतहेत्वधिकरणवृत्तित्वं तच्च व्याप्यवृत्तेरवच्छेदकत्वविरहादप्रसिद्धं गुरुतरं चेत्यत आह प्रतियोग्यनधिकरणेति । कस्य चिदिति । अनधिकरणत्वमिति परेणान्वयः । तद्व्यक्त्यन्तरेति । प्रतियोगिव्यक्त्यन्तरेत्यर्थः । स्वमते संयोगसामान्याभावस्य केवलान्वयित्वात् तत्साध्यकसत्त्वादिकं सद्धेतुरेवेत्यतः साध्यान्तरमाह द्रव्यत्वाभावेति । यद्यपि द्रव्यत्वाभावस्य व्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमसङ्गतम् । न चात्र कालिकसम्बन्धावच्छिन्नद्रव्यत्वाभावः साध्यः स च गुणाद्यवच्छेदेन काल एवाव्याप्यवृत्तिरिति वाच्यम् । तथा सति तस्य केवलान्वयित्वात्तत्साध्यकसत्त्वादेः सद्धेतुत्वेन तत्रातिव्याप्तेरुपन्यासस्यानौचित्यात् । तथापि सत्त्वहेतौ द्रव्यत्वाभावस्य व्यभिचारधीदशायामपि प्रतियोगिसामान्यानधिकरणसत्त्ववन्निष्ठाभावप्रतियोगितानवच्छेदकं द्रव्यत्वाभावत्वमित्याकारकव्यापकताज्ञानादनुमित्यापत्तिरेवात्रातिव्याप्तिशब्दार्थः । वस्तुतो द्रव्यत्वाभावस्यापि न प्रागुक्तव्याप्यवृत्तित्वमिति ध्येयम् । प्रथमसाध्येऽतिव्याप्तिं ग्राहयति साध्याभाववत इति । तत्प्रतियोगीति । तस्य संयोगात्मनः साध्याभावस्य यः प्र-

साध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषाभाववत्वात् नि-
त्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च
स्वाभावाभावात्मकस्य विशिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरे-

---

तियोगी संयोगविशेषाभावस्तद्वत्वादित्यर्थः। द्वितीयेऽतिव्याप्तिं योज-
ति नित्यत्वादीति। नित्यत्वादिविशिष्टं यद्द्रव्यत्वं तदभावात्मको यः
साध्याभावस्य प्रतियोगी तदधिकरणत्वात् साध्याभाववतो द्रव्य-
स्येति पूर्वेणाऽन्वयः। ननु विशिष्टद्रव्यत्वाभावो न द्रव्यत्वस्वरूपस्य
साध्याभावस्य प्रतियोगी किन्तु नित्यवृत्तित्वविशिष्टद्रव्यत्वस्यैवेति
द्रव्यत्वं प्रतियोगिव्यधिकरणमेवेत्यत आह स्वाभावेति। स्वं नि-
त्यवृत्तित्वविशिष्टद्रव्यत्वम्। न च नित्यत्वविशिष्टद्रव्यत्वाभाव-
स्याऽभावो न नित्यवृत्तित्वविशिष्टद्रव्यत्वं विशिष्टस्यानतिरि-
क्ततया जन्यद्रव्येऽपि नित्यवृत्तित्वविशिष्टद्रव्यत्वस्याभावो नास्तीति
प्रतीतिप्रसङ्गात् किन्तु नित्यैकत्वादिकमेवेति नातिव्याप्तिरि-
ति वाच्यम्। विशिष्टाधिकरणतायाः प्रतीतिनियामकतयै-
वातिप्रसङ्गभङ्गे द्रव्यत्वमपेक्ष्य नित्यानन्ततत्संख्यापरिमाणादौ
तादृशाभावत्वकल्पनायां गौरवात् अभावाभावस्यैव प्रतियोगित्व-
मिति सिद्धान्तप्रवादाच्च। नन्वेवमपि निखिलाभावस्यैव स्वाश्रय-
तत्तद्व्यक्तिवृत्तित्वविशिष्टं यत्स्वं तदभावात्मकस्वप्रतियोगिना सह
समानाधिकरणत्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव नातिव्या-
प्तिः एकव्यक्तिमात्रवृत्तीनां गुणाद्यात्मकाभावानामपि पूर्वक्षणवृत्ति-
त्वविशिष्टस्य स्वस्य योभावस्तादृशप्रतियोगिना सार्द्धं सामानाधि-
करण्यात्। नच वक्ष्यमाणखण्डशः प्रसिद्ध्या गगनाभाव एव प्रति-
योगिव्यधिकरणः, तस्यापि नित्यवृत्तित्वविशिष्टो यो गगनाभावस्तद-
भावात्मकेन स्वप्रतियोगिना समं समानाधिकरणत्वात् गगनाभावस्यैव
संयोगादिसम्बन्धेनाभावत्वावच्छिन्नाभावतया खण्डशः प्रसिद्ध्यापि
तस्य प्रतियोगिव्यधिकरणत्वासम्भवाच्च। एतेन नित्यत्वादिविशि-
ष्टस्य गगनाद्यभावस्य योभावस्तदभावत्वं न गगनाभावस्य, तस्य के-
वलान्वयितया जन्येऽपि नित्यवृत्तित्वविशिष्टस्य गगनाभावस्याभावो
नास्तीति प्रतीतिप्रसङ्गात् किं तु नित्यत्वादेरेव तथात्वमित्युक्तावपि

कात् । तृतीये कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः । साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्याऽऽत्मनस्तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात् ।

---

न निस्तार इति चेत् । अत्र नव्याः यथाश्रुतस्य प्रागुक्तक्रमेण प्रतियोगिव्यधिकरणाभावस्याप्रसिद्ध्या वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः स्यादतो यत्किञ्चित्स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यत्साधनाधिकरणं तन्निष्ठाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव लक्षणे प्रवेशनीयं तथा च सद्धेतुस्थल इव द्रव्यत्वाभाववान् सत्वादित्यत्रापि संयोगेन घटाद्यभाव एव प्रतियोगिव्यधिकरणः तदीयं हि घटनिष्ठप्रतियोगित्वं यादृशसंयोगसम्बन्धेनावच्छिन्नं तादृशसंयोगसम्बन्धेन साधनवता द्रव्यस्य तदीयप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वमक्षतमेव । न चैवमपि तदीयस्य साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वस्याप्रसिद्ध्या न दोषसङ्गतिः, पूर्वक्षणवृत्तित्वादिविशिष्टस्य घटाद्यभावस्याभाव एव तत्प्रसिद्धेरित्याहुः । स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिसामान्यानधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्यं यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाव इत्यग्रिमलक्षणाभिप्रायेणेदम्, संयोगेन घटाभावस्यैव प्रतियोगिवैयधिकरण्यसौलभ्यादित्यपि वदन्ति । प्राचां मते संयोगसामान्याभावसाध्यकमात्मत्वं विरुद्धमतः कपिसंयोगसामान्याभाव उक्तः । वृक्षादावुत्पत्तिकालावच्छेदेन गुणसामान्याभावसत्वाद् वृक्षत्वादिकं परित्यज्यात्मत्वं हेतुरुक्तः । यद्यपि वृक्षादेः स्वसमवेतकपिसंयोगप्रतियोगिनः समवेतसामान्याभावस्य द्रव्यमात्रसमवेताभावस्य चानधिकरणत्वादवृक्षत्वादेरपि हेतुतायामव्याप्तिः सम्भवत्येव, तथापि सत्ताद्रव्यत्वयोरेव समवेताभावद्रव्यमात्रसमवेताभावयोरभावत्वं लाघवान्न तु कपिसंयोगाद्यात्मकसमवेतमात्रस्य तथात्वं गौरवादित्याशयः । गुणसामान्याभावस्य संयोगप्रतियोगित्वमाविष्कर्तुं गुणानामित्युक्तम् । तत्प्रतियोगितेति । कपिसंयोगीयप्रतियोगितावच्छेदके-

मैवम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः

---

स्यर्थः । न च गुणसामान्याभावस्याभावो द्रव्यत्वमेव लाघवान्न गुणो गौरवादतः संयोगप्रतियोगित्वं न गुणसामान्याभावस्येति वाच्यम् । घटादावुत्पत्तिदशायां गुणसामान्याभावस्यैव सत्वेन द्रव्यत्वस्य तदभावत्वासम्भवादभावाभावस्य प्रतियोगित्वनियमाच्चेति भावः।यादृशेति।तथा च गुणसामान्याभावनिष्ठप्रतियोगिताया अवच्छेदकं यद्गुणसामान्याभावत्वं हेतुमतस्तदवच्छिन्नानधिकरणत्वेऽपि कपिसंयोगाभावत्वस्य तादृशप्रतियोगितानवच्छेदकत्वात्तद्रूपेण साध्यतायामात्मत्वहेतौ नाव्याप्तिः । द्रव्यत्वाभाववान् सत्वादित्यादौ तु द्रव्यत्वाभावत्वावच्छिन्नानधिकरणत्वं यद्धेतुमतस्तन्निष्ठाभावस्य तादृशप्रतियोगितावच्छेदकमेव द्रव्यत्वाभावत्वमतो नातिव्याप्तिरिति भावः । न च वह्निमान् तत्पर्वतत्वादित्यादौ तत्तद्वह्निसंयोगसम्बन्धेन साध्यतायामव्याप्तिः तत्सम्बन्धावच्छिन्नघटाद्यभावप्रतियोगिनः तेन सम्बन्धेनाधिकरणाप्रसिद्धेरिति वाच्यम् । यत्प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्वं हेतुमतस्तेन सम्बन्धेन तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् घटत्वावच्छिन्नाधिकरणतासामान्यस्यैव तत्तद्वह्निनिरूपितसंयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेनाभावस्य हेतुमति सत्वेन तादृशसम्बन्धेन घटाद्यभावस्यैव प्रतियोगिव्यधिकरणत्वसम्भवात् । तादृशाभाववत्वं च हेतुमतो निरवच्छिन्नविशेषणतयैव वाच्यमतः कपिसंयोगाधिकरणत्वाभावस्य वृक्षवृत्तित्वेऽपि तत्साध्यक एतत्वादौ नाव्याप्तिः। अत्र प्रतियोगितावच्छेदकधर्मावच्छिन्नत्वं साध्यतावच्छेदकताघटकसम्बन्धेनैव ग्राह्यं तेनायःपिण्डस्य कालिकादिसम्बन्धेन यद्धूमत्वविशिष्टं तृणादिकं संयोगेन तस्याधिकरणत्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः । प्रतियोगितावच्छेदकताघटकसम्बन्धेन तदवच्छिन्नत्यनिवेशे तु प्रतियोगितानवच्छेदकत्वमित्यत्रावच्छेदकत्वं साध्यतावच्छेदकताघटकसम्बन्धेनैव ग्राह्यम् । अन्यथा विषयितासम्बन्धेन रूपत्वावच्छिन्नस्य ज्ञानादेः पृथिव्यादौ समवायेनाभावस्य सत्वात्

रूपवान् पृथिवीत्वादित्यादावव्याप्तिप्रसङ्गात् । वस्तुतः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं यत्प्रतियोगितावच्छेदकत्वं तन्निरूपितस्वरूपसम्बन्धेनैव निरुक्तप्रतियोगितावच्छेदकत्वस्याभावः साध्यतावच्छेदकधर्मे वक्तव्यः । तेन वह्निमान् धूमादित्यादौ यत्र वह्नित्वादिनिरूपितसमवायादिसम्बन्धेन वह्नित्वादेः साध्यतावच्छेदकत्वं तत्र तादृशसम्बन्धावच्छिन्नस्य प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्याप्रसिद्धावपि न क्षतिरिति ध्येयम् । अत्र यादृशप्रतियोगितावच्छेदकधर्मे तादृशप्रतियोगिताश्रयाधिकरणीभूतयद्यद्व्यक्तिनिष्ठाधिकरणतावच्छेदकत्वस्याऽधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तत्तद्व्यक्तिभेदकूटवत्वमेव यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्याऽर्थो बोध्यः । तेन धूमवदित्यादिप्रतीतेरवश्यक्लृप्ताभिः पर्वतत्वचत्वरत्वादितत्तद्धर्मविशिष्टतत्तद्धूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेवोपपत्तौ धूमत्वाद्यखण्डधर्मावच्छिन्नाधिकरणतायां मानाभावात् धूमादिसामान्याभावप्रतियोगितावच्छेदकं यद्धूमत्वादिकं तदवच्छिन्नाधिकरणत्वाप्रसिद्धावपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः धूमाधिकरणतत्तद्व्यक्तिभेदकूटवत्वमादायैव धूमसामान्याभावस्य प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यसम्भवादिति ध्येयम् । नन्वत्र प्रतियोगित्वं नातिरिक्तः पदार्थः प्रतियोगित्वादिकं तु स्वरूपसंम्बन्धविशेष इत्याद्युत्तरग्रन्थविरोधात् किं तु स्वरूपसम्बन्धविशेषः स च यदि प्रतियोगिस्वरूपः तदा वन्हिमान्धूमादित्यादौ सर्वत्रासम्भवः पटादिस्वरूपस्यैकस्यैव पटाद्यभावप्रतियोगित्वस्य पटत्वसमेवतत्वेज्ञयत्वावच्छिन्नतया तादृशावच्छेदकीभूतज्ञेयत्वावच्छिन्नस्य हेतुमति सत्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः । न च प्रतियोगितावच्छेदकस्वरूपमेव प्रतियोगित्वमित्यदोषः, समवायेन वह्नेः साध्यत्वे धूमादावतिव्याप्तिप्रसङ्गात् समवायावच्छिन्नवन्ह्यभावस्य वह्नित्वरूपं यत् प्रतियोगित्वं समवायवत्संयोगस्यापि तदवच्छेदकसम्बन्धतया स्वावच्छेदकीभूततादृशसम्बन्धेन साधनवतः प्रतियोग्यनधिकरणत्वाभावात् । प्रतियोगितावच्छेदकीभूतयत्किञ्चित्सम्बन्धेन प्रतियोग्यनधिकरणत्वोक्त्या तद्वारणे तु संयोगेन वह्निसाध्यके धूमादावव्याप्तिः समवायावच्छिन्नवन्ह्यभावस्यैव समवायेन प्रतियोगिव्यधिकरणस्य

तदनवच्छेदकत्वस्योक्तत्वात् । अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान् तत्र वर्त्त-

---

वह्नित्वस्वरूपं यत्प्रतियोगित्वं तस्यैव संयोगेनाप्यवच्छिन्नत्वादितिचेत् । अत्र वदन्ति प्रतियोगिस्वरूपं तदवच्छेदकस्वरूपं वा यत्प्रतियोगित्वं तदपि कस्यचिदभावस्य केनचिद्धर्मेण सम्बन्धेन वावच्छिन्नं व्यवहारबलान्न तु सर्वेण सम्बन्धेन धर्मेण वा, समवायावच्छिन्नवन्ह्यभावप्रतियोगित्वं न संयोगावच्छिन्नमित्यादिव्यवहारात् तथा च यदभावीययत्प्रतियोगितावच्छेदकसम्बन्धेन यदभावीययत्प्रतियोगितानिरूपितावच्छेदकीभूतधर्मावच्छिन्नासम्बन्धित्वं हेतुमतस्तदभावीयतत्प्रतियोगितानिरूपितावच्छेदकताशून्यत्वं साध्यतावच्छेदके निवेश्यमित्यदोषः तत्प्रतियोगितेत्यपहाय यादृशप्रतियोगितेत्यभिधानादेव तादृशार्थलाभात् । न च प्रतियोगितावच्छेदकरूपं यदि प्रतियोगित्वं तदा यदभावीययादृशप्रतियोगितावच्छेदकसम्बन्धेन तदभावीयतादृशप्रतियोगित्वावच्छिन्नस्यानधिकरणत्वं हेतुमत इत्येव सम्यक् प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशो व्यर्थ इति वाच्यम् । वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः हेतुमन्मात्रस्यैव वह्निधूमोभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वादित्यस्मद्गुरुचरणाः ॥ ग्राह्यसामानाधिकरण्यइति । परामर्शविषयसामानाधिकरण्य इत्यर्थः । सम्बन्धविशेषेणैव साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिस्तत्प्रतिबन्धकतयैव विरोधस्य हेत्वाभासत्वमिति मतेनेदम् । यदि च येन केनापि सम्बन्धेन साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिः स्वव्यापकसाध्यसम्बन्धितामात्रं वा व्याप्तिः व्यापकत्वदले साध्यसाधनयोः सम्बन्धविशेषप्रवेशनादेवातिप्रसङ्गभङ्गादिति विभाव्यते, तदा परामर्शेन साधनस्यानुमित्या च साध्यस्य ग्राह्यं यत्पक्षतावच्छेदकेन सार्द्धं सामानाधिकरण्यं तत्र प्रविष्टो यादृशः सम्बन्ध इत्यर्थो बोध्यः। धूमवान् वह्नेरित्यादौ महानसीयसंयोगेन सद्धेतौ संयोगमात्रेण हेतुमत्तामादायाव्याप्तिः एवं द्रव्यत्वसाध्यके घटान्नयोगिकसमवायेन सत्वादिहेतौ समवायमात्रेण तद्वत्तामादा-

मानत्वमभावस्य, साध्यस्य च यादृशः सम्बन्धः प्रविष्टस्तत्सम्ब-न्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्वं बोध्यम् । तेन धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगिताया धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः । यद्वा साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं हेतुमतो वक्तव्यम् । तथा च सम्बन्धभेदेन

---

यापीत्यतो यःसम्बन्ध इत्यपहाय यादृशःसम्बन्ध इत्युक्तम् । साध्यस्य चेति । ग्राह्यसामानाधिकरण्ये प्रविष्ट इत्यन्वयः । धूमाधिकरणे तत्तत्संयोगेन वन्ह्यभावसत्वाद्वन्हिमान् धूमादित्यादावव्याप्तिरतो यादृश इत्युक्तम् । तेन सम्बन्धेन यो हेतुमानित्यस्य फलमाह धूमसमवायीति । प्रतियोगिताया इति । अवच्छेदकत्वेपि वह्नित्वस्य न क्षतिरित्यन्वयः । साध्यस्य चेत्यादेः फलमाह धूमसंयोगीत्यादि । ननु तादात्म्येन गवादेः साध्यत्वे सास्नादावतिव्याप्तिस्तत्र साधनवान्निष्ठान्योन्याभावप्रतियोगितायाः साध्यतावच्छेदकतादात्म्यसम्बन्धावच्छिन्नत्वे मानाभावस्य स्वयमेव बौद्धाधिकारटिप्पण्यामुक्तत्वात् एवं धनी चैत्रत्वादित्यादौ वृत्त्यनियामकस्वामित्वादिसम्बन्धेन धनादेः साध्यतायामपि तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरत आह यद्वेति । यत्तु प्रतियोगितावच्छेदकसम्बन्धेन तद्वृत्त्यधिकरण्यं प्रवेश्य पुनः प्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षायां गौरवमतो यद्वेत्यादिकल्प इति । तन्न । सम्बन्धान्तरावच्छिन्नतत्तदनन्ताभावप्रतियोगितावच्छेदकभेदकूटघटितत्वेन यद्वेत्यादिकल्पस्यैव गुरुतरत्वादित्याहुः । सम्बन्धभेदेन साध्यतावच्छेदकसम्बन्धभेदेन । [ न चोक्तमतद्वय एव पर्वताद्यनुयोगिकसंयोगादिना वह्न्यादेः साध्यतायां तत्तद्धूमेऽव्याप्तिः तादृशप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यद्धिकरण तदन्यत्वस्य साध्यतावच्छेदकसम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्वस्य च हेतुमत्यसिद्धेरिति वाच्यम् । तादृशप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितविशेषणता-

प्रतियोगिता न विशेषणीया । एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवेशनीयं नत्वधिकरणत्वम् । तथा च धर्मिणोऽपि व्याप्यत्वं व्यापकत्वञ्च निर्वहति । तथा हि तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्त्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदकवह्नि-मत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे धूमव-तस्तादात्म्येन सम्बन्धित्वम् । एवं धर्मिणो धर्मव्याप्यत्वव्यापकत्वे

---

विशेषेण साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितवि-शेषणताविशेषेण वा तादृशप्रतियोग्यधिकरणत्वसामान्याभावस्यो-क्तत्वात् । अन्यथा कालिकादिसम्बन्धेन सर्वस्यैव हेतुमतः प्रतियो-ग्यधिकरणतावत्त्वात्प्रतियोग्यनधिकरणहेत्वधिकरणाप्रसिद्धेः ] न-नु सम्बन्धविशेषेण साध्यसाधनयोः सामानाधिकरण्यप्रवेशे तादा-त्म्येन हेतुसाध्यभावेऽव्याप्तिः तादृशसम्बन्धेन हेतुसाध्ययोरधिक-रणाप्रसिद्धेरत आह । एवं स्थित इति । सम्बन्धविशेषस्यात्र निवेशे स्थित इत्यर्थः । सामानाधिकरण्यादावित्यादिपदेन हेतुसामानाधिकर-ण्यप्रविष्टहेत्वधिकरणत्वस्य परिग्रहः । प्रयोजनमाह तथा चेति । ध-र्मिणोपीति । तादात्म्येन व्याप्यत्वं व्यापकत्वं च निर्वहतीत्यर्थः । अ-न्यथा तादात्म्येन हेतोः साध्यस्य चाधिकरणाप्रसिद्ध्या न तन्निर्वा-ह इति भावः । योन्योन्याभाव इति । योभाव इति वक्तुमुचितम् अन्योन्याभावत्वनिवेशो वैयर्थ्यादिति ध्येयम् । तदनवच्छेदकव-ह्निमत्वेति । वह्निमत्वं च वह्न्यधिकरणत्वं तच्चाधिकरणव्यक्तीनां भेदेप्यभिन्नमित्याशयेनेदम् । अत्र साध्यसाधनयोरिव तदीयसम्बन्ध-योरपि भेदेन व्याप्तिभेदात्तादात्म्येन हेतुसाध्यकस्थले हेतुनिष्ठा-भावाप्रतियोगिसाध्यतादात्म्यमेव व्याप्तिर्वक्तुमुचिता लाघवादिति वदन्ति । एवमिति । सामानाधिकरण्यादौ सम्बन्धित्वनिवेशे कृते इत्यर्थः । धर्मिण इति । वस्तुन इत्यर्थः । तथा च गौः सास्नावत्वा-द्वह्निमान् धूमवत इत्यादौ तादात्म्यसम्बन्धेन व्यापकता व्याप्यतापि सङ्गच्छत इति भावः । ननु तादात्म्येन धर्मिणो धर्मव्याप्यतायाम-

बोध्ये। अत एव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रो-क्तं सङ्गच्छते। यथा च यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टत्वज्ञाने यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयोर्विशिष्टानुमि-तिः तेन न धूमावयवे संयोगेन न वा समवायेन पर्वते वह्निधीः, तथैवावगतव्यापकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीत-व्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिध्यतीति। कथम-न्यथा समवायेन वह्निविरहिणि महानसे संयोगेन संयोगेन वा व-ह्निविरहिणि स्वावयवे धूमः समवायेन न निवर्त्तते, निवर्त्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते। तथा च तादात्म्यसम्बन्धेन जलादीनां व्याप्यत्वग्रहाद्व्यापकनिवृ-त्त्या तादात्म्येनैव तेषामभावः सिध्यति स एव चान्योन्याभावः। इत्थमेव च तादात्म्यात् वृक्षशिंशपयोर्व्याप्तिनिश्चय इति सङ्गच्छ-

---

पसिद्धान्त इत्यत आह अत एवेति। धर्मिणो धर्मव्याप्यत्वादेवेत्य-र्थः। तत्र तत्र। व्यतिरेक्यादिग्रन्थे। ननु समवायेन जलादौ पृथिवी-त्वाभावव्याप्यत्वपरतयैव तद्ग्रन्थसङ्गतिरित्याशङ्क्य तथा सति पृ-थिव्यां जलादिभेदसाधनार्थं तदुपन्यासो न स्यात् व्यापकताघटक-सम्बन्धावच्छिन्नव्यापकाभावेन व्याप्यताघटकसम्बन्धावच्छिन्नव्या-प्याभावस्यैव सिद्धेरित्यन्वयिदृष्टान्तपूर्वकं परिहरति यथा चेति। पक्षविशिष्टेति। पक्षविषयक इत्यर्थः। प्राचां मते पक्षविशेष्यकज्ञानस्ये-व पक्षप्रकारकज्ञानस्यापि कारणत्वात्। धूमावयव इति। न वह्नि-धीरित्यन्वयः। कथमिति। नियम उपपद्यत इति परेणान्वयः। महान-से संयोगेनेति। न निवर्तत इत्यन्वयः। न संयोगावच्छिन्नाभावोनु-मितौ भासत इति तदर्थः। निवर्तते चेति। धूम इति पूर्वेणान्वयः। तादात्म्येनैवेति। समवायेन व्याप्यतायान्तु समवायेन जलात्य-न्ताभाव एव सिद्ध्येदिति जलभेदसाधनार्थं तद्ग्रन्थावतारो न स्यादिति भावः। नन्वेतावतापि तादात्म्यसम्बन्धेन जलाभावः

ते। अत एव गोत्वत्वाद्यग्रहदशायां यत्र सास्नादिः सा गौरिति

---

सिद्धो न तु जलान्योन्याभाव इति तद्दोषतादवस्थ्यमत आह स एव चेति। धर्मिणो धर्मव्याप्यत्वे प्राचां संवादमुपन्यस्य धर्मिणो धर्मिव्याप्यत्वं तमाह इत्थमेव चेति। धर्मिणो धर्मव्यापकत्वे युक्तिमप्याह अत एवेति। धर्मिणो धर्मव्यापकत्वादेव चेत्यर्थः। नन्वियं गौरित्यनुमितिर्गवेतरावृत्तित्वरूपायाः शुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानात् समवायेन निरवच्छिन्नगोत्वसाध्यकैव भविष्यति साध्यवदन्यावृत्तित्वरूपाया अपि व्याप्तेरनुमितिहेतुत्वस्याग्रे वाच्यत्वादतस्तादृशानुमित्यनुरोधात् धर्मिणो धर्मव्यापकत्वस्वीकारोऽनुचित इत्यत उक्तं गोत्वत्वेति। गोत्वत्वं गवेतरावृत्तित्वं तथा च गवेतरावृत्तित्वरूपाया गोत्वव्याप्तेरज्ञानदशायामुत्पन्नाया इयं गौरित्यनुमितेर्गोत्वविधेयकत्वासम्भवाद्गोविधेयकत्वमेवेति तदनुरोधादवश्यं धर्मिणो धर्मव्यापकत्वं वाच्यमिति भावः। ननु गोः साध्यत्वेपि गोत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकव्याप्तिधियोनुमितिहेतुत्वात्तत्र च धर्मितावच्छेदकविधयैव गोत्वत्वग्रहस्यापेक्षितत्वात् तदग्रहे गोविधेयकानुमितिरप्यनुपपन्नेत्यत आह आदीति। आदिना पक्षधर्मतापरिग्रहः तथा च गवेतरावृत्तित्वव्याप्तेः सास्नाव्यापकतावच्छेदकताग्रहे धर्मितावच्छेदकतयोपस्थितिध्रौव्येपि तद्विशिष्टस्य यत्र न पक्षधर्मताधीस्तत्रैवायं गौरित्यनुमितेर्गोविधेयकत्वमावश्यकमितितदनुरोधेनैव तादात्म्येन व्यापकत्वं वाच्यमित्याशयः। यत्तु शुद्धगोत्वावच्छिन्नविधेयकानुमितिं प्रति गोत्वनिष्ठनिरवच्छिन्नविशेष्यताकमेव प्रतियोगितानवच्छेदकत्वज्ञानं हेतुरतो गोत्वत्वाग्रहेपि गोत्वे सास्नादिव्यापकतावच्छेदकत्वग्रहसम्भवाद्गोसाध्यकानुमितेर्नानुपपत्तिः। अभावलौकिकप्रत्यक्ष एवाधिकरणतावच्छेदकस्वरूपेण तदुपस्थितेर्हेतुत्वादिति मतम्। तत्तुच्छम्। व्यभिचारज्ञानाऽप्रतिबध्यतया तादृशव्यापकताग्रहस्यानुमित्यहेतुत्वात्। अन्यथा तुल्ययुक्त्या शुद्धगोत्वविधेयकानुमितिं प्रति निरवच्छिन्नगोत्वविशेष्यताकस्य प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावाप्रतियोगित्वज्ञानस्य हेतुत्वादयं गौरित्यनुमितेर्गोत्वत्वाद्यनुपस्थितावपि गोत्वरूपधर्मसा-

तादात्म्येन गोर्व्यापकत्वग्रहे सास्नादिना तादात्म्येन गौः तादा-त्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिध्यति । एवञ्च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वम्। वृत्त्यनियामकसंयोगमात्र-स्याभावप्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छेदकसम्ब-न्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वम-पि । तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात् ।

---

व्यकत्वस्य दुर्वारत्वापत्तेरिति दिक् । प्राञ्चस्तु गोतादात्म्यस्य सा-स्नाव्यापकत्वग्रहादेव गोस्तादात्म्येन सिद्धिसम्भवान्न तदनुरोधेन गोस्तादात्म्येन व्यापकत्वस्वीकारो युक्तः सम्बन्धगतव्यापकत्वग्रहादेव सम्बन्धिनोऽनुमितेर्मिश्रादिसम्मतत्वात् अत उक्तं गोत्वत्वाद्यग्रहदशा-यामिति, गोतादात्म्यत्वाद्यग्रहदशायामिति तदर्थ इत्याहुः।तच्चिन्त्यम्। गोत्वत्वाग्रहदशायामित्यस्य गोत्वत्वेनाग्रहो यस्मादिति व्युत्पत्त्या गो-त्वबाधनिश्चयदशायामित्यर्थः तथा च तदानीमियं गौरित्यनुमित्यर्थं धर्मिणो धर्मव्यापकत्वमवश्यं स्वीकार्यमित्यपि वदन्ति। गौरिति । सिद्ध्यतीति परेणान्वयः । गोर्व्यतिरेकादिति । तादात्म्येनेत्यनुषज्यते। एवं चेति । सामानाधिकरण्यादौ सम्बन्धित्वप्रवेशे चेत्यर्थः । सं-योगत्वेन संयोगमात्रस्य प्रतियोगितावच्छेदकसम्बन्धत्वे वृत्त्यनिया-मकसंयोगस्यापि तत्वं सर्वसिद्धमतो मात्रपदम् । सम्बन्धरूपत्व इति । अन्यथा तादृशप्रतियोगिताकाभावाप्रसिद्ध्या गगनादेः पृथि-वीत्वव्यापकत्वं दुर्घटमेव स्यादिति भावः । तादृशसम्बन्धस्य प्रति-योगितानवच्छेदकत्वेपि द्वितीयकल्पानुसारेण व्यापकत्वं सम्पादय-ति साध्यतावच्छेदकसम्बन्धेनेति । तथा च सम्बन्धान्तरावच्छिन्न-घटाद्यभावमादायैव लक्षणसमन्वय इति भावः।द्रव्यत्वस्य गगनासं-युक्तविभ्वन्तरे तद्व्यभिचारित्वात् हेत्वन्तरमाह पृथिवीत्वादीति । व्यापकत्वमिति । गगनादेरिति पूर्वेणान्वयः।[ननूत्पत्तिकाले जन्यस्य प्रलयकाले नित्यस्य पृथिवीमात्रस्य गगनाभाववत्वात् कथं तस्य पृ-थिवीत्वव्यापकत्वमत आह तदभाववतोपीति।गगनादेरभाववतोपीत्य-र्थः। संयोगेन।वृत्त्यनियामकसंयोगेन ।तत्सम्बन्धित्वात्।गगनादिस-

सिद्धिरपि तस्य तथैव । न तु वृत्तिनियामकसम्बन्धेन, तेनासम्ब-न्धित्वादव्यापकत्वाच्च । व्यक्तीभविष्यति चैतदुपरिष्टात् ॥ नन्वष्ट-द्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य विशेषणताविशेषेणा-

---

म्बन्धित्वात् ] नन्वेवं निरुक्तव्याप्तिज्ञानात् घटो गगनवानित्यनुमितिः प्रमा स्यादत आह सिद्धिरपीति । तथैव।वृत्त्यनियामकसंयोगेनैव।तथा च तादृशसम्बन्धेन गगनानुमितेः प्रमात्वमिष्टमेवेति भावः । तेनास-म्बन्धित्वादिति । येन सम्बन्धेन साध्यसामानाधिकरण्यं परामर्शे भासते तेनैव सम्बन्धेन साध्यानुमितेः फलत्वादिति भावः । सामा-नाधिकरण्यधियो हेतुत्वस्य तदंशे सम्बन्धविशेषनिवेशस्य वाऽनङ्गी-कारमतेप्याह अव्यापकत्वाच्चेति । तेनेत्यनुषज्यते । तथा च यादृ-शसम्बन्धेन साध्यस्य हेतुव्यापकत्वं गृह्यते तेनैव सम्बन्धेन साध्यसि-द्धिः फलमतो वृत्तिनियामकसम्बन्धेन साध्यस्य हेतुव्यापकत्वास-म्भवादेव न तेन साध्यस्य प्रमानुमितिरिति भावः । ननु वृत्तिनिया-मकसंयोगेनापि गगनस्य पृथिवीत्वादिव्यापकत्वं दुर्वारं तादृशस-म्बन्धेन गगनसम्बन्धस्याप्रसिद्ध्या गगनाभावस्य प्रतियोगिव्यधिकरण-त्वाभावात् तादृशाभावान्तरप्रतियोगित्वस्य च गगनादावसत्वादत आह व्यक्तीत्यादि । इदम् । वृत्तिनियामकसम्बन्धेन गगनादेरव्या-पकत्वम् । तथा च निरुक्तप्रतियोगिप्रतियोगिकत्वेत्यादिना वक्ष्यमाणं प्रतियोग्यसामानाधिकरण्यं वृत्तिनियामकसम्बन्धेन गगनाभावेपि स्थास्यतीति भावः ॥ कालिकसम्बन्धेन गोत्वादौ साध्ये घटादिकालो-पाधिमात्रवृत्तिघटत्वादिहेतौ नाव्याप्तिःभिन्नकालीनतत्तद्व्यक्तित्वाव-च्छिन्नाभावस्यैव घटादौ प्रतियोगिवैयधिकरण्यसम्भवादत उक्तमष्टद्र-व्यातिरिक्तेति । पृथिव्यादिचतुर्द्रव्यातिरिक्तेति तु ज्यायः गगनादेः कालत्वविरहादेव तद्व्युदासादिति ध्येयम् । कर्मात्मकखण्डकाल-स्यापि भिन्नकालीनतद्व्यक्तित्वावच्छिन्नाभावप्रतियोग्यनधिकरणस्य-प्रसिद्ध्या तन्मात्रवृत्तिस्पन्दत्वादिहेतौ नाव्याप्तिरतश्चरमं द्रव्यपदम् । तथाविधकालत्वादावप्युक्तादिशा नाव्याप्तिरतो मात्रपदम्। [ समवा-यसम्बन्धेन हेतुतालाभाय धर्मपदम् । अन्यथा कालिकेन महाकाल-

ऽव्याप्यवृत्ति किमपि व्यापकं न स्यात् । स्वावच्छेदकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्त्तमानस्याऽभावस्य प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य तेन सम्बन्धेन यत् प्रतियोगिसम्बन्धि तदन्यत्वस्य च कालेऽसम्भवात् । न च तादृशसम्ब-

---

त्वाद्यधिकरणघटादौ प्रतियोगिव्यधिकरणातीततत्तद्व्यक्तित्वावच्छिन्नाभावप्रसिद्ध्या नाव्याप्तिरिति ध्येयम् । ] तादृशधर्मस्य महाकालत्वादेः समवायादिना व्यापकत्वं संयोगाद्यव्याप्यवृत्तेः सुघटमित्यत उक्तं विशेषणतेति । कालिकविशेषणतेत्यर्थः। व्याप्यवृत्तिप्रमेयत्वादेः प्रतियोगिवैयधिकरण्याघटितमेव कालिकसम्बन्धावच्छिन्नव्यापकत्वं सम्भवतीत्यत उक्तमव्याप्यवृत्तीति।तादृशं साध्यं घटादिकं द्रव्यत्वादिकं च, तद्वतोऽपि कालस्य तदनधिकरणदेशावच्छेदेन कालिकसम्बन्धावच्छिन्नतदभाववत्वात् । नह्येवंविधो वाच्यत्वादिः तदनधिकरणदेशाप्रसिद्ध्या तदवच्छेदेन कालिकसम्बन्धावच्छिन्नवाच्यत्वाभावस्य कालेऽसम्भवादिति भावः । न स्यादिति । तथा च काले घटवान् महाकालत्वादित्यादौ व्याप्तिलक्षणाव्याप्तिरिति भावः। प्रथमविवक्षानुसारेण दोषं सङ्क्रमयति स्वावच्छेदकेति । प्रतियोगितावच्छेदकसम्बन्धेनेत्यर्थः।काले। महाकाले । तत्सम्बन्धावच्छिन्नत्वस्य । साध्यतावच्छेदकीभूतकालिकसम्बन्धावच्छिन्नत्वस्य असम्भव इति परेणान्वयः । द्वितीयविवक्षानुसारेणाह तेन सम्बन्धेनेति । साध्यतावच्छेदकीभूतकालिकसम्बन्धेनेत्यर्थः । ननु महाकालान्यत्वविशिष्टघटाभाव एव महाकाले प्रतियोगिव्यधिकरणः सुलभः । न चात्र विशेषणताविशेषशब्देन महाकालनिरूपितविशेषणताया एव विवक्षितत्वात्तादृशसम्बन्धेन निरुक्तप्रतियोगिवैयधिकरण्याप्रसिद्धैवोक्ताभावस्यापि प्रतियोगिवैयधिकरण्यासम्भव इति वाच्यम्। तथा सति कालमात्रवृत्तिधर्मस्य तादृशविशेषणतया किमपि व्यापकं न स्यादित्यस्यैव सम्यक्त्वेऽष्टद्रव्यातिरिक्तत्वाभिधानस्य सन्दर्भविरोधापत्तेः स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्वे तु इत्यग्रिमग्रन्थविरोधाच्च। महाकालीयविशेषणतया गगनादेर्वृत्तिमत्वेऽपि तादृशसम्बन्धसामा-

न्ये महाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकत्वविरहात् तादृशघटत्वावच्छिन्नाभावस्यैव निरुक्तप्रतियोगिव्यधिकरणत्वसम्भवेन पूर्वमतस्यैव सम्यक्त्वात् इति चेन्न । तदानीं महाकालान्यत्वविशिष्टो घटः कालोयं महाकालान्यत्वविशिष्टघटवानित्यादिप्रतीत्या महाकालस्यापि तत्तत्कालोपाध्यवच्छेदेन महाकालान्यत्वविशिष्टघटवत्वात् । अन्यथोक्तप्रतीत्या खण्डकाल एव विशिष्टघटवत्वावगाहने वस्तुमात्रस्यैव महाकालेऽसत्वप्रसङ्गात् इदानीन्तदानीमित्यादिप्रतीतिव्यतिरेकेण महाकालविषयिण्याः प्रतीतेः स्वरसतः कुत्राप्यसत्वात् । न चैवं खण्डकालस्याधिकरणत्वे मानाभावः पटध्वंसविशिष्टः कालः पटवदन्य इत्यादिप्रतीतेः प्रमात्वानुरोधेनैव खण्डकालस्यापि तथात्वादिति सिद्धान्तानुसारी पन्थाः । परे तु महानसीयवह्नित्वेन वह्निघटोभयत्वेन वाऽवच्छिन्नप्रतियोगिताकस्य धूमसमानाधिकरणाभावस्य प्रतियोगितावच्छेदकत्वं वह्नित्वेप्यस्तीत्यव्याप्तिभियाऽवश्यं साध्यतावच्छेदकाऽघटको यः साध्यवृत्तिधर्मः तदनवच्छिन्नैव हेतुसमानाधिकरणाभावप्रतियोगिता लक्षणे प्रवेशनीया प्रत्येकमुभयत्र पर्याप्तिसम्बन्धेनासतो धर्मस्य तादृशसम्बन्धेनोभयवृत्तित्वासम्भवेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वनिवेशायोगात्, एवं च प्रकृते महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्य प्रतियोगितायाः साध्यतावच्छेदकाघटकेन महाकालान्यत्ववैशिष्ट्यरूपधर्मेणावच्छिन्नत्वात्तादृशप्रतियोगिताकाभावमादाय न प्रतियोगिव्यधिकरणाभावस्य प्रसिद्धिसम्भावनापीति प्राहुः । तच्चिन्त्यम् प्रमेयवान् वाच्यत्वादित्यादौ हेतुसमानाधिकरणतादृशप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् । वस्तुतो यादृशप्रतियोगितावच्छेदकविशिष्टस्यानधिकरणत्वं हेतुमत इत्यत्रावच्छेदकवैशिष्ट्यमवश्यं साध्यतावच्छेदकताघटकसम्बन्धेनैव वाच्यम् । अन्यथा तप्तायःपिण्डस्यापि कालिकसम्बन्धेन यद्धूमत्वविशिष्टं वह्न्यादिकं संयोगसम्बन्धेन तदधिकरणतया धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः। एवं च यत्र समवायेन घटत्वविशिष्टस्य कालिकसम्बन्धेन साध्यता तत्र महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्य साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वमप्रसिद्धं स्वरूपसमवायाभ्यामेव तत्र तथा-

न्धेन हेत्वधिकरणीभूतयत्किञ्चिद्द्रव्यवृत्तिप्रतियोगितावच्छेदक-
विशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यम् । तथा चावृत्तिगगना-
द्यभावद्वारिकैव तत्सिद्धिः । सत्ताद्यधिकरणकर्मादौ समवायेन
ज्ञानसामान्यस्य चावृत्तेर्नातिप्रसङ्गः भूतत्वमूर्त्तत्वोभयत्वविशिष्ट-

---

त्वात् विशिष्टनिरूपितसमवायानभ्युपगमाद्तस्तादृशाभावमादाय न
प्रसिद्धिसम्भव इति ध्येयम् । केचित्तु साध्यसाधनभेदेन व्याप्तेर्भे-
दाद्विशिष्टसाध्यकस्थल एव यादृशप्रतियोगितावच्छेदकावच्छिन्नान-
धिकरणत्वं हेतुमत इति वक्तव्यम् अविशिष्टसाध्यकस्थले तु यादृ-
शप्रतियोगिताश्रयानधिकरणत्वं हेतुमत इत्येव लाघवात् वक्तव्यं
तथा च शुद्धघटस्य साध्यतायां महाकालान्यत्वविशिष्टघटाभावोपि
प्रतियोगिसमानाधिकरण एव, प्रतियोगिता च प्रतियोगितावच्छेद-
कधर्मस्वरूपैव लाघवात् न तु प्रतियोगिस्वरूपा तेषां नानात्वेन गौर-
वादतो नैकप्रतियोग्यनधिकरणतामादाय संयोगि एतत्वादित्यादा-
वव्याप्तिरित्याहुः । तच्चिन्त्यम् । कालो घटवान् महाकालत्वादित्यादा-
वव्याप्तिवारणार्थमेवाविशिष्टसाध्यकस्थलेपि प्रतियोगितावच्छेदका-
वच्छिन्नानधिकरणत्वप्रवेशस्य प्रामाणिकतया गौरवस्याकिञ्चित्कर-
त्वादिति । सार्वभौममतमाशङ्क्य निराचष्टे न चेति । वाच्यमिति
परेणान्वयः । तादृशसम्बन्धेनेति । साध्यतावच्छेदकसम्बन्धेनेत्यर्थः।
इदं चावृत्तीत्यस्य प्रतियोगिन्या वृत्त्यान्वितम्।तादृशपदस्य प्रतियोगि-
तावच्छेदकसम्बन्धपरत्वे पुनरग्रे प्रतियोगिता साध्यतावच्छेदकस-
म्बन्धावच्छिन्ना ग्राह्या । तादृशसम्बन्धेनेत्यस्य फलमाह सत्त्वादी-
ति । विषयताया वृत्त्यनियामकत्वमते सत्त्ववति घटादौ
ज्ञानाभावस्य सहजत एव प्रतियोगिवैयधिकरण्यं सम्भवतीत्यत:
संयोगसामान्यस्य चेति। नातिप्रसङ्ग इति । ज्ञानवान् संयोगवान् वा
सत्त्वादित्यादौ नातिप्रसङ्ग इत्यर्थः । सत्तावद्वृत्तित्वसामान्याभाव-
स्य संयोगादावभावादुक्तातिव्याप्तिवारणमेव यत्किञ्चिदित्यस्यापि
प्रयोजनमित्यवधेयम् । प्रतियोगितावच्छेदकविशिष्टेत्यस्य फलमाह
भूतत्वेत्यादि । स्वयं मनसः खण्डनात् भूतत्वमूर्तत्वोभयसाध्यकमूर्त-

गुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकन्तु न मनोगुणादिवृत्ति संयोगसामान्यन्तु न किञ्चिद्‌द्रव्यांवृत्तीति वाच्यम् । विशिष्टस्यानतिरिक्तत्वात् । समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः जातिमन्निष्ठतादृशाभावप्रतियोगिताया जातित्वेनानवच्छेदात् जातिशून्ये च तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः, संयोगादिसाध्यकगुणकर्मान्यत्वादौ चातिव्याप्तिः अद्रव्ये हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः द्रव्ये च संयोगादेरपि वृत्तेः । मैवम् ।

---

त्वस्य सद्धेतुतामाशङ्क्याह गुणकर्मान्यत्वेत्यादि । विशिष्टान्तद्वयं मनोगुणयोः क्रमेणान्वितम् । इदं च विशिष्टस्यानतिरिक्तत्वं विशिष्टधर्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वमित्यभ्युपेत्य । अन्यथा [सार्वभौममते] उभयत्वस्यैकविशिष्टापरत्वरूपत्वे भूतत्वमूर्तत्वोभयगुणकर्मान्यत्वविशिष्टसत्त्वयोरतिरिक्ततया तयोः सहजत एव मनोगुणाद्यवृत्तितया प्रतियोगितावच्छेदकविशिष्टेत्यभिधानमसङ्गतं स्यादिति ध्येयम् । सामान्यपदस्य फलमाह संयोगसामान्यं त्विति। तथा च संयोगी द्रव्यत्वादित्यादावव्याप्तिवारणार्थमेव सामान्यपदमिति भावः । विशिष्टस्येति । विशिष्टनिरूपिताधेयत्वस्येत्यर्थः । तथाच विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरिति भावः । ननु तादृशसम्बन्धावच्छिन्नयत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपकतानवच्छेदकप्रतियोगितावच्छेदककत्वं सामान्यकान्तेन विवक्षितमतो नोक्तदोष इत्यत आह समवायेनेति । ननु समवायेन जातेर्व्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैयधिकरण्यमेव न देयं देयं चाव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौ साध्यतावच्छेदके व्याप्यवृत्तितानवच्छेदकत्वविशेषणमतो न तत्रत्यलक्षणस्यातिव्याप्तिरत आह संयोगादीति [ गुणकर्मान्यत्वेति । एकैकोपादाने तत्र प्रतियोगिवैयधिकरण्यं प्रसिद्धमत उभयोपादानम् । अद्रव्ये गुणादौ समवायेन वृत्तेः प्रसिद्धेरत आह । हेतुमतीति ।] अत्र विशिष्टनिरूपिताधेयत्वस्यातिरिक्तत्वोपगमे स्वप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववद्धेत्वधिकरणयत्किञ्चिद्व्यक्तिवृत्तित्वसामान्यकत्वस्य

साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात्। धूमसंयोगे वह्न्यधिकरणायोगोलकानुयोगिकत्वस्य

---

विवक्षणान्नोक्तदोष इत्यस्मद्गुरुचरणाः। नव्यास्तु साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणयावद्धेत्वधिकरणको यो यस्तदन्यत्वं प्रतियोगिवैयधिकरण्यं वाच्यमतो गगनाभावमादायैव प्रसिद्धेर्न कोपि दोषः। न चैवं यद्यत्सम्बन्धेन यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तत्तत्सम्बन्धान्यसाध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद्व्याप्तिरस्तु तथा च घटवान् महाकालत्वादित्यादौ समवायेन घटाद्यभावोपि प्रतियोगिव्यधिकरणः सम्भवतीति वाच्यम्। घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासम्भवात्। [ तादात्म्येन तथाविधानधिकरणत्वसम्भवेपि दधित्वविशिष्टप्रमेयवान् अन्त्यावयविभिन्नस्थूलदधित्वादित्यादावव्याप्तेः ] इति प्राहुः। तादृशसम्बन्धसामान्य इत्यस्य पूर्ववदर्थो बोध्यः। कुत्रचित्साध्यतावच्छेदकसम्बन्धसामान्य इत्येव पाठः। विवक्षितत्वादिति। अभावान्तमूलग्रन्थेनेत्यादिः। तथा च साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तादृशप्रतियोगितानवच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः। सम्बन्धसामान्य इत्युक्तौ कालिकसम्बन्धे धूमप्रतियोगिकत्वायःपिण्डानुयोगिकत्वोभयसत्वाद्धूमवान् वह्नेरित्यादावतिव्याप्तिरतः साध्यतावच्छेदकेति। समवायिनः संयोगेन साध्यतायां जातिमत्त्वादावतिव्याप्तिः साध्यतावच्छेदकीभूतसमवायात्मकधर्मे समवायित्वावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणगुणाद्यनुयोगिकत्वोभयसत्वेन साध्याभावस्य लक्षणाघटकत्वादतः सम्बन्धपदम्। यद्धर्मावच्छिन्नसंसर्गताकप्रकृतसाध्यकानुमितिः फलं तद्धर्मावच्छिन्नसम्बन्धसामान्य इति तु फलितार्थः। घटीयसंयोगे पर्वतीयसंयोगे वा हेतुमन्महानसानुयोगिक-

त्ववह्नित्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरतः प्रथमं सामान्यपदम् । तथा च महानसीयवह्निसंयोग एव तादृशोभयाभावविरहान्नाव्याप्तिः । संयोगसामान्य एव हेतुमदयोगोलकानुयोगिकत्वधूमत्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्त्वाद्धूमवान् वह्नेरित्यादौ नातिव्याप्तिः । संयोगसामान्य एव समवायनिष्ठपर्वतानुयोगिकत्वस्य वह्नित्वावच्छिन्नप्रतियोगिकत्वस्य च द्वयोरभावसत्त्वात्तथैवाव्याप्तिरतः सामान्योभयेति । सामान्यपदमुभयत्रान्वितमिति भावः । तादृशोभयाभावश्च स्वरूपसम्बन्धेन बोध्यः तेन समवायादिना तदुभयाभावस्य सम्बन्धमात्रे सत्त्वेपि सद्धेतौ नाव्याप्तिः । एतद्घटवान् कालान्तरीयतद्घटत्वादित्यादौ एतद्घटत्वावच्छिन्नप्रतियोगिकत्वविशिष्टतद्घटानुयोगिकत्वाप्रसिद्धेरभावान्तरमादायातिव्याप्तिः गगनप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वाप्रसिद्ध्या गगनाभावमादाय प्रकृताव्याप्तिवारणासम्भवश्च स्यादतो निरुक्तप्रतियोगिकत्वविशिष्टयत्किञ्चिद्धेत्वधिकरणानुयोगिकत्वसामान्याभावं परित्यज्य तदुभयसामान्याभावः उक्तः । न च यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वविशिष्टसम्बन्धसामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धत्वस्य तथाविधसम्बन्धसामान्ये वा यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य व्यतिरेकः तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदकस्य कथं नोक्तमिति वाच्यम् । द्रव्यवान् प्रमेयत्वादित्यादौ संयोगेन साध्यतायामतिव्याप्त्यापत्तेः प्रमेयानुयोगिकसंयोगसामान्यस्यैव द्रव्यत्वावच्छिन्नप्रतियोगिकत्वेन साध्याभावस्य लक्षणाघटकत्वादिति ध्येयम् । एवं च कालिकसम्बन्धसामान्ये महाकालानुयोगिकत्वसत्त्वेपि गगनप्रतियोगिकत्वविरहाद्गगनाभाव एव घटवान् महाकालत्वादित्यादौ प्रतियोगिव्यधिकरणतया प्रसिद्ध इति भावः । ननु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वं यदि तद्वृत्तित्वं तदा धूमवान् वह्नेरित्यादावतिव्याप्तिः धूमप्रतियोगिकस्यापि संयोगस्य कालिकसम्बन्धेनायोगोलकवृत्तित्वात् । यदि च साध्यतावच्छेदकसम्बन्धस्य संसर्गतानियामको यः सम्बन्धस्तेन हेत्वधिकरणवृत्तित्वमेव तदनुयोगिकत्वं, तदा सयोगेन द्रव्यस्य साध्यतायां द्रव्यजात्य-

चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्व-

---

भ्यतरत्वादावतिव्याप्तिः जातौ समवायेन वृत्त्यप्रसिद्धेः। न च साध्य-तावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये निरुक्तोभयाभाव-वत्वं विवक्षितं तत्र च हेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेनैव वा-च्यमिति साम्प्रतम्। अत एवेत्यादिवक्ष्यमाणग्रन्थासङ्गतिप्रसङ्गात्। समवायस्यैकत्वेपि तदवच्छिन्नद्रव्यत्वाधिकरणतायां निरुक्तोभयाभा-वसत्वेन द्रव्यं जातेरित्यादावतिव्याप्त्यभावादिति चेन्न। संयोगः पर्वते वह्नेः सम्बन्धो न तु वह्नौ पर्वतस्येत्यादिप्रतीत्या हि किञ्चित्प्रतियो-गिककिञ्चिदनुयोगिकसम्बन्धत्वमनुभवसिद्धं कुत्रचिदेव संयोगादौ न तु सर्वत्र तच्च स्वरूपसम्बन्धविशेषोतिरिक्तो वेत्यन्यदेतत् तथा च साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिकसम्बन्धत्वहेत्व-धिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्य वि-वक्षणाद्धूमसंयोगस्यायोगोलकानुयोगिकसंसर्गत्वविरहादेव नातिप्र-सङ्गः तत्र यथार्थविशिष्टधीनियामकस्यैव तदनुयोगिकसम्बन्धत्वा-त्। एतेन वह्निमान् वह्निरूपादित्यादावतिव्याप्तिः पर्वतवह्निसंयोग एव वह्निप्रतियोगिकत्वहेत्वधिकरणीभूतवन्ह्यनुयोगिकत्वोभयाभावविर-हेण वह्निसामान्याभावस्य लक्षणाघटकत्वादित्यपास्तम्। पर्वतवह्नि-संयोगस्य हेतुमद्वह्निवृत्तित्वेपि वन्ह्यनुयोगिकसम्बन्धत्वविरहेण तत्र तादृशोभयाभावसत्वात्। इदन्त्ववधेयम्। यत्रैकसंयोगव्यक्त्या यत्प-दार्थयोः परस्परं विशिष्टधीः प्रमा तत्र तयोरेकस्मिन्संयोगेन साध्ये तदीयरूपादौ व्यभिचारिण्यतिव्याप्तिः तदुभयसंयोगस्य निरुक्तोभ-याभावविरहादिति। यत्किञ्चिदित्यस्य फलमाह धूमसंयोग इति। अन्यथा वन्ह्यधिकरणमहानसानुयोगिकत्वधूमप्रतियो-गिकत्वोभयस्यैव धूमसंयोगे सत्त्वेन धूमाभावस्य प्रतियोगि-वैयधिकरण्याभावाद्धूमवान् वह्नेरित्यादावतिप्रसङ्गः स्यादिति भा-वः। षष्ठ्यन्तत्रयं विरहादित्यन्वयि। निरुक्तपदस्य फलतः फल-माह। चैत्रान्यत्वेति। निरुक्तपदानुक्तौ चैत्रान्यत्वविशिष्टैतद्द-ण्डवानेतद्दण्डादित्यत्र चैत्रवृत्त्येतद्दण्डसंयोग एव चैत्रान्य-त्वविशिष्टैतद्दण्डाभावप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतचैत्रा-नुयोगिकत्वोभयाभावविरहात्तादृशदण्डाभावस्य लक्षणाघटकतयाऽ-

स्य गुणकर्मान्यत्वविशिष्टसत्तासमवाये च जात्यधिकरणगुणानु-

---

तिव्याप्तिः स्यात् तदुपादाने तु चैत्रान्यत्वविशिष्टैतद्दण्डत्वावच्छिन्नप्रतियोगिकत्वस्याभावादेव तत्रोभयाभावसम्भव इति नातिव्याप्तिरिति भावः । यदि च प्रतियोगिता प्रत्याश्रयं नानैव न त्वेकेति मतं तदा चैत्रान्यत्वविशिष्टदण्डत्वावच्छिन्नं यच्चैत्रावृत्तिदण्डनिष्ठं प्रतियोगित्वं तदाश्रयप्रतियोगिकत्वहेत्वधिकरणीभूचैत्रानुयोगिकत्वोभयाभावस्य संयोगसामान्य एव सत्वान्निरुक्तपदं विनापि नातिव्याप्तिः सम्भवतीति तन्मतसाधारण्येनातिव्याप्तिरक्षणार्थमुक्तमेतदिति । [ यद्यनुयोगिता प्रत्याश्रयं नानैव न त्वेकेति मतं तदा ] दण्डसामान्यस्य हेतुत्वे एतद्दण्डप्रतियोगिकसंयोगसामान्य एव दण्डान्तराधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभावादेवोभयाभावसत्वादतिव्याप्तिविरहः स्यादतो हेतावेतदिति । संयोगेन साध्यतायां निरुक्तपदव्यावृत्तिमुक्त्वा समवायेन साध्यतायां तामाह गुणकर्मान्यत्वेति । इदं च समवायस्य नानात्वमभिप्रेत्य तस्यैकत्वे तु तत्र गुणानुयोगिकत्वाविशिष्टसत्ताप्रतियोगिकत्वोभयसत्वेनातिव्याप्तिताद्वस्थ्यात् । यद्यपि यादृशप्रतियोगितावच्छेदकावच्छिन्नेत्याद्युक्तौ वह्निधूमोभयवान् धूमादित्यत्राव्याप्तिः संयोगसामान्य एव वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वधूमाधिकरणपर्वतानुयोगिकत्वोभयाभावसत्वात् । न च निरुक्तप्रतियोगितावच्छेदकावच्छिन्नवत्ताप्रमायां सांसर्गिकविषयत्वमेव निरुक्तप्रतियोगिकत्वं वक्तव्यं तच्च पर्वते वह्निधूमयोः प्रत्येकसंयोगस्याप्यस्तीति नाव्याप्तिः अन्यथा पर्वतः संयोगेन वह्निधूमोभयवानित्यादिप्रमाया दुर्घटत्वापत्तेरिति वाच्यम् । तथासत्यत एवेत्यादिना वक्ष्यमाणाया वह्निधूमोभयवान् वह्नेरित्यत्राप्रतिव्याप्तेरसङ्गत्यापत्तेः वह्निधूमोभयवत्ताप्रमानियामकसंयोगमात्रस्यैव हेत्वधिकरणीभूतायोगोलकानुयोगिकत्वाभावेन वह्निधूमोभयत्वावच्छिन्नाभावमादायैवातिव्याप्त्यसम्भवात् । तथापि साध्यसाधनभेदेन व्याप्तेर्भेदात् व्यासज्यवृत्तिधर्मेण साध्यतायां निरुक्तपदमपहाय यादृशप्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावस्यैव प्रवेशान्नोक्तस्थलाव्याप्तिः । न चैवमुभयत्वेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः, तद्दोषस्य अत एवेत्यादिना वह्निधूमोभयवान् वह्नेरित्यादौ प्र-

योगिकत्वस्य विरहान्नातिप्रसङ्गः । स्वरूपसम्बन्धेन गगनादेर्वृत्ति-
मत्त्वे तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासा-

———

न्यथकृतैवाग्रे वक्ष्यमाणत्वादिति । वस्तुतः सम्बन्धस्यैकप्रतियोगि-
कत्वापरानुयोगिकत्वनियमेन वह्निधूमोभयत्वावच्छिन्नप्रतियोगिक-
सम्बन्धत्वाप्रसिद्ध्यैव तदुभयत्वावच्छिन्नाभावस्य लक्षणाघटकत्वा-
न्नाऽव्याप्तिः अत एवाग्रे वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिर्दास्य-
ते । न च वह्निधूमोभयत्वावच्छिन्नप्रकारित्वादावेव तादृशोभय-
त्वावच्छिन्नप्रतियोगिकसम्बन्धत्वप्रसिद्धिसम्भवः, प्राचां मते प्रका-
रित्वादौ सम्बन्धत्वाभावात् । विशिष्टधीनियामकस्यैव तथात्वा-
दिति ध्येयम् । न चैवमपि घटवान्नित्यज्ञानत्वादित्यत्राऽव्याप्तिः विष-
यितासम्बन्धे गगनीयत्वनित्यज्ञानानुयोगिकत्वोभयसत्त्वेन गगनाभा-
वमादायापि प्रसिद्ध्यसम्भवादिति वाच्यम्।तादृशसम्बन्धेन घटादे-
र्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यस्याप्रवेशादिति
ध्येयम् । अत्र ब्रूमः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्या-
धिकरणतानिरूपितस्वरूपसम्बन्धेन यदभावप्रतियोगितावच्छेदका-
वच्छिन्नाधिकरणतासामान्याभाववत्वं हेतुमतस्तदभावप्रतियोगिता-
नवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैव सामञ्जस्ये निरु-
क्तप्रतियोगिकत्वेत्यादिखंडशः प्रसिद्धिर्विफला कालो घटवान् महा-
कालत्वादित्यादौ कालिकसम्बन्धावच्छिन्नघटाधिकरणतानिरूपित-
स्वरूपसम्बन्धेन पटत्वावच्छिन्नाधिकरणत्वसामान्याभावस्यैव हेतु-
मति सत्त्वेन पटत्वावच्छिन्नाभावस्यैव निरुक्तप्रतियोगिव्यधिकरणस्य
सुलभत्वात्।[इति ध्येयम्] एवं यादृशप्रतियोगितावच्छेदकावच्छिन्नप्र-
तियोगिकसम्बन्धसामान्ये साध्यतावच्छेदकसम्बन्धत्वहेत्वधिकरणी-
भूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्तादृशप्रतियोगिता
कथं नोक्तेति चिन्तनीयम् । कालस्य जगदाधारत्वप्रवादमनुसृत्याह
स्वरूपसम्बन्धेनेति । कालिकविशेषणतयेत्यर्थः । गगनादेरवृत्तित्व-
प्रवादस्तु संयोगसमवायपरः । तथा चोक्तप्रणाल्याऽपि गगनाभा-
वो न प्रतियोगिव्यधिकरण इति घटवान् महाकालत्वादित्यादावव्या-
प्तिस्तदवस्थैवेति भावः । निरुक्तेति । प्रतियोगितावच्छेदकसम्बन्धेन

मान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्ब-

———

याद्दशप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वं हेतुमतस्ताद्दशप्रति-
योगितासामान्य इत्यर्थः । तथा च संयोगादिना घटाद्यभावमादा-
यैव घटवान्महाकालत्वादित्यत्र सङ्गतिः । घटाभावप्रतियोगितायां
धूमत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वेन धूमादे-
र्वह्न्यादिव्यापकत्वापत्तिवारणाय सामान्येति । तथा च धूमनिष्ठ-
ताद्दशप्रतियोगितायामेव तदुभयसत्त्वाददोषः । यत्सम्बन्धेति । स-
मवायिनः संयोगेन साध्यतायां घटत्वादिहेतावव्याप्तिः साधनवन्नि-
ष्ठस्य समवायेन संयोगिसामान्याभावस्य प्रतियोगितायां संयोगसम-
वायोभयावच्छेद्यतासत्त्वादतो धर्मसम्बन्धयोरुपादानम् । तथा च त-
दभावप्रतियोगितायां धर्मविधया समवायेन सम्बन्धविधया संयो-
गेन चाऽवच्छेद्यत्वाभावान्नाव्याप्तिरिति भावः । अत्र च क्वचिद्याद्द-
शसम्बन्धावच्छिन्नेत्यपि द्रष्टव्यम्।शब्दैक्यस्यानुपादेयत्वात् तेन धू-
मवति तत्तत्संयोगसम्बन्धेन वह्निसामान्याभावसत्त्वेपि नाव्याप्तिः त-
त्तत्संयोगाद्यवच्छिन्नप्रतियोगितायाः संयोगसामान्यानवच्छिन्नत्वात्
संयोगत्वस्य सम्बन्धविधयावच्छेदकतावच्छेदकत्व एव तथात्वात् ।
एवं यद्धर्मावच्छिन्नेत्यत्रापि क्वचिद्याद्दशधर्मावच्छिन्नेतिबोध्यं तेन द-
ण्डिमान् दण्डसंयोगादित्यादौ ताद्दशप्रतियोगितायां तद्दण्डावच्छेद्य-
त्वसंयोगावच्छेद्यत्वोभयाभावासत्त्वेपि नाव्याप्तिः । प्रमेयत्वावच्छेद्य-
त्वविशिष्टस्वरूपसम्बन्धावच्छिन्नत्वाप्रसिद्ध्या प्रमेयवान् वाच्यत्वादि-
त्यादावव्याप्तिरतो विशिष्टाभावमपहाय ताद्दशोभयाभाव उक्तः । न
च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीययद्धर्मावच्छिन्नप्रति-
योगितासामान्ये यत्सम्बन्धावच्छिन्नत्वाभावस्तत्सम्बन्धेन तद्धर्मा-
वच्छिन्नं व्यापकमित्यस्तु धर्मान्तरावच्छिन्नाभावाप्रवेशेन लाघवा-
दिति वाच्यम् । घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्या-
प्तेः। ताद्दशद्रव्यत्वभेदमादाय कथञ्चित्तत्र लक्षणसमन्वयेपि दधित्व-
विशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्राव्याप्तिः केनापि सम्बन्धेन
हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासम्भवात् । तत्रा-
पि दध्यन्तरानुयोगिकसमवायादिसम्बन्धेन हेतुमतः प्रकृतसाध्या-
नधिकरणत्वे तूक्तक्रमेणापि व्यापकत्वं सुवचमिति तु विभावनीय-

न्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् । समवायसम्बन्धेन

---

मिति । तेन सम्बन्धेनेति । न चैवं संयोगेनापि रूपस्य पृथिवीत्वव्यापकत्वापत्तिः तेन सम्बन्धेन रूपाभावप्रतियोग्यधिकरणाप्रसिद्धेरिति वाच्यम् । तथात्वेपि तेन सम्बन्धेन रूपसामानाधिकरण्याप्रसिद्धैव व्याप्तिलक्षणातिव्याप्तिविरहात् यद्धर्मेत्यत्र धर्मस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वेनापि विशेषणीयत्वाद्वा । न च वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकतया तत्सम्बन्धावच्छिन्नत्वस्याप्रसिद्धेः । तादृशसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वपक्ष एवैतन्निरुक्त्यादरात् । निरुक्तप्रतियोगितासामान्ये यत्सम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तत्सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वमिति तु न युक्तम् । वृत्त्यनियामकसम्बन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्त्यापत्तेः । यद्वा स्वावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नावच्छेदकताकत्वयत्सम्बन्धावच्छिन्नावच्छेदकताकत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं विवक्षितं वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभावेपि प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं सर्वसंमतमेव, चैत्रो न पचतीत्यादौ वृत्त्यनियामकानुकूलत्वसम्बन्धेन पाकविशिष्टायाः कृतेरभावस्य चैत्रादावन्वयदर्शनात् । व्यभिचारिणि तु साध्यवत्सामान्याभावप्रतियोगितायामेव तादृशोभयाभावविरहान्नातिव्याप्तिरिति तु नव्याः । ननु व्याप्यवृत्तिसाध्यकस्थलेप्युक्तक्रमेणैव व्यापकत्वं निर्वाच्यम् । अन्यथा दण्डिमानित्यादौ दण्डित्वादिप्रकारेण व्यापकत्वानुपपत्तेः तथा च प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः प्रमेयत्वावच्छिन्नत्वस्याप्रसिद्धेः । न च प्रकारित्वादौ तत्प्रसिद्धिः, प्रतियोगितानिष्ठाया एवावच्छेद्यतायाः प्रकृते निवेशनीयत्वात् अन्यथा प्रकारित्वप्रतियोगित्वसाधारणैकावच्छेद्यत्वविरहेण व्यभिचारिण्यतिव्याप्त्यापत्तेरत आह समवायेति । ननु स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्वेपि प्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धसा-

मेयसामान्याभावस्य सामान्यादौ सत्त्वान्मेयत्वादेरप्यभावप्रतियो-
गितावच्छेदकत्वं सुलभम् । अत एव समवायस्यैकत्वेन द्रव्यत्वा-
दिप्रतियोगिकत्वगुणाद्यनुयोगिकत्वोभयसत्त्वेऽपि द्रव्यं जातेरित्यादौ
वन्हिधूमोभयवान् वन्हेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियो-
गिकत्वविरहेऽपि च नातिव्याप्तिरित्यपि वदन्ति । प्रतियोगि-
त्वादिश्च स्वरूपसम्बन्धविशेषो न सम्बन्धत्वेन निविष्टः । सामा-

---

मान्ये तादृशोभयाभावविवक्षयैव सर्वसामञ्जस्ये कृतं विवक्षान्तरेण
घटवान् महाकालत्वादित्यत्र घटीयतादृशविशेषणतायां पटत्वावच्छि-
न्नप्रतियोगिकत्वविरहेण पटाभावस्यैव प्रतियोगिवैयधिकरण्यसम्भ-
वात्, कालः प्रमेयवान् महाकालत्वादित्यत्र च कालिकसम्बन्धेन प्रमे-
यसामान्यस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यस्यैवानुपादे-
यत्वेन निर्दोषादतः पूर्वकल्पे दोषान्तरमाह अत एवेति । यद्यपि सं-
योगमात्रस्यैव द्वित्वावच्छिन्नप्रतियोगिकत्वविरहाद्वह्निधूमोभयत्वा-
वच्छिन्नाभावमादायैव नातिव्याप्तिसम्भावना, तथापि वह्निधूमोभय-
वान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेपि
समवायस्यैकत्वेन द्रव्यत्वप्रतियोगिकत्वगुणानुयोगिकत्वोभयवत्त्वेन
द्रव्यं जातेरित्यादौ नातिव्याप्तिरिति योजना । विरहेपि चेति । च-
कारस्तु प्रामादिकं इति प्राञ्चः। वस्तुतस्तु संयोगस्य सम्बन्धमात्रस्य
द्वित्वावच्छिन्नप्रतियोगिकत्वाप्रसिद्धावपीत्यर्थः । तथा च सम्बन्ध-
मात्रस्यैकप्रतियोगिकापरानुयोगिकसम्बन्धत्वनियमेन वह्निधूमोभय-
त्वावच्छिन्नप्रतियोगिकसम्बन्धस्याप्रसिद्ध्या तादृशप्रतियोगिकत्वस्य
लक्षणाघटकत्वेपि वह्निधूमोभयवान् वह्नेरित्यादौ नातिव्याप्तिः।प्रकारि-
त्वादेः सम्बन्धत्वे मानाभावादिति तु प्रागेव प्रपञ्चितमस्माभिः ।
केचित्तु वह्नेरित्यत्र धूमादिति नातिव्याप्तिरित्यनन्तरं चाव्याप्तिर्वेति
पाठं कल्पयन्तो द्रव्यं जातेरित्यादावतिव्याप्तिं वह्निधूमोभयवान् धूमा-
दित्यत्र चाव्याप्तिमेव पूर्वलक्षणे दोषं सङ्गमयन्ति। ननु स्वरूपसम्ब-
न्धात्मकप्रतियोगित्वस्य विशिष्टधीजनकत्वरूपसम्बन्धताघटकनिय-
मघटितत्वादात्माश्रयत्वमत आह प्रतियोगित्वादिरिति । आदिना

नाधिकरण्येऽपि सम्बन्धः संयोगत्वादिनैव निविशते। दर्शितश्च नियमाघटितमपि सम्बन्धत्वम्। अभावत्वञ्चेदमिह नास्तीदमिदं न भवतीति प्रतीतिनियामको भावाभावसाधारणः स्वरूपसम्बन्धविशेषः। अतो नाऽभावसाध्यकव्यभिचारिण्यतिप्रसङ्गः। तदपि वा नोपादेयं प्रयोजनविरहात्। विषयतातत्त्वादिवत् प्रतियोगित्वाधिकरणत्वतत्त्वसम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येक देशिनः॥

---

ऽवच्छेदकत्वपरिग्रहः। न सम्बन्धत्वेनेति। प्रतियोगित्वादिधर्मान्तरप्रकारेण हेतुमन्निष्ठाभावीयत्वप्रकारेणैव वा तत्प्रवेशादिति भावः। संयोगत्वादिनैवेति। ननु प्रतियोगितात्वमपि स्वरूपसम्बन्ध एवेत्युक्तदोषतादवस्थ्यम् किं च वृत्त्यनियामकसम्बन्धेन हेतुतास्थले तेन सम्बन्धेन हेतुसम्बन्धित्वस्यावश्यं प्रवेश एवेत्यतः सम्बन्धत्वेन निवेशेपि न क्षतिरित्याशयेनाह। दर्शितं चेति। विशेष्यविशेषणत्वान्यविशिष्टधीविषयत्वमेव सम्बन्धत्वमिति भावः। भावभिन्नत्वरूपस्याभावत्वस्य प्रवेशे घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिरित्याह अभावत्वं चेति। इदमिहेत्यादि। इदं चात्यन्तान्योन्याभावत्वयोरभावत्वागर्भतामभिप्रेत्य। तयोस्तद्गर्भतायां त्वाह तदपि वेति। अभावत्वमपि वेत्यर्थः। अपेरभावोऽर्थः। अतिरिक्तविषयतापक्षस्य केन चित्स्वीकारात् दृष्टान्तता। तत्त्वादीति। विषयतात्वादीत्यर्थः। आदिना प्रकारित्वग्रहः। केचित्तु तत्वं तत्ता आदिना चेदन्त्वस्योपग्रहः तत्त्वेदन्त्वयोः पदार्थान्तरत्वं विना दुर्वचत्वात्तत्रैव पर्यवसानादित्याहुः। तत्त्वेति। प्रतियोगितात्वाधिकरणतात्वेत्यर्थः॥

समाप्तमिदं सिद्धान्तलक्षणप्रकरणम्।



# दीधित्या अवच्छेदकत्वनिरुक्तिः।

नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः। सम्भवति लघौ

---

## जागदीश्या अवच्छेदकत्वनिरुक्तिः॥

इह। अनवच्छेदकत्वमित्यत्र।अवच्छेदकत्वम्। अवच्छेदकत्वपदार्थः। विशिष्टसत्तात्वसमनियतस्य सत्तात्वस्य लघुनोपि न विशिष्टाभावस्य प्रतियोगितावच्छेदकत्वं गुणादावपि सत्ता नास्तीतिप्रतीतिप्रसङ्गात्, पृथिवीसमवेतत्वासमनियतस्यापि च समवेतत्वस्य पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वमनतिप्रसङ्गात्, एवं घटरूपत्वस्यासमनियतमपि रूपत्वं व्यधिकरणसंयोगादिसम्बन्धावच्छिन्नघटरूपाद्यभावस्य प्रतियोगितावच्छेदकमतः समनैयत्यमकिञ्चित्करम्

---

(१) अत्र अनवच्छेदकेत्यत्रेति पाठो युक्तः, तस्यैव पूर्वमुल्लिखितत्वात्। अत्रेदम्बोध्यम्। द्विविधावच्छेदकत्वानुगताऽवच्छेदकतात्वस्याऽभावेन स्वरूपसम्बन्धरूपमनतिरिक्तवृत्तित्वरूप वाऽवच्छेदकत्वं पक्षीकृत्य स्वरूपसम्बन्धविशेषत्वाभावे साध्ये क्रमशो बाधसिद्धी स्यातामित्यवच्छेदकत्वपदार्थत्वेन पक्षता जगदीशैरुक्ता। परमिदं यथाश्रुते, तथात्वेप्यवच्छेदकावच्छेदेन पक्षत्वे सामानाधिकरण्येन बाधस्य सामानाधिकरण्येन पक्षत्वे वा सामानाधिकरण्येन सिद्धेश्च प्रतिबन्धकयोर्जागरूकत्वात्। किन्तु स्वरूपसम्बन्धविशेषं पक्षीकृत्याऽवच्छेदकत्वपदप्रयोगप्रयोजकतात्पर्याविषयत्वस्य साध्यत्वमभिप्रेतम्। तत्र च व्यभिचारिण्यतिप्रसङ्गो हेतुः स च लक्षणगतव्यभिचारिहेतुत्ववृत्तित्वरूप· हेतुता च स्वाश्रयलक्षणघटकसाध्यतावच्छेदकांशविशेषणीभूताभावप्रतियोगित्वसंसर्गेण। अतिप्रसङ्गे च प्रमेयधूमत्वादीनामनवच्छेदकत्वरूपमतथात्वम्, तत्र च सम्भवति--तदभावादिति हेतुः। लघुधर्मनिरूपितावच्छेदकत्वनिष्ठसम्भवत्त्वप्रयुक्तगुरुनिष्ठतदभाव इति तु तदर्थः। अवच्छेदकत्वे सम्भवत्त्वञ्च स्वनिष्ठापादकताकापत्तिविशेष्यत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वरूपम्। लघुन्यपि द्रव्यत्वे प्रमेयधूमाभावप्रतियोगितावच्छेदकत्वे सम्भवत्त्वं नास्ति द्रव्यत्वं यदि प्रमेयधूमाभावप्रतियोगितावच्छेदकत्ववत्स्यात्तदा ह्रदवृत्त्यभावप्रतियोगितावच्छेदकं स्यादित्यापत्त्या स्वावच्छिन्नभेदासत्त्वात्, धूमत्व त्वापत्त्यभावेन तादृशभेदसत्त्वादवच्छेदकत्वं सम्भवदेव। सम्भवत्त्वस्य च गुरुनिष्ठावच्छेदकत्वाभावे स्वाश्रयवृत्तिलघुतावाधिकगुरुतावत्त्वसम्बन्धेन प्रयोजकता। एवञ्च कथञ्चिदपि साध्यहेत्वोर्न सामानाधिकरण्यक्षतिरित्येतादृशपक्षसाध्यहेतुभावेनानुमितावेव दीधितिकृता तात्पर्यमुन्नेयमिति दिक्।

धर्म्मे गुरौ तदभावात् प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वघ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् । नाप्यनतिरिक्तवृत्तित्वम् । प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रतिव्यक्ति भिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात् । न च

---

यस्यावच्छेदकत्वस्वीकारेऽतिप्रसङ्गाद्यभावः स एवावच्छेदक इत्याशयेनाह सम्भवतीति । अतिप्रसङ्गाद्यनापादके लघौ सम्भवतीत्यर्थः । प्रमेयधूमत्वस्य तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधूमत्वानतिरेकादाह कम्बुग्रीवेति । न च कम्बुग्रीवादिमत्त्वं कम्बुग्रीवादिव्यक्तिरेव सा च प्रत्येकं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदिकैवेति कुतोऽतिव्याप्तिरिति वाच्यम् । परम्परया संस्थानगतकम्बुग्रीवात्वादिजातिमत्त्वस्यैव साध्यतावच्छेदकत्वात् । तस्य च परम्परयावच्छेदकत्वकल्पनामपेक्ष्य लाघवेन घटत्वस्यैव साक्षात्तथात्वादिति भावः । ननु पृथिवीत्वतेजस्त्वादिना साङ्कर्यात् घटत्वं यदि नाना तदा नैकमपि घटत्वं कम्बुग्रीवादिमत्त्वसमनियतमत आह घ्राणग्राह्येति । घ्राणग्राह्यगुणत्वापेक्षया लघोर्ग्राह्यगन्धत्वस्यैवाऽवच्छेदकत्वं वाच्यमन्यथा परमाणौ गन्धत्वेन सह घ्राणग्राह्यगुणत्वस्य समनियतत्वाभावादगन्धत्वस्यैव प्रतियोगितानवच्छेदकत्वादिति भावः। अत्र घ्राणग्राह्यगुणत्वं घ्राणग्राह्यत्वे सति गुणत्वाव्यापकजातिमत्त्वं तेन गन्धत्वस्य लघोः समनैयत्ये तात्पर्यमित्यपि कश्चित्। [अतथात्वेन। प्रतियोगितानवच्छेदकत्वेन । तेन रूपेण।प्रमेयधूमत्वादिरूपेणेत्यर्थः ।] व्यभिचारिणि । प्रमेयत्वादौ । [ सपक्षवृत्तिप्रमेयत्वादौ तेन विरुद्धे साध्यसामानाधिकरण्याभावादतिव्याप्त्यभावेऽपि न क्षतिः।] नापीति। तादृशप्रतियोगितायास्तद्व्यक्तित्वावच्छिन्नाभाववदवृत्तित्वमपि नेत्यर्थः । तेन तादृशप्रतियोगिताप्रतियोगिकाभाववदवृत्तितया धूमत्वादेरवच्छेदकत्वाभावादतिप्रसङ्गसम्भवात्स्वरूपसम्बन्धात्मिकाया इत्यस्य न वैयर्थ्यं न वाग्रिमग्रन्थविरोध इति ध्येयम्।स्वरूपसम्बन्धात्मिकाया इति । प्रतिव्यक्ति भिन्नत्वे हेतुः। तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थः । तत्तत्प्रतियोगिमात्रस्वरूपत्वे सामान्याभावविशेषाभावयोः प्रतियोगितयोरविशेषापत्तेरिति ध्येयम् । धूमत्वादे-

तथाविधयत्किञ्चिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वं तत्, अत एवातिरिक्तसामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदकत्वापातादग्रे तत्साधनमपि साधु सङ्गच्छत इति वाच्यम्। वह्निघटवृत्ति-

---

त्पीति। तथा च धूमवान् वन्हेरित्यादौ व्याप्तिलक्षणातिव्याप्तिरिति भावः। न चेति। वाच्यमिति परेणान्वयः। तथाविधेति। यत्किञ्चित्पदं व्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेण। तथा च तथाविधो हेतुसमानाधिकरणो यो यत्किञ्चिदभावस्तत्प्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वं तत्रार्थः। तथाविधाभावीयप्रतियोगितासामान्यशून्यत्वमप्रसिद्धं सर्वस्यैव वस्तुनस्तादृशयावत्त्वाद्यवच्छिन्नाभावप्रतियोगितावत्त्वादत उक्तं यत्किञ्चिदिति। समनियताभावयोरैक्यानुपगमाच्च घटादिसामान्याभावस्यैव घटीयादिसंयोगसम्बन्धेन प्रमेयादिसामान्याभावतया पुनर्नाप्रसिद्धिः। एकधर्मावच्छिन्नार्थकश्चैकपदमव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्त्यभिप्रायेण। तथाविधा या एकधर्मावच्छिन्ना प्रतियोगिता तत्सामान्यशून्यावृत्तित्वमिति योजनया यत्प्रतियोगिताया अवच्छेदकीभूतधर्मावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगिताया अवच्छेदकीभूतधर्मावच्छिन्नप्रतियोगितासामान्यशून्यत्वं तत्रार्थ इति वस्तुगतिः। एकपदं शृङ्गग्राहिकतया तत्तदभावप्रवेशार्थमिति तु रिक्तं वचः, तन्निवेशे हेतुसामानाधिकरण्यप्रवेशस्य वैयर्थ्यात् [तन्निवेशवैयर्थ्यात् यत्किञ्चित्पदेनैव तल्लाभात्] इति ध्येयम्। यद्यपि प्रमेयवान् वाच्यत्वादित्यादौ समवायेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः प्रमेयत्वावच्छिन्नाभावप्रतियोगितासामान्यशून्यत्वाप्रसिद्धेः तादृशाभावान्तरस्य निरुक्तप्रतियोगितानवच्छेदकतायाः प्रमेयत्वे सत्वात्। तथापि तादृशयत्किञ्चिदेकाभावप्रतियोगितात्वं यद्धर्मव्यापकतावच्छेदकं तत्त्वं विवक्षितम्। अस्ति च प्रमेयत्वव्यापकत्वं प्रमेयसामान्याभावप्रतियोगितायामित्यदोषः। तत्। अवच्छेदत्वम्। अत एवेति। यत्किञ्चिदेकाभावव्यक्तेः प्रवेशादेवेत्यर्थः। यदि सामान्याभावो नास्ति तदा वह्निमन्निष्ठतत्तद्धूमाभावप्रतियोगितासामान्यशून्ये धूमान्तरे वर्तमानतया धूमत्वस्य निरुक्तावच्छेदकत्वं न स्यादिति व्याप्तिलक्षणातिव्याप्तिनिरा-

द्वित्वतार्णतार्णदहनवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितानतिरिक्तवृत्तिवह्नित्वादावतिप्रसङ्गात् । एतेनान्यूनवृत्तित्वविशेषितमपि परास्तम् । अत एव नानाप्रतियोगिवृत्त्येकप्रतियोगिताङ्गीकारेऽपि न निस्तारः । लघुरूपसमनियतगुरुरूपेण साध्यतायां सद्धेतावव्याप्तिः तादृशतदवच्छिन्नत्वाप्रसिद्धेरिति चेन्न । प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात् । स्वस-

---

सार्थमेव सामान्याभावः साधयिष्यत इति । तथा च धूमसामान्याभावस्यैव हेतुसमानाधिकरणस्य प्रतियोगितासामान्यशून्यं घटादावृत्त्या धूमत्वस्यावच्छेदकत्वमिति भावः । ननु तादृशप्रतियोगिताया अन्यूनानतिरिक्तवृत्तित्वं वाच्यं वह्नित्वं तु घटवृत्तितादृशप्रतियोगितान्यूनवृत्त्यत आह । तार्णतार्णेति । अतिप्रसङ्गादिति । तथा च व्याप्तिलक्षणासम्भव इति भावः । [ एतेनेति क्वाचित्कम् । तत्र ] एतेन । तार्णतार्णोभयाभावमादाय दत्तदोषेण । सामान्याभावप्रतियोगित्वमेकमेव समस्तप्रतियोगिवृत्ति इति तदनतिरिक्तवृत्त्येव धूमत्वमतो नोक्तातिव्याप्तिरिति प्रगल्भोक्तं दूषयति । अत एवेति । उक्तरीत्या वह्नित्वादेरवच्छेदकत्वप्रसङ्गादेवेत्यर्थः । ननु प्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वं स्वरूपसम्बन्ध एव वाच्यम् स्वावच्छेद्यप्रतियोगिताकत्वेन च साध्यतावच्छेदकं पुनर्विशेषणीयमतो गुरुधर्मेण साध्यतायां नातिव्याप्तिरत आह लघुरूपेति । ननु घटवान् महाकालत्वादित्यादावव्याप्तिभियेव गुरुरूपेण साध्यतायामतिव्याप्तिभियापि प्रतियोगिताधर्मिकोभयाभावघटितं लक्षणं वाच्यमतस्तदपि दूषयति लघुरूपेत्यादिनेत्यपि कश्चित् । वह्नित्वादिलघुरूपसमनियतं यत्प्रमेयवह्नित्वादिकं ताद्रूप्येण साध्यतायां धूमादावव्याप्तिरित्यर्थः । प्रतियोगितावच्छेदकेति । हेतुसमानाधिकरणाभावप्रतियोगिताया यदवच्छेदकं तदभाववदवृत्तित्वस्य मूलस्थप्रतियोगितावच्छेदकान्तेन विवक्षितत्वादित्यर्थः । अत्र च येन सम्बन्धेन प्रतियोगितावच्छेदकत्वं तेनैव तदभावो ग्राह्यस्तेन धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटत्वादेः कालिकादिसम्बन्धे-

मानवृत्तिकश्चावच्छेदकं ग्राह्यम्। तत्त्वञ्च स्वपर्याप्त्यधिकरणपर्या-

---

नाभाववत्यात्मादौ वह्नित्वादेः समवायेनावृत्तावपि नोक्तावच्छेद-कत्वम्, न वा धूमत्वादेः संयोगादिसम्बन्धेन स्वाभाववति समवेत-त्वेऽप्यवच्छेदकत्वहानिः। यत्तु साध्यतावच्छेदकताघटकसम्बन्धेन तदभावो ग्राह्य इति। तत्तुच्छम्। धूमत्वप्रकारकप्रमाविशेष्यवान् व-ह्नेरित्यादावतिव्याप्तेः। लघुतया हेतुमन्निष्ठतादृशप्रमाविशेष्याभावप्र-तियोगितावच्छेदकीभूतस्य धूमत्वादेः स्वरूपसम्बन्धेनाभाववति धूम एव तादृशप्रमाविशेष्यत्वस्य वृत्तेः। तद्वद्वृत्तित्वं च स्वरूपस-म्बन्धेन तद्वति साध्यतावच्छेदकताघटकसम्बन्धेनावर्तमानत्वं नातो धूमत्वाभावस्यैव कालिकसम्बन्धेनाश्रये धूमे समवायेन स्वरूपस-म्बन्धेन च तदाश्रये स्पन्दादौ कालिकविशेषणतया धूमत्वस्य वर्त-मानत्वेऽप्यवच्छेदकत्वहानिः। न च तथापि समवायेन प्रमेयस्य साध्यतायां भावत्वादावतिव्याप्तिः प्रमेयत्वरूपस्यावच्छेदकस्या-भावाप्रसिद्ध्या प्रमेयाभावस्य लक्षणाघटकत्वादिति वाच्यम्। हेतु-मन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मान्यूनवृत्ति तत्त्वस्यैव विव-क्षितत्वात्। अत एव समवायेन सत्ताश्रयस्य साध्यत्वेऽपि तादृशाव-च्छेदकीभूतस्य सत्त्वस्याभाववति सामान्यादौ साध्यतावच्छेदक-ताघटकीभूतसमवायसम्बन्धेन वृत्तेरप्रसिद्धावपि भावत्वादिहेतौ नातिव्याप्तिः। इदं तु चिन्त्यते। तादृशप्रतियोगितावच्छेदकानतिरि-क्तवृत्तिभिन्नत्वापेक्षया नञर्थद्वयाप्रवेशेन लाघवात्तादृशावच्छेदकं यद्यत्तत्प्रत्येकातिरिक्तवृत्तित्वं साध्यतावच्छेदकस्य विशेषणं व-क्तुमुचितमिति। ननु धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकं य-द्वन्ह्यादिनिष्ठं तार्णातार्णदहनोभयत्वं यावत्त्वं वा तदनतिरिक्तवृत्त्ये-व वह्नित्वादिकमिति व्याप्तिलक्षणमसम्भवीत्यत आह स्वसमानेति। स्वमनतिरिक्तवृत्तित्वेनाभिमतम्। तथा च स्वसमानवृत्तिकं यद्धेतु-मन्निष्ठाभावप्रतियोगितावच्छेदकं तदनतिरिक्तवृत्तित्वमर्थः। याव-त्त्वस्य वह्नित्वव्यापकत्वेऽपि वह्नित्वसमानवृत्तिकत्वाभावादेव न तस्य तादृशावच्छेदकत्वमिति भावः। ननु स्वसमानवृत्तिकत्वं स्वान्यूना-नतिरिक्तवृत्तित्वम्, तथा च वह्निनिष्ठयावत्त्वादेरपि समवायादिना व-

सिवृत्तिकत्वम् । यावत्त्वादिकन्तु न तथा । पर्याप्तिश्चायमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष एव । त्रित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां

---

न्हित्वादिसमानवृत्तिकत्वमेवात आह तत्त्वं चेति । [ स्वसमानवृत्तिकत्वं चेत्यर्थः । ] स्वपर्याप्तीति । न च वन्हित्वपर्याप्त्यधिकरणे यावत्येव वह्नौ वह्निवृत्तियावत्वादेः पर्याप्तत्वाद्वह्नित्वस्यावच्छेदकत्वं दुर्वारमिति वाच्यम् । स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्योक्तत्वात् । वह्नित्वपर्याप्त्यवच्छेदकीभूतनत्तद्वह्नित्वावच्छेदेन यावत्त्वादेरपर्याप्तत्वात् । न चैवमनतिरिक्तवृत्तित्ववैयर्थ्यम्, वन्हित्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकतत्तद्वन्ह्यन्यतरत्वादिकमादाय वन्हित्वस्यापि पारिभाषिकावच्छेदकत्वापत्तेरिति भावः । यावत्त्वादिकमिति । आदिना तार्णातार्णोभयत्वादिसंग्रहः । न तथेति । न वन्हित्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकमित्यर्थः । ननु पर्याप्तिः समवायः स च तार्णातार्णोभयत्वादावप्यक्षत एवेत्यत आह पर्याप्तिश्चेति । अयमेको घट इति एकमात्रवृत्तिधर्मावच्छेदेन घटत्वस्य पर्याप्तिं दर्शयितुम्, इमौ द्वावित्युभयवृत्तिधर्मावच्छेदेन द्वित्वस्य पर्याप्तिं दर्शयितुम् । अन्यथा द्वौ द्वित्ववानिति प्रतीत्योरविशेषप्रसङ्गादिति भावः । न चायमेक इत्यादिप्रतीतेः समवायेनैवोपपत्तौ एकत्ववन्हित्वादेः पर्याप्तिसम्बन्धसत्वे मानाभावात्ताद्रूप्येण साध्यतायां व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् । इदंत्वावच्छिन्न एव वन्हित्वमेकत्वं च पर्याप्तं न तु द्वित्वमित्याद्यनुभवादेव तदभ्युपगमादिति भावः । व्यासज्यवृत्तित्वतदन्यत्वान्यतररूपेणैव स्वसमानवृत्तिकत्वोक्त्यापि वन्हित्वादिवारणसम्भवे स्वपर्याप्तीत्यादिपर्यन्तानुधावनस्य प्रयोजनमाह त्रित्वादिकमिति।तथा च धूमवन्निष्ठाभावप्रतियोगितावच्छेदकस्य वह्निधूमघटत्रितयत्वस्य व्यासज्यवृत्तितया स्वसमानवृत्तिकस्य तस्यैवानतिरिक्तवृत्तित्वं वह्निधूमोभयत्वस्यापीति ताद्रूप्येण स्वसमानवृत्तिकत्वोक्तौ वह्निधूमोभयवान् धूमादित्यादावेव व्याप्तिलक्षणाव्याप्तिः स्यादिति भावः। यद्यपि तार्णातार्णोभयत्वाद्यव-

च्छिन्नाभावस्य प्रतियोगितावच्छेदकताघटकसम्बन्धः पर्याप्तिरेव न तु समवायः तार्णमात्रसत्त्वेऽपि तार्णातार्णोभयं नास्तीतिप्रतीतेः तथा च प्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन तादृशोभयत्वाद्यभाववति प्रत्येकवह्नौ वृत्तिमत्त्वादेव वह्नित्वादेरवच्छेदकत्वासम्भवात् स्वसमानवृत्तिकेति व्यर्थम्। तथापि प्रत्येकवह्नौ पर्याप्तिसम्बन्धेनापि न तार्णातार्णोभयत्वादेरभावः किं तु घटादावेव। अन्यथा तत्सम्बन्धेन प्रत्येकावृत्तिधर्मस्य तत्सम्बन्धेन समुदायावृत्तित्वनियमात् उभयत्रैव प्रत्येकं द्वित्वाभावसत्त्वादिमौ न द्वावित्यपि प्रतीत्यापत्तेः। न चैवमयं द्वावित्यपि प्रत्यक्षप्रतीतिः प्रमा स्यादेकव्यक्तावपि द्वित्वस्य पर्याप्तिसम्बन्धेन सत्त्वादिति वाच्यम्। मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादिप्रतीतेर्मूलावच्छेद्यसमवायेन कपिसंयोगाद्यवगाहित्ववदुक्तप्रतीतेरपीदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेनैव द्वित्वावगाहितया प्रमात्वायोगात्। एकव्यक्तेरिदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन द्वित्वरहितत्वात्। अत एवायं न द्वावित्यादिप्रतीतेः प्रमात्वमुपपद्यते इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन यो द्वित्वस्याभावस्तद्वति तदवगाहित्वात्। न चेदन्त्वावच्छेद्यपर्याप्त्यप्रसिद्धिः, एकत्ववह्नित्वादौ तत्सौलभ्यात्। एकत्वं वह्नित्वं चेदन्त्वावच्छिन्ने पर्याप्तं न तु द्वित्वादिकमित्यनुभवस्य सर्वसिद्धत्वात्। न चैकस्य द्वित्वपर्याप्त्यधिकरणत्वे घटद्वयशून्येऽपि गृहादावत्र घटाविति प्रतीतिः प्रमा स्यादिति वाच्यम्। तद्गृहनिष्ठे घटे घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वविरहात् घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वावगाहिन्याः प्रोक्तप्रतीतेर्भ्रमत्वात्। अत एव घटौ न तद्गृहनिष्ठावित्याकारकधीस्तत्र प्रमा तद्गृहस्थितस्यापि घटस्य घटद्वयत्वावच्छेदेन तन्निष्ठत्वाभावसम्भवात्। घटपटयोर्न घटत्वमित्यादिप्रतीतेः प्रमात्वानुरोधेन व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकस्य प्रतियोगिमत्यपि तदभावस्य सर्वसंमतत्वात्। न च घटत्वादौ घटपटोभयवृत्तित्वाभाव एवोक्तप्रतीतिविषयः। सामान्यघटयोर्न समवायेन घटत्वमित्यादौ सामान्यघटोभयसमवेतत्वाप्रसिद्ध्या तदभावस्य भानासम्भवादिति सम्प्रदायविदः। परे तु तदनतिरिक्तवृत्तित्वमत्र न तदभाववदवृत्तित्वम्, तथा सति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं प्रत्येकं तदभाववान्वह्निर्धूमश्चेति तदुभयवृत्तित्वस्यैव वह्निधूमोभयत्वे सत्त्वात्

ताद्रूप्येण साध्यतायां वह्न्यादिहेतावतिव्याप्त्यापत्तेः । किन्तु तादृशप्रतियोगितावच्छेदकवती यावती व्यक्तिस्तद्भेदकूटवदवृत्तित्वमेव तथात्वं वाच्यम् । तथा च वह्निमान् धूमादित्यत्राव्याप्तिरेव तादृशावच्छेदकीभूतं यत्तार्णातार्णोभयत्वादिकं तद्वतो निखिलवह्नेः प्रत्येकभेदकूटवति वह्नित्वस्यावृत्तेरतः स्वसमानवृत्तिकत्वं देयमेवेति वदन्ति । तत्तुच्छम् । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धूमत्वं तदभाववति पर्याप्तिसम्बन्धेन वह्निधूमोभयत्वस्यावृत्तित्वादेव ताद्रूप्येण साध्यतायां वह्निहेतावतिव्याप्त्यभावाद् भेदकूटनिवेशव्यर्थतापातादिति । केचित्तु तार्णातार्णोभयं नास्तीतिप्रतीतौ प्रतियोगितावच्छेदकतानिर्वाहकः समवाय एव सम्बन्धो भासते न तु पर्याप्तिः दण्डिपुरुषत्वाश्रयस्य सत्वेपि तदवच्छिन्नाभाववत्तादृशोभयत्वाश्रयस्य तार्णमात्रस्य सत्वेपि तादृशोभयत्वावच्छिन्नाभावो न विरुद्धस्तदवच्छिन्नाधिकरणतया सार्धमेव तस्य विरोधात् एवं च यथाश्रुतमेव सम्यगित्याहुः । तच्चिन्त्यम् । समवायेन तद्वतोऽधिकरणे तदवच्छिन्नानधिकरणत्वस्यासम्भवात् । वस्तुतस्तु समवायेन प्रमेयसाध्यके भावत्वादिहेतावतिव्याप्तिवारणार्थमवश्यं प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदन्यूनवृत्ति तत्त्वमर्थो वाच्यः तत्रान्यूनवृत्तित्वं न प्रतियोगितावच्छेदकताघटकसम्बन्धेन वाच्यम् । वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं तस्य तादृशपर्याप्त्यधिकरणं यद्वह्निधूमोभयं तत्प्रत्येकनिष्ठस्य पर्याप्तिसम्बन्धावच्छिन्नाभावस्य प्रतियोगित्वेन तन्न्यूनवृत्तित्वात् । किन्तु स्वावच्छिन्नप्रतियोगित्वसम्बन्धेनैव तथात्वं वाच्यं, तथा च वह्निनिष्ठयावत्त्वतार्णातार्णोभयत्वादेरपि स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्नित्वादिकं प्रत्यन्यूनवृत्तित्वात् वह्निमान् धूमादित्यादौ वह्नित्वादेरवच्छेदकत्ववारणाय स्वसमानवृत्तिकत्वेनावच्छेदकं विशेषणीयमिति युक्तमुत्पश्यामः । ननु प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यत्र प्रतियोगितावच्छेदकत्वं यदि प्रतियोगितानतिरिक्तवृत्तित्वरूपं तदा तार्णातार्णोभयत्वावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादौ वह्नित्वमपि पारिभाषिकावच्छेदकं स्यादत आह । घटकमिति । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे गुरु-

नाव्याप्तिः। घटकश्चावच्छेदकत्वं स्वरूपसम्बन्धविशेषः। एवञ्च यद्धर्मावच्छिन्नेत्यत्र यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नेति वक्तव्यम्, तेनोक्ताव्याप्तिनिरासः। वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववदस-

---

रूपेण साध्यतायामव्याप्तिमपाकर्तुमाह एवं चेति। ननु धूमत्वमेकस्मिन्नेव धूमे पर्याप्तमित्यादिप्रतीतेः प्रत्येकवृत्तिधर्मावच्छिन्नाधिकरणताकत्वावगाहितयैवोपपत्तौ धूमत्वादेः पर्याप्तिसम्बन्धत्वे मानाभाव इति धूमवान् वह्नेरित्यादावतिव्याप्तिः स्वपदेन धूमत्वस्य गृहीतुमशक्यत्वात्, एवं सत्तात्वस्य विशिष्टसत्तात्वानतिरिक्तवृत्तितया सत्त्वादिसाध्यकजातिमत्त्वादिहेतावव्याप्तिश्चेत्यत आह वस्तुतस्त्वति। तदवच्छिन्नेति। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववत्यसम्बद्धं यद्धर्मविशिष्टं सामान्यं तदेव पारिभाषिकावच्छेदकमित्यर्थः। अत्र तदाश्रयप्रतियोगिकाभावेत्युक्तौ तादृशधूमत्वाश्रयप्रतियोगिकोभयाभावादिमति प्रमेयधूमत्वविशिष्टस्य सम्बद्धतयाऽवच्छेदकत्वं न स्यात्किं तु गगनत्वादेरेव तथात्वं स्यादत उक्तं तदवच्छिन्नेति। प्रतियोगित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्, तेनायं घट एतत्त्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं पटत्वं सम्बन्धसामान्येन कालिकसम्बन्धेन वा तदवच्छिन्नाभाववति नित्यगुणगगनादौ घटत्वत्वविशिष्टस्यासम्बद्धत्वेऽपि नाव्याप्तिः। पर्वतादेरुत्पत्तिकालावच्छेदेन संयोगसम्बन्धावच्छिन्नधूमाभाववत्त्वात् तत्र च धूमत्वविशिष्टस्य सम्बद्धत्वात् तदसम्बद्धस्वविशिष्टसामान्यकं गगनत्वादिकमुपादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरतः प्रतियोगिव्यधिकरणत्वेन तदवच्छिन्नाभावो विशेष्यः। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धी तदवच्छिन्नाभाववान् ग्राह्य इति तु पर्यवसितार्थः। तेन संयोगसम्बन्धावच्छिन्नधूमाभावस्यैव धूमवत्पर्वतादौ समवायादिसम्बन्धेन प्रतियोगिव्यधिकरणत्वेऽपि धूमत्वस्य नावच्छेदकत्वहानिः, न वा द्रव्यं घटत्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्घटभिन्नद्रव्यत्वत्वं प्रतियोग्यनधिकरणे तदवच्छिन्नाभाववति गुणादौ द्रव्यत्वत्वविशिष्टस्यासत्त्वेऽप्यव्याप्तिः। वस्तुतो निरुक्तप्रति-

योग्यनधिकरणत्वमेव तदवच्छिन्नाभाववतः साध्यतावच्छेदकस-म्बन्धेन वाच्यं न तु प्रतियोगितायास्तत्सम्बन्धावच्छिन्नत्वम्, वृ-त्त्यनियामकसम्बन्धेन साध्यतायां तत्सम्बन्धावच्छिन्नप्रतियोगित्वा-प्रसिद्ध्याऽव्याप्तिप्रसङ्गादिति ध्येयम्। न च घटवान् महाकालत्वादि-त्यादौ तादृशप्रतियोगितावच्छेदकं यद्गगनत्वं तदवच्छिन्नाभाव-स्य प्रतियोगिवैयधिकरण्याप्रसिद्ध्याव्याप्तिरिति वाच्यम्। अत्रापि साध्यतावच्छेदकसम्बन्धसामान्ये तादृशधर्मावच्छिन्नप्रतियोगिक-त्वयदनुयोगिकत्वोभयाभाववत्तदसम्बद्धत्वस्य विवक्षितत्त्वात्। तद-सम्बद्धत्वमपि साध्यतावच्छेदकसम्बन्धेन सम्बद्धत्वसामा-न्याभावो बोध्यः। तेन घटत्वाद्यवच्छिन्नाभाववति घ-टत्वगगनत्वविशिष्टस्यापि यथाकथञ्चित्तादात्म्यादिना सम्बद्ध-तया न पारिभाषिकावच्छेदकाप्रसिद्धिनिबन्धनो व्याप्तिलक्षणास-म्भवः। [न वा तादृशप्रतियोगितावच्छेदकीभूतमहानसीयवन्हि-त्वावच्छिन्नाभाववति जलादौ वन्हित्वविशिष्टस्यासम्बद्धत्वाद्वन्हि-मान् धूमादित्यादावव्याप्तिः] धूमवन्निष्ठाभावप्रतियोगितावच्छेदकी-भूततत्तद्वन्हित्वावच्छिन्नाभाववति वन्हित्वविशिष्टस्य तत्तद्वन्हेरस-म्बद्धत्त्वाद्वह्निमान् धूमादित्यादौ वह्नित्वमप्यवच्छेदकं स्यादतः सा-मान्यपदम्। ननु कालिकादिसम्बन्धेन गगनत्वविशिष्टं घटादि तस्य तादृशप्रतियोगितावच्छेदकीभूतगगनत्वाद्यवच्छिन्नाभाववति साध्य-ताघटकसंयोगादिसम्बन्धेन सम्बद्धत्वात् पारिभाषिकावच्छेदकाप्र-सिद्ध्या व्याप्तिलक्षणासम्भवः। न च साध्यतावच्छेदकताघटकस-म्बन्धेन स्ववैशिष्ट्याभिधानान्नैष दोषः। पुरुषनिष्ठसंयोगसम्बन्धेन दण्डवतः कालिकविशेषणतया साध्यतायां महाकालत्वहेतावव्या-प्त्यापत्तेः। गगनत्वादेः पुरुषनिष्ठसंयोगसम्बन्धेनावृत्त्या पारिभाषि-कावच्छेदकाप्रसिद्धेः। न च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं यादृशसम्बन्धावच्छिन्नं तेनैव सम्बन्धेन स्ववैशिष्ट्याभिधानात् घ-टत्वगगनत्वादौ पारिभाषिकावच्छेदकत्वं सुलभमिति वाच्य-म्। धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादौ साध्यतावच्छे-दकमपेक्ष्य लघोर्धूमत्वस्यैव समवायेन हेतुमन्निष्ठसंयोगसम्बन्धाव-च्छिन्नाभावप्रतियोगितावच्छेदकतया समवायेन च धूमत्वप्रकार-कप्रमाविशेष्यत्वस्यावृत्त्या तस्य पारिभाषिकावच्छेदकत्वाभावप्रस-

म्बद्धस्वविशिष्टसामान्यकत्वं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियो-
गितानवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं वक्तव्यम् । अत

---

ङ्गात् । न च साध्यत्वतादृशप्रतियोगित्वयोरन्यतरावच्छेदकताघट-
कसम्बन्धेनैव स्ववैशिष्ट्यस्य विवक्षणान्नोक्ताऽव्याप्त्यतिव्याप्त्योः प्रस-
ङ्ग इति वाच्यम् । तादात्म्येन धूमवतः संयोगेन साध्यतायां द्रव्यत्वादा-
वतिव्याप्त्यापत्तेः । धूमापेक्षया लघुत्वेन हेतुमन्निष्ठाभावप्रतियोगि-
तावच्छेदकं यद्धूमत्वं तदवच्छिन्नाभाववति [ तत्तत्परमाणौ ] प्रति-
योगितावच्छेदकताघटकसमवायसम्बन्धेन धूमविशिष्टस्य परमाणोः
साध्यताघटकसंयोगसम्बन्धेन सम्बद्धतया धूमस्य पारिभाषिकाव-
च्छेदकत्वविरहादिति चेत् । अत्राहुः । यद्यत्सम्बन्धेन यद्धर्मविशि-
ष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसम्ब-
न्धेनासम्बद्धं तत्तत्सम्बन्धेन तत्तद्धर्मावच्छिन्नविशेष्यताभिन्नं य-
त्साध्यतावच्छेदकताघटकसम्बन्धाद्यवच्छिन्नं विशेष्यत्वं तदवच्छेद-
कसाध्यतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वान्नोक्तदोषः । समवायेन
वह्नित्वावच्छिन्नविशेष्यतायाः स्वरूपादिसम्बन्धेन गगनत्वावच्छिन्न-
विशेष्यताभिन्नत्वादेवावच्छेदकाप्रसिद्धिनिबन्धनासम्भवस्य व्युदा-
सादिति । नन्वेवमपि विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः ता-
दृशद्रव्यत्वाद्यभाववति गुणादौ विशिष्टसत्त्वस्य सम्बद्धत्वात् ।
स्वस्य तादृशधर्मावच्छिन्नाभाववन्निष्ठसम्बन्धितानवच्छेदकत्वविव-
क्षया कथञ्चित्तत्रातिव्याप्तिवारणेऽपि सत्तावान् भावत्वादित्यादाव-
तिव्याप्तिः । सत्तात्वाद्यवच्छिन्नाभाववति सामान्यादौ साध्यताघट-
कसमवायसम्बन्धेन सम्बन्धित्वाप्रसिद्धेः सत्तात्वस्य निरुक्तावच्छे-
दकत्वाभावात् । न च साध्यतावच्छेदकसम्बन्धसामान्ये तदवच्छिन्ना-
भाववदनुयोगिकत्वयद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तत्वं वि-
वक्षितमतो नोक्तदोषः । तथासति प्रमेयधूमवान् वह्नेरित्यादावति-
व्याप्त्यापत्तेः । धूमत्वघटिततादृशोभयत्वापेक्षया प्रमेयधूमत्वघटि-
ततादृशोभयत्वस्य गुरुतया तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्यस्व-
रसादाह स्वविशिष्टेति । स्वं पारिभाषिकावच्छेदकत्वेनाभिप्रेतम् ।
तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्विशिष्टस-

स्वन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं स एव पारिभाषिकावच्छेदकः तदन्यत्वं साध्यतावच्छेदकविशेषणमिति भावः। अत्र स्वविशिष्टसम्बन्धित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्। तेन प्रतियोगितावच्छेदकमात्रस्यैव यथाकथञ्चित्सम्बन्धेन यत्स्वविशिष्टसम्बन्धि तन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि न पारिभाषिकावच्छेदकाप्रसिद्धिः। अभावश्चात्र प्रतियोगिव्यधिकरणो बोध्यः। तेन घटत्वाद्यवच्छेदकमात्रस्यैव स्वविशिष्टसम्बन्धिनिष्ठसंयोगसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात् पारिभाषिकावच्छेदकाप्रसिद्ध्या वह्निमान् धूमादित्यादौ नाव्याप्तिः। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यसम्बन्धित्वं स्वविशिष्टसम्बन्धिनो विशेषणं देयमिति तु फलितार्थः। तेनाऽभावमात्रस्यैव यथाकथञ्चित्कालिकादिसम्बन्धेन प्रतियोगिनः सम्बन्धिनि वृत्तावपि न क्षतिः न वा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वादेः सत्तात्वाद्यवच्छिन्नस्वसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेऽपि सत्तावान् जातेरित्यादावव्याप्तिः। तादृशाभावप्रतियोगित्वन्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्। तेन न घटत्वादेरपि स्वविशिष्टसम्बन्धिनिष्ठसमवायाद्यवच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि वह्निमान् धूमादित्यादाववच्छेदकाप्रसिद्धिनिबन्धनो दोषः। वस्तुतः पूर्ववदिहापि साध्यतावच्छेदकसम्बन्धेन निरुक्तप्रतियोग्यसम्बन्धित्वमेव स्वविशिष्टसम्बन्धिनो वाच्यम्। तेन वृत्त्यनियामकसम्बन्धेन साध्यतायां तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि नाव्याप्तिः। [ प्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताघटकसम्बन्धेन बोध्यम्। तेन घटत्वादेर्विषयितासम्बन्धेन घटत्वादिविशिष्टस्य ज्ञानादेः संयोगेनाभावस्य प्रतियोगिव्यधिकरणस्य घटादिविशिष्टसम्बन्धिनिष्ठस्य प्रतियोगिताया विषयितासम्बन्धेनावच्छेदकत्वेऽपि न तादृशावच्छेदकाप्रसिद्धिः। ] ननूक्तपारिभाषिकावच्छेदकत्वद्वयस्य प्रवेशे मूलोक्तप्रतियोगिव्यधिकरणस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणार्थकत्वं विफलम्, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य द्रव्यत्वत्वादेर्विशिष्टसत्तात्वाद्यवच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वादेव विशि-

ष्टसत्तावान् जातेरित्यादावतिव्याप्त्यभावात्। न च संयोगेन घटाद्यभावस्यैव तत्समनियतघटविशिष्टवाच्यत्वाद्यभावत्वात् तत्प्रतियोगित्वावच्छिन्नस्य च वाच्यत्वस्य सर्वत्र सत्त्वात् प्रतियोगिव्यधिकरणाभावस्यैवाप्रसिद्धिः स्यात्, यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यप्रवेशो न स्यादिति वाच्यम्। यत्प्रतियोगित्वावच्छिन्नस्यानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकीभूतधर्मो यद्विशिष्टसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकस्तत्पारिभाषिकावच्छेदकमित्यस्य निर्दोषत्वात्। घटाभावस्य घटविशिष्टवाच्यत्वाभावस्वरूपत्वेपि तस्य घटत्वावच्छिन्नं यत्प्रतियोगित्वं तदाश्रयव्यधिकरणत्वस्य सुलभत्वादिति। न च तत्रावच्छेदकभेदेपि प्रतियोगितैक्यं युक्तम्, घटपटाद्यभावानामप्येकप्रतियोगिताकत्वापत्तेरिति चेत्। अत्र प्राञ्चः। यत्प्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकेत्याद्यभिधाने वह्निमान् धूमादित्यत्राव्याप्तिः। स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः प्रतिव्यक्ति भिन्नत्वात्। वह्नित्वावच्छिन्नाभावीयं महानसीयवह्निनिष्ठं यत्प्रतियोगित्वं तदवच्छिन्नानधिकरणहेतुमत्पर्वतादिनिष्ठवह्निसामान्याभावप्रतियोगितावच्छेदकीभूतवह्नित्वादेः स्वविशिष्टसम्बन्धिनिष्ठनिरुक्तप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वात्।प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यप्रवेशे तु तादृशप्रतियोगिताया अवच्छेदकं यद्वह्नित्वादिकं तदवच्छिन्नानधिकरणत्वं न हेतुमतः पर्वतादेरित्यदोष इत्याहुः। परे तु प्रतियोगिभेदेऽप्येकधर्मावच्छिन्नप्रतियोगिता लाघवादेकैवेतिमते वन्हिमान् धूमादित्यादौ नाव्याप्तिः परं तु तद्रूपान्यत्वविशिष्टसत्तावान् रूपत्वादावतिव्याप्तिरेव स्याद्यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावो मौलो न स्यात्, प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटत्वादेः सर्वस्यैव तद्रूपान्यत्वविशिष्टसत्तात्वावच्छिन्नसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वेन तादृशसत्तात्वस्य पारिभाषिकानवच्छेदकत्वादिति प्राहुः। इदन्त्ववधातव्यम्। अत्रापि लक्षणे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत्सम्बन्धेन यादृशयादृशधर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्तत्सम्बन्धेन तादृशतादृशधर्मा-

वच्छिन्नविशेष्यतान्यसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नविशेष्यतावच्छेदकत्वमेव साध्यतावच्छेदके द्रष्टव्यम्, नातः प्रागुक्तदोषाणामवकाशो न वा महानसीयवह्नित्वादेः पारिभाषिकावच्छेदकतया तदन्यत्त्वस्य वह्नित्वादावसत्त्वेपि वह्निमान् धूमादित्यादावव्याप्तिः, विशिष्टवह्नित्वाभिन्नस्यापि वह्नित्वस्य विशिष्टवह्नित्वावच्छिन्नविशेष्यतावच्छेदकत्वानपायात् । ननु घटवान् महाकालत्वादित्यादावव्याप्तिः गगनत्वादिविशिष्टस्य कालिकादिसम्बन्धेन सम्बन्ध्यप्रसिद्ध्या पारिभाषिकावच्छेदकत्वासम्भवात् । न च साध्यतावच्छेदकसम्बन्धसामान्ये यादृशधर्मावच्छिन्नाभाववदनुयोगिकत्वयद्धर्मविशिष्टप्रतियोगिकत्वोभयाभावस्तत्वं विवक्षितं तच्च गगनत्वादौ सुलभमिति वाच्यम् । तथासति प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तेरित्युक्तत्वात् । धूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वापेक्षया प्रमेयधूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वस्य गुरुत्वेन तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति चेत् । अत्र वदन्ति । स्वविशिष्टप्रतियोगिकत्वानि विशिष्योपादाय साध्यतावच्छेदकसम्बन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववदनुयोगिकत्वस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य च द्वयोर्व्यतिरेकः स धर्मः पारिभाषिकावच्छेदकः । प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेपि तत्तद्धर्मप्रतियोगिकत्वघटितोभयाभावकूटमादायैव नातिव्याप्तिः । कालो घटवान् महाकालत्वादित्यादौ च गगनत्वमेव तादृशावच्छेदकमादाय लक्षणसमन्वय इति । वस्तुतस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्मः प्रतियोगिव्यधिकरणतदवच्छिन्नाभावत्वावच्छेदेन साध्यताघटकसम्बन्धावच्छिन्नसम्बन्धितानिरूपितविशेषणतया यद्धर्मविशिष्टसम्बन्धित्वसामान्याभावस्तत्वे यद्धर्मे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोग्यनधिकरणवृत्त्यधिकरणतावच्छेदकत्वसामान्यस्य प्रकृतसाध्याधिकरणतावच्छेदकत्वनिरूपितस्वरूपसम्बन्धेनाभावस्तत्वे वा स्वविशिष्टसम्बन्धीत्यादिनिरुक्तेस्तात्पर्यात् गगनत्वादौ सहजतः पारिभाषिकावच्छेदकत्वं सुलभमिति ध्येयम् । केचित्तु तादात्म्यसाध्यतावच्छेदकान्यतरसम्बन्धेन

यः स्वविशिष्टसम्बन्धी तन्निष्ठो यस्तदन्यतरसम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वमुक्तलक्षणार्थः। तथा च तादृशान्यतरतादात्म्यसम्बन्धेन गगनत्वविशिष्टसम्बन्धिन्याकाशे वर्तमानोपि गगनाभावो नैतादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणः तस्य तादात्म्येन प्रतियोगिसमानाधिकरणत्वात् किं तु घटाभाव एव तथेति तत्प्रतियोगितानवच्छेदकमेव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतं गगनत्वमिति तमादायैव कालो घटवान् महाकालत्वादित्यादौ लक्षणसङ्गतिः। न चैवं धूमगगनाभावान्यतरस्य संयोगेन साध्यत्वे वन्ह्यादावतिव्याप्तिः तादृशान्यतरत्वापेक्षया लघुत्वेन धूमत्वस्यैव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वात्तस्य च संयोगतादात्म्यान्यतरसम्बन्धेन यस्तदन्यतरत्वविशिष्टस्य सम्बन्धी गगनाभावस्तन्निष्ठस्य तादात्म्यसंयोगान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य धूमाभावस्य पारिभाषिकावच्छेदकत्वविरहादिति वाच्यम्। धूमगगनाभावान्यतरत्वस्याप्यखण्डस्य धूमत्वतुल्यतया तस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य स्वविशिष्टसम्बन्धिनिष्ठतादृशसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतया पारिभाषिकावच्छेदकत्वेनातिव्याप्तिविरहादिति प्राहुः। तन्मन्दम्। रूपवान् घटत्वादित्यादावव्याप्तिप्रसङ्गात्। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपत्वद्रव्यान्यतरत्वं तस्य [ तादृशसम्बन्धेन ] रूपत्वविशिष्टसम्बन्धिनिष्ठतादृशसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेन रूपत्वस्य पारिभाषिकावच्छेदकत्वात्। तथा हि, तादात्म्यसमवायान्यतरसम्बन्धेन यद्रूपत्वविशिष्टस्य सम्बन्धि रूपं पृथिव्यादिकं वा तत्र तादात्म्यसमवायान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो न रूपत्वद्रव्यान्यतरत्वावच्छिन्नाभावः समवायेन रूपे रूपत्वाख्यप्रतियोगिनस्तादात्म्येन च पृथिव्यादौ द्रव्यात्मकप्रतियोगिनः सम्बद्धत्वात् किं तु रूपत्वविशिष्टस्य तथाविधसम्बन्धिनिष्ठो यः पटाद्यभावः स एव तादृशप्रतियोगिव्यधिकरण इति रूपत्वद्रव्यान्यतरत्वे तत्प्रतियोगितानवच्छेदकत्वभ्रौव्यम्। न च हेतुसमानाधिकरणस्याभावस्यापि तादृशान्यतरसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य वक्तव्यत्वान्नैष दोषः।

एव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेद-कगुणान्यत्त्वविशिष्टसत्तात्वतुल्यवृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः। एवं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं बोध्यम् । तादृशप्रतियोगिताश्च विशिष्योपादेयाः नातोगुरोरव-च्छेदकत्वं विना दुर्वचत्वं प्रतियोगित्वस्य । सम्बन्धित्त्वञ्च सा-

———

तथासति समवायेन घटस्य प्रमेयस्य वा साध्यत्वे तादात्म्येन हेतौ घटत्वे प्रमेये वातिप्रसङ्गादिति दिक् । अत एवेति । वस्तुतस्त्वित्यादिक-ल्पस्याऽऽदृतत्वादेवेत्यर्थः । यथाश्रुतस्यावच्छेदकानतिरिक्तवृत्तित्वस्या-दरे तु सत्तावान् जातेरित्यादावव्याप्तिः स्यादेवेति भावः । जातिमन्नि-ष्ठाभावप्रतियोगितायां सत्तात्वान्यूनवृत्तित्वविशिष्टसत्तात्वावच्छेद्य-त्वसमवायसम्बन्धावच्छेद्यत्वोभयसत्त्वादवच्छेद्यताघटितलक्षणस्य प्रागुक्तस्यापि सत्तावान् जातेरित्यादावव्याप्तिरतस्तदपि परिष्करो-ति एवमिति । स्वं साध्यतावच्छेदकम् । अत्र स्ववैशिष्ट्यं साध्यताव-च्छेदकताघटकसम्बन्धेनैव वाच्यम् । तेन धूमत्वादीनां कालिकादि-सम्बन्धेन धूमत्वादिविशिष्टस्य घटादेः संयोगिनि वर्तमानस्याभाव-स्य प्रतियोगितावच्छेदकत्वेपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः । स्वविशिष्टस्य सम्बन्धित्वं तु साध्यतावच्छेदकसम्बन्धेन ग्राह्यम् । तेन धूमत्वाद्यवच्छिन्नप्रतियोगितायां कालिकादिसम्बन्धेन यद्धूम-त्वविशिष्टस्य सम्बन्धि तन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्य-त्वविरहेपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः । न च सामान्यतो धूमसम्बन्धिनि संयोगेन सर्वस्यैवाभावसत्वाद्धूमवन्निष्ठसंयोगसम्ब-न्धावच्छिन्नाभावप्रतियोगितानवच्छेदकाप्रसिद्ध्या कथमतिव्याप्ति-रिति वाच्यम् । गोत्वत्वघटाभावत्वादेरेव तत्प्रसिद्धेः । संयोगसम्ब-न्धावच्छिन्नगोत्वाद्यभावप्रतियोगिताया लाघवेन गवेतरासमवेत-त्वादिभिरेवावच्छेदात् । न चैवमपि तदवच्छेद्यत्वाप्रसिद्ध्यैव ना-तिव्याप्तिः । गोत्वादिभेदप्रतियोगितायां तत्सौलभ्यात् । न हि सापि गवेतरासमवेतत्वमात्रावच्छिन्ना, गोरूपादौ गोत्वभेदासत्त्वप्रसङ्गा-त् । यदि च गोत्वत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभय-

त्वावच्छिन्नाभावाप्रसिद्ध्यैव नातिव्याप्तिः गवेतरासमवेतत्वाद्यवच्छे-
द्यत्वमात्रघटिततादृशोभयत्वस्यैव लघुत्वेन प्रतियोगितावच्छेदक-
त्वादिति विभाव्यते, तदोक्तरीत्या वह्निमान् धूमादित्यादावव्याप्ति-
वारणार्थमेव साध्यतावच्छेदकसम्बन्धेन स्वविशिष्टस्य सम्बन्धि-
त्वं निवेश्यम्। इत्थं च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्र-
तियोगितासामान्य एव साध्यवन्निष्ठाभावीयसंयोगसम्बन्धा-
वच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छेद्यत्वसंयोगसम्ब-
न्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावसत्त्वाद्धूमवान् वह्नेरित्यत्रैवाति-
व्याप्तिः गुरुतयोक्तक्रमेण तादृशोभयत्वावच्छिन्नाभावाप्रसिद्ध्या व-
ह्निमान् धूमादित्यादावव्याप्तिर्वा स्यादतः प्रतियोग्यसम्बन्धित्वेनापि
स्वविशिष्टसम्बन्धी विशेषणीयः। तदर्थश्च प्रतियोगितावच्छेदक-
सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वम्। तेन सम्ब-
न्धसामान्येन यत्प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धी वह्नित्ववि-
शिष्टसम्बन्धी पर्वतादिस्तन्निष्ठस्य प्रलयपूर्वोत्पन्नकर्मात्यन्ताभावस्य
प्रतियोगितानवच्छेदकं यद्घटत्वादिकं तदवच्छेद्यत्वसंयोगसम्ब-
न्धावच्छेद्यत्वयोश्च साधनवन्निष्ठाभावप्रतियोगितायां सत्त्वेपि वह्नि-
मान् धूमादित्यादौ नाव्याप्तिः, न वा प्रतियोग्यसम्बन्धिसाध्यवन्नि-
ष्ठाभावप्रतियोगितानवच्छेदकीभूतविशिष्टसत्तात्वाद्यवच्छेद्यत्वसम-
वायसम्बन्धावच्छेद्यत्वयोः साधनवन्निष्ठाभावप्रतियोगितायां सत्त्वेपि
सत्तावान् जातेरित्यादावव्याप्तिप्रसङ्गः। प्रतियोगितावच्छेदकसम्ब-
न्धेन प्रतियोग्यसम्बन्धी यः साध्यतावच्छेदकावच्छिन्नसम्बन्धी त-
न्निष्ठाभावप्रतियोगितानवच्छेदकं न घटाद्यभावत्वगोत्वत्वादिकं त-
स्यापि साध्यवन्निष्ठतादृशभेदादिप्रतियोगितावच्छेदकत्वात् किन्तु
लघुसमनियतं गुरु प्रमेयधूमत्वादिकमेव। तथा च तदवच्छेद्यत्वा-
प्रसिद्ध्या वह्निमान् धूमादित्यादावसम्भवोऽव्याप्तिर्वेत्यतः साध्यवन्नि-
ष्ठाभावप्रतियोगित्वमपि साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्।
तेन संयोगादिसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वा-
द्यवच्छेद्यत्वप्रसिद्ध्यैव लक्षणसम्भवः। वस्तुतः प्रागुक्तयुक्त्याऽत्रापि
साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वमेव साध्यतावच्छे-
दकावच्छिन्नसम्बन्धिनो वक्तव्यं न तु प्रतियोगितापि तादृशसम्बन्धे-
न ग्राह्या। नन्वेवमपि साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्ब-

न्धिसाध्यतावच्छेदकावच्छिन्नसम्बन्धिनिष्ठाभावाप्रसिद्ध्या विभुत्व-विशिष्टघटवान् महाकालत्वादित्यादावव्याप्तिः। महाकालान्यत्वावि-शिष्टघटत्वावच्छिन्नाभावस्यैव तादृशस्य कथञ्चिन्महाकाले प्रसि-द्ध्या तत्राव्याप्तिवारणेपि तद्वह्नीयसंयोगसम्बन्धेन वह्नेः साध्यतायां सद्धेतावव्याप्तिः। तत्सम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्ववस्य तद्वह्निमत्यभावात्। महाकालनिरूपितविशेषणतया घटादेः साध्य-तायां महाकालत्वहेतावुक्तक्रमेणाप्यव्याप्तिवारणासम्भवाच्च, तेन सम्बन्धेन यः प्रतियोगिसम्बन्धी तदन्यत्ववस्य महाकाले विरहात्। न च साध्यतावच्छेदकसम्बन्धसामान्ये साध्यतावच्छेदकावच्छिन्नसम्ब-न्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्वयादृशप्रतियोगितावच्छेदकावच्छि-न्नप्रतियोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकावच्छिन्नत्वं निवेश्यमतो गगनाभावद्वारैव प्रसिद्धिरिति वाच्यम्। स्वरूपसम्ब-न्धेन गगनादेर्वृत्तिमत्त्वपक्ष एव प्रतियोगिताधर्मिकोभयाभावगर्भनि-रुक्त्यादरात् तत्र गगनाभावमादाय प्रसिद्ध्यसम्भवात्। कालिक-विशेषणतायां गगनत्वाद्यवच्छिन्नप्रतियोगिकत्वसाध्यवन्महाकाला-नुयोगिकत्वयोः सत्त्वादिति चेत्। एतदस्वरसेनैव प्रतियोगितयो-रित्यादिना प्रतियोगिवैयधिकरण्यमुपेक्ष्य लक्षणान्तरं वक्ष्यत इत्यके। परं तु निरुक्तप्रतियोग्यसम्बन्धिप्रकृतसाध्यवन्निष्ठाभावप्रतियोगिता-यां यद्यद्धर्मावच्छेद्यत्वसाध्यताघटकसम्बन्धावच्छिन्नत्वोभयाभावः प्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोग्यनधिकरणप्रकृतहेतुमन्नि-ष्ठाभावप्रतियोगितासामान्येपि तादृशोभयाभावकूटवत्त्वं विवक्षित-म्। अस्ति च समवायाद्यवच्छिन्नघटाद्यभावप्रतियोगितायां यत्का-लिकसम्बन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभाववत्त्वं तदेव प्रति-योग्यनधिकरणमहाकालनिष्ठाभावप्रतियोगितासामान्येपीति घटवान् महाकालत्वादित्यादौ नाव्याप्तिः। यद्यदिति वीप्सादरात् निरुक्त-प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्य एव गुण-त्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयाभावसत्त्वेपि धूमवान् व-ह्नेरित्यादौ नातिव्याप्तिः। धूमत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्य-त्वोभयाभावस्यापि तादृशत्वेन तस्यैव प्रतियोग्यनधिकरणवह्निमन्नि-ष्ठाभावप्रतियोगितासामान्ये विरहात् संयोगसम्बन्धावच्छिन्नधूमा-भावप्रतियोगितायां तदसत्त्वादित्याहुः। ननु स्वविशिष्टसम्बन्धिनि-

ध्यतावच्छेदकसम्बन्धेन बोध्यमतो न सम्बन्धभेदमादाय दोषः ।

---

ष्ठाभावप्रतियोगितानवच्छेदकेत्यत्रानवच्छेदकत्वे न तादृशावच्छेद-कप्रतियोगिकभेदमात्रं धर्ममात्रस्यैव तादृशयत्किञ्चिदवच्छेदक-भिन्नत्वेन व्याप्तिलक्षणासम्भवप्रसङ्गात् । किं तु तादृशप्रतियोगि-तावच्छेदकत्वावच्छिन्नप्रतियोगिताको भेदस्तथा चावच्छेदकत्वगर्भा-या निरुक्तेः प्रमेयधूमवान् वह्निरित्यादावतिव्याप्तिः अवच्छेद्यत्वग-र्भायास्तु प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः प्रमेयवह्नित्वविशिष्ट-सम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकवृत्तिप्रतियोगिताया लाघवेन वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेनैवावच्छेदादत आह प्र-तियोगिताश्चेति । तादृशावच्छेदकनिष्ठप्रतियोगिताव्यक्तयो विशिष्य तत्तदवच्छेदकत्वावच्छिन्नत्वेन प्रवेशनीया न त्वनुगततादृशावच्छेद-कत्वावच्छिन्नत्वेन, यतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेर्दुर्वचत्वं स्यादित्यर्थः । स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगिताव्यक्तीर्वि-शिष्योपादाय तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटवत्वं नि-वेशनीयमिति त्वपव्याख्यानम् । तत्तत्प्रतियोगिताविशेषितावच्छेद-कत्वव्यक्तीनां वास्तविकतत्तदवच्छेदकत्वव्यक्तीरपेक्ष्य गुरुत्वेन त-त्प्रतियोगितानिरूपितावच्छेदकत्वावच्छिन्नभेदानामप्यप्रसिद्ध्या दु-र्वचत्वतादवस्थ्यात् । यदि च समनियतनानाधर्मावच्छिन्नप्रतियो-गित्वस्य भेदे मानाभावस्तदा तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्न-भेदकूटस्य प्रवेशेपि न क्षतिः । तत्तत्प्रतियोगितावच्छेदकत्वस्य तत्त-दवच्छेदकत्वसमनैयत्याभावेन गुरुत्वस्याकिञ्चित्करत्वादिति ध्येयम् । सम्बन्धभेदमिति । इदं च प्रागेव निरुक्तिव्याख्यायां प्रपञ्चितम् । ननु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायाः संयोगत्वावच्छे-द्यत्वेपि संयोगत्वस्य स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानव-च्छेदकत्वाभावात् संयोगी सत्त्वादित्यत्रातिव्याप्तिरत आह अ-भावश्चेति । निरुक्तित्रयेपीति शेषः । तथा च निरुक्तप्रतियोग्यनधि-करणस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं संयो-गत्वेप्यक्षतमिति हेतुमन्निष्ठाभावप्रतियोगितायास्तदवच्छेद्यत्वादेव नातिव्याप्तिरिति भावः । नन्वेवं गोमान् महाकालत्वादित्यत्राव्याप्तिः । गोत्वविशिष्टसम्बन्धिनिष्ठस्याभावमात्रस्यैव साध्यताघटककालि-

कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेद-कत्वमनियततत्तद्व्यक्तित्वे प्रसिद्धम्। अभावश्च प्रतियोगिव्यधिकरणो बोध्यः। न च मौलमिदमीयञ्च प्रतियोगिवैयधिकरण्यमनुपादेयं संयोगत्वाद्यवच्छिन्नाभाववति संयोगत्वादिविशिष्टस्य वृत्तेर्गुणादि-निष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वद्रव्यमात्रसमवेतत्वाद्यवच्छि-

---

कसम्बन्धेन प्रतियोगिसमानाधिकरणतया स्वविशिष्टसम्बन्धिनिष्ठ-प्रतियोग्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाप्रसिद्धेरत आह कालिकेति। तथा च स्वावच्छिन्नानधिकरणसाध्यवत्खण्ड-कालनिष्ठाभावप्रतियोगितावच्छेदकतयैव तत्तद्व्यक्तित्वे निरुक्ताव-च्छेदकत्वं सुलभमिति भावः। ननु हेतुमन्निष्ठाभावीयसंयोगसम्ब-न्धावच्छिन्नप्रतियोगितावच्छेदकमात्रस्यैव घटत्वादिविशिष्टसम्ब-न्धिनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वा-त्पारिभाषिकावच्छेदकाप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिवा-रकं द्वितीयनिरुक्तावभावे प्रतियोगिवैयधिकरण्यं प्रवेश्यताम्, अव-च्छेद्यत्वघटिततृतीयनिरुक्तावपि हेतुमन्निष्ठाभावप्रतियोगितासामा-न्य एव धूमत्वविशिष्टसम्बन्धिनिष्ठाभावीयसंयागसम्बन्धावच्छिन्न-प्रतियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छेद्यत्वाभावात् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थमभावे तद्विशेषणं दीयताम्, प्रथम-निरुक्तौ तु प्रतियोगिवैयधिकरण्यमभावे विशेषणं किमर्थमित्याश-ङ्कते न चेति! वाच्यमिति परेणान्वयः। संयोगी द्रव्यत्वादित्यादा-वव्याप्तिवारणं मौलस्य फलमन्यथोपपादयति संयोगत्वावच्छि-न्नेति। वृत्तेरिति। अव्याप्त्यनवकाशादित्यग्रेऽन्वयः। संयोगि सत्त्वा-दित्यादावतिव्याप्तिवारणमिदमीयस्य फलमन्यथाकुरुते गुणादीति। द्रव्यत्वत्वं द्रव्यान्यासमवेतत्वविशिष्टसकलद्रव्यसमवेतत्वं तच्च न समवायसम्बन्धेनाभावस्य प्रतियोगितावच्छेदकं लाघवेन द्रव्यान्या-समवेतत्वस्यैव तत्वादित्यतस्तथैवाह द्रव्यमात्रेति। द्रव्यान्यासम-

---

(१) अत्र प्रतियोगिवैयधिकरण्यप्रवेशोत्तरमेवाऽव्याप्तिशङ्कासङ्गतेर्व्याख्योद्धृतप्रतीकक्रमस्वा-रस्याच्च कालिकेत्यादि-प्रसिद्धमित्यन्तस्य अभावश्च-बोध्य इत्यनन्तरमेव पाठ उचितः प्रतिभाति।

न्नाभाववति चावृत्तेरव्याप्त्यतिव्याप्त्योरनवकाशादिति वाच्यम्। धूमवान् वह्नेरित्यादावतिव्याप्तेः। न ह्युत्पत्तिकालावच्छेदेनापि महानसादौ किञ्चिन् संयोगेन वर्त्तते येन वह्निमदयोगोलकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकायोगोलकावृत्तिद्रव्यत्वाद्यवच्छिन्नाभाववदवृत्तित्वं धूमत्वविशिष्टस्य सम्भाव्येत। प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विवक्षणे पुनरनुपादेयमेव प्रतियोगिवैयधिकरण्यद्वयम्। यत्राधिकरणे

———

वेतत्व इत्यर्थः। अवृत्तेरिति। अतिव्याप्त्यनवकाशादिति योजना। धूमवानिति। संयोगेन द्रव्यानामव्याप्यवृत्तितया धूमत्वावच्छिन्नाभाववत्यपि धूमत्वादिविशिष्टस्य सत्त्वादिति भावः। ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदयोगोलकासंयुक्तत्वं धूमत्वविशिष्टस्य तदवच्छिन्नाभाववदवृत्तित्वादेव नातिव्याप्तिरत आह न हीति। इत्थं चावच्छेदकानिरुक्तौ प्रतियोगिवैयधिकरण्यप्रवेशे मूलोक्तहेतुसमानाधिकरणाभावेपि तदवश्यं निवेश्यमन्यथा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतसंयोगत्वाद्यवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यावच्छिन्नस्याधिकरणे गुणादौ संयोगत्वादिविशिष्टस्यावृत्तेः संयोगी द्रव्यत्वादित्यादावव्याप्तिरिति भावः। लाघवमभिप्रेत्याह प्रतियोगितयोरिति। मौलेदमीयप्रतियोगितयोरित्यर्थः। तथा च हेतुमन्निष्ठाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नतत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं प्रथमस्य, द्वितीयस्य तु स्वविशिष्टसम्बन्धिनिष्ठाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतहेतुसमानाधिकरणाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वमर्थः। तत्तत्सम्बन्धावच्छिन्नत्वपर्य्यवसन्नस्यैकसम्बन्धावच्छिन्नत्वस्याननुगमाद्विशेषणताविशेषावच्छिन्नत्वप्रवेशावश्यकत्वेन [ सम्बन्धान्तरप्रवेशे गौरवात्तदपेक्षया ] लाघवाच्चाह विशेषणतेति। अभावीयविशेषणताया लक्षणघटकत्वमभिप्रेत्याह तदन्यत्व इति।

व्यभिचारस्तदन्यत्वत्वतदन्यत्वप्रकारकप्रमाविषयत्वत्वसाध्यवत्त्व-प्रकारकप्रमाविषयत्वत्वादीनां साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वाद्धेतुतावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाच्चातिव्याप्तेरनवकाशात्। तथा च विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्सम्बन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति साधने तद्धर्मविशिष्ट-

---

प्रमाविषयत्वीयविशेषणतायास्तथात्वमभिप्रेत्याह तदन्यत्वप्रकारकेत्यादि। साध्यवत्त्वस्यावश्योपस्थितिकतया तद्घटितधर्मस्योपस्थितिलाघवात्तमादायैवातिव्याप्तिवारणं सुघटमित्याशयेनाह साध्यवत्त्वेत्यादि। नन्वेवं हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकीभूतधर्मावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः साध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नो हेतुव्यापक इत्युक्तक्रमेण तृतीयार्थः फलितः। तथा च विशेषणताविशेषावच्छिन्नप्रतियोगितासामान्य एव साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नत्वाभावेन तादृशोभयाभावसत्त्वात् धूमवान् वह्नेरित्यादावतिव्याप्तिः। न च हेतुमन्निष्ठाभावप्रतियोगितायां विशेषणताविशेषावच्छिन्नत्वं न देयमिति वाच्यम्। वह्निमत्त्वप्रकारकप्रमाविशेष्यत्वादीनां संयोगादिसम्बन्धेनाभावस्य हेतुमति सत्त्वेन वह्निमान् धूमादित्यादौ सर्वत्रैवाव्याप्तिप्रसङ्गादित्यतः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वांशपरित्यागेन तृतीयस्यार्थं निष्कृष्य दर्शयति तथा चेत्यादिना। यद्धर्मेति। यत्पदं साध्यतावच्छेदकपरम्। तत्सम्बन्धावच्छिन्नेति। विशेषणताविशेषावच्छिन्नेत्यर्थः। अत्र प्रतिपदव्यावृत्तिरुक्तदिशा बोद्ध्या। न च निरुक्तप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितावच्छेदकावच्छेद्यत्वं साधने तद्धर्मावच्छिन्न-

सामानाधिकरण्यं व्याप्तिरिति पर्य्यवसितोऽर्थः। यत्र सद्धेतुविशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेये- त्यपि वदन्ति। गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमान्

———

सामानाधिकरण्यमेव लाघवाद्व्याप्तिरुचितेति वाच्यम्। सामान्य- पदस्य व्यापकतावाचित्वेन निरुक्तप्रतियोगितात्वव्यापकतावच्छेदकं यद्धर्मावच्छिन्नवह्निनिष्ठविशेषणताविशेषावच्छिन्नाभावप्रतियोगिताव- च्छेदकावच्छेद्यतात्वमित्यर्थपर्य्यवसानेन प्रमेयधूमवान् वह्नेरित्या- दावतिव्याप्त्यापत्तेः। प्रमेयधूमत्वावच्छिन्नवह्निनिष्ठाभावप्रतियोगिता- वच्छेदकावच्छेद्यत्वस्य गुरुधर्मतया वह्निमन्निष्ठाभावप्रतियोगिता- त्ववह्निनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन तादृशप्रतियोगितात्वव्या- पकतावच्छेदकत्वात्। अस्माकं तु प्रमेयधूमत्वावच्छिन्नवह्निनिष्ठाभा- वप्रतियोगितानवच्छेदकं यदयःपिण्डभेदत्वं तदवच्छेद्यत्वाभावस्यैव साधनवह्निनिष्ठाभावप्रतियोगितात्वव्यापकत्वाभावेनाऽतिव्याप्त्यभावा- त्। एतेन साधनसमानाधिकरणाभावसामान्ये यद्धर्मावच्छिन्नस- मानाधिकरणाभावत्वं तादृशाभावप्रतियोगितासामान्ये वा यद्धर्मा- वच्छिन्नसमानाधिकरणाभावप्रतियोगितात्वं साधने तद्धर्मावच्छिन्न- सामानाधिकरण्यमेवव्याप्तिर्लाघवादित्यपि प्रत्युक्तमिति ध्येयम्। साध्यसाधनभेदेन व्याप्तेर्भिन्नतया प्रमेयवह्नित्वादिना गुरुधर्मेण सा- ध्यतास्थल एव साध्यतावच्छेदकावच्छेद्यत्वाप्रसिद्ध्या प्रोक्तक्रमेण व्याप्तिर्वाच्या वह्निमान् धूमादित्यादौ तु लघुरूपेण साध्यतास्थले हे- तुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्माव- च्छिन्नत्वोभयाभावघटितैव सा वक्तव्या शब्दैक्यस्याकिञ्चित्करत्वा- दित्याह यत्र सद्धेतुविशेष इति। नव्यमतमुपन्यस्यति गौरवेति। यादृशप्रतीत्या गुरोरवच्छेदकत्वप्रसिद्धिस्तादृशबुद्धौ गौरवज्ञानस्य यदि विरोधित्वं स्यात्तदा मानाभावाद्गुरोरवच्छेदकत्वं न स्यात् न चैतदस्तीति भावः। यद्यपि गौरवज्ञानमात्रं नावच्छेदकत्वधीप्रतिब- न्धकम्, विशिष्टसत्तात्वस्य द्रव्यत्वत्वापेक्षया गुरुत्वग्रहेऽपि विशिष्ट- सत्ता नास्तीति प्रतीत्या तदवच्छेदकत्वग्रहस्य प्राच्यैरपि स्वीकृतत्वा-

नास्तीतिप्रतीतिबलात् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः ।

---

त् । न च तद्धर्मसमानाधिकरणधर्मधर्मिकस्तदपेक्षया लघुत्वग्रहस्तद्धर्मस्यावच्छेदकत्वधीप्रतिबन्धकः । नीलधूमत्वसमानाधिकरणधूमत्वे तदपेक्षया लघुत्वग्रहेऽपि नीलधूमो नास्तीतिप्रतीत्या नीलधूमत्वस्यावच्छेदकत्वावगाहनस्य सर्वसम्मतत्वात् । नापि तद्धर्मसमनियतधर्मधर्मिक एव तद्धर्मापेक्षया लघुत्वग्रहस्तद्धर्मस्यावच्छेदकत्वधीप्रतिबन्धक इति साम्प्रतम् । घटज्ञानत्वापेक्षया लघुनोऽपि ज्ञानत्वस्य घटज्ञानत्वसमनियतत्वाभावात् गुरुणोऽपि घटज्ञानत्वस्य संयोगसम्बन्धावच्छिन्नघटज्ञानाभावस्य प्रतियोगितावच्छेदकत्वापत्तेः तथापि संसर्गमर्यादया प्रतियोगितावच्छेदकत्वग्रहं प्रति तादात्म्येन कम्बुग्रीवादिमत्त्वरूपस्तद्गुरुधर्मः प्रतिबन्धक इति न कदा चिदपि तेषु [ संसर्गमर्यादया ] अवच्छेदकत्वग्रह इति प्राचां तात्पर्यम् । वस्तुतः संसर्गमर्यादया कम्बुग्रीवादिमत्त्वावच्छेद्यप्रतियोगिताकत्वावगाहिज्ञानं प्रति समानविशेष्यत्वप्रत्यासत्या कम्बुग्रीवादिमत्त्वापेक्षया लघुधर्मावच्छिन्नप्रतियोगिताकत्वज्ञानत्वेनैव प्रतिबन्धकत्वं प्राचामभिप्रेतम् । तथा च जलादौ निर्वह्नित्वस्याग्रहदशायां वह्निमत्त्वभ्रमस्येवोक्तक्रमेण गौरवस्याग्रहदशायामपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वेनापि तादृशग्रहो जायत एव । अन्यथा तदानीमुत्पन्नायाः कम्बुग्रीवादिमान्नास्तीतिधियो बाधनिश्चयविधया कम्बुग्रीवादिमत्त्वावच्छिन्नविशिष्टधीविरोधित्वानुपपत्तेः । कम्बुग्रीवादिमत्त्वावच्छिन्नस्य विशिष्टबुद्धौ तदवच्छिन्नप्रतियोगिताकत्वेनाभावनिश्चयस्य विरोधित्वादिति ध्येयम् । प्रतीतेर्बलमवच्छेदकत्वावगाहित्वम् । गुरुरपीति । तथा च स्वरूपसम्बन्धरूपावच्छेदकत्वघटितं मूलोक्तं यथाश्रुतमेव व्याप्तिलक्षणं सम्यक् प्रमेयधूमत्वादेस्तादृशावच्छेदकत्वेन व्यभिचारिण्यतिव्याप्तिविरहादिति कृतं पारिभाषिकावच्छेदकत्वनिर्वचनेनेति भावः । ननूक्तक्रमेण गौरवज्ञानस्य विरोधित्वात्तादृशप्रतीत्यावच्छेदकत्वं नावगाह्यते परन्तु कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभा-

न चास्यास्तत्प्रतियोगिकाभावमात्रमवलम्बनम् । तथाविधयत्किञ्चि-द्व्यक्तिसत्त्व एव तादृशप्रतीतेरनुदयात् । अत एवैकघटवति भूतले कम्बुग्रीवादिमान् नास्तीतिशब्दो न प्रमाणं प्रमाणञ्च घटसामा-



न्यमात्रमित्याशङ्क्य निषेधति न चेति । अवलम्बनम् । विषयः । तथा-विधेति । कम्बुग्रीवादिमत्त्वाश्रयेत्यर्थः । तादृशप्रतीतेः । कम्बुग्रीवा-दिमान्नास्तीत्याकारकप्रतीतेः । अनुदयादिति । तथा च त्वन्मते क-म्बुग्रीवादिमदन्तरस्याभावमादाय तदुदयप्रसङ्ग इति भावः । ननु तथाविधयत्किञ्चिद्व्यक्तिनिर्णये स एव प्रतिबन्धकः अन्यथा विशे-षादर्शनदशायां तवापि कम्बुग्रीवादिमान्नास्तीतिप्रतीतिर्जायत एव तत्रेत्यत आह अत एवेति । गुरुधर्मस्यावच्छेदकत्वादेवेत्यर्थः । न प्रमाणमिति । कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावशून्ये क-म्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावप्रकारकत्वेन तादृशान्व-यबोधो भ्रम इति तादृशशब्दस्य भ्रमजनकत्वेनाप्रमाणत्वम् । त्वन्मते च कम्बुग्रीवादिमत्प्रतियोगिकाभावशून्यताया घटवत्यभावात् तादृ-शप्रतीतेर्न भ्रमत्वमिति तादृशशब्दोऽप्यप्रमाणं न स्यादित्यर्थः । ननु भ्रमत्वस्य प्रकारभेदेन भिन्नत्वात्सर्वत्र तदभाववद्विशेष्यकत्वं न भ्र-मत्वघटकं समवायेन गगनादिभ्रमे तन्निवेशवैयर्थ्यात् तथा च तत्रैव प्रकृतेपि कम्बुग्रीवादिमत्प्रतियोगिकाभावप्रकारकतामात्रेण तादृशा-न्वयबोधो भ्रमो भविष्यतीत्यत आह प्रमाणं चेति।तथा च तत्रापि क-म्बुग्रीवादिमान्नास्तीति शब्दः प्रमाणं न स्यादित्यकामेनापि प्रकृते भ्र-मत्वं तदभाववद्विशेष्यकत्वघटितं वाच्यमिति भावः। धूमो न वह्नि-व्याप्य इत्यादेर्वह्निव्याप्त्यभावकूटार्थकत्ववत् कम्बुग्रीवादिमान्नास्ती-त्यादावपि कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटबोधकत्वादेव तादृ-शशब्दस्याप्रामाण्याद्युपपत्तिरन्यथा धूमालोकसाधारणानुगतव्याप्तेर-भावादालोकगर्भव्याप्तित्वावच्छिन्नाभावस्य धूमे सत्त्वात्तमादाय धू-मो न वह्निव्याप्य इति वाक्यस्य प्रामाण्यापत्तेः । एवं गुरुधर्मस्यान-वच्छेदकतया तादृशधर्मावच्छिन्नविशिष्टबुद्धिं प्रति तादृशधर्माश्रय-प्रतियोगिकाभावकूटवत्तानिश्चयत्वेनैवामन्यगत्या विरोधित्वकल्पना-

न्यशून्ये। न चेदेवं, लघुरूपसमनियतानां गुरूणामव्याप्यतापत्तिः। गुणादिगुणकर्म्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगितायाः लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवावच्छेदात् तत्तदवच्छेदकत्वव्यक्तीनाञ्च प्रातिस्विकरूपेणाभावानां युगसहस्रेणापि ज्ञातुमशक्यत्वात्। एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसङ्गो-

---

त् कम्बुग्रीवादिमान्नास्तीतिप्रतीतिदशायां कम्बुग्रीवादिमदस्तीतिज्ञानविरोधोपि घटत इति प्राचीनमतनिर्भरः। अतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेरपि दुर्वचत्वमित्याह न चेदेवमिति। लघ्विति। द्रव्यं गुणाद्विशिष्टसत्त्वाद्वा इत्यादौ द्रव्यत्वसमनियतानां गुणवत्त्वविशिष्टसत्तादीनामित्यर्थः। अव्याप्तिमुपपादयति गुणादीति। ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वव्यक्तीनां तत्तद्व्यक्तित्वेनाभावकूटवत्त्वमेव साध्यतावच्छेदकांशे निवेश्यमतो नोक्तदोषोऽत आह तत्तदिति। यद्यपि गुरोरवच्छेदकत्वपक्षेपि स्वस्वप्रतियोगिव्यधिकरणाभावघटितव्याप्तेस्तत्तत्प्रतियोगितागर्भत्वेन दुर्ज्ञेयत्वम्। तथापि व्याप्यवृत्तिसाध्यकस्थलीयव्याप्तेरभिप्रायेणेदम्। तत्र प्रतियोगिव्यधिकरण्याप्रवेशात्। निरवच्छिन्नहेत्वधिकरणवृत्तिकाभावप्रतियोगितानवच्छेदकत्वमेव सर्वत्र व्याप्तौ प्रविष्टमित्याशयेनेदमिति तु परमार्थः। तेनाव्याप्यवृत्तिसाध्यकस्थलेपि व्याप्तेर्न दुर्ज्ञेयत्वमिति ध्येयम्। द्रव्यत्वत्वेति। द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वापेक्षया द्रव्यत्वत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिद्धेरिति भावः। ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नाभाववदसम्बद्धस्वाविशिष्टसामान्यकभिन्नं स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकीभूततादृशधर्मावच्छिन्नभिन्नं वा यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयता-

ऽप्यनुसन्धेयः। उपदर्शितप्रकाराणामपि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात्। अत एव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधु सङ्गच्छत इत्यपि केचित्। इति कृतं पल्लवितेन ॥

---

दृशप्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्ति साधने तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र वा दुर्ज्ञेयत्वाभावात्तथैव व्याप्तिर्वाच्येत्यत आह उपदर्शितेति। स्वत्वादीति। आदिना व्यापकतापर्यवसन्नस्य तत्तदवच्छेदकत्वाभावगर्भसामान्यत्वस्योपग्रहः। अत एव। गुरोरवच्छेदकत्वादेव। सङ्गच्छत इति। अन्यथा ग्राह्यगन्धत्वापेक्षया गुरुत्वेन घ्राणग्राह्यगुणत्वावच्छिन्नाभावाप्रसिद्ध्या तद्वद्वृत्तित्वरूपं व्यभिचरितत्वं तत्र न स्यादिति भावः। यद्यपि साध्यव्यापकतावच्छेदकधर्मावच्छिन्नाभाववद्वृत्तित्वमेव व्यभिचारः स च ग्राह्यगन्धत्वावच्छिन्नाभाववद्वृत्तित्वेनैव तत्र सुलभ इत्यपि शक्यते वक्तुम्, तथापि तद्बुद्धेः प्रकृतसाध्यकानुमित्यविरोधितया हेत्वाभासता न स्यात् यद्विषयकत्वेन यादृशानुमानविरोधित्वं तस्यैव तत्र तथात्वादिति भावः ॥

इति श्रीजगदीशभट्टाचार्यविरचितमवच्छेदकत्व-
निरुक्तिप्रकरणं सम्पूर्णम्।

---

समाप्तञ्च

व्याप्तिसिद्धान्तलक्षणानिर्वचनम्।

---

## दीधित्याः सामान्याभावग्रन्थः ।

ननु य एव मिलिता वह्न्यभावा जलह्रदादौ वह्निर्नास्तीतिधियं जनयन्ति त एव प्रत्येकं धूमवति महानसादौ वर्त्तन्ते, तत्र च तेषां स्वस्वावच्छेदकतत्तद्वन्हित्वावच्छिन्नवैयधिकरण्यनिरूपिका याः प्रतियोगितास्तदवच्छेदकमेव वन्हित्वमतोऽव्याप्तिः । न चैवं व-

## जागदीश्याः सामान्याभावग्रन्थः ।

ननु व्याप्तिनिरूपणप्रस्तावे सामान्याभावव्यवस्थापनमर्थान्तरग्रस्तमित्युपोद्घातसङ्गत्या तदवतारयति नन्विति । अत्र तत्तद्वह्नित्वावच्छिन्नप्रतियोगिताकाभावो वह्नित्वावच्छिन्नप्रतियोगिताको न वेति विप्रतिपत्तिर्द्रष्टव्या । य एवेत्यादिना वह्नित्वस्यावच्छेदकत्वं त एवेत्यादिना चाऽव्याप्त्युपयुक्तं तदवच्छिन्नाभावस्य हेतुसामानाधिकरण्यं प्रकाशितम् । विशेषाभावीयतत्तद्वह्नित्वावच्छिन्नप्रतियोगित्वान्येव वह्नित्वावच्छिन्नानि न तु सामान्यधर्मावच्छिन्नप्रतियोगित्वान्तरम्, सामान्याभाव इव तत्राप्यतिरिक्ते मानाभावादित्याशयेनाह तत्र चेति । महानसाद्यवच्छेदेन च तत्तद्वन्ह्यभावानां यत्तत्प्रतियोगित्वावच्छेदकीभूततत्तद्वह्नित्वावच्छिन्नवैयधिकरण्यं तन्निरूपिका यास्तद्वह्नित्वावच्छिन्नप्रतियोगितास्तदवच्छेदकमेव वह्नित्वमित्यर्थः । तथाच यादृशप्रतियोगिताया अवच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वगर्भं लक्षणमसम्यक् । न च यादृशप्रतियोगितावच्छेदकीभूतयद्यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितावच्छेदकतत्तद्धर्मभिन्नत्वं साध्यतावच्छेदके निवेश्यमिति वाच्यम् । तथा सति हेत्वधिकरणं यद्यद्धर्मावच्छिन्नानधिकरणं तत्तद्धर्मभिन्नसाध्यतावच्छेदकेत्युक्तेरेव सम्यक्त्वेऽवच्छेदकान्तवैयर्थ्यादिति भावः । अ-

न्हित्वावच्छिन्नस्य तदवृत्तित्वान्न तथात्वम् । तथा सति ह्रदवृत्ति-धूमाभावप्रतियोगितावच्छेदकह्रदावृत्तित्वावच्छिन्नस्य वन्हिमदयो-गोलकवृत्तित्वादतिव्याप्तेः । अथानुगतं रूपं तत्तदभावप्रतियोगि-गितानां नावच्छेदकम् । अनवच्छेदकमेव तर्ह्यभावप्रतियोगितायाः,

---

व्याप्तिरिति । यद्यपि तत्तद्व्यक्तिवृत्तित्वविशिष्टद्रव्यत्त्वाद्यभावकूट-स्यैव द्रव्यत्वत्त्वाद्यवच्छिन्नाभावत्त्वात् द्रव्यं पृथिवीत्वादित्यादाव-प्युक्तलक्षणासत्त्वादसम्भव एव वक्तुमुचितस्तथापि वाच्यं ज्ञेयत्वा-दित्यादावेव सम्भवादव्याप्तिरित्युक्तम् । क्वचिदपि वाच्यत्वं नास्ती-त्यप्रतीत्या स्वरूपसम्बन्धावच्छिन्नतत्तद्व्यक्तिवृत्तित्वविशिष्टवाच्य-त्वत्त्वावच्छेद्यत्वानुपगमादिति भावः । ननु यत्किञ्चित्पदाप्रक्षेपेण यादृशप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं हेत्त्वधिक-रणं तादृशप्रतियोगितानवच्छेदकत्वं वाच्यं तथा च धूमवतस्तत्तद्व-ह्नित्वावच्छिन्नानाधिकरणत्वेपि वन्हित्वावच्छिन्नाधिकरणत्त्वान्नाव्या-प्तिरित्याशङ्क्य निराचष्टे न चेति । एवम् । विशेषधर्मावच्छिन्नप्रतियोगि-त्वस्यैव सामान्यधर्मावच्छिन्नत्वे । तदवृत्तित्वात् । धूमवदवृत्तित्वात् । न तथात्वम् । न तत्तद्वन्ह्यभावस्य प्रतियोगिव्यधिकरणत्वम् । ह्रदेति । ह्रदवृत्तिर्यस्तत्तद्धूमाभावस्तत्प्रतियोगितावच्छेदकं यत् ह्रदावृत्तित्वं तदवच्छिन्नस्य तृणादेरित्यर्थः । अतिव्याप्तेरिति । यद्यपि प्रागुक्तक्रमेण प्रतियोगिव्यधिकरणस्याभावस्यैवाप्रसिद्ध्या धूमवान् वह्नेरित्यादौ ना-तिव्याप्तिः अभावमात्रस्यैव तत्तदधिकरणावृत्तित्वरूपस्वप्रतियोगिता-वच्छेदकधर्मावच्छिन्नसमानाधिकरणत्वात्, तथापि तत्तदभावप्रति-योगितावच्छेदकावच्छिन्नानधिकरणस्यापि तादृशप्रतियोगितावच्छे-दकावच्छिन्नवत्तापत्तिरूपोऽतिप्रसङ्ग एवातिव्याप्तिपदेन विवक्षितः । तथा च प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या द्रव्यवान् वह्नेरित्यादा-वव्याप्तिरिति भावः । शङ्कते अथेति । तथा च प्रतियोगिवैयधिकर-ण्याप्रसिद्धिनिबन्धना नाव्याप्तिरिति भावः । शङ्कां निरस्यति अनव-च्छेदकमेवेति । अनुगतरूपं प्रतियोगितामात्रस्यैव तर्ह्यनवच्छेद-कमित्यर्थः । ननु विशेषाभावीयप्रतियोगितानवच्छेदकत्वेप्यतिरि-

## चिन्तामणेः सामान्याभावग्रन्थः ॥

सामान्यावच्छिन्नप्रतियोगिताकाभावः पृथगेव। अन्यथा सकलप्रसिद्धरूपाभावे प्रसिद्धरूपवदन्यत्त्वे चाऽवगते वायौ रूपं न वा वायूरूपवान्नवेति संशयो न स्यात्। विशेषाभावकूटस्य निश्चितत्वात् ॥

---

अभावान्तरे मानाभावात् । तथा च तद्रूपावच्छिन्नसाध्यके व्यभिचारिण्यतिव्याप्तिरत आह सामान्येति । संशयान्यथानुपपत्तिं प्रमाणयति अन्यथेति । वायाविति । यद्यप्ययं संशयो न वायुविशेष्यकः, तस्य विशेषणत्वेनोल्लेखात् । न वा रूपविशेष्यकः, तथा सति रूपतदभावयोर्विरोधिनोरकोटितायां प्रकृतानुपयोगप्रसङ्गात् ।

---

रूपसामान्याभावस्यैव प्रतियोगितावच्छेदकोनुगतधर्मः स्यादित्यत आह अभावान्तर इति। ह्रदे वह्निर्नास्तीत्यादिप्रतीतेर्वह्निप्रतियोगिताकाभावकूटमात्रावगाहित्वेनाप्युपपत्तेरिति भावः ।ननु मा भूदनुगतधर्मः प्रतियोगितामात्रस्यावच्छेदकस्ततः किमत आह तथा चेति । तद्रूपेति।अनुगतधूमत्वाद्यवच्छिन्नसाध्यके वन्ह्यादावित्यर्थः । प्रत्यक्षविधया प्रमाणत्वे संशयत्वपर्य्यन्तस्य विशेषाभावनिर्णयस्य चानुसरणवैयर्थ्यापत्तेराह संशयान्यथेति। तथाच वायूरूपवान्न वेत्याकारकः सन्देहस्तत्तद्रूपाभावातिरिक्ताभावप्रकारकस्तत्तद्रूपाभावनिश्चयोत्तरकालीनाभावसंशयत्वादिति व्यतिरेक्यनुमानमेव रूपसामान्याभावे मानम्, अत्र च क्रमिकतत्तद्रूपाभावनिर्णये व्यभिचारवारणार्थे हेतौ संशयत्वानुसरणम्, घटाभावाद्यप्रकारकत्वेन पक्षविशेषणाच्च न तैः सिद्धसाधनमर्थान्तरं वेति भावः । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्न सिद्धसाधनादिकमित्यपि वदन्ति । अयमिति। वायौ रूपं न वेत्यभिलप्यमान इत्यर्थः।तस्य।वायोः । प्रकृतेति । रूपघ-

तथापि वायू रूपवान् तदभाववान् वेति रूपतदभावकोटिकसंशये तात्पर्य्यम्। अन्यस्तु रूपवत्तदन्योन्याभावकोटिक इति नाभेद इति सम्प्रदायविदः। विरुद्धयोरेकधर्म्मिसंसर्गावगाहिज्ञानमेव संशयो न तु तदुभयप्रकारतापि नियता, तथा च रूपतदभावविशेष्यको वायुविशेषणकोऽसाविति तु नव्याः। वायुवृत्तित्वतदभावकोटिको रूपधर्म्मिक एवायं संशयः, अधिकरणे तत्तदभावान्यतरनिश्चयस्यापि तत्राधिकरणवृत्तित्वसंशयविरोधित्वात्। अन्यथा भूतले घटतदभावान्यतरनिर्णयेऽपि घटो भूतलवृत्तिर्न वेति संशयप्रसङ्गादित्यपरे। अथैतावन्त्येव रूपाणीत्यनिर्णयात् यावद्रूपा-

---

र्मिकवायुवृत्तित्वसन्देहं प्रति वायुधर्मिकरूपाभाववत्तानिश्चयस्याविरोधित्वेन रूपसामान्याभावासाधकत्वादिति भावः। यद्यपि वायुवृत्तित्वसामान्याभावसाधकतयैवोक्तसंशयस्योपयोगित्वं सम्भवति प्रसिद्धं यत् सकलं रूपं वायुवृत्तित्वस्वरूपं तदभावेऽवगतमिति योजनया पूर्वग्रन्थाविरोधात्, तथापि तुल्यवदुपात्तानामेकरूपेण बोधकत्वमनुरुध्याह तथापीति। उक्तपदानां तत्रासामर्थ्यादाह तात्पर्य्यमिति। नन्वेवं वायूरूपवान्न वेत्यग्रिमसंशयेन पौनरुक्त्यमत आह अन्त्यस्त्विति।[शब्दासन्दर्भमेव सम्प्रदाय इत्यनेनोद्भाव्य शब्दसन्दर्भमेव व्यवस्थापयति विरुद्धयोरित्यादिना।]तथा चेति। वायौ रूपं तदभावो वेत्याकारकसंशय इत्यर्थः। वायुधर्मिकरूपाभावनिश्चयस्य वायुरूपोभयवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नं प्रत्येव विरोधितया प्रकृतोपयोगित्वसम्भवादिति भावः। प्रकृतोपयोगार्थमाह अधिकरण इति। तदिति दृष्टान्तार्थम्। तत्रेति। सप्तम्यर्थो विशेष्यत्वं तथाच वायुधर्मिकरूपवत्तानिश्चयस्येव तद्धर्मिकरूपाभावनिश्चयस्यापि रूपधर्मिकवायुवृत्तित्वसंशयप्रतिबन्धकत्वात् प्रकृतोपयोग इति भावः। अन्यथा। तादृशनिश्चयस्याविरोधित्वे।[अत्र क्षणविलम्बादिना प्रतिबन्धकीभूतज्ञानान्तरसम्पादकत्वेनापि उपपत्तावन्वयव्यतिरेकयोरन्यथासिद्धत्वात्स्वातन्त्र्येण प्रतिबन्धकत्वकल्पने गौरवमित्यरुचिः

भावानिर्णये संशयो न विरुध्यत इति चेत्। यावद्रूपाभावानिर्णय इत्यस्य यावन्तो रूपाभावास्तेषां यावत्त्वेन रूपेण तेषां यावन्ति रूपाणि तावदभावानां यावद्रूपत्वेन तदभावानां वाऽनिर्णय इत्यर्थः। न प्रथमतृतीयौ, तथा निर्णीतत्वात्। नेतरौ, प्रतियोगितदभावयोर्यावत्त्वानुल्लेखेऽपि योग्यानुपलब्ध्या भूतले घटो नास्तीति निश्चयमात्रादेव घटतदभावसंशयोच्छेददर्शनेन तस्याकिञ्चित्कत्वात्। न चातिरिक्तसम्भावनाविरहसहकृत एवाभावनिश्चयस्तत्प्रतिबन्धकः, सम्भावना च रूपं पार्थिवादित्रितयभिन्नं न वेत्याकारा, निवर्त्तते चेयं रूपत्वावच्छेदेनैतत्त्रितयभिन्नत्वाभावनिश्चयादेवेति वाच्यम्। गौरवात्, विनापि अतिरिक्तसम्भावनां विशे-

———

सूचिताऽपरे इत्यनेन।] एतावन्त्येवेति। प्रसिद्धरूपाण्येव रूपाणीत्यवधारणदशायां तस्यैव विशेषदर्शनतया प्रसिद्धरूपाभावे यावद्रूपाभावव्याप्यतानिश्चयसम्भवात्तद्धेतुक एव यावद्रूपाभावनिश्चयः स्यादिति भावः। तेषामिति। अनिर्णय इत्यग्रेऽन्वयः। एवमग्रेष्वपि। यावत्त्वेन तेषामिति। यावत्त्वप्रकारेण रूपाभावानामित्यर्थः। यावद्रूपत्वेन। यावद्रूपप्रतियोगिकत्वेन। तथेति। यावन्तो रूपाभावास्तेषां यावन्ति रूपाणि तावदभावानां च वस्तुगत्या निर्णीतत्वादित्यर्थः। तस्येति। प्रतियोगिन्यभावे वा यावत्त्वोल्लेखस्य प्रतिबन्धकतायामनुपयुक्तत्वादित्यर्थः। न चेति। वाच्यमित्यन्वयः। तत्प्रतिबन्धकः। तस्य संशयस्य प्रतिबन्धकः। तथा च प्रकृते सम्भावनासत्त्वादेव तत्तद्रूपाभावनिश्चयः सन्देहं न प्रतिबध्नीयादिति भावः। ननु पार्थिवाद्यतिरिक्तं रूपमस्ति न वेत्याकारिकैव सम्भावना वाच्या सा च तादृशरूपाप्रसिद्ध्या दुर्घटेत्यत आह सम्भावना चेति। ननु सर्वत्रैवोक्तसम्भावनायाः सामग्रीसम्भवाद्रूपं नास्तीतिनिर्णयस्य प्रतिबध्य एव संशयो न स्यादत आह निवर्त्तते चेति। गौरवादिति। रूपाभावनिर्णयाभावत्वापेक्षया सम्भावनाविरहविशिष्टतादृशनिश्चयाभावत्वेन हेतुतायां

षाभावनिश्चये सामान्यसंशयदर्शनाच्च । अथाऽभावस्य सामान्याऽवच्छिन्नप्रतियोगिताकत्वनिश्चय एव तादृशसंशयविरोधी । अन्यथा तवाप्यतिप्रसङ्गात् । स च न प्रकृते । अभावस्य च यावद्विशेषाभावाधिकरणवृत्तित्वेन विशिष्टस्य तदवच्छेदेन वा सामान्याव-

---

गौरवादित्यर्थः । ननु रूपाभावनिश्चया यावन्तस्तत्प्रत्येकप्रतियोगिकाभावत्वेनैव तादृशसंशये हेतुत्वं वाच्यं न तु तादृशनिश्चयत्वावच्छिन्नाभावत्वेन, सामान्याभावानभ्युपगमात् ध्वंसादिभिरत्यन्ताभावस्य विरोधाच्च, तथा च सम्भावनाकालीनरूपाभावनिश्चयानामप्रवेशेन सम्भावनाविरहविशिष्टा ये रूपाभावनिश्चयास्तत्प्रत्येकप्रतियोगिकाभावत्वेन हेतुतायामेव विपरीतलाघवमत आह विनापीति । यत्तु सम्भावनाविरहविशिष्टरूपाभावनिश्चयत्वावच्छिन्नाभावस्याखण्डस्य तद्व्यक्तित्वेन हेतुत्वे गौरवानवकाशादुक्तं विनापीत्यादि । तत्तुच्छम् । सामान्याभावानभ्युपगन्तृणामनुगतरूपावच्छिन्नस्याखण्डाभावस्य शङ्कितुमप्यशक्यत्वात् । विशेषाभावनिश्चय इति । विशेषाभावत्वप्रकारकनिश्चय इत्यर्थः । यत्पत्युपाध्यायमतमुत्थापयति अथेति । सामान्येत्यादि । सामान्यपदमवच्छिन्ने प्रतियोगितायां चान्वितम् । तथा च सामान्यावच्छिन्नस्य स्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेणाभावविशेष्यकनिर्णय एव संशयविरोधीत्यर्थः । तेन रूपं नास्तीत्यादिप्रतीतौ रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्याप्रकारत्वेपि न क्षतिः । तव । सामान्याभाववादिनः । अतिप्रसङ्गादिति । अभावत्वादिप्रकारेणापि सामान्याभावस्य निश्चयसत्त्वे तादृशसंशयानुत्पत्तिप्रसङ्गादित्यर्थः । स चेति । तादृशनिश्चयो न संशयस्थल इत्यर्थः । तत्सत्त्वे संशयस्य केनाप्यनङ्गीकारादिति भावः । ननु विशेषाभावस्यैव सामान्यावच्छिन्नप्रतियोगिताकत्वे रूपवत्यपि रूपं नास्तीतिप्रत्ययस्य प्रामाण्यापत्तिः तत्रापि यत्किञ्चिद्रूपाभावसत्त्वादत आह अभावस्य चेति । ननु विशिष्टस्यानतिरिक्ततया तद्दोषताद्वस्थ्यमधिकरणभेदेनाभावभेदस्यानभ्युपगमादत आह तदवच्छेदेनेति । यावद्विशेषाभावाधिकरणवृत्ति-

च्छिन्नप्रतियोगिताकत्वम्। सम्भवति चेदम्, तादृशाभावप्रतियोगितायां अतिरिक्तत्वात्। तेन नैकविशेषवतो विशेषान्तराभाववत्त्वेन सामान्याभाववत्त्वप्रसङ्गः। न च प्रतियोगितावच्छेदकभेदस्याभावभेदानियामकतया भेदासिद्धिः, प्रतियोगिभेदस्य तत्त्वे एकघटप-

---

त्वावच्छेदेनेत्यर्थः। तथा च रूपवतो यावद्विशेषाभावानधिकरणत्वादेव न तत्र रूपं नास्तीतिप्रत्ययः। नन्विदमसम्भवयुक्तिकं तत्तद्रूपत्वावच्छिन्नप्रतियोगिताया एव रूपत्वावच्छिन्नप्रतियोगितात्वाद्रूपवदवच्छेदेनापि तत्तद्रूपाभावस्य रूपत्वावच्छिन्नप्रतियोगिताकत्वात्, अन्यथा तत्तद्रूपत्वावच्छिन्नप्रतियोगिताकत्वमपि तदवच्छेदेन न स्यादत आह सम्भवति चेदमिति। इदम्। यावद्विशेषाभावाधिकरणावच्छेदेनैव सामान्यावच्छिन्नप्रतियोगिताकत्वम्। तादृशेति। सामान्यावच्छिन्नप्रतियोगिताया यावद्विशेषधर्मावच्छिन्नप्रतियोगित्वातिरिक्तत्वादित्यर्थः। यद्यपि सामान्यविशेषावच्छिन्नयोः प्रतियोगितयोरैक्येपि न क्षतिः सामान्यावच्छेद्यत्वविशिष्टप्रतियोगिताकत्वावच्छिन्नस्याधिकरणताया विशेषवत्यसत्त्वादेवातिप्रसङ्गभङ्गात्, अन्यथा गुणान्यत्वविशिष्टं यद्वस्तुगत्या सत्त्वं तस्यैव गुणेपि सत्त्वात्तत्रापि विशिष्टसत्ताप्रतीत्यापत्तेः। तथापि अनुगतप्रतीतिबलात् सामान्यावच्छिन्नप्रतियोगिताव्यक्तेरतिरिक्तत्वसिद्धौ तत एवातिप्रसङ्गव्युदासः सम्भवतीत्याशयेनेदमभिहितमिति द्रष्टव्यम्। सामान्याभाववत्त्वम्। नीरूपमित्यादिप्रमाविशेष्यत्वम्। मिश्रमतमाशङ्कते न चेति। वाच्यमितिपरेणान्वयः। अभावभेदेत्यस्य सर्वत्रेत्यादिः। नियामकत्वादिति। अन्यथा घटपटाद्यभावयोरपि भेदो न सिध्येदिति भावः। भेदसिद्धिरिति। सामान्याभावविशेषाभावयोरित्यादिः। अवच्छेदकीभूतयोः सामान्यविशेषधर्मयोर्भेदादिति भावः। ननु प्रतियोगिभेदस्यैवाभावभेदनियामकत्वात् घटपटाद्यभावयोरस्तु भेदो न तु सामान्यविशेषाभावयोरभिन्नप्रतियोगिकत्वादत आह प्रतियोगीति। तत्त्वे अभावभेदकत्वे। प्रागभावादीत्यादिना ध्वंसात्यन्ताभावान्योन्याभावानां परिग्रहः। अभेदप्रसङ्गात्। भेदासिद्धिप्रसङ्गात्। नन्ववच्छेद-

तियोगिकस्य प्रागभावादिचतुष्कस्याभेदप्रसङ्गात्, अवच्छेदकन्तु भिद्यत एव तत्र क्व चित्तादात्म्यस्य क्व चित्संसर्गस्य क्व चित्पूर्व्वापरकालीनतद्घटत्वादेश्च तथात्वादिति वाच्यम्। संसर्ग-प्रतियोगिविशेषणसाधारणस्यैकस्यावच्छेदकत्वस्य दुर्वचत्वात्, पू-र्व्वापरकालीनत्वादेर्ध्वंसादिप्रतियोगितावच्छेदकत्वे मानाभावा-च्च। किञ्च अवच्छेदकभेदस्याभावभेदानियामकत्वं न तज्जनक-त्वम्, अत्यन्ताभावादिस्वरूपस्य तस्याजन्यत्वात्। नापि तद्व्या-प्यत्वमपि, वैयधिकरण्यात्। अत एव न तद्व्यापकत्वमपि, अभे-

---

कभेदस्य नियामकत्वेप्युक्तदोषतादवस्थ्यम्, घटत्वादिलक्षणावच्छेद-कस्यैकत्वादत आह अवच्छेदकन्त्विति। क चित्। घटस्यान्योन्या-भावस्थले। तादात्म्यस्य। तथात्वादित्यन्वयः। अवच्छेदकत्वादिति तद-र्थः। एवमग्रेपि। क चित्। घटस्यात्यन्ताभावस्थले। संसर्गस्य। संयो-गादेः। क चिदिति। ध्वंसस्थले पूर्वकालीनतद्घटत्वस्य प्रागभावस्थले चोत्तरकालीनतद्घटत्वस्य प्रतियोगितावच्छेदकत्वादित्यर्थः। दुर्व-चत्वादिति। तथा चाननुगमात् कथं नियामकत्वमिति भावः। ननु संसर्गविधया विशेषणविधया वा अवच्छेदकयोरन्यतरभेद एव नियामको वक्तव्य इति नाननुगम इत्यत आह पूर्वेति। मानाभा-वाच्चेति। तथाच न सर्वसाधारण्यमिति भावः। ननूक्तक्रमेणावच्छे-दकभेदो नित्याभावभेदको वक्तव्य इत्यत आह किञ्चेति। एका-भावनिष्ठस्यापराभावभेदस्याधिकरणस्वरूपत्वमतिरिक्तत्वं वा उभ-यथाप्यस्य नित्यत्वादिति भावः। वैयधिकरण्यादिति। यद्यपि त-त्तद्रूपाभावीयप्रतियोगितावच्छेदकतत्तद्रूपत्वभेदस्य तत्तद्रूपाभा-वभेदेन सामानाधिकरण्यं रूपत्वघटत्वादावेव सुलभम्, तथापि य-थाश्रुतस्य तत्तद्रूपाभावेष्वेव व्यभिचारित्वाद्यदभावप्रतियोगिता-वच्छेदकवृत्तित्वविशिष्टो यदभावप्रतियोगितावच्छेदकभेदो यत्र तत्र तदभाववृत्तित्वविशिष्टस्तदभावभेद इत्येवं व्याप्तिर्वाच्येति तत्रैव वैयधिकरण्यं द्रष्टव्यमिति ध्येयम्। अत एव। उक्तक्रमेण

देऽप्यविरोधाच्च । न च तदितरधर्म्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकान्यत्वस्य व्याप्यम् । मानाभावात् । अत एव च समनियतसुखदुःखादितत्तत्संख्यापरिमाणव्यक्त्यादिना-नाधर्मावच्छिन्नोऽप्यभिन्न एवाभावः । भेदसिद्धिस्तु भाववदभा-

---

वैयधिकरण्यादेव । ननु यत्रात्यन्ताभावे यद्धर्मावच्छिन्नाभावभेदस्तत्रावश्यं तदन्यधर्मावच्छिन्नप्रतियोगिताकत्वमित्युक्तौ न वैयधिकरण्यावकाश इत्यत आह अभेदेपीति । सामान्याभावविशेषाभावयोरभेदेप्युक्तनियमस्याविरुद्धत्वादित्यर्थः । तथा चाभावभेदासाधकत्वेनोक्तव्यापकत्वमर्थान्तरग्रस्तमिति भावः । न चेत्यादि । घटत्वेतरसंयोगसम्बन्धावच्छिन्नप्रतियोगिताके घटत्वावच्छिन्नाभावे व्यभिचारस्य वारणाय प्रथमं धर्मपदं विशेषणविधयावच्छेदकस्य प्रापकम्, समवायसम्बन्धेतरघटत्वावच्छिन्नप्रतियोगिताके समवायसम्बधावच्छिन्नघटाभावे तद्वारणाय द्वितीयं धर्मपदम् । न च गुरुधर्मावच्छिन्नाभावाप्रसिद्ध्या व्याप्यत्वासिद्धिः, तदितरेत्यनेन तद्धर्मानवच्छेद्यप्रतियोगिताकत्वस्य विवक्षितत्वात् । तत्पदेनाखण्डधर्मस्यावच्छेदकीभूतधर्मस्य वा विवक्षणात् । गुरोरवच्छेदकत्वोपगमाद्वा नोक्तदोष इत्यपि वदन्ति । मानाभावादिति । तथा च तत्तद्रूपत्वावच्छिन्नाभावो रूपत्वावच्छिन्नप्रतियोगिताकान्यः रूपत्वेतरधर्मावच्छिन्नप्रतियोगिताकत्वादित्याद्यनुमानमप्रयोजकमिति भावः । अत एवेति । उक्तव्याप्तौ मानाभावादेवेत्यर्थः । दुःखादीत्यादिना धर्माधर्मादेः परिग्रहः । न चात्मत्वापेक्षया गुरुत्वेन सुखवत्त्वादेरवच्छेदकत्वासम्भवः, तस्येश्वरवृत्तितयातिप्रसक्तत्वेन लाघवस्याकिञ्चित्करत्वादिति भावः । ननु सुखावच्छिन्नस्य चैत्रादेः सत्वेपि भूतलादाविदानीं दुःखविशिष्टो नास्तीतिप्रत्ययादिदमसङ्गमत आह तत्तत्संख्येति । द्रव्यत्वापेक्षया गुरुणः संख्यावत्त्वादेरवच्छेदकत्वायोगादुक्तं तत्तादिति । नानाधर्मावच्छिन्न इति । नानाधर्मावच्छिन्नप्रतियोगिताक इत्यर्थः । ननूक्तव्याप्तेरसत्वे घटपटाद्यभावानामपि भेदो न सिद्ध्येदत आह भेदसिद्धिस्त्विति । तथा च घटवद्वृत्तित्वादि-

वस्यापि विरुद्धधर्म्माध्यासादेव। अत एव गगनादीनामवृत्तीनां समनियतानां वा धर्माणामेक एवात्यन्ताभावः, युगपदुत्पन्नविनष्टानां समानदेशानामसति बाधके एक एव ध्वंसः प्रागभावो वे-

---

विरुद्धधर्म्मवत्त्वादेव घटाद्यभावाद्भेदः पटाभावादौ साध्य इति भावः। अवृत्तीनामिति। येन सम्बन्धेन येऽवृत्तयस्तेन सम्बन्धेन तेषामेक एवाभाव इत्यर्थः। तेन वृत्तिमतोपि रूपादेः संयोगादिसम्बन्धेनाभावस्योपग्रहः। समनियतानामिति। तत्तदेकत्वपरिमाणादिव्यक्तीनामित्यर्थः। युगपद्विनष्टानामेक एव ध्वंसो युगपदुत्पन्नानां चैक एव प्रागभाव इत्यर्थः। समानदेशावच्छिन्नयोरपि विभिन्नकालोत्पन्नविनष्टयोः प्रागभावध्वंसयोर्नानात्वाद्युगपदित्युक्तम्। व्यधिकरणयोः समानाधिकरणयोरपि न्यूनाधिकदेशवृत्तिकयोर्युगपदुत्पादविनाशशालिनो रूपसंयोगाद्योः प्रागभावस्य ध्वंसस्य च विभिन्नत्वात् समनियतदेशानामित्युक्तम्। मूलाग्रावच्छिन्नवृक्षवृत्तिकयोर्युगपदुत्पन्नविनष्टयोरपि वृक्षपटसंयोगयोर्ध्वंसप्रागभावयोर्नानात्वादाह असतीति। तत्र ध्वंसादेरेकत्वे मूलावच्छिन्नसंयोगोऽग्रे नष्ट इत्यादिप्रतीत्यापत्तिरेव बाधिकेति भावः। यत्तु युगपदुत्पन्नविनष्टानामपि समनियतरूपरसादीनां न ध्वंसादेरैक्यं तथा सति तद्रूपं नष्टमितिवत् तद्रसो नष्ट इत्यपि चाक्षुषापत्तेः, रूपध्वंसस्यैव रसध्वंसत्वेन चक्षुरयोग्यत्वस्य वक्तुमशक्यादत उक्तमसति बाधक इति। तत्तुच्छम्। रसध्वंसव्यक्तेश्चक्षुर्योग्यत्वेपि रसप्रतियोगिकध्वंसत्वेनायोग्यत्वसम्भवात्प्रतियोगिविशेषमन्तर्भाव्यैवाभावस्य तत्तदिन्द्रिययोग्यताया निर्वाच्यत्वादिति। प्राञ्चस्तु युगपदुत्पन्नस्यैकपाकजातरूपादिचतुष्टयस्य विभिन्न एव प्रागभावः। कथमन्यथा सामग्र्यभेदे कार्य्यस्य रूपादेर्मिथो भेद इत्यत उक्तमसति बाधक इति। न च नित्यानामिव जन्यानामपि रूपादिचतुर्णां विरुद्धधर्माध्यासादेव भेदोपपत्तौ सामग्रीभेदस्य कार्यभेदाप्रयोजकत्वमिति वाच्यम्। सामग्रीभेदस्य कार्य्यभेदाप्रयोजकत्वे सामग्रीविशेषस्य कार्य्यविशेषानियामकत्वस्याप्युपक्षापत्तेः कार्य्याणां कालान्तरानुत्पादस्यापि विरुद्धधर्म्मा-

ति । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकस्तदा तस्यैकस्यैव प्रतियोगिताः सर्वैरेव व्यधिकरणैर्धर्मैः सर्वैश्च समानासमानाधिकरणैः सम्बन्धैरवच्छिद्यन्ताम्, आकाशाभाव एव वा तथास्तामिति । मैवम् । एवं हि तत्तद्देशकालाद्यवच्छिन्नानवच्छिन्नतत्तदधिकरणवृत्तित्वेन विशिष्टस्य तत्तदवच्छेदेन वा एकस्यै-

———

व्यासादेवोपपत्तेरित्याहुः । प्रतियोगिता इति । बहुत्वं प्रतियोगिभेदेन स्वरूपसम्बन्धरूपायाः प्रतियोगिताया नानात्वमभिप्रेत्य । वस्तुतस्तु तद्धर्मानधिकरणेषु सर्वेष्वेव तद्धर्मावच्छिन्नैकप्रतियोगितास्वीकारे घटनिष्ठपटत्वावच्छेद्यप्रतियोगिताव्यक्तेरेव पटनिष्ठघटत्वावच्छिन्नप्रतियोगितात्वाद् घटवत्यपि घटत्वेन घटो नास्तीत्यादिव्यवहारस्य प्रामाण्यापत्तिरतोऽतिरिक्तापि प्रतियोगिता स्वाश्रयभेदान्नानैवेति ध्येयम् । सर्वैश्चेति । समानाधिकरणैर्व्यधिकरणैश्चेत्यर्थः । [ इत्थं च प्रतियोगितावच्छेदकधर्मस्येव प्रतियोगितावच्छेदकसम्बन्धस्यापि अभावभेदनियामकत्वे व्यभिचारो दर्शितः ] यथा च व्यधिकरणधर्मावच्छिन्नप्रतियोगितायाः सम्बन्धावच्छिन्नत्वं तथा विवेचितमधस्तात् । लाघवादाह आकाशाभाव एव वेति । एतन्मये कालाद्यभावस्याप्याकाशाभावत्वान्नैवकारासङ्गतिः । एवमिति । तत्तदधिकरणमन्तर्भाव्य विशेषाभावैरेव सामान्याभावस्यान्यथासिद्धावित्यर्थः । देशे काले चाव्याप्यवृत्तीनां घटादीनामभावस्य तत्तदधिकरणवृत्त्यभावमात्रेण अन्यथा कर्तुमशक्यत्वादाह तत्तद्देशकालाव-च्छिन्नेति । प्रतियोग्यनवच्छेदकीभूतदेशकालावच्छिन्नेत्यर्थः । अन्यथा कोण इव मध्येपि गृहे घटो नास्ति तदानीमिवेदानीमपि गृहे घटो नास्तीत्यादिप्रत्ययो घटाद्यवच्छेदकदेशकालाद्यवच्छेदेनापि स्यात् तदधिकरणवृत्त्यभावस्य घटत्वावच्छिन्नप्रतियोगिकत्वनियमादिति भावः । व्याप्यवृत्तीनां गोत्वाश्वत्वादीनामभावस्य गोत्वादिशून्यतत्तदधिकरणवृत्तित्वविशिष्टाभावमात्रेणैवान्यथासिद्धिसम्भवे तत्र देशकालावच्छिन्नत्वं न प्रवेशनीयमित्याशयेनाह अनवच्छिन्नेति । देशकालानवच्छिन्नेत्यर्थः । तत्तदधिकरणेति । प्रतियोगिशू-

वाभावस्य घटपटगोत्वाश्वत्वादिप्रतियोगिकत्वसम्भवेन तत्तद्भेदोऽपि विलुप्येत । तत्तत्प्रतियोगिकत्वं तत्तत्स्वभावो न च तत्राधिकरणवृत्तित्वस्यान्तर्भावोऽवच्छेदकत्वञ्चेति तु समानम् । अत एव सामान्यावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्तीत्यपि प्रत्युक्तम् । अव्यासज्यवृत्तेस्तत्स्वभावस्य तत्त्वानुपपत्तेरतिरिक्तकल्पने च किम-

---

न्येत्यादिः । विशिष्टस्यानतिरिक्तत्वादाह तदवच्छेदेन वेति । देशकालावच्छिन्नानवच्छिन्नतत्तदधिकरणवृत्तित्वावच्छेदेन वेत्यर्थः । तद्भेदोऽपीति । घटपटाद्यभावभेदोऽपीत्यर्थः । सामान्याभावस्थल इव युक्तेस्तौल्यादिति भावः । शङ्कते तत्प्रतियोगिकत्वमिति । तत्स्वभावः । तत्तदभावस्वरूपः । न चेति । तादृशस्वभावलक्षणे तत्प्रतियोगिकत्वे अधिकरणविशेषवृत्तित्वस्यान्तर्भावो घटकत्वमवच्छेदकत्वं वा न युक्तं तदभावस्वरूपस्य सर्वत्राविशेषात् तथा च घटाभावस्यैव पटाभावत्वे पटवत्यपि पटो नास्तीतिप्रतीत्यापत्त्या तयोर्भेद इति भावः । शङ्कां निरस्यति इति तु समानमिति । सामान्यावच्छिन्नप्रतियोगिताकत्वमपि तत्तद्विशेषाभावस्वरूपमेवेति तत्र यावद्विशेषाभावाधिकरणवृत्तित्वस्यानन्तर्भावादनवच्छेदकत्वाच्च रूपवत्यपि रूपं नास्तीतिप्रतीत्यापत्त्या सामान्यविशेषाभावयोरप्यवश्यं भेद इत्यर्थः । अत एव । प्रतियोगिकत्वस्य तत्स्वभावलक्षणत्वादेवेत्यर्थः । व्यासज्यवृत्तीति । तथा च तत्पर्य्याप्त्यधिकरणस्य विशेषाभावकूटस्य विरहादेव रूपवति रूपं नास्तीति न प्रत्यय इति भावः । तत्स्वभावस्य । तत्तदभावपर्य्यवसितसामान्यावच्छिन्नप्रतियोगिताकत्वस्वरूपस्य । तत्त्वम् । व्यासज्यवृत्तित्वम् । ननु सामान्यावच्छिन्नप्रतियोगिताकत्वं न तत्तदभावस्वरूपं किं त्वतिरिक्तमेवेति तस्य व्यासज्यवृत्तित्वकल्पने बाधकाभाव इत्यत आह अतिरिक्तकल्पने चेति । अतिरिक्तेनेति । प्रागुक्तघटपटादिनिखिलप्रतियोगिकैकाभावेनेत्यर्थः । घटपटगोत्वादिप्रतियोगिकत्वमपि न तदभावव्यक्तिस्वरूपं किं तु सामान्यावच्छिन्नप्रतियोगिताकत्ववदतिरिक्तमेव वाच्यमिति घटादिशून्यतत्तदधिकरणावच्छेदेनैकस्यैवातिरिक्ताभावस्य घटपटादिप्रतियोगिक-

पराद्धमतिरिक्ताभावेन। किञ्च व्यधिकरणयोर्घटपटयोर्द्वित्वप्रती-
तिवद्व्यधिकरणानामपि विशेषाभावानां युगपदिन्द्रियसन्निकर्षे
सामान्यावच्छिन्नप्रतियोगिताकत्वप्रत्ययोऽपि स्यात्। अपि च रू-
पान्तरेण सम्बन्धविधया वा व्यासज्यवृत्तिधर्मस्य ज्ञाने न याव-
दाश्रयसन्निकर्षापेक्षा मानाभावात्। एवञ्च एकाभावसन्निकर्षेऽपि
सामान्याभावबुद्धिप्रसङ्गः। यादृशे च तस्य ज्ञाने यावदाश्रयाणां स-

---

त्वं स्याद्बाधकाभावात् तथा च घटपटाद्यभावानां मिथो भेदो विलु-
प्येतेति पूर्वमेवानुवर्त्तन इति भावः। ननु घटपटयोरिव तदुभयाभा-
वयोरपि मिथो भेदस्यानुभवसिद्धत्वान्न तद्विलोपप्रसङ्गः, सामान्या-
वच्छिन्नप्रतियोगिताकत्वस्यातिरिक्तस्य व्यासज्यवृत्तितायां बाधकः
प्रतिबन्दिरनुत्तरं चेत्यत आह किञ्चेति। व्यासज्यवृत्तिप्रत्यक्षं
प्रत्यैकाधिकरण्यापन्नयावदाश्रयाणां सन्निकर्षस्य हेतुत्वे वक्ष्यमा-
णातिप्रसङ्गासम्भवात्तथा हेतुतायां व्यभिचारं दर्शयन्नाह व्य-
धिकरणयोरिति। इन्द्रियसन्निकर्ष इत्यस्य विशेषाभावद्वदधिक-
रणद्वयादिमात्रावच्छेदेनेत्यादिः। प्रत्ययः। साक्षात्कारः। तथा च
घटपटोभयमात्रसन्निकर्षेऽपि रूपं नास्तीतिप्रत्यक्षं स्याद्रूपाभावकूटस्यै-
वोभयत्र सन्निकर्षादिति भावः। ननु व्यासज्यवृत्तिव्यक्त्यन्तरप्रत्यक्षं
प्रत्यैकाधिकरण्यापन्नयावदाश्रयसन्निकर्षस्य व्यभिचारेणाहेतुत्वे-
ऽप्यन्वयव्यतिरेकाभ्यां सामान्यावच्छिन्नप्रतियोगिताकत्वप्रत्यक्षं प्र-
ति तथाविधसन्निकर्षत्वेन हेतुत्वे बाधकाभावान्नोक्तदोष इत्यत आह
अपि चेति। [ नन्वैकाधिकरण्यापन्नवृत्तिव्यासज्यवृत्तिधर्मप्रत्यक्षं
प्रत्यैकाधिकरण्यापन्नयावदाश्रयसन्निकर्षत्वेन हेतुत्वान्नोक्तदोष इत्य-
त आह अपि चेति तु नव्याः ] रूपान्तरेणेति। व्यासज्यवृत्ति-
त्वानिरूपकगुणत्वरूपप्रतियोगिताकत्वत्वादिप्रकारेणेत्यर्थः। प्रकृ-
तमभिप्रेत्याह सम्बन्धविधया वेति। मानाभावादिति। द्रव्या-
न्तरसन्निकर्षदशायां घटो गुणवानित्यादिप्रत्यक्षेण गुणत्वादिप्र-
कारेण द्वित्वादेर्घटे रूपप्रतियोगिकोऽभाव इत्यादिप्रत्यक्षेण च रूप

न्निकर्षोऽपेक्ष्यते तत्र तेषां तद्भेदस्य च ज्ञानमपि। तदज्ञाने तदभेद-

---

प्रतियोगितात्वप्रकारेण रूपत्वावच्छिन्नप्रतियोगिताव्यक्तेर्विषयी-करणे क्षत्यभावादिति भावः। सामान्याभावेति। स्वावच्छिन्नप्रति-योगिताकत्वसंसर्गेण रूपत्वादिसामान्यविशिष्टवैशिष्ट्यावगाह्यभा-वप्रत्यक्षप्रसङ्ग इत्यर्थः। न च संसर्गप्रकारसाधारणसामान्यावच्छि-न्नप्रतियोगिताकत्वलौकिकप्रत्यक्षमात्रं प्रत्येव निरुक्तयावदाश्रयसन्नि-कर्षत्वेन हेतुत्वान्नोक्तदोषः, तथा सत्यनन्तसामान्यान्तर्भावेणानन्त-कार्यकारणभावकल्पनामपेक्ष्य लाघवादतिरिक्तसामान्याभावकल्पन-स्यैव युक्तत्वादिति भावः। न च यत्किञ्चिद्रूपाभावसन्निकर्षदशायां रूपसामान्याभावप्रत्यक्षं जायत एव त्वन्मतेपि घटत्वादौ रूपसा-मान्याभावस्य सन्निकृष्टतया घटत्वे रूपं नास्तीतिप्रत्यक्षस्य तदानीं दुर्वारत्वादिति वाच्यम्। घटद्वयसन्निकर्षदशायां रूपत्वावच्छिन्नप्र-तियोगिताकत्वपर्य्याप्त्यधिकरणेष्वभावेषु घटवृत्तित्वावगाहिनो घटे रूपं नास्तीत्याकारकप्रमात्मकप्रत्यक्षस्यापाद्यत्वात् घटादीनां रूप-त्वावच्छिन्नप्रतियोगिताकत्वपर्य्याप्त्यधिकरणयावदभाववत्त्वविरहेपि तादृशयावदभावस्य घटवृत्तित्वानपायात्। न हि घटवृत्तित्वप्रमाया एकव्यक्तिमात्रविशेष्यकत्वेनैकव्यक्तिनिरूपिताधेयत्वप्रकारकत्वेन वा समं नियमः, मानाभावात् रूपद्वयं घटवृत्तीत्यादिप्रमायां व्यभि-चाराच्चेति भावः। सामान्यावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्य-वृत्तित्वे सामान्याभावप्रतीतेरतिप्रसक्तिमभिधायाऽप्रसङ्गमप्याह या-दृशे चेति। तस्य। व्यासज्यवृत्तिधर्मस्य। तेषाम्। यावदाश्रयाणां ज्ञानमप्यपेक्ष्यत इति योजना। विषयतासम्बन्धेन पर्याप्तवृत्तिकस्य चाक्षुषादिकं प्रति स्वविषयपर्य्याप्तत्वसम्बन्धेन चाक्षुषत्वादिना हे-तुत्वादिति भावः। तद्भेदस्येति। तेषामाश्रयाणां मिथो भेदस्येत्य-र्थः। ज्ञानमप्यपेक्ष्यत इति पूर्वेणान्वयः। तत्तद्व्यक्तिधर्मिकपर्य्याप्तवृ-त्तिकप्रत्यक्षं प्रति तत्तद्व्यक्तिभिन्नत्वप्रकारकप्रत्यक्षप्रमात्वेन हेतु-त्वं तत्र च कार्यस्य तत्तद्व्यक्तिभिन्नवृत्तिविशेष्यत्वं कारणस्य च विशेष्यतामात्रं प्रत्यासत्तिः,विशेषाभावानामैक्यभ्रमदशायां तेषु प-र्याप्तिसम्बन्धेन त्रित्वादिप्रत्यक्षानुदयेन तदन्तर्भावेनाप्युक्तकार्य्यका-

ज्ञाने च तदग्रहात् आश्रयभेदभ्रमेण तद्भ्रमदर्शनाच्च। न चात्र यावद्विशेषाभावानां प्रथममुपस्थितिः सम्भवति, तत्प्रतियोगिनां

---

रणभावस्यावश्यकत्वात्। अभावादौ संख्यायाः समवायेनाऽसत्त्वेपि पर्य्याप्तिसम्बन्धेन सत्त्वे बाधकाभावात् तत्तद्व्यक्तिधर्मिक पर्य्याप्तवृत्तिकस्य भ्रमात्मकप्रत्यक्षे तु तत्तद्व्यक्तिभिन्नत्वस्य भ्रमात्मकमेव प्रत्यक्षं दोषः समानविशेष्यताप्रत्यासत्त्या हेतुर्वक्तव्य इत्याश्रयभेदभ्रमाद्द्वित्वादिभ्रमो नानुपपन्न इति वदन्ति। अपेक्षायामन्वयव्यतिरेकौ दर्शयति तदज्ञान इत्यादिना। यावदाश्रयाणामज्ञाने परस्परमभेदज्ञाने वा व्यासज्यवृत्तिधर्मस्य द्वित्वादेरप्रत्यक्षत्वादित्यर्थः। अत एव दूरत्वादिदोषात् क्रमापन्नवृक्षाणामभेदभ्रमे तत्र सतोपि द्वित्वादेर्न साक्षात्कार इति भावः। तद्भ्रमेति। अत एव मध्याच्छादितैकदण्ड एव भेदभ्रमाद्दण्डद्वयीबुद्धिरिति भावः। अत्र सामान्यावच्छिन्नत्वस्थले। यावद्विशेषाभावानामिति। यावतामाश्रयाणां ये विशेषाभावाः परस्परभेदरूपाभावास्तेषामित्यर्थः। प्रथमम्। सामान्यावच्छिन्नप्रतियोगिताकत्वग्रहात्पूर्वम्। तत्प्रयोगिनामिति। तस्य परस्परभेदस्य ये प्रतियोगिनो विशेषाभावास्तेषां विशेषणस्तत्तदभावव्यक्तित्वेनानुपस्थितेरित्यर्थः। तथा च सामान्यावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तित्वे कारणबाधात् प्रत्यक्षमेव न स्यादिति भावः। केचित्तु वन्ह्यादिकार्य्यजनकत्वेनोत्तेजकाभावविशिष्टमण्यादिसामान्याभाव आवश्यको न हि तत्र तत्तन्मण्यभाववत्त्वेन हेतुत्वमनन्तकार्यकारणभावापत्तेर्नाप्युत्तेजकाभावविशिष्टमणित्वावच्छिन्नप्रतियोगिताकत्वेनानुगतधर्मेण विशेषाभावानामेव तत्र हेतुत्वमवच्छेदकगौरवापत्तेरस्माकं त्वखण्डतादृशमण्यभावव्यक्तित्वेनैव हेतुतायामवच्छेदकलाघवात्। न चोत्तेजकाभावविशिष्टमणित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन मणिमदभावत्वेनैव हेतुत्वम्, तादृशप्रतियोगिताकत्वस्याभावांशे मणित्वावच्छिन्नीयसंसर्गत्वविरहात्। अन्यथा मणिमत्यपि देशे मणिर्नास्तीतिप्रत्ययापत्तेः विशिष्टमणित्वावच्छिन्नप्रतियोगिताकत्व-

विशेषतोऽनुपस्थितेरिति दिक्। केचित्तु अनन्तविशेषाभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पनामपेक्ष्य लाघवात् सामान्यावच्छिन्नप्रतियोगिताकत्वेनैक एवाभावः कल्प्यते। कल्पनीयशरीरस्योभयत्र तुल्यत्वेऽपि एतदपेक्ष्य तस्य गुरुत्वात्। विनिगमनाभावेऽपि च सामान्याभावसिद्धि-

---

सम्बन्धेन यो मणिमानभावस्तस्य तत्र सत्त्वात्। अत एव घटत्वावच्छिन्नप्रतियोगिताकत्वं घटत्वविशिष्टस्यैव संसर्गो न तु द्रव्यत्वप्रमेयत्वादिविशिष्टस्येति निर्घटे घटो नास्तीत्येव प्रत्ययो न तु द्रव्यं प्रमेयं वा नास्तीत्याकार इति सिद्धान्तः। न च प्रतियोग्यविशेषितस्याऽखण्डाभावस्य तत्तद्व्यक्तित्वेन हेतुतायामन्यथासिद्धिः अन्यथा मणेस्तत्तद्घटादीनां चान्यतमत्वावच्छिन्नाभावस्याप्यखण्डस्य तत्तद्व्यक्तित्वेन दाहजनकत्वापत्तेरिति वाच्यम्। त्वन्मतेऽप्येतद्दोषस्य तुल्यत्वाद्यद्धर्मावच्छिन्नाभावत्वापेक्षया यद्धर्मावच्छिन्नाभावत्वं गुरुतरं तद्धर्मावच्छिन्नाभावव्यक्तेरेव तद्धर्मावच्छिन्नाभावव्यक्तेरन्यथा सिद्धेः सुवचत्वाच्चेति वदन्ति। यत्तु विशेषाभावकूटस्य सामान्यावच्छिन्नप्रतियोगिताकत्वोपगमे प्रमेयं नास्ति प्रमेयाद्भेद इत्यादिप्रतीतेः प्रामाण्यापत्तिस्तत्तत्प्रमेयात्यन्ताभावकूटस्य तत्तत्प्रमेयभेदकूटस्य च प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वसम्भवादिति। तन्न। प्रतियोगितावच्छेदकीभूतं यत्सामान्यं तदवच्छिन्नप्रतियोगिताकत्वस्यैव विशेषाभावकूटेषु स्वीकर्त्तव्यत्वात्, अन्यथा सामान्याभावस्वीकारेपि तद्दोषतादवस्थ्यादिति संक्षेपः। सार्वभौममतमुपन्यस्यति केचित्त्विति। तद्व्यासज्येति। सामान्यावच्छिन्नप्रतियोगिताकत्वे पर्याप्तिलक्षणव्यासज्यवृत्तित्वस्य चेत्यर्थः। ननु तत्र सामान्यावच्छिन्नप्रतियोगिताकत्वतदाश्रयोभयोः कल्पनावन्ममापि सामान्यावच्छिन्नप्रतियोगिताकत्वतद्व्यासज्यवृत्तित्वोभयोः कल्पनात्कुत एकत्र लाघवमत आह कल्पनीयेति। एतत्। अतिरिक्ताभावे सामान्यावच्छिन्नप्रतियोगिताकत्वम्। तस्य। व्यासज्यवृत्तिसामान्यावच्छिन्नप्रतियोगि-

रप्रत्यूहैव। धर्मकल्पनातो धर्मिकल्पनाया गुरुत्वं कल्पनीयानेकत्वप्रयुक्तम्। न चातिरिक्ताभावस्य तत्र च सामान्यावच्छिन्नप्रतियोगिताकत्वस्याऽनन्तवाय्वाद्यधिकरणवृत्तित्वस्य च कल्पनामपेक्ष्य क्लृप्तानन्तवाय्वाद्यधिकरणवृत्तित्वानां यावद्विशेषाभावानामेव सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पनैव लघीयसीति वाच्यम्। एवं सत्यभावमात्रासिद्धिप्रसङ्गादित्याहुः॥

---

ताकत्वस्य। गुरुत्वादिति। पर्याप्तेः सम्बन्धान्तरनियतत्वेन बहुविधाभावेषु कल्पनीयस्वरूपसम्बन्धकत्वेन गुरुत्वादित्यर्थः। ननु पर्याप्तेः सम्बन्धान्तरानियतत्वे मानाभावाद्विशेषाभावेषु सामान्यावच्छिन्नप्रतियोगिताकत्वस्यातिरिक्तः पर्य्याप्त्याख्य एव सम्बन्धो वाच्यो न तु स्वरूपसम्बन्धोपीति विशेषाभावकूटेपि सामान्यावच्छिन्नप्रतियोगिताकत्वस्य पर्य्याप्तिमात्रकल्पनायां न गौरवमत आह विनिगमनाविरहेपीति। विवादास्पदयोरर्थयोरेकमात्रे प्रमाणस्य सद्भावो विनिगमना तद्विरहस्थलेपि चेत्यर्थः। यत्रोभयत्रैव प्रमाणाविरहस्तत्रोभयमेव न सिद्ध्यति यथा चक्रविशिष्टदण्डत्वेनेव दण्डविशिष्टचक्रत्वेनापि न घटं प्रति जनकत्वं लाघवसहकृतप्रत्यक्षादिप्रमाणेन दण्डत्वचक्रत्वाभ्यामेव तदवधारणात् यत्र चोभयत्रैव प्रमाणस्यावतारस्तत्र द्वयमेव सिद्ध्यतीति प्रकृते सामान्यावच्छिन्नप्रतियोगिताकत्वस्य पर्य्याप्त्याख्यसम्बन्ध इव तस्याश्रयेप्यतिरिक्तं रूपं नास्तीति प्रत्यक्षप्रमाणस्य तौल्यादवश्यमतिरिक्तः सामान्याभावो वाच्य इति भावः। ननु उभयत्र प्रमाणसद्भावेपि धर्मकल्पनातो धर्मिकल्पनाया गुरुत्वमिति न्यायलब्धमेव गौरवं सामान्याभावे धर्मिणि बाधकं भविष्यतीत्यत आह धर्मेति। कल्पनीयेति। तथा चानेकस्याऽकल्प्यतया सामान्याभावधर्म्मिणः कल्पने बाधकाभाव इति भावः। सामान्याभावधर्म्मिणः कल्पने तत्प्रयुक्तमनेकं कल्प्यमेवेत्याशयेनाशङ्क्य निराचष्टे न चेति। वाच्यमिति परेणान्वयः। वाय्वादीति। रूपाद्यभावाभिप्रायेण। एवं सतीति। धर्म्मिकल्पनोत्तरकल्पनागौरवस्यापि

धर्म्मिकल्पनाविरोधित्व इत्यर्थः । अभावमात्रेति । तत्तद्रूपादिप्रतियोगिकत्वेनातिरिक्ताभावस्यानन्तभूतलाद्यधिकरणे तत्सम्बन्धस्य च कल्पनामपेक्ष्य क्लृप्तानन्तभूतलाद्यधिकरणवृत्तिकेषु तत्तद्भूतलत्वादिधर्मेषु तत्तद्रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वकल्पनायामेव लाघवस्य सुवचत्वात् तत्तद्रूपादिविशेषाभावोऽप्यतिरिक्तो न सिद्ध्येत्, तद्रूपं नास्तीत्यनुगतप्रतीत्याऽतिरिक्तविशेषाभावसिद्धौ सत्यां तत्रानेकाधिकरणसम्बन्धकल्पनागौरवस्य फलमुखत्वाददोषत्वे तु प्रकृतेपि सामान्याभावे तत् सुवचमिति भावः । अत्र प्रतिबन्दिरनुत्तरमित्यस्वरसः केचिदाहुरित्याभ्यां सूचितः ॥

इति श्रीजगदीशभट्टाचार्यविरचितं सामान्याभावप्रकरणं सम्पूर्णम् ।



## चिन्तामणेर्विशेषव्याप्तिः ।

यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम् ।

---

## दीधित्या विशेषव्याप्तिः ।

यद्वेत्यादि । अथात्र नानाव्यक्तिरूपादिसाध्यकैकव्यक्तिपृथिवीत्वादावव्याप्तिः । न च तत्र रूपवत्त्वादिकमेव साध्यं तच्च परम्परासम्बन्धेन रूपत्वादिकमेव तेन च सम्बन्धेन न तदभावः पृ-

---

## जागदीश्या विशेषव्याप्तिः ।

द्रव्यं पृथिवीत्वादित्यादावव्याप्त्यभावादाह नानाव्यक्तीति । ज्ञानत्वेन शब्दत्वेन वा नानाव्यक्तेः साध्यतायामव्याप्त्यभावाद्रूपादीत्युक्तम् । रूपवान् रसादित्यादौ यद्रूपव्यक्तेः प्रतियोगिव्यधिकरणयद्रसवन्निष्ठाभावाप्रतियोगित्वं तद्रूपसामानाधिकरण्यस्य तद्रसव्यक्तौ व्याप्तित्वसम्भवादाह एकव्यक्तीति । रूपवान् तद्रसादित्यादावेकव्यक्तिहेतावव्याप्तिविरहात् पृथिवीत्वादावित्युक्तम् । अव्याप्तिरिति । रूपमात्रस्यैव चालनीन्यायेन तत्तत्पृथिवीनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगित्वादिति भावः । न चेति । वाच्यमित्यन्वयि । रूपवत्त्वं रूपाधिकरणत्वं तदप्यधिकरणभेदाद्भिन्नमेवेत्युक्तदोषतादवस्थ्यादाह तच्चेति । रूपत्वपृथिवीत्वयोः साक्षात्सामानाधिकरण्याभावात् कथं तयोर्व्याप्तिरत आह परम्परेति । स्वाश्रयाधिकरणत्वरूपपरम्परासम्बन्धेनेत्यर्थः । ननु पृथिवीत्ववति समवायेन रूपत्वस्याभाव-

थिव्यादाविति वाच्यम्। रूपादेरसाध्यतापत्तेः। द्रव्यान्यत्वादिविशिष्टसत्त्वाद्यभावस्य द्रव्यादिवृत्तित्वात् सत्त्वादिसाध्यकद्रव्यत्वादावव्याप्तेश्च। अन्यथा विशिष्टतया सत्तादेः साध्यत्वे व्यभिचारिणि जातिमत्त्वादावतिप्रसङ्गात्। व्युत्पादयिष्यते च विशिष्टाभावस्य विशेष्यप्रतियोगिकत्वम्। द्वित्वाद्यवच्छिन्नसाध्याभावस्य तत्र

---

सत्त्वात् कथं तन्निष्ठाभावाप्रतियोगित्वमत आह तेन चेति। परम्परासम्बन्धेन चेत्यर्थः। तदभावः। रूपत्वादेरभावः। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिताश्रयानधिकरणीभूतहेतुमन्निष्ठाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नाया एव प्रतियोगिताया लक्षणघटकत्वादितिभावः। असाध्यत्वम्। अनुमित्यविधेयत्वम्। ननूक्तव्याप्तिज्ञानाद्रूपत्वादिसाध्यकैवानुमितिः व्याप्त्यन्तरज्ञानादेव रूपादिसाध्यकानुमितेः सम्भवात्, स्ववृत्तिरूपत्वावच्छिन्नवत्त्वसम्बन्धेन रूपादेः साध्यतायामुक्तव्याप्तिज्ञानादपि रूपादिसाध्यकानुमित्युत्पादे बाधकाभावाच्चेत्यत आह द्रव्यान्यत्वादीति। अव्याप्तेरिति। व्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैयधिकरण्यस्यानुपादेयत्वात् तत्रत्यलक्षणस्याव्याप्तिरित्यर्थः। ननु तत्र हेतुमन्निष्ठाभावस्य प्रतियोगित्वं वैशिष्ट्यानवच्छिन्नं वाच्यमतो नाव्याप्तिरित्यत आह अन्यथेति। ननु विशेष्यवति विशिष्टाभावो विशेषणाभाव एवेति द्रव्यनिष्ठस्य द्रव्यान्यत्वविशिष्टसत्त्वाभावस्य प्रतियोगित्वं द्रव्यान्यत्वादौ विशेषण एव न तु विशेष्ये सत्तायामतो नाव्याप्तिरत आह व्युत्पादयिष्यत इति। विशिष्टाभावस्तावदतिरिच्यतां मा वा द्रव्ये तदन्यत्वविशिष्टसत्ता नास्तीतिप्रतीतिबलात् द्रव्यनिष्ठाभावस्य वैशिष्ट्यावच्छिन्नप्रतियोगित्वं पुनः सत्तायामावश्यकम्, अन्यथा विशिष्टसत्तावान् जातेरित्यादावतिव्याप्त्यापत्तेरितिभावः। केचित्तु ननु विशेषणविशेष्ययोः सम्बन्धाभावपर्य्यवसन्नस्य विशिष्टाभावस्य प्रतियोगित्वं तदुभयोः सम्बन्ध एव न तु विशेष्य इति नाव्याप्त्यवकाश इत्यत आह अन्यथेति। विशेष्यस्य विशिष्टाभावाप्रतियोगित्वे इत्यर्थः। ननु लक्षणातिप्रसङ्गवारणान्यथानुपपत्तिर्न

सत्वाच्च। अथाऽप्रतियोगित्वं प्रतियोगित्वाभावः स च येन रू-
पेण तद्रूपावच्छिन्नव्याप्यत्वं हेतौ, अस्ति चायं रूपादौ रूपत्वादि-
ना न पृथिव्यादिनिष्ठाभावप्रतियोगित्वमिति प्रतीत्यादिति चेन्न।
तादृशप्रतीत्यादितो रूपत्वादौ प्रतियोगिताया अवच्छेदकत्वाभावो
गृह्यते न तु तदभावावच्छेदकत्वम्, सर्वत्रैव रूपे पृथिवीनिष्ठाभावप्र-

---

वस्तुसाधिकेत्यत आह व्युत्पादयिष्यते चेतीत्याहुः। ननु साध्यता-
वच्छेदकबहिर्भावेन यद्विशिष्टयावच्छिन्नं प्रतियोगित्वं तदन्यत्वेन हे-
तुमन्निष्ठाभावप्रतियोगित्वं विशेषणीयमतो नोक्ताव्याप्त्यतिव्याप्तीत्य-
त आह द्वित्वादीति। तथा च सत्तागुणत्वोभयाभावस्य द्रव्ये स-
त्त्वात्तमादाय सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिः। यद्यपि सा-
ध्यतावच्छेदकभिन्नो यः साध्यनिष्ठो धर्मस्तदनवच्छिन्नैव हेतु-
मन्निष्ठाभावस्य प्रतियोगिता निवेशनीयेत्युक्ताव्याप्त्यादिव्युदा-
सः, तथाऽपि प्रमेयवान् वाच्यत्वादित्यादावव्याप्त्यापत्तेः,
घटत्वाद्यवच्छिन्नाभावस्य तादृशधर्मावच्छिन्नत्वात् प्रमेयत्वावच्छि-
न्नाभावस्य चाप्रसिद्धत्वादिति भावः। सार्वभौममतमुत्था-
पयति अथेति। अप्रतियोगित्वम्। मूलोक्ताप्रतियोगित्वा-
न्तस्यार्थः। प्रतियोगित्वाभावः। हेतुमन्निष्ठाभावप्रतियोगित्वा-
भावः न तु तादृशप्रतियोग्यन्यत्वं भेदमात्रस्यैव व्याप्यवृत्तित्वेन
तदवच्छेदकस्योक्त्यसम्भवात्। नन्वेवं तद्रूपवान् पृथिवीत्वादित्यादा-
वतिव्याप्तिः तद्रूपेऽपि रूपत्वाद्यवच्छेदेन तादृशप्रतियोगित्वाभावस-
त्त्वादतो धर्मविशेषमन्तर्भावयति स चेति। तथा च हेतुमन्निष्ठाभा-
वप्रतियोगित्वाभावावच्छेदको यो धर्मस्तदवच्छिन्नसामानाधिकर-
ण्यमेव तद्धर्मावच्छिन्नस्य व्याप्तिरिति भावः। रूपवान् पृथिवीत्वा-
दित्यादावव्याप्तिमुद्धरति अस्ति चेति। अयम्। रूपत्वाद्यवच्छेद्यः पृथि-
वीत्वादिमन्निष्ठाभावप्रतियोगित्वाभावः। रूपादावस्तीत्यर्थः। प्रमाण-
माह रूपत्वादिनेति। प्रतियोगिताया इति। पृथिवीनिष्ठाभावप्रतियो-
गिताया इत्यर्थः। अवच्छेदकत्वाभाव इति। प्रात्यक्षिकप्रतीत्यभिप्राये-
ण। तथाविधशब्दस्य तु तादृशप्रतियोगित्वं न रूपत्वावच्छेद्यमित्यर्थो
ग्राह्यः। तदभावेति। तादृशप्रतियोगित्वाभावेत्यर्थः। तथा चोक्तलक्ष-

तियोगित्वं न तु कुत्रापि रूपे तदभाव इत्यबाधितप्रत्ययात् । अन्यथा यो यो धर्मो यस्य यस्य नावच्छेदकः तत्तदवच्छेदेन तत्तदभावोऽप्युक्तरीत्या सिध्येत् । प्रमेयधूमत्वेन न वह्निमन्निष्ठाभावप्रतियोगित्वमितिप्रत्ययात्तदवच्छेदेन तादृशप्रतियोगित्वाभावस्यापि सुवचत्वात् । अथ प्रमेयधूमत्वं न गौरवेण सामानाधिकरण्यप्रतियोगितावच्छेदकम्, विवक्षितञ्चात्र तथेति चेत्। असमानाधिकरणधूमकव्यक्तिवृत्तितया वह्नित्वमपि न तदवच्छेदकं कम्बुग्रीवादिमत्त्वादिना च घटादेरसाध्यतापत्तिरिति बहुव्या-

---

णाप्रसिद्धिरिति भावः । रूपत्वाद्यवच्छेदेन तादृशप्रतियोगित्वाभावे बाधकमाह सर्वत्रेति । ननु तादृशप्रतियोगित्वमिव तदभावोऽप्यव्याप्यवृत्तिरिति तत्तद्रूपत्वाद्यवच्छेदेन तादृशप्रतियोगित्वाभावस्याप्यभावसत्त्वादबाधितापि तादृशप्रतीतिर्न बाधिकेत्यत आह अन्यथेति । घटजनकत्वं दण्डत्वेन न तु द्रव्यत्वादिना घटाभावप्रतियोगित्वं घटत्वेन न तु पटत्वादिनेत्यादिप्रतीत्या द्रव्यत्वाद्यवच्छेदेन दण्डादौ घटजनकत्वाद्यभावः पटत्वाद्यवच्छेदेन घटाभावप्रतियोगित्वाभावश्च घटादौ सिध्येदिति भावः । तथा च दण्डो न घटजनक इत्यादिप्रतीत्यापत्तिः । प्रतिबन्देरनुत्तरत्वादाह प्रमेयेति । सुवचत्वाच्चेति । तथा च प्रमेयधूमवान् वह्निरित्यादावतिव्याप्तिरिति भावः । अथेति । तथा च साधननिष्ठसाध्यसामानाधिकरण्यनिरूपकतावच्छेदकयद्धर्मावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगित्वाभावस्तद्धर्मावलीढसामानाधिकरण्यं व्याप्तिरित्यर्थः । अत्र साधननिष्ठसामानाधिकरण्यनिरूपकताया अवच्छेदकत्वमनतिरिक्तवृत्तित्वविशिष्टस्वरूपसम्बन्धः स्वरूपसम्बन्धमात्रं वा, प्रथमे असमानेति । असमानाधिकरणो धूमो यस्य तप्तायःपिण्डस्थवह्नेस्तद्वृत्तितयेत्यर्थः । न तदवच्छेदकम् । न धूमनिष्ठसामानाधिकरण्यनिरूपकतानतिरिक्तवृत्ति । तथा च वह्निमान् धूमादित्यादावव्याप्तिरिति भावः । द्वितीये त्वाह कम्बुग्रीवेत्यादि । असाध्यत्वम् । अव्यापकत्वम् । घटत्वाद्यपेक्षया गुरुतरकम्बुग्रीवादिमत्त्वा-

कोपश्च। अत एव प्रमेयधूमत्वं गौरवेण प्रतियोगितायां इव त-च्छून्यताया अपि नावच्छेदकमित्युक्तावपि न निस्तारः। अत्र वदन्ति। अप्रतियोगित्वं प्रतियोगितानवच्छेदकधर्मवत्त्वम्। न चैवं पूर्वस्मादभेदः, तत्र साध्यजातीयसमानाधिकरणसाधनजातीयत्वस्य अत्र च साध्यसाधनयोः सामानाधिकरण्यस्य व्याप्तित्वे तात्पर्यात्।

---

धूमच्छिन्नाधिकरणत्वाप्रसिद्ध्या तस्य सामानाधिकरण्यनिरूपकतान-वच्छेदकत्वादिति भावः। अत एव। लघुसमनियतगुरुरूपेण साध्यता-यामव्याप्तेरेव। न निस्तार इति। प्रमेयधूमसाध्यके व्यभिचारिण्य-तिव्याप्तेर्निरासेऽपि तत्साध्यकसद्धेतावव्याप्तितादवस्थ्यादिति भावः। न च पूर्वलक्षण इवाऽत्रापि साधनवन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगित्वाभावावच्छेदकं तद्भिन्न-धर्मवता सामानाधिकरण्यं व्याप्तिरित्युक्तौ निस्तार इति वाच्यम्। तादृशप्रतियोगित्वाभावो ह्यत्र विशिष्य तत्तत्प्रतियोगित्वाभावत्वेन निवेश्यः अन्यथा गुरोरवच्छेदकत्वं विना दुर्वचत्वापत्तेः। तथा च वह्निमान् धूमादित्यत्रैवाव्याप्तिः धूमवन्निष्ठाभावप्रतियोगितावच्छेद-कीभूतस्य घटत्वादेः स्वविशिष्टसम्बन्धिनिष्ठपटाद्यभावीयप्रतियो-गित्वाभावानवच्छेदकत्वेन पारिभाषिकावच्छेदकाप्रसिद्धेः। घटादौ पटाद्यभावप्रतियोगित्वाभावस्य व्याप्यवृत्तित्वेनाऽवच्छेदकानपेक्ष-णात्। न च तादृशयत्किञ्चित्प्रतियोगित्वाभावस्यैवावच्छेदकत्वं निवेश्यं तथा च घटत्वादेः स्वविशिष्टसम्बन्धिनिष्ठस्य तत्तद्धटाद्य-भावस्य प्रतियोगित्वाभावावच्छेदकतयैव पारिभाषिकावच्छेदक-त्वमिति वाच्यम्। तथा सति धूमवन्निष्ठाभावप्रतियोगितावच्छेद-कस्य घटत्वादेर्वह्नित्वादिविशिष्टसम्बन्धिनिष्ठतत्तद्धटाभावप्रतियो-गित्वाभावावच्छेदकत्वात् वह्निमान् धूमादित्यादौ वह्नित्वादेरपि पारिभाषिकावच्छेदकत्वापत्तेरिति भावः। [ वस्तुतस्तु प्रकृतसाध्य-वत्तानिरूपितविशेषणताविशेषसम्बन्धेन यदभावप्रतियोग्यधिकरण-तासामान्याभाववत्त्वं हेतुमतस्तदभावाप्रतियोगिवृत्तिसाध्यतावच्छे-दकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र मूलतात्पर्यमतो रूपवा-

यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा, स्वसमानाधिकरणान्योन्याभावाप्रतियोगियद्वत्कत्वं वा ।

---

घटकयोस्तादृशप्रतियोगितावच्छेदकतत्त्वान्योन्याभावात्यन्ताभावयोर्भेदेन भेद इत्यपि कश्चित् ।

अत्यन्ताभावगर्भवत्सामान्यविशेषभेदेनाऽन्योन्याभावगर्भमपि व्याप्तिद्वयमाह यत्समानाधिकरणेत्यादिलक्षणद्वयेन । प्रथमे एकस्य साध्याधिकरणांशस्याऽऽधिक्यात् द्वितीयलक्षणम् । अत्र यद्यपि नानाव्यक्तिसाध्यकस्थले तत्तत्साध्यवत्तत्तत्साध्यवत्त्वस्य च सा-

---

न् पृथिवीत्वादित्यादौ नाव्याप्तिः न वा सत्तावाञ्जातेरित्यादौ विशिष्टसत्ताभावमादायाव्याप्तिः सत्ताधिकरणतानिरूपितविशेषणताविशेषसम्बन्धेन विशिष्टसत्ताभावप्रतियोगिमत्त्वस्य गुणादौ सत्त्वात् । विशिष्टसत्तावाञ्जातेरित्यादौ विशिष्टसत्ताभावप्रतियोगिमत्त्वस्य विशिष्टसत्तारूपसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयविशेषणताविशेषसम्बन्धेन गुणादावसत्त्वात् विशिष्टसत्ताभावो लक्षणघटक इति नातिव्याप्तिः । ] तादृशेति । हेतुसमानाधिकरणाभावीयेत्यर्थः ।

पौनरुक्त्यमपाकर्तुमाह अत्यन्ताभावगर्भेति । सामान्यविशेषेति । स्वव्यापकसाध्यसमानाधिकरणसाधनजातीयत्वसामान्यं तत्तत्साधननिष्ठतादृशसाध्यसामानाधिकरण्यं विशेषः । लाघवमभिप्रेत्य द्वितीयमवतारयति प्रथम इति । तथा च साधनवन्निष्ठान्योन्याभावाप्रतियोगिस्वाश्रयकसाध्यसामानाधिकरण्यरूपस्य प्रथमलक्षणार्थस्य साध्याधिकरणताद्वयनिवेशेन गुरुतया तदपेक्ष्य लाघवादेव साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवद्वृत्तित्वपर्य्यवसितद्वितीयलक्षणमुक्तमित्यर्थः । तद्रूपवान् तद्रसादित्याद्येकव्यक्तिसाध्यकस्थलेऽन्योन्याभावस्य प्रतियोग्यवृत्तित्वविवक्षयाप्य-

अन्यवृत्तिवह्नितद्धेतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावान्यो-
न्याभावप्रतियोगित्वात् व्यधिकरणवह्निधूमयोर्न व्याप्तिः,

———

धनसमानाधिकरणान्योन्याभावप्रतियोगित्वात्तदवच्छेदकत्वाच्चा-
व्याप्तिः, तथापि यद्रूपावच्छिन्नवत्त्वं तादृशान्योन्याभावप्रतियो-
गितानवच्छेदकं तद्रूपावच्छिन्नसामानाधिकरण्यमित्यत्र तात्पर्यम् ।
वह्न्यादौ तत्संयोगादौ तद्वदादौ वा साध्ये सर्वत्र साक्षात्परम्परया
वा अनुगमकं वह्नित्वादिकमेव साध्यतावच्छेदकं तदवच्छिन्नवत्त्वस्य

———

व्याप्तिवारणसम्भवादाह नानाव्यक्तीति । नानैव व्यक्तिराश्रयो यस्य
तादृशसाध्यक इत्यर्थः । तथा च तत्तद्द्रव्यभेदमादाय
वह्निमान् धूमात् द्रव्यं पृथिवीत्वादित्यादावव्याप्तिरिति भावः ।
ननु हेतुसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्य-
वत्त्वविवक्षणान्नैष दोष इत्यत आह तत्तत्साध्यवत्त्वस्य चेति । तद-
वच्छेदकत्वादित्यन्वयः । तथा च वह्निमान् धूमात् रूपत्वव्यापक-
जातिमान् रूपत्वादित्यादौ तत्तद्वह्निमत्त्वाद्यवच्छिन्नभेदं नीलपीत-
त्वाद्यवच्छिन्नभेदं चादायाव्याप्तिरिति भावः । यद्रूपेति । अधिकर-
णभेदेऽप्येकधर्मावच्छिन्नाधिकरणत्वस्यैक्यमतेनेदम् । अन्यथा वह्नि-
त्वावच्छिन्नवत्त्वस्यापि पर्वतादौ नानात्वेन तद्दोषतादवस्थ्यापत्तेः। हे-
तुमन्निष्ठान्योभावप्रतियोगितावच्छेदकत्वसामान्यं यद्रूपानवच्छिन्नं
तद्रूपावच्छिन्नसामानाधिकरण्ये वा तात्पर्य्यम् । ननु यद्रूपाव-
च्छिन्नवत्त्वमित्यत्र यत्पदस्य सखण्डधर्मपरत्वे वह्निमान्
धूमादित्यादावव्याप्तिः वह्नित्वादेरखण्डत्वात्, अखण्डधर्मपरत्वे
च वह्निसंयोगवान् धूमादित्यादौ तथेत्यत आह वह्न्या-
दाविति । तद्वदादौ । वह्निसंयोगवदादौ । वह्नित्वादिकमे-
वेति । तथा च सर्वत्रैव यत्पदेनाऽखण्डधर्म्मो धर्तव्य इति
भावः । तादृशेति । हेतुसमानाधिकरणेत्यर्थः । नन्वेवं वह्निसंयोगी-
त्याद्यनुमितिर्न स्यात् तादृशसंयोगत्वस्य व्यापकतानवच्छेदकत्वे-

किन्तु तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना। न चैवं धूममात्रे न व्याप्तिरिति वाच्यम्। सर्वधूमव्यक्तेस्तथात्वेन धूममात्रस्य व्याप्यत्वात् धूमसम्बन्धिवह्निस्तद्व्याप्य एव युगपदुत्पन्नविनष्टयोश्च व्याप्तिरेव कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरणः। यद्वा प्रतियोगिवैयधिकरण्यावच्छेदकावाच्छिन्नत्वमत्यन्ताभावविशेषणम्, कर्मणि च संयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमेव। न चान्योऽन्याभावस्याव्याप्यवृत्तित्वम्, अभेदस्याऽबाधितप्रत्यभिज्ञानात्।

---

च न तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वमिति। यत् यद्रूपावच्छिन्नं यादृशरूपावच्छिन्नमनवच्छेदकमिति वा यथायथं वक्तव्यं शब्दैक्यस्यानुपादेयत्वात्। अन्येसादि। यद्यप्युक्तरीत्या सर्वत्र तादृशप्रतियोगितानवच्छेदकत्वपर्य्यन्तानुधावनस्यावश्यकत्वेनाऽकिञ्चित्करमेव तादृशाभावप्रतियोगित्वम्, तथापि विशिष्टसामानाधिकरण्यरूपाया व्याप्तेर्व्यधिकरणासम्भवित्वमात्रे तात्पर्य्यम्। व्या-

---

नानुमितेस्तदवच्छिन्नविधेयताकत्वासम्भवादतः साध्यसाधनभेदेन व्याप्तेर्नानात्वादननुगतैव सा वाच्येत्याह यदित्यादिना। द्रव्यं पृथिवीत्वादित्यादौ यत्साध्यं तादृशान्योन्याभावप्रतियोगितानवच्छेदकमित्येव वक्तव्यम्, अत एवेदं द्रव्यमित्यनुमितौ निरवच्छिन्नद्रव्यत्वनिष्ठविधेयताकत्वमपि सर्वसिद्धं सुसङ्गच्छते निरुक्तव्याप्तेस्तादृशानुमितावेव प्रयोजकत्वादिति भावः। वह्निमान् धूमादित्यादिकमभिप्रेत्याह यद्रूपावच्छिन्नमिति। अधिकरणत्वमिति शेषः। तेन न

प्तिरेवेत्यस्य कालिकीत्यादिः। अन्योन्याभावगर्भलक्षणस्याव्याप्यवृ-
त्तिमाव्यकसद्धेतावव्याप्तिं निरस्यति न चेति। अभेदस्येति। तथा
च मूले महीरुहो विहङ्गमसंयोगी नेति प्रतीतेरनुभूयमानविशिष्टभे-
दोल्लेखिन्या अपि शिखी विनष्ट इति प्रतीतिवद्विशेषणाभाववि-
षयतामात्रं कल्प्यते बाधकबलात् अत्र च विशिष्टभेदे न बाधकं तत्र
तथाप्रतीति बलात्तत्सिद्धिरप्रत्यूहैवेति नातिप्रसङ्गः।

अत्र वदन्ति। अभेदस्य भेदाभावस्य ज्ञानं न बाधकं भेदव-
त्तत् प्रतियोगितावच्छेदकस्य संयोगात्मनस्तदभावस्याव्याप्यवृत्ति-

———

प्रागुक्तदोषः। एवमग्रेऽपि। वह्निसंयोगवानित्यादिकमभिप्रेत्याह या-
दृशेति। उक्तरीत्येति। रूपादिसाध्यकपृथिवीत्वादावव्याप्तिभियेत्य-
र्थः। अकिञ्चित्करम्। व्यधिकरणयोर्व्याप्त्यभावाप्रयोजकम्। तात्प-
र्यमिति। तथा च ऽसामानाधिकरण्योत्थापकत्वेनैव तादृशप्रति-
योगित्वोपन्यास इति भावः। व्यधिकरणयोर्दैशिकव्याप्त्यसम्भ-
वात्तादृशव्याप्तौ युगपदुत्पादविनाशयोरकिञ्चित्करत्वादाह व्या-
प्तिरेवेत्यस्येति। अर्थान्तरत्वमपाकर्तुमवतारयति अन्योन्येत्यादि।
लक्षणस्येत्यत्रैकत्वमविवक्षितम्। ननु भेदस्यापि प्रत्यभिज्ञानात्तत्र
का गतिरित्यत आह तथा चेति। अभेदस्याऽबाधितत्वे चेत्यर्थः। अ-
नुभूयमानेति। अनुव्यवसीयमानसंयोगिभेदविषयताकाया इत्यर्थः।
शिखीत्यादि। तथा च यथा शिखिनो धर्मिणः सत्त्वेऽपि शिखी
विनष्ट इतिप्रतीत्या विशेषणीभूतशिखाया एव ध्वंसरूपोऽभावो
गृह्यते तथा संयोग्यभेदेऽपि न संयोगीत्यादिप्रतीत्या विशेषणस्य
संयोगस्यैवाभावो गृह्यत इति भावः। नन्वेवं गुणो न संयोगीति
प्रतीतेरपि संयोगाभाव एव विषयोऽस्तु न तु संयोगिभेदः तथा च
संयोगी सत्त्वादित्यादौ निरुक्तलक्षणातिव्याप्तिरत आह अत्र चेति।
तत्सिद्धिः। संयोगिनो भेदसिद्धिः।

भेदवत् संयोगिभेदवत्। तदभावस्य। संयोगि-
भेदाभावस्य। तदुपपत्तेरिति। एकत्र धर्मिणि सं-

त्वेन तदुपपत्तेः। यथा हि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-ज्ञाने तदत्यन्ताभावस्याऽग्रहादभावव्यवहाराच्च स एव तदभाव इति कल्प्यते तथा प्रतियोगितावच्छेदकधर्मग्रहे तद्वदन्योन्याभावस्याऽग्र-हादभावव्यवहाराच्च स एव तस्याभाव इति निश्चीयते। आधिक्ये-ऽपि चाव्याप्यवृत्तित्वात्। अत एव न मूलावच्छेदेन कपिसंयो-

---

योगिभेदतदभावयोर्निश्चयोपपत्तेरित्यर्थः। वस्तुतः प्रत्यक्षमणौ संयोगिभेदस्यापि अव्याप्यवृत्तित्वोपगमात् वृक्षे संयोगित्वावच्छि-न्नभेदसत्त्वेऽपि न क्षतिः अत्यन्ताभावगर्भायां प्रतियोग्यनधिकर-णत्वेनेवान्योन्याभावगर्भायामपि व्याप्तौ स्वप्रतियोगित्वावच्छिन्नभि-न्नत्वेन हेत्वधिकरणविशेषणादेव कपिसंयोग्येतत्त्वादित्यादावव्या-प्त्यसम्भवात्। न चैवं न चान्योन्याभावस्येत्यादिमूलासङ्गतिः। क-पिसंयोगित्वावच्छिन्नभेदस्येव कपिसंयोगिभेदप्रतियोगित्वावच्छि-न्नभेदस्यापि मूलावच्छेदेन वृक्षे सत्त्वमाशङ्क्यैव तदवता-रात्, अभेदस्येत्यादिमूलस्यापि कपिसंयोगिभेदप्रतियोगित्वाव-च्छिन्नाभेदस्येत्यर्थकत्वादित्यस्मद्गुरुचरणाः। ननु भेदस्या-त्यन्ताभावो न प्रतियोगितावच्छेदकीभूतसंयोगादिरूपः ये-नाव्याप्यवृत्तेस्तस्य भेदेन समं विरोधो न स्यात् कि-न्त्वतिरिक्त एवेति तद्विरोधो दुर्वार इत्यत आह यथा हीति। ननु यद्वत्त्वज्ञाने यदत्यन्ताभावाग्रहस्तस्यैव तदत्यन्ताभावविरहत्वे प्रति-योगिव्याप्यवत्त्वस्यापि तथात्वापत्तिरत आह अभावेति। तदत्य-न्ताभावस्याभावव्यवहाराच्चेत्यर्थः। स एव। प्रतियोगितावच्छेदकाव-च्छिन्न एव। ननु बहूनां संयोगव्यक्तीनां संयोगिभेदाभावत्वकल्पने गौरवादभावत्वप्रतीतेः प्रमात्वानुरोधाच्चातिरिक्त एव संयोगिभे-दाभावः कल्पनार्ह इत्यत आह आधिक्येऽपीति। अव्याप्यवृत्तित्वा-दिति। तथा चैकत्र भेदतदभावयोः सम्भवान्न मिथो विरोधित्वमि-ति भावः। अत एव। भेदस्याप्यवृत्तित्वादेव। न तथा। न भेदबाधकम्। असम्भवादिति। कपिसंयोगाद्यात्मकस्यातिरिक्तस्य वा संयोगिभेदा-भावस्य मूलाद्यवच्छेद्यत्वासम्भवादित्यर्थः। तथा चोक्तप्रतीतेर्वि-

गिभेदाभावज्ञानं तथा, असम्भवादसिद्धेश्च। नापि कपिसंयोगिभेद-स्य वृक्षावृत्तित्वज्ञानम्, असिद्धेः तदवृत्तित्वस्यैव ग्रहात्। नापि कपिसं-योगिभिन्नभेदज्ञानम्, कपिसंयोगिभेदवत्तद्भेदस्याप्यव्याप्यवृत्तित्वे-नाविरोधात्। नापि मूलावच्छेदेन तज्ज्ञानम्, असिद्धेः तद्धर्मवद्भिन्नभेद-स्य तद्धर्ममात्रपर्य्यवसिततया कपिसंयोगिभिन्नभेदात्मनः कपिसंयो-गस्य मूलवृत्तित्वे विरोधाच्च। न हि घटभिन्नभेदो घटत्वादतिरिच्य-ते, आवश्यकक्लृप्तघटत्वेनैवोपपत्तौ अतिरिक्तकल्पनायां मानाभा-वात्। अन्यथा सर्वत्राऽभावस्याभावोऽतिरिक्त एव कल्प्येत। अत-एवात्यन्ताभावप्रतियोगिनोरन्योन्याभावप्रतियोगितावच्छेदकयोः सामान्यत एव क्लृप्तो विरोधः, तत्र कपिसंयोगवत्त्वमपि वृक्षे मूले न



षयबाधः। स्वरूपबाधमप्याह असिद्धेश्चेति। मूलावच्छेदेन भेदस्यै-व प्रत्ययान्मूले वृक्षः कपिसंयोग्यभिन्न इति ज्ञानस्यैवासिद्धेरित्यर्थः। ज्ञानमिति।यथेति पूर्वेणान्वयः।एवमग्रेऽपि। तदवृत्तित्वस्यैव वृक्षवृत्ति-त्वस्यैव। तज्ज्ञानम्। कपिसंयोगिभिन्नभेदज्ञानम्। असिद्धेरिति। मूला-वच्छेदेन भेदस्यैव प्रत्ययात्तादृशभिन्नभेदज्ञानस्यैवासिद्धेरित्यर्थः।तथा च स्वरूपबाधः। विषयबाधमप्याह तद्धर्मवदित्यादि। ननु प्रतियोगि-तावच्छेदकधर्म्मस्य तद्वद्भिन्नभेदत्वं न दृष्टचरमत आह न हीति। न च घटत्वस्यैकत्वेन घटभिन्नभेदत्वोपगमेऽपि संयोगव्यक्तीना-मनेकत्वात्तेषु संयोगिभिन्नभेदत्वापेक्षया लाघवादतिरिक्त एव सं-योगिभिन्नभेदो युक्त इति वाच्यम्। तथात्वेऽपि तस्याऽव्याप्यवृ-त्तित्वात्। अन्यथा मूले वृक्षः संयोगिभिन्नो नेति प्रतीतेः प्रमात्वापत्तेरिति भावः। सर्वत्र। नानाप्रतियोगिकाभावस्थले। अत एवेति। परास्तमित्यग्रेऽन्वयः। आद्ययोः। अत्यन्ताभाव-प्रतियोगिनोः। सः। विरोधः। सङ्कोच्यताम्। अंशतो भ्रमविषयत्वेन कल्प्यताम्। ननु मूले वृक्षे न संयोग इति प्रतीतेः संयोगव-द्भेदविषयकत्वमेव कल्प्यतामित्याद्ययोरपि सङ्कोचे मानाभाव इ-त्यत आह न हीति। संयोगस्येव तद्वतोऽपि क्वचिदुपस्थि-

कपिसंयोग इति प्रतीतेरन्यथानुपपत्त्या तावदाद्ययोः स सङ्कोच्यतां न ह्येषा प्रतीतिः कपिसंयोगिभेदविषयत्वेनोपपादयितुं शक्या नियमतः संयोगवत्त्वेन प्रतियोगिनोऽनुपस्थितेः प्रतियोगिकोटौ तदनुल्लेखाच्च, मूले न कपिसंयोगीति प्रतीतेस्तु शिखी विनष्ट इति वद्भासमानविशेषणस्याभावमात्रविषयत्वेनोपपन्नत्वाद्न्तिमयोरपीति परास्तम् । अन्योन्याभावान्तरस्य प्रतियोगितावच्छेदकान्तरसमानाधिकरणतया स्वस्वप्रतियोगितावच्छेदकासामानाधिकरण्यपर्य्यवसायिनो विरोधस्य स्वत्वघटितत्वेन विशेष एव विश्रामात्, अत्यन्ताभावप्रतियोगिनोरिवान्योन्याभावप्रतियोगितावच्छेदकयोरबाधितसामानाधिकरण्यानुभवेन प्रतिविरुद्धतया

———

तिसम्भवान्नियमत इत्युक्तम् । अनुपस्थितेरिति । तथा च कारणबाधादेव तादृशप्रतीतेर्न संयोगिभेदावगाहित्वमिति भावः । अनुभवबाधमप्याह प्रतियोगीति । अभावांशे साक्षात्परम्परया वा अप्रकारत्वेन संयोगवतोऽनुव्यवसायेनाग्रहणाच्चेत्यर्थः । भासमानं प्रागुपस्थितं यद्विशेषणं संयोगस्तदभावविषयत्वेनेत्यर्थः । अन्तिमयोः । अन्योन्याभावप्रतियोगितावच्छेदकयोः । स सङ्कोच्यतामिति पूर्वेणान्वयः । विशेष एवेति । तथा च घटभेदघटत्वादीनां विरोधस्य क्लृप्तत्वेऽपि संयोगतद्भेदयोस्तथात्वे मानाभावात् तदव्याप्यवृत्तित्वे बाधकाभाव इति भावः । ननु संयोगिभेदो नावच्छिन्नवृत्तिकः अन्योन्याभावत्वात् घटभेदवदित्यनुमानात् संयोगिभेदस्य व्याप्यवृत्तित्वसिद्धावर्थवशसम्पन्न एव संयोगेन समं तस्य विरोधः, संयोगिभेदो न संयोगवद्वृत्तिः संयोगिभेदत्वात् घटत्वाद्यभाववदिति व्यतिरेकिणा वा तस्य व्याप्यवृत्तित्वं साध्यम इत्यत आह अत्यन्ताभावेति । अबाधितेति । विभिन्नावच्छेदेनेत्यादिः । तथा च संयोगिभेदोऽवच्छिन्नवृत्तिकस्तत्त्वेन प्रमीयमाणत्वादित्यनुमानेन प्रतिबन्धादवच्छिन्नवृत्तिकत्वाद्यभावकल्पनमेव दुःशक्यमिति भावः । मूले वृक्षो

तथाविधविरोधकल्पनाया अनन्तकाप्तत्वाच्च । किञ्च शिखी विनष्ट इति प्रतीतेर्विशिष्टध्वंसोल्लेखिन्या विशेष्ये तद्बाधादास्तां विशेषणध्वंसविषयता न संयोगीति प्रतीतेर्विशिष्टभेदमवगाहमानायाः कथं विशेषणसंसर्गाभावविषयत्वेनोपपत्तिः । न खलु सहस्रेणापि बाधकैरिदं रजतमिति प्रतीते रङ्गत्वावलम्बनं व्यवस्थापयितुं शक्यते। न च विशेषणभेद एव तस्या विषयः। अग्रेऽपि न कपिसंयो-

---

न संयोगीति प्रतीतेः शिखी विनष्ट इतिवद्बासमानविशेषणाभावविषयत्वं यदुक्तं तत्र दृष्टान्तवैषम्यमाह किञ्चेति । विशेष्ये । शिखिनि । तद्बाधात् । साक्षात् ध्वंसबाधात्। विशेषणध्वंसेति । तथा च शिखी विनष्ट इत्यत्र स्ववृत्तिशिखानिष्ठप्रतियोगित्वरूपपरम्परासम्बन्धेनैव शिखिनो ध्वंसे प्रकारत्वमित्याशयः । न चैवं सत्यपि पुरुषे शिखी विनष्ट इतिवत् पुरुषो विनष्ट इत्यपि प्रतीतिः प्रमा स्यात् इति वाच्यम्। तत्तद्विशेषणध्वंसादौ तत्तद्विशेषणाद्यवच्छिन्नस्यैव निरुक्तपरम्परायाः संसर्गत्वात् । अत एवायं घटः श्यामो भविष्यतीत्यादौ श्यामरूपनिष्ठप्रतियोगितायाः प्रागभावे श्यामरूपावच्छिन्नस्य संसर्गत्वेऽपि न घटत्वविशिष्टस्य संसर्गत्वम् अतस्तत्रैव घटो भविष्यतीत्यादिको न प्रत्यय इति ध्येयम् । विशिष्टभेदमित्यस्य भेदत्वेनेति शेषः । कथमिति। तादृशप्रतीतावत्यन्ताभावत्वानुल्लेखादिति भावः । एकोल्लेखिप्रत्ययस्यान्यावगाहित्वोपगमे भ्रममात्रस्योच्छेद इत्याह न खल्विति । बाधकैः । कारणबाधादिभिः । शक्यते इति। अन्यथा शुक्तौ रजतत्वादिप्रतीत्यपलापादवाऽन्यथाख्यातिनिरसने जितं प्राभाकरैरिति भावः । तस्याः न संयोगीतिप्रतीतेः विषय इति। स्ववृत्तिसंयोगनिष्ठप्रतियोगित्वसम्बन्धेनैव संयोगिनो भेदप्रकारत्वादिति भावः । अग्र इति । न च संयोगभेदपर्यवसन्नस्योक्तपरम्परया संयोगिभेदस्य वृक्षे सत्त्वेऽपि तस्य व्याप्यवृत्तित्वेनाग्रानवच्छेद्यत्वादेव नैतादृशप्रत्यय इति वाच्यम्। तथा सत्युक्तक्रमेण संयोगभेदस्य मूलानवच्छेद्यत्वान्मूलेऽपि न संयोगीत्यपि प्रत्ययापलापपत्तेरिति भावः । शब्दवि-

गीति प्रतीत्यापत्तेः। युज्यते चान्योन्याभावोऽव्याप्यवृत्तिः, कथमन्यथा पक्वतादशायां घटादावयं न श्यामो दण्डादिविनाशसमये चैत्रादौ नायं तद्दण्डवानित्यादयो व्यवहाराः। न च तत्र विशेषणसंसर्गाभाव एव प्रतीयते, अनुयोगिनि सप्तमीं विना तदनुपपत्तेः। न खलु भूतलं न घट इत्यादीनि वाक्यानि कदाचिदपि घटसंसर्गाभावं बोधयन्ति तथात्वे वा घटो न घट इत्यादेरपि प्रसङ्गात्। अपि च विशिष्टवाचकदण्डयादिपदेभ्योधर्म्युपसर्जनतयोपस्थितस्य द-

---

शेषाणां प्रामाण्यानुरोधादपि भेदस्याव्याप्यवृत्तित्वं वाच्यमित्याह युज्यते चेति। पिठरपाकानुपगमे रक्तघटस्य श्यामान्यत्वं व्याप्यवृत्त्येवात उक्तं दण्डादीति। श्यामपदस्य गुणेऽपि शक्तत्वात्तदत्यन्ताभावबोधने धर्म्युपसर्जनत्वनिबन्धनानिराकाङ्क्षत्वासम्भवादाह दण्डादीति तु कश्चित्। व्यवहाराः प्रमाणमिति शेषः। तत्र। घटो न श्याम इत्यादौ। विशेषणस्य। श्यामत्वदण्डादेः। अनुयोगिनीति। तत्र नञा संसर्गाभावबोधने तदर्थबोधकपदोत्तरसप्तम्यास्तन्त्रत्वादिति भावः। तदेव द्रढयति न खल्विति। ननूक्तस्थले संसर्गाभावबोधने का क्षतिरत आह तथात्वे वेति। प्रसङ्गादिति। घटेऽपि घटात्यन्ताभावस्य सत्त्वादिति भावः। ननु यत्र नञ्रहितयोः प्रतियोग्यनुयोगिनोः साकाङ्क्षत्वं तत्रैव नञा अभावो बोध्यते प्रकृते च घटो घट इत्यस्य निराकाङ्क्षतया नञा घटे घटस्य भेद इव संसर्गाभावोऽपि न बोध्यते कम्बुग्रीवादिमान्न घट इत्यत्रिकं तु भूतलं न घट इत्यादिभिः समानमित्यत आह अपि चेति। यद्वा ननु नञा प्रत्ययार्थविशेषणत्वानापन्नस्यैवात्यन्ताभावबोधनेऽनुयोगिवाचकपदोत्तरं सप्तम्यपेक्षा वक्तव्या न तु तद्विशेषणतापन्नस्येति यदि ब्रूयात्तदाप्याह अपि चेति। एतेन घटो घटान्यो नेत्यादौ नञ्रहितयोः प्रतियोग्यनुयोगिनोर्निराकाङ्क्षत्वेऽपि नञाऽभावबोधनात्तत्रैव घटो न घट इत्यत्रापि अभावबोधने बाधकाभाव इत्यपास्तम्। विशिष्टवाचकेति। विशिष्टबोधकेत्यर्थः। दण्डीत्यादेर्वाक्यत्वेन वाचकत्वासम्भवात्। यद्वा वैया-

ण्डादेः कथं प्रतियोगित्वेनाभावेऽन्वयः इतरविशेषणत्वेनोपस्थितस्य निराकाङ्क्षतयान्यत्र विशेषणत्वेनान्वयायोगात्। न चात्र विशिष्टोपस्थापकं पदं विशेषणमात्रपरम्, तथापि चैत्रो न दण्डो घटो न श्यामं रूपमित्यादावपि दण्डादिसंसर्गाभावप्रतीत्यापत्तेर्दुर्व्वारत्वात्। एतेन नञोऽभाववल्लाक्षणिकतया विनैव सप्तमीमन्वयबोधसमर्थनं प्रत्युक्तम्। एवञ्च चैत्रो न पचतीत्यादौ आख्याताच्छ-

---

करणमतेनेदम्। धर्मीति। मतुबर्थसम्बन्धिनि विशेषणतयोपस्थितस्येत्यर्थः। उपस्थितस्येत्यस्य वृत्तिशब्दादित्यादिः। तेन नीलो घटः पटश्चेत्यादौ घटविशेषणतयोपस्थितस्यापि नीलादेः पटेऽन्वयः नीलघटः पटश्चेत्यादौ तु वृत्तिशब्दादेव नीलस्य तथोपस्थितिरतः पटे तस्य नान्वयः। विशेषणमात्रेति। तथा च चैत्रो न दण्डीत्यत्र मतुपः पदसाधुतामात्रं फलं न तु शाब्दे तदर्थप्रवेश इति भावः। दुर्वारत्वादिति। यद्यपि भूतलं न घट इत्यत्रेव चैत्रो न दण्ड इत्यादावपि पूर्वपक्षिणा दण्डात्यन्ताभावबुद्धाविष्टापत्तिः कर्तुं शक्यत एव, तथापि तन्नामार्थस्य नञा अत्यन्ताभावबोधने तन्नाम्नः प्रथमान्तत्वं प्रथमासाकाङ्क्षत्वं वा तन्त्रम् अन्यथा गृहे दण्डस्य नेत्यतोऽपि दण्डात्यन्ताभावप्रतीत्यापत्तेः। अतश्चैत्रो न दण्डीत्यादौ दण्डपदस्य प्रथमान्तत्वस्य प्रथमासाकाङ्क्षत्वस्य वाऽभावात्तदत्यन्ताभावबोधो नञा दुर्घटः। चैत्रमैत्रयोर्दण्डघटौ नेत्यादियथासङ्ख्यस्थले चैत्रधर्मिकदण्डात्यन्ताभावबोधे दण्डपदस्य प्रथमान्तत्वव्यभिचारेऽपि प्रथमासाकाङ्क्षत्वमस्त्येव द्वन्द्वोत्तरप्रथमायाः सकलप्रकृत्यर्थान्वयित्वादितिदिक्। एतेनेति। चैत्रो न दण्ड इत्यादौ दण्डात्यन्ताभावाप्रत्ययेनेत्यर्थः। विनैवेति। यत्राधिकरणाभावयोराधाराधेयभावः संसर्गस्तत्रैव सप्तम्यपेक्षणाच्चैत्रो न दण्डीत्यत्र दण्डाभाववतस्तादात्म्यस्यैव चैत्रे संसर्गत्वान्न सप्तम्यपेक्षेति भावः। ननु चैत्रो न पचतीत्यादौ पाककृतेरिव चैत्रो न दण्डीत्यादावपि दण्डस्यात्यन्ताभावः सप्तमीं विनापि प्रतीयतामत आह एवञ्चेति। चैत्रो न दण्ड इत्यादौ संसर्गाभावप्रतीति-

त्त्या लक्षणया वोपस्थितस्य कर्त्तुरेव भेदो भासत इत्यस्तु। वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादौ विभक्त्यर्थस्य कृतिसम्बन्धादेरभावान्वयबोधे नञा सप्तमी नापेक्ष्यते अपेक्ष्यते च प्रातिपदिकार्थस्येति निपुणतरमुपपादयिष्यामः। नञो वैधर्म्यपरतया न श्याम इत्यादेः श्यामादिविधर्म्मेत्यर्थः। वैधर्म्यञ्च रक्तत्वादिकमेव। यदाहुराचार्य्याः श्यामाद्रक्तो विधर्म्मा न तु पृथगित्यपि वदन्तीति कृतं पल्लवितेन।

---

भिया सप्तम्यपेक्षणे चेत्यर्थः। शक्त्येति। शाब्दिकानां मतेन। न्यायमते त्वाह लक्षणया वेति। भेदो भासत इति। तथा च दृष्टान्तासिद्धिरिति भावः। नन्वेवमनुभवसिद्धस्य कृत्यत्यन्ताभावबोधस्यापलाप इत्यत आह वस्तुत इत्यादि। स्यादित्यादिभेदेन विभक्तेर्द्वैविध्यादुदाहरणद्वयम्। प्रातिपदिकार्थस्येति। अभावान्वयबोधने इत्यनुषज्यते। निपुणतरमिति। यत्रानुयोगिनि प्रतियोग्यन्वये सप्तम्यपेक्षा तत्रैव नञा तदत्यन्ताभावबोधने तदर्थकपदोत्तरं सप्तम्या अपेक्षा न तु सर्वत्रेति नञ्वादे वक्ष्यमाणत्वादिति भावः। भेदस्य व्याप्यवृत्तित्ववादिनां प्राचां मते रक्तत्वदशायां न श्याम इत्यादिव्यवहारमुपपादयति नञ इत्यादिना। ननु वैधर्म्यमपि भेद एवेति तद्धत्त्वं तत्र बाधितमत आह वैधर्म्यं चेति। तद्वैशिष्ट्यकालावच्छेदेन तद्वति वर्तमानस्याभावस्य प्रतियोगिधर्मवत्त्वन्तद्धर्मविशिष्टस्य वैधर्म्यं तथा च रक्तो न श्याम इत्यत्र श्यामत्ववैशिष्ट्यकालावच्छेदेन श्यामवृत्त्यभावप्रतियोगिधर्मवान् रक्तः इत्याकारकस्तत्र बोधः। न तु पृथक्। न तु भिन्नः।

ननु विशिष्टधीजनकत्वादिगर्भस्य सम्बन्धत्वस्य प्रवेशेऽप्यात्माश्रयादिरेवेत्यत आह निरूपितेति। साध्यवान् यस्येति विग्रहे साध्यवत्येव साधनस्य सम्बन्धोऽन्वेष्टव्यः स चाधिकरणत्वम् न तु व्याप्तेस्तत्र प्रवेश इति प्रागेवोक्तमितिभावः। मूले कस्येति। कुत्रेत्यादिः। तथा च किंहेतुककिंसाध्यकानुमितिजनकतावच्छेदिका का व्याप्तिरित्यर्थः। ननु तद्धेतुकतत्साध्यकानुमितिं प्रत्यपि तद्धेतुकतत्सा-

व्याप्यव्यापकभावाज्ञानेऽपि वस्तुसतस्तथात्वेनाऽज्ञायमानस्य सम्बन्धत्वेनैव भातस्य षष्ठ्यर्थत्वम्। न चैवमननुगमो दोषाय, कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वात्। अथ धूमवति वह्निह्रदौ न स्तः धूमवान् वह्निमद्ध्रदौ न भवतीतिप्रतीतेर्व्यासज्यवृत्तिप्रतियोगिकौ वह्निवह्निमतोरत्यन्तान्योन्याभावौ धूमवति विद्येते इति कथमेते लक्षणे इतिचेन्न। तादृशाभावानभ्युपगमात् अभ्युपगमे वा तत्र तदुभयं प्रतियोगि न वह्निवह्निमन्तौ।

---

सम्बन्धत्वेनेति निरूपिततत्त्वमेतत् । कस्येति। इत्थञ्चाननुगताया अपि व्याप्तेर्ज्ञानं यथाऽनुमितिहेतुस्तथा वक्ष्यते । एते । अन्योन्याभावात्यन्ताभावगर्भे । तादृशेति । ननु किं द्वित्वादिकं प्रतियोगितावच्छेदकमेव न भवति किं वा भवत्येव परन्तु क्लृप्तानामेव स्वसमानाधिकरणतत्तद्धर्म्मावच्छिन्नप्रतियोगिताकानामभा-

---

ध्यकनानाविधव्याप्तिज्ञानानां हेतुत्वात् इत्थमप्यननुगम एवेत्यत आह दीधितावित्थं चेति । इत्थमपीत्यर्थः । वक्ष्यत इति । तत्तद्धेतुकतत्साध्यकव्यभिचारधीविरोधिधीविषयत्वेन तद्धेतुकतत्साध्यकानिखिलव्याप्तीरनुगमय्य तद्गोचरज्ञानत्वेनैव तद्धेतुकतत्साध्यकानुमितिं प्रति हेतुत्वं व्याप्तिग्रहोपाये वक्ष्यत इत्यर्थः । लक्षणत्रयस्यैव यथाश्रुतक्रमेणाव्याप्तिसम्भवादेते इत्यनेन लक्षणद्वयाभिधानमसङ्गतमतो व्याचष्टे एत इति । तथा चान्योन्याभावगर्भत्वेन द्वयोरैक्यादेव द्विवचनोपपत्तिरिति भावः ॥ धर्मिणः सिद्ध्यसिद्धिपराहतत्वादतिरिक्तद्वित्वाद्यवच्छिन्नाभावस्यासत्त्वं शङ्कितुमशक्यमित्यन्यथा वितर्कयति नन्वित्यादिना ।

वानां लाघवादिरभिप्रायः। नाद्यः, एकैकाभावप्रतीतितो द्वौ न स्त इति प्रतीतेर्विलक्षणत्वात् शब्दादिना द्वौ न स्त इति निश्चयेऽप्येकैकाभावसंशयाच्च विषयानुगमं विना अनुगताकारप्रत्ययायोगात् । न चाभावस्य द्वित्वाधिकरणप्रतियोगिकत्वमात्रं द्वित्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं वा द्वयं नास्तीति प्रतीतेर्विषयः । तादृशद्वित्वाधिकरणव्यक्तिविशेषविरहिणि तथाविधोभयशालिनि तादृशौ द्वौ न स्त इत्यप्रत्ययात् द्वित्वसामानाधिकरण्याभानेऽपि प्रतीतेरनुगताकारत्वाच्च अत एव न तादृश प्रतीतेर्घट-

---

न भवतीत्यस्याभिप्राय इत्यग्रेऽन्वयः । स्वं द्वित्वादि । तत्समानाधिकरणं यद् घटत्वपटत्वादि तदवच्छिन्नाभावानामित्यर्थः । द्वावित्यस्य घटपटावित्यादिः । तथा च घटो नास्तीत्यादिप्रत्ययात् घटपटौ न स्त इत्यादिप्रत्ययस्य वैलक्षण्यं विषयभेदं विना अनुपपद्यमानं द्वित्वस्यावच्छेदकत्वं साधयतीति भावः । [ ननु प्रतियोग्यंशे द्वित्वाधिकरणत्वस्य भासमानतया वैलक्षण्यं स्यादित्यत आह शब्देति । यद्वा ] ननु द्वित्ववैशिष्ट्याद्यवगाहितयैव वैलक्षण्यं सुवचमत आह शब्देति । तथा च भूतले घटपटौ न स्त इति प्रतीतेर्घटत्वादिप्रत्येकधर्मावच्छिन्नाभावगोचरत्वे भूतले घटो न वेति संशयो न स्यात् बाधनिर्णयसत्त्वादित्यर्थः । इन्द्रियेण द्वित्वावच्छिन्नाभावस्य निर्णयदशायां सन्निकृष्टत्वेन घटत्वादिप्रत्येकधर्मावच्छिन्नाभावस्यावश्यं निर्णय इति तदानीं संशयानुत्पादस्य सर्वानुभवसिद्धत्वात् शब्दादिनेत्युक्तम् । ननु घटपटौ न स्त इत्यादितो द्वित्वाश्रयवृत्तिघटत्वादिरूपेणैवाऽभावस्य निर्णयात्तदानीं भूतले घटो न वेत्यादिसंशये बाधकाभावः शुद्धघटत्वप्रकारेणाभावनिश्चयस्यैव तद्विरोधित्वादत आह विषयेति । घटपटादिप्रत्येकाभावस्याननुगतत्वादिति भावः । विशेषणतावच्छेदकानुगमादेव घटपटौ न स्त इत्यादिप्रत्ययस्यानुगताकारत्वमित्यभिप्रायेण शङ्कते न चेति । द्वित्वाधिकरणेति । तथा च घटपटपर्याप्तद्वित्वाश्रयप्रतियोगिकाभाव-

त्वपटत्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभावविषयत्वम् । अन्यतर-त्वानुल्लेखेऽपि घटपटौ न स्त इत्यनुगतप्रत्ययाच्च । न च परम्प-रासम्बन्धेन तादृशद्वित्वसामान्याभावएव द्वौ न स्त इति प्रतीतेर्वि-षयः । द्वित्वाधिकरणयोरेव प्रतियोगित्वोल्लेखात् द्वित्वादेर्घटादिवृ-त्तित्वानुपस्थितावपि अन्ततः शब्देनापि घटपटौ न स्त इत्यादिप्रत्य-याच्च।अत एवैकैकविशिष्टापराभावोऽपि न तदालम्बनम्।विरुद्धयो-रपि जलत्वपृथिवीत्वयोर्द्वित्वेनाभावप्रत्यय इत्युक्तत्वाच्च । नान्त्यः,

---

त्वेनैव घटादिप्रत्येकाभावस्यानुगमः । ननु घटपटौ न स्त इति प्र-तीतेः कुत्र चिद्धर्मेऽवच्छेदकत्वावगाहित्वस्यानुभवसिद्धत्वान्नोक्तक्र-मेण तन्निर्वाह इत्यत आह द्वित्वसमानेति । मात्रपदेन द्वित्वस्या-वच्छेदकत्वव्युदासः । द्वयमित्यस्य घटपटेत्यादिः । शङ्कां निरस्यति तादृशेति । तथा च यत्किञ्चित्घटपटोभयशून्ये घटपटोभयवत्यपि घटपटौ न स्त इत्यादिप्रतीत्यापत्तिरिति भावः । ननु घटत्वपट-त्वान्यतरनिरूपितसमवायेनैव घटपटौ न स्त इत्यत्र प्रत्येकधर्म्म-स्य द्वित्वसामानाधिकरण्यं निवेश्यम् एवं कुड्यकुसूलौ न स्त इत्यादावपि यथायोग्यं तद्ग्राह्यम् अतो द्वितीयकल्पेनायं दोष इत्यत आह द्वित्वसामानाधिकरण्येति । अत एवेति । यदनुपस्थि-तिदशायां यादृशप्रतीतिस्तदवगाहित्वस्य तादृशप्रतीतावसम्भवा-देवेत्यर्थः । परम्परेति । स्वपर्य्याप्त्यधिकरणवत्तासम्बन्धेनेत्यर्थः । तादृशद्वित्वेति । घटपटवृत्तिद्वित्वेत्यर्थः । द्वावित्यस्य घटपटावि-त्यादिः । द्वयोः प्रतियोगित्वोल्लेखे विप्रतिपन्नं प्रत्याह द्वित्वादेरि-ति । घटपटयोर्द्वित्ववत्ताप्रत्यक्षे तुल्यवित्तिवेद्यतया द्वित्वे घटपट-वृत्तित्वावगाहनेऽपि नियन्त्रितविषयशाब्दस्थले तदसम्भवात् अ-स्माकं तु नीलघटो नास्तीत्यादौ नीलत्वघटत्वाभ्यामिव घटपटौ न स्त इत्यादिशाब्दस्थले घटत्वपटत्वाद्वित्वैरवच्छिन्नप्रतियोगिताक-स्यातिरिक्ताभावस्य बोधनान्नानुपपत्तिः अवच्छेदकत्वस्य त्रितय एव पर्याप्तत्वादिति भावः । अत एव । वैशिष्ट्यानुपस्थितावप्युक्तप्र-

तथात्वेऽपि साध्यतद्वतोस्तादृशाभावप्रतियोगित्वानपायात्। अन्तरेणाभावान्तरमेकैकघटवति जायमानाया यत्किञ्चिद्घटद्वयवति चानुत्पद्यमानाया घटौ न स्त इति प्रतीतेरुपपादयितुमशक्यत्वादित्यत

---

तीतेरेव। नन्वेकविशिष्टापरत्वमेवोभयत्वमिति वैशिष्ट्यानुपस्थितौ घटपटोभयं नास्तीतिप्रतीतिरसिद्धैवेत्यत आह विरुद्धयोरिति। इदं च विरोधितानियामकसम्बन्धेन वैशिष्ट्याप्रसिद्धिसूचनाय। उक्तत्वात्। उक्तप्रायत्वात्। तेन घटत्वपटत्वयोरेव द्वित्वेनाभावस्य प्रतीतेः सिद्धान्तनिरुक्तावुक्तत्वेऽपि न क्षतिः। क्लृप्तस्य घटत्वाद्यवच्छिन्नाभावस्यैव प्रतियोगितावच्छेदकं द्वित्वमित्यन्यकल्पं निरस्यति नान्य इति। तथात्वेऽपि। द्वित्वादेः क्लृप्तप्रत्येकाभावप्रतियोगितावच्छेदकत्वेऽपि। तादृशाभावेति। साधनवन्निष्ठात्यन्तान्योन्योभावेत्यर्थः। ननु तद्दोषभिया वरं साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगित्वं विवक्ष्यतां तावताप्यव्याप्तिनिरासेऽभ्युपगमे वेति ग्रन्थेनाऽतिरिक्ताभावमङ्गीकृत्य सिद्धान्तो ग्रन्थकृतो नोचित इत्यतस्तमपि व्यवस्थापयति अन्तरेण चेति। अभावान्तरमिति। घटद्वयत्वाद्यवच्छिन्नप्रतियोगिताकमित्यादिः। एकैकेति। तथा च न घटत्वावच्छिन्नाभावेन तदन्यथासिद्धिः। घटद्वयेति। तथा च तत्तद्घटत्वावच्छिन्नाभावेनापि न तदन्यथासिद्धिरिति भावः। यद्यपि यावन्तो घटाः प्रत्येकं तत्तद्घटान्यघटत्वाद्यवच्छिन्नाभावेष्वेव क्लृप्तेषु घटद्वयत्वावच्छिन्नप्रतियोगिताकत्वकल्पने घटद्वयवति घटौ न स्त इत्यस्य न प्रसङ्गः न वा एकघटवति तादृशप्रत्ययाप्रसङ्गः। तथाप्यनन्तेष्वभावेषु तादृशप्रतियोगिताकत्वकल्पनामपेक्ष्य तथाविधप्रतियोगिताकत्वेनैकस्यातिरिक्ताभावस्यैव कल्पना लघीयसी सामान्याभावस्थल इव युक्तेस्तौल्यादिति भावः। न च घटविशिष्टघटत्वावच्छिन्नाभावस्यैव घटद्वयत्वावच्छिन्नप्रतियोगिताकत्वं कल्प्यं न तु तत्तद्घटान्यघटत्वावच्छिन्नाभावानां घटानाम्, आनन्त्यात्, तत्र च घटविशिष्टत्वं स्वनिष्ठभेदप्रतियोगित्वस्वसामानाधिकरण्योभयसम्बन्धेन वक्तव्यम्, अतो घटद्वयव-

अथवाऽनौपाधिकत्वं व्याप्तिः । तच्च यावत्स्वस-मानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन समं सामानाधिकरण्यम् । न ह्येवं सोपाधिः, तत्र सा-

---

आह अभ्युपगमे वेति । उभयत्वमेव प्रतियोगितावच्छेदकं न तु साध्यतावच्छेदकं साध्यवत्त्वं वेत्यर्थः। अश्रूयमाणावच्छेदकत्वांशेऽपि लक्षणे तथैव विवक्षितमिति भावः । तच्चेति । स्वं साधनत्वाभि-

---

ति घटौ न स्त इत्यस्य न प्रसङ्गः न वैकघटवति तादृशप्रत्ययाप्रसङ्ग इति वाच्यम्। इह कपाले समवायेन घटौ न स्त इति प्रतीतेस्तादृशाभावेनाप्यन्यथा कर्तुमशक्यत्वात्।स्वाधिकरणसमवेतत्वस्वनिष्ठभेदप्रतियोगित्वोभयसम्बन्धेन घटविशिष्टस्य घटान्तरस्याप्रसिद्धत्वादिति भावः। वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वोपगमे स्वपर्याप्त्यधिकरणवृत्तासम्बन्धेन घटपर्याप्तद्वित्वाभावस्यैव घटद्वयत्वावच्छिन्नप्रतियोगिताकत्वकल्पनसम्भवादन्तरेणेत्यादिकमयुक्तमिति तु विभावनीयम् । ननु साध्यघटितोभयस्य प्रतियोगित्वे सुतरां साध्यस्यापि तथात्वमतस्तदुभयमित्यादिमूलासङ्गतिरतो व्याचष्टे तदुभयत्वमिति । तथा च भावप्रधानो निर्देशः । ननु तथाऽप्यप्रतियोगित्वगर्भाणि यथाश्रुतलक्षणानि अव्याप्तान्येवेत्यत आह अश्रूयमाणेति । तथेति। प्रतियोगिपदस्य प्रतियोगितानवच्छेदकधर्मवत्परत्वादिति भावः । केचित्तु प्रतियोगितानवच्छेदकत्वगर्भेष्वेव समस्तलक्षणेषु प्रतियोगितानतिरिक्तवृत्तित्वरूपं तदवच्छेदकत्वमभिप्रेत्याशङ्कितं मूले अथेति। स्वरूपसम्बन्धविशेषरूपमेवावच्छेदकत्वं निविष्टमित्याशयेनैव परिहृतम् । अभ्युपगमे वेति । तदुभयमित्यादौ तु सर्वत्र धर्मपरो निर्देश इत्याहुः । स्वपदस्य साध्यपरत्वे व्यभिचारिण्यतिव्याप्तेराह स्व[पद]मिति । अत्र प्रतियो-

धनसमानाधिकरणात्यन्ताभावप्रतियोगिन आर्द्रेन्धनव-त्त्वादेरुपाधेर्योऽत्यन्ताभावस्तेन समं साध्यस्य धूमादेः सामानाधिकरण्याभावात् उपाधेः साध्यव्यापकत्वात् ।

---

मतम् । तथा च साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदका यावन्तो धर्मा यद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकाः तद्धर्मावलीढसामानाधिकरण्यमित्यर्थः । एतेन सर्वत्र तादृशैर्यावद्भिरवच्छिन्नस्य तादृशावच्छिन्नयावत्प्रतियोगिकस्य चातिप्रसञ्जकात् यावत्त्वाद्यवच्छिन्नप्रतियोगिता-

---

गित्वयोरेकसम्बन्धावच्छिन्नत्वं विशेषणताविशेषसम्बन्धावच्छिन्नत्वं वा वक्तव्यम् । तेनायोगोलकभेदत्वादेर्विषयितया धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि नातिव्याप्तिः । न च तथापि विषयितयाऽयोगोलकभेदत्ववज्ज्ञानस्य विशेषणतया योऽभावस्तस्य तथात्वादतिव्याप्तिरिति वाच्यम् । तादृशव्यधिकरणसम्बन्धावच्छिन्नाभावे अयोगोलकभेदत्वापेक्षया लाघवात्किञ्चित्पदार्थस्यैव विषयितयाऽवच्छेदकत्वात् । गुरुधर्मस्यावच्छेदकत्वस्वीकारे तु प्रतियोगितावच्छेदकताप्येकसम्बन्धेन विवक्षणीया । यथाश्रुतार्थत्यागे बीजमाह एतेनेति । प्रत्युक्तमित्यग्रेऽन्वयः । तादृशैः । साधनवन्निष्ठाभावप्रतियोगितावच्छेदकैः । अवच्छिन्नस्येति । अप्रसिद्धिरित्यग्रेणान्वयः । तथा च यावत्त्वं नावच्छेदकविशेषणमिति भावः । तादृशावच्छेदकावच्छिन्नस्यापि यावत्त्वं न विशेषणमित्याह तादृशावच्छिन्नयावदिति । प्रतियोगिकस्येति । अत्राप्यप्रसिद्धिरित्यन्वयः । ननु तादृशयावत्प्रतियोगिको यावत्त्वाद्यवच्छिन्नाभाव एव प्रसिद्ध इत्यत आह अतिप्रसञ्जकादिति । तथा च यावत्त्वाद्यवच्छिन्नतादृशाभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिभिया यावत्त्वाद्यनवच्छिन्नाभाव एव लक्षणे निवेश्य इति तदप्रसिद्ध्या वह्निमान् धूमादित्यादावसम्भव इति भावः । ननु द्वितीयात्यन्ताभाव एव यावत्त्वेन वि-

कादतिरिक्तस्याभावस्याप्रसिद्धिः तादृशावच्छिन्नप्रतियोगिताकानां यावदभावानामधिकरणस्य प्रायशस्तथा, रूपादिसाध्यकपृथिवीत्वादावव्याप्तिश्च क्वापि रूपादिव्यक्तौ तादृशयावदभावसामानाधिकरण्यासम्भवादिति प्रत्युक्तम् । सर्वत्र सोपाधावेकव्यक्तिकस्य सम्भवतोऽप्युपाधेर्द्धर्मान्तरविशिष्टत्वादिना अभावो भवत्येव सा-

———

वच्छितः समासनिविष्टेनापि तेन व्युत्पत्तिवैचित्र्याद्यावत्पदार्थस्याभेदान्वयसम्भवादत आह तादृशावच्छिन्नेति । तथा । अप्रसिद्धिः । तथा चं तत्तत्पर्वताद्यन्यत्वाभावकूटाधिकरणाप्रसिद्ध्या नानाव्यक्तिवृत्तिसाध्यके द्रव्यं पृथिवीत्वादित्यादावव्याप्तिरिति भावः । अत्र च वह्निमान् धूमादित्यादौ व्यधिकरणयोर्व्याप्त्यस्वीकारात्पर्वतीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नतत्पर्वतान्यत्वाभावकूटस्याधिकरणं पर्वत एव इति नाव्याप्तिरितिध्येयम् । वाच्यं गगनत्वादित्यादावेकव्यक्तिवृत्तिसाधनस्थले तादृशयावदभाववत्त्वं साधनवत्येव प्रसिद्धमतः प्रायश इत्युक्तम् । ननु तादृशयावदभावानां प्रत्येकाधिकरणवृत्तित्वं साध्ये वाच्यमतो नोक्ताप्रसिद्धिरत आह रूपादीति । तादृशेति । तत्तद्घटान्यत्वाभावकूटस्यापि निरुक्ताभावतया तत्प्रत्येकसामानाधिकरण्यस्य कुत्रापि रूपे ऽसत्त्वात् । न च तादृशयावदभावानां प्रत्येकसमानाधिकरणवृत्तित्वं साध्यतावच्छेदके वाच्यमतो नोक्तदोषः । दण्डिमान् दण्डिसंयोगादित्यादावेवमप्यव्याप्तेरिति भावः । यद्यपि तादृशयावदभावानां प्रत्येकाधिकरणं यद्धर्मावच्छिन्नस्याधिकरणं हेतौ तदवच्छिन्नस्य सामानाधिकरण्यविवक्षायां न को ऽपि दोषः, तथापि एतस्यैव फलतः कल्पान्तरेणाग्रे वक्ष्यमाणत्वान्नाशङ्कितमिति भावः । ननु साधनवन्निष्ठाभावप्रतियोगिनो यावन्तो यत्समानाधिकरणाभावप्रतियोगिन इत्यस्यैव सम्यक्त्वेऽवच्छेदकद्वयोपादानं व्यर्थम् अयःपिण्डभेदस्यैव साधनाव्यापकस्य साध्यवन्निष्ठाभावप्रतियोगित्वविरहाद्धूमवान् वह्नेरित्यादिसोपाधावतिव्याप्त्यभावादत आह सर्वत्रेति । धर्मान्तरेति । साध्यन्यूनवृत्तिघटत्वादिविशिष्टत्वेनेत्यर्थः ।

ध्यसमानाधिकरण इत्यवच्छेदकानुसरणम् । साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावा यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यमित्यर्थः । अभावश्चात्र भावभिन्नो ग्राह्यस्तेन इदं जलं स्नेहवत्त्वादित्यादौ स्नेहवत्त्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकरूपसामान्याभावत्वावच्छिन्नप्रतियोगिताकाभावानां सकलरूपाणां जलत्वसामानाधिकरण्यविरहेऽपि नाव्याप्तिः । घटध्वंसो

---

विशिष्टस्यातिरिक्तत्वे शुद्धायःपिण्डभेदस्य विशिष्टाभावप्रतियोगित्वासम्भवादाह आदिनेति । तेन द्वित्वाद्यवच्छिन्नतदभावस्योपग्रहः। अत्र साधनवन्निष्ठाभावप्रतियोगिता यावत्यः साध्यवन्निष्ठाभावप्रतियोगितास्वरूपा इत्युक्तौ नैष दोषः तप्तायःपिण्डभेदत्वावच्छिन्नप्रतियोगिताव्यक्तेर्धूमवन्निष्ठाभावप्रतियोगितानात्मकत्वात् अतिव्याप्त्यसम्भवादिति ध्येयम् । मतान्तरमाह साधनसमानेत्यादिना। यद्धर्मावच्छिन्नेति । तथा च मूले तादृशप्रतियोगिताकात्यन्ताभावाः समानाधिकरणा यस्येति बहुव्रीहिः । नाव्याप्तिरिति । न च रूपसामान्याभावत्वस्य रूप इव रूपध्वंसरूपप्रागभावयोरपि प्राचीनमते सत्त्वात्तयोश्च भावभिन्नयोरपि निखिलयोर्जलत्वसामानाधिकरण्याभावादव्याप्तितादवस्थ्यमिति वाच्यम्। यद्धर्मावच्छिन्नाभावत्वावच्छेदेन भावभिन्नत्वम्, हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकीभूततादृशधर्मावच्छिन्नाभावो ग्राह्य इत्यत्र भावभिन्नो ग्राह्य इत्यस्य तात्पर्यात् । न च रूपसामान्याभावत्वावच्छिन्नाभावत्वावच्छेदेन भावभिन्नत्वं रूप एव व्यभिचारात् । अत एव रूपप्रागभावसामान्याभावत्वावच्छिन्नाभावस्वरूपप्रागभावानप्यादाय न दोषः। तादृशरूपप्रागभावसामान्याभावत्वावच्छिन्नाभावत्वावच्छेदेन प्राचां मते भावभिन्नत्वविरहात् रूपस्यापि तथात्वादिति भावः । न च तथापि स्नेहवत्त्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं जलान्यत्वविशिष्टसत्त्वाभावतेजोऽन्यत्वविशिष्टसत्त्वाभावान्यतरत्वावच्छिन्नाभावत्वं तदवच्छिन्नाभावस्य तेजोऽन्यत्वविशिष्टसत्त्वात्यन्ताभावस्य ज-

ध्वंसत्वादिस्यादौ च घटध्वंसत्वादेस्तत्प्रकारकप्रमाविशेष्यत्वादेर्वा भावाभाववृत्तिरतिरिक्तोऽभावस्तादृशो न घटध्वंसत्वादिसमानाधिकरण इति नातिव्याप्तिरित्यपि वदन्ति ।

---

लत्वसामानाधिकरण्याभावाद्व्याप्तिरिति वाच्यम् । जलतेजोऽन्यत्वविशिष्टसत्ताया एव तादृशान्यतरत्वावच्छिन्नाभावतया जलतेजोऽन्यत्वविशिष्टसत्ताभावस्य तदवच्छिन्नप्रतियोगिताकाभावत्वात् तस्य च जलत्वसमानाधिकरणत्वेनाव्याप्त्यनवकाशात् । तादृशान्यतरत्वावच्छिन्नाभावस्य भावरूपत्वे तदवच्छिन्नाभावस्वस्यैकस्मिन्नेवोक्तविशिष्टाभावे कल्पयितुमुचितत्वात् । ननु घटध्वंसत्ववान् ध्वंसत्त्वादित्यत्रातिव्याप्तिः घटध्वंसत्वत्वस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि तदवच्छिन्नाभावत्वावच्छेदेन भावभिन्नत्वविरहेण घटध्वंसत्वसामान्याभावस्य लक्षणाघटकत्वात् । जन्याभावत्वलक्षणध्वंसत्वस्य जन्यत्वे सति भावभेदस्वरूपत्वादभावप्रतियोगिकाभावमात्रस्यैव च अधिकरणस्वरूपत्वोपगमात् भूतलादिनिष्ठस्य घटध्वंसत्वाभावस्य भूतलादिभावे पर्यवसानात् घटत्वाद्यवच्छिन्नाभावस्य च तथाविधयावदन्तर्गतस्य साध्यसामानाधिकरण्यादत आह घटध्वंस इति।भावाभाववृत्तिरिति। तथा च भावनिष्ठत्वमभावप्रतियोगिकत्वं वा नाधिकरणस्वरूपत्वे तन्त्रम् अपि तु तदभावमात्रनिष्ठत्वं स्वेनैव तादात्म्येन स्वमात्रवृत्त्यभावस्य विशिष्टबुद्ध्युपपत्तौ तत्तद्भावभिन्नत्वाद्यभावस्यातिरिक्तत्वकल्पने मानाभावादिति भावः । स्नेहवत्त्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत्तेजस्त्वाभावसत्त्वाभावान्यतरत्वावच्छिन्नाभावत्वं तदवच्छिन्नप्रतियोगिताको यो निरुक्तभावभिन्नोऽभावस्तेजस्त्वाभावः सत्त्वाभावश्च तयोर्न साध्यसामानाधिकरण्यं सत्त्वाभावस्य जलत्वविरुद्धत्वादित्यादिक्रमेण जलं स्नेहवत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरित्यस्वरसेन वदन्तीत्युक्तम् ॥ साम्प्रदायिकास्तु भावभिन्न इत्यस्य वास्तविकात्यन्ताभावो ग्राह्य इत्यर्थः तेन रूपप्रागभावध्वंसात्य-

न्ताभावत्वावच्छिन्नाभावानां रूपप्रागभावध्वंसात्मकानां भावभिन्नानां जलत्वसामानाधिकरण्याभावेऽपि जलं स्नेहवत्त्वादित्यत्र नाव्याप्तितादवस्थ्यम्। ननु घटध्वंसो ध्वंसत्वादित्यत्रातिव्याप्तिः अभावप्रतियोगिकाभावमात्रस्याधिकरणरूपतया घटात्यन्ताभावादिवृत्तेर्घटध्वंसत्वात्यन्ताभावस्य घटात्यन्ताभावादिस्वरूपस्य घटध्वंसत्वरूपसाध्यसामानाधिकरण्यात् पटध्वंसादिनिष्ठस्य च घटध्वंसात्मकस्य वास्तवात्यन्ताभावत्वविरहेण लक्षणाघटकत्वाद्त आह घटध्वंस इत्यादीत्याहुः। तन्मन्दम्। अभावप्रतियोगिकाभावानामधिकरणस्वरूपतामाशङ्क्य घटध्वंसेत्यादेरवतारणं धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटध्वंसत्वत्वावच्छिन्नाभावस्य द्रव्यत्वाभावनिष्ठस्यापि तुल्ययुक्त्या द्रव्यत्वाभावात्मकस्य वह्निसामानाधिकरण्याभावाद्वह्निमान् धूमादित्यादावव्याप्तेरेव सम्भवे घटध्वंसो ध्वंसत्वादित्यादावतिव्याप्तिपर्यन्तानुसरणस्य सन्दर्भविरोधापत्तेः। नव्यास्तु भावभिन्न इत्यत्र भावेन भिन्नः प्रतियोगिविधया सम्भिन्नो भावमात्रप्रतियोगिक इति यावत्। तेन स्नेहवत्त्वसमानाधिकरणस्य हिमावृत्तिस्वरूपस्याभावस्य प्रतियोगितावच्छेदकं यद्धिमावृत्तेरभावत्वं तदवच्छिन्नप्रतियोगिताकस्य यावद्धिमावृत्त्यन्तर्गतस्य जलत्वाभावस्य साध्यासामानाधिकरण्येऽपि जलं स्नेहवत्त्वादित्यादौ नाव्याप्तिः हिमावृत्तेरभावत्वस्य भाव इवाभावेऽपि सत्त्वात्तदवच्छिन्नाभावस्य भावमात्रप्रतियोगिताकत्वाभावात्। नन्वेवं घटध्वंसो ध्वंसत्वादित्यादावतिव्याप्तिः व्यभिचारनिरूपकाधिकरणपटध्वंसान्यत्वाभावादेर्घटध्वंसत्वाभावादेर्वा भावप्रतियोगिकत्वविरहेण लक्षणाघटकत्वात् जन्यत्वे सति भावभिन्नत्वपर्यवसन्नस्य घटध्वंसत्वस्य भावत्वविरहात् घटात्यन्ताभावादेश्च तादृशस्य साध्यसमानाधिकरणत्वात् अत आह घटध्वंस इत्यादि। भावभिन्नत्वविशिष्टजन्यत्वमेव ध्वंसत्वमखण्डधर्मान्तरमेव वा तत् तथा च घटध्वंसत्वाभावस्यैव भावमात्रप्रतियोगिकत्वात्तेनैवोक्तातिव्याप्तिनिवारणं सम्भवतीत्याशयेनाह घटध्वंसत्वादेरिति। आदिना घटप्राग भावः प्रागभावत्वादित्यादौ घटप्रागभावत्वादेः परिग्रहः। जन्यत्वे सति भावभिन्नत्वं ध्वंसत्वमित्युक्तावपि न क्षतिरभावान्तरमादायैवातिव्याप्तेर्निराससम्भवादित्याशयेनाह तत्प्रकारकेति। भावाभाव-

एतदेव यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वं गीयते ।

यद्वा यावद्यत्समानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वम् । सोपाधौ तु साध्यवन्निष्ठात्यन्ताभावाप्रतियोगिन उपाधेर्योऽत्यन्ताभावस्तेन समं हेतोः सामानाधिकरण्यम् । उपाधेः साधनाव्यापकत्वात् ।

---

यावदिति । स्वं व्यभिचारि येषां तेषां यावतां व्यभिचारिणा साध्येन सामानाधिकरण्यमित्यर्थः ।

यावदिति । यत्पदं साध्यत्वाभिमतपरम् । सोपाधिवारणाय यावदिति लुप्तसप्तमीकस्य द्वितीयात्यन्ताभावस्य विशेषणम् ।

---

वृत्तिरित्यनेनानुगतप्रतीतिप्रमाणकत्वं तादृशाभावस्याविष्कृतम् । अतिरिक्तो भावमात्रप्रतियोगिक इत्यर्थ इति प्राहुः । अत्र तादृशध्वंसत्वाभावस्यापि जन्यत्वविशिष्टाभावभेदाभावानतिरिक्ततया न भावमात्रप्रतियोगिकत्वं तस्येति पूर्वग्रन्थासङ्गतिश्चेति चिन्त्यम् ॥

ननु यावन्तः स्वस्य व्यभिचारिणस्तद्व्यभिचारिसाध्येत्यर्थे वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः साधनव्यभिचारिणः प्रमेयत्वद्रव्यत्वादेर्व्यभिचारस्य साध्ये विरहादत आह स्वमिति । यत्पदस्य साधनपरत्वे सोपाधावतिप्रसङ्गादाह साध्यत्वेति । साध्यव्यापकप्रतियोगिकस्य तत्तद्विपक्षान्यत्वाद्यभावकूटस्याधिकरणाप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तेराह लुप्तसप्तमीकेति । तथा च यावति यद्व्यापकस्याभावे यस्यासामानाधिकरण्यं तस्य तत्त्वमेव व्याप्तिरि-

तथा च साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभावकत्वमर्थः । केवलान्वयिस्थले त्वाकाशादिरेव तथाविधोऽभावः प्रसिद्ध इति सम्प्रदायः । केचित्तु तादृशयावदभावशून्यत्वं यदधिकरणताया व्यापकं तत्त्वमर्थः । न च तादृशप्रतियोगितानवच्छेदकवत्त्वमेव या-

---

तिभावः । विशेषणमभेदान्वयसाकाङ्क्षं तेन पदस्य विशेषणत्वाभावेऽपि न क्षतिः। वस्तुमात्रस्यैव साध्यवन्निष्ठाभावप्रतियोगित्वेन तद्प्रतियोगित्वाप्रसिद्धिः व्यापकत्वातिरिक्तं यावत्त्वञ्च दुर्वचमित्यतो निष्कर्षमाह तथा चेति । एतस्यार्थः प्रागेव प्रपञ्चितः । ननु एकव्यक्तिवृत्तयो यावन्तः साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावास्तेषामसामानाधिकरण्यमेवार्थः कुतो न कृतः तत्ताद्विपक्षान्यत्वाद्यभावकूटस्यैकव्यक्तिवृत्तित्वाभावादेव तेषामधिकरणाप्रसिद्धावपि वह्निमान् धूमादित्यादावव्याप्त्यसम्भवादत आह केवलान्वयिनि चेति । तथाविधः । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकः। तथा च तदधिकरणाप्रसिद्ध्या प्रमेयं वाच्यत्वादित्यादावव्याप्तिभियैव तादृशार्थस्त्यक्त इति भावः । अत्र वह्निमान् धूमादित्यादावव्याप्तिः, वह्निव्यापकस्य ह्रदत्वविशिष्टद्रव्यत्वाद्यभावस्य योऽभावो द्रव्यत्वादिः तत्र धूमादिसामानाधिकरण्यस्यैव सत्त्वात् अभावविरहात्मकत्वलक्षणप्रतियोगित्वान्यथानुपपत्त्या द्रव्यत्वस्यैव विशिष्टद्रव्यत्वाभावाभावत्वात्, अन्यथा गगनस्यापि स्वाभावाभावत्वे मानाभावात् केवलान्वयिन्यव्याप्त्यापत्तेरित्यस्वरसः सम्प्रदाय इत्यनेन सूचितः। अत एवैतद्दोषं निरस्यतां मतमुपन्यस्यति केचित्त्विति । तादृशेति । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावसामान्याभावत्वेन यदधिकरणताया व्यापकत्वं तत्त्वमित्यर्थः । सामान्याभावलाभायैव यावत्पदोपादानं तेन तादृशाभावानां यावत्त्वाद्यवच्छिन्नाभावस्य केवलान्वयित्वेऽपि न धूमवान् वह्नेरित्यादावतिप्रसङ्गः । न चेति । वाच्यमित्यन्वयः। तादृशेति । साध्यवन्निष्ठाभावीयेत्यर्थः । अनतीति ।

वत्त्वेन विशिष्य यावत्तादृशाश्रयत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थलाभादेव सामञ्जस्येऽभावद्वयोपादानमनतिप्रयोजनकमिति वाच्यम्, यावतां तादृशानामिन्धनादीनामेकाधिकरण्यस्याऽप्रसिद्धेः । न चावच्छेदकांशमपहायाऽप्रतियोग्येव यावत्त्वेन विशिष्यतां साध्यव्यापकस्यापि रूपान्तरेण साध्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्योपदर्शितत्वादित्याहुः ।

अवच्छिन्नं सामानाधिकरण्यं सामानाधिकरण्यावच्छेदकरूपं वा व्याप्तिः । इत्थञ्च धूमत्वद्रव्यत्वत्वादेर्व्याप्यतावच्छेदकत्वं दण्डत्वादेर्नियतपूर्ववर्त्तितावच्छेदकधर्मात्मककारणतावच्छेदकत्ववदभेदेऽप्युपहितानुपहितभेदाद्वा समर्थनी-

———

साध्यव्यापकानां यावत्त्वेनाप्रवेशाद्वैयर्थ्यासम्भवादिति भावः । एकाधिकरण्यस्येति । तेषां प्रत्येकाश्रयत्वस्य प्रवेशे तु तादृशतत्तद्वह्निमत्त्वस्य धूमाधिकरणत्वाव्यापकत्वादव्याप्तिरसम्भवो वेति भावः । रूपान्तरेण । किञ्चिद्वह्निविशिष्टत्वादिना । तादृशाप्रतियोग्यप्रभिन्नैरवच्छेदकांशो निवेशित इति भावः । अत्र गगनस्य स्वाभाववविरहत्वे मानाभावः स्वरूपसम्बन्धविशेषस्यैव प्रतियोगित्वादतः केवलान्वयिन्यव्याप्तिरित्यस्वरसः केचिदित्यनेन सूचितः । स्वमते तु साध्यव्यापकतावच्छेदका यावन्तो धर्माः यद्धर्मावच्छिन्नस्य व्यापकतावच्छेदकास्तद्धर्मवत्त्वमेवानौपाधिकत्वमिति प्रागेव पूर्वपक्षग्रन्थे विवेचितमिति ध्येयम् ।

लक्षणयोः पौनरुक्त्यमपाकर्तुं विकल्पयति अवच्छिन्नमित्यादिना । ननु व्याप्यतावच्छेदकस्य धूमत्वादेः सामानाधिकरण्यावच्छेदकधर्मत्वरूपव्याप्तित्वानुपपत्तिः विभिन्नयोरेवावच्छेद्यावच्छेदकभावनियमादत आह इत्थञ्चेति । दण्डत्वादेरिति । तथा चोक्तनियमो व्यभिचारपराहत इति भावः । ननु इतोऽपि बाधकात् कारणत्वमतिरिक्तः पदार्थ इति दण्डत्वादेस्तदवच्छेदकत्वं सुघटमेवेत्यत आह उपहितेति । विशिष्टाविशिष्टेत्यर्थः । स-

यद्वा यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः । तथा हि धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकं धूममात्रस्य वह्निसम्बन्धित्वात् वह्नेस्तु धूमसम्बन्धे न वह्नित्वमवच्छेदकं धूमासम्बन्धिनि गतत्वात् । न ह्यतिप्रसक्तमवच्छेदकं संयोगादौ तथात्वादर्शनात् । किन्तु वह्नावार्द्रेन्धनप्रभववह्नित्वं धूमसम्बन्धितावच्छेदकं तादृशञ्च व्याप्यमेव ।

---

यथातत्राद्यमभिप्रेत्याह यत्सम्बन्धितेति । सा सम्बन्धिता सामानाधिकरण्यरूपा जनकत्वादिव्यावृत्ता । अत्र च विशिष्टसत्तात्वाद्यवच्छिन्नगुणादिसामानाधिकरण्याधिकरणसत्त्वादेः कर्मादौ परामर्शादिगुणाद्यनुमित्यापत्तेः । साध्यसामानाधिकरण्यविशिष्टहेतुम-

---

मर्थनीय इति । धूमत्वादेर्व्याप्त्यवच्छेदकत्वमिति पूर्वेणान्वयः । भेदादिति । ल्यब्लोपे पञ्चमी । भेदमङ्गीकृत्येत्यर्थः । तथा च शुद्धधूमत्वं व्याप्त्यवच्छेदकं सामानाधिकरण्यावच्छेदकत्वोपहितञ्च तदवच्छेद्यमतः केवले विशिष्टभेदोपगमान्नासङ्गतिरिति भावः । तत्र । तयोर्मध्ये । सा इत्यनेनावच्छेदकपरामर्शे द्वितीयलक्षणाभेदप्रसङ्ग इत्यतो व्याचष्टे सा सम्बन्धितेति । एवं च मूले यस्याः सम्बन्धिताया अवच्छेदकरूपवत्त्वं यत्रेत्येवमन्वयो बोध्यः । जनकत्वादिरूपायाः साध्यसम्बन्धिताया व्याप्तित्वविरहादाह समानेति । जनकत्वादीत्यादिना जन्यत्वादेः परिग्रहः । विशिष्टेति । विशिष्टसत्तात्वाद्यवच्छिन्नं यद्गुणादिसामानाधिकरण्यं तद्वतः सत्त्वादेरित्यर्थः । गुणाद्यनुमित्यापत्तिरिति । सत्तायां गुणव्यभिचारित्वज्ञानेऽपीत्यादिः । कर्मादावित्यनुषज्यते । गुणव्याप्तिमतः सत्त्वस्य

त्तापरामर्शस्तु पक्षे साध्यनिर्णयात् प्रागसम्भवीत्यनुशयेन द्वितीयम् । अयमालोको धूमो वेत्यादौ विशिष्य सन्देहेऽपि सामान्यतोऽवच्छेदकरूपवत्त्वनिर्णयः सम्भवत्येवेति हृदयम् । अत्राऽवच्छेदकत्वं नाऽन्यूनवृत्तित्वम् अन्यूनानतिरिक्तवृत्तित्वं वा । वह्न्यादौ साध्ये मेयत्वादावतिप्रसङ्गात् धूमत्वादावप्रसङ्गाच्च । किन्त्वनतिरिक्तवृत्तित्वम् । तच्च यद्यपि न तदभाववदवृत्तित्वम् । गुणवान् सत्त्वादित्यत्र सत्तात्वेऽतिप्रसङ्गात् । न च कर्मादिवृत्तित्वावच्छेदेन



कर्मणि पक्षधर्मनानपायादिति भावः । ननु व्याप्त्यवच्छिन्नस्य हेतोः पक्षधर्मताज्ञानमनुमितिहेतुरतः साध्यसामानाधिकरण्यविशिष्टस्य सत्त्वादेः कर्मणि परामर्शे व्यभिचारधीदशायामप्यनुमितिरिष्यत एवेत्यत आह साध्यसमानेति । प्रागिति । तथा च पक्षे साध्यनिर्णयध्रौव्ये विनानुमित्सां क्वचिदप्यनुमितिर्न स्यादिति भावः । ननु धूमत्वादितत्तद्धर्मावच्छिन्नसाध्यसामानाधिकरण्यवतो धूमत्वादितत्तद्धर्म्मप्रकारेणैव पक्षधर्मतानिश्चयोऽनुमितौ हेतुर्वाच्यः तथा च कर्मणि तादृशविशिष्टसत्तात्वरूपेण पक्षधर्मत्वाऽनिर्णयान्नोक्तानुशयः सम्भवतीत्यत आह अयमित्यादि । अयं पक्षवृत्तिः । विशिष्येति । तथा च धूमत्वादिप्रकारेण पक्षधर्मतासन्देहदशायां उक्तप्रकारासम्भवादिदानीमनुमित्युत्पत्त्यर्थमपि द्वितीयकल्पानुसरणमिति भावः । सामान्यतः । साध्यसम्बन्धितावच्छेदकत्वप्रकारेण । इदं च स्वरूपसम्बन्धविशेष एवावच्छेदकत्वमित्याशयेन । प्रकारान्तरेणाऽवच्छेदकत्वोक्तौ तु तत्तद्धर्मनिवेशावश्यकत्वादिति द्रष्टव्यम् । आद्ये दूषणमाह प्रमेयत्वादाविति । तथा च वह्निमान् प्रमेयादित्यादौ व्याप्तिलक्षणातिप्रसङ्ग इति भावः । उभयत्रैव तदाह धूमत्वादाविति । वह्न्यादौ साध्ये इत्यनुषज्यते । तथा च वह्निमान् धूमादित्यत्र व्याप्तिलक्षणाव्याप्तिरिति भावः । कर्मादिवृत्तित्वेति । कर्मादिसमवेतत्वाद्यवच्छेदेनेत्यर्थः । कर्मावच्छेदेनेत्युक्तौ कर्मणि सत्तायां न गुणसामानाधि-

गुणसामानाधिकरण्याभाववत्यां सत्तायां वर्त्तमानत्वान्न तथा। तथा सति विशिष्टसत्तात्वे प्रागुपदर्शितदिशा च धूमत्वादाव-व्याप्तिप्रसङ्गात्। तथापि अतिरिक्ते यद्धर्मविशिष्टहेत्वधिकरणवृत्तित्वं न वर्त्तते तत्त्वम्। साध्यासमानाधिकरणावृत्तिस्वविशिष्टाधिकरणवृत्तित्वसामान्यकत्वं स्वविशिष्टाधिकरणावृत्तियावत्साध्या

———

करण्यमितिवदिदानीं सत्तादौ न गुणसामानाधिकरण्यमित्यपि प्रतीतिः स्यात् कर्मण एवेदानींकालत्वादतो वृत्तिविशेषानुधावनम्। तेन कालिकसम्बन्धेन यत्कर्मवृत्तित्वं तदवच्छेदेन गुणसामानाधिकरण्यस्यैव सत्त्वान्नोक्तप्रतीत्यापत्तिरिति भावः। न तथा। न सत्तात्वं गुणसम्बन्धित्वाभाववदवृत्ति। विशिष्टेति। कर्माद्यवच्छेदेन गुणसामानाधिकरण्याभाववत्यां सत्तायां वर्तमानत्वाद्विशिष्टसत्तात्वमप्यवच्छेदकं न स्यात् तथा च गुणवान् विशिष्टसत्त्वादित्यत्राव्याप्तिरिति भावः। ननु सामानाधिकरण्यस्याव्याप्यवृत्तित्वमुररीकुर्वतः सार्वभौमस्य मते विशिष्टस्यातिरिक्तत्वान्नैष दोष इत्यत आह। प्रागिति। तथा च स्वावयवे धूमे न वह्निसामानाधिकरण्यमितिप्रतीतेर्धूमेऽपि वह्निसामानाधिकरण्याभावसत्त्वात् धूमत्वमप्यवच्छेदकं न स्यादित्यर्थः। न च हेतुताघटकसम्बन्धेन यद्धेत्वधिकरणं तदवच्छेदेन साध्यसामानाधिकरण्याभावस्य निवेश्यत्वान्नैष दोषः। तथा सति गोत्ववान् अश्वत्वादित्यादौ महाकालनिरूपितविशेषणतया हेतुतायामव्याप्त्यापत्तेः। हेतुमन्महाकालाद्यवच्छेदेन तादृशसम्बन्धेन वृत्त्यभावस्याप्रसिद्धेरिति भावः। अतिरिक्ते इत्यस्य साध्यसमानाधिकरणादित्यादिः। ननु धूमासमानाधिकरणस्य घटत्वादेर्वह्नित्वविशिष्टाधिकरणावृत्तित्वाद्धूमवान् वह्नेरित्यादावतिव्याप्तिरत आह साध्यासमानेति। स्वपदं साधनतावच्छेदकीभूतधूमत्वादिपरम्। वह्नित्वविशिष्टाधिकरणीभूतपर्वतवृत्तित्वस्य धूमासमानाधिकरणावृत्तित्वादतिव्याप्तिरतः सामान्येति। तथा च वह्निमदयोगोलकवृत्तित्वस्यैव धूमासमानाधिकरणवृत्तित्वान्नातिप्रसङ्ग इति भावः। वृत्तिद्वयानन्तर्भावेन

समानाधिकरणकत्वमिति तु फलितार्थः । सत्तात्वविशिष्टसत्ताधिकरणकर्मादिवृत्तित्वस्य साध्यसमानाधिकरणे कर्मत्वादौ सत्त्वान्नातिप्रसङ्गः । कर्माद्यन्यत्वविशिष्टसत्ताश्रयश्च न कर्मादिरिति नाप्रसङ्गः । एवञ्च मेयत्वादेरपि केवलान्वयिसामानाधिकरण्यावच्छेदकत्वोपपत्तिः । यत्तु वृत्तिमत्त्वादिकमेव तत्र व्याप्तिस्तद्ग्रहस्तु मेयत्वादिनेति । तन्न । व्याप्तिविरहिवृत्तितया गृह्यमाणेन

---

पूर्वापेक्षया लघुतरमाह स्वविशिष्टेति । गुणवत्सत्त्वादित्यत्र प्रागुक्तातिव्याप्तिमुद्धरति सत्तात्वेत्यादिना । तथैव गुणवद्विशिष्टसत्त्वादित्यत्रोक्तामव्याप्तिं निरस्यति कर्माद्यन्यत्वेति । यथाश्रुतस्यानतिरिक्तवृत्तित्वरूपस्यावच्छेदकत्वस्योपेक्षायां बीजान्तरमप्याह एवं चेति । उपपत्तिरिति । अन्यथा वाच्यत्वसामानाधिकरण्याभाववति गगनादौ प्रमेयत्वादेः सत्त्वाद्वाच्यं प्रमेयादित्यादावव्याप्तिरेव स्यादिति भावः । मिश्रमतं निरसितुमुपन्यस्यति यत्त्विति । ननु प्रमेयत्वं यदि तत्र न व्याप्तिस्तदोदाहरणादौ ताद्रूप्येण हेतोरुपन्यासोऽनुचितः तस्य व्याप्त्युपस्थितिमात्रफलकत्वादत आह तद्ग्रहस्त्विति । तथा च व्याप्त्यन्तरवादिनामिव प्रमेयत्वावच्छिन्नविशेष्यकव्याप्तिग्रहार्थमेव हेतोः प्रमेयत्वेनोदाहरणादावुपन्यास इति भावः । यदि व्याप्तिविरहिवृत्तिरूपेणाप्युदाहरणादितो व्याप्तिग्रहः प्रामाणिकस्तदा यो यो द्रव्यवान् स वह्निमानित्यप्युदाहरणं स्यात् द्रव्यत्वस्यापि वह्निव्याप्तिविरहिवृत्तित्वाविशेषादित्यभिप्रेत्याह व्याप्तिविरहीत्यादि । स्वमते प्रमेयत्वस्यापि व्याप्तिविरहिवृत्तित्वाभावात् गृह्यमाणेनेत्युक्तम् । व्याप्तिग्रहेत्यस्योदाहरणादित्यादिः । अत्रोदाहरणस्य व्याप्तिविरहिवृत्तिरूपेण व्याप्तिग्राहकत्वेऽपि न क्षतिः व्यभिचारिवृत्तिरूपेण व्याप्त्यग्राहकत्वनियमादेव यो यो द्रव्यवान् स वह्निमानित्यादिवाक्यस्योदाहरणत्वासम्भवादिति चिन्त्यम् । यत्तु प्रमेयत्वप्रकारेण गगनादौ निरुक्तव्याप्त्यभावनिश्चयदशायां ताद्रूप्येण धूमादौ व्याप्तिग्रहो न स्यात् समानरूपेण विरोधिनिश्चयस्यैव विशिष्टधीविरोधित्वात्, अन्यथा वह्निर्न धूमव्याप्य इति निर्णयेऽपि वह्निर्धूमव्याप्य

रूपेण व्याप्तिग्रहासम्भवात् । अन्यथा अतिप्रसङ्गात् । साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणे येन येन सम्बन्धेनावर्त्तमानत्वं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणेऽपि तेन तेन तथात्वं बोध्यम् । नीलधूमत्वादेर्वारणीयत्वे तु स्वसमानाधिकरणतादृश-

---

इतिज्ञानापत्तेरित्यप्यर्थमाह । तन्मन्दम् । प्रमेयत्वावच्छेदेनैव बाधनिश्चयस्य विरोधितया तत्सामानाधिकरण्येन बाधनिश्चयेऽपि तादृरूप्येण व्याप्तिग्रहसम्भवात् । अन्यथा व्याप्यान्यप्रमेयं नित्यमितिधीदशायां व्याप्यप्रमेयं जन्यमिति ग्रहस्याऽपलापापत्तेरितिदिक् ॥ स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्वमित्यत्र सम्बन्धविवक्षामाह साध्येति । नातः समवायेन वह्नेः साध्यत्वे संयोगेन धूमादिहेतावव्याप्तिः । उभयत्रैव हेतुतावच्छेदकसम्बन्धेनावर्त्तमानत्वस्योक्तावेिदमेतद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तिः स्यादत आह येन येनेति । यथाश्रुतस्य द्रव्यं सत्त्वादित्यादावतिव्याप्तिरिति भावः । हेतुतेति । तेन संयोगेन वह्निमति समवायेनावर्त्तमानस्य धूमावयवत्वादेः समवायेन धूमवति अवयवे वर्त्तमानत्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिरिति भावः । वस्तुतो लाघवादावश्यकत्वाच्च साध्यसाधनयोरधिकरणे विशेषणताविशेषेणैवाऽवर्त्तमानत्वं प्रागुक्तमिहाप्यनुसन्धेयम् ॥ वारणीयत्वे त्विति । वस्तुतः स्वमते नीलधूमत्वमपि व्याप्तिरेव तादृरूप्येण हेतुप्रयोगे तु अधिकेनैव निग्रहस्थानेन पुरुषो निगृह्यत इति भावः । स्वेति । स्वं साध्यसम्बन्धितावच्छेदकत्वेनाभिमतम् । स्वसमानाधिकरणं यत्तादृशसाध्यसम्बन्धितावच्छेदकीभूतं धर्मान्तरं तदघटितत्वेनेत्यर्थः । तथा च नीलधूमत्वस्य तादृशधूमत्वाघटितत्वादेव व्युदासः । द्रव्यं गुणाद्यन्यत्वे सति सत्त्वादित्यादौ विशिष्टसत्तात्वस्य स्वसमानाधिकरणं यद्गुणान्यत्वं धर्मान्तरं तद्घटितत्वादव्याप्तिरतस्तादृशेति । तथा च गुणाद्यन्यत्वस्य तत्र साध्यसम्बन्धितानवच्छेदकत्वात् तद्घटितत्वेऽप्यदोषः । न च महाकालनिरूपितविशेषणतया दिक्कृतविशेषणतया वा गुणाद्यन्यस्य हेतु-

धर्मान्तराघटितत्वेन विशेषणीयम् । सामानाधिकरण्योपादानाद्-धूमप्रागभावत्वादिसंग्रहः । तदघटितत्वञ्च तदविषयकप्रतीतिविषयत्वम् । स्वरूपसम्बन्धविशेष एवावच्छेदकत्वम् । अत एव न ह्यतिप्रसक्तमवच्छेदकमित्यादिकमपि सङ्गच्छते । अन्यथाऽतिप्रस-

---

तायां गुणाद्यन्यत्वस्यापि द्रव्यत्वसम्बन्धितावच्छेदकत्वात्तदुक्तदोष-तादवस्थ्यम् प्रकृतहेतुतावच्छेदकसम्बन्धेन यत्साध्यसम्बन्धित्वं त-दवच्छेदकधर्मान्तराघटितत्वस्यैव प्रवेश्यत्वात् । धूमत्वादेरपि स्वे-नैव साध्यसम्बन्धितावच्छेदकधर्मेण घटितत्वादवच्छेदकत्वं न स्यादित्यन्तरपदम् । न चैवं नीलधूमत्वं नीलत्वविशिष्टधूमत्वं तथा-वच्छेदकं स्यात् धूमत्वस्य विशिष्टधूमत्वाभिन्नतया धर्मान्तरत्वाभा-वादिति वाच्यम् । स्वानवच्छिन्नप्रकारतावच्छेदकस्य धर्मान्तरपदे-न विवक्षितत्वादिति भावः । धूमप्रागभावत्वेति । ननु धूमत्वस्य साध्यसम्बन्धितावच्छेदकत्वेऽपि हेतुताघटकस्वरूपसम्बन्धेन यत्सा-ध्यसम्बन्धित्वं तदनवच्छेदकत्वेन धूमप्रागभावत्वस्य तदघटितत्वे-ऽपि न क्षतिरत आह आदीति । तेन धूमविशिष्टरासभत्वादेः परिग्र-हः । अत्र धर्मस्य स्वसामानाधिकरण्यं हेतुतावच्छेदकताघटकस-म्बन्धेन यत् स्वाधिकरणं तत्र साध्यसम्बन्धितावच्छेदकताघटकस-म्बन्धेन वर्त्तमानत्वरूपं ग्राह्यम्, तेन यथाकथञ्चित्सम्बन्धेन धूमत्व-धूमप्रागभावत्वयोर्मिथः सामानाधिकरण्येऽपि न क्षतिः । हेतुताव-च्छेदकताघटकसम्बन्धेन स्वाधिकरणे तेनैव सम्बन्धेन वर्त्तमानत्वं तु न तथा वाच्यम् । धूमत्वप्रकारकप्रमाविशेष्यत्वादेरपि व्याप्यता-वच्छेदकत्वापत्तेः । ननु तदघटितत्वं तदविषयकप्रतीत्यविषयत्वं तदन्यत्वं च तदघटितत्वमित्यभावद्वयप्रवेशे गौरवादाह तदघटित-त्वञ्चेति । मिश्रस्य मतान्तरमुपन्यस्यति स्वरूपेत्यादिना । अत एवे-ति । अतिप्रसक्तत्वविशिष्टेऽपि स्वरूपसम्बन्धरूपावच्छेदकत्वधीस-म्भवेन तयोर्विरोधप्रतिपत्त्यर्थमेव तद्ग्रन्थावतारादितिभावः । अन्य-थेति । यद्यनतिरिक्तवृत्तित्वमेवावच्छेदकत्वपदार्थस्तदेत्यर्थः । अतिप्र-सक्ते । अतिप्रसक्तत्वावच्छिन्ने । अप्रसक्तत्वेनानाहार्यज्ञानासम्भवेन

क्ते अनतिप्रसक्तत्वस्याऽप्रसक्तत्वेन तन्निराकरणायोगात्। विरुद्ध-योर्भावाभावयोरधिकरणे एकस्यैकेन सम्बन्धेन वृत्तिर्विरुध्यते, अतस्तत्रावच्छेदकभेदापेक्षा। अत एव व्यभिचारिणि साध्यतद-भावसामानाधिकरण्ययोर्विरुद्धयोरुपपादनायोपाधितदभावावच्छे-दकावनुमन्यन्ते न्यायाचार्याः। सत्तात्वन्तु गुणाद्यभावस्येव गुण-स्यापि न सामानाधिकरण्यावच्छेदकम्। विरोधात्। अव्याप्य-वृत्तेश्च कपिसंयोगादेरधिकरणे वृक्षादौ तदभावस्य संयोगेन च वह्नेरधिकरणे महानसादौ समवायावच्छिन्नप्रतियोगिताकतदभाव-स्य सत्त्वेनाविरुद्धत्वात्। वह्निमति च संयोगेन वर्त्तमानस्य धूमा-

---

तन्निराकरणायोगात्। आहार्यस्य तस्य निराकरणायोगाद-नुचितत्वादित्यर्थः। गुणवत् सत्त्वादित्यादौ सत्तात्वादेः सा-ध्यसम्बन्धितावच्छेदकत्वमपाकर्त्तुं भूमिकामाह विरुद्धयोरित्या-दि। एकस्य। एकरूपावच्छिन्नस्य। तेन धूमवान् वह्नेरित्यादौ वह्निव्यक्तीनां नानात्वेऽपि वह्नित्वस्य धूमसम्ब-न्धितानवच्छेदकत्वसम्पत्तिः। ननूक्तक्रमेणावच्छेदकभेदापेक्षा-यामपसिद्धान्त इत्यत आह अत एवेति। [अवच्छेदकाविति। तथा चोपाधिविशिष्टहेतुतावच्छेदकं साध्यसम्बन्धितावच्छेदकं उपाध्य-भावविशिष्टं साध्याभावसम्बन्धितावच्छेदकमिति भावः।] विरो-धादिति। एकस्यावच्छेदकत्वकल्पने विनिगमकप्रमाणाभावादि-ति भावः। विरुद्धयोरित्युक्तेः फलमाह अव्याप्यवृत्तेरिति। तद-भावस्य। संयोगाद्यभावस्य। अविरुद्धत्वात् वृक्षत्वत्वादेर्न साध्य-सामानाधिकरण्यावच्छेदकत्वविरोध इत्यग्रिमाभ्यामन्वयः। अत्रै-वं सति संयोगी सत्त्वादित्यादावविरुद्धयोः संयोगतदभावयोः सा-मानाधिकरण्यावच्छेदकत्वं सत्तात्वस्य दुर्वारमिति चिन्त्यम्। ननु लीलावतीकृन्मते संयोगस्य व्याप्यवृत्तित्वात्तदभावो न वृक्षा-दावतः स्थलान्तरे विरुद्धयोरित्यस्य फलमाह संयोगेन चेति। त-दभावस्य। वह्न्यभावस्य। एकेन सम्बन्धेनेत्यस्य फलमाह व-

देर्वह्न्यभाववति स्वावयवे संयोगेनावर्त्तमानत्वाच्च तद्वृत्तित्वम्-धूमत्वादेर्न साध्यसामानाधिकरण्यावच्छेदकत्वविरोधः। व्यभिचा-रधीरप्येतद्व्याप्तिबुद्धौ विरोधिन्येव। तद्धर्मविशिष्टस्य साध्यान-धिकरणवृत्तित्वग्रहे तदवच्छेदेन साध्यधिकरणवृत्तित्वग्रहायोगात्। अस्तु वा एतन्मते हेतुवृत्तिधर्मस्य साध्यसामानाधिकरण्यानवच्छे-दकत्वमेव व्यभिचारः। तद्धीरेव साक्षाद्विरोधिनी, व्यभिचारा-न्तरधीस्तु परम्परयेति। नीलधूमत्वादिकन्तु गौरवान्नावच्छेदक-म्। एवञ्च लघु घटत्वादिकमेव सामानाधिकरण्यावच्छेदकं व्याप्तिः न तु तत्सहचरितकम्बुग्रीवादिमत्त्वादिकम्। तेन गुरु-



ह्निमतीति। ननूक्तव्याप्तेरनुमित्युपयुक्तत्वे साध्यवदन्यवृत्तित्वादि-लक्षणव्यभिचारस्य तज्ज्ञानाविरोधित्वाद्धेत्वाभासत्वं न स्यादत आह व्यभिचारेति। ग्रहायोगात्। ग्रहानुपपत्तेः। तथा चानुभ-वबलाद्भिन्नविषयकमपि ज्ञानं प्रतिबन्धकमिति भावः। समानविष-यकमेव ज्ञानं विरोधीति नव्यानां मतमनुसृत्याह अस्तु वेति। सा-क्षात्। ग्राह्याभावनिर्णयविधया। नन्वेवं व्याप्तिग्रहप्रतिबन्धाय कथकानां व्यभिचारान्तरस्योपन्यासो न स्यादत आह व्यभिचा-रान्तरेति। परम्परयेति। तथा च प्रकृतव्याप्यभावावच्छेदकधर्म-विधयैवोपाधेरिव व्यभिचारान्तरस्याप्युपन्यासः कथायामिति भावः। स्वसमानाधिकरणतादृशधर्मान्तरेत्यादिविशेषणाप्रक्षेपेण पूर्वकल्पा-ल्लाघवमाविष्करोति नीलधूमत्वेति। गौरवादिति। लघुधर्मसम्भवे स्व-रूपसम्बन्धरूपावच्छेदकत्वस्य तत्रैवावस्थितिस्वाभाव्यादिति भावः। ननु गुरोरनवच्छेदकत्वे घटवान् कम्बुग्रीवादिमत इत्यादौ कम्बुग्री-वादिमत्त्वावच्छेदेनापि व्याप्तिर्न स्यात् घटत्वस्यैव लघोस्तथात्वस-म्भवादतस्तत्रेष्टापत्तिमाह एवञ्चेति। ननु गुरुधर्मस्यानवच्छेदकत्वे तदवच्छेदेन व्याप्तिग्रहो भ्रमः स्यात् एवं गुरुणैव व्यभिचारिसाधा-रणेनापि धर्मेण कथायां हेतोरुपन्यासः स्यात् व्याप्यतानवच्छेदक-

णापि रूपेण व्याप्तिग्रहे कथायां हेतोरुपन्यासे वाऽनुयोगः प्रकारान्तरव्याप्तिवादिनामपि समानः । एवं द्रव्यं रूपात् रसादित्वादौ सकलगुणसाधारणस्य गुणत्वस्य द्रव्यत्वादिसाधारणस्य गुणासमवेतत्वे सति द्रव्यसमवेतत्वस्य वैकस्यावच्छेदकत्वसम्भवे

---

त्वस्याविशिष्टत्वादित्यत आह तेन चेति । कम्बुग्रीवादिमत्त्वादिना चेत्यर्थः । तद्वच्छिन्नविशेष्यक एव व्याप्तिग्रहो न तु तस्य साध्यसम्बन्धितावच्छेदकत्वावगाहीत्युक्तौ न भ्रमत्वानुयोगः सम्भवतीत्यतः कथायामित्युक्तम् । प्रकारान्तरेति । व्यापकसामानाधिकरण्यादिव्याप्तिवादिनामपि स्वरूपसम्बन्धातिरिक्तस्यव्याप्यतावच्छेदकत्वस्य दुर्वचत्वादिति भावः । समान इति । यदि च व्याप्तिसमनियतधर्मान्तराघटितेन व्याप्तिसमनियतरूपेणैव हेतूपन्यासः साम्प्रदायिक इत्युच्यते तदा ममापि तुल्यमिति भावः । ननु शरीरगौरवस्येवाश्रयगौरवस्यापि कल्पनापरिपन्थित्वाद्द्रव्यत्वादौ साध्ये रूपत्वरसत्वादीनां बहूनामप्यवच्छेदकत्वं न स्यात् लाघवेन गुणत्वस्यैकस्यैव तथात्वादित्यतस्तत्रेष्टापत्तिमाह एवमिति । ननु रूपत्वादिकमिव गुणत्वमपि न सर्वसाध्यसम्बन्धिसाधारणमत आह द्रव्यादीत्यादि । आदिपदेन गुणकर्मघटपटत्वादीनां परिग्रहः । द्रव्यसमवेतत्वस्य साध्यतदभावसहचरितसत्तावृत्तित्वेन सत्तात्वस्यैव साध्यसम्बन्धितावच्छेदकत्वायोगादाह गुणासमवेतत्वे सतीति । न च रूपरसादीनां प्रत्येकासमवेतत्वे सतीत्युक्तावपि सत्तावारणसम्भवाद्विनिगमकाभावेन तेषामनन्तानां गुरुशरीराणामवच्छेदकत्वप्रसक्तौ तदपेक्षया लघुशरीराणां रूपत्वरसत्वादीनां बहूनां तथात्वौचित्यमिति वाच्यम् । गुरुशरीराणामपि रूपरसादिप्रत्येकासमवेतत्वे सति द्रव्यसमवेतत्वानां सर्वेषामेव घटपटादिद्रव्यघटत्वपटत्वादिजातिविशेषपदार्थसाधारण्यानुरोधाद्विनिगमनाविरहेणावच्छेदकत्वस्य प्रामाणिकत्वात् । रूपत्वरसत्वगुणत्वादीनामखण्डानामपि द्रव्यजात्यादिसाधारण्यविरहेणावच्छेदकत्वाकल्पनादिति भा-

बहूनां रूपत्वादीनां न तत्त्वम्, विरुद्धधर्मद्वयाधिकरणयोश्च एक-स्यैकेन सम्बन्धेन वृत्तौ कथं विरोधः कथं वा द्रव्यत्वादौ साध्ये हेतुत्वेन विशिष्टरूपादेः प्रयोगः तथा परामर्शाद्वाऽनुमितिरिति विभावनीयम्। अपरे तु यद्धर्मविशिष्टहेत्वधिकरणत्वं साध्याधिक-रणताया अवच्छेदकं स धर्मो व्याप्तिः। ग्रन्थस्तु धूमस्य धूमवतः

---

वः। न तत्त्वम्। नावच्छेदकत्वम्। अत्र द्रव्यत्वे साध्ये रूपरसा-दिप्रत्येकासमवेतत्वे गुणासमवेतत्वे वा सति द्रव्यसमवेतत्वं न साध्यसम्बन्धितावच्छेदकं किं तु द्रव्येतरासमवेतत्वमात्रं लाघ-वात् तावतैव घटादिवृत्तिगुणकर्मघटत्वादिजातिविशेषपदार्थाना-मुपग्रहसम्भवादिति तु चिन्त्यम्। मतमिदं दूषयति विरुद्धेत्यादि-ना। कथं विरोध इति। तथा च सत्तात्वावच्छेदेनैव गुणत-भावयोः सामानाधिकरण्यसम्भवात् गुणवान् सत्त्वादित्यादावति-व्याप्तिरिति भावः। नन्वेकावच्छेदेन विरुद्धभावाभावयोः सा-मानाधिकरण्याप्रतीतेरेव विरोधः कल्प्यतामित्यत आह कथं वेति। साध्यसम्बन्धितानवच्छेदकप्रकारेणापि हेतुप्रयोगे द्रव्यं प्रमेया-दित्यपि प्रयोगापत्तेरिति भावः। ननु तत्प्रकारेण हेतुप्रयोगे तद्ध-र्मस्य साध्यसम्बन्धितावच्छेदकत्वं न तन्त्रम् किन्तु प्रकृतव्याप्ति-नियतधर्मान्तराघटितत्वे सति प्रकृतव्याप्तिनियतत्वं तच्च रूपत्वादे-रण्यक्षतं न तु प्रमेयत्वादेरतो नातिप्रसङ्ग इत्यत आह तथा परामर्शा-द्वेति। स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिपरामर्शाद्वेत्यर्थः। क-थमित्यनुपज्यते। अनुमितिरिति। यदि धूमत्वादौ स्वरूपसम्ब-न्धात्मकमवच्छेकत्वं नाम वस्तु स्यात्तदा तद्गोचरपरामर्शसम्भ-वात्ततोऽनुमितिः सम्भाव्येत वस्तुतस्तत्रैव मानाभावो न हि धूमो वह्निसमानाधिकरण इत्यादिप्रतीतिः धूमो द्रव्यमित्यादिबोधव्यावृत्तं धूमत्वे सामानाधिकरण्यावच्छेदकत्वमवगाहत इति कस्याप्यनुभव-सिद्धमिति भावः। यद्धर्मविशिष्टहेत्वधिकरणत्वम्। यद्धर्मावच्छि-न्नाधिकरणत्वम्। ननु हेतुमत्त्वस्य साध्यसम्बन्धितावच्छेदकत्वे धू-

धूमत्वं धूमवत्त्वं वन्हेस्तु वन्हिमतास्त्वित्यादिप्रकारेण व्याख्येयः। अत्र चावच्छेदकत्वं न स्वरूपसम्बन्धविशेषः, विरुद्धदिक्कालावच्छिन्नवृत्तिकस्य न्यूनदेशकालवृत्तिकादेश्चाधिकरणतायां तदसम्भवात्तुल्यवृत्तिकधर्मद्वयाधिकरणत्वयोर्मिथोऽवच्छेद्यावच्छेदकभावस्य च नियन्तुमशक्यत्वात्। नाप्यन्यूनवृत्तिकत्वम्, न्यूनवृत्तिकधूमादेरव्याप्यतापत्तेः। किन्त्वनतिरिक्तवृत्तित्वं स्वान्यूनवृत्तित-

---

मत्वादेर्हेतुतावच्छेदकस्य तथात्वप्रदर्शनं मूलकृतो विरुद्धमत आह ग्रन्थस्त्विति। धूम एव मात्रो धर्मो यस्येतिव्युत्पत्त्या धूममात्रपदाद्धूमवतो लाभसम्भवात्तत्परित्यज्यैव वह्नेस्त्विति पाठं व्याचष्टे वह्निमतस्त्विति। इत्यादीत्यादिपदान्न वह्नित्वमित्यादावपि न वह्निमत्त्वमित्याद्यर्थः। विरुद्धेति। साध्यविरुद्धदिगवच्छिन्नवृत्तिकस्य साध्यविरुद्धकालावच्छिन्नवृत्तिकस्य च तदनवच्छेदकत्वानियमात्। तथा च भूगोलकमुदयगिरिमदस्ताचलवत्त्वात् कपालमेतद्घटवत् घटध्वंसादित्यादावव्याप्तिरिति भावः। न्यूनेति। साध्यन्यूनदेशवृत्तिकस्य साध्यन्यूनकालवृत्तिकस्य च हेतोरधिकरणतायां साध्याधिकरणतावच्छेदकत्वासम्भवात् तन्न्यूनदेशादिवृत्तिकस्य तदनवच्छेदकत्वनियमात्। तथा च इदं द्रव्यं पृथिवीत्वात् कालो घटत्ववान् घटादित्यादावव्याप्तिरिति भावः। ननूक्तनियमद्वयमप्रयोजकमत आह तुल्यवृत्तिकयोश्चेति। चकारेणाऽतुल्यवृत्तिकयोः परिग्रहः। अवच्छेद्येति। स्वरूपसम्बन्धरूपावच्छेद्यावच्छेदकभावस्येत्यर्थः। नियन्तुम्। अवधारयितुम्। अशक्यत्वादिति। तथा च तद्रूपवत्त्वावच्छेदेन तद्रसवत्त्वमित्यादिप्रतीत्यानतिरिक्तवृत्तित्वस्यैवावच्छेदकत्वस्य क्लृप्तस्यावगाहनाद्धेतुसाध्याधिकरणतयोः स्वरूपसम्बन्धरूपावच्छेदकत्वे मानाभावादप्रसिद्धिरेव लक्षणस्येति भावः। नापीति। अपिना अन्यूनानतिरिक्तवृत्तित्वस्य परिग्रहः अतो न धूमवान्वह्नेरित्यादौ अतिव्याप्तिः। उभयत्र दूषणमाह न्यूनवृत्तिधूमत्वादेरिति। ननु वाच्यं ज्ञेयत्वादित्यादौ साध्याधिकरणत्वातिरिक्ताप्रसिद्धिरत आह स्वान्यूनेति। स्वं स्वीयम्। तथा च स्वीयाधिक-

त्कत्वमिति यावत् । अतो न केवलान्वयिन्यव्याप्तिः । अत्र च यदन्यूनवृत्ति साध्यं तत्त्वं स्वव्यापकसाध्यसम्बन्धित्वपर्यवसन्नमपेक्ष्य गौरवं परमवशिष्यते तच्च ग्रन्थकार एवाऽग्रे विवेचयिष्यत इत्याहुः ।

———

रणत्वान्यूनवृत्तिसाध्याधिरणाताकत्वमर्थः गोत्वस्याप्यश्वत्वन्यूनवृत्तिभिन्नत्वादयं गौरश्वत्वादित्यादावतिव्याप्तेराह स्वव्यापकेत्यादि । अग्र इति । लाघवादन्योन्याभावगर्भैव व्याप्तिरित्यादि ग्रन्थ इत्यर्थः ॥

इति श्रीजगदीशतर्कालङ्कारविरचिता विशेषव्याप्तिः समाप्ता ।



## चिन्तामणेः अतएवचतुष्टयम् ।

अथ वा यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यम। वह्निसामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते सोपाधौ तूपाधिना ॥

## दीधित्या अतएवचतुष्टयम् ।

उपाधिनेति । विशेषणतामापन्नेनोपाध्यनुप्रवेशेनेति यावत् । वह्नावार्द्रेन्धनप्रभववन्हित्वेन रासभार्द्रेन्धनादौ च तथाविधवन्हिविशिष्टत्वेन धूमसम्बन्धेऽवच्छिद्यमाने तथाविधवन्हेरप्यनुप्रवेशात् ।

## जागदीश्या अतएवचतुष्टयग्रन्थः ।

सर्वत्र साक्षादुपाधेरवच्छेदकत्वासम्भवादाह विशेषणेति । यद्यपि सर्वस्यैवोपाधेः सामानाधिकरण्य सम्बन्धेन साध्यसम्बन्धितावच्छेदकत्वं सम्भवत्येव तथापि प्राचां ऽमते सामानाधिकरण्यादेः सम्बन्धत्वे विवादादिदमुक्तम । ननु विशेषणीभूतस्याप्युपाधेर्नावच्छेदकत्वं किन्तु तत्कोटिनिविष्टनामात्रमत आह उपाध्यन्विति । उपाधेरनुप्रवेशो यत्रेति व्युत्पत्या उपाधिघटितेनेत्यर्थः । उपाधिविशिष्टेनेति पाठेप्ययमेवार्थो ग्राह्यः । अनुप्रवेशं व्युत्पादयति वह्नावित्यादिना । आर्द्रेन्धन प्रभवेति । आर्द्रेन्धनप्रभववह्नित्वे अवच्छेदके आर्द्रेन्धनप्रभवत्त्वप्रकारेण तादृशवह्न्यात्मकोपाधेर्घटकत्वादिति भावः । यद्रूपेणोपाधित्वं तद्रूपावच्छिन्नस्याप्यवच्छेदकत्वप्रवेशं दर्शयति रासभेत्यादिना । यद्वा साक्षाद्विशेषणीभूतमुपाधिं व्युत्पाद्य परम्पराविशेषणभूतन्तमाह रासभे-

रासभत्वादिकन्तु निविशते न वेत्यन्यदेतत् । अत्र चेदं स्नेहवत् निःस्नेहं वा स्पर्शादित्यत्र विनाप्युपाधिप्रवेशं शीतत्वेन शीतान्यत्वेन वा साध्यासमानाधिकरणतया साधनव्यापकतया वा स्वयमनुपाधिना केवलेन विशेषणीभूय वा शीतान्यस्पर्शत्वेन चोपाधिना स्वत एव स्पर्शे साध्यसम्बन्धोऽवच्छिद्यत इत्युपाधिनैवेति नियमे न तात्पर्य्यम्, परन्तु शुद्धस्य साधनतावच्छेदकस्यानवच्छेदकतामात्रे ।

---

त्यादि । तथाविधेति । आर्द्रेन्धनप्रभववह्निविशिष्टत्वेनेत्यर्थः । तथाचार्द्रेन्धनप्रभववविशिष्टत्वं साध्यसम्बन्धितावच्छेदकमिति भावः । ननु धूमवान् रासभादित्यादावार्द्रेन्धनजन्यवह्निविशिष्टरासभत्वमप्यवच्छेदकं सम्भवति तत्कुतः परित्यक्तमत आह रासभत्वादिकमिति । नीलधूमत्वादेरवच्छेदकत्ववादिनां नव्यानां मतमाह निविशत इति । स्वसमानाधिकरणावच्छेदकान्तराघटितस्यैव व्याप्त्यवच्छेदकत्वमिति प्राचां मतेनाह न वेति । अन्यदेतदिति । उभयथाप्युपाध्यनुप्रवेशध्रौव्यादिति भावः । उपाधेरिव साधनतावच्छेदकस्यावच्छेदकत्वेपि सोपाधावित्यादिमूलसामञ्जस्यान्न तेन व्यभिचारिवारणं लभ्यत इत्युपाधिनैवेति नियमे मूलस्थतुकारस्य तात्पर्य्यं केचिदाहुः । तन्निरस्यति अत्रेति । इदं स्नेहवत् स्पर्शादित्यत्र विनाप्युपाधिप्रवेशं शीतत्वेन साध्यासमानाधिकरणतया स्वयमनुपाधिना केवलेन साध्यसम्बन्धोवच्छिद्यत इत्यन्वयः । ननूपाधिनैव विशेषणीभूयावच्छिद्यत इति नियमः तेनानुपाधिभिन्नेन विशेषणीभूतेन नावच्छिद्यत इति केवलशीतत्वेन साध्यसम्बन्धितावच्छेदेपि न क्षतिः । न चैवं साधनतावच्छेदकस्यावच्छेदकत्वेप्युक्तनियमसम्भवात्प्रकृतानुपयोगः साधनतावच्छेदकाभिन्नो यो विशेषणतानापन्नस्तदन्यस्यैव विशेषणीभूतपदेनोक्तत्वादत आह निःस्नेहमिति । निःस्नेहं स्पर्शादित्यत्रशीतान्यत्वेन साधनव्यापकतया स्वयमनुपाधिनाविशेषणीभूय साध्यस-

अत एव साधनतावच्छेदकभिन्नेन येन साधनता-

———

यत एव सोपाधौ साधनतावच्छेदकातिरिक्तं नियतमवच्छे-
दकम् अत एव तद्विशेषस्तत्रोपाधिरिति वदन्तीत्याह अत एवेत्यादि ।

———

म्बन्धोवच्छिद्यत इत्यन्वयः । शीतान्यस्पर्शत्वेन तदवच्छेदे शीतान्य-
त्वस्यापि विशेषणविधयावच्छेदकत्वादिति भावः । यत्तु शीतो वा-
युरिति प्रतीत्या वायुस्पर्शस्यापि यदि शीतत्वं तदा तदवच्छेदेन स्नेह-
सामानाधिकरण्याभावान्न तदादाय व्यभिचारसम्भव इत्यत आह
निःस्नेहमितीति । तत्तुच्छम् । एवं सत्युष्णञ्जलमिति प्रत्ययाज्जलस्पर्श-
स्यापि शीतान्यस्पर्शत्वसम्भवात्तदवच्छेदेन निःस्नेहत्वस्य सामा-
नाधिकरण्यासम्भवात्तदादायापि व्यभिचारस्योपन्यासायोगात्,
केवलेनेत्यादिपदसन्दर्भविरोधाच्च । ननूपाधिना विशेषणीभूयैवाव-
च्छिद्यत इति नियमः तेन विशेषणतानापन्नेनोपाधिना साध्यस-
म्बन्धो नावच्छिद्यत इत्यर्थलाभात् उपाधिभिन्नेन विशेषणतयाव-
च्छेदेपि न क्षतिः, न च साधनतावच्छेदकत्वेप्युक्तनियमसम्भवात्
प्रकृतानुपयोगः, साधनतावच्छेदकभिन्नत्वे सत्युपाधिभिन्नो यस्तदन्य-
स्यैवोपाधिपदेन विवक्षितत्वादत आह शीतान्यस्पर्शत्वेनेति ।
यद्यपि क्षित्यादौ व्यभिचारात्तस्योपाधेः शुद्धसाध्यव्यापकत्वं तथा-
प्युष्णस्पर्शजलान्यतरत्वाद्यवच्छिन्नसाध्यव्यापकत्वं द्रष्टव्यम् । न
तात्पर्य्यमिति । नन्वेवं साधनतावच्छेदकस्यानवच्छेदकत्वाप्राप्तेरुपा-
धिनेतिमूलोक्तिर्विफलेत्यत आह परन्त्विति । शुद्धस्येति । तेन
धूमवान् वन्हेरित्यादावार्द्रेन्धनजन्यवन्हित्वेन धूमसम्बन्धेऽवच्छिद्य-
माने वह्नित्वस्य प्रवेशेपि न क्षतिः । नियतम् । अवश्यम् । अवच्छेदकम् ।
साधननिष्ठसाध्यसम्बन्धितावच्छेदकम् । अत एवेति । अन्यथा यत्र
साधनतावच्छेदकातिरिक्तः साध्यसम्बन्धितावच्छेदकोऽप्रसिद्धः तत्र
सोपाधावुक्तलक्ष्यतावच्छेदकस्याव्याप्त्यापत्तेरिति भावः । स्नेह-
वत् स्पर्शादित्यादौ साध्यसम्बन्धितावच्छेदकस्यापि शीतत्वादे-
रुपाधित्वाभावादाह तद्विशेष इति । साधननिष्ठसाध्यसम्बन्धिताव-
च्छेदकविशेष इत्यर्थः । तत्र । सोपाधौ । वदन्ति । प्राभाकराः । ननु

भिमते साध्यसम्बन्धोऽवच्छिद्यते स एव तत्र साधने विशेषणमुपाधिरिति वदन्ति ।

———

अत्रावच्छेदकत्वं सामानाधिकरण्येन, तत्त्वञ्चान्यूनवृत्तित्वं व्यापकत्वमिति यावत्, तच्चाधिकरणान्तर्भावेन।तेन साध्यविशिष्टसाध-

———

शब्दवान् द्रव्यत्वादित्यादौ साधननिष्ठसाध्यसामानाधिकरण्यस्य देशविधयावच्छेदकत्वं गगनादेरप्यस्तीति तत्रातिव्याप्तिरित्यत आह अत्रेति । सामानाधिकरण्येन ।समानाधिकरणविधया नत्वधिकरणविधया । तथा च समानाधिकरणीभूय यः साधननिष्ठसाध्यसामानाधिकरण्यस्यावच्छेदकः स उपाधिः शब्दवान् द्रव्यत्वादित्यादौ च गगनादिर्न तथेति तद्व्युदास इति भावः । ननु साध्यसम्बन्धितायाः समानाधिकरणविधयावच्छेदकत्वमात्रं न स्वरूपसम्बन्धविशेषो मानाभावात् नाप्यनतिरिक्तवृत्तित्वं द्रव्यं जातेरित्यादौ घटत्वादावतिव्याप्त्यापत्तेरत आह तत्त्वं चेति । समानाधिकरणीभूयावच्छेदकत्वं चेत्यर्थः । यद्वा ननु द्रव्यं जातेरित्यादौ साध्यसमानाधिकरणीभूतस्यैव घटादेः साधननिष्ठसाध्यसम्बन्धितायां देशविधया अवच्छेदकत्वादुक्तविवक्षया अपि तद्वारणासम्भव इत्यत आह तत्त्वं चेति । ननु तदव्यापकत्वे सति तत्समानाधिकरणत्वलक्षणस्य न्यूनवृत्तित्वस्य विरहश्चेदन्यूनवृत्तित्वं तदा धूमवान् वह्नेरित्यादौ जलत्वादावतिव्याप्तिः तस्य समानाधिकरणविधया साध्यसामानाधिकरण्याव्यापकत्वेपि तत्समानाधिकरणत्वाभावादेव तन्न्यूनवृत्तिभिन्नत्वादत आह व्यापकत्वमिति । ननु साधननिष्ठसाध्यसामानाधिकरण्यस्य व्यापकत्वमुपाधिताघटकसम्बन्धेनैव वाच्यमन्यथा जलं रसवत्त्वादित्यादौ स्वरूपसम्बन्धेन पृथिवीभिन्नत्वाद्युपाधेः सम्बन्धान्तरेण साधननिष्ठसाध्यसम्बन्धित्वाव्यापकत्वादव्याप्त्यापत्तेः एवञ्च तत्रैव समवायेन स्नेहाद्युपाधावव्याप्तिः तस्य समवायेन रसावृत्तित्वात् एवं मधुरत्वजातावतिव्याप्तिश्च जलवृत्तिरसमात्रस्यैव मधुरत्वनियमादत आह तच्चेति । तत्। व्यापकत्वम् । अधिकरणेति।साधननिष्ठसाध्यसा-

नतात्रच्छेदकावच्छिन्नसाधनवत्त्वव्यापकाधिकरणताकत्वं पर्यव-
स्यति। निरुक्तविशिष्टसाधनव्यापकत्वमिति तु निष्कर्षः । इत्थञ्च

———————

मानाधिकरण्यावच्छेदकीभूताधिकरणान्तर्भावेणेत्यर्थः । तथा च
प्रकृतसाधननिष्ठसाध्यसामानाधिकरण्यावच्छेदकीभूतं यदधिकर-
णं तन्निष्ठस्योपाधिताघटकसम्बन्धावच्छिन्नाभावस्याऽप्रतियोगि-
त्वमेव प्रकृते व्यापकत्वं वाच्यमिति भावः । ननु स्वमते सामाना-
धिकरण्यस्य व्याप्यवृत्तित्वादवच्छेदकतासम्बन्धेन तद्वत्त्वाप्रसि-
द्ध्या निरुक्तव्यापकत्वासम्भवः सत्तायां द्रव्ये गुणसामानाधिकर-
ण्यमित्यादिप्रतीत्या सत्तायां गुणाधिकरणीभूतद्रव्यादिवृत्तित्व-
स्यैव विषयीकरणात् । न च प्रकृतसाधननिष्ठसाध्यसामानाधिकर-
ण्यनिरूपकाधिकरणान्तर्भावेणैव व्यापकत्वं प्रवेश्यमतो नोक्तदो-
षः, तावतापि द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ स्पर्शवत्त्वा-
दावव्याप्तिप्रसङ्गात् जन्यत्वविशिष्टसत्तानिष्ठं यद्द्रव्यत्वसामाना-
धिकरण्यं तन्निरूपकत्वस्य गगनादेरपि सत्त्वादित्यस्वरसाल्लाघ-
वाच्चाह तेनेति।साध्यपदं प्रकृतसाध्यपरम्।साध्यविशिष्टेति । सा-
ध्यतावच्छेदकावच्छिन्नविशिष्टेत्यर्थः।तेन विशिष्टसत्तावाञ्जातेरित्या-
दौ द्रव्यत्वस्य केवलसत्त्वविशिष्टजातिमत्त्वाव्यापकत्वेपि न तत्रा-
व्याप्तिः । गोत्ववानश्वत्त्वादित्यादौ च न सास्नावत्त्वमुपाधिः
परमते विरोधभञ्जकस्यैव लक्ष्यत्वादतः तत्र साध्यविशिष्टसाधना-
प्रसिद्धावपि न क्षतिः । येन सम्बन्धेन साधनतावच्छेदकता तत्सम्ब
न्धेन वावच्छिन्नत्वस्य लाभार्थं साधनपदम्, तेन प्रत्यक्षः स्पर्शा-
दित्यादौ साध्यविशिष्टस्य विषयितासम्बन्धेन स्पर्शत्वाद्यवच्छि-
न्नस्य ज्ञानादेरव्यापकत्वेपि रूपवत्त्वाद्युपाधौ नाव्याप्तिः।न चाधिकर-
णतापदवैयर्थ्यम् । सम्बन्धितार्थकस्य तस्य वृत्त्यनियामकसम्ब-
न्धेनोपाधावव्याप्तिवारकत्वात् अन्यथा तत्सम्बन्धावच्छिन्नप्रति-
योगित्वाप्रसिद्ध्या तेन व्यापकत्वायोगादिति भावः । सम्बन्धमात्र-
स्यैव प्रतियोगितावच्छेदकत्वमतेनाह निरुक्तेति । प्रकृतसाध्यवि-
शिष्टप्रकृतसाधनव्यापकत्वमित्यर्थः । अत्र कालो विभुत्वादित्यादौ
महाकालनिरूपितविशेषणतया घटादेरुपाधित्वसम्पत्तये निरुक्त-

सत्ताद्येकव्यक्तिकहेतुनिष्ठद्रव्यत्वादिसामानाधिकरण्यव्यापकसामानाधिकरण्यप्रतियोगिनि घटत्वादौ नातिप्रसङ्गः, न वा द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ द्रव्यत्वविशिष्टसत्ताद्यव्यापके स्पर्शवत्त्वादावप्रसङ्गः। निःस्नेहं स्पर्शात् द्रव्यं सत्त्वादित्यादौ शीतस्पर्शान्यत्वरूपान्यत्वादेर्वारणाय तत्रेत्यादि। तत्र। साध्यविशिष्टे साधने।

———

साधनव्यापकाधिकरणताकत्वमेवोचितमन्यथा तादृशसम्बन्धेन प्रतियोगिवैयधिकरण्याद्यप्रसिद्ध्या तत्राव्याप्त्यापत्तेरिति चिन्तनीयम्। ननु साधननिष्ठसाध्यसामानाधिकरण्यस्य सामानाधिकरण्यसम्बन्धेन व्यापकत्वविवक्षयैव जलं रसवत्त्वादित्यादौ स्नेहवत्वाद्यव्याप्तेर्मधुरत्वाद्यतिव्याप्तेश्च वारणसम्भवादधिकरणान्तर्भावेण व्यापकत्वानुसरणं विफलमत आह इत्थं चेति। चोऽवधारणे।इत्थमेवेत्यर्थः तथाच द्रव्यं सत्त्वादित्यादौ घटत्वादिवारणायैव तावत्पर्य्यन्तानुसरणमिति भावः। द्रव्यं जातेरित्यादौ नानाव्यक्तिसाधनस्थले पटत्वादेरपि साधनत्वात्तन्निष्ठसाध्यसामानाधिकरण्यं प्रत्येव सामानाधिकरण्यसम्बन्धेन घटत्वस्य व्यापकत्वायोगादेकव्यक्तीत्युक्तम्। साधनतावच्छेदकावच्छिन्नेत्यस्य फलमाह न वेति। द्रव्यत्वादिविशिष्टसत्ताया आत्माद्यवच्छेदेन सत्त्वात्स्पर्शवत्त्वादेरव्यापकत्वादिति भावः। निःस्नेहं स्पर्शादित्यत्र शीतस्पर्शान्यत्वादेः साधनाव्यापकत्वविवक्षयापि वारणसम्भवादाह द्रव्यं सत्त्वादिति। शीतस्पर्शान्यत्वादेरनुपाधित्वे विरोधाभञ्जकत्वमात्रं न तन्त्रं साधनव्यापकतया व्यभिचारानुन्नायकत्वस्यापि तत्र तथात्वसम्भवादतः साध्यव्यापकत्वे सति साधनाव्यापकत्वेन व्यभिचारोन्नयनक्षमस्यापि विरोधभञ्जकत्वमात्रेण यस्यानुपाधित्वं तत्रातिप्रसङ्गमाह द्रव्यं सत्त्वादित्यादावितीत्यपि केचित्। ननु शीतस्पर्शान्यत्वमपि साधनवृत्तितया तत्र विशेषणं भवत्येवेत्यतो व्याचष्टे विशेषणमिति। व्यावर्त्तकत्वं भेदानुमापकत्वं तच्च शुद्धसत्तायां साध्याभावविशिष्टसत्ताभेदविरहेण द्रव्यं सत्त्वादित्या-

विशेषणम् । साध्याभावविशिष्टात्साधनात्सामानाधिकरण्येन व्याव-र्त्तकं साध्याभावविशिष्टनिरुक्तसाधनवदवृत्तीति यावत् । एवञ्च द्र-

---

व्यादौ गुणवत्त्वाद्युपाधावव्याप्तिमतो व्याचष्टे साध्यविशिष्टसाधन इति । विरुद्धधर्मद्वयवैशिष्ट्यावच्छिन्नयोः सत्त्वयोर्मिथो भेदस्य प्राच्यैः स्वीकारादिति भावः । भेदमात्रस्यानुमापकत्वलक्षणं व्यावर्त्तकत्वं निःस्नेहं स्पर्शादित्यत्र शीतत्वभेदानुमापकतया शीतस्पर्शान्यत्वादेरप्यक्षतमत उक्तं साध्याभावविशिष्टात्साधनादिति । तत्सामान्यादित्यर्थः । तथा च शीतस्पर्शेपि सामानाधिकरण्यसम्बन्धेन शीतस्पर्शान्यत्वादेः सत्त्वात् तत्र च निःस्नेहत्वाभावविशिष्टसाधनभेदविरहादिति भावः । तत्र साधनसामान्यव्यावर्त्तकत्वमसम्भवि यत्किञ्चित्साधनव्यावर्त्तकत्वं तु निःस्नेहं स्पर्शादित्यादौ हिमान्यत्वेऽतिप्रसक्तं तस्यापि सामानाधिकरण्यसम्बन्धेन हिमस्पर्शस्यैव भेदानुमापकत्वादतो विशिष्टान्तम् । साध्याभावविशिष्टसामान्याद्व्यावर्त्तकत्वोक्ताविदं गुरु रूपादित्यत्र तेजोन्यत्वादावव्याप्तिः तेजोन्यत्वसामान्याधिकरण्यस्य वायुत्वादर्गुरुत्वाभावविशिष्टभिन्नत्वविरहेण तस्य निरुक्तव्यावर्त्तकत्वाभावादतः साधनादित्युक्तम् । उपाधिताघटकसम्बन्धेन व्यावर्त्तकत्वोक्तौ जन्यं द्रव्यादित्यत्र समवेतत्वोपाधावव्याप्तिः द्व्यणुके व्यभिचारेण स्वरूपसम्बन्धेन समवेतत्वस्य जन्यत्वाभावविशिष्टद्रव्यभेदानुमापकत्वाभावात्, एवं निस्नेहं स्पर्शादित्यत्र शीतस्पर्शान्यत्वेतिप्रसङ्गश्च स्यात् शीतस्पर्शान्यत्वावच्छेदेनैव निःस्नेहत्वाभावविशिष्टस्पर्शभेदस्य सत्त्वादत उक्तं सामानाधिकरण्येनेति । ननु साध्याभावविशिष्टसाधनभेदस्यानुमापकत्वं न तत्फलोपधायकत्वं तदनुपधायकोपाधावव्याप्तेः निःस्नेहं स्पर्शादित्यादौ व्याप्तिभ्रमेण तदनुमापके शीतान्यत्वादावतिप्रसङ्गाच्च किन्तु साध्याभावविशिष्टसाधनभेदस्य व्याप्यत्वपर्यवसितं तत्स्वरूपयोग्यत्वमेव तद्वाच्यं तथा च द्रव्यं सत्त्वादित्यादौ गुणकर्मान्यत्वोपाधावव्याप्तिः तत्समानाधिकरणस्यापि सत्त्वस्य द्रव्यत्वाभावविशिष्टसत्त्वाभिन्नतयोक्तव्याप्तिविरहात् एवं साध्यविशिष्टसाधनार्थकस्य तत्रेत्यस्य वैयर्थ्यम-

व्यं सत्त्वादित्यत्र सत्ताया अभेदेऽपि गुणकर्म्मान्यत्वे नाव्याप्तिः, नापि द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यत्र गुणान्यत्वादौ। इत्थञ्च साधनतावच्छेदकस्यानवच्छेदकत्वद्योतनाय परं तद्भिन्नत्वमुक्तं न तु विवक्षितमेव तत्। वैयर्थ्यात् इदं दधि जन्यं वा दध्न इत्यादौ दधित्वाद्यव्याप्तेश्च । यद्वा प्रकृतसाधनतावच्छेदकानवच्छेद्यप्रकृतसाधननिष्ठसाध्यसम्बन्धितावच्छेदकत्वं पूर्वदलार्थः । अनवच्छे-

---

पीत्यत आह साध्याभावविशिष्टेत्यादि । अत्र यद्यपि साध्याभावविशिष्टसाधनवति वृत्तिरुपाधितावटकसम्बन्धेनैव ग्राह्या अन्यथा साध्यशून्यमहाकालवृत्तितया क्षितिर्द्रव्यत्वादित्यादौ गन्धवत्त्वाद्युपाधावव्याप्तेः तथा च सत्तावान्मेयत्वादित्यादौ सत्ताशून्यप्रमेये जात्यादौ समवायेन वृत्त्यप्रसिद्ध्या जातिमत्त्वाद्युपाधावव्याप्तिः, एवं जातेरित्यादौ विशिष्टसत्त्वेपि सत्तानतिरेकिणस्तस्य गुणादावपि वृत्तेः । तथापि साध्याभावविशिष्टप्रकृतसाधनाधिकरणावृत्तित्वावच्छिन्नाधिकरणतासामान्यकधर्मवत्त्वं विवक्षितम्।अत्र च पूर्वदलनिविष्टं साध्यविशिष्टसाधनव्यापकत्वमपि तादृशधर्मेणैव ग्राह्यं तेन द्रव्यत्वादिना साध्यविशिष्टसाधनव्यापकस्यापि घटादेर्गुणवत् सत्त्वादित्यादौ घटत्वादिना नोपाधित्वमिति ध्येयम् ।साधनतावच्छेदकावच्छिन्नेत्यस्य फलमाह न वेति । अन्यथा द्रव्यत्वाभावविशिष्टसत्त्ववत्कर्मवृत्तित्वेन तत्राव्याप्तिः स्यात् इति भावः । ननूक्तक्रमेणैव सामञ्जस्ये साधनतावच्छेदकभिन्नेनेत्यस्य वैफल्यमत आह इत्थं चेति । निष्फलत्वमुक्त्वा विरुद्धफलकत्वमप्याह इदमित्यादिना । ननु दधित्वस्य साध्यत्वे साध्यं च नोपाधिरिति प्राचीनप्रवादात्तस्यानुपाधित्वेपि न क्षतिरतः साध्यान्तरमाह जन्यं वेति । दधित्वादीति । दधित्वाद्यभावविशिष्टदधिमत्परमाणुवृत्तित्वाभावेन तस्यापि लक्ष्यत्वादिति भावः । साधनतावच्छेदकभिन्नेनेत्यस्य भिन्नान्तं सार्थकीकृत्य कल्पान्तरमाह यद्वेति । साधनतावच्छेद्यानवच्छेद्येति । तथा च असति बाधके सर्ववाक्यानामवधारणपरत्वमिति न्यायेन भिन्नेनेति सावधारणमिति भावः । द्रव्यं

दकत्वञ्च तस्य साध्याभावविशिष्टसाधनवृत्तितया तद्विशिष्टसाधनस्य साध्याभाववदवृत्तित्वेन साध्याभाववतस्तद्विशिष्टसाधनवत्त्वेनेति यावत्। एतेन धूमवान् मेयवत इत्यादौ मेयानवच्छेद्यसाध्यसम्बन्धाप्रसिद्धिः गुणवत् गुणकर्म्मान्यत्वे सति जातिमत्त्वा-

---

गुणकर्मान्यत्वे सति सत्त्वादित्यादौ गुणवत्त्वादावतिव्याप्तिवारणाय प्रथमं प्रकृत पदम्। द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ स्पर्शवत्त्वादावव्याप्तिवारणाय द्वितीयं प्रकृतपदम्। ननु साध्यसम्बन्धितायाः साधनतावच्छेदकधर्मानवच्छेद्यत्वं स्वानवच्छेदकीभूतसाधनतावच्छेदकधर्मकत्वं तत्रानवच्छेदकत्वं यद्यतिरिक्तवृत्तित्वं तदा द्रव्यं सत्त्वादित्यादौ गुणवत्त्वाद्युपाधावव्याप्तिरत आह अनवच्छेदकत्वं चेति। तस्य। साधनतावच्छेदकस्य। वृत्तितयेति। अभेदे तृतीया एवमग्रेपि। ननु द्रव्यं विशिष्टसत्त्वादित्यत्र सद्धेतौ गुणवत्त्वेऽतिव्याप्तिः द्रव्यत्वाभावविशिष्टायामपि सत्तायां विशिष्टसत्तात्वस्य वृत्तेरत आह तद्विशिष्टसाधनस्येति। प्रकृतसाधनतावच्छेदकविशिष्टसाधनस्येत्यर्थः। षष्ठ्यर्थो निष्ठत्वं तथा च साध्याभाववदवृत्तितावच्छेदकीभूतसाधनतावच्छेदकधर्मावच्छिन्ननिष्ठसाध्यसम्बन्धितावच्छेदकत्वं फलितमतो विशिष्टसत्तात्वस्य द्रव्यत्वाभाववदवृत्तित्वानवच्छेदकत्वादेव नोक्तातिप्रसङ्ग इति भावः। स्वमते विशिष्टनिरूपिताधेयत्वस्यातिरिक्तस्याभावात्तद्दोषतादवस्थ्यमत आह साध्याभाववत इति। तथा च साध्याभाववन्निष्ठस्वावच्छिन्नाधिकरणताकहेतुतावच्छेदकधर्मावच्छिन्नसाधननिष्ठसाध्यसम्बन्धितावच्छेदकत्वं फलितार्थः। ननु स्वरूपसम्बन्धरूपस्यैव साधनतावच्छेदकावच्छेद्यत्वस्याभावः कथं न निविष्टः तावतापि द्रव्यं सत्त्वादित्यादौ गुणवत्त्वाद्युपाधेः संग्रहसम्भवादत आह एतेनेति। निरस्तमित्यन्वयः। अप्रसिद्धिरिति। सम्बन्धितामात्रस्यैव यत् किञ्चित्प्रमेयावच्छेद्यत्वात्। तथा च तत्रार्द्रेन्धनप्रभववह्न्याद्युपाधावव्याप्तिरिति भावः। न च स्वानवच्छेदकीभूतसाधनतावच्छेदकधर्मावच्छिन्नसाधननिष्ठायाः साध्यसम्बन्धिताया

दित्वादौ जातित्वघटकनित्यत्वादेर्वैयर्थ्येन विशिष्टस्यानवच्छेदक-तया गुणकर्मान्यत्वादेरुपाधितापत्तिश्चेति निरस्तम्। अवच्छेद-कत्वञ्च सामानाधिकरण्येन। तथा च साध्यविशिष्टस्य साध्यस-म्बन्धितानवच्छेदकसाधनतावच्छेदकावच्छिन्नसाधनस्य व्यापक-त्वमर्थः पर्य्यवस्यति। उपदर्शितशीतस्पर्शान्यत्वादिवारणाय तत्रे-त्यादि। तत्र। साधनतावच्छेदकविशिष्टे साधने। विशेषणं सा-

———

अवच्छेदकत्वं विवक्षितं तथा च वह्नित्वादिप्रमेयस्यैव धूमसम्बन्धि-तानवच्छेदकत्वप्रसिद्ध्या नाऽव्याप्तिरिति वाच्यम्। इदं जन्यं रूपमह-त्त्वोभयवतः इत्यादौ तादात्म्येन हेतुतायां द्रव्यत्वादावतिव्या-प्त्यापत्तेः। ननु येन रूपेण यत् साधनतावच्छेदकं तद्रूपविशिष्टानव-च्छेद्यत्वमेव क्वचिद्वाच्यं अतः प्रमेयत्वविशिष्टानवच्छेद्यत्वं प्रसिद्ध-मेवेत्यत आह गुणवदित्यादि। नित्यत्वादेरित्यादिनाऽनेकव्यक्तेः परिग्र-हः। गुणाद्यन्यत्वविशिष्टसमवेतत्वस्यैव लाघवेन साध्यसम्बन्धि-तावच्छेदकत्वादिति भावः। अत्रापि प्रकृतसाधननिष्ठसाध्यसम्ब-न्धिताया अवच्छेदकत्वं न स्वरूपसम्बन्धविशेषो मानाभावात् किं त्वन्यूनवृत्तित्वं तच्च साधनावृत्तीनामुपाधीनां साक्षादसम्भवी-ति पूर्ववदेव ग्राह्यमित्याशयेनाह अवच्छेदकत्वं च सामाना-धिकरण्येनेति। ननु द्रव्यं सत्त्वादित्यादौ घटत्वादेरुपाधितावारणार्थ-मवश्यमधिकरणान्तर्भावेनैव व्यापकत्वं निवेश्यं तच्च सामानाधिक-रण्यस्य व्याप्यवृत्तितायामप्रसिद्धमत आह तथेति दर्शितेति। निःस्नेहं स्पर्शादित्यादिस्थलीयेत्यर्थः। साध्याशून्याद्यावृत्त्यौपयिकं साध्या-भाववदवृत्तित्वाभावानुमापकम्। प्रकृतसाधने यत्समानाधिकणत्व-हेतुना साध्याभाववदवृत्तित्वाभावोनुमातुं शक्यत इति यावत्। तथा च शीतस्पर्शान्यत्वसामानाधिकरण्यावच्छेदेन स्नेहवदवृत्तित्वाभा-वविरहान्न तत्रातिप्रसङ्ग इति भावः। ननु साध्याभावसामा-नाधिकरण्यवतो न तदभाववत्त्वं प्रतीतेरन्यथोपपादितत्वात् त-था च द्रव्यं सत्त्वादित्यादौ गुणवत्त्वाद्युपाधावव्याप्तिरत आह

ध्यशून्याद्व्याप्त्यौपयिकम्। यत्सामानाधिकरण्यविशिष्टप्रकृतसाधनवत्त्वं साध्याभाववति न वर्त्तत इति यावत्। साध्याभावविशिष्टप्रकृतसाधनाधिकरणसामान्यात् साध्यविशिष्टप्रकृतसाधनाधिकरणसामान्यस्य व्यावर्त्तकमिति समुदायार्थनिष्कर्ष इत्याहुः। केचित्तु विशेषणं सामानाधिकरण्यं तथा च सामानाधिकरण्यप्रत्यासत्त्या येनावच्छिद्यते अवच्छेदकीभूतसामानाधिकरण्यप्रतियोगीति यावत्। अवच्छेदकत्वञ्चेदमन्यूनानतिरिक्तवृत्तित्वं गुरोरप्युपाधिसामानाधिकरण्यस्याक्षतमेव। यद्यपि प्रत्यक्ष उद्भू-

---

यत्सामानाधिकरण्येत्यादि। दलद्वयनिष्कृष्टार्थमाह साध्याभावविशिष्टेत्यादि। व्यावर्त्तकम्। व्यावृत्त्यनुकूलव्याप्तिपक्षधर्मताविशिष्टम्। तथा च साध्याभावविशिष्टप्रकृतसाधनवत्सामान्यभेदव्याप्यत्वे सति साध्यविशिष्टप्रकृतसाधनवत्सामान्यवृत्तित्वं पर्य्यवसितार्थः। द्रव्यं सत्त्वादित्यादौ साध्याभावविशिष्टसाधनवतो रूपाद्भेदकस्य रूपान्यत्वादेः साध्यविशिष्टसाधनवत्सकलावृत्तिघटत्वादेश्च वारणाय सामान्यद्वयम्। यद्यपि साध्यविशिष्टसाधनवत्सामान्यवृत्तित्वं तादृशसाधनव्यापकत्वपर्य्यवसितमन्यस्य दुर्वचत्वात्, एवं साध्याभावविशिष्टसाधनवत्त्वावच्छिन्नभेदव्याप्यत्वमपि साध्याभावविशिष्टसाधनवदवृत्तित्वमेव, तद्वदन्यावृत्तित्वलक्षणव्याप्तेस्तत्रैव विश्रामात् तथा च पूर्वकल्पादभेदः, तथापि विशेषणविशेष्यभावभेदान्न पौनरुक्त्यमित्येके। साध्याभावविशिष्टसाधनवत्त्वावच्छिन्नभेदनिष्ठस्वव्यापकताकत्वमेवात्र तादृशभेदव्याप्यत्वमतः पूर्वकल्पाद्भेद इत्यन्ये। सार्वभौममत आह केचित्त्विति। सामानाधिकरण्यस्य सम्बन्धत्वे वृत्त्यनियामकतयावच्छेदकताप्रविष्टव्यापकतावच्छेदकत्वे वा प्रमाणाभावादाह अवच्छेदकीभूतेति। नन्वत्रावच्छेदकत्वं यदि स्वरूपसम्बन्धस्तदा आर्द्रेन्धनप्रभववह्नित्वमेव तथा लाघवात् न तु तत्सामानाधिकरण्यमित्यव्याप्तिरत आह अवच्छेदकत्वं चात्रेति। रूपमात्रस्य हेतुत्वे प्रत्यक्ष-

तद्रूपवत्त्वादित्यत्र महान् अनित्यद्रव्यत्वादित्यत्र महत्त्वस्यानित्य-द्रव्यसमवेतत्वस्य च वक्ष्यमाणलक्षणाक्रान्तस्योपाधेः सामानाधि-करण्यं साध्यसामानाधिकरण्यान्यूनातिरिक्तवृत्ति । तथापि हेतु-निष्ठसाध्यसामानाधिकरण्यस्य हेतुनिष्ठं यत् सामानाधिकरण्यम-न्यूनानतिरिक्तवृत्ति तत्त्वं विवक्षितम् । सत्त्वनिष्ठद्रव्यत्वसामाना-धिकरण्यस्य च तन्निष्ठकर्मान्यत्वसामानाधिकरण्यमतिरिक्तवृत्ति

———

त्वाभावविशिष्टरूपवति पिशाचादौ महत्त्वस्य वर्त्तमानत्वाद्वक्ष्यमा-णलक्षणाक्रान्तता न स्यादत उद्भूतपदम् । ननु प्रत्यक्ष उद्भूतरूपा-दित्यत्रापि महत्त्वं नोपाधिः सामग्र्यविरहेणाऽप्रत्यक्षे घटादावुद्भूत-रूपवति वर्त्तमानतया वक्ष्यमाणलक्षणाक्रान्तत्वादतस्तत्संग्रहो न-दोपायेत्यत आह महानित्यादि । अत्रापि द्रव्यत्वमात्रस्य हेतुत्वे गग-नादौ साध्याविशिष्टसाधनाव्यापकत्वादनित्यसमवेतत्वस्य वक्ष्य-माणलक्षणाक्रान्तता न स्यादित्यनित्यपदम् । वक्ष्यमाणेति । साध्य-विशिष्टसाधनव्यापकत्वे सति साध्याभावविशिष्टसाधनवद्वृत्ति-त्वरूपेत्यर्थः । न्यूनातिरिक्तेति । प्रथमे प्रत्यक्षत्वसमानाधिकरणे रूप-त्वादौ महत्त्वस्य महत्त्वसमानाधिकरणे च पिशाचत्वादौ प्रत्य-क्षत्वस्य सामानाधिकरण्यविरहात्, द्वितीयेऽपि महत्त्वसमानाधिक-रणे शब्दादावनित्यसमवेतत्वस्याऽनित्यसमवेतत्वसामानाधिकरणे च रूपत्वादौ महत्त्वस्य सामानाधिकरण्याभावादिति भावः । हेतुनिष्ठे-ति । हेतुतावच्छेदकावच्छिन्ननिष्ठेत्यर्थः । तेन महाननित्यद्रव्य-त्वादित्यादौ द्रव्यत्वनिष्ठमहत्त्वसामानाधिकरण्यस्य गगनाद्यवच्छे-देन सत्त्वेऽप्यनित्यसमवेतत्वे नाव्याप्तिः । वस्तुतः सार्वभौममते विशि-ष्टस्यानतिरिक्तत्वात् यथाश्रुतमेव साधु, एवं मन्मतेऽपि । तेन द्रव्यं कर्मा-न्यत्वे सति सत्त्वादित्यादौ सत्त्वनिष्ठगुणान्यत्वसामानाधिकरण्यस्य कर्मावच्छेदेन सत्त्वेऽपि गुणान्यत्वादौ नाव्याप्तिरिति ध्येयम् । अत्र अन्यूनानतिरिक्तवृत्तित्वं न स्वरूपसम्बन्धेन ग्राह्यं द्रव्यं सत्त्वा-दित्यत्र घटत्वादावतिप्रसङ्गात् किन्त्ववच्छेदकतासम्बन्धेनेत्यास्र-

गुणे तदभावावच्छेदकावच्छिन्नवृत्तिकत्वात् । पृथिवीत्वादिसामा-
नाधिकरण्यन्तु न्यूनवृत्ति, जलादौ तदवच्छेदकावच्छिन्नवृत्त्यभाव-
प्रतियोगित्वात् । साध्यव्यापकानां सद्धेतावुपाधित्ववारणाय सा-
धनतावच्छेदकभिन्नेनेति तदनवच्छेद्यार्थकमित्याहुः ।

ननु सर्वत्र सोपाधौ सर्वेणोपाधिना साध्यसम्बन्धोऽवच्छिद्यत

———

येन तयोरव्याप्तिमाह सत्त्वनिष्ठेत्यादिना । अतिरिक्तवृत्तीति । त-
था च द्रव्यं सत्त्वादित्यत्र कर्मान्यत्वादेर्वारणार्थमनतिरिक्तपद-
मिति भावः । पृथिवीत्वसामानाधिकरण्यमित्यस्य सत्तानिष्ठेत्यादिः ।
न्यूनवृत्तीति । सत्त्वनिष्ठद्रव्यत्वसामानाधिकरण्यस्येत्यनुषज्यते ।
तथा च द्रव्यं सत्त्वादित्यत्रैव पृथिवीत्वादेर्वारणार्थमन्यूनवृत्तिपद-
मिति भावः । तदवच्छेदकेति । सत्त्वनिष्ठद्रव्यत्वसामानाधि-
करण्यावच्छेदकेत्यर्थः । सद्धेतौ वह्निमान् धूमादित्यादौ । द्रव्यत्वादे-
रपि साधनतावच्छेदकीभूतधूमत्वादिभिन्नत्वात् यथाश्रुतेन वार-
णायोगादाह तदनवच्छेद्येति । प्रकृतसाधनतावच्छेदकानव-
च्छेद्येत्यर्थः । अत्रापि साधनतावच्छेदकस्य साध्यानधिकरणावृत्ति-
त्वावच्छिन्नाधिकरणताकत्वे तात्पर्य्यन्तेन धूमवान् प्रमेयवत इत्या-
दौ प्रमेयानवच्छेद्यत्वाप्रसिद्धावपि न क्षतिः । अत्र सामानाधिकर-
ण्यस्य व्याप्यवृत्तित्वादवच्छेदकतासम्बन्धेन तद्वत्त्वाप्रसिद्ध्या लक्ष-
णासम्भव इत्यस्वरसः केचिदित्युक्त्या सूचितः ।

साध्येति । साध्यस्य सम्बन्धो यत्रेति व्युत्पत्त्या साध्यविशिष्टसाधना-
श्रय अवच्छिद्यते । व्यवच्छिद्यते साध्याभावविशिष्टसाधनाश्रयाद्व्याव
र्त्यत इत्यर्थः । यथाश्रुते साध्यविशिष्टसाधनव्यापकत्वरूपस्य प्रागुक्तसा-
ध्यसम्बन्धितावच्छेदकत्वस्योद्भूतरूपादावपि सत्त्वेनाग्रिमग्रन्थासङ्ग-
त्यतिप्रसङ्गात् । अन्यूनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितसार्व-
भौमलक्षणानुसारेणेयमाशङ्केत्यप्याहुः । वस्तुतो गुरूणां मते वायोरपि
प्रत्यक्षत्वादुद्भूतरूपस्य तत्रैव साध्यविशिष्टसाधनाव्यापकत्वा-
त्तन्मतानुसारेणैवेयमनवच्छेदकत्वशङ्केति युक्तमुत्पश्यामः । तथा-
त्वासम्भवादिति । प्रत्यक्षत्वाभावविशिष्टमूर्त्तत्ववत्परमाणुवृत्तित्वे-

अत एव च साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवम् । व्यभिचारिणि साधने एकत्र साध्यतदभावयोर्विरोधेनावच्छेदकभेदं विना तदुभयसम्बन्धाभावादवश्यं साध्यसम्बन्धितावच्छेदकमस्ति । तदेव च साधनावच्छिन्नसाध्यव्यापकं साधनाव्यापकं तत्रोपाधिः ।

---

इति न नियमः अयं प्रत्यक्षो मूर्त्तत्वादित्यादावुद्भूतरूपवत्त्वादेः तदसम्भवादित्यत आह अत एव च तत्रेति । यत एवोद्भूतरूपवत्त्वादेर्न तथात्वसम्भवः अत एव तत्र तादृशानियमवादिमते इदं लक्षणमिति । साधनाव्यापकत्वमिह साध्याभावविशिष्टसाधनव्यापकीभूताभावप्रतियोगित्वं तादृशसाधनासामानाधिकरण्यमिह पर्य्यवसितम्, तेनोपदर्शितोद्भूतरूपवत्त्वव्युदासः । अथ प्रत्यक्षो द्रव्यत्वादित्यादौ घटत्वादावतिव्याप्तिः । साध्यव्यापकत्वेन विशेषणे च स श्यामो मित्रातनयत्वादित्यादौ शाकपाकजत्वादावव्याप्तिरत उक्तं साधनावच्छिन्नेत्यादि । साध्याभावसम्बन्धिनि विरु-

---

न साध्याभावविशिष्टसाधनवद्व्यावर्त्तकत्वासम्भवादित्यर्थः । तत्र । उपाधौ । तादृशेति । साध्याभावसम्बन्धिनि विरुद्धस्य साध्यसम्बन्धस्यावच्छेदकीभूयोपपादक एवोपाधिरिति मत इत्यर्थः । इदं लक्षणमिति । अन्यथा तस्य लक्ष्यत्वे तल्लक्षणस्याव्याप्त्यापत्तेरिति भावः । उद्भूतरूपस्यापि यथाश्रुतलक्षणसत्त्वेन वारणायोगात् द्रव्यं सत्त्वादौ रूपान्यत्वादावतिप्रसङ्गाच्चाह साधनाव्यापकत्वमिति । द्वित्वाद्यवच्छिन्नतादृशाभावमादायातिव्याप्तितादवस्थ्यादाह । तादृशेति । साध्याभावविशिष्टसाधनेत्यर्थः । अत्रापि सा-

अत एव व्यभिचारे चावश्यमुपाधिरिति सङ्गच्छते । अन्यथा व्यभिचारादेव तत्रागमकत्वेन व्यभिचारित्वेन न तदनुमानमप्रयोजकत्वात् ।

---

द्धस्य साध्यसम्बन्धस्यावच्छेदभेदं विनानुपपद्यमानस्यावच्छेदकीभूयोपपादनमुपाधिफलं तदसमर्थानाञ्चोपदर्शितोद्भूतरूपवत्त्वादीनां नोपाधिभावः सम्भवतीत्याह व्यभिचारिणीति । व्यभिचारः सपक्षविपक्षवृत्तित्वम् ।

अथ विपक्षगामित्वरूपव्यभिचारोन्नयनमेवोपाधिफलं तच्चोद्भूतरूपादीनामप्यस्तीत्यत आह अत एवेति । यत एव साध्यसम्बन्धितावच्छेदकं रूपं व्याप्तिः, सोपाधौ तु स्वाभाविकं हेतुतावच्छेदकं न साध्यसम्बन्धितावच्छेदकम् ।

---

ध्याभावविशिष्टसाधनवदवृत्तिस्वावच्छिन्नाधिकरणताकधर्मवत्त्वे तात्पर्यं तेन जातिमान् मेयत्वादित्यत्र सत्तायां द्रव्यं सत्त्वादित्यत्र च विशिष्टसत्तायां प्रागुक्तरीत्या नाव्याप्तिः । केचित्तु न चेयं गौरश्वत्वात् इत्यादौ साधननिष्ठसाध्यसम्बन्धित्वाप्रसिध्या साक्षात्त्वाद्युपाधावव्याप्तिरत उक्तं मूलेऽत एवेति । विरुद्धस्थले साक्षात्त्वादेरलक्ष्यत्वादेवेत्यर्थः । अन्यथा साधनावच्छिन्नसाध्याप्रसिद्ध्या तेषां लक्षणमपि तत्राव्यापकं स्यादिति भाव इत्याहुः । ननूद्भूतरूपवत्त्वादेरप्युपाधिफलोपधायकत्वेनोपाधित्वाल्लक्षणमपि तेषां दुष्टमेव भविष्यतीत्यतस्तेषामुपाधिफलोपधायकत्वमेव निरस्यन्नाह साध्याभावसम्बन्धिनीत्यादिना । तदसमर्थानाम् । अवच्छेदकीभूय साध्यसम्बन्धोपपादनासमर्थानाम् । ननु व्यभिचारिण्यवश्यं साध्यसम्बन्धितावच्छेदकमस्तीत्यसङ्गतं विरुद्धस्थले तदभावादतो व्याचष्टे व्यभिचार इति ।

अत एवेतीति । तथा च सपक्षविपक्षवृत्तित्वलक्षणव्यभि-

अत एव च तस्य साध्यसम्बन्धितावच्छेदकरूप-लक्षणा व्याप्तिः साधनताभिमते चकास्तीति स्फटिके जवाकुसुमवदुपाधिरसावुच्यते। लक्षणन्तु साध्यसाधन-सम्बन्धव्यापकत्वे सति साधनाव्यापकत्वम् । विषम-व्याप्तस्तु नोपाधिपदवाच्यः, प्रवृत्तिनिमित्ताभावात् । दूषकता च तस्य व्यभिचारोन्नायकतया। न च व्यभि-चारोन्नायकत्वमेवोपाधित्वम्। अप्रयोजकसाध्यव्याप-कव्यभिचारिणोप्युपाधित्वापत्तेरिति ॥

---

यत एव स्वसमीपवर्त्तिनि स्वसमानाधिकरणे व्यभिचारिणि हेतौ स्वनिष्ठसाध्यसम्बन्धितावच्छेदकरूपलक्षणव्याप्तिसंक्राम-कतया साध्यव्याप्यस्यैवोपाधित्वमाचार्य्यैरनुमन्यत इत्याह अत-एवेति। साध्यन्यूनवृत्तावुपाधिव्यवहारं दूषणौपयिकरूपस्याव-

---

च्छारस्यैकत्र विरोधात्तदुपपादनार्थमेव व्यभिचारे चावश्यमुपाधि-रिति ग्रन्थेनोपाध्युपन्यास इति भावः। स्वाभाविकम्। शुद्धम्। तेन धूमवान् वह्निरित्यादावार्द्रेन्धनजन्यत्वविशिष्टस्य वह्नित्वस्यावच्छेद-कत्वेपि न क्षतिः ।

उपाधिपदान्तर्गतस्योपशब्दस्यार्थमाह स्वसमीपेति । जात्युपा-धेः सामीप्यासम्भवादाह स्वसमानाधिकरण इति। नन्वेवमाचार्य्यम-तेपि साधनासमानाधिकरणस्योपाधित्वं न स्यादतः फलितार्थमाह व्यभिचारिणीति । विपक्षगामिनीत्यर्थः। संक्रामकतया। भ्रमानु-कूलतया । क्वचित्प्रसिद्धस्यैवान्यत्रारोपादिति भावः । यद्यपि स्वनिष्ठव्याप्त्यन्तरसंक्रामकतयाप्याचार्य्यमते साध्यसमव्याप्तस्यो-पाधित्वसम्भवादत एवेत्यत्रैतस्य नोपोद्बलकत्वम् । न च

वश्यं वाच्यतयोपाधिपदस्य योगरूढित्वव्यवस्थापनेन निराकुरुते लक्षणन्त्विति । लक्षणं दूषणौपयिकं रूपम् । साध्येति । अत्र साध्यव्यापकमात्रं विवक्षितं तावतैव साधनवृत्तितद्व्यतिरेकेण साध्यव्यतिरेकानुमानसम्भवात्, साधनवति व्यापकनिवृत्त्या साध्यसाधनसम्बन्धनिवृत्तिसिद्धावर्थात्साध्यनिवृत्तिः सिद्धतीति प्रकारान्तरप्रदर्शनाय परं तथाविधोक्तिः । रूढ्या न्यूनवृत्तावुपाधित्वव्यवहारं निरस्य योगेनाधिकवृत्तौ तन्निरस्यति विषमेति । प्रवृत्तिनिमित्तं यौगिकम् । व्यभिचारोन्नायकत्वमेवेत्येवकारेण



व्याप्त्यन्तरस्य विशेषणसत्त्वसाधनतावच्छेदकघटितत्वात्तत्संक्रामकतयोपाधित्वे सद्धेतावप्युपाधिलाभः स्यादतः स्वरूपसम्बन्धरूपसाध्यसम्बन्धितावच्छेदकत्वस्य सद्धेतुतावच्छेदके असम्भवात्तादृशव्याप्तिसंक्रामकत्वमेवोपाधित्वमिति वाच्यम् । उपाधिपदान्तर्गतोपशब्दलब्धव्यभिचारिणीत्यत एव सद्धेतोर्वारणसम्भवात् । तथापि व्याप्त्यन्तरस्य साधनतावच्छेदकभेदेन नानात्वात्साध्यवदन्यावृत्तित्वस्य च केवलान्वयिन्यभावात् सर्वानुगतं लघु च साध्यसम्बन्धितावच्छेदकरूपवत्त्वमेव व्याप्तिरतस्तत्संक्रामकतयैवोपाधित्वं युक्तमिति भावः । दूषणौपयिकरूपस्य वाच्यतयेति । उपाधिपदवाच्यतयेत्यर्थः । साध्याधिकदेशवृत्तावुपाधिव्यवहारस्याचार्य्यमते विरहादुक्तलक्षणस्य व्यवहारौपयिकत्वासम्भवात् पूरयति दूषणौपयिकमिति । यथाश्रुतस्य गोत्ववानश्वत्वादित्यादौ सास्नावत्त्वाद्यव्याप्तेराह अत्रेति । साध्यव्यापकतामात्रस्य दूषणौपयिकत्वं दर्शयति तावतैवेति । तद्व्यतिरेकेण । उपाधिव्यतिरेकेण । सम्भवादिति । तथैव व्यभिचारधीसम्पत्तेरिति भावः । नन्वेवं स्वायत्ते शब्दे किमित्यन्यथाभिलाप इत्यत आह साधनवतीति । तथाविधेति । साध्यसाधनसम्बन्धव्यापकेत्युक्तिरित्यर्थः । तं उपाधिव्यवहारम् । साध्यव्यापकतारूपरूढ्यर्थसत्त्वादाह । यौगिकमिति । योगानादरमिति रूढ्यर्थं-

योगार्थानादरं सूचयति । उपाधित्वम् । उपाधिपदप्रवृत्तिनिमित्तम् । उपाधिता । उपाधिपदवाच्यता । योगादरे तु लाघवात्साध्यापकतामात्रे रूढिरिति भावः ॥ इति व्याप्तिवादः समाप्तः ॥

---

मात्रानादरे योगार्थविरहादेवाप्रयोजकत्वादावतिप्रसङ्गविरहादग्रिमग्रन्थविरोधापत्तेरिति भावः । उपाधित्वमित्यस्य यदि साध्यव्यभिचारोन्नायकव्यभिचारप्रतियोगित्वमर्थस्तदान्वयायोगादाह उपाधिपदप्रवृत्तीति । एवमग्रेपि । ननु व्यभिचारोन्नायकस्याप्यप्रयोजकत्वादेः साध्यव्याप्यत्वरूपयोगार्थविरहान्नोपाधिपदवाच्यत्वमत आह योगादरे त्विति । लाघवादिति । व्यभिचारोन्नयनानुकूलव्याप्तिपक्षधर्मतारूपस्य तदुन्नायकत्वस्य गुरुत्वादिति भावः । साध्यव्यापकतामात्र इति । साधनाव्यापकत्वस्य व्यभिचारिहेतौ स्वनिष्ठव्याप्तिसंक्रामकत्वरूपयोगार्थबलादेव प्राप्तेरिति भावः ॥

इति श्रीजगदीशतर्कालङ्कारकृतामनुमानचिन्तामणिदीधितिटीकायामतएवचतुष्टयी समाप्ता ॥

इति व्याप्तिवादः समाप्तः ॥

## चिन्तामणेः व्याप्तिग्रहोपायः ।

सेयं व्याप्तिर्न भूयोदर्शनगम्या, दर्शनानां प्रत्येक-महेतुत्वात्, आशुविनाशिनां क्रमिकाणां मेलकाभावात् ।

## दीधित्याः व्याप्तिग्रहोपायः ।

व्याप्तिस्वरूपं निरूप्य परमतनिराकरणपूर्वकं स्वमतेन तद्ग्र-होपायमभिधातुं प्रथमं प्राभाकरमतमुपदर्शयति सेयमित्यादिना । द-र्शनानां प्रत्येकं वा हेतुत्वं मिलितानां वा, मिलनमपि स्वरूपतो व्यापारतो वा, आद्ये दर्शनानामिति, द्वितीये आश्विति । क्रमिका-

## जागदीश्याः व्याप्तिग्रहोपायः

तस्मात्परिशेषेण सकृद्दर्शनगम्या सेत्युपसंहारस्य न्यायमते विरोधान्नैयायिकानां सेयमित्याद्याशङ्काया असम्भवादाह प-रमतेत्यादि । नानादर्शनजन्यग्रहविषयत्वरूपस्य यथाश्रुतभूयोद-र्शनगम्यत्वस्य सकृद्दर्शनगम्यत्ववादिना गुरुणापि व्याप्तौ स्वीका-रात्तदभावसाधने बाध इत्यतः साध्यं विकल्प्य हेतुं योजयति दर्शना-नामित्यादिना । प्रत्येकं तत्तद्दर्शनत्वेन हेतुत्वमिति । साध्यघटकमि-ति शेषः । मिलितानां वेति । भूयस्त्वविशिष्टानां वेत्यर्थः । मिलन-मपि । भूयस्त्ववैशिष्ट्यमपि । स्वरूपत इति । पर्याप्त्याख्यस्वरूपसम्ब-न्धेनेत्यर्थः । व्यापारतः । व्यापारद्वारा स्वपर्याप्त्यधिकरणसंस्का-

न च तावद्दर्शनजन्यसंस्कारा इन्द्रियसहकृता व्याप्तिधी-
हेतवः, प्रत्यभिज्ञायामिन्द्रियस्य तथात्वकल्पनादिति-

———

णामपि स्थिराणामस्थिराणामपि सहोत्पन्नानां मिलनमस्तीत्युभ-
यमुपात्तम् । तृतीयमाशङ्क्य निराकुरुते न चेति । व्यापकसा-
ध्यसामानाधिकरण्यात्मिकायां व्याप्तौ साध्यसामानाधिकरण्यां-
शस्य प्रथममेव गृहीतत्वादगृहीतव्यापकत्वांशग्रहे सहचारदर्शन-
जन्यसंस्काराणां हेतुत्वं वाच्यं तच्च न सम्भवति भिन्नविषयक-

———

रूपव्यापारसम्बन्धेनेति यावत् । आद्य इति । तथा च तत्तत्सहचा-
रदर्शनत्वं न व्याप्तिग्रहजनकतावच्छेदकं तन्नियतपूर्ववर्त्तितानव-
च्छेदकत्वात् इति प्रयोगार्थः । प्रत्येकमहेतुत्वादिति मूलस्य प्रत्ये-
करूपेणानियतपूर्ववर्त्तित्वाभावार्थकत्वादिति भावः । द्वितीयत
इति । तथा च भूयोदर्शनत्वं न व्याप्तिग्रहजनकतावच्छेदकमे-
कक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वादिति प्रयोगा-
र्थः । आश्वित्यादिमूलेनाऽऽशुविनाशिक्रमिकानेकत्वावच्छेदेनैकक्षणा-
वच्छिन्नाधिकरणत्वनिरूपकत्वरूपस्य मेलकस्याभावबोधनादिति भा-
वः । स्थिराणामनेकक्षणस्थायिनां संस्कारादीनामस्थिराणां तृती-
यक्षणवृत्तिध्वंसप्रतियोगिनां यत्नादीनामुभयमिति । आशुविना-
शिक्रमिकोभयमित्यर्थः । इदमुपलक्षणम् । आशुविनाशिनोः क्रमिक-
ज्ञानयोर्निरुक्तमिलनसत्त्वाद्बहुवचनेनानेकत्वमुपात्तमित्यपि द्रष्टव्यम्।
तृतीयमिति । व्यापारद्वारामिलनमित्यर्थः । न चेतीति । व्यापा-
रत्वसम्पत्त्यर्थमेव तत्र संस्कारस्य व्याप्तिधीहेतुत्वकथनादित्याश-
यः । यद्यपि न चेत्यादिग्रन्थस्य स्वातन्त्र्येण संस्कारस्य व्याप्ति-
धीहेतुत्वपरतयैवोपपत्तौ व्यापारद्वारा मिलनं वितर्क्य तदवतारो
व्यर्थः । तथापि तद्ग्रन्थस्य भूयोदर्शनहेतुतानुपयुक्तत्वे प्रागेव निर-
स्तस्य भूयोदर्शनहेतुत्वस्य पुनः किं चेत्यादिना वितर्क्य खण्डने सन्द-
र्भविराधापत्तरुक्तक्रमेणावतारणमिति भावः । ननु व्यापकसा-

वाच्यम्।समानविषये स्मरणे प्रत्यभिज्ञाने च संस्कारो हेतुरतः कथं संस्कारेण व्याप्तिज्ञानं जन्येत। अन्यथातिप्रसङ्गः । किञ्च सम्बन्धभूयोदर्शनं भूयःसु स्थानेषु

---

त्वादित्याह समानेति । भ्रमस्त्वगृहीतभेदं ज्ञानद्वयं न तु वैशिष्ट्याव-

---

मानाधिकरण्यरूपाया व्याप्तेरपि सहचारविशेषत्वात् व्याप्तिप्रत्यक्षसमानविषयकत्वं सहचारगोचरसंस्कारस्याक्षतमेवेत्यत आह व्यापकेत्यादि । ननूपस्थितस्यापि सौरभादेः क्वचिदेव धर्मिणि उपनयानुरोधात्तद्धर्मिकतदलौकिकप्रत्यक्षं प्रति तद्धर्मिकतद्वत्तासंस्कारत्वेनैव हेतुत्वं वाच्यम्, तथा च पूर्वागृहीतशुक्त्यादौ रजतत्वसंस्काराभावात्तत्रेदं रजतमिति भ्रमो न स्यादत आह भ्रमस्त्विति। यद्यप्यपूर्वचन्दनधर्मिकायां सुरभि चन्दनमित्यादिप्रमायामपि व्यभिचारः सम्भवति । तथापि यो यत्र विशिष्य पूर्वमवगतः स एव तत्र संस्कारवशाद्यथार्थप्रत्यक्षे भासतेऽन्यत्र पुनरनुमानमिति प्राचां मते तादृशप्रमात्मकप्रत्यक्षविरहाद्भ्रमपर्यन्तानुसरणम्।यत्तु तदलौकिकप्रत्यक्षसामान्यं प्रति तद्गोचरसंस्कारस्य हेतुत्वे पूर्वानुपस्थितसंयोगस्य दण्डीति भ्रमे संसर्गविधया भानं न स्यात्तद्गोचरसंस्कारविरहादित्याशङ्क्या भ्रमस्त्वितिग्रन्थमवतारयन्ति । तन्मन्दम् । तथासति अपूर्वसंयोगसम्बन्धेन दण्डीत्यादिविशिष्टप्रमायां व्यभिचारस्य दुरुद्धरत्वापत्तेरिति ध्येयम् । [ ननु स्मृताविव प्रत्यक्षेपि समानविषय एव संस्कारस्य न हेतुत्वं रजतमिति संस्कारादेव इदं रजतमिति भ्रमःस्यात् । न च रजतत्वविषयतयैव संस्कारस्य हेतुत्वं विशिष्टज्ञानं स्वार्थसमाजादिति वाच्यम् । कुत्रचिदेव कस्यचिद्वैशिष्ट्यभानानियमाय तद्व्यक्तित्वेन हेतुत्वे विनिगमकाभावात् संस्कारस्यापि तथा हेतुत्वादत आह भ्रमस्त्विति । प्रमात्वं यत्र गृहीतं तत्र तस्यैव संस्कारहेतुतावादिनां प्राचां नय इति हृदयम्। ] ननु ज्ञानद्वयमेव भ्रम इत्यनुपपन्नं भेदाग्रहकालीनस्य शुक्तिरजतगोचरसमूहालम्बनस्य धर्मधर्मिभावानवगा-

दर्शनं भूयसां वा दर्शनं भूयांसि वा दर्शनानि न तथा, एकत्र रूपरसयोर्द्रव्यत्वघटत्वयोश्च व्याप्तिग्रहात् एकत्रैव धारावाहिके तद्धीप्रसङ्गात् भूयस्त्वस्य त्रिचतुरादित्वेनाननुगमाच्च। अपि च पार्थिवत्वलौहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात् तर्कसहकृतं तथेति चेत्तर्हि सहचारदर्शनव्यभिचारादर्शनसहकृतः स एव व्याप्तिग्राहकोऽस्तु आवश्यकत्वात् किं भूयोदर्शनेन। न च तेन विना तर्क एव नावतरति, प्रथमदर्शने व्युत्पन्नस्य तर्कसम्भवात्। न चैवमेवास्तु, तर्कस्य व्याप्तिग्रहमूलकत्वेनान-

---

गाहीति भावः।न तथा।न व्याप्तिग्राहकम्।व्यभिचारदर्शनं व्यापारतया सहकारीति व्यभिचारादर्शनसहचारदर्शनसहकृतस्तर्क एव व्याप्तिग्राहकः भूयो दर्शनन्तु क्व चित्तर्कप्रवृत्तावुपयुज्यत इति निर्गलितम्। नैयायिकमतमाशङ्क्य निराचष्टे न चैवमिति। जातमा-

---

हिनोपि तन्मते भ्रमत्वं न स्यादत आह न त्विति।तथा च वैशिष्ट्यावगाहित्वस्यैव व्यवच्छेदे नियमो न तु ज्ञानद्वयत्वेपीति। न व्याप्तिग्राहकमिति। किञ्चेत्यस्य दूषणान्तरं चेत्यर्थमनुसृत्येदम्। सम्बन्धभूयोदर्शनं च किमित्येवं प्रश्नपरत्वे तु न तथेत्यस्य न सम्बन्धभूयोदर्शनमित्यर्थो द्रष्टव्यः। ननु व्यभिचारादर्शनस्यावश्यकत्वे तेनैवान्यथासिद्धस्तर्कः कथं हेतुः स्यादत आह व्यभिचारेति। तथा च व्यापारेण व्यापारिणो नान्यथासिद्धिः व्यभिचारादर्शनस्य तर्कव्यापारत्वं तु क्षैमिकं तर्कजन्यत्वमादायैवेति भावः। ननु न चैवमित्यादिना नैय्यायिकानां भूयोदर्शनस्य व्याप्तिग्रहानुपयोगित्वस्वीकारे त्वपसिद्धान्त इत्यतो भावार्थमाह व्यभिचारेत्यादिना। ननु जातमात्रप्रवृत्तिनिवृत्त्युपयुक्तव्याप्तिग्रहस्य तर्कानपेक्षत्वेपि धूमा-

वस्थानात्। जातमात्रस्य प्रवृत्तिनिवृत्तिहेत्वनुमितिजनक-व्याप्तिज्ञानं तर्कं विनैवाऽतो नानवस्थेति चेत्तर्हि व्यभि-चारात् सोऽपि न व्याप्तिग्रहे हेतुः। न चैतद्बुद्धाववान्तर-जातिरस्ति, सामान्यप्रत्यासत्त्या सर्व्वोपसंहारादविनाभा-

---

त्रस्येति।तथा च तन्मूलको व्याप्त्यन्तरग्राहकतर्कावतार इति भावः। तर्हीति। न च व्याप्तिप्रत्यक्षं प्रति तर्को हेतुस्तत्तु स्मरणमिति न व्यभिचारावकाशः, विनानुभवं स्मरणस्यायोगात्। न च जन्मान्त-रीणः सः, जन्मान्तरेऽपि पर्य्यनुयोगतादवस्थ्यात्। अनादित्वेन च परिहारः परतो विचारयिष्यते। न चेति। मानाभावात् तर्कस्य च

---

दिव्याप्तिग्राहकतर्कमूलस्य वह्निव्यभिचारित्वादौ वह्न्यजन्यत्वादि-व्याप्तिग्रहस्य तर्कान्तरसापेक्षत्वात्तत्रानवस्थैवेत्यत आह तथा चेति। तन्मूलक इति।जातमात्रव्याप्तिग्रहाधीन एवेत्यर्थः। फलबलेन तस्यैव तर्कमूलथावद्व्याप्तिविषयकत्वकल्पनादिति भावः। तत्त्विति। जातमात्रव्याप्तिज्ञानादिकं त्वित्यर्थः। विनानुभवमिति। अनुभ-वत्वेन स्मृत्यहेतुत्वेपि स्मृतेः समानविषयकानुभवपूर्वक-त्वनियमादिति भावः। सः तर्कमूलव्याप्त्यनुभवः। पर्यनुयो-गेति। जन्मान्तरीयव्याप्त्यनुभव एव तर्कान्तरापेक्षायामनव-स्थायास्तत्रापि सत्त्वादिति भावः। यद्यपि व्याप्तिघटकप्रत्येकपदा-र्थोपस्थित्यादिसाचिव्येन शाब्द एव जन्मान्तरे तर्कमूलव्याप्त्यनु-भवः सम्भवति तस्य च प्रत्यक्षभिन्नत्वान्न तर्कान्तरसापेक्षत्वमि-त्यनवस्थाशङ्कापि न, तथापि व्याप्तेस्तादृशशाब्दबोधं प्रति यो-ग्यताज्ञानविधया व्याप्तिज्ञानान्तरापेक्षायां तदुपयुक्ततर्कमादाय प-र्यनुयोगो द्रष्टव्यः। ननु तर्कस्य व्याप्तिप्रत्यक्षहेतुत्वानुरोधेन सिद्धं तर्कमूलव्याप्त्यनुभवप्रबन्धमादायाऽनवस्था न दूषणमनादित्वादित्यत आह अनादित्वेन चेति।परत इति।यत्र स्वतःसिद्धो व्यभिचाराग्रहस्त-

वग्रहः सामान्यरूपता च सकृद्दर्शनगम्येति भूयोदर्शना-पेक्षेति चेन्न। सामान्यस्य हि प्रत्यासत्तित्वं लाघवात् न तु सामान्यतया ज्ञातस्य, तदनभ्युपगमाच्च । न च काक-तालीयत्वादिशङ्काव्युदासार्थं द्वितीयादिदर्शनापेक्षेति वा-च्यम् । द्वितीयादिदर्शनेऽपि शङ्कातादवस्थ्यात् । नन्व-नौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुः तद्देशकालतत्राव-स्थितघटादीनामुपाधित्वशङ्कानिरासः कस्य चित् साधन-व्यापकत्वज्ञानेन कस्य चित् साध्याव्यापकत्वज्ञानेन स्या-त्, तच्च भूयोदर्शनं विना नावतरतीति चेन्न। अयोग्योपा-धिव्यतिरेकस्यानुमानाधीनज्ञानत्वेनाऽनवस्थापातात्। अथ साध्यसाधनसहचरितधर्मान्तराणामुपाधित्वसंशये न व्या-प्तिग्रहः अतस्तेषामनुपाधित्वज्ञानं भूयोदर्शनाधीनसा-

---

हेतुत्वासिद्धेः। यदि चागृहीतस्याऽगृहीतपुरोवर्त्तिसंसर्गस्य वा प्रत्या-सत्तित्वेऽतिप्रसङ्गस्तदा पुरोवर्त्तिनि तद्ग्रहो मृग्यतां न तु सामा-न्यत्वेनेत्याह नन्विति। साध्याव्यापकत्वं साध्यसमानाधिकरणाभाव-

---

त्र तर्कं विनैव व्याप्तिग्रह इत्यग्रिमग्रन्थेनेत्यर्थः । तथा च व्य-भिचारात्तर्कस्य हेतुत्वासिद्धौ तदनुरुद्धमनादित्वं सुदूरपराहत-मिति भावः। हेत्वनुपन्यासन्यूनतां परिजिहीर्षुः पूरयति मानाभावा-दिति। ननु जन्यतायाः किंचिदवच्छिन्नत्वनियमात्तर्कजन्यत्वमेव व्याप्तिबुद्धौ वैजात्यसाधकं भविष्यतीत्यत आह तर्कस्य चेति । मूले न तु ज्ञातस्येत्यपहाय न तु समासान्यतया ज्ञातस्येति यदुक्तं तस्य भावार्थमाह यदि चेत्यादिना। तद्ग्रहो मृग्यतामिति । सा-

ध्याव्यापकत्वज्ञाने सतीत्येतदर्थं भूयोदर्शनापेक्षा, अत एव यावता दर्शनेन तन्निश्चयस्तावद्भूयोदर्शनं हेतुरिति न वारसंख्यानियमो न वाऽननुगमः। यद्यपि चान्यस्य साध्यव्यापकत्वसाधनव्यापकत्वसंशयो नान्यव्याप्तिग्रहप्रतिबन्धकस्तथापि तदाहितव्यभिचारसंशयः प्रतिबन्धक इति तद्विधूननमावश्यकमिति चेन्न अयोग्योपाधिसंशयाधीनव्यभिचारसंशयस्य तथाप्यनुच्छेदात् स च न भूयोदर्शनान्नाप्यनुमानादित्युक्तम्। अपि च भूयोदर्शना-

---

प्रतियोगित्वं तद्ग्रहश्च साध्याधिकरणैकव्यक्तिवृत्तितया गृह्यमाणस्य तादृशव्यक्त्यन्तरग्रहं विना न सम्भवतीति इति भूयो दर्शनापेक्षा।

---

मान्यस्य हीत्यत्र जातस्येत्यनुषङ्गेन तल्लाभादिति भावः। न तु सामान्यत्वेनेति। तद्ग्रहो मृग्यतामिति पूर्वेणान्वयः। मूलेऽनौपाधिकत्वज्ञानम्।अनौपाधिकत्वस्य निश्चयः न पुनरौपाधिकत्वज्ञानस्याभावः, तथा सति स्वरूपसत एव तस्य हेतुत्वादयोग्योपाधिव्यतिरेकज्ञानस्यानवस्थयाऽग्रे निरासस्य उन्मत्तप्रलपितत्वापत्तेः। न चैवमुपाधित्वशङ्कानिरासश्चेत्यग्रिममूलविरोधः, तस्यानौपाधिकत्वनिश्चयकारणसम्पत्तिपरत्वेनैवोपपत्तेः। अथेत्यादावनुपाधित्वज्ञानाभावः न पुनरनुपाधित्वस्य ज्ञानम्।अतो न पूर्वशङ्कायाः पौनरुक्त्यम्। अत एवेति।भूयोदर्शनस्य साध्याव्यापकत्वग्राहकत्वादेवेत्यर्थः। तन्निश्चयः। साध्याव्यापकत्वनिश्चयः। तथा च साध्यसहचरितधर्मिकसाध्याव्यापकत्वनिश्चायकत्वमेव भूयस्त्वं भूयोदर्शनहेतुतायां निविष्टमिति भावः। तद्विधूननम्। उपाधित्वशङ्काविधूननम्।ननु भूयोदर्शनस्य साध्याव्यापकत्वादिनिश्चायकत्वाभावादुक्तरूपं भूयस्त्वमसिद्धमत आह दीधितौ साध्याव्यापकत्वमित्यादि।तादृशेति।साध्यवद्व्यक्त्यन्तरेत्यर्थः।

हितसंस्कारो न वहिरिन्द्रियसहकारी तद्व्यापारं विना-
पि च सहचारादिज्ञानवतो व्याप्तिग्रहात्, नापि मनसः,
इन्द्रियादिवद्भूयोदर्शनजन्यसंस्कारस्य तज्जन्यस्मरणस्य
वा प्रमाणान्तरत्वापत्तेः तस्मात् परिशेषेण सकृद्दर्शन-

———

तदाहितः संस्कारो बहिरिन्द्रियमात्रस्य सहकारी मनसोऽपि वा,
आद्ये तद्व्यापारं विनेति। द्वितीये नापीति । परिशेषात्साध्यसाधन-
सम्बन्धग्राहकातिरिक्तानपेक्षग्रहकत्वात् । उपाध्यभावग्राहकस्यापेक्ष-

———

भूयोदर्शनेति । भूयःसु स्थानेषु दर्शनापेक्षेत्यर्थः । ननु बहिरिन्द्रि-
यव्यापारदशायामेव संस्कारस्य तत्सहकारित्वसम्भवात्तद्व्या-
पारं विनेत्यादि मूले असङ्गतमत आह बहिरिन्द्रियमात्रस्येति। ननु
संस्कारस्य मनःसहकारित्वखण्डनेपि इन्द्रियान्तरसहकारेण
व्याप्तिग्राहकत्वप्रतिक्षेपाप्राप्तिरत आह मनसोपि वेति। तथा
च नापि मनस इति मूलस्थापिशब्दव्यत्यासेन न मन-
सोऽपीत्यर्थः। इन्द्रियमात्रसहकारित्वमेव प्रतिक्षिप्तमिति भावः ।
मूले तस्मादित्यादि । यद्यपि व्याप्तिः सकृद्दर्शनगम्येति प्रतिज्ञा-
यां व्याप्तित्वस्यैकस्याभावात् व्यापकसामानाधिकरण्यस्य व्या-
प्तित्वेन पक्षत्वे बाधः परैरपि तस्याः सकृद्दर्शनगम्यत्वानुपगमात्
निरुपाधिसम्बन्धस्य व्याप्तित्वेन पक्षत्वे तु न न्यायमतव्युदासः
तस्याः सकृद्दर्शनगम्यत्वासिद्धावपि तन्मते अनुमित्युपयुक्ताया-
व्यापकसामानाधिकरण्यव्याप्तेस्तदगम्यत्वसम्भवात्, तथापि ज्ञान-
विषयतयानुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणत्वेनैवोभयव्या
प्तिसाधारणधर्मेण पक्षत्वम् । सकृद्दर्शनगम्यत्वं तु साध्य-
साधनसम्बन्धत्वव्यापकविषयिताकत्वं विषयितासम्बन्धेन तादृ-
शग्रहकत्वव्यापकत्वं वा । तेन व्यापकसामानाधिकरण्यरूपव्याप्ते-
र्व्यभिचारज्ञानाभावादिसाचिव्येनैकदर्शनग्राह्यत्वेपि न सिद्ध-

गम्या सा। तथा ह्युपाध्यभावो व्याप्तिः। अभावश्च केवला-
धिकरणं तत्कालसम्बन्धो वा स्वप्रकाशरूपं तज्ज्ञानं
वा, तच्च प्रथमदर्शनेनावगतमेव चक्षुरादिना, न चाधि-
कस्तदभावोऽस्ति। न च प्रतियोगिज्ञानमधिकरणादिज्ञा-
नजनकं येनोपाधिज्ञानं विना तन्न स्यात्। एवमुपाध्य-
भावे ज्ञाते किञ्चिन्न ज्ञातुमवशिष्यते। उपाध्यभावव्यव-
हारस्तु तद्धियमपेक्षते दीर्घत्वादिव्यवहार इवावधिज्ञानम्।
न चैवं रासभसम्बन्धतुल्यवन्हिधूमसम्बन्धज्ञानादेवानु-

———

साधनमिति ध्येयम्। भूयोदर्शनग्राह्यत्वे सति ग्राह्यत्वरूपस्य
परिशेषस्य व्याप्तौ स्वरूपासिद्धत्वादप्रसिद्धत्वाद्वा हेतुत्वासम्भवा-
द्व्याचष्टे दीधितिकारः साध्यसाधनेति। साध्यसाधनसम्बन्धग्राहक-
सापेक्षग्रहकत्वस्य घटादौ निरुक्तसकृद्दर्शनगम्यत्वव्यभिचाराद्भाव-
द्वयगर्भता। यद्यपि तादृशसम्बन्धग्राहकातिरिक्तानपेक्षयत्किञ्चिद्ग्राहके
घटादौ निरुक्तसकृद्दर्शनगम्यत्वाभावात् व्यभिचारः, तादृशातिरि-
क्तानपेक्षग्रहसामान्यकत्वोक्तावपि साध्यसाधनसम्बन्धविशिष्टद्रव्य-
त्वादौ तथात्वम्। अत एव तादृशग्राहकातिरिक्तसापेक्षग्रहकान्य-
त्वोक्तावपि न निस्तारः, तथापि साध्यसाधनसम्बन्धग्राहकत्वव्याप-
कत्वग्राहकताकत्वस्य विवक्षिततत्वाददोषः। न चोपाध्यभावात्मकव्या-
प्तेः साधनस्वरूपतया साधनग्राहकताव्यापकस्वग्राहकताकत्वमेव
सम्यक् साध्यसम्बन्धप्रवेशो व्यर्थ इति वाच्यम्। अनुमितिजनक-
तावच्छेदकतापर्याप्त्यधिकरणत्वप्रकारेण साध्यसम्बन्धिविशिष्टसा-
धनस्यैव पक्षत्वात्तद्ग्राहकत्वस्य केवलधूमादिग्राहकसन्निकर्षादौ
साधनग्राहकत्वाव्यापकत्वेन निरुक्तहेतोः स्वरूपासिद्धिप्रसङ्गादि-
ति भावः। ननु व्याप्तिग्राहकनिरूपणप्रस्तावे तथा हीत्यादिना
व्याप्तिलक्षणाभिधानमर्थान्तरग्रस्तमत आह उपाध्यभावग्राहकस्ये-

मितिः स्यादिति वाच्यम् । उपाधिस्मरणे सत्युपाधित्वव्याप्येतरसकलतदुपलम्भकसमवधाने चोपाध्यनुपलम्भसहितस्य केवलाधिकरणज्ञानस्यानुमितिहेतुत्वात् व्य-

———

णीयत्वादसिद्धिं निरस्यति तथा हीति। उपाधिस्मरण इत्यादि। नन्वेवमसन्निकृष्टादिहेतुकानुमितिर्न स्यात् उपाधियोग्यानुपलम्भविरहादत आह तद्व्यवहारेति।तथा च तद्व्यवहारस्य हेतुरेवानुमिति

———

त्यादि। साध्यसाधनसम्बन्धग्राहकातिरिक्तस्येति शेषः । मूले रासभसम्बन्धतुल्येति। सोपाधित्वज्ञानकालीनत्वेन तुल्यत्वं सम्बन्धज्ञानस्य द्रष्टव्यम् । दीधितावसन्निकृष्टादीत्यादिपदेनाऽतीन्द्रियपरिग्रहः । योग्यानुपलम्भविरहादिति । हेतोरुपाधित्वघटकतया तदसन्निकर्षदशायामुपाधित्वविशिष्टस्य यावदुपलम्भकसमवधानासम्भवादित्याशयः । न चोपाध्युपलम्भकयावत्समवधानविनाकृत एवोपाध्यनुपलम्भोऽनुमितिहेतुः, सत्यामपि साध्यसमानाधिकरणहेतुमत्त्वबुद्धावनुपाधित्वग्राहकसामग्रीविरहदशायामनुमित्यनुत्पादस्य सर्वसिद्धत्वादिति भावः । उपाध्यनुपलम्भस्य निरुपाधित्वव्यवहारहेतुत्वेऽप्युक्तशङ्कानादवस्थ्यादाह तथा चेति । इत्थं च व्यवहारहेतुरेव हेतुर्यस्या इति मध्यमपदलोपिबहुव्रीहिणाऽनुमितेर्व्यवहारहेतुहेतुकत्वादित्यर्थः । तच्चेत्यादिकं न्यायमतेन, गुरूणामसंसर्गाग्रहस्यैव व्यवहारहेतुत्वादिति मन्तव्यम्। ननूक्तास्वरसात् पूर्वकल्पपरित्यागे व्यवहारहेतुत्वाच्चेति चकारेण तस्य समुच्चयोऽनुपपन्न इत्यत आह उपाधिस्मरण इत्यादीति। तत्कारणेति । उपाध्यभावत्वप्रकारकज्ञानकारणेत्यर्थः ।तथा च तयोः प्रयोजकत्वमात्रं चकारः समुच्चिनोतीति नानुपपत्तिः। अनुमिति हेतुत्वादिति मूलेऽपि हेतुशब्दस्य प्रयोजकपरत्वादिति भावः। केचित्तु ननूपाधिस्मरणसहकृतस्य तदनुपलम्भस्यानुमितिहेतुत्वोपेक्षायामुपाधिस्मरणे सत्युपाध्यनुपलम्भादनुमितिरित्येवं गुरूणां

वहारहेतुत्वाच्च । नन्वेवं प्रथमदर्शनेन व्याप्तिनिश्चया-
द्विशेषदर्शने सति रासभादिसंशयवत् तत्संशयो न
स्यादिति चेत् । व्याप्तिज्ञानानन्तरं किं विद्यमान एवो-
पाधिर्मयोपाधित्वेन न ज्ञात इतिशङ्कया गृहीतव्याप्तावपि

---

हेतुः तच्चोपाध्यभावत्वेन ज्ञानम् । उपाधिस्मरण इत्यादि तु त-
त्कारणप्रदर्शनपरम् । अभावत्वञ्चेदमिह नास्तीति प्रतीतिसाक्षिकः
स्वरूपविशेषोऽतिरिक्तः पदार्थो वेत्यन्यदेतत् । एवञ्चोपाध्यभावत्वेन
ज्ञानेऽधिकापेक्षां न वारयाम इति भावः । व्याप्तिस्वरूपे संशया-
भाव आपद्यते निरुपाधिसम्बन्धरूपव्याप्तित्वेन वा, आद्ये इष्टाप-
त्तिः, द्वितीयमपि किमुपाधिस्मरणादिकं विना तत्समवधाने सति

---

ग्रन्थविरोध इत्यत आह उपाधिस्मरण इत्यादीति । तत्कारणेति ।
उपाध्यभावत्वप्रकारकज्ञानकारणेत्यर्थः । तथा च तत्र प्रयोजकत्वे
पञ्चमीत्याहुः । ननु भावभिन्नत्वरूपस्याभावत्वस्य गुरूणामप्रसिद्ध-
त्वादुपाध्यभावत्वप्रकारकज्ञानस्यानुमितिहेतुत्वं दुर्घटमत आह
अभावत्वं चेति । नन्वेवमुपाध्यभावविशिष्टसाध्यसहचरितत्वस्यै-
वानुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणत्वेन पक्षत्वात्तत्र हे-
तोः स्वरूपासिद्धिः तद्ग्रहे च अनुपाधित्वग्राहकस्यैवातिरिक्तस्या-
पेक्षणादत आह एवं चेति । न वारयाम इति । तथा चात्र कल्पे
अनुमितिजनकतावच्छेदकत्वेनैव पक्षत्वं न तु तत्पर्याप्त्यधिकरणत्वे-
नेति व्याप्तिस्वरूपस्य निरुक्तहेतुमत्वान्नासिद्धिः । न चैवं सिद्ध-
साधनम्,एतद्दोषस्याग्रे सामानाधिकरण्यमात्रस्य तथात्वमित्यादिना
दीधितिकृतैवोक्तत्वादिति भावः । नव्यास्तु ननूपाध्यभावत्वप्र-
कारकमेव ज्ञानं यद्यनुमितिहेतुस्तदोपाध्यभावत्वविशिष्टस्यैव सा-
ध्यसाधनसामानाधिकरण्यस्यानुमितिहेतुतावच्छेदकीभूतव्याप्तित्वा-

संशयः अतस्तत्र भूयोदर्शनेनोपाधिनिरासद्वारा व्याप्त्यभावशङ्काऽपनीयते। यद्वा ज्ञानप्रामाण्यसंशयाद्व्याप्तिसंशयः यथा घटज्ञानसामग्र्यां सत्यां घटज्ञाने सति तत्प्रामाण्यसंशयाहितस्तत्संशयो न त्वग्रिमसंशयानुरोधेन तत्र घटज्ञानमेव न वृत्तमिति कल्प्यते तथेहाप्युपाध्यभावस्य व्याप्तित्वात् तस्य च केवलाधिकरणरूपस्य प्रथमदर्शनेऽपि निश्चितत्वात् व्याप्तिग्राहकान्तरस्याभावाच्च परिशेषेण सकृद्दर्शनस्य व्याप्तिग्राहकत्वात् तन्निश्चये प्रामाण्यसंशयादेव तत्संशयः । न चैवं रासभेऽपि प्रथमं व्याप्तिपरिच्छेदःस्यादिति वाच्य-

---

वासम्बन्धग्रहे, आद्ये किं विद्यमान इतितथा च तद्ग्रहमात्रं न तु तदभावत्वेनापि ग्रह इति समानप्रकारकनिश्चयाभावात्तत्संश-

---

त्तत्र सकृद्दर्शनगम्यत्वानुमाने गुरूणां बाधः स्वरूपासिद्धिश्चेत्यत आह एवं चेति । उपाध्यभावत्वस्य प्रामाणिकत्वे चेत्यर्थः। न वारयाम इति । उपाध्यभावत्वभिन्नं प्रकारतया यदनुमितिजनकतावच्छेदकं तत्रैव सकृद्दर्शनगम्यत्वस्य साध्यत्वादिति भाव इति प्राहुः । इष्टापत्तिरिति । अधिकरणस्वरूपव्याप्तेः प्रथममेव निर्णीतत्वादिति भावः । तद्ग्रहमात्रम् । उपाध्यग्रहमात्रम् । इत्थं च क्वचिद्विद्यमान एवोपाधिरुपाधित्वेन धूमादौ न ज्ञात इति शङ्कया शङ्कासामग्र्या गृहीतव्याप्तावपि संशय इति किं विद्यमान इत्यादिमूलस्यार्थः। उपाधेरनुपस्थितावुपाध्यभावत्वप्रकारेण निश्चयस्य प्रथमदर्शने दुर्घटत्वात् पूरयति सत्युपाधीति । अत्र प्रथमदर्शनेन नि-

म्। तत्र व्याप्तेरभावात् प्रत्यक्षज्ञाने विषयस्य हेतुत्वात्। क्वचिदसंसर्गाग्रहात् तथाव्यवहारो दोषमाहात्म्यात्। न चात्रापि तथा, आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इत्यभ्युपगमात्। केचित्तु साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं साधनवन्निष्ठान्योऽन्याभावाप्रतियोगिसाध्यवत्कत्वं वा व्याप्तिस्तदुभयमपि योग्यं प्रत्यक्षेण वह्निधूमसम्बन्धानुभवेन

---

यो नानुपपन्न इति भावः।द्वितीये ज्ञानप्रामाण्येति।प्रथमेति। सत्युपाधिस्मरणादाविसादिः। न चात्रापीति। सर्वत्र रासभादाविसर्थः। अवगत इति।स्वरूपकथनमात्रम्।महानस इति।अस्मिन्निसादिः। म-

---

श्रितस्य व्याप्तिस्वरूपस्यैव संशयोपपादकतया यद्वेत्यादिमूलसङ्गमात्पूरणं व्यर्थमित्यस्मद्गुरुचरणाः। मूले क्व चिदित्यादि। क्व चिद्रासभे व्याप्यत्वव्यवहारो दोषमाहात्म्याद्व्याप्यत्वासंसर्गाग्रहादित्यर्थः। अत्रापि तथेति मूलस्य धूमेपि दोषाधीनादसंसर्गाग्रहाद्व्याप्यत्वव्यवहार इति नार्थः। तथा सति सिद्धान्ते न तु निमित्तमस्तीत्यादिना दोषरूपस्य निमित्तस्य सत्त्वोपवर्णनासङ्गतेः। अतो व्याचष्टे सर्वत्र रासभादाविति। व्याप्यत्वेन व्यवहर्तव्ये इव तत्त्वेनाव्यवहर्त्तव्येपि रासभ इत्यर्थः। विषयाभावरूपस्य दोषस्योभयत्रापि तुल्यत्वादसंसर्गाग्रहरूपस्यारोपस्य तत्रापि सम्भवादिति भावः। इत्थं च मूले निमित्तानुसरणमित्यस्य सामग्र्यनुसरणमित्यर्थः। न तु निमित्तमस्तीति न तु दोषाद्यात्मकयत्किञ्चित्कारणमस्तीति कृत्वैवारोपः। तथा च कारणान्तरविरहादारोपस्यानियोऽसंसर्गाग्रह एव रासभान्तरे नास्तीति न तत्र व्याप्यत्वव्यवहार इति

प्रथममवगतमेव, महानसे योऽत्यन्ताभावोऽन्योन्याभावो वावगतस्तस्य प्रतियोगी न वन्हिर्न वा वन्हिमानित्यनुभवात्, रासभे तथावगमेऽप्यग्रे स बाध्यत इति। तन्न। एवं हि तद्वन्हितद्धूमयोरेव व्याप्तिः स्यात् न तु धूमत्ववन्हित्वावच्छेदेन। न च तदनुमानोपयोगिवन्हित्वं वन्हिमत्त्वं वा न प्रतियोगितावच्छेदकमिति प्रथमतो ज्ञातुमशक्यमेवेति मैवम्। प्रकृतसाध्यव्यापकसाधनाव्यापको वा साधनत्वाभिमतेन समं प्रकृतसाध्यसम्बन्धिता-

---

इति वायौ योग्यायोग्योद्भूतरूपसामान्यतद्वतोरिव योग्ये वह्नौ तादृशप्रतियोगित्वसामान्यतद्वतोरप्यसन्तान्योन्याभावयोर्योग्यत्वादिति भावः। न प्रतियोगितावच्छेदकमिति। न धूमसामान्यसमाना-

---

भावः। अवगतत्वस्य व्याप्त्यनन्तर्गतत्वादाह स्वरूपेति। महानसान्तरस्यासन्निकृष्टतादशायां योग्यानुपलम्भविरहान्महानसनिष्ठात्यन्ताभावप्रतियोगित्वसामान्याभावो वह्न्यादौ प्रत्यक्षेण गृहीतुमशक्य इत्यतः पूरयति अस्मिन्नित्यादिरिति। अवगतत्वस्य व्याप्तिघटकत्वे महानससामान्यघटितेपि व्यापकत्वस्य वह्न्यादौ प्रत्यक्षसम्भवादस्मिन्निति पूरणं व्यर्थमतः पश्चादुक्तमप्यवगतत्वं प्रागेव स्वरूपकीर्तनत्वेन व्याख्यातमिति ध्येयम्। नन्वतीन्द्रियनिष्ठस्यैतन्महानसनिष्ठाभावप्रतियोगित्वस्यायोग्यत्वात्तदभावः कथं योग्य इत्यत आह महतीति। वायुपरमाण्वादौ उद्भूतरूपसामान्याभावत्वादिना तादृशसामान्याभावादेरप्रत्यक्षत्वान्महतीत्युक्तम्। तादृशेति। एतन्महानसनिष्ठाभावीयेत्यर्थः। ननु प्रतियोगितावच्छेदकत्वसामा-

वच्छेदकं विशेषणं वोपाधिः । उभयथापि तदभावो न व्याप्तिः । सिद्ध्यसिद्धिभ्यां तन्निषेधानुपपत्तेः । किन्तु यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वम् । तस्य च प्रथमं ज्ञातुमशक्यत्वात् । किञ्च न वस्तुगत्या व्याप्तेर्ज्ञानं हेतुः किन्तु व्याप्तित्वे-

---

धिकरणतादृशाभावप्रतियोगितासामान्यावच्छेदकमित्यर्थः । अथ साधनाव्यापकव्याप्यत्वाभावः साध्येऽधिकरणस्वरूपमेव एवं साधननिष्ठसाध्यसम्बन्धे साधनतावच्छेदकातिरिक्तावच्छेद्यत्वाभावोऽपीत्यनुशयानो येन रूपेण ज्ञाता व्याप्तिरनुमित्यङ्गं तद्रूपविशिष्टा न सकृद्दर्शनगम्या सामानाधिकरण्यमात्रस्य च तथाभावं न वारयाम इत्याशयेनाह किञ्चेति । विशेषणज्ञानसाध्यत्वात् तत्सा-

---

न्याभावस्य व्याप्त्यघटकत्वात्तद्ग्रहस्य दुःशकयत्वं न क्षतिकरमतो व्याचष्टे न प्रतियोगितेत्यादि । साधनाव्यापकेति । न च धूमाव्यापकपर्वतत्वादिव्याप्यत्वस्य प्रत्येकवह्नौ सत्त्वादव्याप्तिः, साध्यतावच्छेदके साधनाव्यापकव्याप्यतावच्छेदकत्वाभावस्य विवक्षितत्वात् । अधिकरणस्वरूपमेवेति । तथा च तादृशसाध्यसम्बन्धरूपा व्याप्तिः प्रथमतो गृहीतुं शक्यते एवेति भावः । प्रथमवितर्कितोपाधेरभावरूपां व्याप्तिं परिष्कृत्य पश्चाद्वितर्कितोपाधेरभावात्मिकां व्याप्तिं परिष्कुर्वन्नाह एवमिति । साधनतावच्छेदकातिरिक्तावच्छेद्यत्वाभावोपीति । अधिकरणस्वरूपमेवेति अनुषज्यते । न च साधनतावच्छेदकातिरिक्तेन तत्तद्धूमत्वादिना साध्यसम्बन्धावच्छेदात् वह्निमान् धूमादित्यादावसम्भवः, साधनतावच्छेदकातिरिक्तमात्रावच्छेद्यत्वाभावस्य विवक्षितत्वात् । अनुशयान इति । आहेत्यग्रेऽन्वयः । तथात्वम् । सकृद्दर्शनगम्यत्वम् । नवारयाम इति । तथा च प्रकार-

न । तच्च उपाध्यभाववत्त्वम् । न च उपाधेरज्ञाने तदभाववत्त्वेन ज्ञानं सम्भवति, विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य । न च नियमतः प्रथममुपाधिधीरस्ति । यच्चोक्तं प्रतियोगिज्ञानं व्यवहारहेतुः नाभावज्ञान इति। अस्तु तावदेवम्, तथापि तदभावो मा व्यवहारि उपाध्यभावज्ञानाधीनानुमितिः स्यादेव उपाधिज्ञानं विनापि, न चैवम् । वस्तुतस्तु विशेषादर्शने सहचारादिसाधारणधर्मदर्शनाद्व्यभिचारसंशयात् प्रथमदर्शनेन न व्याप्तिनिश्चयः । अथ व्यभिचारसंशयो नाव्यभिचारनिश्चयप्रतिबन्धकः, ग्राह्यसंशयस्य निश्चयाप्रतिबन्धकत्वात्,

———

मग्रीसाध्यत्वाद्वा न चेति। उपलक्षणमेतत् । उपाधेरयोग्यस्यापि सम्भवात् उपाधिसामान्यवद्भेदोर्मूर्त्तत्वादिसामान्यवद्भेदोरिवासन्तान्योन्याभावयोरयोग्यतया प्रत्यक्षेण गृहीतुमशक्यत्वात् । न च योग्योपाधिव्यतिरेकग्रह एवानुमानाङ्गम्, अयोग्योपाधिग्रहेऽप्यनुमितिप्र-

———

सङ्गात्। सत्याऽनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणत्वेन पक्षत्वे बाधः तादृशजनकतावच्छेदककोटिनिविष्टत्वेन पक्षत्वे च सिद्धसाधनमिति भावः । गुरुमते विशेषणज्ञानस्य विशिष्टज्ञानाहेतुत्वात् पूरयति तत्सामग्रीति । एतदिति। उपाधिज्ञानस्य प्रागसत्त्वमित्यर्थः । उपाधिसामान्येति । साधनाव्यापकस्यायोग्यस्यापि सत्त्वात् तद्व्याप्यत्वाभावः साध्ये न योग्य इत्यर्थः । तद्व्यवहारहेतुत्वाच्चेतिग्रन्थेन पर्यवसितस्योपाध्यभावत्वप्रकारकज्ञानहेतुत्वस्य खण्डनासम्भवादाह यथा-

अन्यथा संशयोत्तरं क्वापि निश्चयो न स्यादिति चेत्, न व्यभिचारसंशयः प्रतिबन्धक इति ब्रूमः, किन्तु विशेषादर्शने सति सहचारादिसाधारणधर्मदर्शनात् संशयः स्यात् न तु संशयसामग्रीतो निश्चय इति। किञ्च यद्धीसामग्री यत्र प्रतिबन्धिका विशेषादर्शने तत्र तद्धीरपीति व्यभिचारसंशयोऽपि प्रतिबन्धकः। एवं भूयोदर्शनमपि संशायकं तर्कस्त्वनवस्थाग्रस्त एवेति कथं व्याप्तिग्रहः।

---

सङ्गात। यथाश्रुतं दूषयति यच्चोक्तमित्यादिना। व्यभिचारेत्यादि। अत्र प्रत्यक्षे ग्राह्यसंशयस्यापि प्रतिबन्धकत्वमादृत्य व्यभिचारशङ्कायास्तथात्वाभिधानम्। अन्यथा पुनरसाधारणतत्तत्कारणमेलकरूपा सामग्री प्रतिबन्धिका बोध्या। विवेचितश्चेदं प्रत्यक्षमणि-

---

श्रुतमिति। उपाध्यनुपलम्भसहितस्य केवलाधिकरणज्ञानस्यानुमितिहेतुत्वादिति ग्रन्थतः श्रुतमित्यर्थः। ननु सत्यामपि व्यभिचारशङ्कायामनुमानादिना व्याप्तिनिश्चयोत्पादात्तस्याः प्रतिबन्धकत्वमसङ्गतमत आह प्रत्यक्ष इति। निश्चयात्मक इति शेषः। तेन व्यभिचारसंशयोत्तरं व्याप्तेः सन्देहोत्पादेऽपि न क्षतिः। ननु संशयोत्पत्तिक्षणे निश्चयानुत्पत्त्यर्थं निश्चयसामान्यं प्रत्येव समानाकारसंशयसामग्रीत्वेन विरोधित्वस्थितौ प्रात्यक्षिकनिश्चयं प्रति संशयस्य तथात्वे मानाभाव इत्याशयेनाह अन्यथा पुनरिति। ग्राह्यसंशयस्याऽविरोधित्वे पुनरित्यर्थः। कालदिगाद्यन्तर्भावेन सामग्र्याः प्रतिबन्धकत्वे गौरवादाह असाधारणतत्तत्कारणेति। विशेषादर्शनधर्मिज्ञानकोट्युपस्थित्यादिरूपसंशयकारणेत्यर्थः। विशेषादर्शनादीनामेकैकसत्त्वेऽपि निश्चयोत्पादाह मेलकेति। सामग्रीप्रतिबन्धकेति। तदभिप्रायेणैव सा च क्वचिदुपाधि-

अत्रोच्यते । व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकम् । ज्ञानं निश्चयः शङ्का च । सा च क्वचिदुपाधिसन्देहात् क्वचिद्विशेषादर्शनसहितसाधारणधर्मदर्शनात् । तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात्, क्वचित् स्वतः सिद्ध एव । तर्कस्य व्याप्तिग्रहमूलकत्वेनाऽनवस्थेति चेत् । न । यावदाशङ्कं तर्कानुसरणात् । यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्ति ग्रहः ।

---

दीधितौ । वक्ष्यते चाऽधिकमुपरिष्टात् । अत्र च यद्यपि साधनगोचरसाध्याभाववद्वृत्तित्वग्रहाभावो हेतुरिति न युक्तम्, केवला-

---

सन्देहादित्यादिना मूलकृता संशयसामग्र्याः प्रदर्शनादिति भावः । ननु विशेषादर्शनकोट्युपस्थितिधर्मिज्ञानादिसमुदायस्य निश्चयप्रतिबन्धकत्वं न समवायेन, विशेषादर्शनस्य समवायेन कुत्राप्यसत्त्वात्तादृशसमुदायसत्त्वेऽपि निर्णयप्रसङ्गात्, अत एव स्वरूपसम्बन्धेनापि न विरोधित्वं धर्मिज्ञानादेस्तेन सम्बन्धेन क्वचिदप्यसत्त्वादत आह विवेचितमिति । प्रामाण्यवाद इति शेषः । तथा च विशेषदर्शनाभावादिविशिष्टविरोधिकोट्युपस्थितिरेव संशयसामग्रीपदार्थस्तत्रोक्त इति तादृशकोट्युपस्थितित्वेनैव समवायेन निश्चयं प्रति विरोधित्वम्, वैशिष्ट्यञ्च तत्रैकालावच्छेदेनैकात्मवृत्तित्वरूपं निविष्टमतो नातिप्रसङ्ग इति भावः । ननु निर्णयत्वस्य नीलान्यघटत्वादेरिवाऽर्थसमाजग्रस्तत्वान्न कार्य्यतावच्छेदकत्वमतस्तदवच्छिन्नं प्रति संशयसामग्र्या अपि प्रतिबन्धकत्वं दुर्घटमत आह वक्ष्यते चेति । निश्चयत्वस्य कार्यतानवच्छेदकत्वाद्विशिष्टबुद्धिसामान्यं प्रत्येव ग्राह्याभावानिर्णयत्वेन प्रतिबन्धकत्वमु-

न्वयिनि ग्राह्याप्रसिद्ध्या ग्रहाप्रसिद्धेः । खण्डशः प्रसिद्ध्या क चि-त्तादृशभ्रमसम्भवेऽपि सर्वत्र तथा भ्रमे मानाभावात् । अत एव साध्यतावच्छेदकगोचरसाधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्र-होऽपि प्रत्युक्तः । सकलसाध्यतावच्छेदके तादृशग्रहे मानाभावा-त् । तथापि साध्यतावच्छेदके तत्पुरुषीयतादृशावच्छेदकत्वग्रहस्य विषयतयाऽभावः तद्विषयत्वाभावो वा तत्पुरुषीयव्याप्तिग्रहे हेतुः ।

---

भयकोटिविशिष्टधीसामग्रीसद्भावे संशयो न तु निश्चय इत्या-दिकं हेत्वाभासादौ वक्ष्यत इत्यर्थः । साधनगोचरेति । साध-नविशेष्यकेत्यर्थः । ग्राह्येति । साध्याभाववद्वृत्तित्वरूपस्य ग्राह्यस्या-प्रसिद्धेत्यर्थः । नन्वभावे साध्यीयत्वावगाही प्रमेयत्वाभाववद्वृत्ति ज्ञेयत्वमित्याकारो व्यभिचारग्रहः केवलान्वयिस्थले सम्भवत्येवेत्यत आह खण्डश इति । क चित् साधने । सर्वत्रेति । तथा च यत्र साधने साध्याभाववद्वृत्तित्वभ्रमो न जातस्तत्रैव व्यभिचा-रज्ञानाभावस्य व्याप्तिधीहेतुत्वमसम्भवीति भावः । तादृशग्रहे । साधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहे । तथापीति । तत्पु-रुषीयहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वबुद्धौ तादृशावच्छेद-कत्वबुद्धेः समानविशेष्यत्वप्रत्यासत्त्या प्रतिबन्धकत्वद्योतनायोक्तं साध्यतावच्छेदक इति । एकस्य पुंसो वह्नित्वे धूमवन्निष्ठाभाव-प्रतियोगितावच्छेदकत्वग्रहेऽपि पुरुषान्तरस्य तत्र तादृशानवच्छे-दकत्वग्रहस्य सम्पत्त्यर्थमाह तत्पुरुषीयेति । कायव्यूहदशायां सौभरिप्रभृतेरेकशरीरावच्छेदेन तादृशावच्छेदकत्वनिश्चयेऽप्यन्यश-रीरावच्छेदेन तादृशानवच्छेदकत्वग्रहोपगमे पुरुषपदं शरीरार्थ-कम् । यदि चैकदेहावच्छेदेनैव कस्य चिदात्मनो बाधनिश्चयेऽप्य-न्यस्यात्मनः परपुरप्रवेशन्यायेन विशिष्टधीः प्रामाणकी तदा तत्त-च्छरीरावच्छिन्नतत्तत्पुरुषीयेत्येव क चिद्विवक्षणीयम् । विषयत-येति । यद्यपि घटत्वं तादृशप्रतियोगितावच्छेदकं वह्नित्वं च प्रमेयमित्येवं ग्रहेऽपि वह्नित्वं तादृशप्रतियोगितानवच्छेदकमित्येवं व्यापकत्वज्ञानोत्पादाद्विषयतासम्बन्धेन प्रतिबन्धकत्वमसङ्गतम् । न

च तादृशावच्छेदकत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन तथा-
त्वं वाच्यम्, इत्थमपि वह्नित्वं तादृशप्रतियोगितानवच्छेदकं न
वेति संशयोत्तरं वह्नित्वं तादृशानवच्छेदकमिति शाब्दादिज्ञाना-
नुत्पत्तिप्रसङ्गात् निश्चयत्वस्य धर्मिघटितमूर्त्तिकतया सामान्यतः
तादृशावच्छेदकत्वनिश्चयत्वेन प्रतिबन्धकत्वस्य वक्तुमशक्यत्वा-
त् । तथापि हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारतानि-
रूपिताविशेष्यतासम्बन्धेन तत्पुरुषीयतादृशानवच्छेदकत्वबुद्धिसा-
मान्यं प्रति तत्पुरुषीयबुद्धिमात्रं प्रत्येव वा घटत्वपटत्वादितत्त-
त्प्रत्येकधर्मधर्मिकतादृशावच्छेदकत्वनिश्चयनिरूपितघटत्वपटत्वादि-
तत्तत्प्रत्येकधर्मिनिष्ठविशेष्यतासम्बन्धेन तत्पुरुषीयहेतुमन्निष्ठाभाव-
प्रतियोगितावच्छेदकत्वज्ञानत्वेन तत्पुरुषीयज्ञानत्वमात्रेणैव वा प्र-
तिबन्धकत्वं तादृशतादृशसम्बन्धावच्छिन्नतत्तदभावकूटस्यैव च
हेतुत्वम् । न चैवं प्रतियोगितावच्छेदकसम्बन्धभेदेन कार्यकारणभा-
वानन्त्यम्, अनन्यगतिकतया तथात्वस्येष्टत्वात् । वस्तुतस्तादृशावच्छे-
दकत्वप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यतात्वरूपेणानुगतसम्ब-
न्धेनैव तत्पुरुषीयतादृशावच्छेदकत्वज्ञानं प्रतिबन्धकमतः सम्बन्धा-
ननुगम एव नास्ति वह्नित्वं तादृशावच्छेदकं न वेत्यादि संशयस्य तु
वह्नित्वनिष्ठमवच्छेदकत्वाभावप्रकारतानिरूपितं यद्विशेष्यत्वं तदे-
वावच्छेदकत्वप्रकारतानिरूपितमपि न त्ववच्छेदकत्वनिरूपितं वि-
शेष्यतान्तरमिति तादृशसंशयस्यानवच्छेदकत्वग्रहं प्रत्यविरोधि-
त्वम् । अत एव वृक्षः संयोगवान् तदभाववांश्चेति समुच्च-
याद्वृक्षः संयोगी न वेत्यादिसंशयस्य भेदः । समुच्चये प्रकारताद्वय-
निरूपितैकविशेष्यत्वाभावात् । अत एव प्रत्यक्षमणिदीधितावतिरि-
क्तविषयतापक्षे मिथोविरुद्धधर्मद्वयप्रकारकैकविषयताप्रतियोगित्वं
संशयत्वमाहत्य तद्विघटकत्वेनैव न च प्रकारताभेदे विषयताभेद इति
मूलग्रन्थोऽवतारितः । अत एव च लीलावतीप्रकाशेपि विरोधि-
नानारूपावच्छिन्नैकविषयताप्रतियोगिज्ञानं संशयः समुच्चये तु वि-
रोधिप्रत्येकप्रकारावच्छिन्ना भिन्नैव विशेष्यता न तु विरोधिनाना-
रूपानिरूपितैकेति संशयग्रन्थे स्फुटमभिहितमित्यादिकमन्यत्र विस्त-
रः । विषयताया वृत्त्यनियामकत्वमते तत्सम्बन्धावच्छिन्नाभावाप्रसि-
द्धेराह तद्विषयत्वेति । तादृशावच्छेदकत्वनिष्ठप्रकारतानिरूपितयद्वि-

वस्तुतो व्याप्तेः साध्यसाधनभेदभिन्नतया विशिष्यैव कार्यकारणभावः । तथा च यत्र साधनं साध्याभाववद्वृत्ति साध्यतावच्छेदकं साधनवन्निष्ठाभावप्रतियोगितावच्छेदकमेकविधमनेकविधं वा व्यभिचारज्ञानं प्रसिद्धं तत्र यथायथं तदभावः पुरुषनिष्ठो व्या-

---

श्रयविशेष्यत्वाभाव इत्यर्थः । विषयताया ज्ञानसमानकालीनतया च नातिप्रसङ्ग इति भावः। नन्वत्रापि कल्पे यस्य पुंसः स्वरूपसम्बन्धेन तादृशावच्छेदकत्वप्रकारकज्ञानमप्रसिद्धं तदीयव्याप्तिग्रहे व्यभिचारज्ञानाभावस्य हेतुत्वालाभः तथा व्यभिचारान्तरग्रहेऽपि व्याप्तिग्रहप्रसङ्गश्चेत्यत आह वस्तुत इति । इत्यादिकमित्यादिपदेन साधनं साध्यवदन्यवृत्तीत्यादेरुपसंग्रहः । यत्रैकविधमेव व्यभिचारज्ञानं प्रसिद्धं तत्र तावद्व्यभिचारज्ञानाभावस्य हेतुत्वासम्भवादाह यथायोगमिति । तथा च यत्र यादृशं प्रसिद्धं तत्र तस्याभावो हेतुरिति भावः । समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वमावेदयितुं पुरुषनिष्ठ इत्युक्तम् । यद्यपि व्यभिचारज्ञानदशायामपि घटाद्यवच्छेदेन तदभावस्य पुरुषे सत्त्वात्तदानीमपि व्याप्तिग्रहापत्तिः, तथापि समवायेन व्याप्तिग्रहं प्रति समवायावच्छिन्नव्यभिचारज्ञानाभावस्य निरवच्छिन्नविशेषणतासम्बन्धेनैव हेतुत्वं वाच्यम् व्यभिचारज्ञानकालीनस्तदभावश्च घटाद्यवच्छेद्यत्वविशिष्टविशेषणतयैव तत्रात्मनि वर्त्तत इत्यदोषः। यत्तु व्यभिचारज्ञानविशिष्टत्वावच्छिन्नस्यैव समवायसम्बन्धेनाभावो व्याप्तिधीहेतुः तथा चात्मनि घटाद्यवच्छेदेन व्यभिचारज्ञानस्य विरहेऽपि तद्विशिष्टस्यात्मत्वस्यैव सत्त्वान्नोक्तदोष इति। तन्न । वृक्षादौ मूलाद्यवच्छेदेन कपिसंयोगविशिष्टवृक्षत्वाद्यभावस्यैवात्मन्यपि घटाद्यवच्छेदेन व्यभिचारज्ञानविशिष्टात्मत्वाद्यभावस्य सत्त्वात् । विशेषणस्य तत्रासत्त्वे तदवच्छेदेन विशिष्टवत्त्वस्यात्यन्तमसम्भावितत्वात् । केचित्तु समानावच्छेदकत्वप्रत्यासत्त्या व्यभिचारज्ञानाभावः शरीरनिष्ठ एव व्याप्तिधीहेतुः न चैवं यत्र खण्डशरीरोत्पत्तिदशायामवस्थितहस्ताद्यवच्छेदेन व्यभिचारज्ञानं तत्रोत्तरक्षणे खण्डशरीरावच्छेदेन व्याप्तिधीः स्यादुत्पन्नव्यभिचारज्ञानस्यावच्छेदकतासम्बन्धेन खण्डश-

प्तिग्रहहेतुः। अत एवैकविधव्यभिचारज्ञानविरहेऽन्यविधव्यभिचारग्रहाद्व्याप्तिधीविरोधः।एवञ्च क्वचिद्व्यभिचारज्ञानस्याऽप्रसिद्ध्या तदभावस्याऽहेतुत्वेऽपि न क्षतिः। प्रसिद्धायाः साधनत्वनिष्ठाभावप्रतियोगितावच्छेदकत्वादिबुद्धेः समानविषयतया तदभावबोधविरोधित्वानुरोधेन तु तथात्वकल्पनं न वयं वारयामः, यदि तत्तत्प्रकारादिनिवेशेन विशेषे न पर्य्यवस्येदिति दिक्।

---

रीरव्यक्तावसत्त्वादिति वाच्यम्। हस्तादेर्ज्ञानावच्छेदकत्वाभावात्। चेष्टावत्त्वाविशेषेपि शरीरस्यैव तथात्वात्। अन्यथा चैत्रो जानातीत्यादेरिव हस्तो जानातीत्यादेरपि प्रसङ्गादित्याहुः। तच्चिन्त्यम्। पूर्वकल्पे स्वयमस्वरसमाह अत एवेति। नानाविधव्यभिचारज्ञानाभावानां हेतुत्वादेवेत्यर्थः। निरुक्तावच्छेदकत्वग्रहाभावमात्रस्य हेतुत्वे तु व्यभिचारान्तरग्रहदशायामपि व्याप्तिधीः स्यादिति भावः। एवं चेति। साध्यसाधनादिभेदेन विशिष्यैव हेतुत्वे चेत्यर्थः। ननु साधनं साध्याभाववद्वृत्तीत्यादि व्यभिचारज्ञानाभावस्य पुरुषनिष्ठतया हेतुत्वेपि साध्यतावच्छेदकं हेतुमान्निष्ठाभावप्रतियोगितावच्छेदकमित्यादि व्यभिचारज्ञानाभावस्य पुरुषनिष्ठतया हेतुत्वाभिधानमसङ्गतं वह्नित्वद्रव्यत्वाद्यनन्तसाध्यतावच्छेदकान्तर्भावेणानन्तकार्यकारणभावापत्तेः किन्तु तत्पुरुषीयहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारकज्ञानं प्रति समानविशेष्यत्वप्रत्यासत्त्या तत्पुरुषीयतादृशावच्छेदकत्वप्रकारकज्ञानस्य विरोधितया विशेष्यतासम्बन्धेन तदभाव एव तत्र हेतुरुचितः पुरुषव्यक्तीनामपि साध्यतया तत्तत्पुरुषत्वस्य त्वयापि विषयविधया निवेश्यत्वेन तत्प्रवेशकृतगौरवस्याप्यसम्भवादत आह प्रसिद्धाया इत्यादि। तदभावबोधेति। तादृशावच्छेदकत्वाभावबोधेत्यर्थः। तथात्वकल्पनं विशेष्यतासम्बन्धेन तादृशावच्छेदकत्वग्रहाभावस्य हेतुत्वकल्पनम्। तत्प्रकारेति। तत्तद्धर्मितावच्छेदकमित्यर्थः। विशेष इति। वह्नित्वादौ जातित्वादिप्रकारेण तादृशावच्छेदकत्वनिर्णयेपि वह्नित्वत्वादिप्रकारेण तादृशानवच्छेदकत्वग्रहासत्त्वेन रूपेण

तत्पुरुषीयावच्छेदकत्वनिश्चयस्य विशेष्यतासम्बन्धेनाभावस्तेन रूपेण तत्पुरुषीयानवच्छेदकत्वज्ञाने कारणं वाच्यम्। तथा च धर्मितावच्छेदकभेदेन कार्यकारणभावानन्त्यं तत्राप्यावश्यकमिति तत्पुरुषीयत्वयोर्द्विधानिवेशेन कारणत्वकल्पने गौरवमिति भावः। नव्यास्तु वह्नित्वजातित्वादिप्रकारेण वह्निजात्यादेः साध्यतास्थले वह्नित्वत्वाद्यवच्छिन्नधर्मिकतादृशावच्छेदकत्वनिश्चयत्वेन वह्नित्वत्वाद्यवच्छिन्नधर्मिकतादृशानवच्छेदकत्वग्रहं प्रति विरोधित्वेऽपि दण्डत्वकुण्डत्वाद्यवच्छिन्नसाध्यतास्थले निरवच्छिन्नविशेष्यतावच्छेदकत्वसम्बन्धेन तत्पुरुषीयानवच्छेदकत्वज्ञानसामान्यं प्रत्येव दण्डत्वकुण्डत्वादिप्रत्येकधर्मावच्छिन्नविशेष्यकतादृशावच्छेदकत्वनिरूपितविशेष्यतावच्छेदकत्वसम्बन्धेन तत्पुरुषीयावच्छेदकत्वज्ञानत्वेन तत्पुरुषीयज्ञानत्वमात्रेणैव वा प्रतिबन्धकत्वं युक्तम्। अन्यथा दण्डत्वकुण्डत्वाद्यनंतधर्मितावच्छेदकान्तर्भावेण प्रतिबन्धकतावच्छेदकगौरवापत्तेः। न चैवं तादृशतादृशसम्बन्धेन तदवच्छिन्नाभावकूटस्य च हेतुत्वमपेक्ष्य लाघवान्निरवच्छिन्नविशेष्यतावच्छेदकत्वप्रत्यासत्त्या तत्पुरुषीयतादृशानवच्छेदकत्वग्रहं प्रति निरवच्छिन्नविशेष्यतावच्छेदकत्वप्रत्यासत्त्यैव तादृशावच्छेदकत्वग्रहस्य प्रतिबन्धकत्वमुचितं दण्डत्वकुण्डत्वाद्यवच्छिन्नविशेष्यताप्रवेशे गौरवादिति वाच्यम्। तथा सति दण्डत्वकुण्डत्वसामानाधिकरण्येनावच्छेदकत्वनिर्णयेऽपि तत्समानाधिकरण्येनानवच्छेदकत्वग्रहस्यानुत्पप्रसङ्गात्। न च यत्र दण्डः कुण्डं च तादृशप्रतियोगितावच्छेदकमिति ज्ञानस्योत्तरं दण्डांशे तस्य भ्रमत्वग्रहस्तत्र दण्ड इव कुण्डेऽप्यनवच्छेदकत्वधीः स्यात् अप्रामाण्यज्ञानव्यक्त्यभावविशिष्टस्यैव तत्पुरुषीयावच्छेदकत्वग्रहस्य समानविशेष्यतावच्छेदकत्वप्रत्यासत्त्या विरोधित्वात्, अन्यथा दण्डेऽप्यनवच्छेदकत्वधीस्तदानीं न स्यादिति वाच्यम्। दण्डत्वावच्छिन्नविशेष्यकतादृशावच्छेदकत्वनिश्चयनिरूपितविशेष्यतावच्छेदकतासम्बन्धेन तत्पुरुषीयावच्छेदकताज्ञानस्य विरोधितायामेव दण्डांशे भ्रमत्वज्ञानव्यक्तीनामुत्तेजकतया कुण्डत्वाद्यवच्छिन्नविशेष्यकतादृशावच्छेदकनिश्चयविशेष्यतावच्छेदकतासम्बन्धेन विरोधितायां तदप्रामाण्यज्ञानव्यक्तेरप्रवेशात्, यत्र यद्धर्मावच्छिन्नविशेष्यकतादृशावच्छेदकत्वनिश्चयविशे-

व्याप्तिश्च धूमादिव्यापकवन्हिसमानाधिकरणवृत्तिधूमत्वादिकम्, तादृशसामानाधिकरण्यमात्रस्य रासभादिसाधारण्यात्। अत्र च व्यापकत्वांशग्रहे व्यभिचाराग्रहः समानाधिकरणवृत्तित्वांशग्रहे च तद्विशेषणतया सामानाधिकरण्यस्य ग्रहो हेतुरिति वक्तव्यम्। साध्यसम्बन्धितावच्छेदकरूपवत्त्वलक्षणव्याप्तिग्रहे विशेषणतया सम्बन्धस्य ग्रहो हेतुरित्यपि केचित्। यत्तु विरुद्धे

———

ध्यतावच्छेदकत्वसम्बन्धेन विरोधित्वं तत्र तद्धर्मविशिष्टांशे भ्रमत्वग्रहव्यक्तीनामुत्तेजकत्वात्। इत्थमेव च घटादिमत्ताबुद्धिं प्रत्यपि बाधबुद्धेस्तदभावव्याप्यवत्तानिश्चयस्य च समानविशेष्यतावच्छेदकत्वप्रत्यासत्या विरोधित्वं परिष्कार्यमिति प्राहुः।

ननु व्याप्तिग्राहकमिति मूलस्य न व्याप्तिग्रहजनकतामात्रमर्थः पटाद्यवगाहिव्याप्तिधीजनके पटादावतिप्रसङ्गात्। नापि व्याप्तिग्रहत्वावच्छिन्नकार्यता.निरूपितकारणतावत्वं तथा, व्यभिचारज्ञानविरहे तद्बाधात् लाघवेन व्यापकताग्रहत्वावच्छिन्नं प्रत्येव तस्य हेतुत्वात् अतो व्याप्तिविषयिताव्यापकीभूतयत्किञ्चिद्विषयिताकग्रहत्वावच्छिन्नं प्रति कारणत्वमेव तदर्थो वाच्यः स च व्याप्तेर्व्यापकसामानाधिकरण्यरूपत्वे सहचारज्ञानस्यासम्भवीत्यतो व्याप्तिमन्यथानिर्वक्ति व्याप्तिश्चेत्यादिना। साध्यसम्बन्धितेति। ग्राह्याभावानवगाहिनोपि व्यभिचारज्ञानस्य मणिमन्त्रादिन्यायेनात्र विरोधित्वं हेतुवृत्तिधर्मस्य साध्यतावच्छेदकत्वमेव वाऽत्र मते व्यभिचार इति भावः। उक्तव्याप्तिग्रहस्यानुमितावहेतुत्वात्तद्ग्राहकाभिधानमर्थान्तरग्रस्तमित्यस्वरसः कश्चिदित्युक्त्या सूचितः। सामान्यत एवेति। अत्र च तद्व्यापकत्वग्रहं प्रति तत्सामानाधिकरण्यग्रहत्वेन हेतुत्वं समानविशेष्यत्वं च प्रत्यासत्तिः। तेन विरुद्धाविरुद्धसाधारणैकव्यापकत्वाभावाद्विरुद्धस्थले सहचारग्रहस्य हेतुत्वेपि धूमवन्ह्योर्व्यापकत्वग्रहे तस्य हेतुत्वे मानाभाव इत्यपास्तम्। जलत्वादौ धूमव्यापकत्वग्रहानुरोधेन क्लृप्तस्य धूमसामानाधिकरण्यग्रहस्य वन्ह्यादौ धूमव्यापकताग्रहा-

सहचारभ्रमेण व्यापकत्वभ्रमात्सामान्यत एव सहचारज्ञानं हेतु-रिति। तन्न। असिद्धत्वात्। विरुद्धेऽपि व्यापकत्वसामानाधि-करण्ययोर्ग्राहकसामग्रीक्रमयौगपद्याधीनं ग्रहणक्रमयौगपद्यं न तु मिथः कार्य्यकारणभाव इति। इदं पुनरवधेयम्। यथा विद्यमानमपि वन्हित्वे व्यवहितविप्रकृष्टरासभादिदेशनिष्ठाभावप्रतियोगिताव-च्छेदकत्वं न गृह्यते अभावदेशविप्रकर्षादिना ग्राहकाभावात्, तथा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽप्यग्रहसम्भवात्। नानुपलब्धेः, प्रतियोगिसत्त्वविरोधित्वादिलक्षणा योग्यतेति न तत्सामान्याभावो लौकिकप्रत्यक्षगम्यः परन्तु कथञ्चिद्विरोधस्फुर-

---

र्थमप्यावश्यकत्वादिति ध्येयम्। असिद्धत्वादिति। व्यापकत्वभ्रमे सहचारभ्रमस्य हेतुताया असिद्धत्वादित्यर्थः। असिद्धिमेव स्पष्टयति विरुद्धेपीति। सामग्रीक्रमेति। सामग्रीक्रमाधीनो ग्रहणस्य क्रमः सा-मग्रीयौगपद्याद्यधीनं च ग्रहणस्य यौगपद्यमित्यर्थः। नत्विति। अ-न्यथा व्यापकत्वज्ञानोत्तरमपि क्व चित्सामानाधिकरण्यज्ञानोत्पत्तेः तत्रापि व्यापकत्वज्ञानं हेतुरित्येवं किं न रोचयेदिति भावः। व्यवहितेति। व्यवधानम्। मध्यस्थितकुड्यादिसम्बन्धः। वि-प्रकर्षो दूरवर्त्तित्वम्। अग्रहसम्भवादित्यस्य नानुपलब्धेर्योग्यते-त्यनेनान्वयः। प्रतियोगिसत्त्वेत्यादि। प्रतियोगिसत्त्वप्रसञ्जितोप-लब्धिकत्वरूपेत्यर्थः। तथा च वह्नित्वं यदि धूमाधिकरणयावत्-सन्निकर्षे सति धूमवन्निष्ठाभावप्रतियोगितावच्छेदकं स्यात्तादृ-शावच्छेदकत्वेनोपलभ्येत इत्यापादनस्यैवात्र योग्यतासम्पादक-त्वाद्यावतां च धूमवतामेकदा सन्निकर्षविरहान्न सा सम्भवतीति तादृशावच्छेदकत्वाभावो न लौकिकप्रत्यक्षविषय इति भावः। आ-दिपदादाचार्योक्तायाः प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकस-मवधानरूपयोग्यतायाः परिग्रहः। कथं चिच्छब्दादिना। विरोधादीति। धूमत्वत्वादौ तादृशावच्छेदकत्वस्य विरोधादिग्रहवशादित्यर्थः। विरोधोऽसामानाधिकरण्यम्। आदिपदाच्च व्यापकीभूताभाव-

णादिवशाद्धूमत्वादौ गृहीतो धूमवन्निष्ठात्यन्ताभावप्रतियोगितानव-च्छेदकत्वाभावो वन्हित्वादावुपनयमर्य्यादया गृह्यते। अत एवानुमानादिना व्यभिचारग्रहेऽपि न व्याप्तिधीः। निर्णयात्मनि साधारणे वा दोषविशेषाजन्योपनीतभाने संशयादिसाधारणस्य निश्चयात्मनो वा विपरीतज्ञानमात्रस्यैव प्रतिबन्धकत्वात् तत्तद्धूमादौ दे-

———

प्रतियोगित्वस्योपग्रहः। तथा च तादृशावच्छेदकत्वासमानाधिकरणतया तादृशावच्छेदकत्वव्यापकाभावप्रतियोगितया वा धूमत्वत्वादिमत्त्वस्य धूमत्वादौ परामर्शाद्धूमत्वे तादृशावच्छेदकत्वाभाव इत्याकारकव्यतिरेकयनुमित्यनन्तरमेव वह्नित्वं तादृशप्रतियोगितानवच्छेदकमित्याकारकप्रत्यक्षमिति भावः। न चैवमुक्तक्रमेण वह्नित्वत्वादिहेतुना तादृशावच्छेदकत्वाभावस्य वह्नित्वेपि व्यतिरेकयनुमितिसम्भवात् धूमत्वादिपर्यन्तानुसरणं व्यर्थमिति वाच्यम्। प्रत्यक्षत एव प्रथमतः साध्यतावच्छेदकीभूते वह्नित्वादौ तादृशावच्छेदकत्वाभावग्रहार्थं तदनुसरणादिति। अथानुपलब्धियोग्यताया अननुगतत्वादिहान्यैव सास्त्वित्यत आह अत एवेति। तादृशावच्छेदकत्वाभावस्य लौकिकप्रत्यक्षगम्यत्वाभावादेवेत्यर्थः। निर्णयात्मनि संशयादिसाधारणस्य प्रतिबन्धकत्वादित्यन्वयः। निश्चयत्वावच्छिन्नं प्रत्येव विपरीतज्ञानस्य विरोधित्वे विपरीतनिश्चयोत्तरं संशयोपत्तिरत आह साधारणे वेति। निश्चयात्मन इत्यग्रिमेणान्वयः। शंखो न पीत इत्यादिनिश्चयसत्त्वेपि दुष्टनयनस्य पुंसः शंखः पीत इत्युपनीतभानोत्पत्तेराह दोषविशेषाजन्येति। सत्यपि बाधनिर्णये लौकिकप्रत्यक्षोदयादाह उपनीतेति। अत्रोपनीतान्तं साक्षात्कारत्वानिरूपितविषयत्वोपलक्षकम्, न तु दोषविशेषाजन्यत्वादेः प्रवेशो गौरवात्, साक्षात्कारत्वानिरूपिततत्प्रकारताकबुद्धित्वावच्छिन्नं प्रत्येव लाघवेन तदभावनिश्चयत्वेन प्रतिबन्धकत्वात् साक्षात्कारत्वानिरूपिततत्प्रकारकत्वं तत्प्रकारकलौकिकप्रत्यक्षवद्दोषविशेषजन्यप्रत्यक्षेप्यविशिष्टम्, उभयत्रैव साक्षात्करोमीत्यनुभवात् एकशेषस्य कर्तुमशक्यत्वात्। अत एव

शान्तरवृत्तित्वसम्भावनाविरहादिवशात् गृह्यमाणो वन्ह्याद्यभाववद्वृत्तित्वाभावो धूमत्वाद्यवच्छेदेन गृह्यते लाघवादित्यपि वदन्ति॥

लौकिकसन्निकर्षजन्यस्यापि घटादिसंशयस्य तदभावनिर्णयप्रतिध्यत्वं संशयत्वघटकप्रकारताया अपि साक्षात्कारत्वानिरूपितत्वात् घटं सन्देह्मीत्यादिवत् घटं साक्षात्करोमीत्याकारकसंशयानुव्यवसायस्याभावात् इत्यादिकमन्यत्र विस्तरः। साध्याभाववद्वृत्तित्वाभावव्याप्तेर्लौकिकप्रत्यक्षमभ्युपगच्छतां मतमाह तत्तद्धूमादाविति। विरहादीत्यादिपदात्सन्निकर्षाद्युपसंग्रहः। ननु धूमान्तरे निर्वह्निवृत्तित्वसम्भावनासत्त्वात् कुतो धूमत्वावच्छेदेन तद्ग्रहणमत आह लाघवादिति। धूमान्तराकल्पनलाघवादित्यर्थः। तथा च तदेवोक्तसम्भावनायाः प्रतिबन्धकमिति भावः। कालान्तरे वन्ह्यभाववद्वृत्तित्वेपीदानीं तदनुपलब्धिसम्भवादत्र मतेप्यनुपलब्धेर्योग्यता नास्तीत्यस्वरसो वदन्तीत्युक्त्या सूचितः॥

इति व्याप्तिग्रहोपायप्रकरणं सम्पूर्णम्।



## दीधित्याः तर्कः

हुताशनरासभादिपदार्थसार्थस्याऽन्वयव्यतिरेकयोरन्वयव्यतिरेकौ धूमस्योपलभमानोऽवश्यमेतेषामन्यतमं कारणं धूमस्येत्यवधार्य सन्दिग्धे किमेतानि सर्वाण्येव कारणानि किं वा कानिचि-

---

## जागदीश्याः तर्कः

ननु वह्नौ धूमकारणत्वसंशयनिरासार्थं तर्कानुसरणं व्यर्थं धूमकारणत्वस्य क्वचिदर्थनिर्णये तत्सहचरितधर्मवत्त्वग्रहाभावादेव वन्हौ तत्संशयस्यासम्भवात्, साधारण धर्मवत्ताग्रहस्य संशयहेतुत्वात् । न चेन्धनादौ तर्कं विनैव धूमकारणत्वनिर्णयात्तत्सम्भवः । तथा सति वन्हावपि तद्वदेव धूमकारणत्वग्रहे बाधकाभावादित्यतः सामान्यतः कारणत्वनिर्णयेन साधारणधर्मवताज्ञानं सम्पादयन् संशयस्य सम्भवमाह हुताशनेत्यादिना । अथैतेषामन्यतमो धूमकारणमित्यवधारणस्य तावदन्यतमत्वावच्छेदेन धूमकारणत्वावगाहित्वे तादृशान्यतमत्त्ववत्ताज्ञानस्यैव व्यावर्त्तकधर्मदर्शनविधया वन्हौ धूमकारणत्वसन्देहविरोधित्वसम्भवात्तर्कानुसरणं विफलमत आह सन्दिग्धे इति । सन्देहाकारमाह किमेतानीति । हुताशनाद्यन्यतमवृत्तिकारणत्वं हुताशनाद्यन्यतमत्वावच्छेद्यं न वेति सन्देहे तात्पर्यम्।तथा चोक्तसन्देहानुरोधादन्यतमत्त्वसामानाधिकरण्येनैव धूमकारणत्वं पूर्वमवधृतमन्यथा प्रतिबन्धकसत्त्वे तादृशसन्देहायोगादिति भावः । नन्वेतावता सामान्यतः कारणत्वनिश्चयेन धूमकारणत्वसहचरितधर्मवत्ताज्ञानस्य सम्पादनेऽपि धूमकारणत्वाभावस्वरूपापरकोटिनिश्चयस्य कुत्राप्यसम्भवात्तत्सहचरितधर्मव-

## चिन्तामणेः तर्कः ।

तथा हि, धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वन्हिसमवहिताजन्यः स्यान्नोत्पन्नः स्यादित्यत्र किं

---

तथा कानिचिच्च नेति, अत्र च यस्य व्यतिरेकेऽपि इतरेभ्यस्तथाविधेभ्यो धूमोत्पत्तिमुपलभते तस्याऽहेतुत्वमेवाधारयति यथा रासभादेः, यस्य व्यतिरेके तादृशापरसकलान्वयेऽपि धूमानुत्पत्तिं पश्यति तस्य कारणत्वमेव निश्चिनुते यथा वन्हेः, तत्र चाऽकारणत्वसन्देहो विरोधितामासादयन्निवर्त्तते येन तर्केण तमाह धूम इत्यादि । अनुसन्धेयश्चावश्यं कार्य्यकारणभावग्रहः, तदधीन-

---

ज्ञानविरहादेव धूमकारणत्वसन्देहासम्भवात्तन्निरासकस्तर्को विफल एवेत्यतो धूमकारणत्वाभावनिर्णयस्य प्रकारमाह तत्रेति । अहेतुत्वमेवेति। तथा च तमन्तर्भाव्यैव कारणत्वाभावसहचरितधर्मवत्त्वग्रहो नानुपपन्न इति भावः। ननूक्तक्रमेण कारणत्वसन्देहस्य सामग्रीं सम्पाद्य तर्कस्य तन्निवर्त्तकत्वोपपादनेपि कारणतानिर्णायकत्वं तर्कस्य दुर्घटं प्रत्यक्षेण कारणत्वग्रहेऽन्वयव्यतिरेकज्ञानस्य हेतुतया तद्विलम्बात् कथं प्रत्यक्षतः कारणताग्रहः स्यादत आह यस्य चेति। तथा चान्वयव्यतिरेकज्ञानमप्यस्तीति भावः। तत्र चेति।धूमकारणत्वनिश्चये चेत्यर्थः।विरोधितामिति।निश्चयात्मकप्रत्यक्षे ग्राह्यसंशयस्यापि प्रतिबन्धकत्वमाहत्येदम्।ननु व्यभिचारशङ्कानिरासकस्तर्को दर्शनीयः स च धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्याकार एवेति वह्निजन्यत्वग्राहकतर्कस्य प्रदर्शनानौचित्यमतं आह अनुसन्धेय

त्राव्याप्तिबुद्धेः। सामानाधिकरण्येनान्वयव्यतिरेकद्वात् जायमा-

———

इति। अपेक्षणीय इत्यर्थः। कार्यकारणभावग्रह इत्यस्य वह्निधूमयो-रित्यादिः। कार्यकारणभावे इति पाठे तु अनुसन्धेय इत्यस्य निश्चे-तव्य इत्यर्थः। तदधीनत्वात्। कार्यकारणभावग्रहाधीनत्वात् अन्य-था धूमस्य वन्हिजन्यत्वानिर्णये बाधग्रहाभावादुक्ततर्क एव नाव-तरेत् को व्यभिचारशङ्कानिरासद्वारा व्याप्तिग्राहकः स्यात्, तथा च बाधनिर्णयविधया व्यभिचारशङ्कानिवर्त्तकतर्के मूलीभूतस्य वन्हिजन्यत्वनिर्णयस्य सम्पादकतयैव धूमो यदि वन्ह्यसमवहिता-जन्यत्वे सतीत्यादिको मूलोक्ततर्को व्याप्तिग्रहे उपयुज्यते इति भावः। यत्तु व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहे विशेषणता-वच्छेदकीभूतव्यापकतानिर्णयविधया कारणताज्ञानस्य हेतुत्वं का-रणत्वस्य व्यापकतागर्भत्वादतः कारणतानिर्णयाधीनत्वं व्याप्ति-बुद्धेरिति वदन्ति। तच्चिन्त्यम्। यद्यपि वन्हिजन्यत्वं स्वकारण-वह्निकत्वं तच्चानन्यथासिद्धस्वव्यापकवन्हिकत्वमिति तत्रान्यथासि-द्धभागो व्यर्थः धूमधर्मिकस्वव्यापकवन्हिकत्वनिर्णयस्यैव व्याप्ति-ग्रहोपयोगित्वसम्भवात्। किञ्च स्वपदं यदि धूमपरं तदा धूमव्याप-कत्वविशिष्टवह्निप्रसिद्धयैव व्यभिचारशङ्कानिराससम्भवात्तज्जन्य-त्वग्राहकतर्कानुसरणं व्यर्थं यदि च धूमान्यपरं तदा धूम एव मूल-शैथिल्यम्। तथापि वह्निजन्यत्वं वह्निनिष्ठजनकताप्रतियोगित्वं जनकत्वं तु स्वरूपसम्बन्धविशेषः पदार्थान्तरं वेति नव्यमतेनायं ग्रन्थः। अत एव प्राचां मते स्वत्वस्याननुगतत्वादालोकादिसाधारणमन्यथासि-द्धनिरूपकव्यापकतावच्छेदकीभूतवह्नित्वादिधर्मकत्वमेव वन्ह्यादि-कारणकत्वं तथा च धूमादौ तादृशधर्मावच्छिन्नसामानाधिकर-ण्यभानस्य सामग्रीसत्त्वदशायां वह्नौ धूमकारणत्वग्रह एव वह्निधूम-योर्व्याप्तिग्रहस्वरूपः स्वव्यापकसाध्यसामानाधिकरण्यावगाहित्वा-दिति मूलोक्ततर्कस्य तादृशकारणत्वग्राहकत्वानुरोधेनैव व्या-प्तिग्राहकत्वं सम्भवतीत्याशयेनाह समानाधिकरण्येनेति। प्रका-रे तृतीया। तथैव सामानाधिकरण्येनैव। गृह्णतः विषयी-कुर्वतः। तस्यैव वेति। कारणताग्रहस्यैव वेत्यर्थः। व्याप्तिपरि-

नस्य तथैव हेतुहेतुमद्भावं गृह्णतस्तस्यैव वा व्याप्तिपरिच्छेदकत्वा-
त् । विपर्य्यये तत्कोटिमात्रपर्य्यवसायिनश्च तर्कस्य तदभावको-
टिकशङ्कानिवर्त्तकत्वम् । अन्यथा धूमो यदि वन्हितच्छून्यजन्या-
न्यतरो न स्यात् जन्यो न स्याद्रिसादेरपि तथात्वापत्तेः । तथा

च्छेदकत्वात् व्याप्तिविषयत्वात् । वाकारोऽनास्थायाम् । स्वो-
त्पत्त्यव्यवहितप्राक्कालावच्छिन्नस्वाधिकरणवृत्तिकाभावप्रतियोगितान-
वच्छेदकत्वरूपाया एव व्यापकतायाः कारणताशरीरनिवि-
ष्टतया तदवच्छिन्नसामानाधिकरण्यपरिच्छेदेपि स्वसमानाधिक-
करणाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नसामानाधिकरण्यरू-
पाया अनुमित्युपयुक्तव्याप्तेः कारणताग्रहण विपर्यीकरणादिति
ध्येयम् । ननु तद्धर्मावच्छिन्नापादकाताकापत्तित्वेनैव तद्धर्मावच्छि-
न्नवत्ताबुद्धिं प्रति विरोधित्वाद्विशिष्टापादककस्य मूलोक्ततर्कस्य
कुतो वह्निजन्यत्वशङ्कानिवर्त्तकत्वमत आह विपर्यये तन्मात्रकोटि-
पर्यवसायिनश्चेति । विपर्यये स्वविशेष्यपक्षकापादकाभाववत्त्वा-
नुमाने । तन्मात्रपर्यवसायिन इति । तन्मात्रविधयताकस्यैवेत्यर्थः ।
तदभावकोटिकशङ्केति । अत्र शङ्कात्वमविवक्षितं तदभाववत्ताज्ञा-
नमात्रस्यैव निवतकत्वं बोध्यम् । तथा च तद्धर्मावच्छिन्नापादक-
ताकापत्तित्वमात्रं न तद्धर्मावच्छिन्नवत्ताबुद्धिविरोधितायां तन्त्र-
मिति भावः । मात्रपदस्य प्रयोजनमाह अन्यथेति। विपर्यये यत्कोटि-
र्भासते तदभावशङ्कायामेव तर्कस्य प्रतिबन्धकत्वे इत्यर्थः । व-
ह्नितच्छून्येति । वह्निजन्यवह्निशून्यजन्यतदन्यतरो न स्यादित्यर्थः । न
चोक्तान्यतरत्वत्वावच्छिन्नाभावस्याप्रसिद्धिः जन्यमात्रस्यैव वह्नि-
शून्यादृष्टादिजन्यत्वेन जन्यत्वत्वस्यैव लाघवेन तादृशाभावप्रतियो-
गितावच्छेदकत्वादिति वाच्यम् । प्रतीतिबलाद्गुरुधर्मस्यापि प्रति-
योगितावच्छेदकत्वस्वीकारात् तथात्वापत्तेरिति । वन्हिजन्यत्वा-
भावकोटिकशङ्कानिवर्त्तकत्वापत्तेरित्यर्थः। न चात्र विपर्ययेऽन्यतरत्व-
स्यैव पर्यवसानं न तु वह्निजन्यत्वस्येति कथं तदभावकोटिकशङ्का-
निवर्त्तकत्वप्रसक्तिरुक्ततर्कस्येति वाच्यम् । घटपटान्यतरत्वस्य घट-

पर्य्यवसायिता च क्वचिद्विशेषतो व्याप्त्या, सामान्यतोऽपि क्व चित्पक्षधर्म्मताबलात् । तत् सम्पत्तये चात्र वन्ह्यसमवहिताजन्यत्वेन

———

त्वादिस्वरूपत्ववत् वह्नितच्छून्यजन्यान्यतरत्वस्यापि वह्निजन्यत्वत-च्छून्यजन्यत्वस्वरूपतया वह्निजन्यत्वेऽपि विपर्ययस्य पर्यवसानसम्भ-वादिति भावः । तथा पर्यवसायिता चेति । विपर्यये तन्मात्रकोटिप-र्यावसायिता चेत्यर्थः । विशेषतो व्याप्त्येति । यद्धर्मावच्छिन्नाभावश-ङ्कायां तर्कस्य विरोधित्वमापाद्याभावे तद्धर्मावच्छिन्नस्य व्याप्यत्व-ग्रहादेव क्वचिद्विपर्यये तन्मात्रकोटिपर्यवसानं यथा पर्वतो यदि निर्व-ह्निः स्यान्निर्धूमः स्यादित्यादौ । तत्र ह्यापाद्यस्य निर्धूमत्वस्याभावे धूमे वन्हित्वावच्छिन्नस्य व्याप्तिग्रहादेव विपर्ययानुमाने वन्हिमात्रपर्यव-सायित्वमिति भावः । सामान्यतोपीति। यद्धर्मावच्छिन्नाभावशङ्कायां तर्कस्य विरोधित्वमापाद्याभावे तदितरधर्मावच्छिन्नस्य व्याप्तिग्रहाद-पि पक्षे धर्मताबलादेव क्वचिद्विपर्ययानुमाने तद्धर्मावच्छिन्नस्य पर्य-वसानम् । यथा नित्यभिन्नमिदं यदि नित्यान्यत्वे सति कार्यद्रव्यं न स्यात्तद्रव्यं न स्यादित्यादौ । तत्र हि विपर्ययानुमाने द्रव्यत्वेन नित्या-न्यत्वविशिष्टस्य कार्यद्रव्यत्वाभावस्याभावः सिद्ध्यन् नित्यान्यत्वा-भावस्य बाधाद्विशेष्याभावात्मके कार्यद्रव्यत्वे एव पर्यवस्यति।तथा च धूमो यदीत्यादिमूलोक्ततर्कस्यापि विपर्यये वन्हिजन्यत्वपर्यव-सायितया तदभावशङ्कानिवर्त्तकत्वमक्षतं तद्धर्मावच्छिन्नवत्तासं-शये तद्धर्मावच्छिन्नापादककापत्तित्वेनेव फलबलात् विशेष्यवत्ता-बुद्धिं प्रत्यपि विशेषणवत्तानिर्णयसहकृतविशिष्टापादककापत्ति-त्वेनैकप्रतिबन्धकत्वकल्पनादिति भावः । तत्सम्पत्तये । पक्षधर्म-तासम्पत्तये । अन्यथाऽपाद्याभावेनोत्पन्नत्वेन वह्न्यसमवहिताजन्य-त्वविशिष्टस्य वन्हिसमवहिताजन्यत्वस्याभावः सिद्ध्यन् वन्हिस-मवहितजन्यत्वरूपविशेष्याभाव एव पर्यवस्यतीति न स्यात् वह्न्य-समवहिताजन्यत्वरूपस्य विशेषणस्याभावमादायापि विशिष्टाभावस्य पर्यवसान सम्भवादिति भावः।ननु विशिष्टाभावस्यातिरिक्तत्वात् व-न्ह्यसमवहिताजन्यत्वेन विशेषित एव पक्षे कुतोविपर्ययानुमा-नस्य वन्हिसमवहितजन्यत्वपर्य्यवसायित्वमत आह विशेषणेति ।

# चिन्तामणेः तर्कः ।

तथा हि, धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वन्हिसमवहिताजन्यः स्यान्नोत्पन्नः स्यादित्यत्र किं

तथा कानिचिच्च नेति, अत्र च यस्य व्यतिरेकेऽपि इतरेभ्यस्तथाविधेभ्यो धूमोत्पत्तिमुपलभते तस्याऽहेतुत्वमेवाधारयति यथा रासभादेः, यस्य व्यतिरेके तादृशापरसकलान्वयेऽपि धूमानुत्पत्तिं पश्यति तस्य कारणत्वमेव निश्चिनुते यथा वन्हेः, तत्र चाऽकारणत्वसन्देहो विरोधितामासादयन्निवर्त्तते येन तर्केण तमाह धूम इत्यादि । अनुसन्धेयश्चावश्यं कार्य्यकारणभावग्रहः, तदधीन-

साक्षात्कारविरहादेव धूमकारणत्वसन्देहासम्भवात्तन्निरासकस्तर्को विफल एवेत्यतो धूमकारणत्वाभावनिर्णयस्य प्रकारमाह तत्रेति । अहेतुत्वमेवेति। तथा च तमन्तर्भाव्यैव कारणत्वाभावसहचरितधर्मवत्त्वग्रहो नानुपपन्न इति भावः । ननूक्तक्रमेण कारणत्वसन्देहस्य सामग्रीं सम्पाद्य तर्कस्य तन्निवर्त्तकत्वोपपादनेपि कारणतानिर्णायकत्वं तर्कस्य दुर्घटं प्रत्यक्षेण कारणत्वग्रहेऽन्वयव्यतिरेकज्ञानस्य हेतुतया तद्विलम्बात् कथं प्रत्यक्षतः कारणताग्रहः स्यादत आह यस्य चेति । तथा चान्वयव्यतिरेकज्ञानमप्यस्तीति भावः। तत्र चेति।धूमकारणत्वनिश्चये चेत्यर्थः।विरोधितामिति।निश्चयात्मकप्रत्यक्षे ग्राह्यसंशयस्यापि प्रतिबन्धकत्वमाहत्येदम्।ननु व्यभिचारशङ्कानिरासकस्तर्को दर्शनीयः स च धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्याकार एवेति वह्निजन्यत्वग्राहकतर्कस्य प्रदर्शनानौचित्यमत आह अनुसन्धेय

त्वाव्याप्तिबुद्धेः। सामानाधिकरण्येनान्वयव्यतिरेकहात् जायमा-

———

इति। अपेक्षणीय इत्यर्थः। कार्यकारणभावग्रह इत्यस्य वह्निधूमयो-रित्यादिः। कार्यकारणभावे इति पाठे तु अनुसन्धेय इत्यस्य निश्चे-तव्य इत्यर्थः। तदधीनत्वात्। कार्यकारणभावग्रहाधीनत्वात् अन्यथा धूमस्य वन्हिजन्यत्वानिर्णये बाधग्रहाभावादुक्ततर्क एव नावतरेत् को व्यभिचारशङ्कानिरासद्वारा व्याप्तिग्राहकः स्यात्, तथा च बाधनिर्णयविधया व्यभिचारशङ्कानिवर्त्तकतर्के मूलीभूतस्य वन्हिजन्यत्वनिर्णयस्य सम्पादकतयैव धूमो यदि वन्ह्यसमवहिताजन्यत्वे सतीत्यादिको मूलोक्ततर्को व्याप्तिग्रहे उपयुज्यते इति भावः। यत्तु व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहे विशेषणतावच्छेदकीभूतव्यापकतानिर्णयविधया कारणताज्ञानस्य हेतुत्वं कारणत्वस्य व्यापकतागर्भत्वादतः कारणतानिर्णयाधीनत्वं व्याप्तिबुद्धेरिति वदन्ति। तच्चिन्त्यम्। यद्यपि वन्हिजन्यत्वं स्वकारणवह्निकत्वं तच्चानन्यथासिद्धस्वव्यापकवन्हिकत्वमिति तत्रान्यथासिद्धभागो व्यर्थः धूमधर्मिकस्वव्यापकवन्हिकत्वनिर्णयस्यैव व्याप्तिग्रहोपयोगित्वसम्भवात्। किञ्च स्वपदं यदि धूमपरं तदा धूमव्यापकत्वविशिष्टवह्निप्रसिद्ध्यैव व्यभिचारशङ्कानिराससम्भवात्तज्जन्यत्वग्राहकतर्कानुसरणं व्यर्थं यदि च धूमान्यपरं तदा धूम एव मूलशैथिल्यम्।तथापि वह्निजन्यत्वं वह्निनिष्ठजनकताप्रतियोगित्वं जनकत्वं तु स्वरूपसम्बन्धविशेषः पदार्थान्तरं वेति नव्यमतेनायं ग्रन्थः। अत एव प्राचां मते स्वत्वस्याननुगतत्वादालोकादिसाधारणमन्यथासिद्ध्यनिरूपकव्यापकतावच्छेदकीभूतवह्नित्वादिधर्मकत्वमेव वन्ह्यादिकारणकत्वं तथा च धूमादौ तादृशधर्मावच्छिन्नसामानाधिकरण्यभानस्य सामग्रीसत्त्वदशायां वह्नौ धूमकारणत्वग्रह एव वह्निधूमयोर्व्याप्तिग्रहस्वरूपः स्वव्यापकसाध्यसामानाधिकरण्यावगाहित्वादिति मूलोक्ततर्कस्य तादृशकारणत्वग्राहकत्वानुरोधेनैव व्याप्तिग्राहकत्वं सम्भवतीत्याशयेनाह समानाधिकरण्येनेति। प्रकारे तृतीया। तथैव सामानाधिकरण्येनैव। गृह्णतः विषयीकुर्वतः। तस्यैव वेति। कारणताग्रहस्यैव वेत्यर्थः। व्याप्तिपरि-

नस्य तथैव हेतुहेतुमद्भावं गृह्णतस्तस्यैव वा व्याप्तिपरिच्छेदकत्वात् । विपर्य्यये तत्कोटिमात्रपर्य्यवसायिनश्च तर्कस्य तदभावकोटिकशङ्कानिवर्त्तकत्वम् । अन्यथा धूमो यदि वह्नितच्छून्यजन्यान्यतरो न स्यात् जन्यो न स्यादित्यादेरपि तथात्वापत्तेः । तथा

च्छेदकत्वात् व्याप्तिविषयत्वात् । वाकारोऽनास्थायाम् । स्वोत्पत्त्यव्यवहितप्राक्कालावच्छिन्नस्वाधिकरणवृत्तिकाभावप्रतियोगितानवच्छेदकत्वरूपाया एव व्यापकतायाः कारणताशरीरनिविष्टतया तदवच्छिन्नसामानाधिकरण्यपरिच्छेदेपि स्वसमानाधिककरणाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नसामानाधिकरण्यरूपाया अनुमित्युपयुक्तव्याप्तेः कारणताग्रहेण विषयीकरणादिति ध्येयम् । ननु तद्धर्मावच्छिन्नापादकताकापत्तित्वेनैव तद्धर्मावच्छिन्नवत्ताबुद्धिं प्रति विरोधित्वाद्विशिष्टापादककस्य मूलोक्ततर्कस्य कुतो वह्निजन्यत्वशङ्कानिवर्त्तकत्वमत आह विपर्यये तन्मात्रकोटिपर्यवसायिनश्चेति । विपर्यये स्वविशेष्यपक्षकापादकाभाववत्त्वानुमाने । तन्मात्रपर्यवसायिन इति । तन्मात्रविधयताकस्येवेत्यर्थः । तदभावकोटिकशङ्केति । अत्र शङ्कात्वमविवक्षितं तदभाववत्ताज्ञानमात्रस्यैव निवर्तकत्वं बोध्यम् । तथा च तद्धर्मावच्छिन्नापादकताकापत्तित्वमात्रं न तद्धर्मावच्छिन्नवत्ताबुद्धिविरोधितायां तन्त्रमिति भावः । मात्रपदस्य प्रयोजनमाह अन्यथेति। विपर्यये यत्कोटिभासने तदभावशङ्कायामेव तर्कस्य प्रतिबन्धकत्वे इत्यर्थः । वह्नितच्छून्येति । वह्निजन्यवह्निशून्यजन्यैतदन्यतरो न स्यादित्यर्थः । न चाक्तान्यतरत्वत्वावच्छिन्नाभावस्याप्रसिद्धिः जन्यमात्रस्यैव वह्निशून्याद्दृष्टादिजन्यत्वेन जन्यत्वत्वस्यैव लाघवेन तादृशाभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । प्रतीतिबलादगुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वस्वीकारात् तथात्वापत्तेरिति । वन्हिजन्यत्वाभावकोटिकशङ्कानिवर्त्तकत्वापत्तेरित्यर्थः। न चात्र विपर्ययेऽन्यतरत्वस्यैव पर्यवसानं न तु वह्निजन्यत्वस्येति कथं तदभावकोटिकशङ्कानिवर्त्तकत्वप्रसक्तिरुक्ततर्कस्येति वाच्यम् । घटपटान्यतरत्वस्य घट-

पर्य्यवसायिता च क्वचिद्विशेषतो व्याप्त्या, सामान्यतोऽपि क्व चित्पक्षधर्म्मताबलात् । तत् सम्पत्तये चात्र वन्ह्यसमवहिताजन्यत्वेन

---

त्वादिस्वरूपत्ववत् वह्नितच्छून्यजन्यान्यतरत्वस्यापि वह्निजन्यत्वतच्छून्यजन्यत्वस्वरूपतया वह्निजन्यत्वेपि विपर्ययस्य पर्यवसानसम्भवादिति भावः । तथा पर्यवसायिता चेति । विपर्यये तन्मात्रकोटिपर्यवसायिता चेत्यर्थः । विशेषतो व्याप्त्येति । यद्धर्मावच्छिन्नाभावशङ्कायां तर्कस्य विरोधित्वमापाद्याभावे तद्धर्मावच्छिन्नस्य व्याप्यत्वग्रहादेव क्वचिद्विपर्यये तन्मात्रकोटिपर्यवसानं यथा पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादौ । तत्र ह्यापाद्यस्य निर्धूमत्वस्याभावे धूमे वन्हित्वावच्छिन्नस्य व्याप्तिग्रहादेव विपर्ययानुमाने वन्हिमात्रपर्यवसायित्वमिति भावः । सामान्यतोपीति। यद्धर्मावच्छिन्नाभावशङ्कायां तर्कस्य विरोधित्वमापाद्याभावे तदितरधर्मावच्छिन्नस्य व्याप्तिग्रहादपि पक्षे धर्मताबलादेव क्वचिद्विपर्ययानुमाने तद्धर्मावच्छिन्नस्य पर्यवसानम् । यथा नित्यभिन्नमिदं यदि नित्यान्यत्वे सति कार्यद्रव्यं न स्यात्तद्रव्यं न स्यादित्यादौ । तत्र हि विपर्ययानुमाने द्रव्यत्वेन नित्यान्यत्वविशिष्टस्य कार्यद्रव्यत्वाभावस्याभावः सिद्ध्यन् नित्यान्यत्वाभावस्य बाधाद्विशेष्याभावात्मके कार्यद्रव्यत्वे एव पर्यवस्यति।तथा च धूमो यदीत्यादिमूलोक्ततर्कस्यापि विपर्यये वन्हिजन्यत्वपर्यवसायि तया तदभावशङ्कानिवर्त्तकत्वमक्षतं तद्धर्मावच्छिन्नवत्तासंशये तद्धर्मावच्छिन्नापादककार्पात्तित्वेनेव फलबलात् विशेष्यवत्ताबुद्धिं प्रत्यपि विशेषणवत्तानिर्णयसहकृतविशिष्टापादकापात्तित्वेनैकप्रतिबन्धकत्वकल्पनादिति भावः । तत्सम्पत्तये । पक्षधर्मतासम्पत्तये । अन्यथाऽपाद्याभावेनोत्पन्नत्वेन वह्न्यसमवहिताजन्यत्वविशिष्टस्य वन्हिसमवहिताजन्यत्वस्याभावः सिद्ध्यन् वन्हिसमवहितजन्यत्वरूपविशेष्याभाव एव पर्यवस्यतीति न स्यात् वह्न्यसमवहिताजन्यत्वरूपस्य विशेषणस्याभावमादायापि विशिष्टाभावस्य पर्यवसान सम्भवादिति भावः।ननु विशिष्टाभावस्यातिरिक्तत्वात् वन्ह्यसमवहिताजन्यत्वेन विशेषित एव पक्षे कुतोविपर्ययानुमानस्य वन्हिसमवहितजन्यत्वपर्य्यवसायित्वमत आह विशेषणेति ।

पक्षो विशेष्यः। विशेषणवत्त्वेनोपस्थिते विशिष्टाभावबुद्धेर्विशेष्याभावमात्रावलम्बितत्वात्। तथोपस्थितिविरोधि चावन्हेरित्यादि शङ्काद्वयमग्रे निरसनीयम्। वस्तुतो वन्हयजन्यमपि वन्हिसमवहितजन्यं वन्ह्यसमवहिताजन्यञ्च सम्भवतीति वन्हिजन्यत्वपर्य्यव-

———

विशिष्टाभावस्य विशेष्यविशेषणयोः प्रत्येकाभावाभ्यामनतिरेकादिति भावः। ननूक्तविशेषणवत्तानिश्चये सत्येवोक्ततर्कस्य विशेष्याभावरूपे वन्हिसमवहितजन्यत्वे पर्य्यवसानं स्यात् स एव तु नास्ति वन्हिसमवधानं विनापि धूमो भविष्यतीति शङ्कया प्रतिबन्धादित्यत आह तथोपस्थितीति। वन्ह्यसमवहिताजन्यत्वेन धूमोपस्थितीत्यर्थः। अग्रे अवन्हेरेव भविष्यतीत्यादिग्रन्थेन नियमान्तर्भावानन्तर्भावाभ्यां शङ्काद्वैविध्यम्। न चोक्ततर्कस्य वन्हिसमवहितजन्यत्वग्राहकत्त्वेपि धूमस्य वन्हिजन्यत्वशङ्कायां बाधकाभाव इति वाच्यम्। वन्ह्यसमवहिताजन्यत्वे सति वन्हिसमवहितजन्यत्वावच्छेदेन वन्हिजन्यत्वस्यालोकादौ पूर्वं गृहीतत्वात्तादृशजन्यत्वग्राहकतर्कस्यापि व्यावर्त्तकधर्मदर्शनसम्पादकतयैव वन्हिजन्यत्वशङ्कानिवर्त्तकत्वादिति भावः। उक्तकल्पे दूषणाभिधानपूर्वकं कल्पान्तरमाह वस्तुत इति। वन्ह्यजन्यमपि वन्हिसमवहितजन्यं वन्ह्यसमवहिताजन्यं सम्भवतीति। तथा च वन्ह्यसमवहिताजन्यत्वे सति वन्हिसमवहितजन्यत्वावच्छेदेन वन्हिजन्यत्वस्याऽसत्त्वात् वन्हिसमवहितजन्यत्वग्राहकस्तर्को व्यावर्त्तकधर्मदर्शनसम्पादकतयापि न धूमधर्मिकवन्हिजन्यत्वशङ्कानिवर्त्तको भवितुमर्हतीति भावः। वन्हिसमवहितजन्यत्वं वन्हिसमवहितजन्यत्वशब्दार्थः। वन्हिजन्यत्वपर्य्यवसितं वन्हिजन्यत्वस्वरूपम्। यद्यपि वन्हिसमवहितवान् धूमादित्यादिस्थलीयव्याप्तिग्रहोपयुक्तस्य वन्हिसमवहितजन्यत्वस्य ग्राहकत्वाभिप्रायेण वन्हिसमवहिताजन्यत्वमापादकीकृत्यैव मूलसामञ्जस्यं वन्हिजन्यत्वपर्यवसितोक्तिर्विफला, तथापि अवन्हेरेव भविष्यतीत्याद्युत्तरग्रन्थपर्यालोचनया वन्हिमान् धूमादित्यादिप्रसिद्धस्थलीयव्याप्तिग्रहोपयुक्तस्य वन्हिजन्यत्वस्य ग्राहकतर्क एव मूलस्य तात्पर्य्यावधारणात् तथा व्याख्यातमिति ध्ये-

सितं वन्हिसमवहितजन्यत्वं वाच्यं तथा च घटादौ व्यभिचारवा-
रणाय आपाद्यकोटिप्रतियोगिविशेषणार्थकं सप्तन्तम्। अजन्ये
जन्ये च नान्तरीयके व्यभिचारवारणाय जन्य इति। तदर्थस्तु
वन्ह्यसमवधानकालीनवन्हितत्समवधानेतरयावत्कारणजन्यत्वं त-

---

यम्। यद्यपि वन्हिसमवहितजन्यत्वस्य वन्हिजन्यत्वपर्य्यवसितत्वेपि
धूमो यदि वन्ह्यसमवहिताजन्यत्वे सति वन्हिजन्यो न स्यात्तदा ज-
न्यो न स्यादित्येवं विशिष्टमापादकीकृत्य तर्कः सम्भवत्येव, न च नान्त-
रीयकवन्हिके व्यभिचारः, वन्हिजन्यत्वाभावमात्रस्यापादकत्वमत
इवात्रापि मते वन्ह्यसमवधानकालीनवन्हितत्समवधानेतरयाव-
त्कारणकत्वरूपस्यैव जन्यत्वस्यापाद्यकोटौ निवेश्यत्वेन तद्वारणस-
म्भवात्। तथापि विशिष्टस्यापादकत्वे विपर्य्यये वन्हिजन्यत्वमात्रप-
र्य्यवसायित्वार्थं वन्ह्यसमवहिताजन्यत्वस्य पक्षविशेषणस्यानुसर्त-
व्यत्वे गौरवमवन्हेरेव भविष्यतीत्यादिशङ्कायाः प्रकृतापत्त्यप्रतिब-
न्धकत्वं च स्यात् तादृशपक्षधर्मतासम्पत्तिमात्रप्रतिकूलत्वादतः के-
वलं वन्हिजन्यत्वाभावमापादकीकृत्याह तथा चेति। जन्यत्वाभाव-
स्वरूपेऽनुयोगिनि विशेषिते घटादौ व्यभिचारतादवस्थ्यमत उक्तं
प्रतियोगीति। तथा च धूमो यदि वन्हिजन्यो न स्यात् वन्ह्यसमवहि-
ताजन्यत्वविशिष्टजन्यो न स्यादित्येवमेव तर्क इत्यापाद्यस्यापि घटादौ
सत्त्वान्न व्यभिचार इति भावः। तत्र आपाद्यकोट्यन्तर्गतस्य मूलोक्तज-
न्यपदस्य व्यावृत्तिमाह अजन्य इति। तथा च वन्ह्यजन्ये गगना-
दौ वन्ह्यसमवहिताजन्यत्वस्य सत्त्वेपि तद्विशिष्टजन्यत्वस्य व्यतिरेक-
सत्त्वान्न व्यभिचारः इति भावः। जन्ये चेति। चकारव्यत्ययेन वन्हि-
व्यधिकरणे घटादौ नान्तरीयकवन्हिके चेत्यर्थः। नातो विवक्षितसप्त-
न्तार्थस्य व्यधिकरणे घटादौ सत्त्वेपि न्यूनतेति भावः। वन्ह्यजन्यत्वे सति
वन्हिव्याप्यस्वसामग्रीको नान्तरीयकवन्हिकस्तत्तद्रासभादिस्तत्र
यथाश्रुतजन्यत्वस्य प्रवेशेनापि व्यभिचारस्यावारणादाह तदर्थस्त्विति।
तथा च वन्ह्यसमवहिताजन्यत्वविशिष्टजन्यत्वस्य नान्तरीयकतत्तद्रा-
सभादौ सत्त्वेपि वन्ह्यसमवधानकालीनवन्हितत्समवधानेतरयाव-

थाविधयावत्कारणकत्वमिति यावत्।तथा च वन्ह्यसमवहिताजन्यत्वे सति वन्ह्यसमवधानकालीनवन्हितत्समवधानेतरयावत्कारणको

---

त्कारणजन्यत्वविरहान्न व्यभिचारः । जन्यत्वाप्रवेशे लाघवादाह तथाविधेति । वन्ह्यसमवधानकालीनवन्हितत्समवधानेतरेत्यर्थः । यद्यपि धूमेतरसामग्र्यजन्यत्वं सत्यन्तेनाभिधाय मूलोक्तजन्यत्वस्य यथाश्रुतस्य प्रवेशेपि नान्तरीयकवन्हिके व्यभिचारो वारयितुं शक्यते, तथाप्यवन्हेरेव भविष्यतीति शङ्कायास्तादृशतर्के प्रतिकूलत्वाभावाद्वक्ष्यमाणग्रन्थासङ्गतिभिया तन्नाभिहितम् । सत्यन्तमन्तर्भाव्य समुदितमापाद्यमाह तथा चेति।अत्र च वन्ह्यजन्यतत्समानाधिकरणघटादौ व्यभिचारवारणाय सत्यन्तम्।स्वसमानाधिकरणवन्हिमद्भिन्नक्षणाव्यवहितप्राक्क्षणको यो यस्तदन्यत्वं तदर्थः। महाप्रलयानङ्गीकर्तृमते वन्हिमदन्यस्वाव्यवहितपूर्वक्षणकान्यत्वस्याप्रसिद्ध्या तदन्यत्वविशिष्टस्य वन्ह्यसमवधानकालीनवन्हितत्समवधानेतरयावत्कारणकत्वरूपस्यापाद्यप्रतियोगिनोऽप्रसिद्धिरतः स्वसमानाधिकरणेति वन्हेर्विशेषणम् । नान्तरीयकवन्हिकस्यापि वन्ह्यसमवधानकालीनकिञ्चित्कारणकत्वात् तत्र व्यभिचारः स्यादत उक्तं यावदिति । तथा च तस्य यावत्कारणं न वन्ह्यसमवधानकालीनं तथात्वे वन्ह्यसमवधानकालेप्युत्पत्तिप्रसङ्गादतो न तत्र व्यभिचारः।वन्ह्यसमवधानकालीनत्वं च स्वसमानाधिकरणवन्हिमदन्यक्षणवृत्तित्वम्।निरुक्तवन्ह्यसमवहिताजन्यत्वविशिष्टस्य वन्हिमद्भिन्नक्षणावृत्तियावत्कारणकत्वस्याप्रसिद्धिः प्रलयेपि ब्रह्माण्डान्तरे वन्हिसत्त्वेन तत्कालीनकर्मादौ प्रसिद्ध्यसम्भवादेकदा सकलब्रह्माण्डनाशोपगमे तु पक्षीभूतपुरोवर्तिधूमव्यक्ताविष्टापत्तिरतः स्वसमानाधिकरणेति । स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वविशिष्टस्य स्वसमानाधिकरणवह्निमद्भिन्नक्षणवृत्तियावत्कारणत्वस्याप्रसिद्धत्वादाह वह्नितत्समवधानेतरेति । इदं च यावत्कारणे विशेषणम् । तथा च धूम एवापाद्यस्य प्रतियोगिप्रसिद्धिः । एकैकस्य प्रवेशे तथैवाप्रसिद्धितादवस्थ्यमतो द्वयमुपात्तम् । इत्थञ्च

धूमो यदि वन्हिजन्यो न स्यात्स्वसमानाधिकरणवन्हिमद्भिन्नस्वाव्यवहितप्राक्क्षणकान्यत्वे सति स्वसमानाधिकरणवन्हिमद्भिन्नक्षणवृत्तिवन्हितत्समवधानेतरयावत्कारणको न स्यादिति समुदितार्थनिष्कर्षः । न च यावन्मध्यगतानां तत्तद्धूमावयवतत्संयोगविशेषरूपाणामेव तत्तद्धूमकारणानां तद्वन्हिसमवधानकालीनत्वाभावादुक्ततर्के इष्टापत्तिरिति वाच्यम् । दण्डस्य घटजनकतायां भ्रम्यादिकपालद्वयसंयोगपर्यन्तस्येव वन्हिविशेषस्यापि धूमविशेषजनकतायां तत्तद्धूमावयवतत्संयोगादीनां प्रत्यासत्तितया तत्तद्वन्हिनिष्ठतद्धूमीयकारणताघटकप्रत्यासत्तीतरार्थकेन समवधानेतरपदेनैव वारणादिति दिक् । अत्रेदं तत्वम् । आपादकवत्त्वांशे आहार्यरूपापाद्यव्याप्यवत्तानिश्चयः पक्षे आपाद्याभाववत्तानिश्चयश्च द्वयमापत्तेर्हेतुः । एवञ्च धूमवानयं पर्वतो निर्धूमत्वव्याप्यनिर्वन्हित्ववान् स्यादित्येवं निश्चयः पर्वतो निर्धूमः स्यादित्यापत्तौ हेतुः । न च बाधसत्वे विशिष्टबुद्ध्यात्मिकाया आपत्तेरसम्भवः, अनाहार्यविशिष्टबुद्धित्वस्यैव बाधप्रतिबध्यतावच्छेदकत्वात् आपत्तेस्त्वाहार्य्यत्वात् । आपत्त्यन्यविशिष्टबुद्धित्वेनैव बाधधीप्रतिबध्यत्वं तेनापत्तेः क्वचिदनाहार्यत्वेऽपि न क्षतिरिति तु न युक्तम्। एकविधेयताकापत्तावन्यस्य बाधनिर्णयदशायामपि प्रकारताप्रसङ्गात् । आपत्तित्वं पुनरत्रेदमापादयामीति प्रतीतिसाक्षिको मानसत्वव्याप्यजातिविशेषः, तर्कत्वमपि तदेव, फलं च तर्कस्यापादकवत्ताबोधप्रतिबन्धः, प्रतिबन्धकता च शुद्धस्यापादकतास्थले तद्धर्मावच्छिन्नवत्ताबुद्धौ तद्धर्मावच्छिन्नापादकताकापत्तित्वेन विशिष्टस्यापादकतास्थले तु विशेष्यवत्ताबुद्धौ विशेषवत्तानिश्चयसहकृतविशिष्टापादकताकापत्तित्वेन विशेषणवत्ताबुद्धौ तु विशेष्यवत्तानिश्चयसहकृतविशिष्टापादकताकापत्तित्वेनापीति नव्याः । स्वारसिकापादकवत्ताशङ्कायास्तर्ककारणीभूतेनापादकाभावव्याप्यापाद्याभाववत्तानिश्चयेनापादकव्यापकतया गृहीतस्यापाद्यस्याभाववत्तारूपनिश्चयेन आहार्य्यापादकवत्ताज्ञानसम्पादकेन तद्बाधनिश्चयेनैव वा प्रतिबन्धादाहार्यापादकवत्ताशङ्कायाः प्रतिबन्ध एव तर्कस्य फलम्, भवति ह्यनिष्टप्रदर्शनेनापादकवत्ताबोधेच्छाया विच्छेद इति कारणाभावादाहार्यशङ्काया अनुत्पाद इति तु मिश्रादिसम्मतः प्राची-

न स्यादिति पर्य्यवसितोऽर्थः । यत्तु नान्तरीयवन्हिके व्यभिचारवारणाय आपादककोटावेव विशेषणं सत्यन्तार्थः । स च वन्ह्यघटितसामग्र्यजन्यत्वमिति । तन्न । प्राक् तदसिद्धेः । अत्रा-

नः पन्थाः । स चायं तर्कः पञ्चविधः । आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गभेदादित्याचार्याः । तत्र स्वापेक्षापादकप्रसङ्ग आत्माश्रयः । अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ च ग्राह्या । तत्राद्या यथा एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति।द्वितीया तु घटोयं यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यादिति । तृतीया च अयं घटो यद्येतद्घटवृत्तिः स्यात्तथात्वेनोपलभ्येतेति। स्वापेक्षापेक्षित्वनिबन्धनः प्रसङ्गोऽन्योन्याश्रयः । यथाऽयं घटो यद्येतद्घटजन्यजन्यः स्यादेतद्घटभिन्नः स्यादित्युत्पत्तौ । एवं ज्ञप्तौ स्थितौ च स्वयमुदाहार्यम् । स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनःप्रसङ्गः चक्रकः।पूर्वोक्त एवापादके जन्यपदान्तरमन्तर्भाव्योदाहरणम्। अपेक्षा साक्षात्परम्परासाधारणी ग्राह्या।अनवस्था पुनरप्रामाणिकानन्तप्रवाहमूलप्रसङ्गः।यथा घटत्वं यदि यावद्घटहेतुवृत्ति स्याद्घटाजन्यवृत्ति न स्यादिति।उक्तचतुष्कान्यप्रसङ्गः प्रमाणबाधितार्थकःप्रसङ्गः । सोपि द्विविधः व्याप्तिग्राहको विषयपरिशोधकश्च। तत्राद्यो यथा धूमो यदि वन्हिव्यभिचारी स्याद्वन्हिजन्यो न स्यात्, द्वितीयस्तु पर्वतो यदि निर्वन्हिः स्यान्निर्धूमः स्यादित्यादिः, विषयस्य वन्ह्यादेः शङ्कानिवृत्तिद्वारा निश्चायकत्वेन परिशोधकत्वादित्यलं विस्तरेण । वन्ह्यसमवहिताजन्यत्वस्य सत्यन्तार्थस्य नान्तरीयकवन्हिकेपि सत्त्वादाह स चेति । सत्यन्तार्थश्चेत्यर्थः । तथा च धूमो यदि वन्हिघटितसामग्र्यजन्यत्वे सति वन्हिजन्यो न स्यादुत्पन्नो न स्यादित्येवं तर्कावतार इति भावः । पक्षे वन्ह्यघटितसामग्र्यजन्यत्वानिश्चयं विना यथोक्ततर्कस्य न वन्हिजन्यत्वशङ्कानिवर्तकत्वं विशेषणवत्तानिश्चयसहकृतस्यैव विशिष्टापादकतर्कस्य विशेष्यवत्तानिश्चयविरोधित्वात् स चात्र न सम्भवति धूमे वन्हिजन्यत्वसंशयदशायां वन्ह्यघटितसा-

धूमोऽवन्हेरेव भविष्यति क्वचिद्वन्हिं विनापि भविष्यति अहेतुक एव वोत्पत्स्यत इति शङ्का स्यात्, सर्वत्र स्वक्रि-

---

या द्वयी शङ्का इष्टापत्तिपर्य्यवसायिनी । तृतीया पुनरापादका-प्रसिद्धिपर्य्यवसायिनी । अवन्हेः वन्हिशून्यात् । तदुपादानमिति करणव्युत्पत्त्या तदीयकार्य्यप्रयोजकताज्ञानपरम्, तादृशान्वयव्य-

---

प्रग्न्यजन्यत्वस्यापि सन्दिग्धत्वादित्याह प्रागिति । वन्हिजन्यत्वसिद्धेः प्राक् वन्ह्यघटितसामग्र्यजन्यत्वस्यासिद्धेरित्यर्थः । यद्यपि वन्ह्यघटितसामग्रीमेव धूमेतरसामग्रीत्वेन निवेश्योक्ततर्कोपि सम्यगेव धूमेतरसामग्र्यजन्यत्वस्य पक्षीभूतधूमे प्रागपि निश्चेतुं शक्यत्वात्, तथापि तादृशतर्के अवन्हेरेव भविष्यतीत्यादिशङ्कायाः प्रतिकूलत्वाभावाद्वक्ष्यमाणग्रन्थासङ्गतिरतस्तन्नाशङ्कितम् । ननु स्वोक्तवस्तुतस्त्वित्यादिकल्पे वन्ह्यसमवहिताजन्यत्वस्य पक्षाविशेषणत्वात्तथोपस्थितिविरोधितार्थमवन्हेरेवेत्यादिमूलोक्तशङ्काद्वयमसङ्गतमाह अत्रेति । अत्र । सत्यन्तस्यापाद्यकोटिनिविष्टत्वकल्पे । इष्टापत्तीति । वन्ह्यसमवहितजन्यत्वोपगमे वन्ह्यसमवहिताजन्यत्वविशिष्टजन्यत्वाभावरूपस्यापाद्यस्य पक्षे सम्भवितत्वादिति भावः । तृतीया । अहेतुक एवोत्पत्स्यत इत्याशङ्का । आपादकादीति । उत्पत्तिमात्रस्य हेत्वधीनत्वे वन्ह्यधीनजन्यत्वाप्रसिद्ध्या तदभावस्यापादकत्वासम्भवादिति भावः । आदिपदाद्युक्तयावत्कारणनिरूपितजन्यत्वाप्रसिद्ध्या तदभावात्मकस्यापाद्यस्याप्रसिद्धेः परिग्रहः । अवन्हेरित्यस्य वन्हिभिन्नादित्यर्थकत्वे वन्हिभिन्नाद्भविष्यतीत्याशङ्कायां वन्ह्यसमवहिताजन्यत्वगर्भापाद्ये इष्टापत्तिपर्यवसायित्वं न सम्भवतीत्यतो व्याचष्टे अवन्हेरिति । तथा च न विद्यते वन्हिर्येनेति बहुव्रीहिरिति भावः । तदीयेति । तस्योपादानविषयीभूतस्य वन्हेर्यत्कार्यं तद्धूमव्यक्तिरूपं वन्हेस्तत्प्र-

तिरेकानुविधानबोधपरं वा। अग्रेतनमपि स्वक्रियापदं तत्परमेव। कृत्यादेः शङ्काप्रतिबन्धकत्वे मानाभावात्, कारणताग्रहोत्तरकालीनत्वाच्च। यद्यपि चैतावता धूमत्वावच्छिन्नं प्रति वन्हेर्जनकत्वं नाऽऽयाति तृणारणिमणिन्यायेन वैकल्पिककारणतायामपि तथात्वसम्भवात्, तथापि विशेषाणां कार्य्यकारणभावग्रहस्तर्केण तद्विरो-

---

योजकत्वज्ञानमेव पक्षीभूते तद्धूमे वन्ह्यसमवहितजन्यत्वशङ्काप्रतिबन्धकं तद्धूमव्यापकत्वगर्भस्य तद्धूमप्रयोजकत्वस्य प्रत्यक्षत एव वन्हौ सुग्रहत्वादिति भावः। ननु तद्धूमप्रयोजकत्वं न तद्धूमजनकत्वं तर्कपूर्वं तन्निश्चयस्यासत्त्वेन शङ्काप्रतिबन्धकत्वासम्भवात्, नापि तद्धूमव्यापकत्वमात्रं तन्निश्चयेऽपि वन्ह्यसमवहितजन्यत्वशङ्कोत्पादादत आह तादृशेति। उपादानविषयीभूतवन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानमेव पक्षीभूततद्धूमे व्यावर्त्तकधर्मदर्शनविधया वन्ह्यसमवहितजन्यत्वशङ्काप्रतिबन्धकं तादृशान्वयव्यतिरेकानुविधायित्वावच्छेदेन वन्हिजन्यत्वं तु पूर्वं न गृहीतं नान्तरीयकवन्हिके व्यभिचारग्रहादतो न तर्कवैयर्थ्यमिति भावः। तत्परम्। उक्तप्रयोजकत्वादिज्ञानपरम्। स्वस्य क्रिया यस्मादिति व्युत्पत्त्या तल्लाभादिति भावः। कृत्यादेरित्यादिना क्रियासंग्रहः। कामिनीजिज्ञासादेरिव कृत्यादेरपि मणिमन्त्रादिन्यायेन शङ्काविरोधित्वसम्भवादाह कारणतेति। ननूक्ततर्कस्य धूमविशेषपक्षकत्वे तद्धर्मिकवन्हिजन्यत्वशङ्कानिरासद्वारा तत्र धूमे वन्हिजन्यत्वग्राहकत्वेपि धूमान्तरे वन्हिजन्यत्वशङ्कासम्भवाद्धूमत्वावच्छेदेन वन्हिजन्यत्वनिश्चयो न सम्भवति अपेक्षितश्च धूमत्वावच्छेदेन व्याप्तिग्रहे स एवेत्याशयेन शङ्कते यद्यपीति। ननु धर्मान्तरस्यावच्छेदकत्वे बाधाद्वन्हिजन्यत्वग्राहकं प्रमाणमेव धूमत्वस्य तदवच्छेदकत्वं ग्राहयेदत आह तृणेति। वैकल्पिककारणतायाम्। वैजात्यावच्छिन्नकार्यतानिरूपितकारणतायाम्। अतस्तृणादेर्वैकल्पिके हेतुताविरहेपि न क्षतिः। तथात्वसम्भवात्। धूमस्य वन्हिजन्यत्वसम्भवात्। तथा च वन्हौ तृणादिप्रत्येकजन्यतास्थले यथेतरधर्मस्यावच्छेदक-

धशङ्कायामपनीतायां जायमानः सामान्यव्यभिचारानिर्णयानुगता-गुरुविशेषरूपान्तरानुपस्थितिलाघवप्रतिसन्धानादिवशात्सामान्यत एव तं परिच्छिनत्ति। प्रामाणिकौ च तथैवान्वयव्यतिरेकौ। फल-बलेन लाघवज्ञानादिशून्याया एव सामान्यव्यभिचारशङ्कायाः प्र-तिबन्धकत्वं कल्प्यते। अपरे तु धूमत्वावच्छिन्नस्य वन्ह्यजन्यत्वे-

---

त्वे बाधविरहाद् वन्हित्वस्य नावच्छेदकत्वासिद्धिः तथा धूमस्य व-न्हिजन्यतायामपि धर्मान्तरस्यावच्छेदकत्वे बाधानिश्चयान्न धूम-त्वस्य वन्हिजन्यतावच्छेदकत्वसिद्धिरिति भावः। [ तथापीति तर्के-ण विरोधिशङ्कायामपनीतायां जायमानो विशेषणां कार्यकारणभा-वग्रहश्चेत्यन्वयः ] तद्विरोधीति। कार्यकारणभावग्रहविरोधीत्यर्थः। वन्हौ तृणजन्यत्वस्य वन्हित्वावच्छेदेनाग्रहादाह सामान्यव्यभिचा-रानिश्चयेति। वन्हौ धूमजनकत्वस्य दण्डादौ घटादिजनकत्वस्य द्रव्यत्वावच्छेदेनाऽग्रहादाह अनुगतागुरुविशेषरूपान्तरानुपस्थिती-ति। तथा च वन्हित्वादेस्तादृशविशेषरूपस्योपस्थित्या न द्रव्यत्वेन हेतुत्वमिति। अत्र तद्व्यक्तित्वयोः कपालत्वघटत्वयोर्वा समुपस्थिता-वपि द्रव्यत्वावच्छिन्नं प्रति मूर्त्तत्वेन समवायिकारणताग्रहार्थमाह अनुगतेति। आरण्यकान्यदण्डत्वादेरनुगतविशेषरूपान्तरस्योप-स्थितावपि घटं प्रति दण्डत्वेन हेतुत्वस्य ग्रहादगुरुपदं सामान्यतुल्य-शरीरार्थकम्। ज्ञानत्वाद्यनुगतागुरुधर्मस्योपस्थितावपि विशिष्टबु-द्धौ विशेषणज्ञानत्वेन हेतुत्वग्रहादुक्तं विशेषेति। ज्ञानत्वं तु न वि-शेषणज्ञानत्वस्य विशेष इत्यदोषः। नीलादिजन्यत्वस्य पाकाजन्य-नीलत्वादिना तृणादिजन्यत्वस्य मण्याद्यजन्यवन्हित्वादिना सा-मान्यधर्मेणावच्छेदो न गृह्यते किं तु वंजात्यांवशेषेणैवात उक्तं ला-घवप्रतिसन्धानेति। तथा च तत्र लाघवप्रतिसन्धानविरहादेव नोक्तधर्मावच्छेदेन जन्यत्वग्रहः। लाघवप्रतिसन्धानस्य न सार्व-त्रिकत्वमत उक्तम् आदीति। तथा च गौरवज्ञानाभावस्यापेक्षि-तत्वेन पाकाजन्यनीलत्वादौ गौरवग्रहादेव न तदवच्छेदेन नीला-दिजन्यत्वग्रह इति भावः। सामान्यतः। सामान्यधर्मावच्छेदेन।

तम् । कार्यकारणभावम् । परिच्छिनत्ति । अवगाहते । नन्वेकवह्नि-धूमयोरन्वयव्यतिरेकाभ्यामन्ययोरपि वन्हिधूमयोः कार्यकारणभावग्रहेऽतिप्रसङ्ग इत्यत आह प्रामाणिकाविति । कारणताग्राहकतया प्रमाणसिद्धावित्यर्थः । तथैव । सामान्यत एव । तथा च यत्सामान्यालिङ्गितयोर्विशेषयोरन्वयव्यतिरेकग्रहस्तत्सामान्यावच्छेदेनैव कार्यकारणभावग्रह इति सामान्यविशेषभावस्य नियामकत्वान्नातिप्रसङ्ग इति भावः । ननु धूमत्वरूपेण व्यभिचारशङ्कायाः सत्त्वात्कथं तदवच्छेदेन प्रत्यक्षतो वह्निजन्यत्वनिर्णयः स्यादत आह फलेति । लाघवादीत्यादिना विशेषदर्शनादिपरिग्रहः । प्रतिबन्धकत्वमिति । प्रत्यक्षनिश्चये ग्राह्यसंशयस्यापि प्रतिबन्धकत्वमतेनेदम् । कार्यानुत्पत्तिव्याप्यत्वमेव वात्र प्रतिबन्धकत्वम् । तथा च लाघवादिज्ञानस्यापरकोटिविशिष्टधीप्रतिबन्धकत्वान्न कारणत्वनिश्चयानुपपत्तिरिति भावः । अत्र च दण्डस्य घटजनकतायां चक्रभ्रम्यादिकपालद्वयसंयोगपर्यन्तमिव वह्नेर्धूमत्वावच्छिन्नं प्रति जनकतायां रूपविशेषपरावृत्त्यादितत्तद्धूमावयवसंयोगपर्यन्तं प्रत्यासत्तिः, सम्बन्धाननुगमस्यादोषत्वाच्च न क्षतिरिति प्राञ्चः । केचित्तु धूमसामान्ये वह्नित्वेन हेतुतायां कार्यकारणयोः कालिकी प्रत्यासत्तिर्विशेषसामग्र्यपेक्षणाच्च नातिप्रसङ्ग इति प्राहुः । यत्तु समवायेन धूमत्वावच्छिन्नं प्रति स्वजन्यरूपवदवच्छेद्यसंयोगसम्बन्धेन वह्निः कारणं धूमसमवायिमात्रे वह्निजन्यरूपविशेषवत्परमाण्ववच्छेद्यसंयोगस्य सत्त्वाद्धूमद्व्यणुकसमवायिन्यपि स्वजन्यरूपविशेषवत् परमाण्वन्तरावच्छेद्यसंयोगसम्बन्धेन वह्नेः संम्भवादिति । तच्चिन्त्यम् । इदं त्ववधातव्यम् । अस्तु यथा तथा वह्निधूमयोः कार्यकारणभावग्रहः, न चासौ संयोगेन वह्निधूमयोर्व्याप्तिग्रहार्थमुपयुज्यत इति । धूमत्वावच्छेदेन वह्निजन्यत्वग्रहार्थं धूमसामान्यपक्षकं तर्कमभ्युपगच्छतां मतं दर्शयति अपरेत्वित्यादिवदन्तीत्यन्तग्रन्थेन । अजन्ये व्यभिचारवारणाय जन्यत्वविशिष्टस्येति । जन्यत्वं तु तदर्थस्त्वित्यादिना स्वोक्तरूपं ग्राह्यं नातो नान्तरीयकवह्निके व्यभिचारः । यद्यपि वन्ह्यसमवहिताजन्यत्वविशिस्य जन्यत्वस्यैव व्यतिरेक आपादयितु युक्तः मूले जन्यत्वस्यैव विशेष्यविधयोल्लेखात्, तथापि वन्ह्यसमवहिताजन्यत्वस्य विशेष-

न जन्यत्वविशिष्टस्य यथाश्रुतवन्ह्यसमवहिताजन्यत्वस्य व्यतिरेक एवापादनीयः, तच्चोक्तन्यायेन तादृशवन्हियुक्तकारणकलापजन्यत्वग्रहेण तद्व्यतिरेकजन्यत्वशङ्कानिरासात् वन्हिविरहेऽपि निरतिशयस्यैव तादृशसमूहस्य धूमजनकत्वसन्देहस्य च तथाविधात् धूमानुत्पाददर्शनेनैवायोगात्, तादृशस्यैव क्व चिद्वन्हि क्व चिद्वे-

---

णपरत्वे पश्चात्तच्चेत्यादिना तस्य परामर्शो न स्यात् असति बाधके तच्छब्देन विशेषविधया पूर्वोपस्थितस्यैव परामर्शकताया व्युत्पत्तिसिद्धत्वात् तच्चेत्यपहाय वन्ह्यसमवहिताजन्यत्वं चेत्यभिधाने ग्रन्थगौरवापत्तेरिति ध्येयम् । वन्ह्यसमवहिताजन्यत्वस्य वन्ह्यघटितसामग्र्यजन्यत्वादिरूपत्वे प्राक् तदसिद्धेरत उक्तम् यथाश्रुतस्येति । तथा च वह्नियुक्तकारणकलापं विनाऽनुत्पद्यमानत्वरूपमेव तत्प्रवेश्यमिति भावः । ननु वह्नियुक्तकारणकलापं विना उत्पद्यमानत्वशङ्कासत्त्वाद्धूमत्वावच्छेदेन वन्ह्यसमवहिताजन्यत्वस्यापि प्रागसिद्धेः कथं धूमत्वावच्छेदेनोक्तकार्यत्वनारस्तदवच्छेदेन बाधनिश्चयाभावादत आह तच्चेति । वह्नियुक्तकारणकलापं विनानुत्पद्यमानत्वञ्च मनसैव सुग्रहमिति परेणान्वयः । उक्तन्यायेनेति । हुताशनरासभेत्याद्युक्तान्वयव्यतिरेकग्रहेणेत्यर्थः । तद्व्यतिरेकजन्यत्वेति । वह्नियुक्तकारणकलापव्यतिरेकोत्पत्तिकत्वशङ्कानिरासादित्यर्थः । सर्वाण्येव पञ्चम्यन्तानि सुग्रहमित्यनेनान्वितानि । ननु वन्हियुक्तकारणकलापस्य वह्निं विना कृतस्यैव धूमजनकत्वशङ्कया जनिता वह्नियुक्तकारणकलापव्यतिरेकोत्पत्तिकत्वशङ्का स्याद्यद्वक्ष्यत्यवह्नेरेव भविष्यतीत्यत आह वह्निविरहेपीति । निरतिशयस्य । निर्विशेषितस्य वह्निं विना कृतस्येतियावत् । तथाविधात् । वह्निं विना कृतकारणकलापात् । ननु वह्नियुक्तकारणकलापस्यैव एकत्र धूमे वह्निसहकारेण धूमान्तरे च वन्हिभिन्नसहकारेण जनकत्वसम्भावनया वन्हिविशिष्टकारणकलापव्यतिरेकोत्पत्तिकत्वशङ्का दुर्वारा यद्वक्ष्यति क चिद्वन्हिं विनापि

तदासाद्य जनकत्वसम्भावनायाश्च क्व चिद्धूमानुत्पादप्रयोजकत्वेनावधृतस्य वन्हिविरहस्यैव तथाविधसमूहत्वे धूमानुत्पत्तिसामान्यं प्रति लाघवात्प्रयोजकत्वनिर्णयेनापनयान्मनसैव सुग्रहं वन्हेर्वन्हिसमवहितस्योपादानम् । अत्र च नियमव्यवच्छेद्यस्य वन्ह्यसमवहितानुपादानस्य प्रयोजके तदजन्यत्वज्ञाने परम्परया वन्हिसमवहितोपादानस्य वा प्रयोजके तत्र तात्पर्य्यम् । यत्त्वन्वयव्यतिरेकानुविधायित्वज्ञानमेव विशेषदर्शनतया शङ्काप्रतिबन्धकं तदेव

---

भविष्यतीत्यत आह तादृशस्यैवेति । वन्हियुक्तकारणकलापस्यैवेत्यर्थः । आसाद्य । सहकृत्य । लाघवादिति । वन्हिविरहस्य धूमविशेषानुत्पत्तिप्रयोजकत्वे स्थलान्तरीयधूमानुत्पत्तिप्रयोजकत्वस्यान्यत्र कल्पने गौरवात् । तथा च वन्ह्यभावप्रयुक्ताभावप्रतियोग्युत्पत्तिसामान्यकत्वधीरेव विशेषदर्शनविधयोक्तसंशयविरोधिनीति भावः । तदुपादानमित्युत्तरग्रन्थे तच्छब्देन वन्हिसमवहितस्य परामर्शाय धूमार्थे वन्हेरित्यत्र वन्हिपदं व्याचष्टे वन्हेर्वन्हिसमवहितस्येति । वन्हेरित्यस्य तृप्त्यर्थमित्यनेनान्वयभ्रमं निरसितुं दूरस्थमुपादानपदं योजितम् । वन्हिसमवहितोपादानस्याप्रतिबन्धकत्वादाह अत्र चेति । नियमव्यवच्छेद्यस्य । नियमलभ्यस्य । तदुपादानमेवेत्येवकारव्यत्यासेन तस्यैवोपादानमिति योजनया तदितरानुपादानस्य प्राप्तेरित्याशयः । नियमव्यवच्छेद्यस्य नियमतो वन्हेरुपादानमित्यत्र नियमपदव्यवच्छेद्यस्येति वार्थः । तदजन्यत्वज्ञाने । वन्ह्यसमवहिताजन्यत्वज्ञाने । नियमव्यवच्छेद्येत्यादिकुसृष्टिं विनापि वन्ह्यसमवहिताजन्यत्वज्ञानं प्रापयति परम्परयेति । वन्ह्यसमवहिताजन्यत्वस्य ग्रहे सति तद्विशिष्टजन्यत्वहेतुना वन्हिसमवहितजन्यत्वानुमितिस्ततो वन्हिसमवहिते प्रवर्तेत इति परम्परया वन्हिसमवहितोपादाने वन्ह्यसमवहिताजन्यत्वज्ञानं प्रयोजकमिति भावः । तत्र । वन्ह्यसमवहिताजन्यत्वज्ञाने । अन्वयव्यतिरेकेति । धूमे वन्हिसमवहितान्वयव्यतिरेकानुविधायित्वज्ञानमेव व्यावर्त्तकधर्मदर्शनविधया वन्ह्यसम-

याव्याघातः स्यात् । यदि हि गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शङ्केत, तदा स्वयमेव धूमार्थं वह्नेः तृप्त्यर्थं भोजनस्य परप्रतिपत्त्यर्थं शब्दस्य चोपादानं नियमतः कथं कुर्य्यात्, तेन विनापि तत्सम्भवात् । त-

---

तर्कघटकं तदिदमुक्तं यदि गृहीतान्वयव्यतिरेकं हेतुमितीति । तन्न । यादृच्छिकस्य तदनुविधानस्य व्यभिचारित्वान्नियतस्य चोक्ताभेदसम्पादकत्वादिति वदन्ति । तच्चिन्त्यम् । केचित्तु कार्य्य-

---

वह्नितजन्यत्वशङ्काप्रतिबन्धकमतस्तदेवोक्ततर्कस्य घटकं सम्पादकमित्यर्थः । अत्रैव मूलसंवादमाह तदिदमिति । यादृच्छिकस्य । व्यक्तिविशेषवृत्तितया गृहीतस्य । व्यभिचारित्वादिति । धूमविशेषो वन्हिसमवहितान्वयव्यतिरेकानुविधायीति निर्णये सत्यपि धूमत्वावच्छिन्नो वन्ह्यसमवहितजन्यो न वेति संशयोत्पादेन तत्प्रतिबन्धकत्वस्य व्यभिचारित्वादित्यर्थः । ननु धूमत्वावच्छेदेन वन्हिसमवहितान्वयव्यतिरेकानुविधायित्वग्रह एव उक्तसंशये विरोधी वाच्य इत्यत आह नियतस्य चेति । धूमत्वावच्छेदेन गृहीतस्य चेत्यर्थः । उक्तेति । संशयस्य सामग्रीसत्त्वाद्धूमत्त्वावच्छेदेन वन्हिसमवहितान्वयव्यतिरेकानुविधायित्वमेव निश्चेतुमशक्यं कुतस्तत्प्रतिबन्धकं यदि च तच्चोक्तन्यायेनेत्याद्यस्मदुक्तरीत्या तन्निश्चयस्तदा धूमत्वावच्छेदेन वन्ह्यसमवहिताजन्यत्वनिश्चय एव सम्भवतीति विपरीतज्ञानविधया तस्यैवोक्तसंशयविरोधित्वसम्भवे व्यर्थं व्यावर्त्तकधर्मदर्शनपर्यन्तानुसरणमिति भावः । तच्चिन्त्यमिति । लाघवसहकृतेन यादृशान्वयव्यतिरेकज्ञानेन धूमत्वावच्छिन्ने वन्ह्यसमवहिताजन्यत्वं ग्राह्यं तादृशेन धूमत्वावच्छेदेन वन्हिजन्यत्वग्रहस्यैव

स्मात्तत्तदुपादानमेव तादृशशङ्काप्रतिबन्धकम् । शङ्कायां न नियतोपादानं नियतोपादाने च न शङ्का । तदिदमुक्तं तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्या-

———

कारणभावग्रहानन्तरं व्याप्तिग्रहाय व्यधिकरणस्य जनकत्वशङ्का-निरासार्थमयं तर्कः । तथा च धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वन्ह्यजन्यत्वे सति सामानाधिकरण्यप्रत्यासत्त्या वन्हिजन्यो न स्यात् । अप्रत्यासन्नस्याऽजनकत्वात् । तादृशाजन्यत्वञ्च प्रत्यासत्त्यन्तरशालिवन्हिसत्त्वेऽपि धूमानुत्पादादिना ग्राह्य-

———

प्रथमं सम्भवात्तर्कवैयर्थ्यमित्यस्वरसश्चिन्ताबीजम् । कार्यकारणभावग्रहानन्तरमिति । इदं वक्ष्यमाणतर्कानुकूलबाधनिश्चयस्य रक्षायै धूमो यदीति । वह्निरूपादौ व्यभिचारस्य वारणाय सत्यन्तम् । तत्रापि वन्ह्यजन्यत्वे सतीत्येतावन्मात्रोक्तौ विशेष्यदलवैयर्थ्यमापाद्याविशेषश्च स्यादतः सामानाधिकरण्यातिरिक्तप्रत्यासत्त्येति । धूमादौ व्यभिचारवारणाय विशेष्यदलम् । तत्रापि सामानाधिकरण्यप्रत्यासत्त्येत्यनुक्तौ सत्यन्तदलवैयर्थ्यमापाद्याविशेषश्च स्यादिति ध्येयम् । वन्ह्यजन्ये घटादौ व्यभिचारवारणायाऽऽपाद्ये वह्निपदप्रवेशः । ननु विनापि प्रत्यासत्तिं वह्निजन्यत्वसम्भवादप्रयोजकत्वमत आह अप्रत्यासन्नस्येति । विशेषणवत्तानिश्चयकालीनस्यैव विशिष्टापादकतर्कस्य विशेष्यवत्त्वशङ्कानिवर्त्तकत्वात्पक्षे विशेषणवत्त्वं ग्राहयति तादृशाजन्यत्वं चेति । न च धूमे प्रत्यासत्त्यन्तरेण वह्निजन्यत्वाभावनिश्चयसत्त्वे वह्निजन्यत्वग्राहकप्रमाणमेव सामानाधिकरण्यप्रत्यासत्त्याऽवश्यं वन्हिजन्यत्वग्राहकम् । एकविशेषबाधसहकृतस्य सामान्यग्राहकप्रमाणस्य विशेषान्तररूपेण तद्ग्राहकत्वानियमात् तथा च तदर्थं तर्कानुसरणं व्यर्थमिति वाच्यम् । सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यत्वसंशायकत्वेप्युक्तानियमसम्भवेन संशयापनोदनार्थं तर्कस्यावश्यकत्वात् । यत्र सामान्यतो वन्हिजन्यत्वग्रहोत्त-

घातो न भवतीति । न हि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्य्यार्थं नियमत उपादत्ते तत्कारणं तन्नेत्याशङ्क्यते चेति । एतेन व्याघातो विरोधः स च सहानवस्थाननियम इति तत्राप्यनवस्थेति निरस्तम् । स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात् । अत एव "व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुत" इति खण्डनकारमतमप्यपास्तम् । न हि व्याघातः शङ्काश्रितः किन्तु स्वक्रियैव

———

मिति । इदमेव च वाचोभङ्ग्या परे परिष्कुर्वन्ति, धूमो यदि वन्ह्यनधिकरणदेशानुत्पत्तिकत्वे सति वन्ह्यधिकरणदेशोत्पत्तिको न स्यात् जन्यो न स्यात्, तादृशानुत्पत्तिकत्वग्रहश्च धूमानुत्पत्तिं प्रति वन्हिसम्बन्धाभावस्य प्रयोजकत्वे ग्राह्ये उपस्थितत्वाल्लाघवाच्च तादृशसम्बन्धाभावस्यैव तथात्वावधारणादिति ।

———

रमेव प्रत्यासत्त्यन्तरेण वन्हिजन्यत्वाभावनिश्चयस्तत्रैव तर्कस्यावश्यमपेक्षणीयत्त्वाच्च । अत एव ग्रन्थकृतापि कार्यकारणभावग्रहानन्तरमित्युक्तम् । प्रत्यासत्त्यन्तरम् । सामानाधिकरण्यातिरिक्तप्रत्यासत्तिः । ग्राह्यमिति । पक्षे इत्यादिः । परिष्कुर्वन्तीति । वन्हिजन्यत्वाद्यप्रवेशो मूलोक्तापाद्यापरित्यागश्च पूर्वस्मात्परिष्कारः । पूर्वोक्तरीत्या विशेषणवत्त्वनिश्चयस्यापेक्षणीयत्त्वात्समुपपादयति तादृशानुत्पत्तिकत्वेति । धूमधर्मिको वन्ह्यनधिकरणदेशानुत्पत्तिकत्त्वग्रहश्चेत्यर्थः । ननु समानाधिकरणव्यधिकरणसाधारणं किञ्चिदतीन्द्रियं कल्प्यतां यदभावाद्धूमानुत्पत्तिरित्यत आह उपस्थितत्वादिति । अत एवानुप-

शङ्काप्रतिबन्धिकेति, न वा विशेषदर्शनात् क्वचित् शङ्कानिवृत्तिरेवं स्यात्। न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः, न तु स स्वत एव प्रयोजकः। अत एव न तदाहितसंस्कारो न मानान्तरम्, त-

---

तच्चिन्त्यम्। मिश्रास्तु परं प्रति व्याप्तिग्रहोपाये प्रदर्श्यमाने व्यभिचारशङ्कानिरासहेतुत्वेनोपदर्शिते तर्के मूलशैथिल्यादिशङ्कोद्भावकं तं प्रति व्याघातोऽयमुपदर्श्यते, मैवं शङ्किष्ठाः, तथा सति तत्तत्कार्य्यार्थितया तत्र तत्र कारणे तवैव प्रवृत्तयो व्याहन्येरन्, यदाह न हि सम्भवति स्वयं वन्ह्यादिकमितीति प्राहुः।

---

स्थितकल्पनायां गौरवादाह लाघवाच्चेति। तादृशसम्बन्धाभावस्य। वन्हिसम्बन्धाभावस्य। तथात्वेति। प्रयोजकत्वावधारणादित्यर्थः। यद्यपि धूमविशेषे प्रत्यक्षत एव तादृशानुत्पत्तिकत्वग्रहः सम्भवति, तथापि धूमसामान्यस्य पक्षत्वात्तत्र प्रत्यक्षेण तद्ग्रहासम्भवादुक्तप्रकारावलम्बनमिति ध्येयम्। परं प्रतीति। चार्वाकं प्रतीत्यर्थः। व्यभिचारशङ्कानिरासस्य हेतुत्वेन। प्रयोजकत्वेन। तेन मूलोक्ततर्कस्य साक्षाद्व्यभिचारशङ्कानिवर्त्तकत्वाभावेपि न क्षतिः। मूलशैथिल्यादीत्यादिना वन्ह्यसमवहिताजन्यत्वशङ्कासंग्रहः। शङ्कोद्भावकमिति। अवन्हेरेव भविष्यतीत्यादिग्रन्थेनेत्यादिः। व्याघातः। स्ववचनविरोधः। उपदर्श्यत इति। सर्वत्र स्वक्रियाव्याघात इत्यादिग्रन्थेनेत्यादिः। व्याघातमुपपादयति। मैवमिति। उक्तशङ्कावान्न त्वमित्यर्थः। तथासति। तवैतादृशशङ्कासत्त्वे। तत्तत्कार्यार्थितयेति। धूमाद्यर्थितया वन्ह्यादौ कारणे प्रवृत्तयो व्याहन्येरन्नित्यर्थः। तथा च तदुपादानमेव शङ्काप्रतिबन्धकमित्यादिमूलस्यापि तदुपादानमेव शङ्काविरहोन्नायकमित्यर्थ इति भावः। प्राहुरिति। उपादानपदस्य यथाश्रुतार्थरक्षैवाऽत्र प्रकर्षः। इदं चेष्टसाधनतानिश्चयस्य प्रवृत्तिकारणत्वमभ्युपेत्य।

केस्याऽप्रमात्वात् । तच्च प्रत्यक्षव्याप्तिज्ञाने हेतुः, तद-भावेऽपि शब्दानुमानाभ्यां तद्ग्रहात् । ननु सहचारद-र्शनव्यभिचारादर्शनवद्व्यभिचारशङ्काविरहानुकूलतर्क-योर्ज्ञानं व्यभिचारिसाधारणमिति न ततोऽपि व्याप्तिनि-श्चय इति चेन्न । स्वरूपसतोरेव तयोर्व्याप्तिग्राहकत्वात् । सत्तर्काद्व्याप्तिप्रमा तदाभासात्तदप्रमा विशेषदर्शनसत्यत्वा-

---

तच्चेति । तत् । व्यभिचारादर्शनं व्यभिचारज्ञानसामान्याभावः । योग्यतादिसन्देहेऽपि शब्दादिना अर्थनिश्चयात्; तत्तर्कस्वरूपमिति केचित् । ननु वस्तुतो व्याप्तिसत्त्वे तर्काभासात् प्रमाभ्रमयोरुत्-पादानुत्पादाभ्यां व्यभिचार इयत आह विशेपदर्शनेति । तथा च

---

वस्तुतश्चार्वाकेण संशयसाधारणज्ञानस्य प्रवर्त्तकत्वस्वीकारात्तत्र प्रवृत्तिरव्याहतेत्याद्यस्वरसः आहुरित्युक्त्वा सूचितः । व्याप्तेर्बुद्धिमात्रे सहचारज्ञानस्य हेतुत्वात्प्रत्यक्षे विशिष्य तद्धेतुत्वाभिधानमसङ्गतमतो व्याचष्टे तदिति । तच्छब्दस्य व्यभिचारनिश्चयाभावपरत्वे तथैवा-सङ्गतिरत आह व्यभिचारज्ञानेति । विशेषदर्शनाद्यभावविशिष्टे-त्यादिः । तेन व्यभिचारस्य संशयदशायां व्याप्तेर्विशेषदर्शनान्निश्चय-दशायां च तदप्रामाण्यज्ञानात्प्रत्यक्षेण व्याप्तिनिश्चयेऽपि न क्षतिः । इदं च प्राचां मतेन, स्वमते तु ग्राह्यसंशयस्याप्रतिबन्धकत्वादिति ध्येयम् । सत्यपि ग्राह्यसंशये संस्कारादिवशेन स्मृत्युपमित्यादिरूप-ग्राह्यनिश्चयस्योत्पादेन मूले शब्दानुमानमात्रानुसरणमयुक्तमित्या-शयेन सामान्यतो हेतुमाह योग्यतादीति । शब्दादिनेत्यादिनाऽनु-मानसंस्काराद्युपग्रहः । तर्कस्वरूपमिति । स्वरूपपदं तच्छब्दस्य नपुंसकलिङ्गरक्षार्थं । केचिदिति । यत्र व्याघातान्न व्यभिचारशङ्का तत्र व्यभिचारात्तर्कस्य व्याप्तिप्रत्यक्षहेतुत्वमेव नेत्यस्वरसः । तर्का-

यथा तस्य बोध्यतदभावतद्विषयत्वे सत्सत्त्वासत्त्वे तथा तर्कस्यापीति।
अत्र च सत्त्वादिसम्पादके धर्म्मिणो बोध्यादिमत्त्वे बोध्यादि-
मद्धर्मिसन्निकर्षे वा तात्पर्य्यम्। लाघवात्, तर्कस्य व्यभिचारे-
णाहेतुतायाः स्वयमेव दर्शितत्वाच्च। अथ विपरीतज्ञानोत्तरप्रत्यक्षे
तन्निवर्त्तकत्वेन विशेषदर्शनस्य हेतुत्वं तच्च तर्कस्यापीति चेत्। अस्तु

भासादिति। धूमो यदि वन्हिव्यभिचारी स्याद्वह्निजः न स्यादित्यादितर्कस्य
विषयबाधेनाऽसत्तर्कत्वात्तत्रत्यव्याप्तिप्रमायां सत्तर्कस्य व्यतिरेकेण
व्याप्तिभ्रमे चाऽसत्तर्कस्यान्वयेन व्यभिचार इत्यर्थः।तस्य। विशेष-
दर्शनस्य। यथेति। अन्यथा पुरुषत्वव्याप्यवत्ताप्रमात्वादिना विशेष-
दर्शनस्य पुरुषत्वादिप्रमायां हेतुत्वे पुरुषत्वव्याप्यपुरुषत्ववांश्चेत्र
इत्यादिविशेषदर्शनादपि प्रमाद्युत्पत्त्या व्यभिचारापातादिति भावः।
तथेति। तथा च व्याप्तिप्रमायां व्याप्तिमद्विशेष्यकतर्कत्वेन व्याप्ति-
भ्रमे च व्याप्त्यभावद्विशेष्यकतर्कत्वेन हेतुत्वमिति भावः। ननूक्त-
कार्यकारणभावे गौरवमतो लाघवादाह अत्र चेति। बोध्यादिमत्त्व
इति। व्याप्तितदभाववत्त्व इत्यर्थः। व्याप्त्यंशस्वरूपायामपि व्याप्तेर-
लौकिकप्रत्यक्षप्रमोत्पादेन व्यभिचारादाह बोध्यादिमदिति। लाघवा-
दिति। व्याप्तिमद्विशेष्यकतर्कत्वादिना हेतुत्वमपेक्ष्य व्याप्त्यादिमत्त्वेन
हेतुत्वे लाघवादित्यर्थः। ननु व्याप्तिमत्सन्निकर्षत्वापेक्षया व्याप्तिमद्वि-
शेष्यकतर्कत्वस्यैव लघुत्वात् द्वितीयकल्पे लाघवं दुर्घटमत आह
तर्कस्येति। दर्शितत्वादिति। यत्र व्याघातादिना शङ्कैव नावतरती-
त्यादि मूलग्रन्थेनेत्यादिः। अथेति। तदभाववत्त्वज्ञानोत्तरतन्निश्चया-
त्मकप्रत्यक्षे तदभाववत्त्वज्ञानविरोधित्वेन विशेषदर्शनस्य हेतुत्वमि-
त्यर्थः। अन्यथा विशेषदर्शनत्वेन तत्र हेतुत्वे संशयोत्तरं व्यावर्त्तक-
धर्मदर्शनादितस्तादृशप्रत्यक्षं न स्यादिति भावः। तच्चेति। विपरी-
तज्ञानविरोधित्वं चेत्यर्थः। तर्कस्यापीति। तथा च व्यभिचारभिया
तर्कत्वेनाऽहेतुत्वेऽपि व्यभिचारज्ञानोत्तरव्याप्तिनिश्चयात्मकप्रत्यक्षे
व्यभिचारज्ञानविरोधित्वेन हेतुतायां न व्यभिचार इति संमुखत
एव मूलस्योपपत्तौ किं तात्पर्यवर्णनेनेति भावः। उक्तरूपेण हेतुना-

तावदापाततस्तथा, तथाप्यन्यत्र उक्तप्रमाण्यादिप्रयोजकादेव तत्र प्रामाण्याद्युपपत्तौ न तस्यापि विशेषतः कारणत्वं गौरवात्। उक्तञ्च विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वमते सर्वत्र विशेष्य-सम्बन्धासम्बन्धविशेषणज्ञानमत्र प्रमाभ्रमप्रयोजकमिति वदन्ति।

---

सत्त्वेपि न विपरीतज्ञानोत्तरनिश्चयात्मकप्रत्यक्षप्रमात्वावच्छिन्नं प्रति विपरीतज्ञानप्रतिबन्धकप्रमात्वादिना हेतुत्वं विपरीतज्ञानानुत्तर-वर्त्तिज्ञानीयप्रमात्वादिप्रयोजकादेव विपरीतज्ञानोत्तरवर्त्तिज्ञानेपि प्रमात्वादिसम्भवेन प्रमात्वादिकमन्तर्भाव्यांक्तकार्यकारणभावे मानाभावादित्याह अस्त्विति। वस्तुतो विपरीतज्ञानोत्तरनिश्चयात्मक-प्रत्यक्षत्वमपि न कार्यतावच्छेदकमर्थसमाजग्रस्तत्वादित्यावेदयितुमुक्तम् आपातत इति। अन्यत्र। विपरीतज्ञानानुत्तरतद्वत्त्वप्रमादिस्थलं। तत्र। विपरीतज्ञानोत्तरप्रमादौ। प्रामाण्यादीत्यादिना भ्रमत्व-संग्रहः। तस्यापि। विपरीतज्ञाननिवर्त्तकस्यापि। विशेषतः। प्रमात्वाद्यन्तर्भावेण। गौरवादिति। तथा च तर्कस्य प्रमात्वादिकं न व्याप्ति-प्रमात्वादिप्रयोजकमनस्तात्पर्यमुपवर्णितमिति भावः। अथान्यत्र तत्त-द्व्यक्तित्वादिनैव तत्तत्प्रमाव्यक्तिप्रयोजकत्वमतो न विपरीतज्ञानो-त्तरप्रत्यक्षस्य ततः प्रामाण्याद्युपपत्तिरत आह उक्तं चेति। परनये विनापि घटत्वादिज्ञानं प्राथमिकघटत्वादिप्रमोत्पादेन व्यभिचारात्कारणत्वमत इत्युक्तम्। न्यायमत इति तदर्थः। तेन विशेषणज्ञान-स्याहेतुत्वेपि न क्षतिः, प्राथमिकायामपि प्रमायामीश्वरीयस्यैव विशेषणज्ञानस्य हेतुत्वसम्भवात्। घटत्वादिप्रमात्वावच्छिन्नं प्रति घटत्वा-दिज्ञानत्वेनैव हेतुत्वं तत्र च कार्यस्य विशेष्यत्वं कारणस्य स्वविष-याश्रयतादात्म्यं प्रत्यासत्तिरित्येतावतैवातिप्रसङ्गभङ्गाद्विशेष्यस-म्बद्धासम्बद्धविशेषणेत्यादेरपि तत्रैव तात्पर्यात्। अन्यथा विशेष्यस-म्बद्धत्वस्य केवलान्वयित्वेनाऽव्यावर्त्तकतया कारणतावच्छेदकत्वा-योगादिति ध्येयम्। न च नित्यस्य घटत्वादेस्तादृशप्रमायां विशे-षणस्यैव तत्त्वेन हेतुत्वमुचितं तद्विषयकज्ञानत्वापेक्षया लघुत्वादिति वाच्यम्। घटत्वादिप्रमाया भाविन्यपि घटादावुत्पत्त्या तदवच्छेदेन

सत्यत्वाभ्यां पुरुषज्ञानमिव । अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरापेक्षा यत्र तु व्याप्तिस्मरणं हेतुः तत्र न तर्कान्तरापेक्षेति नानवस्था । अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतुव्याप्तिस्मरणं तदानीं व्याप्त्यनुभावकाभावात् । तन्मूलानुभवमूला चाग्रेऽपि व्याप्तिस्मरणपरम्परेति । यत्त्वनादिसिद्धकार्य्यकारणभावविरोधादिमूलाः केचित्तर्का इति । तन्न । तत्र प्रमाणानुयोगेऽनुमान एव पर्य्यवसानात् । न च व्या-

---

तत्र प्रमाणेति । इदमनादिसिद्धत्वज्ञानस्य प्रयोजकत्वमभिप्रेत्य,

---

घटत्वादेस्तादृशप्रमाव्यवहितपूर्ववर्त्तित्वासम्भवेन तत्र घटत्वादेः कारणत्वासम्भवात् । यत्र विशेषणविशेष्ययोर्द्वयोरेव नित्यत्वं तत्र मनस्त्वादिप्रमायां मनस्त्वादेरेव हेतुत्वेपि क्षत्यभावादिति दिक् । स्वमते प्रमात्वादेरार्थसमाजग्रस्तत्वान्न कार्यतावच्छेदकत्वमतो वदन्तीत्युक्तम् । मूले यत्र तर्क इत्यादि । तथा च व्याप्त्यनुभव एव तर्कस्य हेतुत्वं जातमात्रस्य तु व्याप्तिज्ञानं स्मरणमेवेति न व्यभिचार इति भावः । नन्वेवमपि वह्निधूमयोर्व्याप्त्यनुभवकारणस्य तर्कस्य मूलीभूतो व्याप्त्यनुभवस्तर्कान्तरात् एवं तद्धेतुभूतोपि व्याप्त्यनुभवस्तथेत्यनवस्थेत्यत आह तन्मूलानुभवमूलेति । तस्य जातमात्रव्याप्तिस्मरणस्य मूलं योऽनुभवस्तदधीनेत्यर्थः । तथा च जातमात्रव्याप्तिस्मरणहेतोर्जन्मान्तरीयव्याप्त्यनुभवस्यैव वह्निधूमव्याप्तिग्राहकतर्कमूलीभूतव्याप्त्यादिविषयकतया तत एव तादृशतर्कमूलीभूतव्याप्त्यादेः स्मरणमेव नाऽनुभवो येनानवस्थेति भावः । ननु धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादिति तर्केण स्वरूपसत एव कार्यकारणभावग्रहस्य गोत्वं यदि अश्वभेदव्यभिचारि स्यादश्वत्व-

प्तिग्रहान्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम् । अनुपपत्तेरप्यनुमानत्वात् । अन्ये तु विपक्षबाधकतर्कादनौपाधिकत्वग्रह एव तदधीनो व्याप्तिग्रह इति । तदपि न । तर्कस्याऽप्रमाणत्वात् । व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेन्न । अनवस्थाभयेन तर्कं विना व्याघातात् । यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात् । यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्याऽभावग्रहः अयोग्यानान्तु साध्याव्यापकत्वसाधनव्यापकत्वसाधनादभावग्रह इत्यनौपाधिकत्वं सुग्रहमिति । तत्तुच्छम् । अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याऽभावात् । ये चा-

---

परार्थाभिप्रायेण वा । अनुमानत्वात् । व्याप्तिग्रहाधीनप्रवृत्तिकत्वात् । व्यभिचारशङ्केति । द्वारेण द्वारिणो नान्यथा सिद्धिरिति

---

विरुद्धं न स्यादिति तर्केण च स्वरूपसत एव विरोधादिग्रहस्यापेक्षणात्तत्र च प्रमाणेत्यादिसिद्धान्तोऽसङ्गत इत्यत आह । दीधितौ इदमिति । तथा चानादिसिद्धत्वप्रकारेण कार्यकारणभावादिग्रहो हेतुरित्यभिप्रेत्याऽनादिसिद्धत्वे प्रमाणमनुसृतमिति भावः । स्वरूपसतः कार्यकारणभावादिग्रहस्यापेक्षणाभिप्रायेण सङ्गमयति परार्थेति । तथा च परं प्रति तर्कमूलत्वेनोपन्यस्ते कार्यकारणभावादौ परेणाप्रामाणिकत्वे उद्भाविते प्रामाणिकत्वरूपमनादिसिद्धत्वमवश्यं तत्र साधनीयं तच्च तद्ग्राहकहेतोरप्रयोजकत्वान्न सम्भवतीति मूलाशयः । अनुपपत्तेरतिरिक्तप्रमाणत्वमतेऽपि व्याप्तिग्रहान्तरापेक्षारू-

नुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहं वदन्ति, तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रमुच्छिद्येत। अनुमानमात्रोच्छेदकत्वादत्र पक्षतरो नोपाधिरिति चेत् । भ्रान्तोऽसि, न हि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे, साध्यव्यापकत्वेन तद्व्यतिरेकात् पक्षे साध्यव्यावर्त्तकतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य

---

भावः । अनुमानमात्र इति । अनिश्चितसाध्यपक्षके सर्वत्र सम्भवित्वात् पक्षे साध्यनिर्णयेऽनुमानवैयर्थ्यात् उपाधित्वेन स्वव्यभिचारेण व्यभिचारोन्नायकत्वेनानुमानमात्रोच्छेदकताज्ञानमेवसाध्यव्यापकताबुद्धिं विरुन्ध्यादित्याशङ्कयाह अपि चेति । करवन्दी-

---

पदोषस्य सम्भवादनुमानपर्यन्तानुधावनमयुक्तमतः साधारण्येन व्याचष्टे अनुमानत्वादिति । ननु व्यभिचारशङ्कानिरासस्यावश्यमपेक्षणीयत्वे तेनैव विपक्षबाधकस्तर्कोऽन्यथासिद्धः कथं कारणमित्यत आह द्वारेण चेति । व्यभिचारसंशयस्य व्याप्तिग्रहाविरोधित्वात्तन्निवर्त्तनाय तर्को व्यर्थ इति मतं निरसितुमाह मूलकारो ये चात्रेति । सहचारदर्शनादीत्यादिपदेन व्यभिचारनिर्णयाभावस्योपग्रहः । व्यापकत्वग्रह इत्यस्य तेनैवोपाधिनेति शेषः । शङ्कते अनुमानमात्रेति । नोपाधिरिति । साध्यव्यभिचारानुमापकव्यभिचारप्रतियोगिन एवोपाधिपदार्थत्वादिति भावः । यत्र पक्षेतरत्वं नोपस्थितं तत्रैवानुमानानुच्छेदादाह दीधितौ सम्भवित्वादिति । पक्षेतरत्वस्योपस्थितौ तत्र साध्यव्यापकत्वग्रहस्य सम्भवित्वादित्यर्थः । तथा च पक्षेतरत्वोपस्थितिकालीनानुमानोच्छेदे मूलतात्पर्यमिति भावः । ननु यत्र पक्षे साध्यनिश्चयदशायां पक्षेतरत्वमुप-

वज्रलेपाच्च । अपि च करवह्निसंयोगः शक्त्यतिरिक्ता-तीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वान्न सा-धकम्, तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम त-स्माद्विपक्षबाधकतर्काभावान्न तत्र व्याप्तिग्रह इत्यप्रयोज-कत्वमिति ॥

---

ति । परमतेन इदम्, स्वमते तु वाय्वादौ स्पर्शादिना रूपादि-साधने शक्त्यतिरिक्तविशेषणाप्रक्षेपेण वा तद्बोध्यम् ॥

---

स्थितं तत्रैव व्यभिचारात्पक्षेतरत्वे साध्यव्यापकत्वाग्रहान्नानुमा-नोच्छेद इत्यत आह वैफल्यादिति । पक्ष इति । प्रवृत्त्यादेः पूर्वोत्पन्न-साध्यनिश्चयादेव सम्भवादिति भावः । स्वव्यतिरेकेण साध्यव्य-तिरेकोन्नायकत्वरूपस्योपाधित्वस्य प्रतिक्षेपे किं त्वित्याद्युत्तरग्रन्था-सङ्गतिरतो व्याचष्टे उपाधित्वेनेति । विरुन्ध्यादिति । वस्तुतः साध्याभाववति वृत्तित्वांशे व्यभिचारसन्देहस्य विरोधित्वं प्रदर्श्य साध्याभाववत्त्वांशे संशयात्मनो व्यभिचारज्ञानस्य व्याप्तिविरो-धित्वमुदाहरति मूले अपि चेतीति परमार्थः । स्वमते शक्त्यभावा-त्साध्याप्रसिद्धेरेवाप्रयोजकत्वं सुवचमतः परमतेनेति । शक्त्यतिरि-क्तेति । तथा च करवह्निसंयोगो अतीन्द्रियधर्मसमवायी समवायित्वे सति जनकत्वादित्येवं प्रयोजकं स्वमते बोध्यमिति भावः ॥

इति श्रीजगदीशतर्कालङ्कारविरचितस्तर्कः समाप्तः ॥

---

## चिन्तामणेः व्याप्त्यनुगमः ॥

उक्तव्याप्तिप्रकारेष्वन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुर्लाघवात्, अतो नाऽननुगमः । अनौपाधिकत्वं

---

## दीधित्याः व्याप्त्यनुगमः ॥

उक्तव्याप्तीति । प्रतियोग्यसामानाधिकरण्यादिविशेषणविरहेण लाघवात् । अथ संयोगाभावस्येव संयोगवद्भेदस्यापि हेतुसामानाधिकरण्यग्रहेऽप्यनुमितिदर्शनात्तत्रापि तदवश्यं निवेशनीयमिति क्व लाघवम् । नन्वेवं प्रतियोग्यसामानाधिकरण्याद्यनुपस्थितौ हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहेऽप्यनुमितिर्न स्यात् । न च प्रतियोगिसमानाधिकरणत्वेनाऽज्ञायमाना यावन्तो हेतुसमानाधिकरणा अभावास्तत्प्रतियोगितावच्छेदकत्वाभावग्रहो हेतुरिति वाच्यम् । तादृशाभावग्रहो हि न हेतुसमाना-

---

## जागदीश्याः व्याप्त्यनुगमः ॥

प्रतियोग्यसमानाधिकरणत्वादीत्यादिपदेन निष्कृष्टार्थस्य हेत्वधिकरणे प्रतियोग्यनधिकरणत्वविशेषणस्य परिग्रहः । तत्रापि । अन्योन्याभावगर्भव्याप्तिग्रहेपि । तदिति । प्रतियोगिनस्तादात्म्येन यः सम्बन्धी तद्वृत्तिभिन्नत्वादिरूपं प्रतियोग्यसामानाधिकरण्यादिकं विषयतया प्रवेश्यमित्यर्थः । तटस्थः शङ्कते न-

धिकरणाभावप्रतियोगितावच्छेदकत्वत्वेन रूपेण, प्रतियोगिसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वग्रहे तदसम्भवात्। नापि प्रातिस्विकरूपेण, जन्मसहस्रेणाप्यसम्भवात्। नापि रूपान्तरेण, वन्हित्वावच्छिन्नप्रतियोगिताकाभावस्य धूमसामाधिकरण्यभ्रमेऽपि वन्हित्वानवच्छिन्नप्रतियोगिताकधूमानधिकरणनिखिलाभावप्रतियोगितानवच्छेदकं वन्हित्वमिति ज्ञानादपि अनुमितिप्रसङ्गात्। न च हेतुसमानाधिकरणत्वेन ज्ञायमाना इति वाच्यम्। वन्हित्वे धूमसमाधिकरणरासभाद्यभावप्रतियोगितावच्छेदकत्वभ्रमेऽप्युक्तरूपेण तथा ग्रहसम्भवात्, धूमाधिकरणान्तरानुपस्थितौ व-

---

न्त्वेवमिति। प्रतियोगिवैयधिकरण्यविषयकत्वान्तर्भावेन हेतुत्वे। उपाध्यायमतमाशङ्क्य निषिध्यति न चेति। हेतुमन्निष्ठघटाद्यभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिग्रहादपि वह्निमान्रासभादित्याद्यनुमित्यनुत्पत्त्यर्थं यावन्त इति। तादृशाभाव इति। निरुक्तावच्छेदकत्वाभावग्रहो हीत्यर्थः। तदसम्भवात्। हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं संयोगत्वमित्यादिग्रहासम्भवात्। सामान्यघटितविशेषवत्तानिश्चयस्यापि सामान्याभावबुद्धौ विरोधित्वादिति भावः। प्रातिस्विकेति। तत्तदभावप्रतियोगितावच्छेदकत्वत्वरूपेणेत्यर्थः। रूपान्तरेणेति। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वघटितेनेत्यादिः। तेन मेयत्वादिना तद्ग्रहान्नातिप्रसङ्गः। भ्रमेपीत्यन्तमिष्टापत्तिव्युदासाय। न चेति। तथा च वह्न्यभावस्यापि हेतुसमानाधिकरणत्वेन ज्ञायमानत्वात्तत्प्रतियोगितानवच्छेदकत्वाग्रहादेव तदा नानुमितिरिति भावः। उक्तरूपेणेति। वह्नित्वानवच्छिन्नधूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वरूपणेत्यर्थः। सम्भवादिति। समानप्रकारकत्वेनैव ज्ञानस्य विरोधित्वात् तथा च ततोप्यनुमितिः स्यादिति भावः। ननु प्राचां मते समानविषयत्वेनैव ज्ञानस्य विरोधित्वाद्वह्नित्वे धूमवन्निष्ठरासभाभावप्रतियोगितावच्छेदकत्वग्रहदशायां

ह्नित्वे रासभत्वादौ च तादृशप्रमोत्पादेऽपि रासभादेरिव वन्हेर-प्यननुमानाच्च। एवं वन्हित्वावच्छेदेन शुक्लत्वाभावभ्रमदशायां शु-क्लप्रतियोगिका वन्हीतरप्रतियोगिताकाश्च ये धूमासमानाधिकर-णाभावास्तत्प्रतियोगितानवच्छेदकं वन्हित्वमिति ग्रहेऽपि। मैव-म्। प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगि-तावच्छेदकत्वग्रहविरोधिग्रहविषयत्वेन तेषां तादृशावच्छेदकत्वग्रहवि-

---

वह्नित्वानवच्छिन्नधूमवन्निष्ठाभावप्रतियोगितानवच्छेदकं वह्नित्वमि-तिग्रह एवासम्भवीत्यतो दोषान्तरमाह धूमाधिकरणेति। रास-भशून्यधूमाधिकरणानुपस्थितावित्यर्थः। तादृशेति। रासभत्वं धूमवन्निष्ठरासभत्वानवच्छिन्नाभावप्रतियोगितानवच्छेदकं वह्नित्वं धू-मवन्निष्ठवह्नित्वानवच्छिन्नाभावप्रतियोगितानवच्छेदकमित्येवं प्रमो-त्पादेपीत्यर्थः। रासभशून्यधूमाधिकरणोपस्थितिदशायां रासभत्वे निरुक्तानवच्छेदकत्वं दुर्ग्रहमतोऽनुपस्थितावित्यन्तम्। उक्तज्ञानादनु-मितौ कदा चिद्विप्रापत्तिं कुर्यादित्यतो दोषान्तरमाह एवमिति। वह्नेः शुक्लत्वग्रहे वह्न्यभावस्यापि शुक्लप्रतियोगिकत्वग्रहसम्भवा-द्वह्नित्वं धूमवन्निष्ठशुक्लप्रतियोगिकाभावप्रतियोगितानवच्छेदकमित्ये-वं ग्रहो न सम्भवतीति भ्रमदशायामित्यन्तम्। शुक्लप्रतियोगिका इत्यनेन वह्न्यभावस्य वह्नीतरप्रतियोगिकेत्यनेन रासभाद्यभावस्य निरुक्तया-वदन्तर्गतस्य सङ्ग्रहः। ग्रहेपीति। अननुमानाच्चेत्यनुषज्यते। तथा च तत्राप्यनुमितिः स्यादिति भावः। इदमुपलक्षणम्। ज्ञायमानत्वा-ज्ञायमानत्वयोः सामान्यतः प्रवेशोऽतिप्रसङ्गः तत्तत्काले तत्तत्पुरुषज्ञा-यमानत्वप्रवेशे तु प्रतियोगिसामानाधिकरण्यानुपस्थितिकालीनव्या-प्तिग्रहासङ्ग्रहः पुरुषकालाद्यननुगमादनुगतहेतुत्वालाभश्चेत्यपि द्रष्ट-व्यम्। नन्वेवमित्यत्र सिद्धान्तो मैवमिति। तेषामिति। प्रतियोगि-व्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकभेदतत्त्वात्यन्ताभा-वानामित्यर्थः। ननु तादृशग्रहविरोधिग्रहविषयस्य तत्तदभावस्य यदि ज्ञानमात्रं हेतुस्तदा प्रमेयत्वादिनापि तस्य ज्ञानादनुमित्यापत्तिः त-

रोधित्वेन तद्बुद्धीनां वाऽनुगमात् । विरुणद्धि च सामान्याभा-

-----

त्त्द्रूपेण ज्ञानस्य हेतुत्वेऽननुगमतादवस्थ्यमित्यत आह तादृशाव-
च्छेदकत्वेति । तद्बुद्धीनामिति । तादृशावच्छेदकत्वाद्यभावबुद्धी-
नामित्यर्थः । अत्र च प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगि-
तावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नं प्रति विरोधित्व-
मेव प्रवेश्यम् । तेन दैवात् घटवद्भूतलादिविषयकस्य तादृशावच्छे-
दकत्वग्रहस्य विरोधिघटाभाववद्भूतलज्ञानमादाय नातिप्रसङ्गः
घटवद्भूतलविषयितायास्तादृशावच्छेदकत्वविषयित्वाव्यापकत्वात् ।
यत्तु निरुक्तावच्छेदकत्वमात्रविषयिणीं यां काञ्चिदुक्तज्ञानव्यक्तिमादा-
य तद्व्यक्तिविरोधित्वेनैवानुगमान्नोक्तदोष इति।तन्न। तथा सति प्रति-
योगिवैयधिकरण्यादेः कारणतावच्छेदककोटयप्रविष्टतया सत्यमित्या-
दिना वक्ष्यमाणस्यान्योन्याभावगर्भव्याप्तिज्ञानहेतुतालाघवस्याऽसङ्ग-
तत्वापत्तेः । यद्यपि प्रतियोगितानवच्छेदकवह्नित्वाश्रयवान् धूमादि-
त्यादौ प्रतियोगितानवच्छेदकवन्हित्वं प्रतियोगिव्यधिकरणधूमव-
न्निष्ठाभावप्रतियोगितावच्छेदकमित्याकारकग्रहस्याहार्य्यस्यैव सम्भ-
वात्तद्विरोधित्वाप्रसिद्ध्या तत्रानुगमो दुर्घटः । न च तादृशावच्छेदक-
त्वग्रहसमानविशेष्यकग्रहाविरोधित्वं प्रवेश्यं तथा च विशिष्टवन्हि-
त्वधर्मिकाहार्य्यतादृशावच्छेदकत्वग्रहस्य विशेष्यं यद्वन्हित्वं तद्वि-
शेष्यकस्यानाहार्य्यज्ञानस्य विरोधित्वप्रसिद्ध्या न दोष इति वाच्य-
म् । तथा सति वन्हित्वं निरुक्तप्रतियोगितानवच्छेदकमित्याकारक-
ज्ञानवतोपि प्रतियोगितानवच्छेदकवन्हित्वप्रकारेणानुमित्यापत्तेः ।
तथापि प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्व-
ग्रहस्य प्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्नसाध्यतावच्छे-
दकविशेष्यताकज्ञानत्वेनानुगमान्न दोषः । पटत्वादिधर्मिकतादृशा-
वच्छेदकत्वग्रहं प्रति विरोधितावच्छेदकं यद्धूमवन्निष्ठप्रतियोगिव्य-
धिकरणाभावप्रतियोगितानवच्छेदकत्वप्रकारित्वं तदादायैव प्रतियो-
गितानवच्छेदकवन्हित्वविशेष्यकव्यापकतावच्छेदकत्वज्ञानसौलभ्य-
म । इदन्तु चिन्त्यते । प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्र-
तियोगितावच्छेदकत्वग्रहाविरोधिज्ञानत्वेन धूमलिङ्गकवन्ह्यनुमितौ न

वबोधोऽपि सामान्यघटितविशेषवत्ताबुद्धिम् । एवं हि घटो नास्तीति बुद्धौ जात्वपि नीलो घटोऽस्तीति बोधानुदयात् । तत्कस्य हेतोः, तद्विशिष्टप्रतियोगिमत्ताबुद्धिं प्रति तदवच्छिन्नप्रतियोगिताकाभावबुद्धेर्विरोधित्वात् । अवगाहते च नीलघटवत्ताबुद्धिरपि घटत्वविशिष्टवत्ताम् । अत एवावच्छेदकतत्त्वयोरन्योन्यात्यन्ताभावयो-

---

व्याप्तिज्ञानं हेतुर्मानाभावाद्वन्हिज्ञानत्वादिनैव हेतुत्वसम्भवात् । न चोक्तावच्छेदकत्वग्रहविरोधिधूमवत्पर्वतनिश्चयत्वेनानुगतरूपेण प्रतियोगिवैयधिकरण्यादिविषयकपरामर्शोऽनुमितिहेतुः । धूमव्यापको वन्हिर्धूमवांश्च पर्वत इत्यादिसमूहालम्बनादपि पर्वतो वन्हिमानित्यनुमित्यापत्तेः । किञ्च प्रतियोगिव्यधिकरणत्वमत्र स्वस्वप्रतियोगिव्यधिकरणत्वमवश्यं वाच्यं तथा च स्वत्वस्यैकस्याभावादेकं स्वमादाय प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वेनानुगमे तादृशाभावान्तरप्रतियोगितावच्छेदकत्वग्रहदशायामनुमित्यापत्तिः। किञ्चोक्तग्रहविरोधितावच्छेदकीभूतप्रकारितावान्निश्चयत्वेनैव तत्र हेतुत्वं वाच्यं तथा च तन्निश्चयत्वस्य तत्तत्प्रकारादिगर्भतयाऽननुगमो दुर्वार इति दिक् । हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वबुद्धावुक्तग्रहविरोधित्वं सङ्गमयति विरुणद्धीति सामान्यघटितेति । तेन द्रव्यसामान्याभावग्रहेऽपि घटवत्त्वादिग्रहोत्पत्त्या न क्षतिः । घटो नास्तीति । भूतल इत्यादिः । पृच्छति तत्कस्य हेतोरिति । उत्तरयति तद्विशिष्टेति । घटत्वविशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रत्येव घटत्वावच्छिन्नाभावनिश्चयत्वेन प्रतिबन्धकत्वं घटवदित्याकारकबुद्धिवच्च नीलघटवदित्याकारकबुद्धिर्घटत्वविशिष्टवैशिष्ट्यावगाहिनीतिभावः । अत एवोक्तक्रमेण विरोधित्वानुगमादेव । अन्यथा अवच्छेदकभेदमात्रप्रवेशेऽवच्छेदकत्वात्यन्ताभावबुद्ध्यसंग्रहापत्तिरिति भावः । ननु प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वं तादृशावच्छेदकत्वाभावव्याप्यवत्त्वग्रहस्यापि तथा तादृशावच्छेदकत्वव्यावर्तकधर्मदर्शनस्यापि एवमभावादौ हेतुसामानाधिक-

रूपसंग्रहः। हेत्वाभासे च वक्ष्यमाणरीतिरिहाप्यनुसन्धेया। यदि च साध्यतावच्छेदकस्याभावप्रतियोगितानवच्छेदकत्वादिग्रहान्नानुमितिः, तदा तादृशावच्छेदकत्वग्रहाविरोधित्वेन विशेषणीयम्। अन्योन्याभावस्याऽव्याप्यवृत्तितापक्षे तु सुतरां विशेषणदानमिति सत्यम्, तथाप्यन्योन्याभावे प्रतियोग्यवृत्तित्वस्यैव विशेषणत्वं

---

रण्याभावादिग्रहस्यापि इति ततोप्यनुमित्यापत्तिरित्यतआह हेत्वाभासे चेति। तथा च यथा व्याप्तिग्रहविरोधित्वादिरूपेण सव्यभिचारित्वादिलक्षणे विरोधित्वं साध्याप्रसिद्ध्यादावतिव्याप्तिवारणार्थं साध्यतावच्छेदकादिमात्रग्रहविरोधित्वान्यत्वेन विशिष्यते तथात्रापि तादृशावच्छेदकत्वग्रहाविरोधित्वं तादृशावच्छेदकत्वाभावव्याप्यवत्त्वाद्यवच्छिन्नविरोधिताभिन्नत्वेन विशेषणीयमिति भावः। अनवच्छेदकत्वादीत्यादिपदेन प्रतियोगितानवच्छेदकत्वादेः सङ्ग्रहः। केवलान्वयित्वग्रहस्यानुमितिहेतुतामङ्गीकुर्वतामत्रानुमितिरेवेत्यावेदयितुं यदि चेत्युक्तम्। तादृशावच्छेदकत्वग्रहाविरोधित्वेनेति। तथाविधावच्छेदकत्वग्रहविरोधित्वान्यत्वेनेत्यर्थः। विशेषणीयमिति। निरुक्तविरोधित्वमिति शेषः। तेन प्रतियोगितानवच्छेदकं प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकञ्च वह्नित्वमिति समूहालम्बनज्ञानस्य नानुपसङ्ग्रहः। [न चैवमप्यभावो न हेतुसमानाधिकरण इत्यादिज्ञानेऽतिप्रसङ्गः, अभावादौ हेतुसामानाधिकरण्यग्रहाविरोधित्वेनापि विशेषणीयत्वात्।] वस्तुतो हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारितानवच्छिन्नत्वेनैव प्रतिबध्यत्वं विशेष्यम् तावतैव प्रतियोगितानवच्छेदकं वह्नित्वमित्यादिबुद्धेरपि व्युदासादिति ध्येयम्। विशेषणस्य प्रतियोग्यसमानाधिकरणत्वरूपस्य दानमित्यर्थः। प्रतियोग्यवृत्तित्वस्यैवेत्येवकारेण प्रतियोग्यधिकरणावृत्तित्वस्य गुरोर्व्यवच्छेदः। ननु यत्समानाधिकरणात्यन्ताभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये साध्यसमानाधिकरणात्यन्ताभा-

न वा प्रतियोगितावच्छेदकसम्बन्धभेदानुधावनमतो लाघवमिति यथाश्रुतग्रन्थानुरोधिनः। अपरे त्वन्योन्यात्यन्ताभावगर्भव्याप्त्योरेकतराग्रहेऽप्यन्यतरज्ञानादनुमितेरानुभविकत्वात्तदुभयज्ञानमेव हेतुः, इन्द्रियसंयोगादिवच्च विशिष्यैव कार्य्यकारणभावान्न व्यभिचारः। यत्तु यद्रूपावच्छिन्नप्रतियोगिताकत्वेनोपस्थितोऽभावो धर्म्मिणि गृह्यमाणः साध्यवत्ताबुद्धिं विरुणद्धि तद्रूपावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्यावगाहिनो ग्रहस्य विरोधित्वेन

---

वीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छेद्यत्वं नास्ति तत्त्वमित्यन्ताभावगर्भव्याप्तौ निष्कृष्टायां प्रतियोगिवैयधिकरण्याप्रवेशान्नैष दोष इत्यत आह न वेति। तथा च यत्समानाधिकरणान्योन्याभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छेद्यत्वं नास्ति तत्त्वमित्यन्योन्याभावगर्भव्याप्तौ प्रतियोगितांशे सम्बन्धविशेषाप्रवेशाल्लाघवमुक्तायामत्यन्ताभावगर्भायान्तु विशेषणताविशेषावच्छिन्नत्वेन प्रतियोगितानिवेशाद्गौरवमित्येवमन्योन्याभावगर्भाया हेतुत्वे विनिगमकमिति भावः। अन्योन्याभावत्वमपि यदि तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं न त्वखण्डोपाधिस्तदा तद्घटितव्याप्तावपि सम्बन्धविशेषनिवेशाल्लाघवस्यानवकाशेन वस्तुतोऽत्यन्तान्योन्याभावघटितयोर्द्वयोरपि व्याप्त्योर्नानुमित्युपयोगित्वमिति लघोः साध्यवदन्यावृत्तित्वस्यैवाग्रे तथात्वस्य वक्ष्यमाणत्वादित्याशयेन यथाश्रुतेत्युक्तम्। अपरे मूलग्रन्थाननुरोधिन इत्यर्थः। इन्द्रियेति। तथा च द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति चक्षुःसंयोगादेर्व्यभिचारेऽपि द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव यथा चक्षुःसंयोगत्वादिना हेतुत्वं तथानुमितित्वावच्छिन्नं प्रत्यत्यन्तान्योन्याभावगर्भव्याप्यवत्तापरामर्शस्य हेतुतायां व्यभिचारसत्त्वेऽप्यत्यन्ताभावगर्भव्याप्यवत्तापरामर्शनाशकानुमितित्वावच्छिन्नं प्रत्येवात्यन्ताभावगर्भव्याप्तिज्ञानत्वादिना हेतुत्वं वाच्यमिति भावः। तद्रूपेति। तथा च साध्यतावच्छेदकं सा-

व्याप्तिबुद्धयोऽनुगमनीयाः, प्रतिबन्धीतश्च साध्यतद्वदत्यन्तान्यो-न्याभावग्रहौ साध्यवत्ताबुद्धिम्। केवलान्वयिस्थले च भ्रमरूप-स्यैव तद्ग्रहस्य कथञ्चित् प्रसिद्धिरिति। तच्चिन्त्यम्। साध्यता-वच्छेदके साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदक-त्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च साधनसमा-धिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वावगाही यो ग्रहस्त-द्विरोधित्वं साध्याभाववद्वृत्तित्वसाध्यवदन्यवृत्तित्वोभयावगाहि-

———

ध्यं च साध्यवत्ताग्रहविरोध्यभावग्रहविषयतावच्छेदकत्वेनानुग-मय्य हेतुधर्मिकतद्वच्छिन्नाभावसामानाधिकरण्यग्रहविरोधित्वे-नैव व्याप्तिधियोऽनुमितिहेतुत्वमिति भावः। तद्ग्रहस्य। साध्यतद्वतोरत्यन्तान्योन्याभावग्रहस्य। कथञ्चित्। अभावान्तरे प्रतियोगितासम्बन्धेन वाच्यत्वाद्यवगाहित्वेन। अत्र साध्यभेदस्य साध्यवदत्यन्ताभावस्य च साध्यवत्ताग्रहविरोधितावच्छेदकरूपाव-च्छिन्नाभावत्वात्तत्सामानाधिकरण्यग्रहविरोधिनः साध्यभेदासा-मानाधिकरण्यसाध्यवदत्यन्ताभावासामानाधिकरण्यस्य वा ग्रहे सत्यप्यनुमित्यापत्तिः किञ्च भिन्नविषयकग्रहस्य विरोधित्वे साध्यवद्भेदान्तर्भावेनानुगमो व्यर्थः साध्यात्यन्ताभावसामाना-धिकरण्यग्रहविरोधित्वेनैवान्योन्याभावगर्भव्याप्तिज्ञानस्याप्यनुगमस-म्भवात् अविरोधित्वे तु साध्यवद्भेदग्रहस्य साध्यवत्ताग्रहा-विरोधित्वादुक्तक्रमेणानुगमाशक्यत्वमित्यस्वरसेनाह तच्चिन्त्यमि-ति। [ चिन्ताबीजन्तु यत्वतत्त्वयोरनुगतत्त्वेनाननुगम-तादवस्थ्यमिति ध्येयम। ] मतान्तरमाह साध्यतावच्छेदके-त्यादिवदन्तीत्यन्तेन। नव्यमते अत्यन्तान्योन्याभावगर्भव्याप-कताज्ञानयोरन्योन्यात्यन्ताभावगर्भव्यापकत्वग्रहौ प्रत्यविरोधित्वादु-भयसङ्ग्रहार्थमवगाहिनाद्ययोक्तिः। ननु साध्यतावच्छेदके तादृशाव-च्छेदकत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च तादृशा-

ग्रहविरोधित्वादिकं वानुगमकं वाच्यम् । प्रसिद्धिः पूर्ववत् । अ-
धिकं हेत्वाभासे वक्ष्यमाणरीत्या बोध्यम् । ग्रन्थस्तूपलक्षणपरो,
नौपाधिकत्वमात्रव्यवच्छेदाय । यद्वक्ष्यति अनौपाधिकत्वन्तु तल्ल-
क्षणमितीति वदन्ति । व्यभिचाराज्ञानस्य व्याप्तिधीहेतुत्वात्



न्योन्याभावप्रतियोगितावच्छेदकत्वावगाही यो ग्रहस्तद्विरोधित्वेना-
नुगमे गौरवमत आह साध्याभावेति । तथा चात्र कल्पे साधन-
स्यैव विशेष्यतया निवेशो न तु साध्यतावच्छेदकतदवच्छिन्नसाध्य-
योर्विशेष्यतया निवेश इति लाघवमिति भावः । केचित्तु साध्यव्या-
पकताज्ञानं नानुमितिहेतुः साधनभेदेन नानात्वात् किन्तु साध्याभा-
ववदवृत्तित्वस्य साध्यवदन्यावृत्तित्वस्य च द्वयोरेव ज्ञानं हेतुः साध-
नभेदेऽप्यभेदात् । तद्भ्रमादेव च केवलान्वयिन्यनुमितिरिति नव्यमतम-
नुसृत्याह साध्याभावेति । साधनधर्मिकेत्यादिः । अत्राप्युभयप्रवे-
शफलं पूर्ववत् । विरोधित्वादिकमित्यादिना तत्तद्व्यक्त्यभावकूटाव-
गाहिग्रहविरोधित्वादेः परिग्रहः । ननु जातिमान् द्रव्यत्वादित्यादौ
हेतुतावच्छेदकसमवायादिसम्बन्धेन साध्याभाववदवृत्तित्वाप्रसि-
द्ध्या तदवगाहिग्रहविरोधित्वं दुर्वचमतआह प्रसिद्धिरिति । तथा
च समवेतत्वे साध्याभाववदीयत्वावगाही भ्रमरूप एव ग्रहो धर्तव्य
इति भावः । ननु व्यभिचारव्यावर्तकधर्मवत्त्वज्ञानस्यापि व्यभिचा-
रग्रहविरोधित्वात्तत्रातिप्रसङ्ग इत्यत आह अधिकमिति । तादृशज्ञान-
व्यावृत्तो विरोधिताविशेष एव निवेशनीय इति भावः । ननूक्तक्रमे-
णात्यन्ताभावगर्भव्याप्तेरनुमितिहेतुत्वे अन्योन्याभावगर्भैव व्याप्तिरि-
त्यादिमूलग्रन्थासङ्गतिरित्यत आह ग्रन्थस्त्विति । अन्योन्याभाव-
गर्भपदस्यानौपाधिकत्वान्यपरत्वादितिभावः । अनौपाधिकत्वमात्र-
व्यवच्छेदं मूलस्वरसं दर्शयति यद्वित्यादि । अन्यथाऽनौपाधिकत्वा-
दिकन्तु तल्लक्षणमित्येव ब्रूयादितिभावः । अत्रोक्तग्रहविरोधित्वमात्रेण
हेतुत्वेऽनौपाधिकत्वज्ञानस्यापि कारणत्वापत्तिस्तस्यापि सोपाधिक-
त्वमन्तर्भाव्य यो व्यभिचारग्रहस्तद्विरोधित्वेनोक्तरूपत्वात् । न च

व्याप्तिग्रहप्रतिबन्धकग्रहाविषयत्वेन व्यभिचारस्याभासत्वम् । सोपाधित्वज्ञानन्तु न साक्षाद्व्याप्तिधीविरोधि विरोध्यविषयत्वात्, किन्तु व्यभिचारधीद्वारा । वक्ष्यते चानुमितेस्तत्कारणज्ञानस्य साक्षाद्विरोधिन एवाभासत्वम् । निरुपाधित्वस्य ज्ञानन्तु न व्याप्तिधीहेतुः, मानाभावात, तथात्वेऽप्युपाधेराभासत्वायोगाच्चेति ।

इदं पुनरिहावधेयम् । यदन्योन्याभावस्याव्याप्यवृत्तित्वे



ताद्दशग्रहत्वाव्यापकविषयिताशून्यग्रहविरोधिज्ञानत्वेनैव हेतुत्वं सोपाधित्वविषयिता तु ताद्दशग्रहत्वाव्यापिकैवेति नातिप्रसङ्ग इति वाच्यम् । ज्ञानभेदेन भिन्नानां सर्वासामेव विषयितानां ताद्दशग्रहत्वाव्यापकत्वेनैव तच्छून्यग्रहाप्रसिद्धेरुक्तक्रमेण हेतुत्वापेक्षया लाघवेन सोपाधित्वाद्यविषयकं यत्किञ्चिदुक्तग्रहमुपादाय तद्व्यक्तिविरोधित्वेनैव हेतुत्वापत्तेः । न चेष्टापत्तिस्तत्रैव ग्रन्थतात्पर्य्यसम्भवादिति वाच्यम् । तथासति ताद्दशानन्तव्यक्तीरुपादाय प्रत्येकं तत्तद्ग्रहविरोधित्वेनानुमितिहेतुतायामनन्तकार्य्यकारणभावापत्तेर्विरोधितावच्छेदकभेदेनैव विरोधित्वस्यापि भिन्नत्वात्ताद्रूप्येणानुगमासम्भवाच्चेत्यस्वरसाद्वदन्तीत्युक्तम् । अज्ञानरूपासिद्ध्युपजीव्यतया व्यभिचारस्य नाभासत्वं किन्तु व्याप्तिधीविरोधित्वेन तच्चोपाधित्वज्ञानस्य नास्तीत्यसौ नाभास इति मूलाभिप्रायं प्रकाशयन्नाह व्यभिचाराज्ञानस्येति । ननूपाधिधर्मिकसाध्यव्यापकत्वादिज्ञानस्य भिन्नधर्मिकतया हेतौ व्याप्तिग्रहविरोधित्वेपि हेतुधर्मिकसोपाधित्वज्ञानस्य व्याप्तिधीविरोधित्वसम्भवान्न ज्ञानस्येत्यादिमूलमयुक्तमतस्तदपि दूषयति सोपाधित्वेति । न व्याप्तीति । न साक्षाद्व्याप्तिधीविरोधीत्यर्थः । विरोध्यविषयत्वात् । विरोधिविषयताशून्यत्वादित्यर्थः । ननु परस्पराविरोधिन एव सोपाधित्वस्य कुतो नाभासत्वमत आह वक्ष्यन्ति हीति । न चानौपाधिकत्व इत्यादिमूलस्य हेत्वनभिधानान्न्यूनतामपाकर्तुमाह निरुपाधित्वस्येति । तथात्वेपि । निरुपाधित्वधिया व्याप्तिग्राहकत्वेपि । आभासत्वायोगादिति । अनुमितौ तत्कारणप-

प्रतियोग्यवृत्तित्वविशेषिततद्घटितलक्षणस्य संयोगादिसाध्यक-व्यभिचारिण्यतिव्याप्तिः । संयोगान्योन्याभावस्य केवलान्वयि-त्वात् । अथ व्याप्यवृत्तिसाध्यके स्वव्यापकसाध्यसामानाधिकर-

---

रामर्शे वा तस्याविरोधित्वादिति भावः । तद्घटितेति । हेतुमन्निष्ठा-भावघटितेत्यर्थः । केवलान्वयित्वादिति । तथा च तस्य प्रतियोगिवृ-त्तित्वाद्धेतुसमानाधिकरणो यः प्रतियोग्यवृत्तिर्घटाद्यन्योन्याभावस्त-त्प्रतियोगितानवच्छेदकमेव साध्यवत्त्वमतः संयोगि सत्त्वादित्यत्रा-तिव्याप्तिरिति भावः । यद्यपि प्रागुक्तक्रमेण हेतुसमानाधिकरणस्य द्रव्यभेदस्यैव पारिभाषिकप्रतियोगितावच्छेदकं संयोगवत्त्वमतो ना-तिप्रसङ्गस्तथापि यत्रासद्धेतुविशेषे साध्यतावच्छेदकं न प्रतियोगि-तावच्छेदकं तत्रैव पारिभाषिकावच्छेदकानुप्रवेशो न सर्वत्रेत्यभिप्रे-त्य गुरुधर्मस्यापि वा प्रतियोगितावच्छेदकत्वमादृत्येदमुक्तम् । इद-न्तु चिन्त्यते । स्वप्रतियोगित्वावच्छिन्नभिन्नं यद्धेत्वधिकरणं तन्निष्ठा-न्योन्याभावेत्युक्तौ न कोपि दोषः वृक्षे संयोगिभेदसत्त्वेपि तत्प्रति-योगित्वावच्छिन्नभेदविरहादेव संयोगी तत्त्वादित्यादावव्याप्तिविर-हाद्वृक्षः संयोगिभेदप्रतियोगी नेत्यप्रत्ययात् प्रतियोगिभेदेपि लाघवेन प्रतियोगित्वस्यैक्यात् सत्त्ववति गुणादौ च संयोगिभेदप्रतियोगिता-वच्छिन्नस्यापि भेदसत्त्वात्संयोगी सत्त्वादित्यादावतिव्याप्तेरनवका-शात्, अस्तु वा यद्यत्स्वप्रतियोगि तत्तद्व्यक्तित्वावच्छिन्नभेदकूटव-द्धेत्वधिकरणवृत्तिरन्योन्याभावो व्याप्तिघटकस्तथापि न क्षतिः सं-योगिभेदप्रतियोगितद्वृक्षव्यक्तेरेव भेदस्य तद्वृक्षे विरहेण संयोगी तत्त्वादित्यादावव्याप्तिव्युदासादिति । साध्यादिभेदेन व्याप्तिभेदस्या-वश्यकत्वात्सर्वत्रैकनिरुक्त्यभावेपि न क्षतिरित्याशयेन शङ्कते अथेति । स्वव्यापकेति । हेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकीभूतसा-ध्यसामानाधिकरण्यमित्यर्थः । स्वव्यापकेति । स्वं प्रकृतसाध्यं-तद्व्या-पकतावच्छेदकं तद्वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकतानव-च्छेदकं यद्रूपमधिकरणतानिरूपकतावच्छेदको धर्मस्तदवच्छिन्नात्य-न्ताभावासामानाधिकरण्यमित्यर्थः । तेन नान्योन्याभावगर्भत्वहा-

ण्यमेव व्याप्तिः अव्याप्यवृत्तिसंयोगादिसाध्यके तु स्वव्यापकतावच्छेदकरूपानवच्छिन्नप्रतियोगिताकात्यन्ताभावेन तादृशरूपविशिष्टावच्छिन्नप्रतियोगिताकान्योन्याभावेन वा सममसामानाधिकरण्यमिति चेत् । स्मृतिसंस्कारजन्यज्ञानविषयत्वादिकेवलान्वयिसा-

———

नि: । गगनत्वादेर्निरुक्तव्यापकतावच्छेदकत्वेऽप्यधिकरणतानिरूपकतावच्छेदकत्वविरहात्तद्रूपपदेनैव वारणमतस्तदवच्छिन्नाभावसामानाधिकरण्यस्य धूमादौ सत्त्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः । उक्तापेक्षया लाघवादाह तादृशरूपविशिष्टेति । साध्यव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः । तथा च साध्यवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकरूपावच्छिन्नान्योन्याभावासामानाधिकरण्यं फलितम् । न च तादृशपृथिव्याद्यन्योन्याभाववति कालिकसम्बन्धेन धूमादेः सत्त्वाद्वह्निमान् धूमादित्याव्याप्तिः हेतुतावच्छेदकसम्बन्धेन वृत्तित्वे तु सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः सदन्यसमवेतत्वाप्रसिद्धेरिति वाच्यम् ।तादृशरूपावच्छिन्नान्योन्याभावाधिकरणावृत्त्यधिकरणताकत्वस्य विवक्षितत्वादत एव विशिष्टसत्ताद्रव्यान्यवृत्तित्वेऽपि द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः । विशिष्टनिरूपिताधिकरणत्वस्य द्रव्यान्यवृत्तित्वाभावात् । संयोगी सत्त्वादित्यादौ तादृशसाध्यव्यापकतावच्छेदकीभूतद्रव्यत्वावच्छिन्नान्योन्याभाववद्वृत्तित्वस्यैव सत्ताधिकरणतायां सत्त्वान्नातिप्रसङ्ग इति भावः । स्मृतीत्यादि । स्मृतिविषयत्वं संस्कारविषयत्वं अन्यज्ञानविषयत्वञ्च केवलान्वय्यपि महाप्रलयावच्छेदेन परमाण्वादावसत्त्वादव्याप्यवृत्त्येव प्रलये परमाण्वादिर्न स्मर्य्येत इत्यादिव्यवहारात् । तथा च तत्तत्साध्यकद्रव्यत्वादिहेतावव्याप्यवृत्तिसाध्यकस्थलीयलक्षणयोरव्याप्तिः । प्रथमेऽभावत्वादेरेव साध्यव्यापकतावच्छेदकतया तदवच्छिन्नात्यन्ताभावाप्रसिद्धेः द्वितीये चाभावत्वादेरेव निरुक्तसाध्यव्यापकतावच्छेदकत्वावच्छिन्नान्योन्याभावाप्रसिद्धेरिति भावः ।उद्बोधकनियम्याया: स्मृतेः सार्वत्रिकत्वे मानाभावात्संस्कारविषयत्वोपादानम् । नियमतोऽपेक्षाग्रहविषयत्वे-

ध्यकेषु का गतिः। अथ स्वाधिकरणयत्किञ्चिद्व्यक्तिवृत्तिधर्मा-
नवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यव-

---

न संस्काराविषयस्यापि वस्तुनः सम्भवित्वाज्जन्यज्ञानविषयत्वानु-
धावनम्। सर्वदैव सर्वत्र नित्यज्ञानविषयतासत्त्वादव्याप्यवृत्तित्व-
सम्पत्तये जन्यपदम्। कागतिः कथमव्याप्त्युद्धारः। स्वाधिकर-
णेति। स्वं हेतुः। संयोगि सत्त्वादित्यादौ संयोगवत्त्वस्यापि साध-
नाधिकरणद्रव्यवृत्तित्वात्तदवच्छिन्नभेदमादायातिव्याप्तिवारणं न
स्यादतो यत्किञ्चिदिति। तथा च संयोगवत्त्वावच्छिन्नभेदस्यापि सा-
धनवद्गुणवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वात्तत्प्रतियोगितावच्छे-
दकमेव साध्यमतो नातिप्रसङ्गः। न च यत्किञ्चित्त्वस्यैकस्याभावा-
त्साधनाधिकरणद्रव्यमन्तर्भाव्यातिव्याप्तितादवस्थ्यम्। संयोगिभे-
दस्य साधनाधिकरणैकव्यक्तिवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेपि
तादृशव्यक्त्यन्तरवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वे बाधकाभावा-
त्। साधनाधिकरणतत्तद्व्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताका-
न्योन्याभावप्रतियोगितावच्छेदकत्वाभावकूटवत्त्वस्यैव निविष्टत्वाद-
दोषः इति कश्चित्। साधनाधिकरणयत्किञ्चिद्व्यक्तिवृत्तिध-
र्मावच्छिन्नप्रतियोगिताकत्वोक्तौ संयोगी वृक्षत्वादित्यत्राव्या-
प्तिः। संयोगवत्त्वावच्छिन्नभेदस्य वृक्षावृत्तिसंयोगेनावच्छि-
न्नप्रतियोगिताकत्वादतस्तत्परित्यागः। यद्यपि चैवमपि
रूपाभाववान् घटत्वादित्यत्राव्याप्तिः, रूपसामान्याभाववत्त्वाव-
च्छिन्नान्योन्याभावात्मकस्य रूपस्यैव समवेतसामान्याभाववत्त्वाव-
च्छिन्नप्रतियोगिताकतया साधनवद्वृत्तिधर्मानवच्छिन्नप्रतियो-
गिताकत्वात्। तथापि स्वाधिकरणयत्किञ्चिद्व्यक्तिवृत्तिध-
र्मानवच्छिन्नं यदन्योन्याभावप्रतियोगित्वं तदनवच्छेदकसाध्यवत्त्वे
तात्पर्य्यम्। साध्यवत्त्वं चात्र [साध्यतावच्छेदकावच्छिन्नाधिकर-
णभेदेपि अभिन्नमेवेति मतेनेदम्, अन्यथा वह्नित्वावच्छिन्नाधिकर-
णत्वस्य प्रतिव्यक्ति भिन्नत्वे तादृशान्योन्याभावप्रतियोगितावच्छे-
दकताघ्रौव्याद्वह्निमान्धूमादित्यादावव्याप्त्यापत्तेः। वस्तुतः] साध्य-
तावच्छेदकधर्मावच्छिन्नसाध्यमात्रं न तु तदवच्छिन्नाधिकरणत्वम्,

त्त्वकत्वम्, यद्धर्मविशिष्टयत्किञ्चिदधिकरणवृत्तिधर्मानवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वे सति तद्धर्मविशिष्टत्वं वा सेति चेत् । अत्र किं यथा कथञ्चित्सम्बन्धेन तदधिकरणवृत्तित्वं विवक्षितं साध्यतावच्छेदकसम्बन्धेन वा, आद्ये गुणः स्पन्दत्वादित्यत्रातिव्याप्तिः, गुणत्वस्य स्वरूपसम्बन्धेन स्पन्दवृत्तितया तद्वत्त्वस्य स्पन्दानिष्ठतादृशान्योन्याभावप्रतियोगितानवच्छेदकत्वात् । द्वितीये समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः, जातिमन्मेयव्यक्तिनिष्ठतादृशान्योन्याभावप्रतियोगिताया जातिमत्त्वेनाऽनवच्छेदाज्जातिशून्यमेयव्यक्तौ समवायेन वर्त्तमानस्याऽप्रसिद्धत्वात् । एतेन ग्रहो व्याख्यातः ।

---

तथा सति दैशिकविशेषणतया हेत्वधिकरणवृत्तित्वनिवेशस्यैव निर्दोषत्वेन वक्ष्यमाणातिव्याप्त्यसङ्गत्यापत्तेरिति ध्येयम् । [ न च कालो घटवान् महाकालत्वादित्यादौ तादृशान्योन्याभावाप्रसिद्धिरिति वाच्यम् । विषयितादिसम्बन्धेनावृत्तिगगनादिमतो भेदस्यैव तथात्वादिति भावः । ] नन्विदं संयोगि विशिष्टसत्त्वादित्यादावव्याप्तिः संयोगवत्त्वावच्छिन्नभेदस्य साधनीभूतसत्ताधिकरणीभूतगुणवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वादत आह तद्धर्मविशिष्टेति । प्रकृतहेतुतावच्छेदकविशिष्टेत्यर्थः। निरुक्तसाध्यवत्त्वकत्वं रासभादिसाधारणमत उक्तं तद्धर्मविशिष्टेति । स्वरूपसम्बन्धेनेति । कालिकसम्बन्धेनेत्यर्थः । तादृशेति । हेत्वधिकरणयत्किञ्चिद्विद्यमानस्पन्दवृत्तिधर्मानवच्छिन्नप्रतियोगिताको यश्चिरातीतघटादिमद्भेदस्तत्प्रतियोगितानवच्छेदकत्वादित्यर्थः । जातिमत्त्वेनेति । तथा च हेत्वधिकरणं यद्घटादिकं तत्समवेतानवच्छिन्नप्रतियोगिताकस्य पटादिभेदस्य प्रतियोगितानवच्छेदकमेवजातिमत्त्वमित्यतिव्याप्तिरिति भावः [ ननु साधनवति सामान्यादौ जातिमत्त्वावच्छिन्नभेदसत्त्वान्नातिव्याप्तिरत आह जातिशून्य इति । तथा च सामान्यादौ समवेतत्वाप्रसिद्ध्यैव तादृशसाधना-

एवं तथात्वेऽत्यन्ताभावगर्भमपि दुर्वचम् । तथा हि, प्रतियोग्यनधिकरणीभूतहेत्वधिकरणनिष्ठात्यन्ताभावेत्यादिगर्भमव्यापकमेव संयोगादिसाध्यकद्रव्यत्वादौ, स्वाधिकरणीभूतयत्किञ्चिद्द्रव्यत्त्यवृत्तिप्रतियोगिकात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि पूर्ववत् गुणः स्पन्दत्वात् जातिमान्मेयत्वादित्यत्रातिव्याप्तिः, एवं स्वप्रतियोगिनिष्ठाधेयत्वानिरूपकहेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि उत्पत्तिकाला-

———

धिकरणं न लक्षणघटकमिति भावः । ] एतेनेति । व्याख्यातो दृष्यत्वेन] तथा च ग्राह्याप्रसिद्ध्या ग्रहस्य प्रमात्वं कुत्रापि न स्यादिति भावः । तथात्वे । अन्योन्याभावस्याप्यव्याप्यवृत्तित्वे। अव्यापकमेवेति । संयोगवत्त्वावच्छिन्नभेदस्याप्युत्पत्तिकालावच्छेदेन घटादौ सत्त्वादिति भावः। प्रतियोग्यधिकरणं यद्यत्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटत्वेन हेत्वधिकरणस्य प्रवेशे तु नैष दोष इत्यवधेयम् । स्वाधिकरणेत्यादि । प्रकृतहेत्वधिकरणयत्किञ्चिन्निष्ठाधिकरणतानिरूपकतावच्छेदकधर्मानवच्छिन्नं यदत्यन्ताभावप्रतियोगित्वं तदनवच्छेदकीभूतसाध्यतावच्छेदकधर्मावच्छिन्नसामानाधिकरण्यमित्यर्थः। तेन सत्ताया गुणावृत्तित्वेपि विशिष्टसत्तावाञ्जातेरित्यादौ नातिव्याप्तिर्न वा प्रागुक्तरीत्या रूपसामान्याभाववान् घटत्वादित्यादावव्याप्तिः । पूर्ववदिति । सामान्येन हेत्वधिकरणवृत्तित्वस्योक्तौ गुणः स्पन्दत्वादित्यत्र साध्यतावच्छेदकसम्बन्धेन तथात्वोक्तौ च जातिमान् मेयत्वादित्यत्रातिव्याप्तिरिति भावः।स्वप्रतियोगीति । स्वावच्छेदकधर्मावच्छिन्नाधेयत्वानिरूपकहेत्वधिकरणनिष्ठाभावीयं यत्प्रतियोगित्वं तदनवच्छेदकमित्यर्थः । तेन विशिष्टसत्ताभाववाञ्जातेरित्यादौ नातिव्याप्तिः।आधेयत्वञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्।नातो गुणः स्पन्दत्वादित्यादावतिव्याप्तिः।जन्यानामिति।संयोगनिष्ठाधेयत्वानिरूपकत्वोपगमे इत्यन्वयः । द्रव्यत्वस्य हेतुतास्थले

तल्लक्षणम् । नन्वेवमुपाधिरसिद्ध्युपजीव्यत्वेन व्यभिचारवत् हेत्वाभासान्तरं स्यात् न तु व्याप्त्यभावत्वेनासिद्धिरिति चेत् । तज्ज्ञानमुपजीव्यमपि न स्वतो दूषकम्, नाऽन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने प्रतिबन्धकम्, अतिप्रसक्तेः ।

---

वच्छेदेन जन्यानां द्रव्याणामजन्यानाञ्च प्रलयावच्छेदेन वा संयोगनिष्ठाधेयत्वानिरूपकत्वोपगमे संयोगसाध्यकद्रव्यत्वे कालपरिमाणे च हेतावव्याप्तिः । कृतं पल्लवितेन ।

अत्र वदन्ति । साध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वव्यापकस्वसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वकत्वम्, स्वसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वव्यापकसाध्यसमा-

---

उत्पत्तिप्रलयोभयावच्छेदेनैव हेतुमतः साध्यनिष्ठाधेयत्वानिरूपकत्वं सम्भवत्यतो यादृशहेतुनास्थले प्रलयावच्छेदेनैव तद्वतः साध्यनिष्ठाधेयत्वानिरूपकत्वं तदुदाहरति । कालपरिमाणेति । संयोगसाध्यक इत्यनुषज्यते । यावत्साध्यव्यापकसाधनाव्यापकत्वरूपानौपाधिकत्वव्याप्तिं निष्कृष्य सिद्धान्तयति साध्यसमानाधिकरणेत्यादिना । अत्र प्रतिपदव्यावृत्तिर्व्याप्तिवाद एव प्रागुक्ता । अनवच्छेदकत्वेत्यत्राभावद्वयप्रवेशे गौरवादाह स्वसमानाधिकरणेत्यादि । तत्सम्बन्धावच्छिन्नेत्यादेरप्रवेशे लाघवादाह स्वसमानाधिकरणा सर्वे इत्यादि । यद्धर्मावच्छिन्नसामानाधिकरण्यत्वे हेतुसामानाधिकरण्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं तद्धर्मा-

व्यभिचाराज्ञानस्य तद्धेतुत्वात् तद्धीस्तथा, न चानौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुरित्युक्तम् । तथा च व्यभिचारज्ञानद्वारा स दूषकः । एवञ्च परमुखनिरीक्षकतया सिद्धसाधनवन्न पृथक् । न चैवमव्यभिचारस्य व्याप्तित्वे व्यभिचारस्तदभावत्वेनासिद्धिः स्यादिति वाच्यम् । सा-

———

नाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वकत्वं वा, स्वसमानाधिकरणाः सर्वे यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यम्, साध्यसामानाधिकरण्याभावव्यापकता-

———

वच्छिन्नसामानाधिकरण्यमित्यर्थः । व्यापकत्वं विना यावत्त्वस्य दुर्वचत्वादिति ध्येयम् । अत्र सामानाधिकरण्यस्याव्याप्यवृत्तितायाः प्रामाणिकत्वे धूमादिसमानाधिकरणस्य घटाभावादेर्वह्न्याद्यनधिकरणदेशावच्छेदेन वन्हित्वाद्यवच्छिन्नसामानाधिकरण्यविरहाद्वन्हिमान् धूमादित्यादावव्याप्तिः । न च हेतुसमानाधिकरणत्वं निरवच्छिन्नविशेषणतया वाच्यमतो नोक्तदोषः, साधनीभूतधूमाद्यधिकरणावच्छेदेनैव वस्तूनां तत्सामानाधिकरण्यवत्त्वेन निरवच्छिन्नविशेषणतया धूमसामानाधिकरण्यस्यैवाप्रसिद्धेरतो गुर्वपि लक्षणान्तरमाह साध्यसामानाधिकरण्याभावेति । अत्र व्यापकतावच्छेदकं साध्यसामाधिकरण्याभावत्वं निरवच्छिन्नविशेषणताविशेषेण ग्राह्यम् । तेन घटाद्यभावस्य वन्ह्यनधिकरणदेशावच्छेदेन वन्ह्यादिसामानाधिकरण्याभाववत्त्वेपि वन्हिमान् धूमादित्यादौ नाव्याप्तिः । धूमवान् वन्हेरित्यादौ निरवच्छिन्नविशेषणतया साध्यसामानाधिकरण्याभावस्याश्रये तप्तायःपिण्डत्वादौ तत्प्रकारकप्रमाविषयत्वादौ वा हेतुसामानाधिकरण्यस्याभावविरहान्नातिव्याप्तिरिति ध्येयम् । साध्यतेति । तेन घटत्ववान् मेयत्वादित्यादौ कालिकसम्बन्धेन यत्साध्यस्याधिक्-

ध्याभाववद्वृत्तित्वं हि व्यभिचारः तदभावश्च नाव्यभिचारः, केवलान्वयिन्यभावात् । किन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यम् । न चानयोः परस्परविरहत्वमिति ॥

---

वच्छेदकस्वसामानाधिकरण्यसामान्याभावत्वकत्वं वा व्याप्तिः । अत्र च साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तद्वृत्तिद्वयञ्च एकेन सम्बन्धेन विशेषणताविशेषेण वा बोध्यमिति ॥

---

रणं तद्वृत्तिरवृत्तिरेवेति तत्र मेयत्वस्य सामानाधिकरण्याभाववत्त्वान्नातिव्याप्तिरिति । हेतुतेति । तेन रूपवान् घटत्वादित्यादौ साध्यसमानाधिकरणस्य महाकालत्वादेः कालिकसम्बन्धेन यद्घटत्वाद्यधिकरणं तद्वृत्तित्वेपि नाव्याप्तिः । ननु द्रव्यं सत्त्वादित्यादावतिव्याप्तिः साध्यवत्कालवृत्तित्वाभावस्यावृत्तिगगनादेरेव सत्त्वेन तत्र हेतुसामानाधिकरण्यस्यापि सत्त्वात् । न च दैशिकविशेषणतासम्बन्धेनैव साध्यवद्वृत्तित्वं निवेश्यमिति नोक्तदोषः । तथा सति तादृशवृत्तित्वाभाववति पर्वतत्वादौ समवायादिना हेतुमद्वृत्तित्वस्य सत्त्वेन वन्हिमान् धूमादित्यादावव्याप्त्यापत्तेरत आह वृत्तिद्वयञ्चेति । साध्याधिकरणवृत्तित्वं हेत्वधिकरणवृत्तित्वञ्चेत्यर्थः । एकेति । यत्सम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वं लक्षणघटकं तत्सम्बन्धावच्छिन्नमेव हेतुमद्वृत्तित्वं निवेश्यमित्यर्थः । यत्तदर्थयोरननुगतत्वात्समवायेन तादृशवृत्तिद्वयस्याभावमादाय सत्तावान् मेयत्वादित्यादावतिव्याप्तेराह विशेषणतेति ।

इति श्रीजगदीशभट्टाचार्यविरचितो व्याप्त्यनुगमग्रन्थः समाप्तः ।

---

## चिन्तामणेः सामान्यलक्षणा ।

व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधू-मादिविषयकः । कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे त-

## दीधित्याः सामान्यलक्षणा ।

प्रसङ्गात् सामान्यलक्षणां व्यवस्थापयितुमाह व्याप्तिग्रह-श्चेति । केचित्तु समानाधिकरणयोरेव व्याप्तिरिति पक्षे पर्वतीय-धूमे वन्हिव्याप्तिविशिष्टधीर्न पर्वतीयवन्हिव्याप्तिग्रहं विना स च न सामान्यलक्षणां विनेति कथितव्याप्तिविशिष्टेत्यादिलक्षणोपो-द्घातोऽपीत्याहुः । अत्र च सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थे

## जागदीश्याः सामान्यलक्षणा ।

व्यवस्थापयितुमित्यस्य सन्निकर्षत्वेनेत्यादिः । तेन ज्ञातसा-मान्यस्य सामान्यज्ञानस्य वा सर्वसमानत्वान्नाऽसङ्गतिः । समाना-धिकरणवृत्तिधूमत्वादेर्व्याप्तित्वे धूमान्तरे गृहीतस्य तस्यैवोपनीतत-या पर्वतीयवन्हेरग्रहेऽपि तदीयधूमे परामर्शसम्भवादाह सामाना-धिकरण्ययोरेवेति । पक्षे । मते । स चेति । पर्वतीयवन्हिव्याप्तिग्रह-श्चेत्यर्थः । लक्षणस्येत्यस्याऽनुमितीत्यादिः । उपोद्घात इति । व्या-प्तिग्रहस्य प्रकृतस्य सिद्ध्यर्थं चिन्तनीयादित्यर्थः । अपिना प्रसङ्गस्या-पि तथात्वं सूच्यते । व्यापकसामानाधिकरण्यमात्रं रासभादिसा-

रमादनुमितिः । सा चेन्द्रियसम्बद्धविशेषणताऽतिरिक्तैव

---

सामान्यमेव प्रत्यासत्तिः, सामान्यं लक्षणं निरूपकं यस्या इत्यर्थे तु तज्ज्ञानम् । तत्राद्यमाह सा चेन्द्रियेति । इन्द्रियेण सम्बद्धं धूमादि तस्य विशेषणं तद्विशेष्यकज्ञानप्रकारो धूमत्वादिरित्यर्थः । विशेषणतेत्यत्र भावार्थो न विवक्षितः । तत्र विशेषणत्वं यस्या

---

धारणतया न व्याप्तिः, साधननिष्ठस्य तादृशसामानाधिकरण्यस्य व्याप्तित्वे विशिष्टसत्त्वव्यापकद्रव्यत्वसामानाधिकरण्यवतः सत्त्वमात्रस्य गुणादौ परामर्शात्तत्र द्रव्यत्वानुमित्यापत्तिः, किञ्च अस्तु समानाधिकरणयोरेव व्याप्तिः तथापि द्रव्यत्वादिहेतुकसत्त्वादिसाध्यकानुमितिं प्रति व्याप्तिविशिष्टेत्यादिलक्षणेन सङ्गृह्य तद्वृत्तिजातिमत्त्वस्य वन्ह्याद्यनुमित्यादावपि नेतव्यत्वात्कोपोद्घातः सम्भवतीत्यस्वरसः कैश्चिदित्युक्त्या सूचितः । विशेषणतारूपाया अतिरिक्तरूपायाश्च द्विविधायाः प्रत्यासत्तेर्मूलकृताऽभिधानादुभयत्रैव सामान्यलक्षणाशब्दं व्युत्पादयति, अत्र चेति । यद्यपि सामान्यं च तल्लक्षणं चेति कर्मधारयस्यैव सम्भवे बहुव्रीहिरनुचितः, तथापि कर्मधारये लक्षणपदस्याऽनुपसर्जनत्वे सामान्यलक्षणा प्रत्यासत्तिरिति प्रयोगो न स्यात् प्रत्युत सामान्यलक्षणं प्रत्यासत्तिरित्येव स्यात् लक्षणशब्दस्याऽजहल्लिङ्गत्वादतो बहुव्रीहिरादृत इति भावः । निरूपकमिति । विषयतया निरूपकमित्यर्थः । केचित्तु ननु ज्ञातसामान्यं सामान्यज्ञानं वास्तु सामान्यलक्षणा तस्यास्तु प्रत्यासत्तित्वं कुतः षोढा गणितप्रत्यासत्त्यनन्तर्गतत्वादत उक्तं सा चेति । तथा च तस्या विशेषणतायामेव निवेशात् न गणितानन्तर्भाव इति षड्विधगणनस्य लौकिकप्रत्यासत्तिपरतया सामान्यलक्षणायास्तत्रानन्तर्भावेऽपि न क्षतिरित्याशयेनोक्तमतिरिक्तैव वेति । गणितषड्विधप्रत्यासत्त्यतिरिक्तैव वेति तदर्थ इति मूलं व्याचक्रुः । नन्विन्द्रियसम्बद्धविशेषणत्वं यदीन्द्रियसम्बद्धवृत्तित्वं तदा धूमत्वस्येन्द्रिय-

वा । तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य हेतुत्वेना-
ऽनागतादौ संयोगादेरभावादिति वदन्ति । तदपरे न म-

---

इति बहुव्रीहिर्वा । सम्बद्धपदस्यैव वा परम्परासम्बन्धस्तत्सम्ब-
न्धविशेष्यकज्ञानप्रकारोऽर्थः । तथा च सैव विशेषणतेत्यर्थः । अत्र
च बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वञ्च
नियामकम् । एवञ्चाणुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाणु-

---

सम्बद्धवाष्यादिधर्मत्वाभावात्ताद्रूप्येण वाष्पग्रहात्सकलधूमप्रत्यक्षं
न स्यादतो व्याचष्टे तद्विशेष्यकेति । तत्प्रकारकतदाश्रयप्रत्यक्षं प्रति
इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्नतद्रूपत्वेन हेतुत्वमित्याविः
ष्कर्तुमाह धूमत्वादेरिति । प्रकारतापर्यवसितविशेषणताया धूमत्वा-
दिसामान्यस्वरूपत्वासम्भवादाह विशेषणतेत्यत्रेति । यद्यपि भावा-
र्थस्य विवक्षायामपि न क्षतिः सन्निकृष्टधूमधर्मिकज्ञानप्रकारताप-
न्नधूमत्वादेरिव धूमत्वादिनिष्ठायाः सन्निकृष्टधर्मिकज्ञानप्रकारताया
अपि धूमत्वादिसामान्यनिष्ठप्रकारतारूपस्वाश्रयवत्त्वरूपपरम्परा-
सम्बन्धेन धूमत्वादिप्रकारकधूमत्वाद्याश्रयप्रत्यक्षं प्रति हेतुत्वस्य
सुवचत्वात्तथापि सामान्यस्य हि प्रत्यासत्तित्वं लाघवान्न तु सामा-
न्यतया ज्ञानस्येत्यादिमूलग्रन्थमनुरुध्यैव भावप्रत्ययस्यार्थः परित्य-
क्त इति ध्येयम् । ननु भावार्थविवक्षायां सा चेत्यनेन सार्द्धमिन्द्रिय-
सम्बद्धविशेषणपदार्थस्याभेदान्वयो न स्यात्तन्नियामकस्य समान-
विभक्तिकत्वादेस्तत्रासत्त्वात्, सुरूपा देवतेत्यादिवत्कथं चित्समर्थ-
नेपि भावप्रत्ययस्य वैयर्थ्यापत्तिरेवेत्यत आह तत्र विशेषणत्वमि-
ति । व्यधिकरणबहुव्रीहेः सर्वत्र व्युत्पत्तेरस्वीकारादाह सम्बद्ध-
पदस्यैव वेति । नन्विन्द्रियसम्बद्धविशेषणत्वं यस्या इति बहुव्रीहौ
तादृशसंस्कारादिप्रकारतामादायातिप्रसङ्गः प्रकारतार्थकस्य विशेष-
णताशब्दस्य ज्ञानप्रकारतापरतायामाधुनिकलक्षणापत्तिरित्यत आह

गोचरो मानसो बोध इति वदन्ति। एतेन धूलीपटले धूमभ्रमे

———

सम्बद्धपदस्येत्यपि वदन्ति। अत्र चेति। इन्द्रियसम्बद्धविशेष्यक-ज्ञानप्रकारीभूतसामान्यमित्यत्र चेत्यर्थः। तत्तदिन्द्रियजन्यत्वमिति। तत्तदिन्द्रियप्रयोज्यं चाक्षुषत्वादिवैजात्यमित्यर्थः। यथाश्रुते चक्षु-र्जन्यज्ञानत्वादेः कारणतावच्छेदकत्वे गौरवापत्तेरिति ध्येयम्। नि-यामकम्। कारणतावच्छेदकतया प्रयोजकम्। तथा च तत्पुरुषी-यधूमत्वप्रकारकचाक्षुषत्वावच्छिन्नं प्रति तत्पुरुषीयचक्षुःसन्निकृष्ट-धर्मिकतत्पुरुषीयचाक्षुषप्रकारतापन्नधूमत्वं हेतुः। तत्र तु कार्यस्या-लौकिकं मुख्यविशेष्यत्वं कारणस्य तु समवायः प्रत्यासत्तिः। तेन प्राथमिकधूमत्वविशिष्टचाक्षुषे धूमकालीनोयं घट इत्यादिधूमोपनी-तचाक्षुषे वा न व्यभिचारः। एवं घटत्वादिसामान्यमन्तर्भाव्यापि बोध्यम्। कारणतावच्छेदकविशिष्टस्य व्यवहितपूर्वसत्त्वापेक्षणा-च्च न कालान्तरीयचक्षुसंयोगादिकमादायातिप्रसङ्गः। न च लौ-किकसन्निकर्षस्य नानात्वात् संयोगाद्येकतरस्य निवेशेऽन्यतो जा-यमानप्रत्यक्षस्थले व्यभिचार इति वाच्यम्। चक्षुर्निष्ठलौकिकचा-क्षुषजनकताघटकसम्बन्धत्वेन चक्षुर्लौकिकसन्निकर्षमात्रस्यैव प्रवि-ष्टत्वादिति। केचित्तु चक्षुःसंयुक्तविशेष्यकचाक्षुषाव्यवहितोत्तर-चाक्षुषत्वावच्छिन्नं प्रति तादृशचाक्षुषप्रकारतापन्नधूमत्वेन हेतुत्वं तेन चक्षुर्निष्ठतादृशजनकताया असत्त्वेपि न क्षतिरिति वदन्ति। न चैवमपि पुष्पादौ सौरभत्वभ्रमाज्जायमानस्य चाक्षुषस्य सौरभमु-ख्यविशेष्यकत्वं स्यात्, तथा च वहिरिन्द्रिणायां स्वायोग्यमुख्य-विशेष्यकज्ञानाजनकत्वनियमो भज्येतेति वाच्यम्। सामान्यभेदेन कार्यकारणभावभेदाच्चाक्षुषस्थले सौरभत्वाद्यन्तर्भावेन हेतुत्वस्यैवा-कल्पनाच्चाक्षुषस्य सौरभमुख्यविशेष्यकत्वासम्भवादेवं स्पार्शनादा-वप्यूह्यमिति संक्षेपः। बहिःपर्यन्तस्य फलमाह एवं चेति। प्रथमं सकलाणूपस्थितौ ज्ञानलक्षणैव सम्भवत्यत उक्तं यत्किञ्चिदि-ति। अणूपस्थितावपीत्यपिना घटत्वेन यत्किञ्चिद्घटोपस्थित्यादेः परिग्रहः अतो न न्यूनत्वम्। मानसो बोध इति। तथा चालौकि-कमुख्यविशेष्यतया तत्प्रकारकमानसप्रत्यक्षं प्रति ज्ञानप्रकारताप-

तत्र च वह्निव्याप्तिग्रहे तत्राऽसता धूमत्वेन धूमेषु व्याप्त्यग्रहाद्धूमदर्शनाद्वह्न्यनुमितिर्न स्यात् हेत्वभावेन परामर्शानुत्पादात्, किञ्च धर्मिणि दोषवशान्नयनेनाऽगृह्यमाणेन स्मरणप्रकारीभवता सामान्येन गृह्यमाणेन वा लौकिकसन्निकर्षविगमेऽपि चाक्षुषज्ञानापत्तिरिति परास्तम्। सामान्यञ्च सखण्डाखण्डभेदेन द्वेधा। सखण्डे

---

त्वेनैव हेतुत्वमिति भावः। वदन्तीत्यस्वरसस्तद्बीजं तु लाघवात्तत्तत्प्रकारकज्ञानत्वेन तद्विषयकज्ञानत्वेन वा तत्प्रकारकतदाश्रयप्रत्यक्षे हेतुत्वं न तु तदिन्द्रियजन्यत्वादिकं नियामकम्। इन्द्रियभेदेन कार्यकारणभावकल्पने च गौरवात्तत्तदिन्द्रियकरणकसामान्यवत्त्वबोधसामग्र्याः सहकारित्वोपगमादेवातिप्रसङ्गभङ्गादित्यादिकं नव्यमते व्यक्तीभविष्यति। एतेनेति। परास्तमित्यनेनान्वयः। एतेन। इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्नस्य प्रत्यासत्तित्वविवक्षणेन। विशेषणपदस्येन्द्रियसम्बद्धसमवेताद्यात्मकधर्मार्थकत्वे दोषमाह धूलीत्यादि। धूमदर्शनादित्यस्य पक्ष इत्यादिः। हेत्वभावेन। धूमधर्मिकव्याप्तिग्रहात्मकहेतोरभावेन। ज्ञाने तदिन्द्रियजन्यत्वस्याऽनुक्तौ दोषमाह धर्मिणीति। धर्मिणि योग्यसन्निकर्षसत्त्वे धर्मस्य चाक्षुषो दुर्निवार इत्यत उक्तं दोषवशादिति। वाष्पत्वादिभ्रमजनकदोषवशात् धूमत्वाद्यग्रहसम्भवादिति भावः। स्मरणप्रकारीभवतेत्यनेन ज्ञानप्रकारत्वमाविष्कृतम्। सामान्येनेत्यस्य चाक्षुषज्ञानापत्तिरित्यग्रेतनेन सम्बन्धः। लौकिकसम्बन्धस्यानपेक्षणे दोषमाह गृह्यमाणेन वेति। धर्मिणि नयनेन गृह्यमाणेन वा सामान्येनेत्यर्थः। न च लौकिकसन्निकर्षविगमेपि क्षणमात्रं चाक्षुषोत्पत्ताविष्टापत्तिरिति वाच्यम्। तथा सति तादृशचाक्षुषात्मकस्यैव कारणस्य सत्त्वादुत्तरोत्तरं सामान्यजन्यायाश्चाक्षुषधारायाः प्रसङ्गादिति भावः। ननु सामान्यस्य हि प्रत्यासत्तित्वे घटशून्यत्वादिप्रत्यासत्त्या तदाश्रयप्रत्यक्षं न स्यात् घटशून्यत्वादेः सामान्यत्वाभावादत आह सामान्यं चेति। सामान्यलक्षणेत्यत्र सामान्यपदार्थश्चेत्यर्थः। सखण्डं स्वरूपतो ज्ञानप्रकारीभूतभिन्नम्। अखण्डं स्वरूपतः प्रकारीभू-

चाखण्डमेव परम्परया सम्बद्धं प्रत्यासत्तिः। येन सम्बन्धेन चे-न्द्रियसम्बद्धे सामान्यं ज्ञायते तेन सम्बन्धेनाऽधिकरणानां प्रत्या-सत्तिरिति। ननु यत्र नानाधिकरणप्रत्यासन्न एकव्यक्तिर्घटादि-स्तत्प्रागभावादिर्वाऽनित्यः प्रत्यासत्तिस्तत्र तदभावदशायां तथा

---

तम्। द्वेधेति। तथा च तत्र सामान्यपदं धर्ममात्रपरमिति भावः। ननु घटत्वप्रकारेणैकघटवत्ताप्रकारकप्रत्यक्षोत्तरं घटवत्त्वप्रत्यासत्त्या सर्वस्य घटवतः प्रत्यक्षं न स्यादिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकार-तापन्नघटव्यक्तेर्घटान्तरवत्यसत्त्वादत आह सखण्डे चेति। क्वचिदि-त्यादिः। तेन घटशून्यत्वादिसखण्डस्य स्वयमेव प्रत्यासत्तित्वेऽपि न क्षतिः। परम्परेति। तथा च चक्षुःसंनिकृष्टविशेष्यकचाक्षुषप्रकार-तावच्छेदकीभूतघटत्वमेव घटत्वावच्छिन्नप्रकारिताकचाक्षुषं प्रति हे-तुः अत्रापि कार्यस्यालौकिकमुख्यविशेष्यत्वं कारणस्य तु स्वाश्रयत्वं प्रत्यासत्तिः। न च पूर्वानुपस्थितघटान्तरस्य तादृशचाक्षुषे प्रकार-त्वायोग इति वाच्यम्। घटत्वसामान्यलक्षणया सकलघटस्योपस्थि-तिदशायामेव तत्सम्भवात्। एवं दण्डिमत्त्वादिसामान्यस्थलेऽपि तादृ-शचाक्षुषप्रकारतावच्छेदकतावच्छेदकं दण्डत्वादिकमेव कारणमिति द्रष्टव्यम्। एतेन परम्परासम्बन्धेन ज्ञानस्य घटत्वादेः प्रत्यासत्तित्वे घटत्ववदित्येव फलं स्यान्न तु घटवदित्याकारकं स्वप्रकारकप्रत्यक्षं प्रत्येव सामान्यस्य हेतुत्वादिति परास्तम्। ननु चक्षुःसंयुक्तधर्मिणि चक्षुषा समवायेन गृह्यमाणस्य घटत्वादेः कालिकादिसम्बन्धेन कालादावपि सत्त्वात्तन्मुख्यविशेष्यकमपि समवायसम्बन्धावच्छि-न्नघटत्वप्रकारकचाक्षुषं स्यादत आह येन चेति। प्रत्यासत्तिः प्र-त्यक्षजनिका इतीति।तथा चालौकिकमुख्यविशेष्यतया समवायादि-सम्बन्धावच्छिन्नघटत्वादिप्रकारकचाक्षुषं प्रति समवायसम्बन्धाव-च्छिन्नचाक्षुषप्रकारतापन्नघटत्वादिकं समवायेनैव हेतुरतो नाति-प्रसङ्ग इति भावः। अखण्डसामान्यव्यक्त्यभिप्रायेण शङ्कते नन्विति। सामान्यतासम्पत्त्यर्थमाह नानाधिकरणेति। नानाधिकरणविशेष्यक-प्रत्यक्षकारणेत्यर्थः। एतेनैकमात्रवृत्तिधर्मस्यापि स्वाश्रयप्रत्यक्षं प्रति

प्रत्यासत्त्या तज्ज्ञानानुदयप्रसङ्ग इति चेन्न। तत्रापि तत्तद्व्यक्ति-द्वारा प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वात्। एतदस्वरसेनैव वा द्वितीयं पक्षमाह अतिरिक्तैवेति। अतिरिक्ता इन्द्रियसम्बद्धे तादृशसामान्यज्ञानात्मिका अतीताद्यनुरोधात्सामान्यज्ञानं प्रत्यासत्तिः।

---

हेतुत्वादिदं व्यर्थम्, अन्यथा ताद्रूप्येण घस्त्वन्तरे व्याप्तिभ्रमोत्तरं तद्विशिष्टस्य पक्षधर्मताग्रहादनुमित्यनुदयापत्तेरिति परास्तम्। एकव्यक्तिरित्यनेनाखण्डत्वसूचनम्। पदार्थस्य द्वैविध्याद्भावात्मकं सामान्यमुक्त्वाऽभावात्मकं तदाह तत्प्रागभावादिर्वेति। अनित्य इति। नित्यत्वे तु कार्यकालेऽपि सत्त्वात्तस्य कारणत्वमव्याहतमेव स्यादिति भावः। तादृशघटादिकं नाखण्डसामान्यं किं तु सखण्डमेवेत्याशयेन सिद्धान्तयति तत्रापीति। न च तद्व्यक्तौ घटत्वाद्यग्रहेऽपि तद्व्यक्तिप्रकारेण तदाश्रयप्रत्यक्षोत्पत्त्या नेदं युक्तमिति वाच्यम्। जातीतरस्य किञ्चिदवच्छिन्नप्रकारतानियमेन तद्घटादेः स्वरूपतः प्रकारत्वायोगात् तद्व्यक्तित्वस्यापि तद्व्यक्तितादात्म्यविशिष्टसमवायसम्बन्धेन घटत्वादिमत्तायामेव पर्यवसानात्। न च तथापि घटत्वादिसामान्यस्य तदानीं सत्त्वेऽपि तद्व्यक्तिस्वरूपस्य सम्बन्धस्याऽसत्त्वात्तद्व्यक्तिद्वारा तस्य कारणत्वं दुर्घटमिति वाच्यम्। अलौकिकमुख्यविशेष्यतासम्बन्धेन तद्घटव्यक्तित्वावच्छिन्नप्रकारकचाक्षुषं प्रति चक्षुःसम्बद्धविशेष्यकचाक्षुषप्रकारतावच्छेदकीभूततद्व्यक्तित्वस्य स्वाश्रयवन्निष्ठविशेष्यतासम्बन्धेन हेतुत्वाऽस्वरसान्तता नित्यज्ञानीयतादृशविशेष्यतामादायैव कारणसत्त्वसम्भवादेतल्लाभार्थमेव तद्व्यक्तिद्वारेत्यत्र द्वारपदोपन्यासादिति भावः। जातीतरस्यापि स्वरूपतः प्रकारत्वोपगमे तु तत्तदनित्यघटादिव्यक्तेर्घटत्वाद्यज्ञानदशायां प्रत्यासत्तित्वं दुर्घटमेवेत्यत आह एतदिति। द्वितीयमिति। सामान्यं लक्षणं विषयतया निरूपकं यस्या इति व्युत्पत्तिलभ्यं सामान्यज्ञानात्मकं पक्षमित्यर्थः। षट्पदार्थातिरिक्तस्यानुपगमात् सामान्यातिरिक्तमात्रस्य प्रत्यासत्तित्वे तु सामान्यस्याज्ञानदशायामपि तदाश्रयस्य प्रत्यक्षप्रसङ्गाद्व्याचष्टे इन्द्रियस-

म्बद्ध इति । तादृशेति । तदिन्द्रियजन्येत्यर्थः । तथा च तत्पुरुषीय-घटत्वादिप्रकारकचाक्षुषत्वावच्छिन्नं प्रति तदीयचक्षुःसन्निकृष्टवि-शेष्यकतदीयघटत्वादिप्रकारकचाक्षुषत्वेन हेतुत्वम् । अत्रापि कल्पे कार्यस्यालौकिकमुख्यविशेष्यत्वमेव प्रत्यासत्तिः कारणस्य तु स्वप्र-कारीभूतसामान्याश्रयनिष्ठविशेष्यत्वं तथेति न तत्तदनित्यव्यक्तिम-त्त्वस्यासत्त्वदशायां तया प्रत्यासत्त्या तदाश्रयस्य प्रत्यक्षानुपपत्तिः । यत्तु स्वप्रकारीभूतसामान्यवदन्यावृत्तिभेदवत्त्वमेव सर्वत्र कारण-ताघटकः सम्बन्धस्तत्तदनित्यघटादेरसत्त्वदशायामपि तद्वदन्यावृत्ते-स्तत्तत्कपालान्यतरत्वरूपभेदस्य सत्त्वादिति । तन्न । स्मृतिविषय-त्वाद्यनित्यप्रत्यासत्तिस्थले तद्वदन्याप्रसिद्धेः स्मृतिविषयत्वादेः केव-लान्वयित्वादिति ध्येयम् । तत्प्रकारकतदाश्रयप्रत्यक्षे तस्य ज्ञानमा-त्रं हेतुर्न तु ज्ञानस्य तत्तदिन्द्रियजन्यत्वं तत्तदिन्द्रियसम्बद्धविशेष्य-कत्वं वा तन्त्रं चक्षुरादीन्द्रियभेदेन पुरुषाणां द्विधा निवेशेन च हे-तुत्वकल्पने गौरवात् । स्मरणाद्यात्मकसामान्यज्ञानदशायां च तदा-श्रयस्य प्रत्यक्षमन्ततो मानसात्मकमुत्पद्यत एव प्राच्यैरपि क्षणविल-म्बेन तस्योपेयत्वादित्याशयवतां नव्यानां मतमुत्थापयति अतीतेत्या-दिना । [ ननु यदि लाघवानुरोधादिन्द्रियसम्बद्धविशेष्यकत्वादेः परित्यागस्तदा सामान्यस्यैव प्रत्यासत्तित्वं युक्तमिति स्वरूपतः सा-मान्यस्य हेतुत्वापेक्षया सामान्यज्ञानहेतुत्वे गौरवात् । न च घटेत-रावृत्तित्वविशिष्टसकलघटवृत्तित्वरूपघटत्वत्वादिना हेतुत्वापेक्षया घटत्वत्वाद्यघटितघटत्वज्ञानस्य हेतुत्वं लघु इति वाच्यम् । घटत्वा-दिसामान्यस्य तत्तद्व्यक्तित्वेनैव हेतुत्वसम्भवात् घटत्वाज्ञानदशायां विशेषणज्ञानविरहेणवाऽऽपत्त्यसम्भवादित्यत आह अतीताद्यनुरो-धादिति । आदिनाऽनागतादेः परिग्रहः । इदञ्चातीतानागततत्तदनि-त्यव्यक्त्याश्रयप्रत्यक्षानुरोधादिति तदर्थः । तथा चातीतानागतसा-मान्याश्रयप्रत्यक्षे सामान्यस्य व्यभिचारेण हेतुत्वासम्भवाच्च तज्ज्ञा-नस्य हेतुत्वमादृतमिति भावः ] । अत्र कल्पे तत्प्रकारकप्रत्यक्षत्वा-वच्छिन्नं प्रति निर्विकल्पकादिसाधारणतद्विषयकज्ञानत्वेनैव हेतुत्वं, अत्र च कार्यस्य स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठविशेष्यत्वं स-म्बन्धः कारणस्य तु स्वविषयीभूततत्तत्सामान्याश्रयनिष्ठविषयत्वं प्रत्यासत्तिरतो नातिप्रसङ्गः । न चैवं निर्विकल्पकोत्तरं जातस्य घट-

स्वविशिष्टप्रत्यक्षस्यापि यावद्घटविषयकत्वापत्तिः, इष्टत्वात् । सामान्यप्रकारकज्ञानत्वेन हेतुत्वोपगमेऽपि निर्विकल्पकतृतीयक्षणे यावद्घटावगाहिप्रत्यक्षोत्पत्त्या क्षणविलम्बस्य शपथनिर्णेतव्यत्वात् । न च तद्विषयकत्वतत्प्रकारकत्वयोः समशरीरतया तद्विषयकत्वेनैव हेतुत्वमित्यत्र विनिगमकाभावः, प्राथमिकतद्विशिष्टप्रत्यक्षे सौरभादिविशेष्यकज्ञानोत्तरं जायमाने सुरभि चन्दनमित्यादिप्रत्यक्षे च व्यभिचारादेव तत्प्रकारकज्ञानत्वेन हेतुत्वस्यासम्भवात् । न च स्वप्रकारीभूततत्तत्सामान्याश्रयनिष्ठालौकिकमुख्यविशेष्यतासम्बन्धेन तत्तत्सामान्यप्रकारकप्रत्यक्षं प्रत्येव तत्तत्सामान्यप्रकारकज्ञानत्वेन हेतुत्वं वाच्यमतो नोक्तदोषः, कार्यतावच्छेदकसम्बन्धस्य गुरुत्वापत्तेः, चन्दने सौरभमित्यादिज्ञानोत्तरं जायमानस्य सुरभि चन्दनमित्येवं सौरभाश्रयमुख्यविशेष्यकमानसप्रत्यक्षस्य सौरभप्रकारकज्ञानाजन्यत्वेन तथापि व्यभिचारतादवस्थ्याच्च । न च तद्विषयकज्ञानत्वेन हेतुत्वे घटवदित्यादौ संसर्गविधया संयोगज्ञानादपि संयोगवत्वेन तदाश्रयस्य प्रत्यक्षापत्तिरतस्तत्प्रकारकज्ञानत्वेनैव हेतुत्वं युक्तमिति वाच्यम् । संयोगविशिष्टबुद्धिसामान्यं प्रति सांसर्गिकान्यसंयोगविषयताकज्ञानत्वेन हेतुतया तद्विरहादेव तत्र संयोगवदिति ज्ञानासम्भवात् । सांसर्गिकसाधारणतद्विषयताकज्ञानत्वेन तद्विशिष्टबुद्धौ हेतुतास्वीकारे तु तत्रापि तत्र संयोगवदित्याकारकज्ञानोत्पादेन तस्य यावत्संयोगाश्रयविषयकत्वोपगमेऽपि क्षत्यभावात् । वस्तुतस्तु तद्विषयकज्ञानत्वमात्रेण हेतुत्वे समवायेन घटत्वप्रकारकज्ञानात्कालिकसम्बन्धेन तदाश्रयस्य कालादेः प्रत्यक्षापत्त्या तत्सम्बन्धावच्छिन्नतत्प्रकारकतदाश्रयप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतन्निष्ठविषयताकज्ञानत्वेनैव हेतुत्वं वाच्यं न तु तत्सम्बन्धावच्छिन्नतत्प्रकारकज्ञानत्वेन, तथा सति सुरभि चन्दनमित्यादिप्रागुक्तमानसोपनीतभाने व्यभिचारभिया तत्तद्बुद्धिभिन्नत्वस्य तत्प्रकारकज्ञानाव्यवहितोत्तरत्वस्य वा कार्यतावच्छेदकानुप्रवेशे महागौरवापत्तेः । न चैकसम्बन्धेन तत्प्रकारकप्रत्यक्षदशायां सम्बन्धान्तरेण तत्प्रकारकप्रत्यक्षे यदि बाधकसम्भवस्तदोत्तरकालं सम्बन्धान्तरेण तदाश्रयस्य प्रत्यक्षे स एव प्रतिबन्धकोऽन्यथा पुनरिष्टमेव तदानीं सम्बन्धान्तरेण तदाश्रयस्य प्रत्यक्षमतस्तद्विषयकज्ञानत्वेनैव लघुना

अपेक्षणीयश्च तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्यन्तरम् । अत एवान्धतमसे सौदामिनीसम्पातजनितेऽपि द्रव्यप्रत्यक्षे चरमं न चाक्षुषो निखिलद्रव्यसाक्षात्कारसन्तान इति तु नव्याः।इयञ्च धर्म-

---

हेतुत्वं युक्तमिति वाच्यम् । समवायेन घटत्वप्रकारकानुमित्यनन्तरं ज्ञानस्य तत्सम्बन्धेन घटत्वाश्रयप्रत्यक्षस्य सम्बन्धान्तरेण तदाश्रयविषयकत्वस्य दुर्वारता।तेन तादृशानुमितिदशायां सम्बन्धान्तरेण घटत्वस्य परामर्शाद्यभावादेव तत्सम्बन्धावच्छिन्नघटत्वप्रकारकज्ञानानुत्पत्त्या तत्र बाधकस्याकल्पनादिति ध्येयम् । ननिन्द्रियभेदेन नानाकार्यकारणभावस्य परित्यागे घटत्वप्रकारेण तदाश्रयस्य प्रत्यक्षमेव क्वचित्स्पार्शनं क्वचिच्चाक्षुषं जायत इत्यत्र किं नियामकमत आह अपेक्षणीयं चेति । धूमादौ वाष्पत्वादिभ्रमजनकदोषदशायां चक्षुःकरणकबोधसामग्रीसत्त्वेऽपि धूमत्वादिप्रकारकं न तदाश्रयस्य चाक्षुषं जायत इत्यतस्तद्धर्मवत्त्वबोधानुसरणम् । सामग्र्यन्तरमिति । तथा च तत्तद्विशेषसामग्रीत एव चाक्षुषस्पार्शनादिनियम इति भावः । कारणान्तरपर्यन्तापेक्षायाः प्रयोजनमाह अत एवेति । अन्धतमसम् । निविडं तमः । सौदामिनीसम्पातः । तडित्संयोगः । आलोकस्य पश्चादसत्त्वलाभाय सौदामिनीपर्यन्तानुसरणम् । चरमम् । विद्युत्सम्पातजन्यचाक्षुषोत्तरम् । द्रव्येति।द्रव्यत्वसामान्यमधिकृत्योक्तम् । अत्र दोषविशेषवशात्तमोधर्मिकस्यैव चक्षुःकरणकद्रव्यत्ववत्ताबोधस्य सामग्रीसत्त्वाच्चरमं निखिलद्रव्यस्य चाक्षुषो दुर्निवार एव, परन्तूक्तस्थले घटत्वादिना घटादेश्चाक्षुषसन्तानवारणार्थमेव सामग्र्यपेक्षा वाच्येति तु विभावनीयम् । द्वित्रिचतुःसाक्षात्कारस्योपगमे क्षत्यभावादाह सन्तान इति । तथा च तादृशचाक्षुषधाराऽनुभवबाधितेति भावः । अत्र केचित् । चक्षुरादीन्द्रियान्तर्भावेण सामान्यज्ञानस्य अहेतुत्वे सौरभत्वप्रकारेण यत्किञ्चित्सौरभज्ञानोत्तरं जायमानस्य सुरभि चन्दनमित्यादिचाक्षुषस्य पूर्वानुपस्थितयावत्सौरभमुख्यविशेष्यकत्वापत्तिः, सामान्यप्रत्यासत्तेरविशिष्टत्वात्, न चेष्टापत्तिर्बहिरिन्द्रियस्य स्वायोग्यमात्रनिष्ठमुख्यविशेष्यताकज्ञानाज-

नकत्वनियमात् अस्मन्मते सौरभत्वसामान्यज्ञानस्य सौरभत्वप्रकारकतदाश्रयघ्राणजत्वावच्छिन्नं प्रति तादृशमानसत्वावच्छिन्नं प्रत्येव वा विशिष्य हेतुत्वकल्पनान्न तादृशं चाक्षुषमित्याहुः। तन्न। सौरभमुख्यविशेष्यकज्ञानस्यानुमित्युपमितिशाब्दबोधघ्राणजादिस्वरूपस्यैव पारमार्थिकतया तन्मुख्यविशेष्यकानुमित्यादिसामग्रीविरहादेव तदानीं तादृशज्ञानोत्पत्त्यसम्भवात् अनुमित्यादिभिन्नस्य तादृशज्ञानस्यालौकिकतयाऽऽपादयितुमशक्यत्वात्। वस्तुतो मुख्यविशेष्यत्वसम्बन्धेन सौरभत्वादिप्रकारकचाक्षुषादिकं प्रति तादात्म्येन सौरभत्वादिना गन्धत्वादिना वा प्रतिबन्धकत्वात्तन्निरासः। तादृशसम्बन्धेन तथाविधचाक्षुषं तु घटादाविव सौरभत्वस्य भ्रमरूपं सुलभम्। न च सौरभत्वप्रकारकेति व्यर्थम्। प्रमेयत्वादिसामान्यप्रत्यासत्त्या तादृप्येण सौरभमुख्यविशेष्यकचाक्षुषस्य सर्वसम्मतत्वात्। तत्रापि चक्षुर्योग्यमात्रविशेष्यकत्वोपगमे तु तन्नोपादेयम्। न चैवं घटाद्युपनीतचाक्षुषस्यापि घटादिमुख्यविशेष्यकत्वं स्यादुक्तकार्यकारणभावस्यैवापादकत्वादिप्रापत्तौ चोपनीतं विशेषणतयैव भासत इत्यस्य विरोध इति वाच्यम्। मुख्यविशेष्यतया द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुरादिलौकिकसन्निकर्षाभावविशिष्टज्ञानत्वेन विषयतया प्रतिबन्धकत्वादत एव सत्यपि भूतलादिज्ञाने लौकिकसन्निकर्षदशायां तन्मुख्यविशेष्यकं लौकिकप्रत्यक्षमिति ध्येयम्। गन्धादेरचाक्षुषत्वोपपत्तये चाक्षुषादिकं प्रति तादात्म्येनावश्यं गन्धत्वादिना प्रतिबन्धकत्वं वाच्यम् तथा च तत्रैव लौकिकविषयतामात्रं न प्रतिबध्यताघटकसम्बन्धः किं तु मुख्यविशेष्यत्वनिर्विकल्पकविषयत्वयोरन्यतरदेव, सम्बन्धादेरननुगमस्य स्वरूपसम्बन्धेन हेतुतास्थले एव स्वहस्तिततत्वात्।प्रकारतान्यविषयत्वं वा तादृशसम्बन्धो वाच्यः।सुरभि चन्दनमित्यादिचाक्षुषे चन्दनांशे प्रकारतैव सौरभत्वांशे विशेष्यता न त्वधिकेत्युक्तप्रतिबन्धकसद्भावादेव चाक्षुषज्ञानं न सौरभमुख्यविशेष्यकमित्यपि वदन्ति। तच्चिन्त्यम्। केचित्तु घटत्वपटत्वादीनां तद्विषयकज्ञानानां वा प्रत्यासत्तित्वे कार्यकारणभावानन्त्यप्रसङ्गात् सर्वत्र नित्यज्ञानव्यक्तिरेव प्रत्यासत्तिः तस्याश्च स्वाश्रयविशेष्यकप्रत्यक्षत्वावच्छिन्नं प्रति तद्बुद्धिव्यक्तित्वेन हेतुत्वं स्वाश्रयविषयकप्रत्यक्षहेतुत्वे तु नित्यज्ञानव्यक्तेः सर्वदा सत्त्वाद्यत्किञ्चि-

विषयकं ज्ञानं धर्मिणां प्रत्यासत्तिरितरा तु यद्विषयकं ज्ञानं तस्य । अत एव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति । ततः

———

तृसन्निकर्षदशायां तद्गोचरनिर्विकल्पकोत्पत्त्या तदुत्तरं सार्वज्ञ्यापत्तिरतः स्वाश्रयविशेष्यकत्वानुसरणम् । स्वाश्रयस्तु विषयतया ग्राह्यः । न च तज्ज्ञानव्यक्त्याश्रयत्वाविशेषाद्घट इत्याकारकप्रत्यक्षकाले पटत्वेन पटस्यापि प्रत्यक्षापत्तिः, पटत्वज्ञानदशायामिष्टापत्तेरन्यथा विशेषणज्ञानविरहादेव तदसम्भवात् । नापि घटत्वेन घटस्य प्रत्यक्षदशायां ताद्रूप्येण पटादेः प्रत्यक्षापत्तिर्घटत्वप्रकारेण पटादिग्रहस्य भ्रमतया तज्जनकदोषविरहादेव तस्याप्यसम्भवात् । अन्यथा घटत्वादिसामान्यज्ञानस्य प्रत्यासत्तितायामपि द्रव्यत्वघटत्वयोरुपस्थितौ द्रव्यत्वेन पटप्रत्यक्षदशायां घटत्वेनापि पटस्य प्रत्यक्षापत्तेर्दुर्वारत्वात्, तादृशदोषसत्त्वे च तथाविधभ्रमस्येष्टत्वात् । न च विनिगमनाविरहाद्गगनाभावादीनां तत्तत्संयोगाभावव्यक्तीनां च तत्तद्व्यक्तित्वेन स्वाश्रयविशेष्यकप्रत्यक्षं प्रति हेतुतापत्तिरिति वाच्यम् । गगनाद्यभावानामन्यथासिद्धत्वात् कार्यमात्रहेतोर्नित्यज्ञानस्य स्वाश्रयप्रत्यक्षेऽप्यनन्यथासिद्धत्वात् गगनाद्यभावानां ताद्रूप्येण हेतुत्वेऽपि लाघवसम्भवाच्च । घटत्वादिज्ञानत्वेन हेतुतायां घटत्वादिप्रकारकतदाश्रयप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे गौरवापत्तेः । सुरभि चन्दनमित्यादेः सौरभत्वाद्यविशेष्यकप्रत्यक्षस्यानुरोधादेव सौरभत्वादेर्ज्ञानलक्षणायाः स्वीकार्यत्वादित्याहुः । ननु सामान्यं यदि न प्रत्यासत्तिः किं तु तज्ज्ञानं तदा ज्ञानलक्षणया सहैतस्याः को भेद इत्यत आह इयं चेति । सामान्यलक्षणा चेत्यर्थः । इतरा । ज्ञानलक्षणा । तस्येति । प्रत्यासत्तिरित्यनुषज्यते । तथा च कार्यकारणभावभेदादेव प्रत्यासत्त्योर्भेदव्यवहार इति भावः । अत एवेति । ज्ञानलक्षणाया अतिरिक्तप्रत्यासत्तित्वस्वीकारादेव । अन्यथा यत्र सौरभत्वजात्युपस्थित्यनन्तरं सुरभिर्गन्ध इतिवत् सुरभिं चन्दनमित्याकारकं सौरभत्वप्रकारेण चन्दनस्य भ्रमात्मकं चाक्षुषं तत्र सौरभत्वजातेर्भानं न स्यान्न हि तत्र सुरभिगन्धस्य भानसम्भवो येन सामान्यलक्षणायास्तत्तद्धर्मप्रकारकतदाश्रयप्रत्यक्षं प्रत्येव हेतुतया सौरभत्वप्रत्यासत्तेः

कार्यतावच्छेदकतयैव सौरभत्वजातेर्भानं भविष्यतीति सम्भावनीयम्। चक्षुषो बहिरिन्द्रियत्वेन स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमात् पूर्वानुपस्थितस्य सुरभिगन्धस्य तत्र भानासम्भवेनोक्तरीत्या तद्गतजातेरपि तत्र भानासम्भवादिति भावः। इत्यादावित्यादिपदेन भ्रमान्तरस्य तदनुव्यवसायस्य च परिग्रहः। यत्तु ज्ञानस्य तादिन्द्रियजन्यत्वं नियामकमिति पूर्वमतेनायं ग्रन्थस्तथा चाऽसौरभस्मृत्यनन्तरं जायमानायां सुरभि चन्दनमित्याकारकचाक्षुषप्रमायां सामान्यप्रत्यासत्त्या न सौरभत्वस्य भानसम्भवः कारणीभूतस्य सौरभत्वचाक्षुषस्याभावादतो ज्ञानलक्षणा पृथक् प्रत्यासत्तिरिति मतम्। ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षायां सुरभिगन्धस्यापि तत्र भानासम्भवेन सौरभत्वजातिपर्यन्तानुसरणस्य सन्दर्भविरोधापत्तेः। अत्रेदं तत्वम्। यद्यपि घटत्वादिप्रत्यक्षे तदलौकिकप्रत्यक्षे वा न तद्गोचरज्ञानत्वेन ज्ञानलक्षणाया हेतुत्वं घटत्वादिनिर्विकल्पके प्रमेयत्वादिसामान्यलक्षणाजन्यघटत्वादिप्रत्यक्षे च व्यभिचारात्, तथापि लौकिकालौकिकसाधारणं घटत्वादिप्रकारकप्रत्यक्षमात्रं प्रत्येव घटत्वादिज्ञानत्वेन हेतुत्वम्, अत एव प्राथमिकस्य घटत्वचैत्रत्वादिप्रकारकप्रत्यक्षस्य घटत्वचैत्रत्वादिनिर्विकल्पकं विनानुपपत्तेस्तत्सिद्धिरप्यावश्यकी। पूर्वानुभूतवस्तुमात्रस्यैव तत्तात्वेन घटत्वाद्यात्मकतत्ताप्रत्यभिज्ञानुरोधेनैव परैरपि उक्तकार्यकारणभावस्याभ्युपेतव्यत्वात्। न चैवं जन्यसविकल्पकस्यैव प्रत्यासत्तित्वमिति प्राचीनगाथाविरोधः, तस्याकिञ्चित्करत्वात् सखण्डघटादेरुपनीतस्थल एव तथा नियमसम्भवाच्च। द्रव्यत्वादिप्रकारेण घटादेरुपनयसत्त्वेपि घटत्वादिप्रकारेण तस्योपनीतप्रत्यक्षानुदयेन घटत्वादिना तत्तद्घटप्रकारकप्रत्यक्षं प्रति घटत्वादिप्रकारेणैव तत्तद्घटाद्युपनयस्य हेतुत्वात्। अत एव घटघटत्वयोर्निर्विकल्पकोत्तरं घटे घटत्वस्येव घटत्वेपि घटस्य न वैशिष्ट्यावगाहि प्रत्यक्षं द्रव्यत्वघटत्वादिप्रकारेणैव घटादीनां विशिष्टबुद्धेः पारमार्थिकतया तद्धेतुभूतस्य घटत्वादिप्रकारेण घटादिज्ञानस्य तदानीमसत्त्वात्। न चैवं निर्विकल्पकोत्तरं विशेष्ये विशेषणमित्यादिक्रमेणापि घटवदित्याकारकप्रत्यक्षं न स्यात्, इष्टत्वात्। जातीतरनिष्ठप्रकारतायाः किञ्चिदवच्छिन्नत्वनियमात्। द्रव्यगुणकर्मणां निरवच्छिन्नप्रकारत्वाननुभवात्। न च निर्वि-

न्यन्ते । तथा हि, धूमत्वावच्छिन्ना व्याप्तिः सन्निकृष्टधूमविषये धूमत्वेन प्रत्यक्षेण ज्ञायते ततः स्मृता सा तृ-

———

स्मृता सेति । धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवन्हिसमानाधिकरणवृत्तिधूमत्वं वन्हिमदन्यावृत्तित्वं वान्हिसम्बन्धितावच्छे-

———

कल्पकस्य प्रत्यासत्तित्वे स्वविषयीभूतघटाद्युपधानेन तस्य प्रत्यक्षापत्तिः विषयानुपधानेन ज्ञानादिप्रत्यक्षस्यालीकतया विषयोपनायकविरहादेव मनःसन्निकृष्टस्यापि तस्यातीन्द्रियत्वोपगमादिति वाच्यम्। सत्यपि सन्निकर्षे प्रत्यक्षसामान्यं प्रत्येवाऽदृष्टत्वादिनेव निर्विकल्पकत्वेनापि तादात्म्यसम्बन्धेन विरोधित्वकल्पनादेव निर्विकल्पस्याप्रत्यक्षत्वादन्यथा सुखत्वादिनिर्विकल्पकस्य स्वविषयभूतसुखत्वाद्युपधानेन प्रत्यक्षस्य दुर्वारतापत्तेः।सुखत्वस्य निर्विकल्पक एव सुखत्वेपि लौकिकस्यैव मनःसन्निकर्षस्य सत्त्वात् तदुपधानेन तन्निर्विकल्पकस्य प्रत्यक्षे बाधकाभावादिति । यत्तु घटादिप्रकारकप्रत्यक्षं प्रत्येव घटादिज्ञानत्वेन हेतुत्वे घटादिविशेष्यकं घटो द्रव्यमित्याकारकमानसोपनीतभानं न स्यादिति । तन्न । घटादिधर्मिकद्रव्यत्वाद्यसंसर्गाग्रहादिवशादेव मानसधियो घटादिविशेष्यकत्वसम्भवात् । घट इत्येतावन्मात्राकारस्य बाधनिर्णयाप्रतिबध्यमानसप्रत्यक्षस्याऽसत्त्वेपि क्षत्यभावात् । न चैवं घटत्वेन घटादेरनुपस्थितिदशायामपि तद्विशेष्यकं मानसप्रत्यक्षं स्यात्तद्धर्मिकासंसर्गाग्रहस्य तदानीमपि सत्त्वादिति वाच्यम् । घटत्वप्रकारकप्रत्यक्षत्वस्य घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकतया तदवच्छिन्नं प्रति हेतुभूतस्य घटज्ञानस्य विरहादेवानुपस्थितघटादेर्विशेष्यविधया मानसग्रहासम्भवात् । घटो द्रव्यमित्यादिमानसस्य घटं जानामीत्याद्याकारकत्वनियमात् । अत एवोपनीतं विशेषणतयैव भासत इत्यभिधाय मानसे तु नायं नियम इति प्राचीनैरप्युक्तमित्यलं पल्लवितेन । व्याप्तेः सामानाधिकरण्यस्वरूपत्वे परामर्शस्य भ्रमतापत्तिरतो भावार्थमाह धूमेत्यादि । लाघवादाह वन्हिमदिति। न च केवलान्वयिन्यव्याप्तिः। व्य-

तीयलिङ्गपरामर्शे पक्षनिष्ठधूमवृत्तितया ज्ञायते ततोऽनु-
मितिः । तदनभ्युपगमेऽपि सन्निकृष्टधूमविषये धूमत्वेन
धूमो वह्निव्याप्य इत्यनुभवस्तथैव व्याप्तिस्मरणं ततो धू-
मवानयमिति व्याप्तिस्मृतिप्रकारेण धूमत्वेन पक्षवृत्तिधू-
मज्ञानादनुमितिः, व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञाना-
नामेकप्रकारकत्वेनानुमितिहेतुत्वात् । गवादिपदेष्वपि
शक्त्यनुभवतत्स्मरणवाक्यार्थानुभवानामेकप्रकारकत्वेन
हेतुहेतुमद्भाव इत्यपूर्वे वक्ष्यते । तत्र योग्यतादिबलादपू-

---

दकरूपवत्त्वं वा व्याप्तिः । एकैव च सा सर्वधूमसाधारणीति
भावः । व्याप्तिनानात्वे तु पर्वतीयवन्हेरसन्निकर्षे तत्सामानाधि-
करण्यग्रहायोगः अन्यदीयवन्हिसामानाधिकरण्यस्य तत्र भानाङ्गी-
कारे भ्रमत्वापत्तिरिति द्रष्टव्यम् ।गवादिपदेष्वपीति।शक्त्यनुभवशक्य-
स्मरणे हेतू हेतुमान् वाक्यार्थबोधः।न चैवं जातिशक्तिवादविरोधः,

---

तिरेक्यनुमानस्यैव परैः स्वीकारादिति भावः । केवलान्वयिनः संग्रा-
ह्यत्वेऽपि लघुव्याप्तिमाह साध्यसम्बन्धितेति। अत्रावच्छेदकत्वं स्वरूप-
सम्बन्धविशेष इति हृदयं तेन प्रागुक्तावच्छेदकत्वघटनाया गौरवानवका-
शः । सर्वेति । सामानाधिकरण्योपलक्षितस्य धूमत्वादेः सकलधूम-
निष्ठत्वादिति भावः । व्याप्तेर्नानात्व इति । सामानाधिकरण्यस्व-
रूपतयेत्यादिः । तत्र । पर्वतीयधूमे । अथानुभवस्मरणयोः समानप्र-
कारतामात्रेण हेतुहेतुमद्भावे पूर्वागृहीतस्यापि स्मरणे भानं स्या-
दिति स्मृतेरगृहीतग्राहित्वेन तन्मते प्रामाण्यापत्तिरित्यन्यथा योज-
यति शक्त्यनुभवेति। अत्र शक्यस्मृतेरिव शक्त्यनुभवस्यापि साक्षा-
देव शाब्दबोधजनकत्वे हेतुपदं यथाश्रुतार्थकमेव, अन्यथा तु प्रयो-

वेर्व्यक्तिलाभोऽनुमाने तु पक्षधर्मताबलात् धूमो वह्निव्याप्य इत्यनुभवो न तु सर्वो धूमो वह्निव्याप्य इति, येन सर्वभानार्थं तत्स्वीकारः ।

———

जातौ व्यक्तौ च शक्तिः परन्तु जातिविषयत्वेनैव ज्ञात्वा शक्तिर्व्यक्तिं स्मारयति चेति । तदर्थादिति अनुभावयति वक्ष्यमाणत्वात् । अतद्गुणसंविज्ञानबहुव्रीहिणा पश्वादिलिङादिपदाभिप्रायेण

———

जकपरं तद्बोध्यम् । एवमिति । गोत्वप्रकारेण गोधर्मिकशक्तिग्रहस्य शाब्दधीहेतुत्व इत्यर्थः । धर्मिणि शक्तिसत्त्वेऽपि तद्विषयकत्वस्य शाब्दधीजनकतानवच्छेदकत्वात्तत्र शक्यत्वव्यवहार इति कुब्जशक्तिवादिनः श्रीकरस्य मतमनुसृत्य परिहरति जातौ व्यक्तौ चेत्यादि । जातिविषयकत्वेनैवेति । जातिप्रकारकत्वेनैवेत्यर्थः । तेन मूलोक्तस्य समानप्रकारकत्वेन हेतुत्वस्य न विरोधः । अनुभावयति । शाब्दबोधं जनयति । तदर्थात् । जातिशक्तिवादार्थात् ।कस्य चिन्मतमाह पश्वादीति । पशुत्वस्य संस्थानाव्यङ्ग्यत्वादुच्चैःश्रवोनिष्ठतया तैजसत्वेन साङ्कर्याच्च लोमवल्लाङ्गूलवत्त्वमेव पशुत्वं तस्य चोपाधित्वेन व्यक्त्या समं तुल्यवित्तिवेद्यत्वाभावात्तादृशोपाधिविशिष्टधर्मिण्येव परैः शक्तिस्वीकारादिति भावः । पृथिवीत्वादिप्रत्येकव्याप्या यदि नानैव पृथिवीमात्रवृत्तिर्वा पशुत्वजातिः पशुपदशक्या स्यात् पीतसुवर्णस्येवोच्चैःश्रवसोपि तैजसत्वप्रवादस्य तेजोभागस्योपष्टम्भकतयाप्युपपत्तेस्तदाह लिङादीति । यजेतेत्यादौ कार्यत्वप्रकारेण घटादौ लिङः शक्तिग्रहाद्यागविषयकं कार्यमित्यन्वयबोधे योग्यताबलात्ताद्रूप्येणापूर्वव्यक्तिलाभस्य परैर्वक्ष्यमाणत्वादिति भावः । कार्ये लिङादिशक्तेस्तार्किकैरनङ्गीकारादेककार्ये शक्तिग्रहादपरकार्यस्य बोधानुपपत्तेस्तैः शङ्कितुमशक्यत्वादाह परेति । पररीत्या न्यायमतेन । न्यायमतेन च समर्थनं चेत्यस्वरसः कश्चिदित्यनेन सूचितः । यद्यपि गोपदस्य नानार्थत्वेन यत्र वाक्यत्वप्रकारेण

परपरीसा वेसापि कश्चिव । विशेषणज्ञानसाध्येति । न च पक्षताव-च्छेदकज्ञानजन्यतया सिद्धसाधनम्, यद्यद्विशिष्टज्ञानं तत्तद्धीसा-ध्यमिति सामान्यव्याप्त्यादरात् अभावत्वप्रतियोगित्वयोरप्यनुप-स्थितयोरप्रकारत्वात् । वन्हिविशिष्टज्ञानत्वेन तद्वन्हिविशिष्टज्ञान-

———

वाक्यस्येन्द्रियत्वप्रकारेणेन्द्रियस्य वा बोधकङ्गोपदं तत्र वाक्यत्वा-देरुपाधितया तद्विशिष्टव्यक्तौ शक्तेः परेषामपि स्वीकाराद्गवादिपदे-ष्वपीति मूलं तदभिप्रायेणैव साधु सङ्गच्छते, तथापि लाघवेन गो-त्वादिशक्तेन गवादिपदेन लक्षणयैव वाक्यत्वादिप्रकारकबोधोपप-त्तौ न वाक्यत्वादिविशिष्टे गोपदस्य शक्तिर्गौरवादित्याशयेन तादृ-शाभिप्रायो मूलस्य नोपवर्णितः । अत्र गोपदं गोत्ववदित्याकारकस्य पदविशेष्यकशक्तिज्ञानस्यैव शाब्दधीहेतुत्वाद्गोत्वप्रकारतामादायैव च तत्र समानप्रकारकत्वेन हेतुत्वसम्भवात् यथाश्रुतमेव मूलं स-म्यगिति तु मैथिलाः । यद्विशिष्टज्ञानमिति । जन्यं यत्प्रकारकं ज्ञान-मित्यर्थः । तेन नित्यज्ञाने न व्यभिचारः । परेषां च व्यर्थविशेषणत्वं न दोषायेति भावः । तद्धीसाध्यत्वं च समवायसम्बन्धावच्छिन्नं ग्राह्यम्, नातः परेषामीश्वरज्ञानजन्यत्वसिद्धावर्थान्तरम् । अथाभावत्वादि-ज्ञानं विनापि तद्विशिष्टप्रत्यक्षोत्पादाद्व्यभिचार इत्यत आह अभाव-त्वेति । अन्यथा विनाप्यभावत्वज्ञानमलौकिकस्याभावत्वविशिष्टप्रत्य-क्षस्य प्रसङ्गात्, लौकिकान्यतत्प्रकारकज्ञानं प्रति तज्ज्ञानत्वेन हेतुत्वे च गौरवादिति भावः । यत्त्वतत्त्वयोरननुगमादाह वन्हीति । वन्हेर्वि-लक्षणज्ञानत्वेनेत्यर्थः । वैलक्षण्यं चानुमितित्वं नातः पूर्ववद्व्यभिचा-रः । अथात्र वन्ह्यन्तरज्ञानजन्यत्वेन सिद्धसाधनम् । न च वन्हित्वेन गुञ्जादेर्धूमव्यापकत्वग्रहोत्तरं जायमानानुमितेर्वन्ह्यन्तरज्ञानजन्य-त्वबाधात्तत्रैव प्रकृतवन्हिज्ञानजन्यत्वासिध्यर्थं सामान्यलक्षणा स्यादिति वाच्यम् । गुञ्जायां वन्हित्वग्रहस्य तदधीनानुमितेश्च गुरु-मतेऽसम्भवात्तेषामन्यथाख्यात्यभावादत आह तद्वन्हीति । अयं देशो दण्डिमानित्याद्यनुमितौ विशेषणतावच्छेदकीभूततद्दण्डभानार्थं सा-मान्यलक्षणापत्तेराह विशिष्टेत्यादि । नन्वेवं विशेषणतावच्छेदकप्र-

अथ वह्निमानयमित्यनुमितिर्विशेषणज्ञानसाध्या विशिष्टज्ञानत्वादिति पर्वतीयवह्निभानार्थं तत्कल्पने धूमेऽपि तथा क्वचिद्धूमस्यापि व्यापकत्वादिति चेन्न। विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञान-

———

त्वेन वा तज्ज्ञानजन्यत्वसाधनाद्वा विशिष्टवैशिष्ट्यसार्वत्रिकाभ्युपगमवादः। वस्तुतो विशेषणतावच्छेदकादीनां युगपदिन्द्रियसन्निकर्षात्तादृशप्रत्यक्षम्, अनुमित्यादेस्तु ताद्रूप्येण व्याप्त्यादिग्रहात्। अत एवानेकव्यक्तिकद्रव्यादिविशेषणतावच्छेदककानुमित्या तद्भानार्थं न सामान्यलक्षणादरः। अस्तु वा दण्डीत्यादिप्रत्यक्षे

———

कारकज्ञानविरहेऽपि सुरभि चन्दनमित्यादिविशिष्टवैशिष्ट्यधीः स्यादत आह वस्तुत इति। तथा च तादृशबुद्धेः प्रत्यक्षादिनियतत्वेन तदानीं प्रत्यक्षादिसामग्रीविरहादेव न तादृशं ज्ञानमिति भावः। विशेषणतावच्छेदकादीनामित्यादिपदाद्विशेष्यादिसङ्ग्रहः। तादृशं विशिष्टवैशिष्ट्यावगाहि। अनुमित्यादिस्त्विति। तादृश इति लिङ्गव्यत्ययेनाऽनुषज्यते। ताद्रूप्येण। विशेषणतावच्छेदकरूपेण। येन रूपेण व्यापकतायाः शक्तेर्वा ग्रहः तेन रूपेणैवानुमितेः शाब्दस्य चोत्पत्तेरिति भावः। अत एव। इन्द्रियसन्निकर्षादेर्नियामकत्वादेव। तद्भानार्थं विशेषणतावच्छेदकभानार्थम्। ननु विशेष्यादिसन्निकर्षेऽपि दण्डत्वदण्डयोर्निर्विकल्पकोत्तरं दण्डे दण्डत्वस्येव दण्डत्वादौ तद्दण्डादेर्विशिष्टप्रत्यक्षानुत्पत्त्याऽवश्यं दण्डत्वादिना तद्दण्डादेर्विशिष्टबुद्धौ विशेषणतावच्छेदकीभूतदण्डत्वादिना तद्दण्डादेर्ज्ञानं हेतुः, एवं दण्डो रक्तो न वेति संशयोत्तरं रक्तदण्डवानिति विलक्षणबोधानुत्पत्त्या तत्र विशेषणतावच्छेदकप्रकारकनिश्चयोऽवश्यं हेतुरत आह अस्तु वेति। स्मृतौ व्यभिचारात्तादृशज्ञानमात्रे हेतुत्वासम्भवादाह प्रत्यक्ष इति विशेषणतावच्छेद-

स्याऽऽवश्यकत्वेन हेतुत्वात् । तच्च वृत्तमेव, न तु विशेषणज्ञानमपि तथा, गौरवात् । गौरयमिति विशिष्टज्ञाने युगपद्विशेष्ये विशेषणे सन्निकर्ष एव कारणं न तु निर्विकल्पकं मानाभावात् । विशिष्टज्ञानत्वमेव मानमिति चेन्न । दृष्टान्ताभावात् दण्डी पुरुष इत्यत्र विशेषणधीजन्यत्वानभ्युपगमात् विशिष्टवैशिष्ट्यज्ञानत्वात् । अपि च प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यात् । तथा च परकीयज्ञानविषये घटत्वं न वेति संशयो न स्यात् प्र-

---

दण्डत्वादिना दण्डसंयोगवानित्यादौ च दण्डसंयोगत्वादिना यत्किञ्चिद्व्यक्तिज्ञानं कारणम् । दृष्टान्ताभावादिति । विशेषणज्ञानत्वेन हेतुत्वस्य विशेष्यज्ञानादेरपि कारणत्वापत्त्या मानाभावेन च निरस्तत्वादिति । एतेनाऽस्तु विशेष्यज्ञानमपि कारणं जन्यतां निर्विकल्पकमपि सामान्यलक्षणया, सर्वज्ञत्वापत्त्या तस्यास्तदजनकत्वे तु तत एव बाधकान्न तत्कारणमिति निरस्तम् ।

---

कांशे धर्मितावच्छेदकासत्त्वसत्त्वाभ्यां विशिष्टवैशिष्ट्यबुद्धेर्द्वैविध्यादाद्यामुदाहृत्य द्वितीयामाह दण्डसंयोगवानिति । यत्किञ्चिदिति । तथा च विशेषणव्यक्तेः पूर्वमभानेऽपि न क्षतिरिति भावः । व्यतिरेकेण घटादेरन्वयेन च गोत्वादिसाध्यकानुमितेर्दृष्टान्तत्वसम्भवादाह विशेषणज्ञानत्वेन हेतुत्वस्येति । निरस्तत्वादित्यग्रेऽन्वयः । विशेष्यज्ञानादेरित्यादिपदेन सम्बन्धज्ञानग्रहः । कारणतापत्त्येति । तथा च तद्वदिहाप्यप्रयोजकत्वमिति भावः । विशेष्यधियो हेतुत्वे वक्ष्यमाणेष्टापत्तेराह मानाभावेन चेति । एतेन मानाभावेन । निरस्तमित्य-

मेयत्वेन तदन्यतरनिश्चयात् । प्रमेयत्वेन घटं जानात्येव घटत्वं तस्य न जानाति इति चेन्न । तत् किं घटत्वं न प्रमेयं येन तन्न जानीयात्, सकलघटवृत्तिधर्मस्य प्रमेयत्वेन तदज्ञानासम्भवात् ।

---

न्वयः । ननु सामान्यलक्षणाजन्यज्ञानेऽसन्निकृष्टघटान्तरस्यापि विशेष्यत्वात्तस्य च प्रागनुपस्थितत्वेन विशेष्यज्ञानस्य हेतुत्वं दुर्घटमत आह जन्यतां चेति।निर्विकल्पकम्।अनुपस्थितस्वाश्रये स्वाप्रकारकम्। तथा च तत्रानुपस्थितघटांशे निर्विकल्पकमेव यावद्घटगोचरं ज्ञानमतो नोक्तदोषः।घटत्वादिसामान्यस्य च स्वेतरप्रकारत्वानिरूपितघटनिष्ठविषयतासम्बन्धेनैव घटत्वप्रकारकप्रत्यक्षं प्रति हेतुत्वं वाच्यमतो विनापि घटत्वस्य ज्ञानं द्रव्यत्वादिसामान्यस्य ज्ञानात् घटस्य प्रत्यक्षोत्पादेऽपि न व्यभिचार इति भावः । नन्वेवं मेयत्वसामान्यलक्षणया घटत्वपटत्वादिघटपटादिपूर्वानुपस्थितयावद्वस्तुनिर्विकल्पकोत्पत्तावुत्तरकालं घटादौ घटत्वादिनिश्चये बाधकाभावेन तदुत्पत्त्या सार्वज्ञं स्यात् । न चेष्टापत्तिः, तथा सति प्रमेयत्वादिसामान्यप्रत्यासत्तिजन्यज्ञानोत्तरम् अयं घटो द्रव्यं न वेत्यादिसंशयानुत्पत्तिप्रसङ्गादत आह सार्वज्ञेति।यत्तु कैश्चिदुक्तं प्रमेयत्वसामान्यलक्षणया घटत्वज्ञानोत्पत्तिकाले तद्वृत्तिधर्मस्यापि निर्विकल्पकज्ञानादुत्तरकालं घटे घटत्वस्येव घटत्वेऽपि तद्वृत्तिधर्माणामवश्यं भानं सामग्रीसत्त्वात्तथा च घटत्वांशेऽन्याप्रकारकज्ञानासम्भवान्न सार्वज्ञापत्तिरिति । तत्तुच्छम् । घटत्वांशे धर्मान्तरप्रकारकस्यैव तदंशेऽन्याप्रकारकस्यापि ज्ञानस्य सामग्रीसत्त्वेनोत्पत्तिसम्भवात् । जातिमान् घट इत्याकारकप्रत्यक्षानुरोधेन निरवच्छिन्नघटत्वादिप्रकारकज्ञानं प्रति निरवच्छिन्नघटत्वादिविषयताकत्वेन हेतुत्वात् । अन्यथा घटांशे घटत्वमिव घटत्वांशेऽपि जातिमत्त्वमवगाहमानस्यैव ज्ञानस्योत्पत्त्या जातिमानित्येव धीः स्यात् न तु जातिमान् घट इत्याकारिकेति दिक्। तस्यास्तदजनकत्वे त्विति । सामान्यप्रत्यासत्तेर्निर्विकल्पकाजनकत्वे

उच्यते। यदि सामान्यलक्षणा नास्ति तदाऽनुकूल-तर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात्, प्रसिद्धधूमे वह्निसम्बन्धावगमात् कालान्तरीयदेशान्तरीय-धूमस्य मानाभावेनाऽज्ञानात् । सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते ।

---

प्रसिद्धधूम इत्यादि।धर्मिज्ञानस्य संशयहेतुत्वानङ्गीकारेऽपि संशय एव धर्मिभानार्थं सा स्वीकार्या । धर्मितावच्छेदकप्रकारकज्ञानस्य प्रत्यासत्तित्वाभ्युपगमे त्वविवादात् तद्धर्मप्रकारकज्ञानस्य तद्धर्माश्रयप्रत्यासत्तित्वोपगमात् । अत्र वदन्ति । प्रसिद्धधूमे धूमत्वेन व्याप्ति-

---

त्वित्यर्थः । तत एवेति । सामान्यजन्यज्ञाने व्यभिचारादेव विशेष्यज्ञानं न कारणमित्यर्थः ।

ननु धर्मिज्ञानस्य संशयहेतुत्वे मानाभावादसन्निकृष्टधूमादीनामज्ञानेपि तद्धर्मिकः संशयो भविष्यतीति व्यर्थं तज्ज्ञानार्थं प्रत्यासत्तिकल्पनमत आह धर्मीत्यादि । संशय एवेति । सन्देहस्य प्रत्यक्षरूपतया धर्मीन्द्रियसन्निकर्षं विना तद्विषयकत्वासम्भवादिति भावः। ननु संशये धर्मिभानार्थं धर्मितावच्छेदकप्रकारकं कस्य चिदेव ज्ञानं तत्र हेतुरस्तु कृतं सामान्यलक्षणयेत्यत आह धर्मितेति। अविवादादित्यस्य सामान्यप्रत्यासत्तावित्यादिः । अविवादमेव विवृणोति तद्धर्मेत्यादि । प्रकारकेति । यथा च सामान्यप्रकारकत्वेनैव हेतुत्वं न तु तद्विषयकत्वमात्रेण तथोक्तमधस्तात् । धूमत्वेनेति । तदवच्छेदेनेत्यर्थः । तेन श्वेतधूमत्वावच्छेदेन वह्निव्याप्यवत्तानिश्चयस्य धूमत्वप्रकारकत्वेपि तदुत्तरं धूमो वह्निव्याप्यो न वेति सन्देहः, तादृशनिश्चयेन धूमत्वस्यावच्छेदकत्वावगाहनात् । यत्तु धूमत्वेनेत्यस्य धूमत्वमात्रावच्छिन्नविशेष्यताकेत्यर्थक-

ज्ञानमेतद्धूमत्वेन वा, आद्ये संशयोऽसिद्धः, द्वितीये धूमत्वावच्छेदेन व्याप्तिग्रहस्यैव तद्विरोधितया संशयो नानुपपन्नः, कथमन्यथा पृथिव्यादिरूपे वायुत्वाभावव्याप्यतानिर्णयेऽपि रूपं वायुत्वाभावव्यभिचारि न वेत्यादिसंशयः। न चातिरिक्तसम्भावनया तथा, विशेषतश्चोपस्थितानामतिरिक्तानां विशेषदर्शनाक्रान्ततरा अतिरिक्तान्तरोपस्थितये अवश्यं सा स्वीकरणीयेति वाच्यम्। यतो रूपेषु नातिरिक्तत्वसम्भावना, तेषु विशेषदर्शनात्। नाप्यतिरिक्ते

———

रणान्नोक्तदोष इति। तत्तुच्छम्। वह्निव्याप्यो धूमः सुन्दर इति धूमत्वसामानाधिकरण्येन व्याप्तिनिश्चयेऽपि वह्न्यव्याप्यो धूमः कुरूप इति धूमधर्मिकव्याप्त्यभावज्ञानोदयादवच्छेदकत्वावगाहिन एव ज्ञानस्य प्रतिबन्धकत्वादित्यन्यत्र विस्तरः। व्याप्तिज्ञानम्। व्याप्तिनिश्चयः। असिद्ध इति। धूमत्वावच्छेदेन व्याप्तिनिश्चयस्यैव विरोधिनः सत्त्वादिति भावः। तद्विरोधितया धूमो वह्निव्याप्यो न वेति सन्देहविरोधितया। स सन्देहः। नानुपपन्न इत्यस्य प्रसिद्धधूम इत्यादिः। तथा च कृतं सामान्यलक्षणयेति भावः। ननु लाघवात्तदभावनिश्चयत्वेनैव समानविशेष्यत्वप्रत्यासत्त्या तद्वत्ताबुद्धिं प्रति विरोधित्वान्नैवमतस्तत्र प्रतिबन्दिमाह कथमित्यादिना। पृथिव्यादीति। समानधर्मिकस्यैव ज्ञानस्य विरोधित्वे पार्थिवं तैजसं जलीयं च रूपं वायुत्वाभावव्याप्यमित्येवं निर्णये रूपं वायुत्वाभावव्याप्यं न वेति रूपविशेष्यकसंशयो न स्यात् रूपमात्रे विरोधिव्याप्तिनिर्णयादतः समानधर्मावच्छिन्नविशेष्यताकज्ञानस्यैव विरोधित्वं वाच्यमिति भावः। न चेति। वाच्यमित्यग्रेऽन्वयः। सम्भावनयेति। पार्थिवादिरूपभिन्नं रूपं न वेत्याद्याकारसम्भावनयेत्यर्थः। तथा निर्णीतव्याप्तिकेष्वपि रूपेषु व्याप्तिसन्देहः। सम्भावनाविरहविशिष्टस्यैव समानधर्मिकनिश्चयस्य प्रतिबन्धकत्वादिति भावः। नन्वेवं प्रसिद्धधूम एव व्याप्तिनिश्चयेऽप्येतद्धूमातिरिक्तो धूमो न वेतिसम्भावनयैव धूमो वह्निव्यभिचारी न वेतिसंशयसम्भवात्कृतं सामान्यलक्षणयेत्यत आह विशेषतश्चेति। तथा

रूपत्वसम्भावना, रूपान्यन्न रूपं द्रव्यादयो रसादयश्च न रूपं प्र-
सिद्धरूपभिन्नं यद्रूपभिन्नं द्रव्यं रसादि वा तत्सर्वं न रूपं रूपत्वा-
भाववच्चेत्यादिविशेषदर्शनेन तस्या अप्ययोगात् । तदानीञ्चोक्त-

---

च विशेषतो घटत्वादिरूपेणोपस्थितानां प्रसिद्धधूमभिन्नानां धूम-
त्वाभाववत्तया निश्चयात्तदतिरिक्तस्याप्रसिद्धधूमस्योपस्थित्यर्थमेव
सामान्यलक्षणा वाच्या तां विना सम्भावनाया एवाऽसम्भवादिति
भावः । समानधर्मिकज्ञानस्य विरोधित्वे सम्भावनैव न सम्भवति
कस्योत्तेजकत्वं स्यादित्याह यत इति । तेषु विशेषदर्शनादिति ।
रूपेषु पार्थिवादिभिन्नत्वाभावदर्शनादित्यर्थः । अतिरिक्ते । पार्थिवा-
दिरूपातिरिक्ते । रूपान्यन्न रूपमिति प्रात्यक्षिकस्यैव विशेषदर्शन-
स्याऽऽकारोयम्।उद्देश्यतावच्छेदकविधेययोरैक्येन तादृशशाब्दस्यास-
म्भवादिति ध्येयम्। सामान्यरूपेणोक्ता विशेषतोपि विशेषदर्शनमाह
द्रव्यादय इति । आदिपदेन कर्मत्वादिप्रकारेण कर्मसामान्यादेः प-
रिग्रहः । रसादय इत्यत्राप्यादिपदाद्गन्धत्वादिप्रकारेण गन्धस्पर्शा-
दीनां सङ्ग्रहः । ननु सम्भावनाया यद्विशेष्यतावच्छेदकं तदन्तर्भा-
वेण समानधर्मिकनिर्णयः सम्भावनाविरोधी रूपान्यत् न रूपमि-
त्याकारनिर्णयस्तु न सम्भावनाया विशेष्यतावच्छेदकं यत्प्रसिद्ध-
रूपभिन्नत्वं तदन्तर्भावेण अतः संभावना स्यादेवेति यदि ब्रूयात्तदा
तदन्तर्भावेणापि निर्णयमाह प्रसिद्धेत्यादि । प्रसिद्धरूपभिन्नं सर्वं
न रूपमितिनिर्णयसत्त्वे रूपं वायुवृत्ति न वेति पर्यवसितो रूपं वा-
युत्वाभावव्यभिचारि न वेत्याकारः सन्देहो नोत्पद्यत इत्यत उक्तं
रूपभिन्नमिति । उद्देश्यतावच्छेदकविधेययोरैक्येन प्रसिद्धरूप-
भिन्नं यद्रूपभिन्नं सर्वं न रूपमित्याकारस्य शाब्दविशेषदर्शनस्याऽ-
सम्भवादाह द्रव्यं रसादिर्वेति । अत्रापि प्रसिद्धेत्यादेः सम्बन्धात्प्र-
सिद्धरूपभिन्नं यद्द्रव्यं रसादि वा तत्सर्वं न रूपमित्यर्थः। तेन सम्भा-
वनाधर्मितावच्छेदकान्तर्भावलाभः । रूपत्वकोटिकसम्भावनायां रू-
पभेदनिश्चयो न बाधकः भिन्नविषयकत्वात् किं तु रूपत्वाभावनि-
श्चय एवेत्यभिधानेप्याह रूपत्वाभाववदिति । तस्या इति । प्रसिद्ध-

संशयस्य सर्वजनानुभवसिद्धत्वात् अतिरिक्तसम्भावनाया गौरवेणाप्रयोजकत्वाच्च। तस्मात्तत्रैव धूमे रूपे वा धूमत्वेन रूपत्वाद्यवच्छेदेन व्याप्तेरग्रहादव्यभिचारसंशयो नायुक्तः। यत्तु सामान्याभावभानार्थं सा स्वीकार्या, तां विना सकलतत्प्रतियोगिज्ञानासम्भवादिति। तन्न। न ह्यभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगिज्ञानं कारणं तत्र सामान्यलक्षणया इदन्त्वादिना च भाने व्यभिचारान्मानाभावाच्च। अत एवेदन्त्वादिनोपस्थिते तमसि भावत्वाभावत्वसंशयः, तेजोऽभावत्वेनोपस्थिते तदयोगात्। प्रतियोगिविशेषिततज्ज्ञानन्तु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते

---

रूपातिरिक्ते रूपत्वसम्भावनाया इत्यर्थः। नन्वेतादृशसम्भावनाविरहदशायां रूपं वायुत्वाभावव्यभिचारि न वेति संशयोऽप्रसिद्ध एवेत्यत आह तदानीमिति। तदानीं सम्भावनाविरहदशायाम्। प्रसिद्धरूपे वायुत्वाभावव्याप्यत्वनिर्णये एतादृशानुभवे विप्रतिपन्नं प्रत्याह अतिरिक्तेति। तद्धर्मिकतदभावनिश्चयाभावत्वेन हेतुत्वमपेक्ष्य सम्भावनाविरहविशिष्टतादृशनिश्चयाभावत्वेन हेतुतायां गौरवादित्यर्थः। तत्रैव निर्णीतव्याप्तिक एव। मिश्रमतमुपन्यस्य दूषयति यत्त्विति। तां सामान्यलक्षणाम्। तत्प्रतियोगीति। सामान्याभावप्रतियोगीत्यर्थः। अभावबुद्धौ प्रतियोगिज्ञानस्य हेतुतासत्त्व एव सकलप्रतियोगिज्ञानापेक्षा स्यात् सैव तु नास्तीत्याह नहीति। प्रथमे तत्रेति। तत्र सामान्यलक्षणावादिनः। द्वितीये इदन्तेति। नन्वभावत्वप्रकारकालौकिकप्रत्यक्षे प्रतियोगिज्ञानं हेतुरत आह मानाभावादिति। अत एव। प्रतियोगिज्ञानं विनाप्यभावप्रत्यक्षादेव। नन्विदं भावो न वेतिसंशयविषयीभूतमिदन्त्वं तेजोऽभावत्वमेव तथा च तत्रापि तेजोरूपप्रतियोगिज्ञानसत्त्वान्न व्यभिचार इत्यत आह तेजोभावत्वेति। तदयोगादिति। भावत्वसंशयायोगादित्यर्थः। तद्धर्मविशिष्टधर्मिकतदभावग्रहं प्रति तादृशज्ञानेच्छाविरहविशिष्टज्ञानमात्रस्य प्रतिबन्धकत्वात्। अन्यथा निर्वह्निर्वह्निमानित्येवमनाहार्यधीप्रसङ्गादि-

सकलप्रतियोगिविषयत्वन्तु तस्यासिद्धम्। प्रतियोगिज्ञानस्य हेतुत्वे-

---

ति भावः। अथाऽभावबुद्धौ प्रतियोगिज्ञानस्याऽहेतुत्वे विनापि घटा-दिग्रहं घटो नास्तीत्याकारकाभावप्रत्यक्षापत्तिरत आह प्रतियोगीति। तथा चोक्तबुद्धेर्घटत्वविशिष्टवैशिष्ट्यबुद्धित्वात्तत्कारणीभूतस्य घटत्व-प्रकारकज्ञानस्य विरहादेव न तस्योत्पाद इति भावः। ननु स्वातन्त्र्ये-णाभावप्रत्यक्षे प्रतियोगिज्ञानस्याहेतुत्वेपि अभावप्रत्यक्षे सकलप्रति-योगिविषयकत्वरक्षार्थं सन्निकर्षविधयैव तदपेक्षा स्यादत आह स-कलेति। तस्य सामान्याभावप्रत्यक्षस्य। अथाभावलौकिकप्रत्यक्षे प्र-तियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याहेतुत्वे घटनिर्विकल्प-कोत्तरं विशेष्ये विशेषणमितिन्यायेनाभावे घटं घटे च घटत्वमव-गाह्य घटाभाव इत्याकारकलौकिकप्रत्यक्षं स्यात्। न चेष्टापत्तिः, अननु-भवात् अपसिद्धान्ताच्च। घटत्वप्रकारेण घटविशिष्टबुद्धौ घटत्वप्र-कारेण घटज्ञानस्य हेतुत्वोक्त्या कथञ्चित्तन्निरासेपि घटाज्ञानदशा-यामिन्द्रियसम्बद्धविशेषणतया नेत्याकारस्य घटाभावलौकिकप्रत्य-क्षस्य प्रसङ्गो दुर्वारः। अभावप्रत्यक्षं प्रति विशिष्टप्रतियोगिज्ञानस्य हेतुत्वे तु प्रागुपस्थितस्य विशिष्टप्रतियोगिनोऽभावांशे विशेषणीभूय भाने बाधकाभावान्न तादृशं प्रत्यक्षम्। न च घटाभावस्यैव घटत्वा-वच्छिन्नाभावत्वेन प्रात्यक्षिकभ्रमे घटज्ञानाजन्ये व्यभिचारात्प्रतियो-गिज्ञानस्य हेतुत्वं दुर्वचम्, घटत्वावच्छिन्नाभावत्वेन प्रत्यक्षं प्रत्येव घटज्ञानत्वेन हेतुत्वे तु घटाज्ञानदशायां विशेषणताप्रत्यासत्त्या नेत्या-कारप्रत्यक्षं दुर्वारमिति वाच्यम्। घटत्वावच्छिन्नप्रकारत्वान्यप्रका-रत्वानिरूपिताभावनिष्ठलौकिकविषयताकप्रत्यक्षं प्रत्येव घटत्वादि-प्रकारकज्ञानत्वेन हेतुत्वात्तस्य च भ्रमप्रमानिर्विकल्पकसाधारणत्वात्। प्रकारत्वं तु प्रतियोगितासम्बन्धावच्छिन्नं ग्राह्यमतो घटो नास्तीतिप्र-त्यक्षस्य स्वरूपसम्बन्धेनाभावत्वप्रकारकत्वेपि नासङ्गहः। यद्यपि विशिष्टप्रतियोगिज्ञानस्य हेतुत्वपक्षेऽभावो न घटीय इत्यभावे प्रति-योगितासम्बन्धावच्छिन्नघटाभावनिश्चयदशायामिन्द्रियसम्बद्धवि-शेषणतावशान्नेत्याकारप्रत्यक्षस्य दुर्वारत्वम्। न चाभावत्वसामा-नाधिकरण्येन यदि घटस्य अभावत्वग्रहस्तदा तस्याविरोधित्वादग्रे

ऽपि प्रतियोगितावच्छेदकविशिष्टयत्किञ्चित्प्रतियोगिज्ञानादेव तत्सम्भवात् यावत्प्रतियोगिज्ञानत्वेन गौरवेणाहेतुत्वात्। न च तद्-

---

घटो नास्तीत्येव धीर्जायते प्रतियोगिविशिष्टबुद्धेः सामग्रीसत्त्वात् अभावत्वावच्छेदेन घटाभावग्रहस्तु तदानीमसम्भवी, अभावत्वविशिष्टे प्रतियोगितासम्बन्धेन घटविशिष्टबुद्धिमात्रस्यैव तदवच्छेदेन प्रतियोगितासम्बन्धावच्छिन्नघटाभाववत्ताज्ञानाविरोधित्वादित्युभयथापि नेत्याकारप्रत्यक्षापादन दुर्घटमिति वाच्यम्। तदसम्भवेऽप्यभावत्वावच्छेदेन प्रतियोगितासम्बन्धेन घटवद्वृत्तिधर्मवत्तानिर्णयदशायां विशेषणसन्निकर्षान्नेत्याकारकप्रत्यक्षापत्तेर्वज्रलेपत्वात्। तद्वद्वृत्तिधर्मवत्त्वज्ञानस्यापि तद्वत्ताज्ञानाविरोधित्वेनाभावांशे घटवत्ताज्ञानासम्भवात्। तथापि नेत्याकारकप्रत्यक्षस्य घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावनिष्ठविषयताकत्ववत् कुड्यत्वपटत्वादितत्तद्धर्मावच्छिन्नप्रकारत्वानिरूपिताभावनिष्ठविषयताकत्वेन तादृशविषयताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति हेतुभूतस्य तत्तद्धर्मप्रकारकज्ञानकूटस्यैकदा विरहादेव न नेत्याकारकप्रत्यक्षम्। वस्तुतो घटत्वपटत्वादिप्रत्येकधर्मावच्छिन्नाभावत्वप्रकारकप्रत्यक्षं प्रत्येव घटत्वपटत्वादिप्रत्येकधर्मप्रकारकज्ञानत्वेन हेतुत्वं तथा च तादृशप्रत्यक्षस्य सामग्रीविरहादेव केवलेन्द्रियसन्निकर्षदशायामभावो न घटीय' इत्यादिबाधदशायां वा नाभावस्य प्रत्यक्षं विशेषसामग्रीविरहादित्यत आह प्रतियोगिज्ञानस्य हेतुत्वेऽपीति। यत्तु घटत्वाद्यवच्छिन्नप्रतियोगितासम्बन्धेन घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावत्वावच्छिन्नधर्मिताकाभावलौकिकप्रत्यक्षत्वं प्रतियोगितासम्बन्धेन घटत्वादिविशिष्टवैशिष्ट्यावगाहिध्वंसादिलौकिकप्रत्यक्षत्वमिदन्त्वादिप्रकारकाभावप्रत्यक्षत्वं च नानैव इन्द्रियसम्बद्धविशेषणताया एव कार्यतावच्छेदकं वाच्यं न तु प्रतियोगिज्ञानस्य, तावतैव नेत्याकारकप्रत्यक्षस्य वारणासम्भवात्। न चैवं घटाभावो नास्तीत्यभावप्रकारकलौकिकप्रत्यक्षं न स्यात्तादृशाभावस्य द्रव्यत्वेनेन्द्रियसम्बद्धविशेषणतायास्तद्ग्राहकत्वासम्भवादिन्द्रियसंयोगादेर्द्रव्यसाक्षात्कारत्वाद्यवच्छिन्नं प्रत्येव हेतुत्वादिति वाच्यम्,

भावबुद्धौ तज्ज्ञानहेतुत्वात् यावत्प्रतियोगिज्ञानस्य हेतुत्वमर्थाया-तम्, मानाभावात् ध्वंसप्रागभावात्यन्ताभावाश्च प्रतियोग्यादित्रि-

---

द्रव्यप्रत्यक्षत्वादेरिव घटाभावाभावत्वादिप्रकारकद्रव्यप्रत्यक्षत्वस्या-पीन्द्रियसंयोगजन्यतावच्छेदकत्वोपगमात्। वस्तुतो नव्यमतेऽभा-वाभावस्यातिरिक्तत्वाद्विशेषणतैव तद्ग्राहिकेति साम्प्रदायिकरु-क्तम्। तत्तुच्छम्। तत्तत्पुरुषीयघटत्वाद्यवच्छिन्नं प्रति तत्तत्पुरुषीय-चक्षुःसम्बद्धविशेषणतात्वेनेन्द्रियभेदेन चाऽनन्तहेतुताकल्पनामपेक्ष्य घटत्वाद्यवच्छिन्नाभावत्वप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रत्येव लाघवेन सामानाधिकरण्यप्रत्यासत्त्या घटत्वादिप्रकारकज्ञानत्वेन हेतुताया युक्तत्वात्, संयोगसंयुक्तसमवायादिभेदेनेन्द्रियसम्बन्धानामप्यननु-गमाच्च। यदपि प्रसिद्धानामभावलौकिकप्रत्यक्षाणां विशिष्टवैशिष्ट्या-वगाहित्वनियमात्तत्तद्विशेषणतावच्छेदकप्रकारकज्ञानविरहादेव तेषां नापत्तिरतिरिक्तस्य च तत्याकारप्रत्यक्षस्यालौकिकतया नापत्तिसम्भव-नापि पारमार्थिककार्यव्यक्तीनां सामग्र्या एव कार्योत्पत्तिव्याप्य-त्वोपगमात् तथा च घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावप्रत्यक्षत्वा-दिनानाधर्माणामिन्द्रियसम्बद्धविशेषणतायाः प्रतियोगिज्ञानस्य का-र्यतावच्छेदकत्वविरहेऽपि न क्षतिरिति। तदसत्। यत्र पटाभावे घ-टत्वावच्छिन्नप्रतियोगितकत्वादिभ्रमस्य सामग्री नास्ति तत्रेन्द्रि-यसम्बद्धविशेषणतावलाज्जायमानस्य पारमार्थिकस्य घटो नास्ती-तिप्रत्यक्षस्य घटाभाव इव पटाभावेऽपि लौकिकविषयतासम्बन्धेनो-त्पत्तेर्दुर्वारत्वात्तस्य च पटाभावांशे विशिष्टबुद्धिसामग्रीविरहान्ने-त्याकारकताया अर्थवशसम्पादनीयत्वादिति दिक्। तदभावेति। तस्याभावप्रत्यक्ष इत्यर्थः। तादृशकारणतायां साधकाभावमुक्त्वा व्यभिचाररूपं बाधकमप्याह ध्वंसेत्यादिना। घटध्वंसो हि घटत-त्प्रागभावतदत्यन्ताभावानामभावस्तत्सत्त्वे घटतत्प्रागभावादयो न स-न्तीति प्रत्ययात् व्यवहाराच्च। एवं घटप्रागभावोऽपि घटतद्ध्वंसतद-त्यन्ताभावानामभावस्तथा घटात्यन्ताभावोऽपि घटतद्ध्वंसतत्प्राग-भावानामभावस्तेषां च एकैकप्रतियोगिज्ञानमात्रादेव ग्रहात्स्फुटतरो व्यभिचार इति भावः। स्वमते ध्वंसप्रागभावयोरत्यन्ताभावेन समं

तयप्रतियोगिकाः द्वयाग्रहेऽप्येकग्रहादेव गृह्यन्त इत्यभ्युपगमाच्च । अन्धकारस्तु तेजोविशेषसामान्याभावो नाभावसमुदायः। यावत्तद्भावानामेकत्रासम्भवात्, अननुगमात्, गौरवात्, तेजोविशेषत्वादि-

---

न विरोधो ध्वंसस्य प्रागभावः प्रागभावस्य च ध्वंसोऽतिरिक्त एवेत्यत उक्तमभ्युपगमादिति । प्राचीनैरुपगमादित्यर्थः । इदमुपलक्षणम् । नव्यमते समनियतसंख्यापरिमाणाद्यभावानामैक्यादेकमविज्ञायापरप्रतियोगिज्ञानादेव ग्राह्यत्वाच्च तत्रैव स्वमतेपि व्यभिचारो द्रष्टव्यः । ननु स्वपरप्रकाशकतेजःप्रतियोगिकयावत्संसर्गाभावरूपस्यान्धकारस्य ग्रहो न तादृशयावत्तेजोग्रहं विना प्रतियोगिबुद्धेरभावप्रत्यक्षे हेतुत्वात् यावत्तादृशतेजोग्रहश्च न सामान्यलक्षणां विना सम्भवतीति प्राचां मतं दूषयति अन्धकारस्त्विति । तेजोविशेषेति । महाप्रभात्वावच्छिन्नाभाव इत्यर्थः । उद्भूतानभिभूतरूपवन्महातेजःसामान्याभावस्तु नार्थः। अनुद्भूतत्वाभावाद्यात्मकस्योद्भूतत्वादेरतीन्द्रियतया तद्घटितधर्मावच्छिन्नाभावस्यायोग्यत्वेन प्रत्यक्षायोगात् । नीलत्वशुक्लत्वादिव्यापकमुद्भूतत्वमेकमेव सामान्यं चाक्षुषप्रयोजकं पिशाचनिदाघोष्मादौ न नीलशुक्लाद्यात्मकं रूपं किं तु तद्भिन्नमेव प्रत्यक्षस्य चाक्षुषाद्यन्यतमत्वनियम इव रूपस्य नीलशुक्लाद्यन्यतमत्वनियमे मानाभावादित्यस्मद्गुरुचरणमतानुसरणे तूक्तप्रकारोपि सम्यगिति ध्येयम् । न चालोकसन्निधानेपि घटीयरूपे तम इति चाक्षुषापत्तिः, चक्षुःसंयुक्तसमवेतरूपविशेषणतायास्तादृशप्रभाद्यभावेपि सत्वादिति वाच्यम्। तमःसाक्षात्कारं प्रति चक्षुःसंयुक्तविशेषणताया एव हेतुत्वोपगमादिति भावः। एकत्रेति।एकदेशीयतेजोध्वंसप्रागभावव्यक्तीनामन्यदेशे विरहादिति भावः। ननु यावत्त्वं प्रतियोगिविशेषणं तथा च यावन्ति तादृशतेजांसि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिताकाभावानामेकदेशवृत्तीनामेव तमस्त्वं वाच्यमत आह अननुगमादिति । निरुक्ताभावानामनुगतैकधर्माभावात्तम इत्यनुगताकारप्रतीतिर्न स्यादिति भावः।ननु यावन्ति तादृशतेजांसि तेषां तथा-

ज्ञानस्य तेजःसामग्र्याश्च विरहेऽपि तेजोविशेषात्यन्ताभावप्रागभावानां प्रत्यक्षानभ्युपगमाच्च। प्रागभावप्रत्यक्षेऽपि च प्रतियोगिवृत्तिघटत्वादिप्रकारकज्ञानसाध्यो न प्रतियोगिज्ञानमपेक्षते। अथ घटो भविष्यतीति प्रत्यक्षं प्रतियोगिविशेषितं प्रागभावमवगाहते। न च प्राचीनास्तत्प्रतियोगिनः, तत्प्रतियोगित्वावगाहने च भ्रम-

---

विधैकप्रतियोगिकाभावविशिष्टनापरप्रतियोगिताकाभावेन विशिष्टमन्यप्रतियोगिकाभावमुपादाय तेनापि विशिष्टमपरापरप्रतियोगिताकाभावत्वमेवानुगमकं वाच्यमत आह गौरवादिति। अनन्तानामभावानां तमःप्रतीतिविषयत्वकल्पनामपेक्ष्य तेजोविशेषसामान्याभावस्यैव तादृशप्रतीतिविषयतायां लाघवादिति भावः। ननु तेजोविशेषसामान्याभावस्य सन्निकर्षदशायां तत्तत्तेजोभावस्यापि सन्निकृष्टतया तेषामपि तमःप्रतीतिविषयताध्रौव्यात् कुतो गौरवमत आह तेजोविशेषेति। तेजोविशेषत्वादिज्ञानविरहे तेजोविशेषात्यन्ताभावप्रत्यक्षानुपगमादिति योजना। तथा च विशिष्टप्रतियोग्यनुपस्थितौ तेजस्त्वादिसामान्यलक्षणास्वीकारेपि नाभावसमुदायस्य प्रत्यक्षसम्भव इति व्यर्थं तत्प्रत्यासत्त्येति भावः। तेजःसामग्रीति। तथा च प्रागभावस्य प्रतियोगिसामग्रीव्यङ्ग्यत्वात्तेजःसामग्रीविरहदशायामन्धकारप्रतीतिर्न स्यादिति भावः। ननु भाविप्रतियोगिकप्रागभावव्यक्तिप्रत्यक्षस्य तादृशप्रतियोगिव्यक्तिज्ञानं विनाऽनुत्पादात्तदर्थं सामान्यलक्षणाऽऽवश्यकीत्यत आह प्रागभावेति। तथा च घटप्रागभाव इति प्रत्यक्षस्य विशिष्टवैशिष्ट्यबुद्धितया घटत्वप्रकारकज्ञानमात्रं तत्र हेतुर्न तु प्रतियोगिव्यक्तीनां तत्र प्रवेश इति भावः। ननु घटादिप्रतियोगिविशेषितप्रागभावप्रत्यक्षे घटादिभानार्थं तस्यावश्यं सन्निकर्षो वाच्यः स च लौकिकप्रत्यासत्तिबाधादगत्यैव ज्ञानलक्षणासम्पादकत्वेन सामान्यलक्षणायां पर्य्यवस्येदित्याशङ्कते अथेत्यादिना। इति प्रत्यक्षम्। इत्याकारशब्दप्रयोजकप्रत्यक्षं घटीयप्रागभावो वर्तमान इत्याकारप्रत्यक्षमिति यावत्। यथाश्रुतं घटस्य विशेष्यतयैव भानात् प्रतियोगिविशेषितमित्यादेरसङ्गत्यापत्तेः। भ्रमत्वमि-

त्वम् । नचाऽनागते घटे प्रत्यासत्त्यन्तरमस्ति, अतः सामान्यप्रत्या-
सत्त्या घटत्वेनानुभूतं स्मृतञ्च तं तदालम्बते । न च चरमकारण-
रूपसामग्रीव्यङ्ग्यः प्रागभावो वाच्यः, अन्यथा तदप्रत्ययात्तस्याः



ति । प्रसज्येतेति शेषः । प्रतियोगितासम्बन्धेन तत्तद्घटाभाववति
घटत्वादिप्रकारेणापि तादृशसम्बन्धेन तत्तद्घटावगाहिनो ज्ञानस्य
भ्रमत्वादिति भावः । स्मृतमिति । यद्यपि घटत्वप्रकारकानुभवस्यैव
प्रत्यासत्तित्वात्तदुत्तरं घटो भविष्यतीति प्रत्यक्षमेव भाविघटं विष-
यीकृत्योत्पत्तुमर्हति, तथाप्युक्तप्रत्यक्षे प्रागभावांशे भाविघटस्य वि-
शेषणतया तस्य ज्ञानं पूर्वमपेक्षितमित्याशयेन स्मृतं चेत्युक्तम् । न-
त्रापि स्मृतत्वमविवक्षितं किं तु ज्ञानमात्रम् । तेन घटत्वसामान्यलक्ष-
णाजन्यानुभवादपि घटविशेषितप्रागभावप्रत्यक्षस्य क्वचित्सम्भवान्न
न्यूनत्वम् । सामान्यलक्षणाप्रत्यासत्तेः स्वाश्रयमुख्यविशेष्यकप्रत्यक्षं
प्रत्येव जनकत्वात्तादृशप्रत्यासत्त्या प्रागभावविशेषणत्वेन घटस्य प्र-
त्यक्षं न सम्भवतीत्यतः स्मृतमित्युक्तमित्यप्याहुः । तं भाविघटम् । तत्
घटो भविष्यतीत्याकारकप्रत्यक्षम् । नव्यास्तु प्रतियोगिविशेषितमि-
त्यस्य प्रतियोगिविशेष्यकमित्यर्थः । तच्च प्रत्यक्षविशेषणम् । तेन घटो
वर्तमानप्रागभावप्रतियोगीत्याकारकस्यैव प्रत्यक्षस्य लाभः । घटत्वेना-
नुभूतं स्मृतं चेत्यत्र चकारोऽपि वाकारार्थः, तेन क्वचित्सामान्यप्र-
त्यासत्त्या घटत्वेनानुभूतं क्वचिच्च तादृशानुभवबलाद्घटत्वेन स्मृत-
मेव भावि घटं घटो भविष्यतीति प्रत्यक्षं सामान्यप्रत्यासत्तिबलादा-
लम्बत इत्यर्थः । तेन घटीयो वर्तमानप्रागभाव इति प्रत्यक्षस्य भा-
विघटप्रागभाव एव घटत्वप्रकारेण प्रतियोगितया घटान्तरावगाहि-
त्वेऽपि न भ्रमत्वं प्रतियोगितासम्बन्धेन घटत्वावच्छिन्नाभाववत्येव
तादृशसम्बन्धेन घटत्वावच्छिन्नप्रकारताकज्ञानस्य तादृशसम्बन्धेन
घटत्वावच्छिन्नस्य भ्रमत्वादित्युक्तावपि न क्षतिरिति प्राहुः । न चे-
ति । द्वितीयवाच्यमित्यनेनान्वयः । कारणान्तरप्रवेशे गौरवादाह
चरमकारणेति । प्रतियोगिन इत्यादिः । अन्यथा । चरमकारणास-
त्त्वदशायाम् । तस्याः । सामग्र्याः । तथात्वे । प्रागभावव्यञ्जकत्वे ।

स्वरूपमस्याः स्वरूपेण वा ज्ञातायास्तथात्वेऽतिप्रसङ्गात् व्याप्य-त्वेन गृहीतायास्तथात्वं वाच्यं तथा च तद्धेतुका प्रागभावस्यानुमितिरेव तावत्कालं प्रागभावस्यासत्त्वेन प्रत्यक्षायोगाच्चेति वाच्यम् । यादृशकारणकलापानन्तरं कार्योत्पादो दृष्टस्तद्बुद्धेरेव

---

अतिप्रसङ्गादिति । सामग्र्यां प्रागभावव्यभिचारग्रहदशायामपि तत्प्रत्यक्षप्रसङ्गादित्यर्थः । तत्त्वं प्रागभावव्यञ्जकत्वम् । तद्धेतुका । सामग्रीहेतुका । न च सामग्र्याः प्रागभावव्याप्यत्वग्रहेऽपि पक्षधर्मतानिश्चयाभावात्कथमनुमितिरिति वाच्यम् । घटप्रागभाव-व्याप्यघटसामग्र्याः कपालवृत्तित्वसन्देहेऽपि प्रागभावप्रत्यक्षस्यानुत्पादेन प्रत्यक्षानुरोधेनापि पक्षधर्मतानिश्चयस्यावश्यं वाच्यत्वादिति भावः । अनुमितिरेवेति । तथा च तस्यां पूर्वागृहीतस्यापि घटादेः पक्षधर्मताबलादेव भानमविरुद्धम्, अनुमितौ व्यापकतावच्छेदकप्रकारेण ज्ञानस्यैव तन्त्रत्वादिति भावः । ननु कपालादौ प्रागभावव्याप्यसामग्र्याः परामर्शेऽपि घटप्रागभावस्य नानुमितिः समानविषये लौकिकप्रत्यक्षसामग्र्या बलवत्त्वादत आह तावत्कालमिति । सामग्र्यां प्रागभावव्याप्त्यादिग्रहकालपर्यन्तमित्यर्थः । असत्त्वेनेति । न च यत्र चरमकारणोत्पत्तिक्षणे तत्पूर्वक्षणे वा प्रागभावव्याप्यतया चरमसामग्र्याः परामर्शस्तत्रोत्तरकालं प्रागभावप्रत्यक्षे बाधकाभावः पूर्वं प्रागभावात्मकविषयस्य सत्त्वादिति वाच्यम् । प्रागभावव्याप्यचरमकारणवत्तायाः स्मृत्यादिसाधारणनिर्णयमात्रस्याऽतिप्रसक्तत्वात्तल्लौकिकनिर्णयस्यैव हेतुतया पूर्वं तदसम्भवादिति भावः । तद्बुद्धेरेवेत्येवकारेण व्याप्यत्वादिधीव्युदासः । तथा च कार्योपधायकत्वेन चरमकारणवत्तालौकिकप्रत्यक्षमेव प्रागभावस्य व्यञ्जकमतः स्वरूपतस्तदनुभवे कार्योपधायकतत्स्मरणे वा न प्रागभावप्रत्यक्षम् । एतदभिप्रेत्यैवोक्तं कार्योत्पादो दृष्ट इति । केचित्तु यादृशस्य प्रागभावप्रत्यक्षकारणकलापस्यानन्तरं कार्यीभूतस्य प्रागभावप्रत्यक्षस्योत्पादो दृष्टः प्रमाणसिद्धः तद्बुद्धेरेव तादृशकारणकलापान्तर्गतबुद्धिव्यक्तेरेव प्रागभावव्यञ्-

व्यञ्जकत्वाभ्युपगमात् अनुयोगिताविशेषादिरूपप्रागभावत्वादेः क्व चिदप्रतीतौ ताद्रूप्येणानुमानासम्भवाच्चेति चेत्। भविष्यत्त्वं हि न वर्त्तमानप्रागभावप्रतियोगित्वम्, श्वो भाविन्यद्य भविष्यतीति

———

कत्वोपगमादित्यर्थः। तथा च प्रागभावव्याप्यत्वाद्यविषयकस्यापि चरमकारणविषयकतज्ज्ञानस्यैव विशिष्य प्रागभावप्रत्यक्षहेतुत्वोपगमान्न तस्याप्यनुमितिरिति भावः। तेन स्वरूपतो ज्ञानादिकमादाय नातिप्रसङ्गलेशोपीत्याहुः। ननु प्रागभावव्याप्यचरमसामग्रीमत्त्वज्ञानमेव प्रागभावग्रहे हेतुः परामर्शस्याऽनुमितिहेतुतायाः क्लृप्तत्वात् न तु कार्योपधायकतया सामग्रीमत्त्वज्ञानं तथा, कारणान्तरकल्पनागौरवात्। एवं चान्यत्र समानविषये प्रत्यक्षसामग्र्या बलवत्त्वेपि अत्र तदकल्पनात् प्रागभावस्यानुमितिरेव जायतामतः प्रत्यक्षासत्त्वेऽनुमानमपि प्रागभावस्य दुर्घटमित्याह अनुयोगितेति। अनुयोगित्वं घटादिनिष्ठप्रतियोगितानिरूपितस्वरूपसम्बन्धविशेषः। आदिपदादखण्डोपाधिरूपस्य प्रागभावरूपत्वस्य परिग्रहः। प्रागभावत्वादेरित्यादिपदात्तदीयव्याप्त्याद्युपग्रहः। ताद्रूप्येण प्रागभावत्वरूपेण। असम्भवादिति। तथा चानायत्यैव तत्प्रत्यक्षमास्थेयमिति भावः। घटो भविष्यतीतिशब्दाभिलप्यमानोर्थ एव यदि भविष्यत्त्वं तदा तस्यातीन्द्रियत्वेन प्रत्यक्षमेव नास्ति कुतस्तत्र प्रतियोगिविषयताया रक्षायै सामान्यलक्षणा स्वीकार्येत्याशयेनाह भविष्यत्त्वं हीति। भविष्यतीति पदाभिलप्यमानं हीत्यर्थः। [ गुरवस्तु ननु घटो भविष्यतीतिशब्देनाभिलप्यमानो योऽर्थस्तज्ज्ञानमेव प्रत्यक्षं किं वा कार्यानुत्पाददशायामिह कपाले घटो नास्तीत्याकारकमिहेदानीं घटो नास्तीत्याकारकं वा नाद्य इत्याह भविष्यत्त्वं हीति। द्वितीयादिवितर्कितस्य पश्चाद्दूष्यत्वादिति प्राहुः। ] नष्टादावपि भविष्यतीतिप्रयोगापत्तेरत उक्तं वर्तमानेति प्रागभावविशेषणम्। तच्च तत्प्रयोगकालीनत्वम्। श्वो भाविनीति। श्वो भाविघटीयप्रागभावस्याद्यापि वर्तमानत्वात्। न चाद्यादिकालस्य प्रतियोगिन्येवान्वयः, तथा सत्यद्य भाविनि परश्वो भविष्यतीति प्रसङ्गात् अद्य भाविनः परश्वोपि

प्रत्ययप्रसङ्गात्। किन्तूत्पत्स्यते भविष्यतीत्यादेः समानार्थकत्वाद्व-र्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं वर्त्तमानकालोत्तरकालोत्पत्ति-कत्वं वा तत्त्वम्। न चेदमध्यक्षम्, उत्पत्तेरतीन्द्रियत्वात्। इहा-ऽद्य घटो भविष्यतीत्यादौ च तादृशोत्पत्तेर्देशविशेषः कालविशेष-श्चाधिकरणत्वेन प्रतीयते न तु प्रागभावस्योत्पत्तिमतो वा। अत

---

वृत्तेः। नापि प्रागभावे प्रतियोगिनि चोभयत्र कालादेरन्वयान्नैवमिति युक्तम्। आद्यक्षणे घटो भविष्यतीति प्रयोगानुपपत्तेः। घटतत्प्रागभावयोरेकक्षणावृत्तित्वादिति भावः। उत्पत्तिरवश्यं भविष्यत्त्वघटिकेत्यत्र हेतुः समानार्थकत्वादित्यन्तम्। स्वयं प्रा-गभावास्वीकारादाह वर्तमानकालेति। अत्रोत्पत्तिरपि ध्वंसघटिता ग्राह्या। इदं निरुक्तभविष्यत्त्वम्। अतीन्द्रियत्वादिति। तथा चानु-मानादिनैव तज्ज्ञानं वाच्यमित्यनागतभानार्थं न सामान्यप्रत्यास-त्त्यादरः। यद्यपि भविष्यत्त्वस्यातीन्द्रियत्वेऽपि भाविघटविशेषिततद्-लौकिकप्रत्यक्षानुरोधेनैव सामान्यप्रत्यासत्तिरावश्यकी तस्य प्रा-चीनघटावगाहित्वे तु भ्रमत्वापत्तेः, तथापि वक्ष्यमाणक्रमेण शब्दा-दनुमानाद्वा घटत्वादिप्रकारेण भाविनो घटादेर्ज्ञानोत्पत्त्या विनापि सामान्यलक्षणां भाविघटादेर्भविष्यत्त्वभानं भविष्यतीति सिद्धान्त-निगवः। ननूक्तेऽपि भविष्यत्त्वे कालादेस्तद्घटकप्रागभावान्वयित्वे पू-र्वोक्तातिप्रसङ्गतादवस्थ्यमत आह इहेति। इत्यादौ इत्यादिप्रयोगे। तादृशोत्पत्तेः। विद्यमानप्रागभावप्रतियोग्युत्पत्तेः। देशविशेषः कपालादिः। कालविशेषश्च अद्येत्यादिः। अधिकरणत्वेनेति। प्राचां मते भेदार्थकविभक्तिसमवधानस्थले नामार्थधात्वर्थयोरपि भेदेना-न्वयस्योपगमात्। अधिकरणताविशेषणत्वेनेति वार्थः। तथा च इहाद्य घटो भविष्यतीत्यादौ वर्तमानप्रागभावप्रतियोगिनी या एत-त्कपालादिवृत्तिरद्यादिकालवृत्तिरुत्पत्तिस्तदाश्रयो घट इत्याकारः शाब्दबोधः। उत्पत्तिमतो वेति। अधिकरणत्वेन प्रतीयत इत्यनुषञ्ज-नीयम्। कालस्य प्रागभावान्वये श्वो भाविन्यद्य भविष्यतीति प्र-

एव कपालनाशजन्यघटनाशस्य घटाद्यात्मकतत्प्रागभावत्वेऽपि तत्र कपाले नेह घटध्वंसो भविष्यतीति बुद्धिः, न वा भवने स्वः समुत्पद्य प्राङ्गणे परश्वो गमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति धीः। अत्र च धातुनोत्पत्तिः प्रत्याय्यते प्रत्ययेन च धात्वर्थनिष्ठं

---

योगप्रसङ्गस्य पूर्वमुक्तत्वाद्देशस्य प्रागभावान्वये दोषमाह अत एवेति। यतो न प्रागभावे देशकालयोरन्वयोऽत एवेत्यर्थः। घटादीत्यादिना घटप्रागभावसंग्रहः। तत्रापि घटध्वंसप्रागभावत्वस्य प्राच्यैः स्वीकारात्। तत्प्रागभावेति। घटनाशप्रागभावेत्यर्थः। तत्र स्वनाशनाश्यघटके कपाले। नेत्यस्य बुद्धिरित्यनेन सम्बन्धः। न च घटध्वंसस्य प्रागभावो न घटादिः किं त्वतिरिक्त एव स च तादृशकपाले नास्तीति नोक्तदोष इति वाच्यम्। प्राचां मतेनोक्तत्वात्, नव्यमतेऽपि देशविशेषस्योत्पत्तिविशेषणतयैवान्वयस्यानुभविकत्वादिति भावः। उत्पत्तिमति देशकालयोरधिकरणत्वेनान्वये दोषमाह न वेति। न चोत्पत्तिमति प्रागभावे चोभयत्रैव देशकालयोरन्वयो वक्तव्य इति प्रागभावस्य परश्वःप्राङ्गणयोरसत्त्वान्न दोष इति वाच्यम्। आद्यक्षणे घटो भविष्यतीति प्रयोगानुपपत्तेः। घटतत्प्रागभावयोरेकक्षणावृत्तित्वादिति भावः। परश्वः प्राङ्गणं गच्छति गतं वा मैत्रे तदीयोत्पत्तेर्विद्यमानप्रागभावप्रतियोगित्वमेवाऽसम्भवीत्यत उक्तं गमिष्यतीति। ननु भूधातुस्यतिप्रत्ययाभ्यामुत्पत्तिद्वयोपस्थापनाद्घटो भविष्यतीत्यादौ विद्यमानप्रागभावप्रतियोग्युत्पत्तिमानित्यन्वयबोधेऽनुभवविरोध इत्यत आह अत्र चेति। गगनं द्रव्यं भवतीत्यादौ द्रव्यात्मकाविशेषणसम्बन्धस्यानुभवात् द्रव्यादितादात्म्यमेव भुवः शक्यं समभिव्याहृतद्रव्यादिपदस्य तत्तदर्थे तात्पर्यग्राहकत्वात् तादात्म्यमात्रस्य भूशक्यत्वे नामार्थस्य द्रव्यादेर्धातूपस्थाप्ये तत्र भेदान्वयानुपपत्तेः अस्तु वाऽस्तित्वलक्षणं स्वरूपसत्त्वमेव भुवः शक्यं न तूत्पत्तिर्गौरवादित्याशयेनोच्यत इत्यपहाय प्रत्याय्यत इत्येवोक्तं प्रतीतिस्तु लक्षणयापि सम्भवतीति भावः। तादृशेति। विद्यमानप्रागभावप्रतियो-

तादृशप्रतियोगित्वं तादृशकालीनत्वं वा । नङ्क्ष्यति नश्यति नष्ट इत्यादौ तु प्रत्ययेन यथायथमनागता वर्त्तमानाऽतीता चोत्पत्तिः

---

गित्वमित्यर्थः । स्वयं प्रागभावास्वीकाराह तादृशेति । वर्तमानकालो-त्तरकालीनत्वं वेत्यर्थः । प्रत्याय्यत इत्यनुषज्यते । प्राञ्चस्तु भूसत्ता-यामिति शाब्दिकस्मृतेरिहानुशासनात् घटो भविष्यतीत्यादौ धातोः कालसम्बन्धरूपं सत्तामात्रमर्थः तदुत्तरप्रत्ययस्य तु वर्तमानप्राग-भावप्रतियोगित्वं कालादिबोधकाद्यादिपदस्थसप्तम्यास्तूत्पत्तिरर्थः शरदि पुष्पन्ति सप्तच्छदा इत्यादौ सप्तम्यास्तदर्थकत्वव्युत्पादनादेव चैतद्देशोत्पत्तिकैतत्कालोत्पत्तिका च या विद्यमानप्रागभावप्रति-योगिनी स्वरूपसत्ता तदाश्रयो घट इत्यन्वयाकार इत्याहुः। तत्पुनरि-हाद्य घटो भविष्यतीत्यादावन्वयबोधस्य सकृदुत्पत्तिविषयक-त्वानुभवात् स्वरूपसत्त्वाननुभवाच्च दीधितिकृतापेक्षितमिति स्म-र्तव्यम् । ननु वर्तमानप्रागभावप्रतियोगितामात्रस्यैव प्रत्ययार्थत्वे स्य-संहितत्वादेर्भविष्यत्तायामनुशासनविरोधः स्यादतो नशादिधातूत्त-रस्यैव स्यतिप्रभृतेर्भविष्यत्ताबोधकत्वमुपपादयति नङ्क्ष्यतीति । ननु धातूत्तरप्रत्ययस्योत्पत्त्यर्थकत्वं न कुत्रापि दृष्टचरमतो दृष्टान्तमाह न-श्यति नष्ट इत्यादौ चेति । आख्यातकृद्भेदेन दृष्टान्तद्वयोपन्यासः । यथायथं यथाक्रमम् । उत्पत्तिरिति । प्रत्याय्यत इत्यनुषज्यते । अत्र च वर्तमानत्वादौ क्लृप्तशक्तिकानां प्रत्ययानामुत्पत्तौ लक्षणा शा-क्यलक्ष्ययोस्तु परस्परमन्वयाद्विशिष्टलाभ इत्यवधातव्यम् । यद्यपि कारकविभक्त्यर्थस्य धात्वर्थान्वयित्वानुरोधेन धातुनैवोत्पत्तिर्नाशश्च प्रत्याय्यत इत्येव वक्तुमुचितम्, तथापि प्रत्ययं विना कृतात् केवल-नशधातोरुत्पत्तिविशिष्टनाशस्याप्रतीतेः प्रत्ययसत्त्वे च प्रतीतेरन्व-यव्यतिरेकाभ्यां प्रत्ययस्यैवोत्पत्तिरर्थः स्वभाववैचित्र्याच्च प्रत्ययार्थेनापि क्वचित्कारकसप्तम्यर्थस्यान्वय इत्याशयः । एवं च नङ्क्ष्य-तीत्यस्य वर्तमानप्रागभावप्रतियोग्युत्पत्तिको यो नाशस्तत्प्रतियोगि-तावानित्यर्थः, नश्यतीत्यस्य वर्तमानोत्पत्तिको यो नाशस्तत्प्रति-योगितावानित्यर्थः, नष्ट इत्यादौ च वर्तमानध्वंसप्रतियोग्युत्पत्ति-

तस्यामेव च कालविशेषादिर्विशेषणत्वेनान्वेति । एतेन श्वोभावि-नाशके परश्वो नङ्क्ष्यतीति नष्टे च नश्यतीति च व्यवहारः स्यात् न स्याच्च नाशस्य विद्यमानत्वान्नष्ट इत्यादिव्यवहारः । न च तत्रातीतकालसम्बन्धित्वं वर्त्तमानत्वं वा निष्ठादेरर्थः, चिर-विनष्टेऽपि पूर्वेद्युर्नष्टोऽधुना वेतिव्यवहारप्रसङ्गादिति परास्तम् । कर्त्तरि विहितेनाख्यातेन कृता वा यथायथमाश्रयत्वप्रतियोगित्व-

———

क्तो यो नाशस्तत्प्रतियोगितावानित्यर्थ इति ध्येयम् । तस्यामेवेति । प्रत्ययोपस्थाप्योत्पत्तावेव न तु प्रकृत्यर्थे नाश इत्यर्थः । ननु भविष्य-त्त्वादौ यत् स्यतिप्रभृतेरनुशासनं तत्र विद्यमानप्रागभावप्रतियोगि-त्वादिपरमेवास्तु भविष्यत्त्वादिपदम् आख्यातस्योत्पत्त्यर्थकत्वं व्यर्थ-मत आह एतेनेति । एतेन उत्पत्तावेव कालविशेषादेर्वर्तमानत्वादे-श्चान्वयेन । इदं च परास्तमित्यन्वयि । नङ्क्ष्यतीति व्यवहारः स्या-दिति योजना । श्वोभाविनाशस्य परश्वोऽपि सत्त्वादिति भावः । नष्टे चेति । चिरोत्पन्ननाशस्य विद्यमानत्वादिति भावः । न स्या-च्चेति । नष्टे इत्यनुषज्यते । इत्यादिरिति । व्यवहार इत्यनुषज्य-ते । आदिपदेन नष्टवानित्यादिसंग्रहः । क्तप्रत्ययार्थाती-तत्वस्य नाशेऽसम्भवादिति भावः । तत्र नष्ट इत्यादौ । अती-तेति । तथा च नाशस्य विद्यमानत्वेपि अतीतकालसम्बन्धित्वान्नष्ट इत्यादिव्यवहारो नानुपपन्न इति भावः । लाघवादाह वर्तमानत्वं वेति । प्रथमे चिरविनष्टेपि पूर्वेद्युर्नष्ट इति स्यात् चिरोत्पन्ननाशव्य-क्तेरतीतकालसम्बन्धित्वपूर्वदिनवृत्तित्वयोः सत्त्वात्, द्वितीये तु चि-रविनष्टेप्यधुना नष्ट इति स्यात्तादृशनाशस्य वर्तमानत्वादधुनातन-त्वाच्चेत्याह चिरविनष्टेपीत्यादिना । ननु घटो भविष्यति नङ्क्ष्य-तीत्यादौ धात्वर्थोत्पत्तिनाशादेः कथं घटादावन्वयः धात्वर्थनामार्थ-योर्भेदेनान्वयस्याऽव्युत्पन्नत्वादत आह कर्तरीति । भविष्यतीत्यादा-वाश्रयत्वरूपं नङ्क्ष्यतीत्यादौ च प्रतियोगित्वरूपं कर्तृत्वमाख्यातेन प्रत्याय्यते भविष्यन्नित्यत्राश्रयरूपो नष्ट इत्यत्र च प्रतियोगिरूपः क-

लक्षणं कर्तृत्वमाश्रयप्रतियोगिरूपश्च कर्त्ताभिधीयते । कार्यानुत्पाददशायाञ्चाभावधीः सामयिकात्यन्ताभावमवगाहते । न च प्रतियोगिसमवायिनि समयावच्छेदेनात्यन्ताभाववृत्तौ मानाभावः, भाविनि नष्टे वा घटे इह कपाले घटो नास्तीति प्रत्ययात् । न ह्ययं घटप्रतियोगिकमभावमात्रमवगाहते, यत्किञ्चिद्घटवत्यपि तादृशप्रत्ययप्रसङ्गात् । परन्तु घटत्वावच्छिन्नप्रतियोगिताकम् । न च ध्वंसप्रागभावौ तथा सम्भवतो वा न, तत्र कपाले ततः पूर्वं परतश्च



र्त्ता कृता कथ्यते तथा च प्रकृते धात्वर्थनामार्थयोरन्वयबोध एव नेति भावः । कृतिस्वरूपकर्तृत्वस्याख्यातकृद्भ्यामनभिधानात् घटादिपदोत्तरमनभिहिताधिकारीयतृतीया स्यादित्याशङ्काव्युदासाय कर्त्तृत्वं कर्ता चेति द्वयोरुपन्यासस्तेन मुख्यभाक्तकर्त्तृत्वमात्रानभिधानस्थल एव तृतीयेति भावः । ननु घटानुत्पाददशायामिह कपाले घटो नास्तीति प्रतियोगिविशेषितप्रागभावप्रत्यक्षानुरोधादेव सामान्यलक्षणा वाच्येत्यत आह कार्यानुत्पादेति । समयावच्छेदेनेति कालिकाव्याप्यवृत्तित्वसूचनाय । अयं घटोनास्तीत्याकारकप्रत्ययः । तादृशेति । घटो नास्तीत्याकारेत्यर्थः । घटान्तरप्रतियोगिकध्वंसप्रागभावयोस्तत्र सत्त्वादिति भावः । यद्यपि घटप्रतियोगिकाभावमात्रावगाहनेपि न सामान्यलक्षणासिद्धिः पूर्वावगतघटव्यक्तीनां ज्ञानादेव तादृशबुद्धिसम्भवात्, तथापि वस्तुगतिमनुरुध्येदम् । प्रतियोगिताकमिति । अभावमवगाहत इत्यनुषञ्जनीयम् । तथेति । घटत्वावच्छिन्नप्रतियोगिताकावित्यर्थः । ध्वंसप्रागभावयोः सामान्याभावत्वस्वीकारेपि तत्र कपाले न तत्सम्भव इत्याह सम्भवतो वेति । इदमपि वस्तुगतिमनुरुध्य । अन्यथा घटत्वावच्छिन्नध्वंसादेः सत्त्वेपि तत्प्रत्यक्षस्य घटत्वेन यत्किञ्चिद्व्यक्तिज्ञानादेव सम्भवेन तदनुरोधात् सामान्यप्रत्यासत्तेरसिद्धेरिति ध्येयम् । ततः पूर्वमिति । तादृशप्रतीतिपूर्वमित्यर्थः । तत्र कपाले । न च इत्यनुषज्यते । न च भाविनष्ट-

बहूनां घटानां नष्टत्वादुत्पत्स्यमानत्वाच्च । अथैवं कपालादौ कथं घटध्वंसादिशून्यताबुद्धिः अत्यन्ताभावस्य ध्वंसाद्यविरोधित्वादिति चेत् । तत्तदधिकरणस्वरूपादतिरिक्तादेवानुगतादभावाद्वा इहेदानीं घटप्रागभाव इति च प्रत्ययो न लोकानाम् । अथैवं



योरत्यन्ताभावध्वंसादेरपि सामान्यावच्छिन्नप्रतियोगिताकत्वे बाधकाभावः कस्य चिद्घटस्य नाशदशायामेव भाविघटो नष्टः कस्य चिद्घटस्योत्पत्तिदशायां च प्रनष्टघटो भविष्यतीति प्रत्ययापत्तेरेव बाधकत्वादिति भावः । ननु पटात्यन्ताभावस्य पटध्वंसाद्यविरोधित्वे पटध्वंसात्यन्ताभावस्वरूपस्य पटात्यन्ताभावस्य पटध्वंसदशायामपि तन्तौ सत्त्वात् तदानीमपि तन्तौ पटध्वंसो नास्तीति प्रतीतिः स्यात्, अन्यथा तदानीं तन्तौ पटो नास्तीत्यपि प्रतीतिर्न स्यादित्यकामेनापि ध्वंसात्यन्ताभावयोर्विरोधो वाच्य इत्याशयेन शङ्कते अथैवमिति । एवं पटसमवायिन्यपि तदत्यन्ताभावसत्त्वे । कपालादाविति सावधारणम् । तथा च तन्तावपि पटध्वंसदशायां तादृशबुद्धिः स्यादिति भावः । अत्रैव हेतुरत्यन्ताभावस्येत्यादि । त्वन्मते इत्यादिः । तत्तदिति । कपालाद्यात्मकेत्यर्थः । स्वरूपाणामननुगमादभावत्वप्रतीतेर्भ्रमत्वापत्तेः तन्तुस्वरूपाणामतथात्वे पटसमवायित्वदशायां तत्र पटध्वंसशून्यताप्रतीत्यपलापापत्तेश्चाह अतिरिक्तेति । स च पटसत्त्वदशायां तन्तावप्यस्तीति भावः । नन्विहेदानीं घटप्रागभाव इति प्रत्यक्षे भाविनो घटस्य भानार्थं सन्निकर्षसम्पादकतया सामान्यप्रत्यासत्तिरावश्यकीत्यत आह इहेति । न लोकानामिति । तथा च किमनुरोधात्सामान्यलक्षणा स्वीकार्येति भावः । एवमिति । भविष्यति नास्तीत्यादिप्रत्ययानामन्यविषयकत्वे प्रागभावत्वेन प्रतीतेश्चानुपगम इत्यर्थः । प्रागभावस्येव ध्वंसस्याप्यसत्त्वे तद्घटितस्य पूर्वत्वादेः पश्चान्निर्वचनमसङ्गतं स्यादतो ध्वंसे प्रमाणोपन्यासपूर्वकं प्रागभावमपाकरोति जात इत्यादिना । उत्पन्नो घटध्वंस इत्याकारबुद्धेरुत्पत्त्यंशे उपनीतभानतया न वस्तुव्यवस्थापकत्वमिति यदि ब्रू-

जातो घट इत्यादिवदुत्पन्नो घटध्वंस इत्यादिविलक्षणप्रत्ययबलेन नाशोऽतिरिच्यतां न तु प्रागभावः, पूर्वत्वतत्पूर्वत्वादिव्यवहार-श्चातीतकालवृत्तित्वतदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वादि-विषयक एवास्तु, दुःखात्यन्ताभावस्य स्वस्मिन्नुत्तरकालानुवृत्ति

———

यात्तदा घटादेरप्युत्पत्तिर्न स्यात्तत्तुल्यत्वादित्यावेदयितुं जातो घट इत्यादिवदित्युक्तम्। अतिरिच्यतामिति। अत्यन्ताभावादित्यादिः। नत्विति। प्रागभावशब्दोऽपि प्राक्कालवृत्त्यभावबोधकतया वाक्यमेव न तु पदमिति भावः। ननु प्रागभावकालावृत्तित्वरूपं सामान्यतः पूर्वत्वं तत्प्रागभावकालवृत्तित्वरूपं च तत्पूर्वत्वं विना प्रागभावं दु-र्वचमत आह पूर्वत्वेति। तत्पूर्वत्वादीत्यादिपदेन तदव्यवहितपूर्वत्व-संग्रहः। तच्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिकालवृत्तित्वम्। सामान्यतः पूर्वत्वमतीतकालवृत्तित्वम्। तच्च ध्वंसप्रतियोगिकालवृ-त्तित्वम्। महाप्रलयवारणाय प्रतियोग्यन्तस्यावश्यकत्वादिति भा-वः। तदुत्पत्तीत्यादि। स्वस्यापि स्वद्वितीयक्षणादिवृत्तिध्वंसप्रतियो-गिनि प्रथमादिक्षणे वृत्तेः सर्वस्यैव स्वपूर्वत्वापत्तिरत उक्तं तदुत्प-त्तीति। अत्र च तदुत्पत्तिस्तदधिकरणसमयध्वंसानधिकरणसमय-मात्रं न तु तत्सम्बन्धोऽपि निवेश्यो वैयर्थ्यात्। स्वोत्पत्तिकालीना-त्यन्ताभावप्रतियोगिस्वद्वितीयक्षणादिवृत्तित्वमपि सर्वस्यास्तीति पू-र्वदोषतादवस्थ्यमतो ध्वंसेत्युक्तम्। नष्टघटादिगोचरज्ञानादिव्यक्ती-नां स्वोत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिनि घटादौ विषयतया वर्तमा-नत्वेन स्वपूर्वत्वापत्तिरतः कालेति कालिकसम्बन्धेन वृत्तित्वप्रापक-म्। ननु दुःखप्रागभावस्योत्तरकालानुवृत्तिमुद्दिश्य प्रायश्चित्तादौ प्रवृत्त्यन्यथानुपपत्त्यैव प्रागभावः सेत्स्यतीत्यत आह दुःखात्यन्ताभा-वस्येति। अत्यन्ताभावस्य स्वत एवोत्तरकालानुवृत्तेः सम्भवात् प्रा-यश्चित्तमनुपयुक्तं स्यादत उक्तं स्वस्मिन्निति। ननूत्तरकालसम्बन्धा-त्मिकायां तदनुवृत्तौ प्रायश्चित्तं न हेतुस्तस्याः क्लृप्तकारणाधीन-त्वात् दुःखात्यन्ताभावस्य तु नित्यत्वान्न तत्र प्रायश्चित्तस्य हेतुत्वं

दुःखसाधनध्वंसं वा समुद्दिश्य क्रियाविशेषे प्रवृत्तिरस्तु । माना-न्तरसिद्धं हि प्रयोजनमुद्दिश्य पुमांसः प्रवर्त्तन्ते न तु प्रवृत्त्यैव त-त्सिद्धिः, उत्पन्नस्य पुनरुत्पादप्रसङ्गश्च लाघवात्कार्यादे. प्रतिब-

---

सम्भवतीत्यत आह दुःखसाधनेति । तथा च दुःखसाधनीभूतपाप-नाशं प्रति एव प्रायश्चित्तं हेतुस्तस्य च दुःखात्यन्ताभावसुखतत्सा-धनान्यत्वेपि द्विष्टाभावत्वेनैवेष्टत्वमिति स्वयमेव बौद्धाधिकारटि-प्पण्यां व्यवस्थापितमिति भावः । [ ननु यद्यपि इयं प्रवृत्तिः सफला प्रेक्षावत्प्रवृत्तित्वादित्यनुमानस्य दुःखसाधनध्वंसादिफलकतया न तथासिद्धिः, तथापि इयं प्रवृत्तिः प्रागभावभावफला प्रागभावो-द्देश्यकप्रवृत्तित्वादित्यनुमानात्फलत्वेन प्रागभावः सिद्ध्येदित्यत आह प्रमाणान्तरेति । मानान्तराभावात्साध्यसाधनयोरप्रसिद्ध्या न तादृशानुमितिरिति भावः । ] नत्विति । प्रवृत्तेः प्रयोजनज्ञानाधीनतया तदन्यथानुपपत्त्या प्रयोजनकल्पनेऽन्योन्याश्रयप्रसङ्गादिति भावः । ननु प्रागभावासत्त्वे जातस्यापि घटस्य द्वितीयादिक्षणे पुनरुत्पाद-प्रसङ्गः कपालसंयोगाद्यात्मकसामग्र्यास्तदानीमपि सत्त्वात् । न चापाद्यस्य पुनरुत्पादस्याप्रसिद्धिः । एतद्घटद्वितीयक्षणो यद्येत-द्घटसामग्रीक्षणः स्यादेतद्घटोत्पत्तिप्राक्क्षणः स्यादित्यापादनस-म्भवात् । न चात्र सामग्रीपदेन दण्डचक्रादिमात्राभिधाने सर्वैरेव घटद्वितीयक्षणस्यैव तद्वत्त्वोपगमाद्विपर्ययापर्यवसायित्वं प्रागभावा-दिघटितकारणकूटस्याभिधाने चापादकाप्रसिद्धिरिति वाच्यम् । स्वकारणीभूतदण्डचक्रादिविशिष्टोयं घटो यदि दण्डचक्राद्यतिरि-क्तकारणको न स्यात् जन्यत्वे सति तद्घटोत्पत्त्युत्तरवृत्त्यत्यन्ताभाव-वान्न स्याद्दण्डचक्रादिजन्यस्य तत्सत्त्वे जननियमादित्यस्य विव-क्षितत्वात् । वस्तुतो घटोत्पत्तिक्षणो यदि तद्घटजनकतावच्छेदक-धर्मावच्छिन्नाभाववान्न स्यात्तद्घटोत्पत्तिप्राक्क्षणः स्यादित्येवापाद-नयिमतो न कश्चिद्दोष इत्यत आह उत्पन्नेति । तथा च जन्यद्रव्य-सामान्यं प्रत्येव द्रव्यादिसामान्याभावत्वेन हेतुत्वादुत्पन्नस्य घटादे-

द्वितीयादिक्षणे पुनर्नोत्पादः । न चैवं तन्तुसंयोगनाशान्महापटनाशोत्तरमवस्थितेभ्यस्तन्तुसंयोगेभ्य एव पटान्तरोत्पाददशायां पुनर्महापटोत्पत्तिवारणार्थं प्रागभावस्य हेतुत्वमावश्यकं द्रव्यसामान्याभावस्य प्राक्सत्त्वात्कार्योत्पत्तिक्षणे कार्येण प्रतिबन्धासम्भवादिति वाच्यम् । तत्र विनष्टतन्तुसंयोगव्यक्तेर्महापटं प्रति विशिष्य हेतुत्वात् तदभावादेव तदानीं महापटोत्पत्त्यसम्भवात् अतिरिक्तस्य प्रागभावधर्मिणः कल्पनामपेक्ष्य क्लृप्तायास्तन्तुसंयोगव्यक्तेरेव विशिष्य महापटं प्रति हेतुतायाः कल्पनार्हत्वात् । न च तन्तुसंयोगव्यक्तेरिव तत्समनियतसंयोगान्तराणामपि विनिगमनाविरहाद्विशिष्य हेतुत्वापत्तिः । तेषामन्यथासिद्धत्वस्य सर्वसम्मतत्वात् । न चैवमपि महापटोत्पत्तिदशायामेवोक्तस्थले भाविखण्डपटोत्पत्तिः स्यात्कार्यस्य पूर्वमसत्त्वेन प्रतिबन्धायोगादिति वाच्यम् । महापटध्वंसस्याप्युत्तरपटं प्रति विशिष्य हेतुत्वादन्यथा प्रागभाववादिनामपि तत्र प्रतीकारानुपपत्तेरिति सङ्क्षेपः । लाघवादिति । न च प्रागभावस्वीकारेऽपि कार्यस्य प्रतिबन्धकत्वमावश्यकमन्यथा यत्र पटोपष्टब्धतन्तावेव तत्वन्तरस्यारम्भकः संयोगस्तत्र पूर्वं पटसत्त्वेऽपि तन्नाशोत्तरभाविपटस्य पटोपष्टब्धतन्तावुत्पत्तिसङ्गात्तत्प्रागभावस्य सत्त्वात् तथा च लाघवोपन्यासोऽनुचित इति वाच्यम् । तत्रैव पटानुपष्टब्धोदासीनतन्तावुत्तरपटस्य तदानीमुत्पत्तिवारणार्थं पूर्वपटध्वंसस्योत्तरपटं प्रति हेतुतावश्यकत्वे प्रागभाववादिना कार्यस्य क्वापि प्रतिबन्धकत्वाकल्पनात् । अन्यथोदासीनतन्तौ द्रव्यसामान्याभावस्य तदानीमपि सत्त्वात्तत्रोत्तरपटस्य तदानीमुत्पत्तावेकतन्तुकपटस्वीकारापत्तेरिति भावः । कार्यादेरित्यादिपदेन कार्यसमकालोत्पत्तिकध्वंसानां परिग्रहः । तेन निर्विकल्पकव्यक्तीनां तृतीयक्षणे नाशेऽपि चतुर्थक्षणे पुनर्नोत्पादः । तत्तन्निर्विकल्पकसमकालोत्पन्नध्वंसैः प्रतिबन्धात् । अन्यथा निर्विकल्पकहेतुभूतायाः सन्निकर्षादिव्यक्तेस्तृतीयक्षणेऽप्यनुवृत्तेश्च चतुर्थक्षणे पुनस्तदुत्पत्तिप्रसङ्गात् । यद्यपि निर्विकल्पकसमकालोत्पन्नानन्तध्वंसव्यक्तीनां तत्तन्निर्विकल्पकं प्रति विशिष्य प्रतिबन्धकत्वकल्पनामपेक्ष्य लाघवादेकः प्रागभाव एव हेतुः कल्पयितुमुचितस्तस्य च कारणत्वेनैव धर्मिग्राहकप्रमाणतः सिद्ध्या नेतरैर्विनिगमनाविरहः । न च तत्तन्निर्विकल्पकसमकालोत्पन्नवस्त्वन्तरप्रागभावव्यक्तीनां । तत्तन्नि-

न्धकत्वेनापि निरसनीयः। तदुत्पत्तिश्च महाप्रलयमनङ्गीकुर्वतां मते स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धः। तदुक्तम् अव्व-

---

र्विकल्पकप्रागभावस्य वा तत्तन्निर्विकल्पकं प्रति हेतुत्वमित्यत्र विनिगमनाविरहस्तदवस्थ एवेति वाच्यम्। जन्यभावत्वावच्छिन्नं प्रत्येव प्रागभावत्वेन हेतुत्वं तत्र कार्यस्य तादात्म्यं कारणस्य प्रतियोगित्वं सम्बन्ध इत्यनुगतरूपेण हेतुतायामेकवस्तुप्रागभावस्य वस्त्वन्तरहेतुत्वासम्भवात्। तथापि यद्यन्वयव्यतिरेकसिद्धविरोधिनामपि निर्विकल्पकसमकालोत्पन्नध्वंसानां प्रतिबन्धकत्वं परित्यज्य निर्विकल्पकहेतुत्वेन पदार्थान्तरं कल्प्यं तर्हि दाहादावपि मणिमन्त्रादीनां बहूनां प्रतिबन्धकत्वमपेक्ष्य लाघवाद्दाहोपधायकत्वेन वस्त्वन्तरकल्पनाप्रसङ्गस्तस्मात् क्लृप्तवस्तूनां नियामकत्वासम्भवस्थल एव कारणत्वेन वस्तुसिद्धिरित्याशयः। शेषमशेषमग्रे वक्ष्यामः। सामग्रीक्षणत्वं न कार्योत्पत्तिप्राक्क्षणत्वव्याप्यमप्रयोजकत्वात्, अतिरिक्तप्रागभावकल्पनापत्तिरूपप्रतिकूलतर्कपराहतत्वाच्च। किं तु कार्योत्पत्तिद्वितीयक्षणो यदि सामग्र्यव्यवहितोत्तरक्षणः स्यात् कार्योत्पत्तिमान् स्यादित्येव व्याप्तिस्तत्र च सामग्र्यव्यवहितोत्तरत्वं सामग्रीसमयध्वंसाधिकरणकालध्वंसानधिकरणत्वं सति सामग्रीकालध्वंसाधिकरणत्वरूपं कार्यद्वितीयक्षणादावसिद्धं कार्योत्पादक्षणेनैव व्यवधानादिति कुतस्तेन पुनरुत्पादः प्रसञ्जनीय इत्यादिकं प्रतिबन्धकत्वेनापीत्यपिकारेण ध्वनितम्। ननु तत्पूर्वत्वं तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वरूपं प्रागुक्तं तत्र चोत्पत्तिस्तदधिकरणावृत्तिप्रागभावप्रतियोगिसमयसम्बन्धरूपैव निविष्टा सा च विना प्रागभावं दुर्वचेत्यत आह तदुत्पत्तिश्चेति। स्वाधिकरणेति। यस्योत्पत्तिर्लक्ष्या तदेव घटादिकं स्वपदेन ग्राह्यम्। तथा च तदधिकरणसमयध्वंसानधिकरणेन सार्द्धं तस्य समयसम्बन्धः कालिकसम्बन्धस्तदुत्पत्तिरित्यर्थः। घटाद्युत्पत्तिक्षणस्यापि विषयित्वव्यभिचारादिसम्बन्धेन घटाद्यधिकरणीभूतं यत्पूर्वोत्पन्नज्ञानादिकं तद्ध्वंसाधिकरणत्वादुत्पत्तिमात्रेऽसम्भवः स्यादतः कालिकसम्बन्धेन स्वाधिकरणत्वलाभार्थमाद्यं समयपदम्। इह हेतावुपाधिर्नेहोपाधिरित्यादिप्रतीत्या व्यभिचारादिस-

स्तक्षणयोगस्य क्षणयोगो जनिर्मतेति । क्षणः समयः । तदङ्गीकारे तु क्व चिदपि यदीयसमयसम्बन्धे यत्समयवृत्तिध्वंसप्रतियो-



म्बन्धस्याप्यधिकरणत्वनियामकतायाः स्वयमेवाग्रे वक्ष्यमाणत्वात् । अस्तु वा नष्टघटादिगोचरस्य ज्ञानादेरुत्पत्तावव्याप्तिवारकं तत् । अन्यथा तादृशज्ञानोत्पत्तिक्षणस्यापि विषयतया तज्ज्ञानाधिकरणीभूतं यन्नष्टघटादि तद्ध्वंसाधिकरणत्वेनाव्याप्तिप्रसङ्गात् । घटे ज्ञानमित्यादिव्यवहारबलेन विषयताया वृत्तिनियामकत्वादिति ध्येयम् । तत्तद्घटादिसमयध्वंसानधिकरणीभूतेन तत्तद्घटादिपूर्वोत्पन्नज्ञानादिना विषयत्वादिसम्बन्धस्य पूर्वमपि तत्तद्घटादौ सत्त्वात्तत्रातिव्याप्तिवारणाय द्वितीयसमयपदम् । ननु ध्वंसघटितोत्पत्तिलक्षणे किं मानमित्याशङ्कायामाचार्यस्य संवादमाह अध्वस्तेति । न ध्वस्तः क्षणयोगस्तदीयक्षणसम्बन्धो यत्र काले तादृशस्य क्षणयोगः कालिकसम्बन्धस्तस्य जनिरुत्पत्तिरित्यर्थः । तदीयक्षणयोगध्वंसाभावावच्छिन्नस्य वस्तुनः क्षणयोगो जनिरिति वार्थः । क्षणद्वयप्रवेशे वैयर्थ्याद्व्याचष्टे क्षणः समय इति । प्रलयसत्त्वे तदुत्पत्तावव्याप्तिस्तदधिकरणसमयस्य महाकालादेर्ध्वंसाप्रसिद्धेरत उक्तं महाप्रलयानङ्गीकार इति । [ अत्र नीलादिविशिष्टघटादेरुत्पत्तिस्तन्नीलादिविशिष्टघटाद्यधिकरणसमयमन्तर्भाव्य निर्वाच्या, तेन पूर्वोत्पन्नघटं पाकान्नीलघटो जातः कर्मणा भूतसंयुक्तो जात इत्यादयो व्यवहारा इति ध्येयम् ।] तदङ्गीकारे महाप्रलयाङ्गीकारे । क्व चिदित्यादि । अत्र यत्पदं यस्य घटादेरुत्पत्तिर्लक्ष्या तत्परम् । तद्घटीयतृतीयादिक्षणसम्बन्ध एव द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाभावात्तद्घटीयद्वितीयादिक्षणसम्बन्धेऽतिव्याप्तिरतः क चिदपीत्युक्तम् । तथा च यदीयसमयसम्बन्धसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्तीत्यर्थलाभात् सामान्यान्तर्गतप्रथमक्षणसम्बन्ध एव द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाभावविरहान्न तत्रातिव्याप्तिः । चरमध्वंसीयसमयसम्बन्धसामान्य एव तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वाभावाच्च न महाप्रलयोत्पत्तावव्याप्तिः । तत्तद्घटादेः स्वपूर्वोत्पन्नज्ञानादी-

गित्वं नास्ति तस्य तत्समयसम्बन्धः, तदधिकरणक्षणावृत्तित्व-
व्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वं वा । क्षणत्वश्च

---

नां विषयत्वादिसम्बन्धस्यापि सामान्यान्तर्गतत्वात् तत्र च तत्त-
द्घटाद्युत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वस्यैव सत्त्वादुत्पत्तिमात्रेऽस-
म्भवः स्यादतः प्रथमं समयपदम्।तथा च तदीयकालिकविशेषणता-
रूपसमयसम्बन्धसामान्य इत्यर्थः । तेन जन्यमात्रस्यैव समयतया
ज्ञानस्यापि तथात्वात् समयपदोक्तावपि ज्ञानविषयत्वादावतिव्याप्ति-
रिति प्रत्युक्तम् । प्रत्युक्तं च यदीयसमयसामान्य इत्यस्यैव सम्यक्त्वे
सम्बन्धपदं व्यर्थमित्यादि दूषणम्।यत्पदार्थेन समयस्यानन्वयेन वैयर्थ्य-
र्थ्यानवकाशादिति ध्येयम् । यत्र घटोत्पत्तिप्राक्क्षणे सर्वे ध्वंसा
इत्याकारकं ज्ञानमुत्पन्नं तत्र तज्ज्ञानव्यक्त्या समं घटीयकालिकस-
म्बन्धस्यापि लक्ष्यत्वात्तत्राव्याप्तिर्घटीयकालिकसम्बन्धसामान्य एव
विषयितया तज्ज्ञाने वर्तमानस्य ध्वंसस्य प्रतियोगित्वादतः कालिक-
सम्बन्धेन वृत्तेर्लाभाय द्वितीयं समयपदम् । यदि च विषयिताया
वृत्त्यनियामकत्वात्स्ववृत्तिध्वंसप्रतियोगित्वं नास्तीत्युक्तावपि नोक्त-
दोष इति विभाव्यते, तदायं कालो घटद्वितीयक्षणवान् घटोत्पत्ति-
क्षणवत्त्वादित्यत्र हेतौ घटाद्यक्षणसम्बन्धध्वंस उपाधिरिति प्रतीत्या
व्यभिचारादिसम्बन्धेन घटोत्पत्तिक्षणेऽपि घटोत्पत्तिध्वंसस्य सत्त्वा-
दुत्पत्तिमात्रेऽसम्भव एव स्यादतो द्वितीयं समयपदम् । घटादेः
स्वपूर्वोत्पन्नज्ञानादिविषयतायामतिव्याप्तेस्तृतीयं समयपदम् । ननु
समयसम्बन्धः कालिकविशेषणता सा च यदि समवायादिसम्ब-
न्धवदेकैव नित्या न तु स्वरूपसम्बन्धस्तदा तदीयसम्बन्धसामान्य
एव तदीयद्वितीयक्षणवृत्तिध्वंसाप्रतियोगित्वात्तत्रातिव्याप्तिरत आह
तदधिकरण इत्यादि । यत्तु महाप्रलयवृत्तिध्वंसप्रतियोगितात्वाव-
च्छिन्नाभावाप्रसिद्ध्या तदुत्पत्तावव्याप्तिर्ध्वंसप्रतियोगितात्वेन लघुध-
र्मेणैव तादृशप्रतियोगित्वावच्छेदादतस्तदधिकरणेत्यादीति । तत्तुच्छ-
म् । गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेऽग्रिमलक्षणेऽपि तदधिकरण-
क्षणावृत्तित्वस्याप्रसिद्धिप्रसङ्गात् । तदधिकरणक्षणवृत्तित्वानिष्ठप्रति-

स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वम्, स्ववृत्तिध्वंसप्रतियोगिप्रतियोगि-

———

योगितायाः कालिकसम्बन्धावच्छिन्नतद्वृत्तित्वत्वेनैव लघुधर्मेणा-वच्छेदात् । जन्यमात्रस्यैव कालोपाधित्वात् । समयवृत्तिध्वंसप्रतियोगित्वं नास्तीत्यत्र तादृशप्रतियोगित्वाभावकूटस्यैव विवक्षणे गुरुधर्मस्यानवच्छेदकत्वेऽप्युक्ताव्याप्तेरभावाच्चेति दिक् । स्ववृत्तीति । तथा च यत्समयवृत्तिध्वंसप्रतियोगित्वं यद्व्यक्त्यधिकरणक्षणावृत्तित्वव्याप्यं तेन सार्द्धं तद्व्यक्तेः समयसम्बन्धस्तद्व्यक्तेरुत्पत्तिरित्यर्थः । घटाद्युत्पत्तिकालीनध्वंसप्रतियोगित्वं न घटाद्यधिकरणकालावृत्तित्वव्याप्यं नष्टमात्रस्यैव घटाद्यधिकरणस्थूलकालवृत्तित्वादित्यसम्भववारणाय क्षणपदम् । घटादिद्वितीयादिक्षणवृत्तिध्वंसप्रतियोगित्वस्य चिरातीते घटाद्यधिकरणक्षणावृत्तित्वसामानाधिकरण्याद्द्वितीयादिक्षणसम्बन्धेतिव्याप्तिरतो व्याप्यपदम्।यद्यपि चिरविनष्टनिष्ठं द्वितीयादिक्षणवृत्तिध्वंसस्य यत्किञ्चित्प्रतियोगित्वं घटाद्यधिकरणक्षणावृत्तित्वव्याप्यमेव, तथापि तदधिकरणक्षणावृत्तित्वं यत्समयवृत्तिध्वंसप्रतियोगित्वव्यापकं तत्समयसम्बन्धवत्त्वं विवक्षितम । न च जन्यमात्रस्य कालोपाधित्वात्तद्वृत्तित्वं यत्समयवृत्तिध्वंसप्रतियोगित्वव्यापकं तत्समयसम्बन्ध एवोत्पत्तिरस्तु । यथासन्निवेशे वैयर्थ्यविरहादिति भावः । चिरातीतज्ञानवृत्तिध्वंसप्रतियोगिनः सर्वस्यैव घटाद्यधिकरणक्षणावृत्तित्वाद्घटादिनिष्ठे तदीयविषयत्वादिसम्बन्धेऽतिव्याप्तिरतः समयसम्बन्धेति । ननु तदधिकरणक्षणावृत्तित्वेत्यत्र क्षणत्वं स्ववृत्तिप्रतियोगिकप्रागभावानधिकरणसमयत्वं तच्च प्रागभावं विना दुर्वचमत आह क्षणत्वं चेति। यत्तु स्वजन्यविभागप्रागभावावच्छिन्नकर्मत्वरूपं क्षणत्वं प्रागभावासत्त्वे दुर्वचमतोऽन्यथा निर्वक्ति क्षणत्वं चेतीति तन्न। प्रलयोत्पत्त्यावव्याप्तिभिया विभागप्रागभावावच्छिन्नकर्मणः क्षणत्वशङ्काया एवानुत्थानात् । स्ववृत्तीति । स्ववृत्तिर्यो ध्वंसस्तत्प्रतियोग्यधिकरणं यद्यत्तदन्यसमयत्वमर्थः । स्ववृत्तित्वं प्रतियोग्यधिकरणत्वं च कालिकसम्बन्धेन बोध्यम् । तेन क्षणानां यथाकथंचित् सम्बन्धेन स्वस्मिन् वर्तमानस्य स्वोत्तरोत्पन्नध्वंसस्य प्रतियोगिमत्त्वेऽपि नाव्याप्तिर्न वा स्व-

कयावद्ध्वंसविशिष्टसमयत्वम्, स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वम्,

---

स्मिन् कालिकतया वर्तमानस्यैव ध्वंसस्य प्रतियोगिनः पूर्वोत्पन्नज्ञानादेर्विषयतयाधिकरणत्वेप्यसम्भवः। नित्यवस्तुव्युदासाय समयपदम्। लक्षणमिदं क्षणिकस्यान्त्यशब्दादेरङ्गीकार एव, अन्यथा क्रियादेः स्ववृत्तिध्वंसप्रतियोग्यधिकरणत्वात् प्रलयान्यक्षणमात्र एवाव्याप्तिप्रसङ्गात् अतस्तदनङ्गीकारेप्याह स्ववृत्तीति। स्ववृत्तिर्यो ध्वंसस्तत्प्रतियोगिप्रतियोगिको यावान्ध्वंसस्तद्विशिष्टसमयत्वमित्यर्थः। तथा च क्षणिकपदार्थासत्त्वेपि स्थिराणामेवान्त्यक्षणावच्छेदेन तादृशयावद्ध्वंसविशिष्टतया क्षणत्वमिति भावः।यावद्ध्वंसविशिष्टसमयत्वं महाप्रलयान्यक्षणमात्रेऽव्याप्तमतः प्रतियोगिकान्तं तदपि ध्वंसविशेषणम्।सृष्टिकालीनक्षणमात्रस्यैव स्वोत्तरोत्पन्नपदार्थात्यन्ताभाववत्त्वात्तत्प्रतियोगिकध्वंसवैशिष्ट्याभावाच्चाव्याप्तितादवस्थ्यमतो ध्वंसपर्यन्तम्। अत्र ध्वंसस्य स्ववृत्तित्वं कालिकसम्बन्धेन बोध्यम्। तेन यथाकथञ्चिद्व्यभिचारादिसम्बन्धेन तत्तत्क्षणवृत्तीनां तत्तत्क्षणोत्तरोत्पन्नध्वंसानां कालिकसम्बन्धेन वैशिष्ट्यस्य तत्तत्क्षणेषु विरहेपि नाव्याप्तिः। प्रहरादीनामपि स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयत्किञ्चिद्ध्वंसविशिष्टत्वादतिव्याप्तिरतो यावत्पदम्। नष्टघटप्रतियोगिकसंयोगादेरपि स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकत्वाद्यावत्तद्वैशिष्ट्यस्य च क चिदपि क्षणे विरहादसम्भवः स्यादतोऽभावनिरूपितस्य प्रतियोगिताविशेषस्य लाभाय चरमध्वंसपदम्। तेनाभावत्वमपेक्ष्य जन्याभावत्वरूपस्य ध्वंसत्वस्य गुरुत्वेपि न क्षतिस्तस्याऽप्रविष्टत्वात् अभावत्वस्येव ध्वंसत्वस्यापि अखण्डत्वमते वैयर्थ्यानवकाशाच्च। सर्वे ध्वंसा इति ज्ञानेपि निरुक्तयावद्ध्वंसानां विषयितया वैशिष्ट्यस्य क्षणद्वयावच्छेदेन सत्त्वात्तत्रातिव्याप्तिरतः समयपदं कालिकसम्बन्धेन वैशिष्ट्यलाभाय। यत्तु महाप्रलयावच्छेदेन गगनादेरपि निरुक्तयावद्ध्वंसविशिष्टत्वादतिव्याप्तिरतः समयपदं अन्यार्थकमिति। तन्न। यथाकथञ्चित्सम्बन्धेन स्ववृत्तित्वमादायाव्याप्तिभिया कालिकसम्बन्धेन स्ववृत्तित्वस्य वाच्यतया तत्सम्बन्धेन

स्ववृत्तियावदभावविशिष्टसमयत्वम्, स्वस्वपूर्ववर्त्तियावत्पदार्थवि-
शिष्टसमयत्वं वा। स्वपूर्वत्वश्च स्वाधिकरणयावत्कालवृत्तिध्वंसप्रति-

---

गगनवृत्तित्वाप्रसिद्ध्यैव तत्रातिव्याप्त्यसम्भवात्। महाप्रलयावच्छेदेन
महाकालस्य तु तादृशयावद्ध्वंसाविशिष्टतया क्षणत्वं न क्षतिकरमि-
ति ध्येयम्। लाघवादाह स्ववृत्तियावदिति। ध्वंसत्वं यदि जन्या-
भावत्वं नाखण्डोपाधिस्तदा जन्यत्वप्रवेशे वैयर्थ्यं प्रागभावानङ्गी-
कारेणाभावत्वघटितस्यैव सम्यक्त्वादित्याशयेन लक्षणान्तरमाह
स्ववृत्तीति। यावदभाववैशिष्ट्यं न कस्यापि क्रियादेरतः स्ववृत्तीति।
स्ववृत्तियावत्पदार्थवैशिष्ट्यमपि न कस्य चित्स्थिरस्येत्यव्याप्तिरत
उक्तमभावेति। कार्योत्पत्तिक्षणे सामग्रीक्षणो नष्ट इत्यादिव्यवहारौ-
पयिकं विनश्यदवस्थक्रियायाः क्षणत्वमुक्त्वा घटपूर्वं तत्सामग्रीक्षणो
जायत इत्यादिव्यवहारोपयुक्तमुत्पत्त्यवच्छिन्नक्रियादीनां क्षणत्वमाह
स्वस्वेति। स्ववृत्तिः सन् स्वपूर्ववृत्तिर्यावान् पदार्थस्तद्विशिष्टसमय-
त्वमित्यर्थः। स्ववृत्तियावत्पदार्थवैशिष्ट्यं स्वपूर्ववृत्तियावत्पदार्थवै-
शिष्ट्यं वा न कस्यापि स्थिरस्य क्रियादेः सम्भवति स्वोत्तरोत्पन्नस्वपू-
र्वनष्टयोः स्वस्मिन्नसत्त्वादित्युभयमुपात्तम्। पदार्थेति तु स्वरूपक-
थनं न तु प्रविष्टं वैयर्थ्यात्। न च स्वस्वोत्तरवृत्तियावत्पदार्थवि-
शिष्टत्वमित्येव सम्यक् वक्ष्यमाणस्वपूर्वत्वापेक्षया स्वध्वंसकालीन-
त्वरूपस्वोत्तरत्वप्रवेशे लाघवादन्त्यक्षणावच्छिन्नस्वक्रियादेरेव तथा-
त्वादिति वाच्यम्। स्वोत्तरवर्तित्वस्याप्रसिद्ध्या प्रलयक्षणाव्याप्तिप्र-
सङ्गादिति भावः। प्रहरादेरपि स्वस्वपूर्ववर्तिर्यत्किञ्चित्पदार्थविशि-
ष्टत्वात्तद्वारणाय यावदिति। न च यावत्त्वस्यैकस्याभावात्प्रातिस्वि-
करूपेणोपादाने अनतिप्रसक्तयत्किञ्चित्पदार्थप्रवेशावश्यकत्वे शेषवै-
यर्थ्यमिति वाच्यम्। स्वस्वपूर्ववृत्तिपदार्थत्वव्यापकतावच्छेदका-
धिकरणतावत्त्वस्यैव लक्षणत्वाद्यावत्पदेन तादृशव्यापकत्वलाभात्।
समयपदं तु स्ववृत्तित्वस्य स्वपूर्ववृत्तित्वस्य तादृशयावत्पदार्थवै-
शिष्ट्यस्य च कालिकसम्बन्धावच्छिन्नत्वलाभाय। तेन विषयत्वा-
दिसम्बन्धेन स्वनिष्ठस्य चिरातीतज्ञानादेरुत्पत्त्यवच्छिन्नक्रियादौ का-

योगित्वम्, जन्यमात्रस्यैव कालोपाधित्वाददोषः । यो यत्काल-वृत्तिध्वंसप्रतियोगिवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचिदिति चेत् । नैवमपचीयते किञ्चिदस्माकमित्येकदेशिनो वर्णयन्ति । अथ

---

लिकसम्बन्धेन वैशिष्ट्यविरहेऽपि नासम्भवः । न वा क्षणमात्रस्यैव विषयतया स्वपूर्ववर्तिनः कालिकसम्बन्धेन च स्थितिक्षणावच्छेदेन स्ववृत्तेर्ज्ञानस्याद्यक्षणावच्छेदेन कालिकतया वैशिष्ट्यविरहेऽप्यव्याप्तिः । नापि सर्वे पदार्था इति ज्ञानस्याप्युत्पत्त्यवच्छिन्नस्य क्षणत्वाद्विषयितया तदीयवैशिष्ट्यस्य क्षणद्वयावच्छेदेन सत्त्वात्तत्रातिव्याप्तिरिति । ननु क्षणलक्षणान्तर्गतं स्वपूर्वत्वं स्वोत्पत्तिकालीनध्वंसप्रतियोगित्वं तदन्तर्गता चोत्पत्तिः क्षणघटितेत्यन्योन्याश्रय इत्यत आह स्वपूर्वत्वं चेति । स्वाधिकरणीभूततृतीयादिक्षणवृत्तिध्वंसप्रतियोगि-कालवृत्तेः स्ववृत्तिपदार्थस्याद्यक्षणावच्छेदेन स्वस्मिन् वैशिष्ट्याभावात्प्रलयान्यक्षणमात्राव्याप्तिरतः स्वपूर्वत्वनिरुक्तौ यावदिति कालविशेषणं दत्तम् । ननु क्रियामात्रस्यैव कालोपाधित्वाल्लक्षणमिदं प्रलयक्षणाव्याप्तम् एवं तदुत्पत्तावुत्पत्तिलक्षणेऽपीत्यत आह जन्येति । मात्रपदं कृत्स्नार्थकम् । तथा च तदानीं क्रियाया अभावेऽपि चरमध्वंसरूपकालोपाधिमादायैव लक्षणसमर्थनमिति । नित्यस्य कालिकसम्बन्धेनाव्यावर्तकतया जन्यावच्छिन्नस्यैव कालोपाधित्वं वाच्यमतो जन्यस्यैव तथात्वमुचितमित्याशयेन पदार्थमात्रं परित्यज्य जन्यमात्रस्येत्युक्तम् । केचित्तु ननु महाप्रलयावच्छेदेन स्ववृत्तियावद्ध्वंसविशिष्टेत्यादिलक्षणाक्रान्तस्य महाकालस्यापि लक्ष्यत्वात्तत्रेदं लक्षणमव्याप्तं निरुक्ततत्पूर्वत्वाप्रसिद्धेरत आह जन्यमात्रस्येति । तथा चोत्पत्तिघटकक्षणत्वस्य महाकालेऽसत्त्वेऽपि न क्षतिर्जन्यं कालोपाधिरूपं क्षणमादायैव सर्वत्रोत्पत्तिलक्षणसम्भवादिति भावः इत्याहुः । केषांचिदुत्पत्तिलक्षणमाह यो यदित्यादि । सर्वे ध्वंसा इत्याकारविनश्यदवस्थबुद्ध्या सार्द्धं घटीयकालिकसम्बन्धस्यापि लक्ष्यतया तत्राव्याप्तिस्तादृशबुद्धौ विषयितया वर्तमानस्य ध्वंसस्य प्रतियोगिनि भाविकाले घटस्य वृत्तेरतो ध्वंसस्य कालिकसम्बन्धेन वृत्तिमत्त्वलाभाय कालपदम् । एवं तादृशध्वंसप्र-

पटस्य स्वानधिकरणेषु तन्तुषूत्पत्तिवारणाय सहस्रादीनां तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यं तथा च लाघवादेक एव प्रागभावः कल्प्यते स च स्वाश्रय एव प्रतियोगिजनक इति नातिप्रस-

———

तियोगिवृत्तित्वं तस्य तद्वृत्तित्वमित्यत्र च वृत्तिमत्त्वं कालिकसम्बन्धेन बोध्यम् । तेनातीतविषयकज्ञानस्योत्पत्तौ नाव्याप्तिर्विषयतासम्बन्धेऽतिव्याप्तिर्वा। अत्र तत्तत्समयवृत्तिध्वंसप्रतियोग्यवृत्तित्वे सति तत्तत्समयवृत्तित्वरूपा तत्तत्क्षणोत्पन्नयावद्वस्तूनामेकैवोत्पत्तिर्न त्वाश्रयभेदेन विभिन्ना, यो यदित्यनयोर्लक्ष्यप्रदर्शनमात्रपरत्वात् । न च ध्वंसप्रतियोगिवृत्तित्वमपेक्ष्य महाप्रलयवृत्तिध्वंसप्रतियोगिवृत्तित्वस्य गुरुत्वात्तदवच्छिन्नाभावाप्रसिद्ध्या महाप्रलयोत्पत्तावव्याप्तिरिति वाच्यम् । प्रागेव दत्तोत्तरत्वादिति ध्येयम् । स्वानधिकरणेष्विति । तन्तुमात्रस्यैव तन्तुत्वेन तत्पटस्वरूपयोग्यत्वात्तदनधिकरणतन्तुष्वपि तत्सामग्रीसत्त्वादिति भावः । न च तत्पटत्वस्य कार्यतानवच्छेदकत्वात्तदवच्छिन्नस्यान्यत्रापत्त्यसम्भवः, पटत्वावच्छिन्नसामग्रीसत्त्वे च पटत्वावच्छिन्नमन्यत्रोत्पद्यत एवेति वाच्यम् । पटमात्रस्यैव तत्तत्पटत्वेन कार्यत्वस्यावश्यकत्वात् । अन्यथा यत्र तन्तुत्रयारब्धपटस्यैकतन्तुनाशाद्विनाशे सत्युत्तरक्षण एव तदारम्भकतन्त्वन्तरस्य नाशस्तत्र तदानीमेवावस्थिततन्तौ पटान्तरोत्पादप्रसङ्गात् । पटत्वावच्छिन्नस्य सामग्रीसत्त्वात् । न चेष्टापत्तिः । एकतन्तुकपटस्यानङ्गीकारात् । न च विनश्यत्तन्तुमादाय पटोत्पादः, कार्यकालावृत्तेः समवायित्वायोगात् । तस्मात्प्रसिद्धतत्तत्पटव्यक्तिं प्रति विशिष्य क्लृप्तकारणस्य विरहादेव तत्तत्पटसामान्यस्यानुत्पत्तिरतस्तत्तत्पटत्वावच्छिन्नस्यापि स्वानधिकरणेष्वापत्तिसम्भव इति भावः । सहस्रादीनामिति । तदारम्भकेत्यादिः तत्तत्तन्तुत्वेनेत्यादि । न च समवायेन तत्पटं प्रति तादात्म्येन तत्तत्तन्तुत्वेन हेतुत्वे मिथो व्यभिचारः, कालिकसम्बन्धेनैव विशेषतः कार्यकारणभावस्तु न तत्पटानधिकरणतन्तुषु उत्पत्तिवारकः सम्भवतीति वाच्यम् । तत्ततन्तुनिरूपितसमवायेन तत्पटं प्रत्येव तादात्म्येन तत्तत्तन्तोर्हेतुत्वात् तादृशसमवायेन

क्तः । इत्थञ्चानेकत्र प्रागभावसिद्धौ प्रागभावत्वेन प्रतियोगिजनकत्वाद्द्वितन्तुकेऽपि तत्सिद्धिरिति चेत् । त्रिचतुरेष्वेव तन्तुषु उत्प-

---

तत्पटस्यात्र तन्तावसत्त्वेन व्यभिचारासम्भवात् । न चैवं तादृशसमवायेन स्वानाधिकरणतन्तुषु तत्पटस्यानुत्पादेऽपि समवायमात्रेण तत्पटोत्पादो दुर्वार इति वाच्यम् । समवायमात्रस्य तादृशकार्यतानवच्छेदकतया तत्सम्बन्धेनान्यत्र तत्पटोत्पत्त्यसम्भवादिति भावः । यत्तु समवायेन तत्पटत्वावच्छिन्नं प्रत्येव तत्तत्तन्तुत्वेन हेतुत्वं तावत्तन्तुनिष्ठसहस्रत्वादिसंख्याया एव कारणताघटकसम्बन्धत्वेन व्यभिचारासम्भवादिति । तत्तुच्छम् । यस्य तन्तोर्द्वितीयक्षण एव तन्त्वन्तरसंयोगोत्पत्त्या तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिस्तत्रैव तन्तौ व्यभिचारतादवस्थ्यात्।सहस्रत्वादिसंख्यायाः समानाधिकरणयावदेकत्वसापेक्षतया द्रव्यस्योत्पत्तिद्वितीयक्षणे तदसम्भवात्। केचित्तु यावन्तः कार्यतावच्छेदकधर्मावच्छिन्नास्तत्प्रत्येकस्य यत्किञ्चिदाश्रयनिष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव कारणताघटकं तथा च समवायेन तत्पटत्वावच्छिन्नं प्रत्येव तादात्म्येन तत्तत्तन्तुत्वेन हेतुत्वं सुघटं तत्पटाश्रयीभूततत्तत्तन्तौ तत्तत्तन्तुभेदस्यासत्वात्।एतेन संयोगादिकं प्रत्यपि कर्मादेः कारणत्वं व्याख्यातम् । न चैवं द्विक्षणस्थायिद्रव्येऽपि द्वित्वाद्युत्पत्तिः स्यात् द्रव्यान्तरैकत्वमादायोक्तक्रमेण सामग्रीसत्त्वादिति वाच्यम्। इष्टत्वात् । यावत्त्वप्रवेशस्तु वह्नित्वावच्छिन्नं प्रत्येव तृणत्वादिना हेतुत्ववारणार्थम्।न चैवं कार्यसमानाधिकरणवृत्तिधर्मवत्त्वमेव कारणत्वे निवेश्यतामन्यथासिद्ध्यनिरूपकत्वदलेनैव व्यापकतानवच्छेदकान्तरव्युदाससम्भवादिति वाच्यम् । व्यभिचारग्रहाप्रतिबध्यतया तस्य कारणतास्वरूपत्वायोगादित्याहुः । ननु क्लृप्तापि प्रागभावव्यक्तिः कथं नाऽन्यत्र कार्यमर्जयति इत्यत आह स चेति । सामानाधिकरण्यप्रत्यासत्त्यैव तस्य हेतुत्वादिति भावः । नन्वेवमपि द्वितन्तुकपटादौ न तत्सिद्धिः तत्राऽतिरिक्तस्य प्रागभावधर्मिणः कल्पनामपेक्ष्य क्लृप्ततन्तुसंयोगव्यक्तेरेव लाघवेन हेतुत्वौचित्यादत आह इत्थं चेति । कार्योत्पादनियामकतया चेत्यर्थः । प्रागभावत्वेनेति । तत्तत्प्रागभावव्यक्तिष्वभावत्वासिद्धौ ताद्रू-

न्त्रेषु संयुक्तेषु च तत्पटोत्पत्तिप्रसङ्गः। तावत्तन्तुवृत्तेः पटस्य कतिपयविरहे कथमुत्पत्तिरिति चेन्न। कार्यानुत्पादस्य विना कारणविरहमनभ्युपगमात् सामग्रीसत्त्वेऽग्रिमक्षणे कार्यसत्त्वस्यावश्यकत्वाच्च। तत्पटप्रागभावाश्रययावत्तन्तुत्वेन तत्पटजनकत्वमिति

---

न्येण हेतुत्वाभिधानमनुचितमिति तु विभावनीयम्। प्रागभावस्वीकारेऽपि तत्तत्तन्तुव्यक्तीनां तत्तच्चरमतन्तुसंयोगव्यक्तीनां वा तत्पटं प्रति विशिष्य हेतुत्वस्यावश्यकत्वे कृतं प्रागभावकल्पनया इत्याशयेन समाधत्ते त्रिचतुरेष्वेवेति। असमवायिकारणसम्पत्त्यर्थमाह संयुक्तेषु चेति। त्रितन्तुकस्य चतुस्तन्तुकस्य वा पटस्यावश्यमुत्पत्तेः पटसामान्यस्यापत्त्यसम्भवादाह तत्पटेति। सहस्रादितन्तुकपटोत्पत्तिप्रसङ्ग इत्यर्थः। प्रागभावादिघटितायास्तत्पटसामग्र्यास्तदानीमपि सत्त्वादिति भावः। यद्यपि सर्वत्रैव खण्डपटध्वंसस्य महापटहेतुतया त्रिचतुरादितन्तुकपटस्य ध्वंसविरहादेव त्रिचतुस्तन्तुसंयोगदशायां न सहस्रादितन्तुकपटोत्पाद इति चरमतन्तुसंयोगादेस्तत्र विशिष्य हेतुत्वे मानाभावः। न च खण्डपटध्वंसस्येव चरमसंयोगव्यक्तीनामपि विनिगमनाविरहेण तत्र हेतुत्वमिति वाच्यम्। चरमसंयोगोत्पत्त्यनन्तरमेव खण्डपटध्वंसदशायामेव महापटोत्पत्तिप्रसङ्गेन खण्डपटध्वंसस्यावश्यं महापटहेतुत्वात्। तथापि त्रिचतुरादितन्तुकखण्डपटध्वंसस्यैव स्वसमानाधिकरणसहस्रत्वादिसंख्यासम्बन्धेन सहस्रादितन्तुकमहापटं प्रति हेतुत्वादेव स्वानधिकरणतन्तुषु तत्पटानुत्पत्तिसम्भवे प्रागभावकल्पने मानाभाव इत्यत्र तात्पर्यम्। शङ्कते तावदिति। विनेति। तन्तुसंयोगयोस्तन्तुत्वविलक्षणतत्संयोगत्वाभ्यां पटं प्रति हेतुत्वेन तदवच्छिन्नविरहस्यासम्भवादिति भावः। कार्यानुत्पादप्रयोजकस्याभावमुक्त्वा कार्योत्पादप्रयोजकस्य सत्त्वमाह सामग्रीति। पुनः शङ्कते तत्पटेति। यावत्तन्तुत्वेन हेतुत्वासम्भवादाश्रयान्तम्। तत्पटप्रागभावाश्रयस्य कस्य चित्तन्तोः सत्त्वादतिप्रसङ्गतादवस्थ्यमतो यावदिति। प्रवे-

चेत्। अवच्छेदककोटौ प्रागभावस्य प्रवेशाप्रवेशयोः कारणत्वे प्रमाणाभावः। परस्परासंयुक्तेषु कतिपयतन्तुषु तत्पटो जायेत। न च तत्पटप्रागभावव्याप्ययावत्संयोगानामपि जनकत्वम्, कतिपयतन्तुसंयोगेष्वतीतेषु अनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात् तत्पटप्रागभावमपेक्ष्य स एव घटो लघीयान्, यावत्त्वानिरुक्तेश्च।

---

शेत्यादि। प्रवेशे कारणतावच्छेदकतया अन्यथा सिद्धत्वम्, अप्रवेशे तु वस्तुगत्या तत्पटप्रागभावाश्रयानामेव तन्तूनां तावत्तन्तुत्वेन हेतुत्वेन प्रागभावस्य हेतुत्वे मानाभाव इत्यर्थः। ननु मा भूत्प्रागभावस्य हेतुत्वं कारणतावच्छेदकतयैव तत्सिद्धिर्भविष्यतीत्यत आह परस्परेति। तत्पटप्रागभावाश्रययावत्तन्तूनां तदानीमनपायादिति भावः। तत्पटप्रागभावव्याप्येति। तत्पटप्रागभावानधिकरणावृत्तीत्यर्थः। संयोगस्त्वारम्भको ग्राह्यस्तेन तत्पटप्रागभाववन्मात्रवृत्तीनामनारम्भकसंयोगान्तराणां तत्पटपूर्वमसत्त्वेपि न क्षतिः। तत्प्रागभावसामानाधिकरण्यस्य तत्पटानाधारतन्तुवृत्तिपटान्तरारम्भकातीतसंयोगसाधारणत्वात् व्याप्यतापर्यन्तानुसरणम्। तन्तुसंयोगेष्विति। पटारम्भकेष्वित्यादिः। ननु तत्पटप्राक्क्षणवृत्तित्वेनापि संयोगानां विशेषणान्नैष दोष इत्यत आह तत्पटेति। तथा च लाघवात्तत्पटव्याप्यतादृशयावत्तन्तुसंयोगत्वेनैव तत्पटं प्रति हेतुत्वसम्भवादवच्छेदकतयापि न प्रागभावसिद्धिरिति भावः। ननु तत्पटस्यैव तन्नियतसंख्याविशेषस्यापि उक्तक्रमेणावच्छेदकत्वे विनिगमनाविरहाल्लघुरपि तत्पटो नावच्छेदकः किन्तु तत्प्रागभाव एव धर्मिग्राहकप्रमाणेन तथैव तस्य सिद्धेरत आह यावत्त्वेति। तथा च तादृशसंयोगनिष्ठं यावत्त्वमप्यपेक्षाबुद्धिविषयत्वमेव तच्चापेक्षाबुद्धिव्यक्तीनां भेदान्नानेत्यनन्तकार्यकारणभावध्रौव्ये व्यर्थमतिरिक्तप्रागभावस्यावच्छेदकतया कल्पनमिति भावः। अत्र वदन्ति। यत्र क्रमेण तन्तूनां तत्संयोगानां वा जननोत्तरं पटस्योत्पादस्तत्र प्रागेव तत्पटस्योत्पादवारणार्थं चरमस्य तन्तोस्तत्संयोगस्य वा विशिष्य हे-

तुत्वावश्यकत्वे तेन एवोदासीनतन्तुषु तत्पटोत्पत्तिवारणेऽपि यत्र समस्ततन्तुष्वेकदैवोत्पन्नेषु संयुक्तेषु च पटस्योत्पत्तिस्तत्र तत्पटस्यान्यत्रोत्पादवारणार्थं प्रागभावः कारणतया कल्प्यते तत्तत्तन्तुसंयोगानां विशिष्य हेतुत्वकल्पनया तद्वारणे गौरवात् । न हि तत्रापि तत्पटोत्पत्तेः पूर्वं तत्पटारम्भकतत्तत्तन्तुषु द्रव्यारम्भकसंयोगः, येन तदानीं तत्पटस्योत्पादवारणाय विशिष्य संयोगानां हेतुत्वमावश्यकं स्यात् । न च तत्पटवत्त्वेनैव तादृशपटं प्रति तन्तूनां तादात्म्येन हेतुत्वान्नान्यत्र तस्योत्पाद इति वाच्यम् । कार्यवत्त्वेन कारणतायामन्यथासिद्धेः । अन्यथा द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चाक्षुषवद्द्रव्यत्वादिनैव हेतुत्वसम्भवे उद्भूतरूपादीनामहेतुत्वापत्तेः । समस्तस्वारम्भकतन्तुसंयोगनाशान्नष्टस्यापि पटस्य पुनः स्वारम्भकतन्तुषूत्पत्तिप्रसङ्गेन तत्तदारम्भकसंयोगव्यक्तीनां विशिष्य तत्पटं प्रति हेतुत्वकल्पने महागौरवापत्तेश्च । अस्माकं तु प्रागभावविरहादेव नष्टस्य पुनर्नोत्पादः । यत्तु युगपदुत्पन्नैः संयुक्तैश्च सहस्रतन्तुभिर्जनितस्य पटस्यान्यत्रोत्पत्तिवारणार्थं तावत्तन्तुपर्याप्तायास्तत्पटारम्भकसंयोगसमकालोत्पन्नसङ्ख्याव्यक्तेरेव तत्पटं प्रति विशिष्य हेतुत्वं युक्तं तावतैव तदानीमन्यत्र कालान्तरे वा तावत्तन्तुषु तत्पटस्योत्पादवारणादिति । तत्तुच्छम् । यस्य तन्तोर्द्वितीयक्षण एव तन्त्वन्तरसंयोगोत्पत्त्या तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिस्तत्रैव तन्तौ व्यभिचारात् सहस्रत्वादिसङ्ख्यायाः समानाधिकरणयावदेकत्वसापेक्षतया द्रव्योत्पत्तिद्वितीयक्षणे तदसम्भवात् । किं च तादृशसंख्याव्यक्तीनां तत्तद्व्यक्तित्वेन तत्पटं प्रति हेतुत्वे अनन्तकार्यकारणभावापत्तिस्तावत्तन्तुपर्याप्ततादृशसंख्यात्वेन हेतुत्वे च महागौरवमतस्तत्पटप्रागभावव्यक्तिरेव तत्पटहेतुतया कल्पयितुमुचिता कारणतयैव धर्मिग्राहकमानसिद्धायाः तस्याः पदार्थान्तरेण सार्द्धं विनिगमनाविरहस्यासम्भवादिति दिक् । [ नव्यास्तु प्रागभावाङ्गीकारे चतुर्थक्षणवृत्तिध्वंसप्रतियोगिकाया अपेक्षाबुद्धिव्यक्तेस्तृतीयक्षणेऽपि ध्वंसः स्यात् । न च द्वितीयप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वं वाच्यम्, तथा सति चतुर्थक्षणेऽपि ध्वंसो न स्यात्।चक्षुःसन्निकर्षादिरूपद्वित्वनिर्विकल्पकसामग्र्यास्तदानीमपि सत्त्वात् । प्रागभावस्वीकारे तु द्वित्वनिर्विकल्पकात्प्राक् तदभावस्यैव प्रतिब-

एतेन त्रित्वाद्युत्पत्तिर्व्याख्यातेति । परे पुनरिहेदानीं घटध्वंस

———

न्धकत्वाददोष इत्यपि वदन्ति।] समवायिनो द्रव्यस्यासमवायिकारणानामेकत्वानां निमित्तकारणस्य चापेक्षाबुद्धेरविशेषात् क चिदेव तत्तत्त्रित्वादिकं जायते क चिन्नेति नियमो न स्यादतो यावति तत्तत्त्रित्वादिप्रागभावस्तावत्येव तत्तत्त्रित्वाद्युत्पत्तिरिति तत्तत्त्रित्वाद्युत्पत्तिनियामकतयैव प्रागभावसिद्धिरिति आचार्यमतं निरस्यति एतेनेति । कस्य चित्समवायिनस्तन्निष्ठैकत्वस्य वा उत्पत्तिदशायामपि तत्तत्त्रित्वाद्युत्पत्तिप्रसङ्गेन चरमस्य समवायिनस्तदेकत्वस्य वा तत्र विशिष्य हेतुताध्रौव्ये तद्विरहादेवान्यत्र तत्त्रित्वाद्युत्पत्त्यसम्भवे प्रागभावे मानाभावेनेत्यर्थः । द्वित्वस्थलेऽतिरिक्तप्रागभावधर्मिणस्तत्रानन्यथासिद्धत्वनियतपूर्ववर्तित्वयोश्च कल्पनामपेक्ष्य समवायिनश्चरमैकत्वस्यैव वानन्यथासिद्धत्वकल्पनं लघीय इति द्वित्वानुरोधान्न प्रागभावः सिध्यतीत्यतस्त्रित्वपर्यन्तानुसरणम् । के चित्तु तत्वज्ञानिनः शुकादेः सत्यामपि विहितनिषिद्धक्रियायां धर्माधर्मयोरनुत्पादात्तज्जनकतया तत्वज्ञानप्रागभावः सिध्यति । न चोत्पन्नेपि तत्त्वज्ञाने तादृशज्ञानान्तरप्रागभावसत्त्वात्तदानीं धर्माद्युत्पत्तिप्रसङ्गः । समानकालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तत्त्वज्ञानशून्यत्वेन प्रागभावस्य विशेषणीयत्वात् । न चैवं निरुक्तप्रत्यासत्त्या तत्त्वज्ञानाभावविशिष्टप्रागभावत्वेनैव हेतुत्वमुपेयं तत्त्वधीप्रागभावत्वप्रवेशे गौरवात् तथा चाद्यतत्त्वज्ञानकालोत्पन्नात्मगुणान्तरप्रागभावानामपि हेतुत्वापत्तिरिति वाच्यम्।ताद्रूप्येण हेतुतायामिष्टत्वात् । न चोक्तक्रमेण तत्त्वधीप्रागभावस्य हेतुतामपेक्ष्य लाघवात् मिथ्याज्ञानजन्यवासनाया एव धर्मादिहेतुत्वं युक्तमिति वाच्यम् । आत्मधर्मिकगौरत्वस्थूलत्वादिप्रकारकत्वलक्षणस्य मिथ्याज्ञानवासनात्वस्य नानात्वेन गुरुत्वेन च ताद्रूप्येण धर्माद्यजनकत्वात् । न चोक्तक्रमेण तत्त्वज्ञानत्वमपि आत्मधर्मिकदेहान्यत्वादिप्रकारकत्वमेवेति तदवच्छिन्नशून्यप्रागभावत्वेनापि हेतुत्वेऽननुगमो गौरवं चेति वाच्यम् । मानसत्वव्याप्यस्य मुक्तिजनकतावच्छेदकस्यैव जात्यस्यैव तत्त्वज्ञानपदेनोपलक्षणात् । न च मिथ्याज्ञानजन्यवासनाया

इतिवदिहेदानीं घटप्रागभाव इति साधारणमेव लोकानां प्रत्यक्षं कल्पयन्तस्तद्बलेन प्रागभावं सामान्यलक्षणाञ्च व्यवस्थापयन्तो वर्णयन्ति, अव्याप्यवृत्तेः कार्यस्य द्वितीयक्षणे धारावाहिकस्थले च प्राथमिकनिर्विकल्पकस्य चतुर्थक्षणे उत्पत्तिवारणाय एकावच्छेदादिना कार्याभावस्योत्तरज्ञानाभावस्य च कारणत्वं वाच्यम्, तथा च लाघवात् प्रागभावस्य तत्त्वं कल्प्यते। स्वभावाधीनत्वाच्च तत्प्रादेशिकत्वात्प्रदेशनियमः संयोगादीनामिति। अन्ये तु

———

अपि धर्मादिजनकत्वं भावनात्वव्याप्यवैजात्यविशेषेणैव वक्तव्यमतो न गौरवमिति वाच्यम्। मिथ्याज्ञानोत्तरं तादृशवासनोत्पत्तिदशायामपि धर्माद्युत्पादाद्भावनात्वव्याप्यवैजात्येन हेतुत्वासम्भवादित्याहुः। तेषां धर्माधर्मोत्पादनियामकत्वेन वस्त्वन्तरसिद्धावपि तत्र तत्त्वज्ञानप्रागभावत्वादिसिद्धौ प्रमाणमनुचिन्तनीयम्। ननूक्तक्रमेण सिद्धस्यापि प्रागभावस्य प्रतियोगिहेतुत्वं नागतमत आह वर्णयन्ति-अव्याप्यवृत्तेरित्यादि। द्वितीयक्षणे इति। उत्पत्तिवारणायेत्यन्वयः। तथा चाग्रावच्छेदेनोत्पन्नायाः संयोगव्यक्तेर्द्वितीयादिक्षणे पुनरुत्पादः स्यात्, मूलाद्यवच्छेदेन तदभावस्य सत्त्वात् कार्यस्य प्रतिबन्धकत्वासम्भवात् अग्रावच्छिन्नतत्तत्संयोगं प्रत्यग्रावच्छेद्यत्वविशिष्टतत्तत्संयोगाभावत्वेन हेतुतायां च गौरवात्तत्तत्संयोगं प्रति तत्तत्संयोगप्रागभावत्वेनैव हेतुत्वं युक्तमिति भावः। ननु घटादिसंयोगसामान्यं प्रत्येव समानावच्छेदकत्वप्रत्यासत्त्या घटादिसंयोगसामान्याभावस्य हेतुत्वं वाच्यमतो न गौरवम्। न चैवमपि प्रत्यक्षसिद्धं प्रागभावमादाय विनिगमनाविरहः। तस्य घटसंयोगप्रागभावत्वेन हेतुत्वे घटीयसंयोगान्तरप्रागभावमादायैवोत्पन्नस्यापि तस्य पुनः प्रसङ्गात् तद्घटसंयोगव्यक्तौ तत्तत्संयोगव्यक्तिप्रागभावत्वेन हेतुत्वे चानन्तकार्यकारणभावापत्तिगौरवस्यैव विनिगमकत्वादित्यत आह धारावहनेति। ननु तत्तत्संयोगात्यन्ताभावस्य निरवच्छिन्नविशेषणतयैव तत्तत्संयोगं प्रति हेतुत्वं वाच्यमतः स्थलान्तरमनुसरति धारावहने-

सर्वत्र तत्तत्संख्याविशेषाणां विशिष्य हेतुत्वोपगमेनैव तत्तद्द्रव्यो-
त्पादनियमसम्भवेऽपि युगपदुत्पन्नेषु नित्येषु च त्रित्वाद्युत्पत्ति-

———

तीत्यप्याहुः । धारावहनेत्युक्त्या जनकीभूतात्ममनःसंयोगादिव्य-
क्तीनां चतुर्थक्षणे सत्त्वमावेदितम् । तेन तत्तत्कारणव्यक्त्यभावप्रयु-
क्तायाः कार्यानुत्पत्तेर्नावसरः । सविकल्पकस्य स्वकारणीभूततत्तद्वि-
शेषणज्ञानव्यक्त्यभावादेव चतुर्थक्षणे नोत्पादः सम्भवतीत्यतो निर्वि-
कल्पकपर्यन्तानुसरणम् । आंशिकनिर्विकल्पकस्यापि विशेषणज्ञान-
सापेक्षत्वात् प्राथमिकेति । तेन सप्रकारकान्यज्ञानलाभः । द्वितीयतृ-
तीयक्षणयोः स्वात्मककार्येण प्रतिबन्धसम्भवाच्चतुर्थक्षण इत्युक्त-
म् । न च तत्तन्निर्विकल्पकं प्रति तत्तत्समकालोत्पन्नध्वंसविशेषस्यैव
प्रतिबन्धकत्वं तदुत्पत्तिकालपर्यन्तस्थायिद्वित्वविशेषस्य वा जनकत्व-
मस्तु न तु कार्याभावस्योत्तरज्ञानाभावस्य च द्वयोर्हेतुत्वमतो न गौ-
रवमिति वाच्यम् । तादृशध्वंसानां द्वित्वादीनां च बहूना विनिगम-
काभावेन तथात्वकल्पनामपेक्ष्य लाघवेनैकस्यैव तन्निर्विकल्पकप्राग-
भावस्य तन्निर्विकल्पकहेतुत्वेन कल्पनार्हत्वादतीन्द्रियस्य निर्विक-
ल्पकप्रागभावस्य प्रमाणान्तरासिद्धतया तेन सार्द्धं विनिगमकाभा-
वस्य वक्तुमशक्यत्वादिति भावः । ननु तत्तत्संयोगप्रागभावस्य
लाघवेन हेतुत्वसिद्धावपि मूलावच्छेदेन जायमानश्येनसंयोगः कुतो
नाग्रावच्छेदेन जायते स्वरूपसम्बन्धेन तत्तत्प्रागभावस्योभयावच्छे-
देनाविशिष्टत्वादत आह स्वाभावेत्यादि । तथा च प्रागभावस्याव-
च्छिन्नवृत्तितैव संयोगावच्छिन्नवृत्तितानियामिका समानावच्छेदक-
त्वप्रत्यासत्त्यैव तस्य प्रतियोगिहेतुत्वादिति भावः । अत्र कल्पयन्त
इत्यनेन साधारणप्रत्ययस्यासत्त्वमावेदितम् । वर्णयन्तीत्यनेन च नि-
र्विकल्पकसामान्यं प्रति ज्ञानत्वेनैव प्रतिबन्धकत्वकल्पनया चतुर्थ-
क्षणे पुनर्निर्विकल्पकासम्भवात्तस्य तदुत्तरज्ञानस्य चाभावद्वयं तत्र
कारणं न वाच्यमित्यस्वरसः सूचितः । तत्तत्सङ्ख्याविशेषाणामि-
ति । सहस्रतन्तुकपटादौ चरमतन्तुसंयोगोत्पत्तिकालीनस्य सहस्र-
त्वादिसङ्ख्याविशेषस्यैवाऽन्ततः परमेश्वरीयापेक्षाबुद्धिजन्यस्य सा-

नियामकत्वेन प्रागभावः कल्प्यत इत्याहुः । यत्तु ज्ञानेच्छाकृतीनां

———

मानाधिकरण्यप्रत्यासत्त्या हेतुत्वाङ्गीकारेणैव स्वानाधिकरणतन्तुषु तत्पटस्यानुत्पादसम्भवेपीत्यर्थः । यस्य तन्तोर्द्वितीयक्षण एव तन्त्वन्तरसंयोगोत्पत्त्या तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिस्तत्रैव तन्तौ व्यभिचारात् सहस्रत्वादिसङ्ख्याया हेतुत्वमसम्भावितम्, एकत्वान्यसङ्ख्यामात्रस्यैव समानाधिकरणयावदेकत्वसापेक्षतया द्रव्योत्पत्तिद्वितीयक्षणे तदसम्भवात् पुरुषकालभेदेन सहस्रत्वादीनामनन्तत्वेनानन्तकार्यकारणभावापत्तिगौरवं चेति द्रव्योत्पादनियामकत्वेनापि प्रागभावः कल्पयितुमुचित एवेत्याशयेनोक्तं सम्भवेपीति । क्रमोत्पन्नस्थले कस्याश्चित्समवायिव्यक्तेस्तदेकत्वस्य वाऽनुत्पत्तिदशायामपि कारणान्तरसत्त्वमादाय प्रागभाववादिनामपि त्रित्वोत्पत्तिप्रसङ्गादुत्पत्स्यमानसमवायिव्यक्तेस्तदेकत्वस्य वा विशिष्य हेतुताध्रौव्ये प्रागभावकल्पनं व्यर्थमतो युगपदुत्पन्नपर्यन्तानुसरणम् । पूर्वोक्तयुक्त्या द्वित्वोत्पादनियामकत्वेन प्रागभावासिद्धेराह त्रित्वादीति । नियामकत्वेनेति । अन्यथा युगपदुत्पन्ननिष्ठत्रित्वादेः स्वानधिकरणेष्वपि द्रव्येषूत्पादप्रसङ्गात् । न चापेक्षाबुद्धिव्यक्तेरेव विशिष्य हेतुत्वान्नातिप्रसङ्गः । स्वानाश्रयमादायापेक्षाबुद्धेरपि त्रित्वजनकत्वदर्शनात् । न च तत्तद्व्यक्तिनिष्ठैकत्वान्यसंख्यासामान्यं प्रति तत्तद्व्यक्तिनिष्ठविशेष्यत्वसम्बन्धेनैकत्वप्रकारकत्वेनैवापेक्षाबुद्धेर्जनकत्वं प्रकारान्तरेणानुगमासम्भवात्तथा च तत एवैकनिष्ठत्रित्वादेरन्यत्र द्रव्येऽनुत्पत्तिसम्भव इति वाच्यम् । पुरुषत्रयाणां घटादिभिन्नद्रव्यधर्मिकैकत्वज्ञानत्रयादपि तेषु त्रित्वोत्पत्तिप्रसङ्गेनापेक्षाबुद्धेस्तादृरूप्येणाहेतुत्वादिति भावः । अन्येत्त्वित्यस्वरसबीजं तु द्रव्यान्तरकर्माधीनस्यैकनिष्ठसंयोगादेरन्यत्रोत्पत्तिवारणार्थमवश्यं तत्तद्द्रव्यसमवेतकार्यत्वावच्छिन्नं प्रति तत्तद्द्रव्यत्वेन हेतुत्वं वाच्यमतस्तदन्यत्वादेवान्यत्र न तदीयत्रित्वाद्युत्पादः किं तत्तत्त्रित्वाद्यन्तर्भावेनानन्तप्रागभावहेतुत्वेन । न च कार्यत्वस्येव कालिकसम्बन्धेन घटत्वपटत्वादिमत्त्वस्यापि विनिगमनाविरहेण कार्यतावच्छेदकेऽनुप्रवेशादनन्तकार्यकारणभावावश्यकत्वमिति वाच्यम् । समवेतत्त्वका-

कार्यकारणभावग्रहो न तदुपस्थितिं विनेति, न चेच्छाकृतिकाले ज्ञानेच्छासाक्षात्कारौ, योग्यविशेषगुणयौगपद्यस्यात्मनि निषेधात् अतो ज्ञानाद्यन्तरसाक्षात्कार एव ज्ञानत्वादिनेच्छाजनकज्ञानादिकं गृह्णातीत्यभ्युपेयमिति । तन्न । पौर्वापर्यापरिचये धर्मिस्वरूपग्रहेऽपि कारणत्वग्रहासम्भवात् इच्छाकृत्यनुत्पादस्थले ज्ञानेच्छयोः साक्षात्कारात्ज्ञानेच्छासामान्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहे

---

त्विकोभयसम्बन्धेन तद्द्रव्यवत्वावच्छिन्नं प्रत्येव तत्तद्द्रव्यत्वेन हेतुत्वस्योक्तत्वात् नित्यवृत्तिधर्मस्यापि जन्यतावच्छेदकत्वपक्षे तत्तद्व्यक्तिसमवेतत्वावच्छिन्नं प्रत्येव तत्तद्व्यक्तित्वेन हेतुत्वसम्भवाच्चेति द्रष्टव्यम् । मिश्रोक्तं सामान्यप्रत्यासत्तौ युक्त्यन्तरमुपन्यस्य दूषयति यत्त्वित्यादि । ज्ञानेच्छेति।ज्ञानेच्छयोरिच्छाकृत्योश्चेत्यर्थः।तदुपस्थितिमिति । इच्छोपधायकज्ञानस्य कृत्युपधायकेच्छायाश्चोपस्थितिं विनेत्यर्थः । न चेति । इच्छाकाले ज्ञानस्य कृतिकाले चेच्छायाः न साक्षात्कार इत्यर्थः । ज्ञानसंस्कारयोरेकदोत्पादायोग्येत्युक्तम् । योग्यत्वं च वेगावृत्तिप्रत्यक्षजातिमत्त्वम् । तेन निर्विकल्पकद्वयस्यापि नैकदोत्पत्तिः । इत्थं च ज्ञानसंयोगयोरुक्तयोग्यतावतोर्यौगपद्येन व्यभिचारः स्यादत उक्तं विशेषेति । रूपरसयोर्योग्यविशेषगुणयोर्घटादौ युगपदुत्पादादुक्तमात्मनीति । विभिन्नावच्छेदेन सुखदुःखयोर्यौगपद्यस्वीकारे एकावच्छेदेनेति पूरणीयम्।केचित्तु विशेषगुणपदं सविषयकविशेषगुणपरं वाच्यम् एवं चात्मपदं शरीरार्थकं तेन कायव्यूहदशायां सौभरीप्रभृतेर्नानाशरीरावच्छेदेन ज्ञानादेर्यौगपद्येऽपि न क्षतिरित्याहुः । इच्छादिजनकेति । इच्छाद्युपधायकेत्यर्थः । ननु ज्ञानाद्यविच्छादेः स्वरूपयोग्यत्वस्य फलोपधायकत्वस्य वा ग्रहार्थं ज्ञानत्वादिसामान्यप्रत्यासत्तिरभ्युपेयते तत्र नाद्य इत्याह पौर्वापर्येत्यादिना । ग्रहासम्भवादिति अवश्यमभ्युपेयत्वादित्यत्र हेतुः । इच्छाकृतीति । इच्छानुत्पादस्थले ज्ञानस्य कृत्यनुत्पादस्थले चेच्छायाः साक्षात्कारादित्यर्थः । मनसेति । कारणत्वानविष्टसमस्तवस्तूपस्थितावित्यादिः ।

मनसा कार्यकारणभावग्रहस्यावश्याभ्युपेयत्वात्। कृत्यनुत्पादस्थले ज्ञानेच्छयोः कृत्यनन्तरमिच्छाकृत्योः समूहालम्बने साक्षात्कारस्य स्मरणेन च ज्ञानानुमानस्य च सम्भवात् । विंशत्यङ्गुल्यवच्छेदेन युगपद्विंशतिप्रयत्नोत्पादवदिच्छाकृतिकाले ज्ञानोत्पादस्याविरोधा-

---

तथा च फलानुपधायक एव ज्ञानादाविच्छादिस्वरूपयोग्यत्वस्यान्वयव्यतिरेकाभ्यां मनसा ग्रहसम्भवादिच्छाद्युपधायकज्ञानादिव्यक्तीनामनुपस्थितावपि न क्षतिरिति भावः । द्वितीयमभिप्रेत्याह कृत्यनुत्पादस्थले इति । ज्ञानेच्छयोः समूहालम्बनसाक्षात्कारस्य सम्भवादिति योजना । न चेच्छोत्तरं ज्ञानस्य साक्षात्कारः कार्यसहभावेन विषयस्य हेतुत्वादिति वाच्यम्। अनुमित्याद्युत्तरमपि परामर्शादेरनुव्यवसायात्सर्वत्र विशिष्य विषयस्य तथा हेतुत्वाभावात् । न चेच्छायाः साक्षात्कारस्य ज्ञानत्वांशे निर्विकल्पकतया जनकतावच्छेदकरूपेण फलोपधायकव्यक्तिग्रहासम्भवस्तदवस्थ इति वाच्यम् । अभावत्वादेरिव ज्ञानत्वादेः सविकल्पकैकवेद्यत्वात् । निर्विकल्पोत्तरमौपनयिकस्य ज्ञानस्य ज्ञानत्वविशिष्टज्ञानबोधस्य सम्भवाच्चेति भावः । नन्वेवमपि ज्ञानस्य कृत्युपधायकत्वाग्रहः सामान्यप्रत्यासत्तिं विना दुर्घटः कृतिपर्यन्तं फलोपधायकज्ञानव्यक्तेरसत्त्वेन तदुत्तरं तद्ग्रहासम्भवादत आह स्मरणेन चेति । तथा चेदं स्मरणं ज्ञानजन्यं स्मृतित्वादित्यादिक्रमेण पक्षधर्मताबलात् कृतिफलोपधायकज्ञानव्यक्तिमनुमाय पश्चात्तत्र कृतिकारणत्वग्रहः करणीय इति भावः । ननु यत्रापेक्षात्मकेन ज्ञानेन कृतिर्जनिता तत्र तेन स्मरणानुत्पत्त्या स्मृत्या तदनुमानमसम्भवीत्यत आह विंशतीति । व्यासङ्गानुरोधात् ज्ञानयोरेवात्मनि यौगपद्यं नेष्यते न तु विशेषगुणमात्रस्येत्याशयः । न चैक एव प्रयत्नस्तत्र विंशत्यङ्गुल्यवच्छेदेनोत्पद्यते इति वाच्यम् । अङ्गुलिचेष्टानां तारतम्यानुभवेन यत्नवैलक्षण्यस्य आवश्यकत्वादिति भावः । नन्विदं गोपदशक्यतावच्छेदकं गोत्वादित्यत्र तादात्म्येनायं सास्नावान् गोत्वादित्यत्र च समवायेन गोत्वहेतौ गवेतरावृत्तित्वविशिष्टसकलगोवृत्तित्वरूपस्य गोत्वत्वस्य व्याप्यता-

यत्तु पाकादौ चिकीर्षा सुखादौ इच्छा न स्यात् सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात्, तस्मात् सुखत्वादिना ज्ञातेषु सर्वेषु सिद्धं विहायाऽसिद्धे इच्छा भवतीत्यभ्युपेयम् । तन्न । असिद्धस्याज्ञानेऽपि सिद्धगोचरज्ञानादेव इच्छाप्रवृत्तिस्वाभाव्यादसिद्धे तयोरुत्पत्तेः । न चातिप्रसङ्गः, समानप्रकारकत्वेन ज्ञानेच्छाकृतीनां कार्यकारणभावात् । न तु समानविषयत्वेनापि, क्व चिद-

---

च्च । गोत्वे च गोनिष्ठात्यन्ताभावाप्रतियोगित्वेन समवेतत्वेन च विशेषितमविशेषितं वा गवेतरासमवेतत्वं व्याप्यतावच्छेदकं न तु सकलगोवृत्तित्वविशेषितम्, सामान्यलक्षणयापि गृहीतुमशक्यत्वात्। न तु समानविषयकत्वेनापीति । स्यादेतत्, समानप्रकारतामात्रस्य

---

वच्छेदकतया तदन्तर्गतसकलगोग्रहार्थं सामान्यप्रत्यासत्तिरावश्यकीति प्रगल्भमतं निरस्यति गोत्वे चेति । गोपदशक्यतावच्छेदकत्वस्य साध्यतायां समवेतत्वविशिष्टगवेतरासमवेतत्वमात्रं गोरूपादौ व्यभिचारीत्यतो गोनिष्ठेत्यादि । गोनिष्ठाभावस्य प्रतियोगित्वं येन तदन्यत्वमिति व्युत्पत्त्या गोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकान्यत्वे सतीत्यर्थस्तेन गोत्वस्यापि गोनिष्ठविशिष्टाभयाभावादिप्रतियोगित्वेपि न हेत्वप्रसिद्धिः । अवच्छेदकत्वं तु निरवच्छिन्नं समवायसम्बन्धावच्छिन्नं च ग्राह्यमतो नोक्तदोषतादवस्थ्यम् । गगनादौ व्यभिचारवारणार्थमाह समवेतत्वेन चेति । सास्नादेः साध्यतायां गवेतरासमवेतमात्रस्यैव समवायेन हेतुत्वसम्भवादाह अविशेषितं वेति । न त्विति । न तु तत्तदनन्तगोव्यक्तिवृत्तित्वविशेषितमित्यर्थः । अशक्यत्वादिति । तत्तद्व्यक्तित्वेनानन्तगोव्यक्तीनामेकदाऽनुपस्थिते-

प्यकल्पनात्। समानविषयकत्वे सत्यपि समानप्रका-
रकज्ञानाभावेनेच्छाकृत्योरभावात् तस्यावश्यकत्वेन गौ-

---

प्रयोजकत्वे क्वचिदेव रजतत्वप्रकारिकेच्छा क्वचिन्नेति नियमो न
स्यात्। तादृशप्रकाराश्रय एव तदुत्पादोपगमे कथमरजते रजत-

---

रिति भावः। नैय्यायिकः शङ्कते स्यादेतदिति। एतद्दूषणं स्यादित्य-
र्थः। समानेति। रजतत्वावच्छिन्नधर्मिताकेष्टसाधनताज्ञानत्वेन सम-
वायप्रत्यासत्त्या रजतत्वप्रकारकेच्छां प्रति प्रयोजकत्व इत्यर्थः। रज-
तत्वप्रकारकेच्छासामान्यं प्रति तत्प्रकारकज्ञानत्वेन हेतुतायां माना-
भावेन यथाश्रुतासङ्गतेः रजतानयनत्वादिप्रकारकप्रवृत्तिं प्रत्येव रज-
तत्वादिप्रकारकत्वेनोपादानप्रत्यक्षस्य हेतुत्वादिति ध्येयम्। रजतत्वा-
दिपदं सुखत्वादेरुपलक्षणम्। सुखादेः स्वतः प्रयोजनतया समानप्र-
कारकत्वेनैव तत्र ज्ञानेच्छयोः कारणत्वकार्यत्वसम्भवादित्यपि कश्चित्।
वस्तुतो यद्धर्मिकेष्टसाधनताज्ञानं तत्रैव यदभावे द्वेषस्तत्रापीच्छा जा-
यत इति सर्वत्र फलान्यगोचरेच्छायां नेष्टसाधनताज्ञानापेक्षेति स्वय-
मेव बौद्धाधिकारे व्यवस्थापितम्। तथा च यत्र विनश्यदवस्थेनैव रजता-
भावधर्मिकद्विष्टसाधनताज्ञानेन रजताभावे द्वेषो जनितस्तत्रोत्तरकाल-
मज्ञानेपि रजते रजतत्वप्रकारेणेच्छापत्तिरतः सामान्यतो रजतत्वप्र-
कारकेच्छायां रजतत्वप्रकारकज्ञानत्वेनापि हेतुत्वान्तरमावश्यकमतः
समानप्रकारतामात्रेणेत्यादिकं यथाश्रुतमेव सम्यगिति प्रतीमः। क्व
चिदेवेति। रजतत्ववत्तया निश्चिते धर्मिणीत्यर्थः। क्व चित् गृहीतर-
जतत्वासंसर्गके घटादौ। नियमो न स्यादिति। तथा च रजतत्वप्र-
कारकज्ञानात् घटादेरपि तत्प्रकारकेच्छापत्तिरिति भावः। ननु तत्पुरु-
षीयरजतत्वप्रकारकेच्छासामान्यं प्रत्येव तत्पुरुषीयरजतत्वावच्छि-
न्नधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वं तत्र च कार्यस्य विशेष्यत्वं का-
रणस्य तु स्वप्रकारीभूतरजतत्वाश्रयत्वं प्रत्यासत्तिरतो घटादौ न

त्वप्रकारिकेच्छा। अनुपस्थिते चाऽसंसर्गाग्रहोऽपि न नियामकः। वस्तुतोऽसंसर्गाग्रहमपेक्ष्य लघीयसस्तद्विषयतामात्रस्यैव नियामकत्वमुचितम्। सामान्यतश्च तादिच्छायां व्यवस्थितहेतुभावस्य तद्विषयकज्ञानस्य तत्प्रकारकत्वमवच्छेदकं कल्प्यते लाघवात्।

———

रजतत्वप्रकारकेच्छेत्यत आह तादृशप्रकारेति। [ज्ञानप्रकारीभूतरजतत्वाश्रय एवेत्यर्थः।] कथमिति। तथा च शुक्त्यादिधर्मिकरजतत्वप्रकारकेच्छायां व्यभिचारादुक्तक्रमेण हेतुत्वमसम्भवीति भावः। ननु तद्धर्मिकरजतत्वप्रकारकेच्छायां तद्धर्मिकरजतत्वासंसर्गग्रहस्याभावोपि हेतुर्वाच्य इतीच्छायां न विशेष्यानियमः। न च गुरूणां रजतधर्मिकरजतत्वासंसर्गग्रहस्याप्रसिद्ध्या रजतत्वप्रकारेण तत्रेच्छा न स्यात्कारणबाधादिति वाच्यम्। रजतान्यधर्मिकेच्छायामेवोक्तक्रमेण हेतुत्वोपगमात्। रजतत्वासंसर्गसाकाङ्क्षतत्तद्धर्मिकज्ञानाभावस्यैव वा हेतुत्वादत आह अनुपस्थित इति। तथा च यत्र घटादौ रजतत्वासंसर्गग्रहस्तत्र रजतत्वप्रकारेच्छानुत्पादेऽप्यनुपस्थितयावद्वस्तुषु तादृशीच्छा दुर्वारा तेषु रजतत्वासंसर्गज्ञानविरहस्य स्वतः सिद्धत्वादिति भावः। एकधर्मिकरजतत्वप्रकारकज्ञानदशायां यत्र यत्र रजतत्वासंसर्गज्ञानस्य विरहः तेषु भाविष्ववाज्ञातेष्वपि जायत एव रजतत्वप्रकारकेच्छेति यदि ब्रूयात्तदाह वस्तुत इति। नियामकत्वमिति। कारणतावच्छेदकीभूयेत्यादिः। इच्छायां धर्मिनियमार्थं तत्तद्धर्मिविशेष्यकरजतत्वप्रकारकेच्छायां तत्तद्धर्मिकरजतत्वासंसर्गग्रहाभावत्वेन कारणत्वमपेक्ष्य तत्तद्धर्मिकेच्छायां तत्तद्धर्मिकेष्टसाधनताज्ञानत्वेनैव लाघवाद्धेतुत्वं युक्तमित्यर्थः। तथा च भाविरजतधर्मिकेच्छाजननार्थमवश्यमपेक्षणीयस्य भाविरजतधर्मिकज्ञानस्य प्रकारान्तरेणासम्भवादवश्यं सामान्यलक्षणा वाच्येति निगर्वः। नन्वेवं द्रव्यत्वेन रजतधर्मिकेष्टसाधनताज्ञानादपि रजतत्वप्रकारेण तत्रेच्छा स्यादत आह सामान्यतश्चेति। संवादिविसंवादीच्छासाधारण्येनेत्यर्थः। तदिच्छायाम्। तद्विषयकेच्छायाम्। तत्प्रकारकत्वमिति। तथा च रजतत्वप्रकारेण तत्तद्धर्मिकेष्टसाधनता-

अस्तु वा समानप्रकारकत्वेन व्यवस्थिते कार्यकारणभावेऽतिप्रसङ्गभङ्गाय सामानाधिकरण्यमिव समानविषयकत्वमपि प्रत्यासत्तिः ।

——————

ज्ञानत्वेन रजतत्वप्रकारकतत्तद्धर्मिकेच्छां प्रति हेतुत्वान्नातिप्रसङ्ग इति भावः । नन्वेवं संवादीच्छास्थल एव तत्तदनन्तधर्म्यन्तर्भावेनानन्तकार्यकारणभावापत्तिरतः सामान्यतो रजतधर्मिकरजतत्वप्रकारकेच्छायां रजतत्वप्रकारेण रजतधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वमस्तु तथा चाऽतीतरजतगोचरज्ञानादेव भाविरजतव्यक्ताविच्छासम्भवात् कृतं सामान्यलक्षणया, विसंवादीच्छास्थले तु तत्तद्धर्म्यन्तर्भावेनानन्तकार्यकारणभावोऽनन्यगत्यैव सर्वैरभ्युपेतव्य इत्यस्वरसादाह अस्तु वेति । तथा च धर्मिमात्रस्याप्रवेशेनातिलाघवात् तत्पुरुषीयरजतत्वप्रकारकेच्छां प्रति तदीयरजतत्वावच्छिन्नविशेष्यताकेष्टसाधनताज्ञानत्वेनैव हेतुत्वमस्तु समानविशेष्यतायाः प्रत्यासत्तित्वादेवैकधर्मिकज्ञानादन्यधर्मिकेच्छानुत्पत्तेः सम्भवादित्यकामेनापि सामान्यलक्षणा स्वीकार्या तां विना भाविरजतादिज्ञानासम्भवेन तत्रेच्छानुत्पत्तिप्रसङ्गादित्याशयः । न चात्रानन्तपुरुषान्तर्भावादनन्तकार्यकारणभावतादवस्थ्यमिति वाच्यम् । रजतत्वप्रकारेण तत्तत्पुरुषधर्मिकविसंवादीच्छानुरोधेन विषयविधया पुरुषव्यक्तीनां निवेशस्य पूर्वकल्पेऽप्यावश्यकत्वादिति भावः । सामानाधिकरण्यमिवेति परमते दृष्टान्तः । तथा च समानप्रकारतामात्रेण हेतुतावादिभिः परैर्यथैकस्य पुंसो ज्ञानादन्यस्येच्छोत्पादवारणार्थं सामानाधिकरण्यं प्रत्यासत्तिरुच्यते तथैवास्माभिरप्येकधर्मिकज्ञानादन्यधर्मिकेच्छोत्पादवारणार्थं समानविशेष्यत्वं प्रत्यासत्तिः स्वीकृतेति भावः । प्राञ्चस्तु रजतत्वप्रकारकेच्छासामान्यं प्रत्येव रजतत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वं तत्र च एकस्य पुंसो रजतत्वप्रकारेण ज्ञानादन्यस्य तादृशेच्छापत्त्यां यथा सामानाधिकरण्यं प्रत्यासत्तिस्तथैकधर्मिकज्ञानादन्यधर्मिकेच्छोत्पत्तिप्रसङ्गेन समानविशेष्यत्वमपि तथेति यथाश्रुतमेव ग्रन्थमाहुः । तन्न । समानविशेष्यत्वप्रत्यासत्त्या हेतुतायां तत्पुरुषीयत्वस्यावश्यं निवेशनीयत्वात् । अन्यथा रजतत्वेन रजतधर्मिकेष्टसाधनताज्ञानवतोऽपि पुंसः शुक्तिधर्मिकरजतत्वप्रकारके-

असंसर्गाग्रहादेः कारणतामपेक्ष्य समानविषयत्वस्यावच्छेदककोटिनिवेशोऽपि लघीयान् । कारणयथार्थत्वायथार्थत्वाधीनस्तु कार्यस्य तथाविधो विशेषः । एतेन रजतत्वप्रकारकेच्छायां तत्प्रकारकं ज्ञानं संवादिन्यां तस्यां दोषाभावसहितं विसंवादिन्यान्तूपस्थितारजतगतभेदाग्रहसहितं हेतुरिति परास्तम् । त्वद्दिशापि

---

च्छोत्पत्तिप्रसङ्गात् पुरुषान्तरीयरजतत्वप्रकारकज्ञानस्य विशेष्यतासम्बन्धेन शुक्तौ सत्त्वादिति दिक् । स्वत्वस्यानुगतत्वे रजतत्वप्रकारकेच्छासामान्यं प्रत्येव स्वसमानविशेष्यकरजतत्वप्रकारकज्ञानत्वेन हेतुत्वं प्राच्यैरुक्तमपि सम्यक्, विशेष्यनियमार्थमसंसर्गाग्रहादेः कारणत्वकल्पनामपेक्ष्य लाघवादित्याह असंसर्गाग्रहादेरित्यादिना । आदिना भेदाग्रहव्यावर्त्तकधर्माग्रहादेः परिग्रहः । समानविषयत्वस्य । स्वसमानविशेष्यकत्वस्य । अनिवेशोपीत्यपिनाऽनुगताननतिप्रसक्तं स्वत्वमेव दुर्वचमित्यस्वरसः सूचितः । ननु यथार्थरजतत्वप्रकारकेच्छात्वाद्यवच्छिन्नं प्रति दोषाद्यभावविशिष्टस्य रजतत्वासंसर्गाग्रहस्य हेतुत्वाद्रजतत्वप्रकारकेच्छासामान्यं प्रत्यपि रजतत्वासंसर्गाग्रहोऽवश्यं हेतुर्यद्विशेषयोरिति न्यायात् कुतस्तत्कारणतामपेक्ष्योक्तं लाघवमत आह कारणेति । कार्यस्य । इच्छादेः । तथा च यथार्थेच्छादिकं प्रत्यपि यथार्थज्ञानादेरेव समानविशेष्यत्वप्रत्यासत्त्या हेतुत्वाद्विशेषतोप्यसंसर्गाग्रहादेर्हेतुत्वमसिद्धमिति भावः । एतेन । समानविशेष्यत्वप्रत्यासत्त्यैवातिप्रसङ्गभङ्गेन । निरस्तमित्यग्रेणान्वयः । तत्प्रकारकज्ञानमिति । तत्प्रकारेणेष्टसाधनताज्ञानमित्यर्थः । हेतुरिति परेणान्वयः । तस्याम् । इच्छायाम् । इदं रजतमिति भ्रमात् शुक्त्यादौ यथार्थेच्छाप्रसङ्गादाह दोषाभावसहितमिति । तत्प्रकारकज्ञानमित्यनुषज्यते । शुक्त्यादौ रजतभेदग्रहे तद्धर्मिकविसंवादीच्छानुत्पत्तेराह विसंवादिन्यां त्विति । तस्यामित्यनुषज्यते । उपस्थितं यदरजतं तद्धर्मिकरजतभेदाग्रहसहितमित्यर्थः । न चैवं रङ्गे रजतभेदग्रहदशायां शुक्तौ विसंवादीच्छा न स्यादिति वाच्यम् । विसंवादिरजतत्वप्रकारकेच्छात्वेन जन्यता रजतभेदप्रकारकत्वानिरूपितारजतधर्मिताकज्ञानत्वे-

च संवादिन्यामुपस्थितरजतभेदाग्रहस्यैव हेतुत्वौचित्यात् दोषाणां रजतभेदग्रहप्रतिबन्धकानामभावमपेक्ष्य लघुत्वात्। अत्राहुः। सिद्ध एव सुखे सुखत्वेन रूपेणेच्छा लाघवात् तत्प्रकारकेच्छायां

---

न हेतुत्वं समानविशेष्यत्वं प्रत्यासत्तिरित्यत्र तात्पर्यात्। अथ अन्यथाख्यातिमनङ्गीकुर्वतामस्माकं कूटलिङ्गजनितादिदं रजतमित्याकारकज्ञानद्वयादपि यथार्थरजतेच्छोत्पादात्तत्र यथार्थरजतत्वप्रकारकज्ञानत्वेन हेतुत्वं बुधैटमत आह त्वद्दिशापीति। उपस्थितं यद्रजतं तद्धर्मिकरजतभेदग्रहाभावस्येत्यर्थः। न चैवमेकत्र रजतभेदग्रहेऽपि रजतान्तरे संवादीच्छा न स्यात् रजतधर्मिभेदग्रहसत्त्वादिति वाच्यम्। संवादिरजतत्वप्रकारकेच्छात्वेन कार्यत्वं रजतभेदप्रकारत्वानिरूपितरजतधर्मिताकज्ञानत्वेन रजतभेदनिराकाङ्क्षरजतधर्मिताकज्ञानत्वेन रजतत्वसाकाङ्क्षरजतधर्मिताकज्ञानत्वेन वा हेतुत्वं समानविशेष्यता च प्रत्यासत्तिरित्यत्र तात्पर्यात्।आकाङ्क्षा च परेषां पदार्थान्तरम्। क्वचित् ज्ञानद्वयस्थलेऽपि।तेन रजत एव नेदं रजतमिति भ्रमात्मकज्ञानद्वयादपि न संवादीच्छा न वा कूटलिङ्गकपरामर्शोत्तरोत्पन्नस्य प्रमात्वानाभिषिक्तस्येदंरजतमितिज्ञानद्वयस्योत्तरं संवादीच्छानुत्पत्तिरिति ध्येयम्। हेतुत्वेति। प्रयोजकत्वेत्यर्थः। तेन भेदाग्रहस्य कारणतावच्छेदकत्वेऽपि न क्षतिः। औचित्यादिति। अन्यथाख्यातिवादिनां पुनरस्माकं लाघवाद्विशिष्टज्ञानमेव हेतुरित्याशयः। औचित्ये हेतुमाह दोषाणामित्यादि। अभावमपेक्ष्येति। न च भेदग्रहस्येव भेदव्याप्यवत्ताग्रहाणां भेदावच्छेदकवत्ताग्रहाणां चाभावस्य हेतुतायाः कल्पनीयत्वात्तत्रापि गौरवं समानमिति वाच्यम्। संवादिरजतेच्छां प्रति रजतत्वसाकाङ्क्षरजतधर्मिताकज्ञानत्वेन हेतुत्वमित्युक्तचरमकल्पे भेदव्याप्यवत्ताग्रहस्य हेतुत्वाभावेऽपि क्षत्यभावादिति भावः। सिद्ध इति। उत्पन्न इत्यर्थः। सुखादाविच्छा न स्यादिति मूलश्रवणादाह सुख इति। ननूत्पन्नसुखे सिद्धत्वनिर्णयेन प्रतिबन्धात्कथमिच्छोत्पत्तिरत आह लाघवादिति। तत्तद्धर्मिकेच्छायां तत्तद्धर्मिकसिद्धत्वनिश्चयत्वेन प्रतिबन्धकत्वे धर्मिभेदेन गौरवा-

तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि न च तत्प्रकृते, तत्सत्त्वे इच्छोत्पत्तेस्त्वयाप्यनङ्गीकारात् । कथमन्यथा चिरप्रोषितस्याऽज्ञातकान्तामरणस्य तत्कान्तावलोकनादाविच्छा जातावलोकनादीनां सिद्धत्वज्ञानात् अतिरिक्तस्य चासत्त्वादित्यादि बहुतरमूहनीयम् । अथ सिद्धत्वनिश्चयाभावापेक्षया लाघवादसिद्धत्वज्ञानमेव हेतुः, न च सिद्धत्वेन ज्ञाते तत्सम्भवतीत्यसिद्धत्वज्ञाना-

---

दित्यर्थः । तत्प्रकारकेच्छायामिति । तद्धर्मविशिष्टोद्देश्यताकेच्छायामित्यर्थः । तेन सुखत्वावच्छेदेन सिद्धत्वग्रहेऽपि सुखहेतुः पटो जायतामित्यादेः सुखत्वादिप्रकारकेच्छाया उत्पादः । तत्रेच्छायां तादृशपटत्वविशिष्टस्यैवोद्देश्यतया विषयत्वात् । उद्देश्यत्वं पुनरिच्छामीत्यनुभवसाक्षिको विषयताविशेषः । मुख्यविशेष्यतानिरूपिततत्तत्प्रकारताकेच्छायामित्यर्थकरणान्नोक्तदोष इति तु न युक्तम्, सुखत्वावच्छेदेन सिद्धत्वग्रहेऽप्यहं सुखी स्यामित्याकारकेच्छाप्रसङ्गात् आत्मत्वावच्छेदेन सिद्धत्वनिश्चयदशायामहं सुखी स्यामितीच्छानुत्पादप्रसङ्गाच्चेति ध्येयम् । तत्प्रकारकासिद्धतानिश्चयमात्रस्य विरोधित्वे सिद्धः सुखत्ववांश्च गुण इत्यादिसमूहालम्बनस्थलेऽपि सुखं जायतामितीच्छा न स्यादत उक्तं तदवच्छेदेनेति । तद्धर्मावच्छिन्नविशेष्यताकेत्यर्थः । अवच्छेदकत्वं तु विशेष्यकोटिप्रविष्टतामात्रेण ग्राह्यम् । तेन सुखं सिद्धमित्याकारकस्यैव भोजनसुखं सिद्धमित्याकारकस्यापि निश्चयस्य सत्त्वे सुखं जायतामितीच्छाया नोत्पादः । अत एव प्रीत्या धनलाभेऽपि धनमात्रार्थिनो नेच्छा किं तु प्रतिग्रहाद्यधीनधनार्थिन एव यत्किञ्चिद्विशेषसिद्धौ सामान्येच्छाविच्छेदादिति शब्दमणावप्युक्तम् । न चैवं सुखसामान्यं सिद्धमित्येवं सुखत्वावच्छेदकनामन्तर्भाव्य निश्चयेऽपि भोजनसुखं जायतामितीच्छाप्रसङ्गः तादृशसुखत्वावच्छिन्ने सिद्धत्वानिश्चयादिति वाच्यम् । तस्यापि स्वातन्त्र्येण तादृशेच्छाविरोधित्वादिति भावः । ज्ञानमिति । निश्चय इत्यर्थः । न चेत्यादि । तत्सुखत्वावच्छेदेन सिद्धत्वज्ञानं प्रकृते सुखत्वप्रकारकेच्छास्थले नेत्यर्थः । उत्पन्नसुखेषु तत्तद्व्य-

र्थं सामान्यलक्षणेति चेन्न । विशेषरूपावच्छेदेन सिद्धत्वेन ज्ञात-
एव सामान्यरूपेणाऽसिद्धत्वग्रहसम्भवात् । तदेकं ज्ञानं ज्ञानद्वयं

---

क्तित्वेनैव सिद्धत्वनिश्चयात्सुखत्वमन्तर्भाव्य तत्सुखं सिद्धमित्या-
कारकनिश्चयसत्त्वं तु सुखान्तरत्वप्रकारेण तत्रेच्छेति भावः । ननु
इच्छासामान्यं प्रत्येव समानविशेष्यत्वप्रत्यासत्त्या सिद्धत्वनिश्चय-
स्य प्रतिबन्धकत्वं तत्तदनन्तधर्मितावच्छेदकान्तर्भावेण तथात्वे
गौरवात्तत्कुतः सिद्धसुखादाविच्छेत्यत आह कथमिति । अन्यथा ।
तत्तद्धर्मानन्तर्भावेन विरोधित्वं । नैयायिकः शङ्कते अथेति । यद्यप्य-
प्रामाण्यज्ञानाभावविशिष्टसिद्धत्वनिश्चयाभावत्वेन हेतुत्वमपेक्ष्यासि-
द्धत्वज्ञानस्य तद्धर्मिकतत्तदप्रामाण्यनिश्चयाभावकूटस्य च प्रत्येक-
रूपेण हेतुतायामेव गौरवम्, तथापि सिद्धत्वस्यैव तद्व्याप्यवत्त्वस्य
तदवच्छेदकधर्मवत्त्वस्य च ज्ञाने प्रतिबन्धकत्वाकल्पनादेव लाघव-
म्। सिद्धत्वज्ञानीयतत्तदप्रामाण्यसंशयव्यक्तीनां प्रातिस्विकरूपेणाभा-
वरूपस्य प्रतिबन्धकतावच्छेदकीभूतस्य विशेष्यविशेषणभावेनानन्तका-
र्यकारणभावकल्पनामपेक्ष्य च लाघवं ग्राह्यम्। सिद्धत्वस्य ज्ञानान्तर-
मप्रमेत्यादिरूपाप्रामाण्यज्ञानसत्त्वेऽपि सिद्धत्वनिश्चयेनेच्छाप्रतिबन्धा-
दप्रामाण्यज्ञानसामान्यस्योत्तेजकत्वासम्भवात् । न च तत्तदप्रामा-
ण्यज्ञानाभावकूटविशिष्टसिद्धत्वनिश्चयाभावव्यक्तेरखण्डतद्व्यक्तित्वे-
नैव हेतुत्वादुक्तगौरवानवकाशः । प्रतियोग्यविशेषिताभावस्य हेतु-
त्वे तादृशसिद्धत्वनिश्चयाभावसहचरितस्यानतिप्रसक्तस्याभावान्त-
रस्यापि तत्तद्व्यक्तित्वेन हेतुतापत्तेः विशिष्टाभावस्य विशेष्यविशे-
षणाभावानतिरिक्तत्वेऽखण्डाभावव्यक्तित्वासम्भवाच्चेत्याशयः । अ-
सिद्धत्वज्ञानार्थमित्यस्य कोऽर्थः किं सुखादावसिद्धत्वप्रकारकज्ञानार्थ-
म्, असिद्धत्वविषयकज्ञानार्थं वा, नाद्य इत्याह विशेषेति। उत्पन्नसुखे-
ष्वेव तत्तद्व्यक्तित्वेन सिद्धत्वनिश्चयेऽपि सुखत्वेनासिद्धत्वज्ञाने बा-
धकाभावादिति भावः । ननु विशेषतः सिद्धत्वज्ञानदशायां यत्सा-
मान्यतोऽसिद्धत्वज्ञानं तन्न विशिष्टधीः अन्यथाख्यात्यनङ्गीकारादि-
त्यत आह तदिति । एकमिति स्वमते । द्वयं वेति परेषाम् । असि-

वैसन्यदेतत् । सामान्यलक्षणासहस्रेणाप्यसिद्धत्वस्य ज्ञातुमशक्यत्वाच्च । वस्तुतस्तु सामान्यलक्षणां विनाप्ययं कालः सुखप्रागभाववान् सुखोत्पादकालीनध्वंसप्रतियोगी वा कालत्वादेतादृशकालत्वाद्वेत्यनुमानादसिद्धसुखस्य तदसिद्धत्वस्य च ज्ञानं सुलभ-

———

द्धत्वसाकाङ्क्षधर्मिज्ञानस्यैवेच्छाजनकतया ज्ञानद्वयेपि तत्सम्भवादिति भावः । द्वितीये त्वाह सामान्येति । सुखत्वादिसामान्यलक्षणायास्तत्रासामर्थ्यादिति भावः । नन्वेवमिच्छाया अनागतविषयकत्वप्रवादो व्याहन्येतेत्यत आह वस्तुतस्त्विति । वर्तमानकालस्य सुखप्रागभाववत्त्वाद्यनुमितौ वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वादिलक्षणमसिद्धत्वं सुखस्यापि सुग्रहमित्याशयेनाह अयं काल इत्यादि । प्रागभावानभ्युपगमे वर्तमानकालध्वंसाधिकरणकालोत्पत्तिकत्वमेव वासिद्धत्वं वाच्यमतस्तद्ग्रहार्थं साध्यान्तरमाह सुखोत्पादेत्यादि । महाप्रलयमनङ्गीकृत्याह कालत्वादिति । तदङ्गीकारे त्वाह तादृशेति । सुखोत्पत्तिकालीनध्वंसप्रतियोगिकालत्वादित्यर्थः । अनुमानादिति । प्रयोजकत्वे पञ्चमी । तेनोक्तानुमितेः साक्षादसिद्धत्वानवगाहित्वेपि न क्षतिः । तत्सहकारेण मनसैवोत्तरकालमुक्तस्यासिद्धत्वस्य ग्रहसम्भवादिति ध्येयम् । मिश्रास्तु वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वं नासिद्धत्वं चिरोत्पन्नग्रामादौ तदभावनिश्चयेपीच्छानुभवात् किन्तु वर्तमानकालावच्छेदेन स्वावृत्तित्वमेव तथा । सुखादिधर्मिकस्ववृत्तित्वप्रकारकतत्कालीनेच्छां प्रति सुखादिधर्मिकतत्तत्कालावच्छिन्नस्वावृत्तित्वप्रकारकज्ञानत्वेन हेतुत्वात् । अत एव सुखं मे जायतामित्याकारोपीच्छायाः सर्वजनसिद्धः सम्पद्यते । असिद्धत्वज्ञानस्य जन्यतावच्छेदकतयैव सर्वत्रेच्छायां मदंशोपरागात् । स्ववृत्तित्वं तु सुखादौ स्वसमवेतत्वं पाकादौ स्वकृतिविषयत्वं ग्रामादौ स्वीयस्वत्वादिकं यथानुभवमूहनीयम् । सिद्धत्वज्ञानस्य विरोधित्वपक्षे च तत्तत्कालावच्छेदेन स्ववृत्तित्वमेव सिद्धत्वं ग्राह्यमिति प्राहुः । ननु भाविसुखप्रागभावादिव्यक्तेः पूर्वमज्ञानात्कथं तत्साध्यकानुमितिरत आह निपुणेत्यादि । साध्यतावच्छेदकरूपेणैकव्यक्तिज्ञानादेव पक्षधर्मता-

मेव । निपुणतरमुपपादयिष्यते चेदं शब्दमणिदीधिताविति कृतं पल्लवितेन । घटः स इत्यादिसंशयसमानाकारो हि निश्चयस्तद्विरोधी घटो न वेति संशयः कोटितावच्छेदके घटत्वांशे निष्प्रकारकश्च । न च प्रमेयवानिति प्रत्ययस्तथा । अत एव जातिमानिति

————

बलात्ताद्रूप्येण साध्यान्तरानुमितेः पाकानुमाने सम्पादयिष्यमाणत्वादिति भावः । अत्र जातिमत्त्वप्रकारेण वन्हेरुपनयदशायां वन्हित्वेन तस्योपनीतप्रत्यक्षानुदयाद्वन्हित्वेन तत्तद्व्यक्त्युपनीतप्रत्यक्षं प्रति वन्हित्वेन तत्तद्व्यक्तेर्ज्ञानमवश्यं हेतुर्वाच्यं तथा च तत्रैवावन्हिस्थले तत्तद्व्यक्तीनां विशिष्योपादानेपि वह्निस्थले वन्हित्वेन यस्य कस्यापि ज्ञानमेव च वन्हित्वेन वन्ह्युपनीतप्रत्यक्षं प्रति हेतुः कल्प्यते न तु तत्तद्वन्ह्यन्तर्भावेण लाघवादिति वन्हित्वेन कस्यापि ज्ञानसत्त्वे वन्हित्वेन सकलवन्हिप्रत्यक्षं दुर्वारमिति अर्थवशसम्पन्नमेव सामान्यलक्षणायाः प्रत्यासत्तित्वम् । न चैवं वन्हित्वेन तत्तद्गुञ्जोपनीतभानं प्रत्यपि वन्हित्वप्रकारकतत्तद्गुञ्जाज्ञानत्वेन हेतुत्वमपेक्ष्य लाघवेन सामान्यतो वन्हित्वप्रकारकगुञ्जोपनीतप्रत्यक्षं प्रत्येव वन्हित्वप्रकारकगुञ्जाज्ञानत्वेन हेतुत्वकल्पनमेव युक्तमिति वाच्यम् । वन्हित्वेनैकगुञ्जाज्ञानोत्तरं ताद्रूप्येण गुञ्जान्तरोपनीतभानस्यानुभवविरोधितत्वादेव तत्तदनन्तगुञ्जान्तर्भावेण हेतुत्वकल्पनात् प्रकृते च वन्हित्वेनैकवन्हेरुपनयोत्तरं ताद्रूप्येण वन्ह्यन्तरोपनीतप्रत्यक्षे बाधकाभावादन्यथा बाधकबलादेव सामान्यलक्षणाखण्डनसम्भवे साधकाभावोपन्यासानौचित्यादित्यस्मद्गुरुचरणाः । तच्चिन्त्यम् । ननु प्रमेयत्वप्रकारेण घटत्वज्ञानादुत्पन्नस्य प्रमेयवानितिनिश्चयस्यैव विरोधिघटत्वप्रकारकस्य सत्त्वात्कथं घटो न वेत्याकारः तादात्म्येन घटस्य सन्देह इत्यत आह संशयेति । तद्विरोधी । घटो न वेति संशयविरोधी । निष्प्रकारको निरवच्छिन्नप्रकारताकः । तेन घटत्वांशे सप्रकारकस्यापि स घटः प्रमेयवानितिनिश्चयस्य स घटो न वेत्याकारकसंशयस्य विरोधित्वमक्षतम् । नचैवमयं घटत्ववानितिनिर्णयो घटो न वेतिसंशयविरोधी न स्यात् घटत्वांशे घटत्वस्यैव प्रकारत्वादत आह

रत्वाच्चेति परसिद्धान्तात् । न च सर्वज्ञत्वे संशयो न स्यादिति दोषः, घटः स इति घटत्वप्रकारकं हि ज्ञानं संशयविरोधि तच्च न वृत्तं स्वसामग्रीविरहात् अतो घटत्वादिसकलविशेषज्ञानेऽपि स घटो न वेति संशय इति ॥

---

निश्चयेऽपि घटो न वेति संशयः,घटत्ववानितिनिश्चयस्तु घटेतरावृत्तित्वविशिष्टमवगाहमानो घटान्यतासन्देहं विरुणद्धि, पुरुषावृत्तिवक्रकोटरादिनिश्चय इव पुरुषत्वसंशयम् । स्वसामग्रीविरहादिति । घट इति निश्चयं प्रति घटत्वांशे निर्विकल्पकं ज्ञानं कारणं जातित्वादिना घटत्वज्ञानेऽपि तदनुदयात् सामान्यलक्षणायाश्च सामान्यप्रकारकज्ञानजनकत्वनियमात् विशिष्टज्ञानसामग्रीसत्त्वात् ॥

---

घटत्ववानिति । तथा च तद्वद्वृत्तिधर्मवत्ताज्ञानं तदभावव्याप्यवत्ताज्ञानविधयैव तद्वत्त्वज्ञानप्रतिबन्धकमिति भावः ।ननु प्रमेयत्वसामान्यलक्षणयैव स्वाश्रयस्य घटत्वादेर्निर्विकल्पकं कुतो न जन्यत इत्यत आह सामान्येति । अन्यथा धर्मान्तरज्ञानादपि स्वाश्रयस्य प्रत्यक्षोदयेन व्यभिचारप्रसङ्गादिति भावः । ननु सामान्यस्थले सामान्यप्रत्यासत्तेर्विशिष्टप्रत्यक्षजनकत्वमेव नास्तीत्यत आह विशिष्टधीसामग्रीति ॥

इति श्रीमहामहोपाध्यायजगदीशतर्कालङ्कारभट्टाचार्यविरचिता सामान्यलक्षणा समाप्ता ।

इति व्याप्तिग्रहग्रन्थः समाप्तः ।

---

## चिन्तामणेः उपाधिनिरूपणम् ।

उपाधिज्ञानाद्व्यभिचारज्ञाने सति न व्याप्तिनिश्चय इत्युपाधिर्निरूप्यते ।

तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साध-

---

## दीधित्याः उपाधिनिरूपणम् ।

प्रसङ्गादुपाधिं निरूपयितुमाह उपाधीति । सोपाधौ साध्यत्वसाधनत्वे न सम्भवतः अतोऽभिमते इति । यो यद्व्यापकत्वे सति यदव्यापकः स तत्रोपाधिरिति निर्गलितोऽर्थः । व्यापक-

---

## जागदीश्याः उपाधिनिरूपणम् ।

प्रसङ्गादिति । व्याप्तिग्रहप्रतिबन्धकग्रहजनकग्रहविषयत्वेन स्मृतस्योपाधेरुपेक्षानर्हत्वादित्यर्थः । नव्यास्तु न व्याप्तिनिश्चय इति मूलस्य परोक्तहेतावित्यादिः तथा च स्वकीयहेतोर्व्याप्तिनिश्चयस्येव परोक्तहेतोः सोपाधित्वनिश्चयस्यापि विजयप्रयोजकत्वाद्विजयादिलक्षणैककार्यकारित्वसङ्गत्यैव व्याप्त्यनन्तरमुपाधेर्निरूपणे मूलस्य तात्पर्यमिति प्राहुः । न सम्भवत इति । व्यापकत्वव्याप्यत्वयोरेव साध्यत्वसाधनत्वस्वरूपादिति भावः । ननु साध्यत्वेनाभिमतत्वस्य केवलान्वयित्वात्तदवच्छिन्नं प्रति न कस्याप्युपाधेर्व्यापकत्वं साध्यत्वेनाभिमतधूमादितत्तद्वस्त्वभिधाने तु अभिमतान्तवैयर्थ्यमतः फलितार्थमाह योयदित्यादि।तत्र तयोः तत्साध्य-

नत्वाभिमताव्यापकः। अनौपाधिकत्वज्ञानञ्च न व्या-

———

त्ताव्यापकत्वे एकरूपेण विवक्षिते न तूपाधिः। साध्यव्यापकत्वं साध्यनिष्ठव्याप्तिनिरूपकत्वं सा च यावदुपाधिव्यापकव्यापकत्वरूपानौपाधिकत्वज्ञानादेव ग्राह्या, उपाधिव्यापकयावदर्थान्तर्गतस्य चोपाधेः साध्यव्यापकत्वग्रहश्च साध्यनिष्ठव्याप्तिग्रहादित्यन्योन्याश्रय इत्यत आह अनौपाधिकत्वेति। व्यापकत्वं व्या-

———

कतद्धेतुकानुमान इति यावत्। ननु वन्हिमान् धूमादित्यादौ द्रव्यत्वादिप्रकारेण साध्यव्यापकस्य वन्ह्यादेस्तत्तद्वन्हित्वादिप्रकारेण साधनाव्यापकत्वात्तत्रातिव्याप्तिरत आह एकरूपेणेति। तृतीयार्थोऽभेदस्तथा च साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वरूपं साध्यव्यापकत्वं यद्रूपाभिन्नं साधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वरूपं साधनाव्यापकत्वमपि तद्रूपाभिन्नं ग्राह्यमित्यर्थः। साध्यवन्निष्ठाभावप्रतियोगित्वाभावरूपमेव मूलोक्तं साध्यव्यापकत्वं यद्रूपावच्छेद्यं साधनवन्निष्ठाभावप्रतियोगित्वरूपं साधनाव्यापकत्वमपि तद्रूपावच्छेद्यं ग्राह्यमित्यर्थः। प्रगल्भमते प्रतियोगित्वस्यैव तदभावस्याप्यव्याप्यवृत्तित्वेन धर्मावच्छेद्यत्वसम्भवादित्यप्याहुः। नव्यास्तु यद्व्यापकत्व इति। यदभावव्याप्याभावप्रतियोगित्वे यद्वद्वृत्त्यभावप्रतियोगित्वे चेत्यर्थः। रूपेणेत्यत्रावच्छिन्नत्वमेव तृतीयार्थः इति प्राहुः। एकरूपेणेत्युपलक्षणमेकसम्बन्धेनेत्यपि द्रष्टव्यं तेन संयोगेन वन्ह्यादिव्यापकस्य वन्ह्यादेः समवायेन धूमाद्यव्यापकत्वेऽपि नातिव्याप्तिः। साध्यवन्निष्ठाभावप्रतियोगित्वरूपव्यापकत्वादिप्रवेशेऽन्योन्याश्रयासम्भवाद्व्यापकत्वमन्यथा निर्वक्ति साध्यनिष्ठेति। व्याप्तेर्निरूपकत्वमित्यसमस्तपाठः सम्यक्। व्याप्तिनिरूपकत्वमिति पाठे वृत्तिशब्दैकदेशव्याप्तेः सा चेत्यनेन परामर्शेऽव्युत्पत्तिरिति ध्येयम्। साधनं येषां व्य-

सिज्ञाने हेतुरतो व्यापकत्वादिज्ञानेनाऽन्योन्याश्रयः । यद्वा व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्प्र-

---

प्तिनिरूपकत्वं सा चाऽनौपाधिकत्वग्रहादगृहीतव्या तत्प्रविष्टव्याप्ति-ज्ञानमपि अनौपाधिकत्वान्तरग्रहादित्यनवस्थेत्यत आह अनौपा-धिकत्वेति । अन्योन्याश्रयपदमनवस्थापरमिति सम्प्रदायः । अ-

---

भिचारि तेषां व्यभिचारिणा साध्येन समं सामानाधिकरण्यं यद्य-नौपाधिकत्वं तदा तज्ज्ञानस्य साध्यनिष्ठोपाधिव्याप्तिधीहेतुत्वेऽपि तत्र तादृशव्याप्तेरप्रवेशान्नान्योन्याश्रयः सम्भवतीत्यतः प्रकारा-न्तरेणानौपाधिकत्वं निरुच्याह सा चेति। उपाधिनिरूपिता साध्यनि-ष्ठव्याप्तिश्चेत्यर्थः । साध्यनिष्ठव्याप्तिग्रहादिति । तत्रापि साध्यव्याप-कत्वस्य साध्यनिष्ठव्याप्तिनिरूपत्वस्वरूपस्यैव निवेशादिति भावः । अन्योन्याश्रय इति । धूमादिसाध्यधर्मिकार्द्रेन्धनाद्युपाधिव्याप्तिग्रहं प्रत्यार्द्रेन्धनव्यापकीभूतयावद्व्यापकको धूम इत्याकारकमार्द्रेन्ध-नीयानौपाधिकत्वज्ञानं कारणं वाच्यं तत्रार्द्रेन्धनव्यापकया-वदन्तर्गतमार्द्रेन्धनमपीति तत्रापि धूमनिष्ठव्याप्तिनिरूपकत्वल-क्षणस्य ज्ञानमपेक्षितं तथा चार्द्रेन्धने धूमनिष्ठव्याप्तिनिरूप-त्वग्रहे सत्यनौपाधिकत्वज्ञानसम्पत्त्या धूमधर्मिण्यार्द्रेन्धनीयव्या-प्तिग्रहस्तादृशव्याप्तिग्रहे च विशेषणज्ञानसम्पत्त्या धूमनिष्ठव्या-प्तिनिरूपकत्वरूपं धूमव्यापकत्वमार्द्रेन्धने ग्राह्यमित्यन्योन्या-श्रय इत्यर्थः । प्राचीमतमाह व्यापकत्वमित्यादिना । साध्यनिष्ठ-व्याप्तिनिरूपकत्वमेव चार्द्रेन्धनाद्युपाधेः साध्यव्यापकत्वं सा-ध्यनिष्ठा चोपाधिव्याप्तिरुपाधिव्यापकयावद्व्याप्यत्वरूपस्यानौपा-कत्वस्य ज्ञानाद्ग्राह्या तथा च तन्निविष्टस्योपाधिनिष्ठव्याप्तिनिरूप-कत्वपर्यवसन्नस्योपाधिव्यापकत्वस्य द्रव्यत्वादौ ज्ञानमुपाधौ द्र-व्यत्वादिव्यापकयावद्व्याप्यत्वरूपस्य द्रव्यत्वाद्यनौपाधिकत्वस्य ज्ञानादेव वाच्यमेवं तन्निविष्टस्यापि द्रव्यत्वादिनिष्ठव्याप्तिनिरूप-

तियोगित्वञ्चाव्यापकत्वम् । प्रतियोगित्वञ्च तदधिकर-

---

व्याप्यवृत्तीनां व्यापकत्वमुपपादयितुमाह प्रतियोगित्वञ्चेति । तद-धिकरणानधिकरणत्वं तदधिकरणाधिकरणत्वविरोधि यत् प्रतियो-गित्वं प्रतियोगिव्यधिकरणाभावप्रतियोगित्वं तदिह गृहीतव्यम् ।

---

कत्वपर्यवसन्नस्योपाधिद्रव्यत्वादिव्यापकत्वस्य सत्त्वादौ ज्ञानं सत्त्वादिव्यापकयावद्व्याप्यत्वज्ञानाधीनमित्येवं क्रमेणानवस्थेत्य-र्थः । सम्प्रदाय इत्युक्त्याऽन्योन्याश्रयपदस्य मुख्यार्थे क्षतिरस्वरसः सूचितः । ननु व्यापकत्वं यदि व्याप्तिनिरूपकत्वं तदा व्यापकसामा-नाधिकरण्यरूपायास्तन्निष्ठव्याप्तेरपि व्यापकत्वगर्भत्वादात्माश्रय-तादवस्थ्यमेवेत्यस्वरसान्मणिकारो व्यापकत्वमन्यथा निर्वक्ति चेति । अव्याप्यवृत्तीनामिति । तथा च धूमवान् वन्हेरित्यादौ धूम-संयोगस्य उपाधित्वार्थं वन्हिमान् धूमादित्यादौ वन्हिसंयोगादेरु-पाधित्ववारणार्थं चायं मूलग्रन्थ इति भावः । ननु तदधिकरणे-त्यत्र तच्छब्देन साध्यादिमन्निष्ठाभावस्य परामर्शात् तदधिकरणा-नधिकरणत्वं साध्यादिमन्निष्ठाभावाधिकरणावृत्तित्वं तथा च त-देव यदि साध्यादिमन्निष्ठाभावप्रतियोगित्वं तदा वृत्तिमन्मात्रस्यैव साध्यादिमन्निष्ठगगनाभावाधिकरणवृत्तित्वात् धूमवान् वन्हेरित्यादौ घटादेरपि साध्याव्यापकत्वमार्द्रेन्धनाद्युपाधेरपि साधनाव्यापक-त्वं न स्यादतो लक्षणप्रविष्टस्य स्वरूपसम्बन्धात्मकप्रतियोगित्व-स्यैव विशेषणान्तरदानाभिप्रायेण व्याचष्टे तदधिकरणेति । साध्या-दिमन्निष्ठस्य स्वनिरूपकाभावस्याधिकरणवृत्तित्वविरोधि यत् प्रति-योगित्वं तदेव साध्यव्यापकत्वादौ गृहीतव्यं निवेशनीयमित्यर्थः । स्वं प्रतियोगित्वम् । तन्निरूपकत्वेनाभावस्य निवेशनादुक्तक्रमेणग-गनाद्यभावमादाय न दोषः । ननु तदधिकरणावृत्तित्वमित्यत्र वृत्ति-रुपाधिताघटकसम्बन्धेन वाच्या अन्यथा वृत्तिमन्मात्रस्यैव स्वाभा-वति कथं चित् कालिकादिसम्बन्धेन वर्त्तमानत्वात् पूर्वदोषापत्तेः ।

णानधिकरणत्वमिति वदन्ति । तन्न । साधनपक्षधर्मावच्छि-
न्नसाध्यव्यापकोपाध्यव्याप्तेः । न च तयोरनुपाधित्वम्,
दूषकताबीजसाम्यात्, मित्रातनयत्वेन श्यामत्वसाधने
शाकपाकजत्वस्य प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे
साध्ये उद्भूतरूपवत्त्वस्य च शास्त्रे प्रयोजकत्वेनोपाधि-
त्वस्वीकाराच्चेति, पक्षेतरेऽतिव्याप्तिश्च । न च व्यतिरेके

---

प्रतियोगिव्यधिकरणत्वेनाभावो विशेषणीय इति फलितोऽर्थः ।
साधनेति । अनयोरसङ्करोऽग्रे दर्शयिष्यते । पक्षेतरेति । पक्ष

---

तथा च जातिमान् भावत्वादित्यादौ समवायेन सत्त्वाद्युपाधाव-
व्याप्तिः । साधनवन्निष्ठसत्त्वाभावाधिकरणसमवेतत्वाप्रसिद्ध्या त-
द्विरोधिप्रतियोगित्वस्य सत्त्वादावसम्भवेन साधनाव्यापकत्वा-
सम्भवादत आह प्रतियोगिव्यधिकरणाभावेति । तद्वन्निष्ठेत्यादिः ।
तन्निष्ठाभावप्रतियोगित्वस्य प्रागेव लब्धत्वेन ज्ञानायोगादभावे प्रतियो-
गिवैयधिकरण्यबोधनमेवैतद्ग्रन्थस्योद्देश्यमित्याह प्रतियोगिव्य-
धिकरणत्वेनेति । न चायं महाकालो द्रव्यत्वादित्यादौ कालिकसम्ब-
न्धेन घटाद्युपाधावव्याप्तिः साध्यवत्युपाधिताघटककालिक-
सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धेरिति वाच्यम् ।
सिद्धान्तलक्षणोक्तदिशा गगनाभावस्यैव तथात्वादिति भावः ।
ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वस्य वायुः प्रत्यक्षः
प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र उद्भूतरूपवत्त्वस्य च द्वयोरेव वक्ष्यमा-
णोपाध्योः साधनावच्छिन्नसाध्यव्यापकत्वसम्भवात् साधनपक्षध-
र्मावच्छिन्नसाध्यव्यापकयोः पृथगुपादानं विफलमत आह अनयोरि-
ति । अग्रे इति । घटः प्रत्यक्षो विभुत्वादित्यत्र साधनावच्छिन्नसाध्य-

इतरो यस्मादिति बहुव्रीहिः, भावप्रधानश्च निर्देशः । पक्षमितरयति व्यावर्त्तयतीति व्युत्पत्त्या तदवृत्तिधर्म्मवचन इत्यपि कश्चित् । तादात्म्येन धर्म्मिण एव व्यापकत्वमिति तु परमार्थः । अत एवाऽग्रे पर्वतेरान्यत्वादिति साधु सङ्गच्छते । इतरथा तु व्यापकाभावस्येव व्यापकवदन्योन्याभावस्यापि गमकत्वमाश्रित्य स-

———

व्यापकमात्मत्वं पक्षधर्मवहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकं रूपवत्त्वं च मिथोऽसङ्कीर्णमुपाधिरित्यग्रे स्वयं वाच्यत्वादिति भावः । केचित्तु मूले मित्रातनयत्वेनेत्यस्य काकादावित्यादिः, प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र च प्रत्यक्षस्य स्पर्शो विषयत्वं यत्रेति व्युत्पत्त्या प्रत्यक्षस्पर्शपदं साक्षात्क्रियमाणपरं तथा च मूलकृतैव साधनपक्षधर्मावच्छिन्नसाध्यव्यापकयोरुपाध्योरसङ्करस्थलमुपन्यस्तमिति प्राहुः । पक्षादितर इति तत्पुरुषे सर्वनामकार्य्यप्राप्त्या पक्षेतरस्मिन्निति प्रयोगापत्तेराह पक्ष इतरो यस्मादिति। तथा चानुपसर्जनस्यैव सर्वनामकार्य्यमिति इतरशब्दस्योपसर्जनत्वान्न तदिति भावः । ननु पक्षेतरस्य ज्ञेयत्वादेः सर्वत्रैव साधनवति सत्त्वान्न तस्य साधनाव्यापकत्वमत आह भावप्रधानश्चेति । न चैवं धर्मिशक्तस्येतरपदस्य धर्मपरतामात्रेणैव उपसर्जनतया सर्वनामकार्यासम्भवात् बहुव्रीह्यादरो व्यर्थ इति वाच्यम्। समासे गुणीभूतस्यैव सर्वादेः सर्वनामकार्यानिषेधात्। अन्यथा लघुतरघटत्वावच्छिन्नशक्तिकस्य तदादिपदस्य गुरुतरकम्बुग्रीवादिमत्त्वप्रकारेण लक्षणास्थलेऽपि तस्मिन् घटत्वमित्यादिप्रयोगानापत्तेः तत्राप्युपसर्जनत्वस्याऽविशिष्टत्वादित्यभियुक्ताः । भावप्रधानश्चेत्यत्र भावे प्रधानो वेत्यर्थः इत्यपि केचित । अत्र पक्षावृत्तिधर्मपरत्वेऽग्रे पर्वतेतरान्यत्वादित्यत्रापि पर्वतावृत्तिधर्माभावबोधनार्थमाधुनिकलक्षणा स्यादित्यस्वरसः कश्चिदित्युक्त्या सूचितः। नन्वितरपदस्य भावप्रधाननिर्देशत्वे समासलब्धादन्यत्रैवार्थे तस्योपसर्जनत्वात्ततः सर्वनामकार्य्यं दुर्वारमतो भावप्रधाननिर्देशम्परित्यज्यैव प्रकारान्तरमाह तादात्म्येनेति । व्यापकत्वमिति । तथा च तादात्म्येन साध्यव्यापकस्य पक्षेतरस्य तेन सम्बन्धेन साधनाव्यापकत्वात्त-

पर्वतेतरान्यत्वादित्यत्र इतरान्यत्वस्यासिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वान्न स उपाधिः, बाधोन्नीतस्याप्यनुपाधितापत्तेः । न चेष्टापत्तिः, इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्त्यग्रहेण

---

ङ्गमनीयम् । व्यतिरेक इति । यद्यपि व्यापकाभावमुद्रया गमकत्वे तथा वैयर्थ्यं न दोषाय, तथापि वास्तववैयर्थ्यशून्यत्वमेव विशेषणं देयमिति भावः । यत्तु ययोर्व्यतिरेकव्याप्तिस्तयोरेव व्याप्यवृत्तिव्यतिरेकिणोरन्वयव्याप्तिरिति नियमः,

---

स्योपाधित्वं नानुपपन्नमिति भावः । पक्षेतरस्य तादात्म्येनोपाधितायां मूलस्वरसमप्याह अत एवेति । सङ्गच्छते इति । अन्यथा पर्वतेतरत्वस्य साध्यव्यापकतायामितरत्वाभावादित्येवं तत्र ब्रूयादिति भावः । ननु पर्वतेतरत्वादेरित्यग्रिमग्रन्थदर्शनात् पक्षेतरस्यापि उपाधित्वं मूलस्वरससिद्धमेवेत्यतस्तदनुसारेणापि पर्वतेतरान्यत्वादिति सङ्गमयति इतरथा त्विति । पक्षेतरत्वस्य धर्मस्योपाधित्वाभिप्रायादित्यर्थः । गमकत्वं व्याप्याभावसाधकत्वम् । ननु साध्यव्यापकस्य पक्षेतरत्वस्याभाववत्तानिश्चयाज्जायमानपक्षधर्मिकसाध्यभावानुमानं प्रति पक्षेतरत्वाभावनिष्ठायां साध्याभावीयव्याप्तौ व्यर्थविशेषणत्वस्यादोपत्वात् व्यतिरेके व्यर्थविशेषणत्वादित्यादिमूलासङ्गतिरित्याशङ्कते यद्यपीति । तथा वैयर्थ्ये उपाध्यभावनिष्ठसाध्याभावीयव्याप्तौ व्यर्थविशेषणत्वम् । तथापि वास्तवेति । यद्व्यतिरेकत्वं यद्वदन्यत्वं वा साध्यभावव्याप्यतानवच्छेदकविशेषणाघटितं तत्वे सति साध्यव्यापकसाधनाव्यापकत्वमेवोपाधित्वं वाच्यमिति भावः । विशेषणमदत्त्वैव पक्षेतरत्वं वारयतः प्रगल्भस्य मतमाह यत्त्विति । ययोर्यादृशधर्मद्वयावच्छिन्नयोः । व्याप्यवृत्तिव्यतिरेकिणोरिति । व्याप्यवृ-

त्तियों व्यतिरेकस्तद्धर्मोस्तत्प्रतियोगिनोरिति यावत्। तयोरेवेति। तादृशधर्मद्वयावच्छिन्नयोरेवेत्यर्थः। तथा च व्याप्यवृत्त्यभावप्रतियोगितावच्छेदको यो धर्मो व्याप्यवृत्त्यभावप्रतियोगितावच्छेदकीभूतयद्धर्मावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकः सोऽवश्यं स्वावच्छिन्नाभावत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकीभूततद्धर्मावच्छिन्नाभावत्वक इत्येवं नियमात् पर्वततरत्वं न वन्हित्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकं स्वावच्छिन्नाभावत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकीभूतवन्हित्वावच्छिन्नाभावत्वकत्वाभावादिति क्रमेण व्यापकनिवृत्त्या व्याप्यीभूतस्य साध्यव्यापकतावच्छेदकत्वस्य निवृत्तिः पक्षेतरत्वे साधनीयेति न तस्योपाधित्वम्। तादृशं च स्वं द्रव्यत्ववन्हिसामग्रीत्वादिकमेव सुलभमतो न हेत्वप्रसिद्धिः। अत्र च व्याप्ताविदं संयोगि प्रमेयं वा द्रव्यादित्यादौ द्रव्यत्वाद्यवच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकं स्वावच्छिन्नाभावत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकीभूतद्रव्यत्वावच्छिन्नाभावत्वकाद्भिन्नं संयोगत्वप्रमेयत्वादौ व्यभिचारस्य वारणाय प्रथमप्रतियोगितावच्छेदकान्तम्। न च विषयत्वादिसम्बन्धेन संयोगत्वाद्यवच्छिन्नाभावस्यापि व्याप्यवृत्तित्वात्तुक्तव्यभिचारतादवस्थ्यम्। व्यापकताघटकसम्बन्धावच्छिन्नस्यैव प्रतियोगित्वस्यावच्छेदकताया निवेश्यत्वात्। न च रूपाभाववान् घटत्वादित्यादौ जलपरमाणुरूपात्मकस्य व्याप्यवृत्तिव्यतिरेकस्य प्रतियोगितावच्छेदके रूपाभावत्वे स्वावच्छिन्नाभावत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकीभूतघटत्वाभावत्वकत्वाभावाद्व्यभिचार इति वाच्यम्। अभावाभावस्यातिरिक्ततया रूपाभावत्वावच्छिन्नाभावस्यावच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वदलेनैव वारणात् घटादौ तस्यावच्छिन्नवृत्तिकत्वात्, यद्धर्मावच्छिन्नस्य व्यतिरेकसामान्यं व्याप्यवृत्ति तादृशधर्मस्यैव वा हेतौ निवेश्यत्वादिति। द्रव्यं संयोगादित्यादौ संयोगत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदके द्रव्यत्वत्वादौ व्यभिचारः संयोगत्वावच्छिन्नाभावस्य केवलान्वयित्वेनाभावत्वस्यैव लघोस्तद्व्याप्यतावच्छेदकतया द्रव्यत्वत्वावच्छिन्नाभावत्वस्याऽतथात्वादतो भूतान्तं यद्धर्मविशेषणम्। न च विषयितादिसम्बन्धावच्छिन्नसंयोगसामान्याभावस्य व्याप्यवृत्ति-

इह तु व्यर्थविशेषणतया व्यतिरेके व्याप्त्यभावादन्वयेऽपि न तथा, अतः साध्याव्यापकत्वान्नायमुपाधिरिति भाव इति । तन्न । अहेतुकत्वशरीराहेतुकत्वयोर्व्यभिचारात्, एवमपि संयोगादौ के-

---

त्वादुक्तदोषतादवस्थ्यम् । तत्रापि व्याप्यताघटकसम्बन्धावच्छिन्नस्यैव प्रतियोगित्वस्यावच्छेदकतायाः प्रवेश्यत्वात् । न चोक्तरीत्या पर्वतभेदत्वादिप्रकारेण पक्षेतरत्वस्योपाधित्ववारणेऽपि तद्भेदव्यक्तित्वादिप्रकारेण तस्योपाधित्वं दुर्वारं तद्व्यतिरेकव्याप्तौ व्यर्थविशेषणत्वासम्भवात् तादृग्रूप्येण साध्यव्यापकत्वे बाधकाभावादिति वाच्यम् । पक्षभेदत्वादिप्रकारेणैव पक्षेतरस्य कथायामुद्भावनात् प्रकारान्तरेण तस्योपाधित्वेऽपि क्षत्यभावादिति । केचित्तु व्याप्यवृत्तिव्यतिरेकिणोर्हेतुसाध्ययोरिति यथासंख्यमन्वयात् यत्र व्यतिरेकप्रतियोगितावच्छेदकत्वे सति व्याप्यवृत्तितानिरूपकयद्धर्मावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकत्वं तत्र स्वावच्छिन्नाभावत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकीभूततद्धर्मावच्छिन्नाभावत्वकत्वामत्येव व्याप्तिः । न च संयोगि द्रव्यत्वादित्यत्र संयोगत्वे व्यभिचारः, प्रतियोगिवैयधिकरण्याघटितस्यैव व्यापकत्वस्य हेतौ प्रवेशात् संयोगत्वस्य द्रव्यत्वव्यापकतानवच्छेदकत्वात् । न चैवमप्याकाशाभाववान् द्रव्यत्वादित्यादावाकाशाभावत्वे व्यभिचारः, नव्यमते गगनाभावत्वावच्छिन्नाभावानुपगमेन तस्य व्यतिरेकिप्रतियोगितानवच्छेदकत्वात् वृत्तिमद्व्यतिरेकप्रतियोगितावच्छेदकत्वस्यैव वा प्रवेशत्वादित्याहुः । तच्चिन्त्यम् । व्याप्यवृत्तित्वस्यैव व्यतिरेकित्वस्य चावश्यं हेत्वन्वयित्वात्, अन्यथैवमपीत्यादिना केवलान्वयिसाध्यके पक्षेतरोपाधित्वसम्भादनस्याग्रे सन्दर्भविरोधापत्तेरिति दिक् । अहेतुकत्वेति । इदं शरीराहेतुकमहेतुकत्वादित्यत्र शरीरपदवैयर्थ्येन व्यतिरेकव्याप्तेरभावेऽप्यन्वयव्याप्तिसत्त्वेन व्यभिचारादित्यर्थः न चोक्तव्याप्तौ भावभिन्नस्यैव व्यतिरेकस्य प्रतियोगितावच्छेदकत्वप्रवेशाददोषः शरीराहेतुकत्वे भावरूपस्यैव व्यतिरेकस्य प्रतियोगित्वादिति वाच्यम् । तथा सति पर्वतेतरान्यत्वस्यापि पर्वत-

तत्सार्थकत्वात् । वस्तुगत्या साध्यव्यापकः पक्षेतर उपाधिरिति चेत्। अस्तु तथा, तथापि पक्षातिरिक्ते साध्य-

———

वलान्वयिनि च साध्ये पक्षेतरातिव्याप्तितादवस्थ्याच्च । वस्तुगत्येति । तथा च पक्षे साध्यवति तदितरत्वं साध्याव्यापकं तद्रहिते च बाधोन्नीतत्वादुपाधिरेवेति भावः । यद्विषयतया ज्ञानस्य प्रतिबन्धकत्वं तदेव प्रकृते उपाधित्वं वाच्यं नान्यदनुपयुक्त-

———

त्वादिस्वरूपस्यैव व्यतिरेकस्य प्रतियोगित्वात् प्रकृतासङ्गतिप्रसङ्गादिति भावः । यद्यपि निर्धूमो निर्वह्नित्वात् इत्यत्रैव धूमाभावाभाववत्त्वावच्छिन्नव्याप्यतायां धूमपदस्याप्रसिद्धिवारकत्वेन व्यर्थविशेषणतया व्यतिरेकव्याप्तिविरहेऽप्यन्वयव्याप्तिसत्त्वेन व्यभिचारसम्भवाद्हेतुकत्वादिपर्यन्तानुसरणं विफलम् । तथापि तत्रान्वयव्याप्तिविरहेऽपि न क्षतिः धूमाभावे वन्ह्यभावव्यापकत्वाग्रहेऽपि धूमव्यापकवन्ह्यभाववत्तानिश्चयादेव निर्धूमवत्त्वानुमितेः सम्भविष्वात् । न चोक्तस्थलेऽप्यन्वयव्याप्तेरनभ्युपगमान्न व्यभिचारः शरीरहेतुकत्वव्यापकहेतुकत्वाभाववत्तानिश्चयादेव शरीरहेतुकत्वाभावानुमितिसम्भवादिति वाच्यम् । शरीरपदवैयर्थ्येन शरीरहेतुकत्वत्वस्य व्याप्यतानवच्छेदकत्वादिति भावः । ननूक्तस्थलेऽप्यन्वयव्याप्तेरनभ्युपगमान्न दोष इत्युक्तावप्याह एवमपीति । व्यतिरेकव्याप्तिविरहेण पक्षेतरत्वे व्याप्यवृत्तिव्यतिरेकिसाध्यस्य व्यापकत्वाभावेऽप्यव्याप्यवृत्तेः । केवलान्वयिनश्च साध्यस्य व्यापकतायास्तत्र सत्त्वे बाधकाभावादिति भावः । तद्रहिते साध्यरहिते पक्ष इत्यनुषज्यते।बाधोन्नीतत्वादुन्नीतबाधकत्वात्। अग्न्याहितादित्वाद्विशेषणस्य प्राग्विन्यासः । ननु वस्तुगत्या साध्यव्यापकत्वाभावेन पक्षेतरस्यानुपाधित्वशङ्कायामस्तु तथेत्यादिना तत् दूषकत्वप्रसञ्जनं न बाधक्षमतो मूलस्याभिप्रायं वर्णयन्नाह यद्विषयतयेति । प्रकृते दूष-

व्यापकताग्रहादुपाधेर्दूषकत्वम् । तच्च तत्राप्यस्ति । अ-
न्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रमुच्छिद्ये-

---

त्वात् तच्चेदुक्तं रूपं तदा तद्वत्तया पक्षेतरस्यापि ग्रहादनुमितिमा-
त्रोच्छेद इत्यभिप्रायवानाह अस्त्विति । उपाधिमात्रमिति सत्प्र-
तिपक्षोन्नायकतया दूषकत्वमिति मते, इतरथा तु पक्षावृत्तेरुच्छेदो

---

णौपयिकोपाधिनिरूपणप्रस्तावे । नान्यदिति । नेतरभेदाद्यनुमापकमु-
पाधित्वं वाच्यम् अनुमानदूषणोपाधिजिज्ञासायां तस्यानुपयुक्तत्वादि-
त्यर्थः । उक्तरूपं पक्षातिरिक्ते साध्यव्यापकत्वादिरूपम् । तथा च वस्तु-
गत्या साध्यव्यापकत्वं प्रकृते उपाधिस्वरूपमेव नेति तदभिधाने-
र्थान्तरमिति भावः । नव्यास्तु ननु शाकपाकजत्वादिकमिव पक्षेतर-
त्वमपि किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वेन वस्तुगत्योपाधिरि-
त्येव, कथायान्तु नोद्भाव्यते दूषकताबीजविरहादित्याशयेन शङ्कते
मूले वस्तुगत्येति । दूषकताबीजसत्त्वात्तस्योपाधित्वेनोद्भावनं दुर्वार-
मित्याशयेन परिहरति अस्तु तथेत्यादीति प्राहुः । मूले ऽन्यथेति । यदि
पक्षातिरिक्तविशेषणाप्रवेशेन साध्यव्यापकतामात्रस्यैव ग्रहो दूषकता-
बीजं तदा पक्षे साध्यसन्देहादनुपाधित्वे उपाधित्वघटकसाध्यसा-
मान्यव्यापकत्वस्यानिश्चये उपाधिमात्रमुपाधित्वनिश्चयः क्वापि न
स्यादित्यर्थः । ननु पक्षे साध्यसन्देहदशायामपि पक्षवृत्तित्वेन नि-
श्चितस्यैवोपाधेः साध्यव्यापकत्वनिश्चयसम्भवादुपाधिमात्रोच्छे-
दासम्भव इत्यत आह दीधितौ सत्प्रतिपक्षेति । उपाधेः पक्षवृत्तित्व-
निर्णयदशायां साध्याभावव्याप्यस्य तदभावस्य पक्षेऽनिश्चयेन सत्-
प्रतिपक्षस्यैवासम्भवादिति भावः । इतरथा व्यभिचारोन्नायकतया
दोषत्वमते । पक्षावृत्तेरिति । पक्षावृत्तित्वेन निश्चितस्येत्यर्थः । पक्षावृत्तेर-
प्युपाधेः पक्षेऽभावनिश्चयदशायामुपाधित्वनिश्चयसम्भवेन यथा-
श्रुता सङ्गतिरिति ध्येयम् । ननु विपक्षव्यावर्त्तकविशेषणवत्त्वात्त्या-

त। विपक्षाव्यावर्त्तकविशेषणशून्यत्वं विशेषणम्, तेन बाधोन्नीतपक्षेतरस्य परिग्रहः तत्र पक्षस्यैव विपक्षत्वात् न तु पर्वतेतरत्वादेरिति चेन्न। न हि वस्तु विपक्षाव्यावर्तकविशेषणशून्यं सर्वत्र प्रमेयत्वादेः सत्त्वात्, तत्रोपात्तेति

---

बोध्यः। विपक्षेति। विपक्षव्यावर्त्तकधर्म्मान्तरविशिष्टपक्षेतरत्ववारणाय निषेधद्वयगर्भता। विपक्षाव्यावर्त्तकविशेषणानवच्छिन्नसाध्यव्यापकत्वसाधनाव्यापकत्वशालित्वं तद्विवक्षितमित्याशङ्क्य, पक्षेतरत्वस्योपाधित्वमनङ्गीकुर्वतस्तव मतेनातिव्याप्तिरभिहिता,

---

पि पक्षेतरत्ववारणासम्भवात् अभावद्वयप्रवेशो व्यर्थ इत्यत आह विपक्षेति। येन सम्बन्धेन यद्वैशिष्ट्यावच्छिन्नस्यापरस्योपाधिताघटकसम्बन्धेनाधिकरणत्वं यत्किञ्चिद्विपक्षावृत्ति तदेव तेन सम्बन्धेन विपक्षव्यावर्त्तकं यथा धूमस्य साध्यतायामार्द्रेन्धने स्वरूपसम्बन्धेनार्द्रत्वं तेन सम्बन्धेन तद्वैशिष्ट्यावच्छिन्नस्येन्धनादेरुपाधिताघटकसंयोगसम्बन्धेनाधिकरणतायास्तदयोगोलकात्मकविपक्षावृत्तित्वात् पर्वतेतरत्वादौ च पर्वतादिकं न तथा प्रतियोगितासम्बन्धेन पर्वतवैशिष्ट्यावच्छिन्नस्य च पर्वतेतरत्वस्याधिकरणताया यावद्विपक्षवृत्तित्वादतः प्रतियोगितासम्बन्धेन विपक्षाव्यावर्त्तकं यत् पर्वतात्मकं विशेषणं तेन सम्बन्धेन तद्वत्त्वस्यैव पर्वतेतरत्वे सत्त्वान्न तत्रातिप्रसङ्गः। वन्हिरनुष्णः कृतकत्वादित्यादौ बाधोन्नीतपक्षेतरस्योपग्रहाय यत्किञ्चित्पदम्, अन्यथा वन्हीतरत्वाधिकरणतायाः सौरालोकाद्यात्मकविपक्षवृत्तित्वादसंग्रहापत्तेरिति ध्येयम्। ननु सिद्ध्यसिद्धिव्याघातेनैव शङ्कायाः पर्यवसानात्तथापीत्यादिना दोषान्तरदानं मूलकारस्यासङ्गतमतो व्याघातं निरस्यैव तदवतारयति विपक्षेत्यादि। अत्रावच्छिन्नान्तं साध्यव्यापकत्वमात्रेऽन्वितं न तु साधनाव्यापकत्वेऽपि, व्यर्थत्वात् व्यापकत्व-

विशेषणे सिद्ध्यसिद्धिव्याघातः । तथापि च साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिरतो हेतोर्व्यभिचार एव व्यभिचारे चावश्यमुपाधिरिति पक्षेतर एव तत्रोपाधिः स्यात्, तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम् । अत एवानुमान-

---

वस्तुतो दूषकताप्रयोजकरूपवतस्तस्यानुपाधित्वाभ्युपगमस्तद्वारणाय च विशेषणोपादानं द्वयमपि न युक्तमित्यभिप्रायवानाह तथापीति । तावन्मात्रस्य साध्यव्यतिरेकोन्नयनक्षमसाध्यव्यापकतामात्रस्य

---

योरेकरूपेण विवक्षितत्वादेवातिप्रसङ्गभङ्गादित्यवधेयम् । इत्याशङ्क्येत्यस्याऽऽहेति परेणान्वयः । ननु पूर्वं पक्षेतरेतिव्याप्तेरभिधानात्तस्यालक्ष्यत्वप्राप्तेरिदानीन्तथापीत्यादिना तत्राव्याप्तेरभिधानमसङ्गतमतोऽभिप्रायं पूरयति पक्षेतरत्वस्येत्यादि।दूषकतेति । साध्यव्यापकत्वादिमत्तया ज्ञायमानत्वरूपं यद्दूषकताबीजं तद्वत इत्यर्थः। इदं च यो यदा साध्यव्यापकत्वादिमत्तया गृह्यते स तदोपाधिरित्येवं क्रमेणोपाधेरपि सत्प्रतिपक्षवदनित्यदोषत्वमभिप्रेत्योक्तम् ।इत्थं च मूलस्थं साध्यव्यापकत्वादिपदं तज्ज्ञानपरमेवेति मन्तव्यम् । वारणाय चेति। तस्येत्यनुषज्यते । विशेषणेत्यस्य विपक्षाव्यावर्त्तकविशेषणानवच्छिन्नत्वरूपेत्यादिः। तावत्पदेन साध्यव्यापकत्वसाधनाव्यापकतयोः परामर्शे द्वयोः व्यभिचारोन्नयन एवोपयोगात् पक्षेतरव्यभिचारेण साधने साध्यव्यभिचार एवाऽनुमेयस्तथाच तत्रापि पक्षेतरान्तरस्योपाधित्वप्रसक्त्याऽनुमानमात्रोच्छेदे साध्यव्यभिचारोन्नायकत्वरूपं दूषकत्वमेव पक्षेतरस्य न स्यादिति तदुत्तरस्य दूषणासमर्थोत्तरत्वेन जातित्वसम्भवात् अत एवेत्यादिकाग्रिममूलासङ्गतिरतस्तावन्मात्रस्येति मूलमन्यथा व्याचष्टे साध्यव्यतिरेकेत्यादि।साध्यवत्त्वाग्र-

मात्रोच्छेदकतया जातित्वान्न पक्षेतर उपाधिरित्यपास्तम् । दूषणसमर्थत्वेन जातित्वाभावात् । एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम् । उपाधित्वाभावेऽपि दूषणसमर्थत्वात् । अथोपाधिः स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया दूषणम्, पक्षेतरत्वव्यतिरेकश्च न साध्याभावसाधकोऽसाधारणत्वात्, न तु व्यभिचारोन्ना-

---

दूपकत्वाद्दोषोन्नयनोपयोगित्वात् । जातित्वादिति । तदुत्तरस्येत्यादिः । उपाधित्वाभावेऽपीति । उपाधित्वानङ्गीकारेऽपीत्यर्थः । दूषकताबीजसत्त्वे तस्योपाधित्वं दूषकताबीजश्च न व्यभिचारादेरुन्नायकत्वम् अपि तु सत्प्रतिपक्षस्य, तच्च नास्तीत्यतो न स उपाधिरिति शङ्कते अथेति । व्यभिचारोन्नायकतया । व्यभिचाराद्यु-

---

न्नप्रतिबन्धोपयुक्तस्येत्यर्थः । व्यापकतामात्रस्येति । व्यापकतामात्रेण ज्ञायमानस्येत्यर्थः । मात्रपदेन विपक्षाव्यावर्त्तकविशेषणानवच्छिन्नत्वव्युदासः । तेन पक्षावृत्तित्वविशेषितसाध्यव्यापकताज्ञानस्यैव सत्प्रतिपक्षसत्त्वेपि न क्षतिः।दूषकत्त्वं दोषजनकत्वं तच्च न साध्यव्यापकस्यातो व्याचष्टे दूषकत्त्वादिति । दूषणासमर्थोत्तरस्यैव जातित्वात् पक्षेतरे तदसम्भवादाह तदुत्तरस्येत्यादिरिति।मूले प्रकारान्तरबाधानुन्नीतपक्षेतरान्यत्वादिविशेषणं पूर्वपक्षिणाऽनुपदमेव पक्षेतरस्योपाधित्वस्वीकारादुपाधित्वाभावेऽपीत्यसङ्गतमतो व्याचष्टे उपाधित्वानङ्गीकारेऽपीति । त्वयेत्यादिः । न च दूषणसमर्थत्वे बाधानुन्नीतस्यापि पक्षेतरस्योपाधित्वमिष्यत एव सिद्धान्तिभिरपीति वाच्यम् । तथासत्युपाध्यन्तरवत्तस्यापि कथायामुद्भाव्यतापत्तेरिति भावः । ननु दूषणसमर्थत्त्वेन पक्षेतरस्यालक्ष्यतया तद्वारणार्थं व्यतिरेकेऽसाधार-

यकतया दूषणम्, यथा हि साध्यव्यापकोपाध्यव्याप्यतया हेतोः साध्याव्याप्यत्वं तथा साध्यव्याप्यहेत्वव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिध्येत् व्याप्तिग्राहकस्योभयत्रापि साम्येन विनिगमकाविरहात्, तस्माद्यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापको-

---

न्नायकतया । अव्याप्यतया । अव्याप्यत्वादिना । अव्याप्यत्वम् ।

---

व्याभावे सतीति विशेषणदानाभिप्रायकमथेत्यादिमूलमसङ्गतमतोऽन्यथा अवतारयति दूषकताबीजेति । तस्य पक्षेतरस्य उपाधित्वं स्यादिति शेषः । व्यभिचारादिरित्यादिना साध्यव्याप्यत्वस्योपग्रहः। सत्प्रतिपक्षस्येत्यादि।उन्नायकत्त्वमिति पूर्वेणान्वयः।न स इति।तथा चालक्ष्यस्य तस्य वारणार्थं विशेषणं युक्तमेवेति भावः।व्यभिचारोन्नायकतया दूषकत्वस्याभावं प्रतिज्ञाय यथा हीत्यादिनाग्रे व्याप्यत्वाभावोन्नायकत्वकथनं सन्दर्भविरुद्धमतो व्याचष्टे व्यभिचाराद्युन्नायकतयेति । तथा चादिपदेनाव्याप्यत्वस्यापि लाभान्नाग्रिमग्रन्थसङ्गतिरिति भावः । मूले साध्यव्यापकोपाध्यव्याप्यत्वेनेति।साध्यव्यापकतया निश्चितोपाधेरव्याप्यत्वेनेत्यर्थः । एवं साध्यव्याप्यहेत्वव्यापकत्वेनेत्यस्यापि साध्यव्याप्यतया निश्चितहेतोरव्यापकत्वेनेत्यर्थः । सिद्ध्येदिति । तथा च यथोपाधौ पूर्वोत्पन्नेन साध्यव्यापकत्वनिश्चयेन प्रतिबन्धान्न साध्याव्यापकत्वसिद्धिस्तथा हेतोरपि पूर्वोत्पन्नेन साध्यव्याप्यत्वनिश्चयेन प्रतिबन्धान्न व्यभिचारस्य धीरिति तदुन्नायकत्त्वमुपाधेर्दुर्घटमित्याशयः।ननु पूर्वमुपाधेरेव साध्यव्यापकत्त्वं निश्चितं न तु हेतोरपि साध्यव्याप्यत्वमतो व्यभिचारबुद्धौ बाधकाभाव इत्यत आह व्याप्तिग्राहकस्येति।गगनादौ व्यभिचारादुपाध्यव्याप्यत्वेन साध्यव्यभिचारोन्नायनमसम्भवीत्यतो व्याचष्टे दीधितिकारः अव्याप्यत्वादिनेति। तथा चादिपदेनोपाधिव्यभिचारेणैव साध्यव्यभिचारित्वमुन्नेयमिति

पाधिव्यावृत्त्या साध्याभावोऽपि साधनीयो व्याप्तिग्रहतौ-ल्यादिति दूषकताबीजम्, सोऽयं सत्प्रतिपक्ष एवेति। नैवम्। एवं हि सत्प्रतिपक्ष उपाध्युद्भावनं न स्यात् सत्प्रतिपक्षान्तरवत्। किञ्चैवं बाधोन्नीतोऽपि पक्षेतरो

---

अव्याप्यत्वादि। सत्प्रतिपक्षान्तरवदिति। व्याप्तिपक्षधर्मतारूपबल-सत्त्वेनैकेनापि बहूनां प्रतिरोधसम्भवात् बहुत्वस्याऽबलत्वात्। यच्च प्रमाणतत्त्वबोधादौ बहुत्वमपि बलमुक्तम् तन्न सत्प्रतिपक्षताया-म्, किन्त्वेकत्राङ्गभङ्गप्रसक्तौ। बहुषु तत्कल्पनागौरवमेकत्र च ला-घवमिति तर्कोत्थापकतयेति, नोपाधेः सत्प्रतिपक्षोत्थापकतया तत्र दूषणत्वसम्भव इति भावः। एवं सत्प्रतिपक्षोन्नायकतया दूषकत्वे।

---

भावः। व्यभिचारोन्नयनपक्षस्यापि दूष्यत्वेनोपक्रान्तत्वात्तदनभिधान-न्यूनतामपाकर्त्तुं व्याचष्टे अव्याप्यत्वादीति। तथा चादिपदेन सा-ध्यव्यभिचारस्य लाभान्न न्यूनतेति भावः। यद्यप्युपाध्यव्याप्यतये-त्यादावव्याप्यपदं सर्वत्र व्यभिचारार्थकमित्येव व्याख्यातुमुचितं साध्यव्यभिचारोन्नायकत्वखण्डनतयैव मूलसङ्गतेस्तावतापि सत्प्र-तिपक्षोन्नायकत्वमात्रेण दूषकतां परिशेषयितुमेतावान् प्रयास इति ध्येयम्। ननु बहुतरस्य विरोधिपरामर्शस्य साध्यानुमितिविरोधि-तया बहुत्वरूपबलसम्पत्त्यर्थमेव प्रतिपक्षस्थलेऽपि प्रतिपक्षान्तरमु-द्भावयितुमुचितमेवेत्यत आह व्याप्तीति। बहुत्वस्याबलत्वादिति। प्रति-पक्षबहुत्वस्यानुमितिविरोधितायामनुपयुक्तत्वादित्यर्थः। नन्वेवं प्रत्य-साकं सम्यंचो बहवश्च हेतव (?) इत्यादिप्राचीनग्रन्थविरोध इत्यत आह यच्चेति। बलमुपयोगि। एकत्राङ्गभङ्गप्रसक्ताविति। साध्यतदभाव-साधकयोः परामर्शयोरेकत्र अङ्गस्यानुमित्युपयुक्तस्य परामर्शधर्मिक-भ्रमत्वज्ञानस्याभावस्य भङ्गो विरहो भ्रमत्वज्ञानमिति यावत्, तस्य

नोपाधिः स्यात्, व्यतिरेकेऽसाधारण्यात् । ननु बाधे नोपाधिनियमः धूमेन ह्रदे वह्निसाधने तदभावात्, न तु हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः प्रत्यक्ष वह्नौ कृ-

———

बाधस्यानिश्चयेऽसाधारण्यान्निश्चये च वैयर्थ्यात् मा भूत् सोऽप्युपाधिरित्यभिप्रायेण शङ्कते नन्विति । हेतुमतीति । न चासङ्कीर्णबा-

———

प्रसक्तौ कर्त्तव्यतायां बहुषु परामर्शेषु तत्कल्पने भ्रमत्वरूपस्याङ्गभङ्गस्य कल्पनागौरवं तत्तद्बहुतरभ्रमेषु विशिष्य दोषाणां हेतुत्वापत्त्या गौरवमेकत्र च परामर्शे तत्कल्पने लाघवं दोषाणामल्पहेतुत्वकल्पनयेत्येवं तर्कोत्थापकतयैव बहुत्वं बलमुक्तमित्यर्थः।तथा च यत्रैतादृशतर्को नावतरति तत्रैव प्रतिपक्षे प्रतिपक्षान्तरवदुपाध्युद्भावनं न स्यादिति मूलकृतामाशयस्तेन प्रतिपक्षस्थले प्रतिपक्षान्तरस्यानुद्भाव्यत्वे तद्बहुत्वस्यालीकतया कुतस्तस्याङ्गभङ्गोपयुक्तलाघवाद्युत्थापकत्वमित्यपास्तम्। किञ्चैवमित्यत्रैवमित्यस्य सत्प्रतिपक्षे उपाधेरनुद्भाव्यत्वे इति नार्थस्तस्य बाधोन्नीतानुपाधित्वाप्रयोजकत्वाद्तोऽन्यथा व्याचष्टे एवमिति । ननु बाधसत्त्वे पक्षे एव तदितरत्वाभावस्य साध्याभावसहचारग्रहसम्भवात् व्यतिरेकेऽसाधारण्यादित्यसङ्गतमत आह बाधकस्यानिश्चय इति । ननु बाधस्य निश्चयदशायामेव बाधस्थलीयः पक्षेतर उपाधिर्वाच्य इत्यत आह निश्चये चेति । बाधस्येत्यनुषज्यते। वैयर्थ्यादिति। बाधनिश्चयादेवानुमितिप्रतिबन्धसम्भवादिति भावः । ननु वन्हिरनुष्णः कृतकत्वादित्यादिबाधस्थले व्यतिरेकेऽसाधारण्यभिया वन्हीतरत्त्वादिरूपस्य पक्षेतरस्यानुपाधित्वेऽपि तेजोभिन्नत्वादेरुपाधित्वे बाधकाभावात् सामान्यत एव बाधे नोपाधिनियम इत्याशङ्कनमनुचितमत आह माभूत् सोपीति।बाधस्थलीयः पक्षेतरोऽपीत्यर्थः। तथा च नोपाधिनियम इत्यस्य न पक्षेतरोपाधिनियम इत्यर्थः। अन्यथा बाधोन्नायकतया वन्हिसामग्र्यादेस्तत्रोपाधित्वसम्भवादिति भावः। धूमेनेत्यादिकं व्यभिचारोन्नायकतावादिमतेन । मूले हेतुमतीत्यादि ।

तकत्वेनाऽनुष्णत्वे साध्येऽतेजस्त्वादेरुपाधित्वसम्भवादिति चेत् । न । तेजोमात्रपक्षत्वेऽतेजस्त्वं विनान्यस्य

---

धस्थले व्यभिचारः, प्रतियोगिव्यधिकरणसाध्याभावस्यैव प्रकृते बाधत्वात् तदनभ्युपगमाद्वा । अतेजस्त्वं विनेति । तत्समशीलं विना शुद्धसाध्यव्यापकस्योपाधेरभावादित्यर्थः । तेन भास्वररूपशून्यत्वादे रूपवत्तावच्छिन्नसाध्यव्यापकगुरुत्वादेश्च सत्त्वेऽप्यदोषः । न चैतद्व्यतिरेको नासाधारणः पक्षे साध्यस्यासिद्धौ सपक्षाभावात् सिद्धौ तु तत्रैव सपक्षे वर्त्तमानत्वादिति वाच्यम् । पक्ष-

---

यो यद्धर्मावच्छिन्नप्रतियोगिताकबाधवत्पक्षवृत्तिः स स्वहेतुकतद्धर्मावच्छिन्नसाध्यकोपाधित्ववत्पक्षेतरत्वक इत्यर्थः । तत्र बाधपदस्य साध्याभावमात्रपरत्वमभिप्रेत्य शङ्कते दीधितिकारो न चेति।असङ्कीर्णबाधे व्यभिचाराद्यसङ्कीर्णबाधे।तथा च वृक्षः कपिसंयोगी तत्त्वादित्यादावुत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यादौ च हेतुमति पक्षे साध्याभावसत्त्वेऽपि पक्षेतरस्यानुपाधित्वादुक्तव्याप्तौ व्यभिचार इत्यर्थः । प्रकृते उक्तनियमे।बाधत्वात् बाधपदार्थत्वात् । तथा च हेत्वभावादेव न व्यभिचारः । प्रकृते साध्यसामान्याभावमात्रस्य बाधसत्त्वेऽपि न क्षतिरित्याशयेनाह तदिति । असङ्कीर्णबाधानभ्युपगमाद्वेत्यर्थः।मूले वृक्षे न संयोगः उत्पत्तिकाले घटे गन्ध इत्यादि प्रतीतेर्मूलादौ संयोगाद्यवच्छेदकत्वाभावावगाहितयैवोपपत्तेरिति लीलावतीकारमते सामान्यत एवाभावाभावयोर्विरोधात् कपिसंयोगादिमति तदत्यन्ताभावस्यासत्त्वादिति भावः । समशीलमिति । असाधारणीभूतस्वव्यतिरेकत्वधर्मेणातेजस्त्वसदृशमित्यर्थः । शून्यत्वादेरित्यादिना तेजस्त्वाभावाद्युपग्रहः गुरुत्वादेरित्यादिना रसवत्त्वाद्युपग्रहः।अदोषो अतेजस्त्वंविनेत्यादिमूलस्य योग्यत्वविरहः।सपक्षव्यावृत्तत्वमसाधारण्यमित्याशयेन शङ्कते न चेति । वाच्यमिति परेणान्वयः । एतद्व्यतिरेकोऽतेजस्त्वादिव्यतिरेकः । सामान्यसाध्य-

उपाधेरभावात् । किञ्च पर्वतावयववृत्त्यन्यत्वं पर्वतेतर-
द्रव्यत्वं ह्रदपर्वतसंयोगानाधारत्वं ह्रदपर्वतान्यत्वादिक-

---

मात्रवृत्तिरसाधारण इत्यभिप्रायात् जलादावुष्णत्वभ्रमदशायां त-
थात्वमित्यपरे । ग्रीष्मोष्मणि तेजस्त्वाग्रहदशायामप्रतीतसाध्यतद्-
भावसहचाररूपत्वमसाधारण्यमित्यन्ये । असाधारणे हि साध्यसह-
चारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धः व्यतिरेकव्याप्त्यादरे तु
साध्यतद्भावयोर्द्वयोरपि तदविशेषात् सत्प्रतिपक्षो दूपकताबीज-
म् । न चेहाद्यो व्यतिरेकित्वात्, न द्वितीयः सत्प्रतिपक्षे तदन-

---

स्योष्णत्वाभावस्यासिद्धावनिश्चये । सिद्धौ त्विति । पक्षे साध्य
स्येत्यनुषज्यते । तत्रैव पक्षस्वरूप एवेत्यर्थः । पक्षमात्रवृत्तित्वं पक्षेतरा-
वृत्तित्वं तच्च सपक्षाप्रसिद्धावपि न क्षतिकरम् । सपक्षत्वं न नि-
श्चितसाध्यवत्त्वं गौरवात् किन्तु साध्यवत्तानिश्चयविशेष्यत्वमात्रं
तच्च नात्रासिद्धमित्यपरेषां मत आह जलादाविति । तथात्वमसाधा-
रणत्वम् । वन्ह्यादावुष्णत्वप्रत्यक्षदशायां तेजस्त्वस्यापि प्रत्यक्षस-
म्भवात् ग्रीष्मोष्मपर्यन्तानुसरणम् ।अप्रतीतेति।साध्यतदभावसहचरि-
तत्वेनानिश्चितत्वरूपेत्यर्थः । जलादावुष्णत्वभ्रमस्य ग्रीष्मोष्मणि
वा तेजस्त्वाग्रहस्य दशायामतेजस्त्वव्यतिरेकस्यासाधारणत्वेऽपि न
क्षतिस्तदसत्त्वदशायामेवातेजस्त्वादेरुपाधित्वसम्भवेन हेतुमति प-
क्षे बाध इत्यादि नियमस्याभङ्गादित्यस्वरसोऽपरेऽन्ये इति चोक्त्वा
सूचितः । व्याप्तिग्रहेत्यस्यान्वयेत्यादिः । प्रतिबन्धो दूषकताबीजमित्य-
ग्रेऽन्वयः।ननु पर्वतो वन्ह्यभाववान्पर्वतेतरत्वाभावात् इत्यत्रासाधार-
णहेतौ अन्वयव्याप्तेरग्रहेऽपि व्यतिरेकव्याप्तिग्रहे बाधकाभाव इत्यत
आह व्यतिरेकेति । तदविशेषात् । असाधारणहेतौ व्यतिरेकव्याप्ति-
ग्रहाविशेषात्। न चेहेति।पक्षेतरत्वव्यतिरेकेण साध्याभावसाधने अ-
न्वयव्याप्त्यग्रहो न क्षतिकर इत्यर्थः । व्यतिरेकित्वात् व्यतिरेक-

मुपाधिः स्यादेव व्यतिरेकेऽसाधारण्याभावात् व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च । न चासाधारण्यम् । तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात् । तस्मादुभयोरपि व्याप्तिग्राहकसाम्ये विरोधान्न व्याप्तिनिश्चयः, किन्तूभयत्र व्यभिचारसंशयः । तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वं तच्च पक्षेतरेप्यस्ति, तदुक्तमुपाधेरेव व्यभिचारशङ्केति । भवतु वोक्तन्यायेन सकलानुमान-

---

वकाशात्, अतः पक्षेतरोऽपि सत्प्रतिपक्षोन्नायकतयोपाधिरित्याह व्यतिरेकिणेत्यादिना । नन्वेवं प्रागुक्तरीत्या व्यभिचाराद्युन्नायकत्वस्य सत्प्रतिपक्षेऽनुद्भावनीयत्वापत्त्या च सत्प्रतिपक्षोन्नायकत्वस्य दूषकतायामबीजत्वे उपाधिर्दूषणमेव न स्यात् बीजाभावात् अत आह तस्मादिति । तदुक्तमुपाधेर्व्यभिचारशङ्कैवेति। भवतु वा

---

व्याप्तिग्रहस्योपादेयत्वात् । न द्वितीय इति । इहेत्यनुषज्यते।वन्हिव्यापकतया गृहीतस्य पक्षेतरत्वस्य व्यतिरेकात् यथा वन्ह्यभावः साध्यते तथा वन्ह्यभावव्यापकतयागृहीतस्य व्यतिरेकाद्वन्ह्यभावस्याभावो वह्निः साध्यतामिति सत्प्रतिपक्षो दूषणमित्यर्थः । तदनवकाशात् सत्प्रतिपक्षानवकाशात् । पर्वतो वन्हिमान् धूमादिति स्थापनयैव तस्य प्राप्तत्वादिति भावः।प्रागुक्तरीत्या यथा हीत्याद्युक्तक्रमेण।व्यभिचाराद्युन्नायकत्वस्येति। दूषकतायामबीजत्वादित्यग्रेन्वयः। उपाधिः साध्यव्यापकत्वेन गृहीतः । दूषणमेव न स्यादिति । स्वरूपासिद्ध्याद्युन्नायकत्वे साध्यव्यापकताग्रहस्याकिञ्चित्करत्वादिति भावः। उपाधिभिन्नादपि साधारणादिधर्माद्व्यभिचारसंशयस्योत्पादात् दूषकत्वाबीजान्तराप्रतिक्षेपकत्वाच्च एवकारव्यत्यासेन मूल-

भङ्गभिया पक्षेतरोऽनुपाधिः, तथापि लक्षणमतिव्यापकम् । नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वम् । दूषकताबीजस्य व्यभिचारोन्नायनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात्, दू-

---

पक्षेतरो नोपाधिः उपादीयताञ्च तद्व्यावृत्तये विपक्षाव्यावर्त्तकेत्वादिकं विशेषणं तथापि लक्षणमतिव्यापकमेव अणवो जन्याणवो वा सकर्तृकाः कार्यत्वादित्यादावनणुत्वादौ । ननु व्यभिचाराद्युन्नायकतामात्रेणोपाधित्वे व्यापकव्यभिचारित्वादावतिप्रसङ्ग इत्यत आह तथेति । तथा । तेन रूपेण । स्वव्यभिचारेण स्वव्यतिरेकेण वा दूषकतायां व्यभिचारस्य सत्प्रतिपक्षस्य वोन्नायकतायामतिप्रसञ्जनभञ्जिकायां साध्यव्याप्यत्वस्य व्यर्थत्वात् साधनाव्यापकधर्मस्योपाधित्वे साध्यान्वयव्यतिरेकोन्नायकान्वयव्य-

---

ग्रन्थमाह तदुक्तमित्यादि । ननु पक्षेतरत्वस्योपाधित्वानुपगमे प्रागुक्तविपक्षाव्यावर्त्तकेत्यादिविशेषणेनैव तद्वारणसम्भवाद्भवतु वेत्यादिमूलासङ्गतिरतः कतिपयपदानि यथास्थानं पूरयन्नेव तदर्थमाह भवतु वेत्यादि । अणुत्वावच्छेदेन पक्षतायां परमाणोः साध्याभाववत्त्वानिश्चयेन विपक्षत्वासम्भवात्तद्व्यावर्त्तकत्वमणुविशेषणस्य न स्यादतः पक्षान्तरमाह जन्याणवो वेति। ननु चकारादेव दूषणसमुच्चयस्य लाभात्तथापदं विफलमतः तस्य साफल्यं कर्त्तुमवतारयति नन्विति। तेन रूपेणेत्यस्यैव विवरणम् स्वव्यतिरेकेणेत्यादि। अतिप्रसङ्गभञ्जिकायामिति। व्यापकव्यभिचारित्वादेः स्वव्यभिचारित्वादिना साध्यव्यभिचाराद्युन्नायकत्वाभावादिति भावः । ननु साध्यप्रयोजको धर्म इत्यस्योपाधिलक्षणपरत्वे साधनव्यापकेऽतिव्याप्तिरत आह

षकतायां साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च । अथ साध्यप्रयोजको धर्म उपाधिः । प्रयोजकत्वञ्च न न्यूनाधिकदेशवृत्तेः, तस्मिन् सत्यभवतस्तेन विनापि भवतस्तदप्रयोजकत्वात् । अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्ग इति चेत् । न । दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकं नत्वधिकं व्यर्थत्वात् । ननूपाधिः स उ-

---

तिरेकशालित्वरूपं साध्यप्रयोजकत्वं नियामकम्, अन्यथातिप्रसङ्गादिसाशङ्कते अथेति । अभवतोऽसतः । भवतः सतः । व्यर्थत्वादिति । न चैवं पक्षेतरत्वेऽतिप्रसङ्गः, तवापि पक्षेतरसाध्यवत्त्वादावतिप्रसङ्गात् । विषमव्याप्तस्यानुपाधित्वे योगाभावं नियामकमाशङ्कते नन्विति । उप समीपवर्त्तिनि आदधाति स्वीयं धर्म-

---

साधनेति । उपाधित्वे उपाधिपदशक्यत्वे।घटत्वादिसाध्येति। साध्यस्यान्वयव्यतिरेकयोरुन्नायकौयावन्वयव्यतिरेकौ तत्प्रतियोगित्वरूपमित्यर्थः । अन्यथा साध्यव्यापत्वादिमात्रस्य प्रयोजकत्वे।अतिप्रसङ्गात् । विषमव्यापकस्य पक्षेतरत्वादेरप्युपाधित्वापातात्। तथा च प्रागुक्तं साध्यसमव्याप्तहेत्वित्यादिलक्षणं सम्यगेवेत्याशयः । गुणवत्त्वाद्युपाधेः सत्त्वेप्यजायमानस्य द्रव्यत्वादिसाध्यस्य तत्प्रयोज्यत्वाद्भूधातोरुत्पत्तिपरत्वासम्भवादाह अभवतोऽसत इति । तेन विनोत्पाद्यमानस्यैव तदप्रयोज्यत्वे घटत्वादिकं विना सतोऽपि द्रव्यत्वादिसाध्यस्य घटत्वादिप्रयोज्यता स्यादत आह भवतः सत इति । एवं साध्यव्यापकतादिमात्रस्य प्रयोजकत्वे। पक्षेतरसाध्यवत्त्वेति । साध्यान्वयव्यतिरेकोन्नायकत्वे व्यतिरेकशालित्व-

च्यते यद्धर्मोऽन्यत्र प्रतिबिम्बते, यथा जपाकुसुमं स्फटिकलौहित्य उपाधिः । तथा चोपाधिवृत्तिव्याप्यत्वं हेतुत्वाभिमते चकास्ति तेनासावुपाधिः । न च व्याप्यत्वमात्रेण दूषकत्वमिति साध्यव्यापकतापीष्यते । तथा च समव्याप्त एवोपाधिरिति चेत् । तत् किं विषमव्याप्तस्य दूषकताबीजाभावान्नोपाधिशब्दवाच्यत्वं तथात्वेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा । नाद्यः, तस्यापि

---

मित्युपाधिः । यद्धर्मबोधकशब्दसमभिव्याहारेण चोपाधिपदं प्रयुज्यते तद्धर्मसंक्रामकत्वं तद्बोधयति । यथा स्फटिकलौहित्ये

---

स्य तत्राप्यनपायादिति भावः ।अनुपाधित्वे उपाधिपदाप्रतिपाद्यत्वे । योगाभावमिति।यौगिकार्थस्याभावमित्यर्थः । अन्यधर्मिकस्वधर्मप्रतिबिम्बजनकत्वस्य यौगिकत्वं व्यक्तीकरोति उपेति। समीपवर्त्तिनि स्वभिन्ने आदधाति संक्रमयति आरोपयतीति यावत् । स्वीयमिति। आधानमात्रशक्तस्यापि धातोः स्वीयधर्माधानपरत्वमिति भावः । ननु विषमव्यापकस्यापि कथं चित् स्वनिष्ठधर्मान्तरसंक्रामकत्वेनैव योगार्थसम्भवात्कुतस्तद्वारणमत आह यद्धर्मेति । तद्धर्मसंक्रामकत्वं तद्धर्मभ्रमजनकत्वम्, तद्धर्मधीजनकत्वमात्रस्य तत्त्वे जपालौहित्ये जपोपाधिरित्यपि प्रयोगापत्तेरिति ध्येयम्।तत् उपाधित्वम्।यथेति। स्फटिके लौहित्ये जपाकुसुममुपाधिरित्यसमस्त एव पाठः ।तत्रहि सप्तम्यास्तादात्म्यमर्थस्तेन स्वान्यधर्मिकस्वधर्मसंक्रामकरूपान्योपाधिपदार्थस्यैकदेशे अन्यस्मिन् स्फटिकतादात्म्यस्य यद्धर्मे लौहित्यतादात्म्यस्य व्युत्पत्तिवैचित्र्येणान्वयात् स्फटिकात्मको यः स्वान्यस्तद्धर्मिकलौहित्यात्मकस्वधर्मजनकजपाकुसुममित्याकारको बोधः । स्फटिकलौहित्य इति समस्तपाठे तु स्फटिकपदं तद्वति तथा गृह्यमाण-

व्यभिचाराद्युन्नायकत्वात् । नापरः, न हि लोके समव्याप्त एवान्यत्र स्वधर्मप्रतिबिम्बजनक एवोपाधिपदप्रयोगः लाभाद्युपाधिना कृतमित्यादौ लाभादावुपाधिपदप्रयोगात् । किञ्च न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनं किन्त्वनुमानदूषणार्थं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तत्रैवोपाधिपदप्रयोगः। अन्ये तु यदभावो व्यभिचारविरोधी स उपाधिः । न

---

जवाकुसुममुपाधिरित्यत्र लौहित्यसंक्रामकत्वम, प्रयुज्यते च शास्त्रे व्याप्यत्वबोधकशब्दसमभिव्याहारेण तत्, यथात्र साधने असावुपाधिरित्यतो व्याप्तिसंक्रामकत्वलाभः । यदभाव इति । अस्ति तावदिह हेतावुपाधिर्नेह हेतावुपाधिरिति प्रतीतिर्व्यवहारश्च, तावा-

---

परं तथा च स्वान्यधर्मकस्य स्फटिकवृत्तितया गृह्यमाणलौहित्यात्मकधर्मस्य जनकजपाकुसुममित्येवं तत्रान्वयबोध इति ध्येयम् । लौहित्यसंक्रामकत्वमिति । तद्बोधयतीति पूर्वेणान्वयः ।तत् उपाधिपदम् । अत इति।साधनशब्दस्य व्याप्यधर्मितया इदमात्मकस्वाभिन्नधर्मिकव्याप्यत्वात्मकस्वधर्मसंक्रामकोपाधिरित्यन्वयस्य उक्तवाक्यार्थत्वादिति भावः । ननु समव्याप्तस्य उपाधेरुपाधितावच्छेदकसंयोगादिसम्बन्धेनाभावस्य साध्यव्यभिचारविरोधित्वाभावाद्यथाश्रुतमूलमसङ्गतमत आह अस्ति तावदिति । इह हेतावुपाधिरिति प्रतीतेः सामानाधिकरण्यसम्बन्धेन हेतावुपाधिमत्त्वं विषय इति यदि ब्रूयात्तदा तादृशसम्बन्धेनाप्युपाध्यभावस्य व्यभिचाराविरोधित्वात् असङ्गतिस्तादृशाभाववति साध्यासमानाधिकरणे व्यभिचारादत आह नेहोपाधिरिति। हेतावित्यनुषज्यते ।तथा चोक्तप्रतीतेः सामाना-

लम्ब्य चेदं लक्षणवाक्यम्। तत्र यदि साधने उपाधिव्यभिचारा-व्यभिचारौ तद्व्याप्यत्वव्याप्यत्वे वा यदि वा तेन सम्बन्धेन

---

धिकरण्यसम्बन्धेन उपाध्यभावविषयकत्वे सङ्केतावपि नोपाधि-रिति प्रतीतिर्न स्यात् साध्यसमव्याप्तपर्य्यवसन्नस्योपाधेस्तत्त्वेन स-म्बन्धेन तत्र सत्त्वादतो वस्त्वन्तरमेव तादृशप्रतीतिविषयो वाच्य इति तस्यैवाभावो यदभावपदेन बोधनीय इति भावः। साधनार्थस्य बोधने प्रतीतिमात्रं न नियामकं प्रतीतस्यापि घटादिभेदस्य घटश्चे-त्यादिवाक्यैर्बोधनात् किन्तु तत्तदर्थे प्रामाणिकं प्रयुक्तत्वमेवे-त्यतः प्रयोगमप्याह व्यवहारश्चेति । तौ यथोक्तप्रतीति व्यवहारौ । आलम्ब्यादूरकत्वमन्तर्भाव्य । ननु कयोः प्रतीतिव्यवहारयोर्विषय एवेह बाधित इति आह तत्रेति । व्यभिचाराव्यभिचाराविति । तदा-लम्बनमिति परेणान्वयः । इहोपाधिर्नेहोपाधिरिति प्रतीत्योर्व्यवहार-योर्वा विषयाविति तदर्थः । उपाधिपदस्य निरूढलक्षणया उपाधिव्य-भिचारपरत्वमिति भावः । ननु व्यभिचाराव्यभिचारयो-रुक्तप्रतीतिविषयत्वे वह्नेः साध्यतायां गगनहेतौ पक्षसामग्र्युपा-धिरिति प्रतीतिर्न स्यात् प्रत्युत तत्र न कोऽप्युपाधिरित्यपि व्यवहा-रो न स्यात् तत्र साध्यसमव्याप्तपर्य्यवसन्नस्य ज्ञेयत्वाद्युपाधेर्व्यभि-चाराप्रसिद्धेः अतः कल्पान्तरमाह तद्व्याप्यत्वव्याप्यत्वे वेति।स्व-व्यापकोपाधिकत्वकूटतदभावौ वेत्यर्थः । इहोपाधिरित्यादि प्रती-तावुपाधिव्यभिचाराव्याप्यत्वयोः प्रकारतया भानस्यानुभवबाधित-त्वादाह यदि वेति।तेनेत्यादि । स्वव्यभिचारव्यभिचारत्वेन स्वाव्या-प्यत्वेन वा सम्बन्धेन साधनवृत्तित्वतदभावावित्यर्थः। सर्वत्रैव वि-शेषणस्याभावो नञा बोध्य इति मतेनेदमन्यथा नेहोपाधिरित्यस्य तादृ-शसम्बन्धावच्छिन्नोपाध्यभावः साधनवृत्तिरित्यप्यर्थो द्रष्टव्यः।इत्थं च वन्हिमान्धूमात् वाच्यं ज्ञेयत्वात् इत्यादौ सर्वत्र सङ्केतौ साध्यसम-व्याप्तरूपस्योपाधेर्व्यधिकरणेनैव व्यभिचारित्वादसम्बन्धेनाभाव-मादाय निरुपाधित्वव्यवहार इति भावः।उभयथापीति।व्यभिचारादेः प्रकारतया संसर्गमर्य्यादया वा भानेऽपीत्यर्थः । न क्षतिरिति।उपाधि-ताघटकसम्बन्धेन उपाध्यभावस्य साध्यव्यभिचाराविरोधित्वेपि न

च विषमव्याप्तस्याभावो व्यभिचारं विरुणद्धि, तस्याभा-
वेऽपि व्यभिचारात्, अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वं
तद्व्याप्यञ्च गुणत्वम् । न चानित्यत्वगुणत्वयोर्व्याप्ति-
रस्ति, समव्याप्तिकस्य च व्यतिरेकस्तथा । न हि सा-
ध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत्तत् साध्यं व्यभिचर-
ति व्यभिचारे चान्ततः साध्यमेवोपाधिः । अभेदेऽपि

———

तद्वृत्त्यवृत्तौ एव तदालम्बनमुभयथापि नेह क्षतिः यदभावशब्दे-
नापि तथैव वक्तुं शक्यत्वात् । तदभावस्य च व्यभिचारविरोधि-
त्वं तत्सत्त्वेऽवश्यं व्यभिचारविरहस्तद्विरहिणि धर्मे चावश्यं व्य-
भिचारकत्वं तत्सत्त्वेऽवश्यं व्यभिचारविरहः व्यभिचारविरहिणि
धर्मे चावश्यं तत्सत्त्वमिति वा, ईदृशश्च विरोधो न विषमव्याप-
काभावस्य, तत्सत्त्वेऽपि व्यापक एव व्यभिचारसत्त्वात् । नापि

———

तत्रोपाधिलक्षणाव्याप्तिरित्यर्थः । तथैवेति । नेहोपाधिरित्यत्र उपा-
धिपदस्योपाधिव्यभिचारादिपरत्वे यदभावाः इत्यत्रापि यत्पदस्य
लक्षणया यद्व्यभिचारादिबाधकत्वसम्भवादिहोपाधिरित्यादि प्रत्य-
क्षानुरोधेन व्यभिचारादिसम्बन्धस्यापि वृत्तिनियामकतया तत्स-
म्बन्धावच्छिन्नप्रतियोगिताको यस्याभाव इत्यन्वये बाधकाभावाच्चे-
ति भावः।ननु साध्यव्यभिचारविरोधित्वं साध्यव्यभिचारप्रतिबन्धक-
त्वं तच्च न साध्यसमव्याप्तस्य उपाधेर्व्यभिचाराभावेऽस्तीत्यत आह
तदभावस्य चेति । निरुक्तयदभावसत्त्वे धूमवान् वन्हेरित्यादौ विष-
मव्यापकस्यार्द्रेन्धनवत्त्वादेरभाव इति साध्य एव साध्यव्यभिचार-
विरहस्य सत्त्वात्तत्रातिव्याप्तिरतोवश्यमित्युक्तम् । तथा चार्द्रेन्धन-
एव व्यभिचारः । साध्यस्य विषयव्याप्ते महानसत्वादावतिव्याप्तेर्वा-

विषमव्याप्याभावस्य, साध्य एव तद्विरहेऽपि व्यभिचाराभावात् ।

---

रणार्थमाह तद्विरहिणीति।निरुक्तयद्भावस्य विरहिणि निरुक्तयद्वती-
ति फलितार्थः।विषमव्याप्तस्य महानसत्त्वादेः व्यभिचाराद्यभावविर-
हिण्यपि जलादावेव साध्यस्य व्यभिचारसत्त्वात् यथाश्रुतेन तद्वा-
रणासम्भवादवश्यपदम् । समव्याप्तस्याप्युपाधेरव्याप्यत्वाभाव-
विरहिण्यवृत्तिगगनादौ साध्यव्यभिचारासत्त्वादव्याप्यत्वगर्भलक्षण-
स्यासम्भवः स्यादतस्तद्वारणाय धर्मपदम् । [साध्यव्यभिचारान्वय-
व्यतिरेकनियताव्यतिरेकशालित्वलक्षणं साध्यव्यभिचारविरोधि-
त्वमुक्त्वा साध्यव्यभिचाराभावनियतत्त्वलक्षणं तदाह तत्सत्त्व इ-
त्यादिना।तत्रापि साध्यव्यभिचारविरहिणि गगनादावुपाध्यव्याप्यत्वा-
भावस्यासत्त्वादव्याप्यत्वगर्भलक्षणस्यासम्भवः स्यादतो धर्मपदम् ।]
न च प्रमेयत्वादेः साध्यस्य व्यभिचाराप्रसिद्ध्या तद्गर्भस्योपाधेर-
प्यलीकतया तदभावरूपस्यानौपाधिकत्वस्य प्रमेयं वाच्यत्वादित्यादौ
दुर्वाच्यत्वमिति वाच्यम्। व्यभिचारसम्बन्धावच्छिन्नयदभावः सा-
ध्यस्य व्यभिचारसम्बन्धाभावेन समनियतस्तत्रैव व्यभिचार-
गर्भनिरुक्तेस्तात्पर्य्यात् प्रमेयत्वादेरपि व्यधिकरणेनैव वस्त्व-
न्तरीयव्यभिचारसम्बन्धेनाभावस्य प्रसिद्धत्वात्। उपाध्यभावव्या-
प्तिवादिनां गुरूणां केवलान्वय्यनुमानस्यासत्त्वात् तत्रानौपाधिक-
त्वस्य दुर्वचत्वेऽपि न क्षतिरित्यपि केचित् । गुरुचरणास्तु निरुक्तद-
लद्वयोपलक्षितस्य साध्यसमव्याप्तस्यैव व्यभिचारादिसम्बन्धेना-
भावोऽनौपाधिकत्वव्याप्तिर्लाघवात् न तु निरुक्तदलद्वयघटितस्यो-
पाधेरभावः सा च केवलान्वयिन्यपि सम्भवत्येव, अत एव तत्रैव सम-
व्याप्तिघटकस्य साध्यव्यापकत्वांशस्य वैयर्थ्यं मणिकृता दास्यते।
ननु विरोधघटकदलद्वय इत्यग्रिमग्रन्थविरोधः, तस्यापि विरोधोप-
लक्षकदलद्वयार्थकत्वादिति प्राहुः । निरुक्तविरोधस्याद्यदलेन वि-
षमव्यापकवारणमित्याह न विषमेति । व्यापक एवेति।विषमव्यापक
आर्द्रेन्धन एवेत्यर्थः । द्वितीयदलेन विषमव्याप्यस्य वारणमप्याह
नापि विषमव्याप्याभावस्येति। ईदृशो विरोध इति पूर्वेणाऽन्वयः।तद्वि-
रहे इति ।विषमव्याप्याभावस्य विरहे इत्यर्थः । पूर्वकल्पोक्तविधानु-

तादृशधर्मस्य चोक्तसम्बन्धेनोक्तसम्बन्धस्य वा यत्र वृत्तिस्तत्रा-यमुपाधिः स एव च सोपाधिः । अत एव तदभावलक्षणमनौपाधिकत्वं व्याप्तिरिति गीयते । विरोधघटकदलद्वये च एकैकस्य व्याप्तिशरीरघटकता दूषकता वा न स्यादित्युभयोपादानमिति

---

सारेणेदं द्वितीयकल्पे तु व्यभिचाराभाववति साध्याद्यावेव तदभा-वस्यासत्त्वादिति द्रष्टव्यम् । ननु वन्हिमान् धूमादित्यादिसद्धे-तौ निरुक्तरूपवतां वन्हिसामग्र्यादेरुपाधिताप्रसङ्गे कुतोऽनौपाधि-कता तदिष्टापत्तौ च सद्धेतोर्निरुपाधित्वभङ्गप्रसङ्ग इत्यत आह ताद-शधर्मस्येति । यदभावो व्यभिचारविरोधीतस्य चेत्यर्थः । उक्तसम्ब-न्धेन वृत्तिरित्यग्रेऽन्वयः । व्यभिचारादिसम्बन्धस्य वृत्तिनियामकत्वे विप्रतिपन्नं प्रत्याह उक्तसम्बन्धस्य वेति । उक्तो व्यभिचारादिरूपो य-स्तदीयसम्बन्धस्तस्य वेत्यर्थः । अत एवेति । उक्तरूपेणोपाधिनिर्वच-नादेवेत्यर्थः । अन्यथा साध्यव्यापकत्वे सति साधनाव्यापकस्यो-पाधित्वे सद्धेतुस्थले तादृशवस्तुनः सिद्ध्यसिद्धिभ्यां व्याघातात् तदभावलक्षणमनौपाधिकत्वं दुर्वचमेव स्यादिति भावः । ननु विरोधघटकदलद्वयोरेकैकमेव लक्षणे प्रवेश्यतां दलान्तरव्यावृत्तस्य लक्ष्यत्वेऽपि क्षत्यभावादत आह विरोधेति । व्यभिचारविरहिधर्मेऽव-श्यं यदभावसत्त्वं स एव उपाधिस्तदा धूमादिसाध्यस्य विषमव्या-पकीभूतो द्रव्यत्वादिरुपाधिः स्यात्तथा च व्यभिचारादिसम्ब न्धेन तदभावस्य वन्ह्याद्यसद्धेतुसाधारणत्वादुक्तोपाधेरनौपाधि-कत्वव्याप्तौ प्रतियोगिविधया घटकत्वं न स्यादित्याह व्याप्ति-शरीरघटकतेति । यदभावसत्त्वेऽवश्यं व्यभिचारविरहः स एव यद्युपाधिस्तदा वन्हिमान् धूमादित्यादौ साध्यस्य वि-षमव्याप्योऽपि महानसत्त्वादिरुपाधिः स्यात्तथा च साध्याव्या-पकतया व्यभिचाराद्युन्नयनासामर्थ्ये तत्रानुमानप्रतिबन्धकत्वं न स्यादित्याह दूषकता वेति । ननु धूमवान् वन्हेरित्यादौ धूमगगनान्य-तरत्वप्रकारेण गगनमप्युपाधिः स्याद्व्यभिचारादिसम्बन्धेन तादृश-

सर्वं सुस्थम् । यदि च समव्याप्ताकाशोभयमात्रवृत्तिधर्मेणाकाशस्योपाधित्वं वारणीयं तदा यत्पदं वृत्तिमत्परं बोध्यम् । अत्र च व्यभिचारस्य घटकत्वेऽग्रे प्रमेयत्वपदं व्यतिरेकिधर्मोपलक्षकम् ।

---

रूपावच्छिन्नाभावस्यापि साध्यव्यभिचारविरोधित्वादत आह यदि चेति । तादृूप्येणाकाशस्योपाधित्वेऽपि न क्षतिरित्याशयेन यदिकार उक्तः । यत्पदमिति । तथा च यद्रूपेण वृत्तिमतो यस्य निरुक्तसम्बन्धेनाभावः साध्यव्यभिचारस्य विरोधी स तादृूप्येणोपाधिरिति भावः । यद्रूपावच्छिन्नाभावो व्यभिचारविरोधी वृत्तिमत्त्वे सति तद्रूपत्ववन्तु ज्यायः प्रतिव्यक्त्युपाधीनामनिवेशादिति ध्येयम् । वृत्तिमत्परमित्यस्योपाधिताघटकसम्बन्धेन सम्बन्धिपरमित्यर्थः । तेन गगनादेः कालिकसम्बन्धेन वृत्तिमत्त्वेऽपि न क्षतिः, न वा शब्दादिसाध्यकद्रव्यत्वादिहेतौ तादात्म्येन गगनाद्युपाधावव्याप्तिः । ननु विषमव्यापकस्य प्रमेयत्वादेर्व्यभिचारस्यालीकतया तदभावोऽप्यलीक इति तत्तत्साध्यव्यभिचारविरोधित्वखण्डनस्य अस्ति हीत्यादिनाऽग्रे मूलकारोक्तस्यासङ्गतिरत आह अत्र चेति।घटकत्व इत्यस्य प्रकारविधयेत्यादिः, अतो व्यभिचारादिसम्बन्धेनोपाध्यभावस्य लक्षणघटकत्वे व्यधिकरणेनैव व्यभिचारित्वसम्बन्धेन प्रमेयत्वस्याप्यभावसम्भवान्नासङ्गतिः । व्यतिरेकिधर्मेति । मनोभिन्नत्वादिधर्मस्य प्रमाया एव प्रकृते प्रमेयत्वघटकत्त्वादिति भावः । इदं तु बोध्यम् । उक्तनिरुक्तौ साध्योपाध्योर्द्वयोरपि व्यभिचारित्वं न हेतुतावच्छेदकसम्बन्धेन निवेश्यं धूमवान् वन्हेरित्यादौ धूमवद्घटत्वान्यतरत्वस्य विषमव्यापकस्याप्युपाधितापत्तेर्निर्धूमसंयुक्तत्वाभावस्य तदभाववत्संयुक्तत्वाभावसमनियतत्वात् किन्तु स्वरूपसम्बन्धेनैव तद्ग्राह्यम् । तथा च घटत्ववृत्ति धर्म एव व्यभिचाराच्च तदुभयव्यभिचाराभावयोः समनियम इत्यदोषः । न चैवमनित्यत्वव्यापकं प्रमेयत्वं तद्व्याप्यं च गुणत्वमित्यभिमतमूलविरोधः,गुणत्वजातेः स्वरूपसम्बन्धेनावर्त्तमानत्वादिति वाच्यम् । तत्र गुणत्वपदस्य गुणीभूतत्व परतयेश्वरभिन्नत्वरूपस्य गुणीभूतत्वस्य स्वरूपसम्बन्धेन वर्त्तमा-

व्याप्यव्यापकत्वात् साधनाव्यापकत्वादिति स्वीचक्रुः। तन्न। तत्रापि ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वं तन्त्रमावश्यकत्वाल्लाघवाच्च न तु साध्यव्यापकव्याप्यत्वमपि,

---

अथैतादृशोपाध्यभावस्य व्याप्तिलक्षणत्वे यत्र व्यभिचारिणि नैतत्सम्भवस्तत्रातिव्याप्तिः तस्यासन्तमसत्त्वेनाभावानिरूपणे तु तत्रासद्धेतावव्याप्तिरत आह व्यभिचारे चेति। यस्य यद्व्यभिचारस्य यद्व्याप्यत्वस्य वा अभावः साध्यव्यापके व्यभिचारविरो-

---

नत्वात्। यत्तु उपाध्यभाववति येन येन सम्बन्धेनावृत्तित्वं साध्यभाववति अपि तेन तेनैव सम्बन्धेनावृत्तित्वस्य समनियमो वक्तव्य इति नातिव्याप्तिरिति। तत्तुच्छम्। तथासति समनियमपर्य्यन्तानुसरणवैयर्थ्यापत्तेः। महानसत्वाद्यभाववति पर्वतीयसंयोगेनावर्त्तमानस्य धूमाद्यभाववति तादृशसंयोगेन वर्त्तमानत्वाप्रसिद्धैव साध्यन्यूनवृत्तिमहानसत्वादावतिव्याप्तिविरहेण उपाधिव्यभिचाराभावे साध्यव्यभिचाराभावव्यापकत्वान्तस्य निष्प्रयोजनत्वादिति ध्येयम्। यत्रेत्यादि। यत्र साध्ये निरुक्तस्योपाधेः सम्भवस्तत्र साध्यव्यभिचारिणि हेतावतिव्याप्तिरिति व्युत्क्रमेणान्वयः। अयमेतद्वृत्तियावद्धर्मवान् प्रमेयत्वादित्यादौ साध्यभिन्नस्योपाधेः असत्त्वादिति भावः। ननूपाधेरसत्त्वे तदभावोऽप्यलीक एव अभावस्य सत्प्रतियोगिकत्वनियमात्तत् कथमतिव्याप्तिरत आह तस्येति। उक्तस्थलीयोपाधेरित्यर्थः। तत्रत्यसद्धेताविति। तादृशसाध्यकसद्धेतावित्यर्थः। अयमेतद्वृत्तियावद्धर्मवानेतत्त्वादित्यादिसद्धेतावुपाध्यप्रसिद्ध्या तदभावलक्षणानौपाधिकत्वाव्याप्तिरिति भावः। प्रगल्भानां मतमाह यस्येत्यादिना। यस्येत्यस्यैव व्याख्यानं यद्व्याभिचारस्येति। केवलान्वयिसाध्यकेऽप्यनौपाधिकत्वव्याप्तेः प्रतियोगिप्रसिद्ध्यर्थमाह यद्व्याप्यत्वस्य वेति। विषमव्याप्तस्य वारणार्थं साध्यव्या-

भवतैव व्यभिचारस्य दर्शितत्वात्। न च साध्यव्याप्य-व्याप्यत्वमेवानौपाधिकत्वं साध्यव्याप्यमित्यत्रापि ह्यनौ-पाधिकत्वं तदेव वाच्यं तथा चानवस्थेति। अनौपाधि-कत्वे च व्याप्तिलक्षणे यावदितिपदं साध्यव्यापके विशे-

---

पक इति। साध्यव्यापकनिष्ठ इति तदर्थः। विषमव्यापकस्यार्द्रेन्धना-देर्वारणाय व्यभिचारविरोधीति। साध्यव्यभिचाराभावव्याप्य इ-त्यर्थः। सद्धेतौ साध्यसमव्याप्तस्य व्युदासार्थं साधनाव्यापक इति। अत्रोदक्षरत्वं सद्धेतावेतादृशोपाध्यप्रसिद्ध्या व्याप्तेस्तदभावात्मकत्वं च दुर्वचमित्यस्वरसो वदन्तीत्युक्त्या सूचितः।मिश्राणां मतमाह यद्व्य-भिचारित्वाभाव इति। सद्धेतौ साध्यसमव्याप्तस्य वारणाय साधन इति। सद्धेतौ साध्यव्यभिचाराभावस्य सत्त्वेन इष्टापत्त्या तदापाद-नस्यासम्भवात् सोपाधौ साध्यसमव्याप्तस्य महानसत्वादेर्वारणा-याह साध्यव्यापक इति। न च बाधभ्रमदशायां धूमादावपि वन्हि-सामग्र्यादेरव्यभिचारेण वन्ह्यादिव्यभिचाराभावस्यापत्तिस-म्भवादतिप्रसङ्गः। वस्तुगत्या साधननिष्ठस्य यद्व्यभिचारित्वस्य सामान्याभावः साध्यव्यभिचारित्वाभावव्याप्यः स साध्यव्यापक उपाधिरित्यत्र तात्पर्य्यादिति। अत्रापि पूर्वकल्पवदस्वरसः केचिदि-त्युक्त्या सूचितः। यदभाव इत्यादिमूलेन साध्याव्यभिचारित्वग्राहक-स्यानौपाधिकत्वस्य प्रतियोगी निरूप्यते अनुमानदूषणमुपाधिर्वा क-थ्यते तत्र नाद्य इत्याह मूले तवापीति। साध्यव्याप्यव्याप्यत्वं साध्य-व्याप्यस्याव्याप्यत्वसम्बन्धेनाभाववत्त्वं तन्त्रं गमकमावश्यकत्वात् साध्यसमव्याप्तव्याप्यत्वे साध्यव्याप्तत्वस्यापि प्रविष्टत्वात्। तथा चोक्तलक्षणे विषमव्याप्तस्य महानसत्वादेर्वारकविशेषणं व्यर्थमिति भावः। ननु साध्यव्याप्यव्याप्यतामात्रस्य तन्त्रत्वे साध्यव्यापकव्या-प्यतामात्रमपि कथं न तन्त्रमुच्यत इत्यत उक्तं न त्विति। दर्शितत्वात्। अस्ति ह्यनित्यमित्यादिग्रन्थेन दर्शितत्वादित्यर्थः। ननु नोपादेयमेव महानसत्वादेर्वारकविशेषणमित्यभिप्रेत्य शङ्कते न चेति। ननु यद्वि

षणं दत्तमेव, किञ्च यस्मिन् सत्यनुमितिर्न भवति त-
देव तत्र दूषणं न तु यद्व्यतिरेके भवत्यनेत्येतदगर्भम्,
विरुद्धत्वादेरप्यदोषत्वापत्तेः । नापि पक्षधर्मावच्छिन्नसा-

———

धी स साधनाव्यापक उपाधिरित्यपि वदन्ति । यद्व्यभिचारित्वा-
भावः साधने साध्यव्यभिचाराभावापादकः स साध्यव्यापक
उपाधिरित्यपि केचित् । न तु यद्व्यतिरेक इति । यद्व्यतिरेकेऽनु-
मितिप्रयोजकं रूपं व्याप्त्याद्यन्यतमं भवत्येव यथा असिद्धिव्यति-
रेके सिद्धिरित्यर्थः । विरुद्धत्वादेरिति । विपक्षमात्रगामित्वसपक्ष-
विपक्षगामित्वलक्षणविरोधव्यभिचारयोरेकैकविरहेऽपि व्याप्तेर-
नियमादित्यर्थः । यत्र पक्षे हेतुमति च साध्यं हेतुश्च पक्षावृत्तिस्त-

———

साध्यव्याप्यत्वमनवस्थादूषितं साध्यव्यापकव्याप्यत्वं च सोपाधि-
साधारणं तत् किमनौपाधिकत्वं दुर्वचमत आह अनौपाधिकत्वे चे-
ति।साध्यव्यापकत्वेति।साध्यस्य व्यापकत्वं यद्वृत्तीति व्युत्पत्त्या सा-
ध्यव्यापक इत्यर्थः । क्वचित्तथैव पाठः।दत्तमेवेति। साध्यव्यापकयाव-
द्व्यापकं यस्य तत्त्वं वा तदिति व्याप्तिपूर्वपक्षग्रन्थ इति शेषः । द्वि-
तीयेत्वाह किञ्चेति।सतीत्यस्य ज्ञात इत्यादिः । अनुमितिः पक्षे साध्य-
स्य साध्यसमव्याप्तस्य चानुमितिः साध्यसमव्याप्तस्याव्याप्यत्वसम्ब-
न्धेन व्यतिरेके सत्यनुमिति विरहाद्भवत्येवेत्यस्य कर्तृपदन्दीधिति-
कारः पूरयति अनुमितिप्रयोजकेति । विरुद्धव्यतिरेकस्थलेऽप्य-
नुमितिप्रयोजकस्य साध्यसामानाधिकरण्यस्यैव सद्भावादग्रिमग्र-
न्थासङ्गतिरतस्तादृशरूपं विशिष्याह व्याप्त्याद्यन्यतममिति । आदि-
पदेन पक्षधर्मत्वाबाधितत्वासत्प्रतिपक्षितत्वादीनामुपसङ्ग्रहः । असि-
द्धिरपक्षधर्मत्वं विपक्षमात्रगामित्वम् । साध्यवदवृत्तित्वम्।विपक्षगा-
मित्वं विरुद्धेतिप्रसक्तमतः सपक्षेति । प्राच्यैर्विरुद्धस्य व्यभिचारि-

त्रैकः पक्षावृत्तिर्हेतुसमानाधिकरणः अपरश्च पक्षनिष्ठः साध्यवति हेत्वसमानाधिकरणः हेत्वसमानाधिकरण एव वा उपाधिस्तत्र सा-

———

त्वानुपगमादिति ध्येयम् । अनियमादितिर्वह्निमानित्यादौ व्यभिचारादिति भावः । परामर्शत्वादेरिवोपाधित्वस्यापि पक्षसाध्यसाधनभेदेन विभिन्नत्वादेकविधपक्षसाधनादिस्थल एव साधनपक्षधर्मावच्छिन्नसाध्यव्यापकयोरुपाध्योरसाङ्कर्यमनुगतरूपेणाह यत्रेत्यादिना गगनं प्रत्यक्षं स्पर्शवत्त्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकस्य रूपवत्त्वादेः पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकत्वान्न तयोरसाङ्कर्यमत उक्तं पक्ष इति।घटः प्रत्यक्षो मनस्त्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकाप्रसिद्ध्या पक्षधर्मावच्छिन्नसाध्यव्यापकीभूतरूपवत्त्वादौ तदसाङ्कर्य्यं दुर्वचमत उक्तं हेतुमतीति । घटः प्रत्यक्षो बहिर्द्रव्यत्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकस्य रूपवत्त्वादेः पक्षधर्मावच्छिन्नसाध्यव्यापकत्वान्न तयोरसाङ्कर्य्यं सम्भवत्यत उक्तं हेतुश्च पक्षावृत्तिरिति । एकः साधनावच्छिन्नसाध्यव्यापकः । उपाधिरित्यग्रेन्वयः । घटः प्रत्यक्षोनित्यद्रव्यत्वादित्यादौ पक्षधर्मद्रव्यत्वावच्छिस्य साध्यव्यापकस्य गगनभिन्नत्वाद्युपाधेः साधनावच्छिन्नसाध्यव्यापकत्वात्तयोरसाङ्कर्य्यमसम्भवीत्यत उक्तं पक्षावृत्तिरिति । साधनावच्छिन्नसाध्यव्यापकत्वं साधनसामानाधिकरण्यं विनाऽनुपपन्नमतस्तत्सत्त्वमाह हेतुसमानाधिकरण इति।अपरः पक्षधर्मावच्छिन्नसाध्यव्यापकः । पक्षधर्मावच्छिन्नस्य व्यापकत्वं पक्षवृत्तित्वं विनानुपपन्नमतस्तत्सत्त्वमाह पक्षनिष्ठ इति।अत्रापि घटः प्रत्यक्षो नित्यद्रव्यत्वादित्यादौ गगनान्यत्वाद्युपाधेरुभयथा व्यापकत्वान्न तयोरसाङ्कर्य्यं सम्भवत्यत उक्तं साध्यवति हेत्वसमानाधिकरण इति । पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकस्योद्भूतरूपवत्त्वाद्युपाधेः साधनसमानाधिकरणत्वेऽपि तत्र साधनावच्छिन्नसाध्यव्यापकीभूतस्यात्मत्वोपाधेरसाङ्कर्यमावेदयितुं साध्यवतीत्युक्तम् । उक्तस्थले प्रत्यक्षस्पर्शाश्रयत्वमेव पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिमुपादाया साङ्कर्य्यसम्भवात् साध्यवतीत्यस्यानुपादानेऽपि न क्षतिरित्याशयेनाह हेत्वसमानाधिकरण एवेति।तत्रेति

ध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम्, साध-
नावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात् । शब्दोऽभिधेयः
प्रमेयत्वादित्यत्राऽश्रावणत्वस्योपाधित्वापत्तेश्च । शब्दध-
र्मगुणत्वावच्छिन्नाभिधेयत्वं यत्र रूपादौ तत्राऽश्रावणत्वं
व्यापकं पक्षे प्रमेयत्वस्य साधनस्याव्यापकं हि तत् ।

———

धनपक्षधर्मावच्छिन्नसाध्यव्यापकयोरसङ्करो बोध्यः । यथा घटः प्र-
त्यक्षो नित्यद्रव्यत्वाद्विभुत्वाद्वेत्यादौ साधनावच्छिन्नसाध्यव्यापकमा-
त्मत्वं पक्षधर्मावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्त्वं प्रत्यक्षस्पर्शाश्र-
यत्वं वा मिथोऽसङ्कीर्णमुपाधिः । अश्रावणत्वेति । घटो मेयो द्र-
व्यत्वादित्यादौ गन्धवत्त्वाद्यवच्छिन्नसाध्यव्यापकपृथिवीत्वादाव-
तिव्याप्तिर्द्रष्टव्या । न वानेन रूपेण ज्ञातस्य दूषकत्वमित्याह आ-

———

तयोरित्यर्थः।त्रुटेर्नित्यत्वमते तत्रैव व्यभिचारात् नित्यद्रव्यत्वावच्छि-
न्नसाध्यव्यापकत्वं नात्मत्वस्य सम्भवत्यतो हेत्वन्तरमाह विभुत्वाद्वेति।
प्रथमहेतोरुद्भूतरूपवत्त्वं साध्यवत्येव हेत्वसमानाधिकरणमतस्तमुपा-
धिमाह प्रत्यक्षस्पर्शवत्त्वमिति।मिथोऽसङ्कीर्णमिति ।साधनपक्षधर्माव-
च्छिन्नसाध्यव्यापकयोर्मिथो भेदवदित्यर्थः।अत्राश्रावणत्वे ज्ञानातिव्या-
प्तेरेव मूलकृताभिधानात् स्वयं वस्त्वतिव्याप्तिस्थलमाह घट इति। य-
द्यपि श्रावणस्य श्रावणविशेषणवत्त्वस्यान्योन्याभाव एवाश्राव-
णत्वमित्यभिधाय मूलस्यैव वास्तवातिव्याप्तिपरत्वं सुवचम्, तथापि
पक्षे साधनस्याव्यापकं तदित्यग्रिममूलविरोधात्तदनुक्तमिति ध्येयम्।
आर्द्रेन्धनादेः पक्षवृत्तिपर्वतात्वद्यवच्छिन्नधूमादिसाध्यव्यापकत्वसम्भ-
वादन्यथा व्याचष्टे न वेति । इत्थं च पक्षनियतेत्यादिमूलस्य पक्षा-
दिपदव्यत्यासेन पक्षधर्मनियतत्वाभावादित्यर्थः । वस्तुतः पक्ष-

आर्द्रेन्धनवत्त्वादावुपाधौ पक्षनियततादृशधर्माभावाच्च ।
अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक
उपाधिः । तेन ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे
साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः श्या-
मत्वे शाकपाकजत्वमुपाधिरिति । तन्न । पक्षधर्मावच्छि-

---

द्रेन्धनेति । पक्षधर्मेति । विरुद्धस्थलीयोपाध्यव्याप्तिरपि द्रष्टव्या ।
साधनावच्छिन्नेति । स्वावच्छिन्नेत्यर्थात्साधनवतीति विशेषणाद्वा न
व्यभिचारः । ननु शुद्धसाध्याव्यापकस्थल एवासिद्धिशङ्कानिरा-

---

धर्मावच्छिन्नसाध्यव्यापकत्वं पक्षधर्मविशिष्टसाध्यत्वावच्छिन्नं प्रति
व्यापकत्वं तच्च शुद्धसाध्यव्यापकस्यार्द्रेन्धनादेरसम्भवि व्यर्थविशेष-
णत्वेन पर्वतत्वादिविशिष्टधूमत्वेनार्द्रेन्धनादिव्याप्यत्वानवच्छेदादत
आर्द्रेन्धनवत्त्वाद्युपाधिस्थले पक्षनियतः पक्षनिष्ठो यस्तादृशः
साध्यगतव्याप्त्यवच्छेदको धर्मस्तदभावादित्यर्थकं यथाश्रुतमेव
मूलं सम्यगिति प्रतीमः । परे तु ननु पक्षमात्रवृत्तिधर्मावच्छिन्नसा-
ध्याव्यापकत्वविवक्षयैव शब्दोऽभिधेय इत्यादावश्रावणत्वस्योपाधि-
त्वं वारणीयं गुणत्वस्य शब्दमात्रावृत्तित्वेन तदवच्छिन्नव्यापकत्वस्य
लक्षणाघटकत्वादित्याशङ्क्यार्द्रेन्धनेत्यादिमूलम्, तथा च ह्रदो धूमवान्
वह्नेरित्यादावार्द्रेन्धनाद्युपाधावव्याप्तिस्तत्र पक्षनियतधर्मावच्छिन्नसा-
ध्यस्याप्रसिद्धेरित्याहुः। विरुद्धेति।गोत्ववानश्वत्वादित्यादौ साधनाव-
च्छिन्नसाध्याप्रसिद्ध्या तत्रत्यसास्नावत्त्वाद्युपाधावव्याप्तिरित्यर्थः ।
मित्रातनयत्वं श्यामत्वासाधकं मित्रातनयत्वावच्छिन्नश्यामत्वव्या-
पकव्यभिचारित्वादित्यस्य काकत्वादौ व्यभिचारित्वादाह स्वाव-
च्छिन्नेति । स्वस्याननुगतत्वादाह साधनवतीति । विशेषणेति । तथा
च मित्रातनयत्ववति मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकव्यभि-

न्नसाध्यव्यापकोपाध्यव्यापनात्, जलं प्रमेयं रसवत्त्वादि-
त्यत्र रसवत्त्वावच्छिन्नसाध्यव्यापकपृथिवीत्वस्योपाधित्व-
प्रसङ्गात्, सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसा-

---

ध्यावच्छेदकांशोऽपि निवेशनीयोऽखण्डाभावस्य घटकतया च न
वैयर्थ्यम् । येन रूपेणोपाधिना विशेषणवति तद्रूपावच्छिन्नव्यभि-
चारस्यैव वा हेतुत्वं शुद्धसाध्यव्यापकस्थले तु साध्यव्यापकव्य-

---

भिचारित्वादित्येव हेतुः स च न काकत्वादावतो न व्यभिचारः । असि-
द्धिशङ्केति।व्यभिचारिहेतोः शुद्धसाध्यव्यापकव्यभिचारित्वनिय-
मेऽपि तादृशव्यापकव्यभिचारित्वस्य हेतावनिश्चयदशायां स्वरू-
पासिद्धिशङ्कावारणाय साधनपक्षधर्मादिरूपोऽवच्छेदकांशो निवेश्य
इत्यर्थः । ननु तथाऽप्यसिद्ध्यादिवारकविशेषणस्य व्याप्तिग्रहानौपयि-
कत्वेन व्यर्थत्वमेवेत्यत आह अखण्डेति । श्यामत्वव्यापकत्वमपेक्ष्य
मित्रातनयत्वाद्यवच्छिन्नश्यामत्वव्यापकत्वरूपस्याऽखण्डाभावस्या-
तिरिक्तत्वेन तद्घटकतया मित्रातनयत्वाद्यवच्छिन्नत्वस्य न वैयर्थ्य-
मित्यर्थः । स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितस्यैव हे-
तोर्व्यर्थविशेषणकत्वादिति भावः । ननु साधनाद्यवच्छिन्नसाध्य-
व्यापकव्यभिचारित्वं न तादृशसाध्यव्यापकतावच्छेदकधर्मसा-
मान्यावच्छिन्नाभाववद्वृत्तित्वं तादृशसाध्यव्यापकतावच्छेदकं य-
त्प्रमेयत्वादिकं सर्वत्रैव तदवच्छिन्नस्य सत्त्वेनाप्रसिद्ध्यादिप्रसङ्गात्,
किन्तु येन रूपेण तादृशसाध्यव्यापकत्वं तद्रूपावच्छिन्नाभाववद्-
वृत्तित्वमेव तथा, तथा च तत्र तादृशसाध्यव्यापकतावच्छेदक-
त्वांशप्रवेशो व्यर्थ इत्यत आह येन रूपेणेति । उपाधिताऽव-
च्छिन्नसाध्यव्यापकता । विशेषणवतीति । यद्विशेषणावच्छिन्नस्य
साध्यस्य व्यापकत्वमुपाधिस्तद्विशेषणवतीत्यर्थः । काकत्वादौ
व्यभिचारस्य वारणार्थमिदम्, तथा च मित्रातनयत्वं श्यामत्वा-

भिचारो व्यापकतावच्छेदकार्द्रेन्धनत्वाद्यवच्छिन्नव्यभिचारो वा हेतुरुन्नेयमनीयः । प्रायशस्तद्धर्मवति तद्धर्मविशिष्टसाध्यव्यापकव्यभिचारित्वस्य हेतुत्वेऽपि न वैयर्थ्यम्, अखण्डाभावस्यातिरिक्तत्वात् । वस्तुतस्तूपाधिना असाधकत्वासाधनेऽपि न क्षतिः, उद्भावितयावद्दोषैरेव तत्साधनीयमिति नियमाभावात् तदुन्नीतव्यभिचारेण तत्साधनसम्भवात् । सन्दिग्धोपाधिममशीलः सन्दिग्धो

---

साधकं मित्रातनयत्ववति शाकपाकजत्वव्यभिचारित्वादित्यादिक्रमेणैवासाधकत्वमनुमेयमिति भावः । प्रागुक्तस्य शुद्धसाध्याव्यापकस्थले एवेत्येवकारस्य व्यवच्छेद्यं स्फुटीकरोति शुद्धसाध्येत्यादिना । तत्रासिद्धिशङ्काया विरहेण तदुद्धारकस्य साधनाद्यवच्छिन्नत्वांशस्य निष्फलत्वादिति भावः । अत्रापि शुद्धसाध्यव्यापकव्यभिचारित्वं यदि तादृशसाध्यव्यापकतावच्छेदकधर्मसामान्यावच्छिन्नाभाववदवृत्तित्वं तर्हि अप्रसिद्धिरतो येन रूपेण शुद्धसाध्यव्यापकत्वं तदवच्छिन्नाभाववदवृत्तित्वमेव तथा वाच्यमित्याशयेन व्यापकतावच्छेदकत्वांशमुपलक्षणीकृत्याह साध्यव्यापकतावच्छेदकेत्यादि । धूमवान् वन्हेरित्यादौ शुद्धसाध्यव्यापकस्थले महानसायःपिण्डान्यतरत्ववति तादृशान्यतरत्वावच्छिन्नधूमव्यापकव्यभिचारित्वाद्धेतुतायामपि न वैयर्थ्यमित्याह प्रायश इति । तद्धूमवान् वन्हेरित्यादौ तद्धूमव्यापकताया एव धर्मान्तरावच्छिन्नतद्धूमव्यापकतास्वरूपत्वादखण्डाभावघटकतया तत्र वैयर्थ्यव्युदासस्यासम्भवात् प्रायश इत्युक्तम् । अखण्डेति महानसायःपिण्डान्यतरत्वावच्छिन्नधूमव्यापकतारूपस्याखण्डाभावस्य धूमसामान्यव्यापकतातोऽतिरिक्तत्वादित्यर्थः । हेत्वाभासेनैव परहेतोरसाधकत्वसाधनस्य जल्पाकसम्प्रदायसिद्धत्वादुपाधिना तत्साधनमेव नास्ति कुत्र वैयर्थ्यमित्यभिप्रायवानाह वस्तुत इति । असाधकत्वमनुमित्यौपयिकयत्किञ्चिद्रूपराहितत्वं दोषो निग्रहस्थानं तेनोपाधेर्हेतुदोषत्वाभावेऽपि न क्षतिः।तत् असाधकत्वम्।केन तर्हि असाधकत्वं साधनीयमत आह तदुन्नीतेति।उपाध्युन्नीतेत्यर्थः। नन्वेवं सन्दिग्धव्यभिचार-

ध्यव्यापकव्यभिचारित्वे साधनावच्छिन्नेत्यस्य व्यर्थत्वप्रसङ्गाच्च । किञ्च पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य पश्चात् केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयस्तथा चार्थान्तरम्, केवलसाध्ये हि विवादो न तु विशिष्टे।अथ प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्य इति चेन्न । अप्राप्तकालत्वात् । प्रथमं साध्यव्यभिचार एवोन्नाव्यस्तत्रासिद्धावुपाधिरिति चेत् । तर्हि

---

व्यभिचार इत्यत आह किञ्चेति । केवलेति । तथा च केवलस्यैव साध्यस्य व्यभिचारो व्यतिरेको वा जिज्ञासितो विरोधित्वात् न तु विशिष्टस्य,अविरोधित्वादिति भावः।उन्नाव्यो विशेषणाव्यभि-

---

स्थानेऽसाधकत्वानुमानं न स्यात् साध्यव्यभिचारात्मकहेतोः पक्षधर्मत्वानिश्चयादत आह सन्दिग्धेति। भवतां सन्दिग्धोपाधिकत्वमिव ममापि सन्दिग्धव्यभिचारकत्वमेव तत्रासाधकत्वानुमापकं वाच्यं नाऽनुमेयं वा तत्रासाधकमिति भावः। मूले पक्षद्वयेपीति। व्यभिचारोन्नयनपक्षे सत्प्रतिपक्षोन्नयनपक्षे चेत्यर्थः । साधनावच्छिन्नसाध्यव्यापकत्वगर्भलक्षणपक्षे पक्षधर्मावच्छिन्नसाध्यव्यापकत्वगर्भलक्षणपक्षे चेति वार्थः । अर्थान्तरत्वसम्पादनायोपात्तस्य केवलसाध्ये विवाद इत्यस्याऽऽशयं प्रकाशयति तथा चेति। विरोधित्वादिति। शुद्धसाध्यस्य व्याप्तिग्रहे विशिष्टबुद्धौ वा विरोधित्वादित्यर्थः । न तु विशिष्टस्येति।साध्यस्य व्यभिचारो व्यतिरेको वा जिज्ञासित इत्यनुषज्यते। अविरोधित्वादिति । प्रतिज्ञातस्य शुद्धसाध्यस्य सिद्ध्यर्थं हेतोरुपन्यासे सत्यत्र दोषं वदेति क्रमेण स्वोक्तहेतौ शुद्धसाध्यानु-

प्रकृतानुमाने नोपाधिर्दूषणं स्यात् । किञ्च साध्यव्य-
भिचारहेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचार
एवोपन्यसनीयो नोपाधिः । स्यादेतत्, पर्यवसितसाध्य-

---

चारित्वे सति विशिष्टसाध्यव्यभिचारेण साधनीयः । तत्र विशि-
ष्टसाध्यव्यभिचारेऽसिद्धावुद्भावितायां तत्सिद्धये उपाधिरुद्भाव्य
इति । तर्हीति । प्रकृतानुमितिविरोधिशुद्धसाध्यव्यभिचारासाधक-
त्वादिति भावः । अथ वक्ष्यमाणरीत्याऽवच्छिन्नसाध्यव्यापकेना-
प्युपाधिना आहत्यैव साध्यव्यभिचारः साधनीय इत्यत आह कि-
ञ्चेति । पक्षधर्मावच्छिन्नेत्यादिकमुपाधिमात्रव्यभिचारोपलक्षकं न

---

मितिविरोधिदोषस्यैवाकाङ्क्षितत्वादिति भावः । तत्रासिद्धा-
वित्यग्रिमग्रन्थस्य तच्छब्देन विशिष्टसाध्यव्यभिचारस्य परामर्शा-
र्थमुद्भाव्यपदं व्याचष्टे विशेषणेत्यादि । विशिष्टसाध्यव्यभिचारमा-
त्रस्य शुद्धसाध्यव्यभिचाराव्याप्यत्वात् सत्यन्तम्, तच्चोपलक्षणम्,
क चिद्विशेषणवतीत्यपि द्रष्टव्यं तेन न श्यामः प्रमेयत्वादित्यादौ प्र-
मेयत्वस्य मित्रातनयत्वाव्यभिचारविरहेऽपि न क्षतिः। प्रमेयत्वं श्याम-
त्वव्यभिचारि मित्रातनयत्ववति तद्विशिष्टश्यामत्वव्यभिचारित्वा-
दित्येवमेव तत्र शुद्धसाध्यव्यभिचारस्योद्भाव्यत्वादिति ध्येयम् ।
काकत्वादौ व्यभिचारेण विशेषणाव्यभिचारित्वादिविशिष्टस्य
विशिष्टसाध्यव्यभिचारस्य विशिष्टसाध्यव्यापकोपाधिना साध-
यितुमशक्यत्वात्तत्रेत्यनेन केवलं विशिष्टसाध्यव्यभिचारमेव प-
रामृशति तत्रेति । वास्तवासिद्धेरसत्त्वात् पूरयति उद्भा-
वितायामिति । एतत्सिद्धये विशिष्टसाध्यव्यभिचारित्वसिद्ध-
ये । उपाध्युद्भावनस्यैवाप्राप्तकालत्वं प्रक्रान्तमतस्तस्यैव तथात्वं निर-
सितुं पूरयति उद्भाव्य इति । वक्ष्यमाणरीत्येति । हेतुः शुद्धसाध्य-

व्यापकत्वे सति साधनाव्यापक उपाधिः । पर्यवसितं साध्यं पक्षधर्मताबललभ्यं यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् मेयत्वादित्यत्र पर्यवसितं यत्सा-

---

प्राधान्येनोपाधिर्व्याप्त्यादिविरहेणाहेतुत्वात् । पर्य्यवसितेति । अत्र लक्ष्यतानियामकं दूषकताबीजं सत्प्रतिपक्षोन्नायकत्वम् । व्यभिचारोन्नायकत्वस्य तत्त्वे साध्यवत्पक्षावृत्तौ व्यभिचारोन्नायकेऽव्याप्तेः वक्ष्यमाणकृतकत्वोपाधेरदूषकत्वापत्तेश्च । न हि तद्व्यभिचारेण हेतौ शुद्धसाध्यव्यभिचारः शक्योन्नयनो बाधानवतारदशायां तादृशव्यभिचारामसिद्धेः । न च पर्य्यवसितसाध्यव्यभि-

---

व्यभिचारी विशेषणवति विशिष्टसाध्यव्यापकोपाधिव्यभिचारित्वादित्येवं सिद्धान्तग्रन्थवक्ष्यमाणक्रमेणेत्यर्थः । आह प्रथमतः । तथा च शुद्धसाध्यानुमान एवोपाधिर्दूषणमिति भावः । उपाध्यन्तरस्यापि व्यभिचारस्यैव साध्यव्यभिचारोन्नायकत्वान्न्यूनतां निरसितुमाह पक्षेत्यादि । ननूपाधिव्यभिचारस्य उपन्यासे विशेषणविधयोपाधेरप्युपन्यासान्नोपाधिरित्यसङ्गतमतो मध्ये पूरयन्नाह न प्राधान्येनोपाधिरिति । केवलोपाधेरनुपन्यस्यत्वे हेतुमाह व्याप्त्यादीति । आदिना पक्षधर्मत्वोपग्रहः । यद्यपि व्यभिचारसम्बन्धेनैवोपाधेः साध्यव्यभिचारव्याप्यत्वं हेतुनिष्ठत्वं च सुघटं तथापि प्राचवैर्वृत्त्यनियामकसम्बन्धेन व्याप्तेरस्वीकारादिदमुक्तम् । साध्यवदिति । पर्वतो धूमवान् वन्हेरित्यादौ महानसत्वाद्युपाधावित्यर्थः । तत्र पक्षधर्मताबललभ्यसाध्यस्य पक्ष एव सत्त्वेन तदव्यापकत्वादिति भावः । ननु पक्षधर्मताबललभ्यत्वं यदि साध्यवत्त्वप्रमाविशेष्यत्वानधिकरणीभूतसाधनाधिकरणावृत्तिधर्मावच्छिन्नत्वमुच्यते तदा नोक्तदोषस्तथापि पिण्डमहानसान्यतरत्वादिनैव तादृशधर्मेणावच्छिन्नस्य साध्यस्य व्यापकताया महानस-

ध्यम् अनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः । यदि च तथैव कृतकत्वमपि शब्दे साध्यते तदा अनित्यत्वमुपाधिः । तदुक्तं वाग्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुन्नाव्यः पर्य्यवसितं नियमयन् दूषकताबीजसाम्रा-

———

चारः साध्यव्याप्यताबोधविरोधीति । न चैवमपि कथं तत्र सद्धेतावुपाधिसम्भवः, मीमांसकमतेन तदभिधानात् शब्दयोर्भावप्रधानत्वाद्वा । पक्षतावच्छेदकादेरुपाधितावारणाय पक्षावृत्तित्वे सतीति विशेषणीयम् । यदि चेति । एतच्च स्वतन्त्रकृतकत्वसाधनदशायां

———

त्वादौ सत्त्वादत आह वक्ष्यमाणेति।बाधानवतारेति ।तदवतारदशायां च तेनैवानुमितिप्रतिबन्धसम्भवादुपाधिवैफल्यमिति भावः । अप्रसिद्धेरिति। पक्षातिरिक्ते सर्वत्रैव प्रकृतसाध्यवत्त्वनिश्चयादिति भावः । ननु तत्र पर्यवसितसाध्यस्यानित्यत्वस्यैव व्यभिचारः कृतकत्वोपाधिनोन्नेय इति अत आह न चेति।तथा च तदुन्नयनेऽर्थान्तरापत्तिरिति भावः । अत्र पक्षीभूतशब्दे विशिष्य प्रकृतसाध्याभावानिर्णयेऽपि प्रमेयत्वमानित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मावच्छिन्नाभाववद्वृत्तीत्येवं सामान्यतः प्रकृतसाध्यव्यभिचारनिर्णयस्याऽऽप्तवाक्यादिनाप्यन्ततः सम्भवाद्व्यभिचारोन्नायकत्वस्य लक्ष्यताप्रयोजकत्वेऽपि न क्षतिरित्यस्मद्गुरुचरणाः ।एवमपीति। सत्प्रतिपक्षोन्नायकत्वस्यैव लक्ष्यत्वेऽपीत्यर्थः । तत्र सद्धेतौ शब्दोऽनित्यत्त्वातिरिक्तेत्यादौ । मीमांसकेति ।तन्मते शब्दस्य नित्यत्वेन पक्ष एव प्रमेयत्वस्य सत्त्वेन साध्यव्यभिचारित्वादिति भावः । ननु नैयायिकस्य रत्नकोषकृतः परमतेन स्वनिरुक्तेरुदाहरणं नोचितमत आह शब्दयोरिति । द्वित्वमविवक्षितम् । यदि चेत्यादि मूलस्थशब्दपदस्यापि शब्दत्वपरत्वादिति ध्येयम् । ननु महानसन्धूमवद्वन्हेरित्यादौ महानसत्त्वादा-

ज्यादिति । अनेन पक्षधर्मसाधनावच्छिन्नसाध्यव्यापकोपाधिः संगृह्यते तादृशसाध्यस्य पर्य्यवसितत्वादिति । तन्न । एवं हि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र नित्यद्रव्यसमवेतत्वं पर्य्यवसितं साध्यं तस्य व्यापकं

---

बोध्यम् । अनित्यत्वसाधनोपयोगितया तु कृतकत्वसाधने द्वयोरपि सन्दिग्धत्वेनैकतरव्यतिरेकस्यान्यतरव्यतिरेकासाधकत्वात् । एवं हीत्यादि । असमवेतत्वेन द्रव्यासमवेतत्वेन वा अर्थान्तरवारणाय

---

व्यतिव्याप्तिस्तस्यापि पक्षधर्मताबललभ्यमहानसीयधूमस्य व्यापकत्वादत आह पक्षतावच्छेदकादीति। आदिना तत्रैव व्यञ्जनवत्त्वाद्युपग्रहः। पक्षावृत्तित्वं स्वानधिकरणपक्षकत्वं तेन घटत्वं रूपवत् सत्त्वादित्यादौ पक्षसमवेतत्वाप्रसिद्धावपि न समवायेन द्रव्यत्वाद्युपाधावव्याप्तिः। वस्तुतः साधनाव्यापकत्वमित्यत्र मूले साध्यतेऽस्मिन्निति व्युत्पत्त्या साधनपदं प्रकृतपक्षपरं तथा च तादात्म्येन तदव्यापकत्वविरहादेव पक्षतावच्छेदकादौ नातिव्याप्तिः। अन्यथा यथाश्रुतस्य साधनाव्यापकत्वस्यापि लक्षणघटकत्वे जलं वह्निमद्धूमादित्यादौ वह्निसामग्र्याद्युपाधावव्याप्त्यापत्तेः इति ध्येयम् । स्वतन्त्रेति । पक्षस्य प्रमाणान्तरेणानित्यत्वाभावनिश्चयकालीनेत्यर्थः। अनित्यत्वेति । अनित्यत्वानुमितिविरोधिन्यां कृतकत्वस्याभावेनानित्यत्वस्यानुमितौ स्वरूपासिद्धिप्रदर्शकतया कृतकत्वसाधने हीत्यर्थः। द्वयोः। अनित्यत्वकृतकत्त्वयोः। असाधकत्वादिति। हेतोः पक्षधर्मत्वानिश्चयादिति भावः। अत्र विनाशित्वलक्षणानित्यत्वसाधनोपयोगितया कृतकत्वसाधने सदातनान्यत्वलक्षणमनित्यत्वमुपाधिः सम्भवत्येव पक्षे

सावयवत्व इति । साध्ये द्रव्यपदं नित्यद्रव्यवृत्तितायाः स्फुटतरसिद्ध्यर्थम् । द्रव्यसमवेतेऽनित्यद्रव्यासमवेतत्वस्य नित्यद्रव्यसमवेतत्वमादाय पर्य्यवसानात् । हेतौ च जन्यपदं परमाणुनित्यत्वासिद्धिदशायामाकाशादौ व्याप्तिग्रहाय । विशेष्टाभावस्यातिरिक्तत्वान्न वैयर्थ्यम् । नित्यमहत्त्वव्यावृत्तानित्यावन्महत्त्ववृत्तिजातिपरिचयाय तदिति तु न । तादृशजातौ मानाभावात् वैभवापेक्ष-

---

तद्व्यतिरेकस्य निश्चेतुं शक्यत्वादित्यस्मद्गुरुचरणाः ।ननु समवेतत्वे सिद्धे इत्येवोच्यतां तावतैवासमवेतत्वमादायार्थान्तरस्य वारणादत आह द्रव्येति।सावयवत्वञ्चेह न समवेतद्रव्यत्वं किन्तु द्रव्यसमवेतत्वं तथा सत्येव नित्यद्रव्यसमवेतत्वस्य पर्य्यवसितसाध्यत्वसम्भवादिति ध्येयम् । स्फुटतरेति। प्रकृतानुमानेनैव सिद्ध्यर्थमित्यर्थः । एकविशेषस्य बाधानिश्चयदशायामिव तत्सामग्रीदशायामपि साध्यविधयेव पक्षतावच्छेदकविधयापि सामान्यप्रकारकानुमितिसामग्री जनयत्येव विशेषान्तरप्रकारिकामनुमितिं तथा चानित्यसमवेतत्वं न द्रव्यसमवेतत्वस्य विशेषणं किन्त्वनित्यद्रव्यसमवेतत्वमेवेति तद्बाधसामग्रीसम्पत्त्यर्थमेव साध्ये द्रव्यपदमन्यथा तदनुक्तौ द्रव्यसमवेतत्वे सत्यनित्यसमवेतत्वहेतुनाऽनुमानान्तरेणैव नित्यद्रव्यसमवेतत्वसिद्धिः स्यादिति भावः । उक्तक्रमेण सामान्यधीसामग्र्या विशेषधीजनकत्वे फलं प्रमाणयति द्रव्यसमवेत इत्यादिना।पर्य्यवसानादनुमानात्।द्व्यणुकस्य सावयवत्वसिद्ध्यैव परमाणुः सिद्ध इति तन्नित्यत्वासिद्ध्यनुसरणम् । ननु परमाणोर्नित्यत्वासिद्धिदशायामपि मनस्येव महत्त्वानधिकरणद्रव्यत्वस्य हेतोरनित्यद्रव्यासमवेतत्वव्याप्तिग्रहो भवित्येत आह विशिष्टेति । महत्त्वाधिकरणान्यत्वमपेक्ष्य जन्यमहत्त्वाधिकरणान्यत्वस्यातिरिक्तत्वात् तद्गर्भहेतौ न जन्यपदस्य वैयर्थ्यमित्यर्थः।मतान्तरं निरसितुमुपन्यस्यति नित्येत्यादिना।तत् जन्यपदम्।ननु परममहत्त्वादपकृष्ट त्रुटिघटादीनां महत्त्वमिति व्यवहारबलादेव तादृश्येकजातिः सेत्स्यतीत्यत आह वैभवेति । अननुगतेति । घटत्रुट्यादिप्रत्येकमहत्त्वनिष्ठतयाऽनुभवसिद्धैस्तत्तज्जातिभिरित्यर्थः ।

कापकर्षव्यवहारस्याननुगतजातिभिरेव सम्भवात् तुल्यन्यायतया त्रसरेणुमहत्त्वापेक्षिकोत्कर्षेणैकजात्या सङ्करप्रसङ्गाच्च । निःस्पर्शेति । साध्योपाध्योर्व्याप्तिदार्ढ्यप्रदर्शनाय द्रव्यपदम् । गमकता तु तेन विनापि । पर्यवसितसाध्यसमव्याप्त एवोपाधिरिति मतेनेदमित्यपि कश्चित् । ननु भवतां शुद्धसाध्यव्यापकस्पर्शवदसमवेतत्वं

---

अर्थानुगतव्यवहारस्यानुगतधर्मनियम्यत्वान्नानाजातिभिस्तदसम्भव इत्यत आह तुल्येति।त्रुटिमहत्त्वादुत्कृष्टं गगनघटादेर्महत्त्वमित्यपि व्यवहारसत्त्वादिति भावः। सङ्करेति । परमहत्त्वापेक्षिकोत्कर्षस्य त्रुटिमहत्त्वापेक्षिकोत्कर्षस्य च गगनमहत्त्वे त्रुटिमहत्त्वे च परस्परपरीहारेण वर्त्तमानस्यैकत्र घटत्वादिमहत्त्वे सत्त्वादिति भावः । वैभवावृत्तिमहत्त्वनिष्ठजातिकूटपरिचयार्थं जन्यपदमित्युक्तौ तु न कश्चिद्दोष इति ध्येयम् । व्याप्तिदार्ढ्यायेति । व्याप्तिग्राहकतर्कप्रदर्शनायेत्यर्थः । परमाणोर्नित्यत्वासिद्धिदशायां निःस्पर्शद्रव्यसमवेतत्वमात्रस्य नित्यद्रव्यसमवेतत्वाभेदग्रहात्तस्यैव प्रकृतोपाधौ साध्यव्यापकताग्राहकत्वात् निःस्पर्शद्रव्यसमवेतत्वं यदि नित्यद्रव्यसमवेतत्वस्याव्यापकं न स्यात्तदा तदभिन्नं न स्यादित्येवं तर्कसम्भवात्।नहि निःस्पर्शसमवेतत्वमात्रं नित्यद्रव्यसमवेतत्वाभिन्नं गुणसमवेतत्वादौ व्यभिचारात् येन तन्मात्रस्य प्रकृतसाध्याभिन्नत्वग्रहस्तद्व्यापकताग्राहकस्तर्कः स्यादिति भावः । गमकता त्विति । स्वाभाविकसाध्याभावोन्नयनौपयिकरूपवत्वात्तु द्रव्यपदं विनापीत्यर्थः।द्व्यणुकं नित्यद्रव्यासमवेतं निःस्पर्शसमवेतत्वाभावादित्येवं साध्याभावोन्नयनसम्भवादिति भावः। मिश्रस्य मतमाह पर्यवसितेत्यादि । इदमुपाधिस्थद्रव्यपदम्। अन्यथा निःस्पर्शसमवेतत्वस्य रूपत्वादौ नित्यद्रव्यसमवेतत्वव्यभिचारेण तत्समनियतत्वानुपपत्तेः इति भावः । दूषकतायामनुपयोगादुपाधेः साध्यव्यापकत्वं न लक्ष्यताप्रयोजकमित्यस्वरसः कश्चिदित्युक्त्वा सूचितः।भवतां शुद्धसाध्यव्यापकस्यैव उपाधित्वमङ्गीकुर्वताम्।शुद्धसाध्यस्य अनित्यद्रव्यासमवेतत्वस्य व्यापकमित्यर्थः। अनवस्थेति।द्व्यणुकावयवस्याप्यवयवकल्पने तदवयवस्याप्यवयवान्तरं स्यादित्यवय-

साधनाव्यापकञ्च । किञ्च पक्षधर्मताबललभ्यसाध्यासि-द्धौ निष्फलमुपाधिः तदसिद्धौ च कस्य व्यापकः, न हि सोपाधौ पक्षधर्मताबलात् साध्यं सिध्यति यस्य व्यापक उपाधिः स्यादिति ।

---

कथं नोपाधिः, अनवस्थाभिया कस्य चिन्निरवयवस्य स्पर्शवतः सिद्धौ तत्समवेतद्रव्ये साध्याव्यापकत्वादिति चेत्, तुल्यं ममापी-त्यत आह किञ्चेति । सोपाधौ । सोपाधितया निश्चिते । ननु लभ्यत्वं लाभयोग्यत्वं पक्षे यादृशं साध्यं सेद्धुमर्हति तद्व्याप-कत्वे सति पक्षावृत्तित्वं पक्षे साध्यसिद्धिविरोधिव्यापकताशालि-त्वमिति यावत्, स्वव्यतिरेकेण पक्षे साध्यसिद्धिविरोध्युन्नायक-

---

वपरम्परायामनवस्थापत्त्या निरवयवस्यापि कस्य चिदारम्भकत्वानुरो-धेन स्पर्शवतः सिद्धौ तत्समवेत एव द्रव्यादौ शुद्धसाध्याव्यापक-त्वात् स्पर्शवदसमवेतत्वं नोपाधिरिति प्रश्नवाक्येनान्वयः । तु-ल्यमिति । ममापि तादृश्येव निरवयवस्पर्शवति यत् समवेतं तत्रैव निःस्पर्शद्रव्यसमवेतत्वस्य नित्यद्रव्यसमवेतत्वाव्यापकत्वान्न पर्य्य-वसितसाध्यव्यापकत्वमित्यर्थः । सोपाधावप्युपधेरज्ञानदशायां पक्षधर्मताबलात् साध्यं सिद्ध्यत्येवातो व्याचष्टे सोपाधाविति।सोपा-धित्वसंशयस्य प्रतिपक्षाक्षमत्वान्निश्चयानुसरणम् । योग्यतां विवृ-णोति पक्षे यादृशमिति । अर्हत्वस्य दुर्वचत्वादाह पक्षे साध्यसिद्धी-ति । यादृशव्यापकत्वावच्छिन्नाभाववत्तया पक्षस्य निश्चयः पक्षधर्मिकप्रकृतसाध्यवत्त्वबुद्धिप्रतिबन्धकः सा पक्षे साध्यासिद्धि-विरोधिनी व्यापकता तद्वत्त्वमर्थः । ननु विशेषणवति पक्षे विशिष्ट-साध्यव्यापकत्वावच्छिन्नाभावस्य निश्चयो न शुद्धसाध्यवत्ताग्रहविरो-धी विरोध्यविषयकत्वात् प्रतिबन्धकत्वान्तरकल्पने च मानाभा-

त्वमिति तु निर्गलितोऽर्थः । भवति च शब्दधर्मातिरिक्तधर्मरहिते शब्देऽनित्यत्वाभावसिद्धिर्यथोक्तसाध्यसिद्धिविरोधिनी तथा साधनाद्यिमति साधनाद्यवच्छिन्नसाध्याभावसिद्धिरपि । वस्तुतस्तु पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति पक्षावृत्तित्वमेवोपाधित्वम् । सिध्यति च विशेषणवति विशिष्टसाध्यव्यापकव्यतिरेकेण शुद्धसाध्यव्यतिरेकः । तादृशश्च साधनव्यापकः संग्राह्यो व्यभिचारोन्नायक इव पक्षवृत्तिरितरेषाम् । अपरेषां सत्प्रतिपक्षोन्नयनक्षमस्य साधनव्यापकस्येवाऽस्माकमपि व्यभिचारोन्नायकस्य पक्षवृत्तेरसंग्रहो न दोषाय। परेषां साधनभेदादिवास्माकमपि पक्षभेदादुपाधिभेद इति चेत्, अत्र वक्ष्यते ग्रन्थकृतैव ।



वादत आह स्वव्यतिरेकेणेति । यथोक्तेति । अनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मात्मकेत्यर्थः।विरोधिनीति।सामान्याभावस्य विशेषाभावकूटात्मकत्वादित्यभिमानः । सिद्धिरपीति।यथोक्तसाध्यसिद्धिविरोधिनीत्यनुषज्यते।विशेषणवति विशिष्टाभावस्य विशेष्याभावात्मकत्वादिति भावः । नन्विदमयुक्तं सामान्याभावविशिष्टाभावयोर्भिन्नत्वाद्यथोक्तसाध्याभाववत्त्वावच्छिन्नवत्तानिश्चयत्वेनैव शुद्धसाध्यवत्ताबुद्धिप्रति विरोधित्वाच्चात आह वस्तुतस्त्विति।ननु पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं न दूषणक्षमं तदवच्छिन्नाभावेन व्यभिचारितया शुद्धसाध्यव्यतिरेकस्य साधयितुमशक्यत्वादत आह सिध्यति चेति । ह्रदो वन्हिमान् धूमादित्यादिस्थले वह्निसामग्र्याद्रावातव्याप्तिं लक्ष्यतया निरस्यति तादृशश्चेति । उक्तलक्षणाक्रान्तश्चेत्यर्थः । इतरेषां व्यभिचारोन्नायकत्वेन दूषकत्ववादिनाम्।पर्वतो धूमवान् वन्हेरित्यादावार्द्रेन्धनाद्यव्याप्तिमलक्ष्यतया निरस्यति अपरेषामिति । अस्माकं सत्प्रतिपक्षोन्नायकत्ववादिनाम्।नन्वेवमेकस्मिन्नेव साधने पक्षभेदादुपाधिरनेकः स्यादत आह परेषामिति । उपाधिभेदः उपाधिपदप्रवृत्तिनिमित्तोपाधेर्भेदः । अत्र प्रकृतनिरुक्तौ ग्रन्थकृतैवेति । सम्माति-

अतोऽच्यते । यद्व्यभिचारित्वेन साधनस्य साध्य-
व्यभिचारित्वं स उपाधिः । लक्षणन्तु पर्य्यवसितसा-

---

लक्ष्यतावच्छेदकमाह यद्व्यभिचारित्वेनेत्यादि।उन्नीयत इति शेषः।
उन्नायकत्वं तद्योग्यता सा च व्याप्तिपक्षधर्म्मतेति।तथा च यद्व्यभिचा-
रो यद्धर्म्मावच्छिन्नाभावाधिकरणीभूतयत्किञ्चिदधिकरणवृत्तित्वं

---

रिति शेषः । क्व चित् साधनाव्यापकोऽप्युपाधिर्यत्र पक्षावृत्तिर्हेतुरि-
त्यग्रिममूलस्यात्रैव तात्पर्य्यादिति भावः ।

ननु यद्व्यभिचारित्वेनेत्यादिमूलस्य लक्षणपरत्वे लक्षण-
न्त्वित्याद्यग्रिमग्रन्थविरोध इत्यत आह लक्ष्यतेति । साध्यव्यभिचा-
रस्योपाधिव्यभिचारेण तज्ज्ञानेन वा जन्यत्वासम्भवात् तृतीयार्था-
सङ्गतेराह उन्नीयत इति ।तथा च साधने यद्व्यभिचारहेतुकानुमि-
तिविषयः साध्यव्यभिचारः स तत्रोपाधिरित्यर्थः । इदं च जन्यत्व-
मात्रं ज्ञानजन्यत्वमात्रं वा प्रकृते तृतीयार्थ इति प्राचां मतानुसा-
रणेति । स्वमते तु पञ्चम्या इव ज्ञानज्ञाप्यत्वं प्रकृते तृतीयाया अर्थ
इत्येव वक्तुमुचितमिति ध्येयम्।साध्याव्यापकस्यापि व्यभिचारेण
व्याप्त्यादिभ्रमवशात् साध्यव्यभिचारस्योन्नयनात्तत्रातिव्याप्ते-
राह उन्नायकं चेति।योग्यतां निर्वक्ति सा चेति।तथा च यद्व्यभिचारः
साध्यव्यभिचारव्याप्यः साधनवृत्तिश्च तत्त्वमर्थः । अथात्र किञ्चि-
द्विशिष्टस्य केवलस्य वा यद्व्यभिचारस्य साध्यव्यभिचारव्याप्य-
त्वमभिमतम् प्रथमे रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावादेरुपा-
धितापत्तिस्तद्व्यभिचारस्यापि जलसमवेतनित्यत्वादिविशिष्टस्य
साध्यव्यभिचारव्याप्यत्वात्, द्वितीये तु शाकपाकजत्वाद्यव्याप्तिस्त-
द्व्यभिचारमात्रस्य साध्यव्यभिचाराव्याप्यत्वादत आह तथा चेति ।
तद्धर्मावच्छिन्नेति यत्सम्बन्धावच्छिन्नत्वस्याप्युपलक्षकम् । यत्कि-
ञ्चिदधिकरणवृत्तित्वं यत्किञ्चिदधिकरणवृत्तित्वसामान्यम् । क्व चि-

साध्यव्यभिचारव्याप्यं साधनवृत्ति च तद्धर्म्मावच्छिन्नं तत्रोपाधिरि-त्यर्थः। तेनार्द्रेन्धनाभाववद्वृत्तित्वेन वन्हौ धूमव्यभिचारसाधनेऽप्यार्द्रेन्धनं द्रव्यत्वादिना न तत्रोपाधिः। तद्रूपावच्छिन्नाभाववद्वृत्तित्वस्य वन्ह्यवृत्तित्वात्। शुद्धसाध्यव्यापके तदभाववन्मात्रवृत्तित्वं साध्यव्यभिचारव्याप्यम् अवच्छिन्नसाध्यव्यापके त्ववच्छेदकाधिकरणीभूततदभावाधिकरणवृत्तित्वमित्युभयत्रापि सङ्गतिः। द्रव्यत्वेन रूपवत्त्वेन साध्ये सत्ताद्रव्यत्वजलत्वमात्रविशेष्यिका या धीस्तद्विशेष्यत्वे जलसमवेतनित्यत्वे वा सति पृथिवीत्ववद्वृत्तित्वादित्यादिना प्रकारेण व्यभिचारोन्नयनसमर्थोऽपि पृथिवीत्वाभावादिर्नोपाधिः। न हि पृथिवीत्वात्मकतदभावाधिकरणं तादृशं कि-

———

त्थैव पाठः।तद्धर्मावच्छिन्नमिति। तत्सम्बन्धेनेत्यपि बोध्यम्। तत्र साध्यसाधनयोः।यद्धर्मावच्छिन्नेत्यस्य फलमाह तेनेति।तत्र धूमसाध्यकवन्हौ तद्रूपेति।न च संयोगेन वन्हेः साधनत्वे द्रव्यत्वावच्छिन्नाभाववत्-संयुक्तत्वस्याप्रसिद्धिरेव वक्तुमुचिता न तु वन्ह्यवृत्तित्वमिति वाच्यम्।समवायेन वन्हेः साधनत्वाद्यभिप्रायेणैव तदभिधानात् वन्हिमद्वीय संयोगेनार्द्रेन्धनस्योपाधित्वे संयोगेन वन्हेः साधनतायामपि क्षत्यभावाच्च।सामान्यपदस्य व्यावृत्तिमाह द्रव्यत्वेनेति। सत्तेत्यादि। तत्र दृष्टान्तार्थं सत्तायाः पक्षधर्मत्वार्थं द्रव्यत्वस्य पृथिवीवृत्तित्वांशसार्थकत्वार्थं जलत्वस्य निवेशः। सत्त्वादित्रितयविशेष्यकधीविशेष्यत्वं पृथिवीत्वादेरपीत्यतो मात्रपदम्। सत्तादित्रितयभिन्नाविषयकत्वं बुद्धेरप्रसिद्धमतो विशेष्यकेति। सत्तादित्रितयविशेष्यकधीविषयत्वं प्रकारतया घटादेरपि इति तत्र व्यभिचारस्य वारणार्थं विशेष्यत्व इति।अत्र च सत्तादित्रितयभिन्नाविशेष्यकधीविशेष्यत्वे तात्पर्य्यं न तु मात्रार्थघटकस्य सत्तादित्रितयविशेष्यकत्वस्यापि निवेशो व्यर्थत्वादिति ध्येयम्। सत्तादित्रितयमात्रविशेष्यकधियः सन्दिग्धत्वादाह जलेति। असमवेतान्तेन घटत्वादेर्नित्यपदेन च जलघटसंयोगादेर्निरासः। पृथिवीत्वाभावादिरित्यादिना गन्धाभावा-

श्चिदस्ति यद्वृत्तित्वसामान्यं साध्यव्यभिचारव्याप्यम्, पृथिवी-
त्वादावेव व्यभिचारात् । न च व्यभिचारोन्नायकतामात्रेण प्रकृ-
तोपाधितानिर्वाहः अपि तु कथकानां तान्त्रिकाणाञ्च तथावि-
धव्यवहारविषयत्वेन, तदवच्छेदकञ्च यथोक्तं रूपं व्याप्यत्वासि-
द्ध्युन्नायकत्वादिकं सम्भवदपि न तथा, गौरवात् । अत एवेदं
जलमाकाशादित्यत्र स्वाव्याप्यत्वेन जलत्वाव्याप्यत्वोन्नायकस्या-
पि द्रव्यत्वादेरसंग्रहो न दोषाय । अथैवं स्वव्यभिचारेण व्यभि-
चारोन्नायकत्वमेव तथास्तु लाघवात् तच्चोक्तोपाधावप्यस्तीति

———

द्युपग्रहः। [अनुपाधिबीजमाह न हीति।पृथिवीत्वात्मकेति । तत् पृथि-
त्वाभावादि।तथा च पृथिवीत्वाभिन्नो यः पृथिवीत्वाभावाभावस्तदधि-
करणं तादृशयत्किञ्चिदस्तीत्यर्थः]। व्यापके साध्ये व्याप्त्यभावस्यैव
विरहेऽनुपाधित्वस्य सिद्धान्तसिद्धत्वादिति ध्येयम् । ननु सा-
ध्यव्यभिचारोन्नायकत्वादुक्तस्थले पृथिवीत्वाभावादिर्भवत्येव उपा-
धिरत आह न चेति । प्रकृतेति । प्रकृतं जलकथोद्भाव्यं यदुपाधित्वं
तस्य निर्वाह इत्यर्थः । तथाविधव्यवहारेति । शक्त्योपाधिव्यवहारे-
त्यर्थः । तदवच्छेदकं कथकादेरुपाधिव्यवहारविषयतावच्छेदकम्।
यथोक्तम् । यद्धर्मावच्छिन्नाभावाधिकरणीभूत इत्याद्युक्तम् । नन्विदं
जलमाकाशादित्यादौ द्रव्यत्वादावपि कथकादेरुपाधिव्यवहा-
राद्यथोक्तरूपस्य च तत्रासत्त्वात् यदव्याप्यत्वेन साधनस्य साध्या-
व्याप्यत्वमुन्नेयं तत्त्वमेवोपाधिपदशक्यतावच्छेदकं युक्तमत आह
व्याप्यत्वासिद्धीति । न तथा न शक्त्योपाधिव्यवहारविषयतावच्छे-
दकम्। गौरवादिति । व्यभिचारमपेक्ष्य अव्यभिचरितसामानाधिकर-
ण्याभावरूपाया व्याप्यत्वासिद्धेर्गुरुत्वादित्यर्थः। न दोषायेति। लक्षण-
यापि कथकादेस्तत्रोपाधिव्यवहारसम्भवादिति भावः । एवं गुरोः
शक्यतानवच्छेदकत्वे । स्वव्यभिचारेणेति । साधन इत्यादिः।तथा च
कश्चिदेव यद्व्यभिचारः साध्यव्यभिचारव्याप्यः सन् साधनवृत्तिस्त-
त्त्वमर्थः । लाघवादिति। यत्किञ्चित्पदसामान्यपदयोरप्रवेशे लाघवा-

चेत्, एवं तर्हि साध्याभावसाधनोभयाधिकरणवृत्त्यभावप्रतियोगित्व-मेव तथास्त्वतिलाघवात् अस्तु च सहार्थतृतीयाश्रयणेनास्यापि स एव फलितोऽर्थः। तद्रूपमात्रज्ञाने तेषां नोपाधिव्यवहार इति चेत्, तुल्यं त्वदुक्तेऽपि। अत एव शुद्धसाध्याव्यापकस्थले सा-ध्ये व्याप्यतावच्छेदकं नियमतस्तादृशं धर्म्ममनुसरन्ति ते यद्वति साध्यव्यभिचारानियमो भवत्युपाधिव्यभिचारस्य। वस्तुतस्तु यदभा-वेन यद्वद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपा-

———

दित्यर्थः। उक्तोपाधौ पृथिवीत्वाभावाद्युपाधौ। द्रव्यत्वनिष्ठाया एव तद्व्यभिचारव्यक्तेः साध्यव्यभिचारव्याप्यत्वादिति भावः। अतिला-घवादिति। साध्यव्यभिचारव्याप्यत्वाद्यप्रवेशेनातिलाघवादित्यर्थः। तच्च न पृथिवीत्वाभावाद्युपाधेरिति भावः। ननु साध्यव्यभिचार-व्याप्यत्वाद्यघटितस्य लघोः सत्त्वे मूलकृता कथन्तन्नोक्तमत आह अ-स्तु चेति। सहार्थेति। तथा च साधनगतयद्व्यभिचारेण सहितोऽव-च्छेदकत्वसम्बन्धेन समानाधिकरणः साध्यव्यभिचारस्तत्त्वमित्यर्थः। अस्यापि यद्व्यभिचारित्वेनेत्यादिमूलस्यापि। स एव साध्यव्यभिचार-व्याप्यत्वाद्यघटित एव। तेन साध्याभावसाधनोभयाधिकरणवृत्त्यभा-वप्रतियोगित्वस्य सहार्थतृतीयालभ्यत्वासम्भवेऽपि नासङ्गतिरिति ध्ये-यम्। शङ्कते तद्रूपेति। सहार्थतृतीयादिलब्धरूपमात्रज्ञानेऽपीत्यर्थः। तेषां कथकादीनाम्। त्वदुक्तेपीति। यस्य कस्यचिद्व्यभिचारः साध्यव्यभिचा-रव्याप्यः सन् साधनवृत्तिस्तत्त्वज्ञानेऽपि कथकादीनामुपाधिव्यव-हारविरहादित्यर्थः। रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावादे-रनुपाधित्वे कथकानां स्वरसमप्याह अत एवेति। कथं चित् साध्यव्य-भिचारोन्नायकमात्रस्यानुपाधित्वादेवेत्यर्थः। ते कथकादयः यद्वती-ति। यद्वृत्त्युपाधिव्यभिचारसामान्यस्य साध्यव्यभिचारनियम इत्यर्थः। रूपनिष्ठं च यत् पृथिवीत्वाभावादिव्याप्यतावच्छेदकं जलवैशिष्ट्या-दिकं तद्वति पृथिवीत्वाभावादिव्यभिचार एवाप्रसिद्ध इति भावः। ननु घटैकत्वभिन्नं गुणत्वादित्यादौ घटैकत्वभेदस्योपाधितापत्तिः तद-

धिलाघवात्। अत एव जलत्वतेजस्त्वयोर्न तदुभयत्वेन क्वचिदप्यु-

---

भावाधिकरणसमवेतत्वसामान्यस्यैव साध्यव्याप्यत्वादेवं गुण-वान् विशिष्टसत्त्वात् इत्यादिसद्धेतौ सत्त्वादिरप्युपाधिः स्यात् गु-णाद्यन्यत्वविशिष्टसत्ताया अपि गुणत्वाभाववद्वृत्तित्वेन तद्व्यभिचा-रित्वादत आह वस्तुतस्त्विति। यदभावेनेति। अत्राप्युन्नयनं तद्योग्य-ता तेन यदभावः साध्याभावव्याप्यः सन् साधनवद्वृत्तिस्तत्त्वमित्येव फलितम्। न च वन्हिमान्धूमादित्यादौ महानसत्त्वाद्यतिव्याप्ति-स्तदभावस्यापि जलत्वविशिष्टत्वादिना साध्याभावव्याप्यस्य साधन-वत्पर्वतादिनिष्ठत्वात् यदभावत्वमात्रेण साध्याभावव्याप्यत्वोक्तौ च निर्वन्हित्ववान् द्रव्यत्वादित्यादौ निर्धूमत्वाद्युपाधावव्याप्तिर्धूमत्वापे-क्षया गुरुत्वेन निर्धूमत्वाभावत्वस्य व्याप्यतानवच्छेदकत्वादेवं द्रव्यं सत्त्वादित्यादौ संयोगाद्युपाधावव्याप्तिस्तदभावत्वेन द्रव्यत्वाद्यभाव-त्वव्याप्तिविरहादिति वाच्यम्। प्रकृतसाधनवान् यद्धर्मावच्छिन्ना-भावनिष्ठायाः साध्याभावव्याप्यताया अवच्छेदकधर्मावच्छिन्नवांस्त-द्धर्मवांस्तत्रोपाधिरित्यत्र तात्पर्यात्। संयोगाद्यभावे च द्रव्यत्वाद्य-भावव्याप्यतावच्छेदकं यद्गुणत्वादिवैशिष्ट्यं तदवच्छिन्नसत्तायाः साधनवति गुणादौ सत्त्वादेवं द्रव्यं सत्त्वादित्यादौ संयोगाद्युपाधेः सं-ग्रहात्।साध्याभावश्च प्रतियोगिव्यधिकरणो ग्राह्यः साध्येनाभाव इति व्युत्पत्त्या साध्यवत्त्वावच्छिन्नभेद एव वा निवेश्यःसाध्याभावो वा सा-ध्यविरोध्यभावः, तेन संयोगी द्रव्यत्वादित्यादौ न विभागादावतिव्या-प्तिः। ननु सत्तावान् मेयत्वादित्यादौ जलत्वतेजस्त्वयोरुभयत्वेनोपा-धितापत्तिः तादृशोभयत्वावच्छिन्नाभावनिष्ठायाः सत्ताभावव्याप्य-तायाः यदवच्छेदकं जातिवृत्तित्वादिवैशिष्ट्यं साधनवतः सामान्या-देस्तदवच्छिन्नवत्त्वादत आह यद्वदन्यत्वेन वेति।अत्रापि साधनवान् य-द्धर्मावच्छिन्नवदन्यत्वनिष्ठायाः साध्याभावव्याप्यतायाः अवच्छेदकी-भूततद्धर्मावच्छिन्नवांस्तद्धर्मवत्त्वमर्थः तेन वन्हिमान्धूमादित्यादौ महा-नसत्त्ववदन्यत्वादेरपि जलत्वादिविशिष्टत्वेन साध्याभावव्याप्यत्वे-ऽपि न महानसत्त्वादावतिव्याप्तिः यद्वद्भेदत्वेन साध्याभावव्याप्यत्व-मित्युक्तौ निर्वन्हिर्द्रव्यत्वादित्यादौ धूमवदन्यत्वाद्युपाधावव्याप्ति-

पाधित्वम् । यद्व्यभिचारित्वेनेत्यस्यापि स एवार्थः । तथा हि, य-द्व्यभिचारित्वेन हेतुमद्वृत्तित्वविधया साधनस्य पक्षतावच्छेदकीभूतस्य साध्याभावरूपसाध्यवत्पक्षवृत्तित्वं सिद्ध्यतीति । अत्र च साध्य-समानाधिकरणत्वेनावच्छिन्नो धर्मो साध्यासमानाधिकरणाद्रेन्धना-

———

प्रसङ्गात् धूमत्वाद्यपेक्षया गुरुत्वेन धूमवद्भिन्नभेदत्वादेः व्याप्यतान-वच्छेदकत्वादिति ध्येयम् । लाघवादिति । साध्योपाध्योरभावयोर-धिकरणत्वाप्रवेशो लाघवादित्यर्थः । अत एवेति । यद्वदन्यत्वेन इत्या-देरुक्तत्वादेवेत्यर्थः।न च धूमवान् महानसत्वादित्यादौ जलत्वविशि-ष्टजातित्वादिप्रकारेण द्रव्यत्वादेरुपाधित्ववारणाय उपाधितावच्छे-दकधर्मस्य साध्याधिकरणवृत्तित्वाधिकरणताकत्वपर्य्यवसितेन सा-ध्यसमानाधिकरणवृत्तित्वेनाग्रे विशेषणीयत्वात्, अत एव जलत्वतेज-स्त्वोभयत्वप्रकारेण तदुभयोर्न उपाधित्वमिति वाच्यम्।वक्ष्यमाणस्य साध्यसमानाधिकरणवृत्तित्वस्य साध्याधिकरणयत्किञ्चिन्निष्ठ-भेदप्रतियोगितावच्छेदकतानवच्छेदकत्व एव तात्पर्यात्तस्य च धूमादेः साध्यतास्थले जलत्वविशिष्टजातित्वादावसत्त्वाज्जलत्वतेजस्त्वोभय-त्वादावनपायाच्चेति भावः।केचित्तु वक्ष्यमाणस्य साध्यसमानाधिकरण-वृत्तित्वस्य साध्यवन्निष्ठत्वावच्छिन्नवत्ताकत्वपर्य्यवसानेपि न क्षतिः। साध्यसाधनभेदेनैवोपाधिताघटकसम्बन्धभेदेनाप्युपाधिलक्षणस्य वि-भिन्नत्वाज्जात्यादिसाध्यकप्रमेयत्वादिहेतुकस्थले समवायसम्बन्धे-न उपाधिलक्षणस्य समवायसम्बन्धावच्छिन्नवदन्यत्वेन साधनव-ति साध्याभाव उन्नीयते इत्येतावन्मात्रस्यैव सम्यक्त्वेन तत्रोक्तवि-शेषणस्याप्रवेशेन लाघवात् समवेतमात्रस्यैव तत्रोपाधित्वेन तद्विशे-षणवारणीयस्यासत्त्वात्।अत एव क्वचिदपीत्यभिधाय यत्र न तादृश-विशेषणं तादृशस्थलविशेषो ग्रन्थकृतैवानिराकृत्यैव वाविष्कृत इति प्राहुः।तथाहीत्यादि । साधनवान् साध्याभाववान् उपाध्यभावादित्यत्र हेतुभूतो य उपाध्यभावस्तद्वत्पक्षवृत्तित्वविधयोपाधिव्यभिचारित्वेन सार्द्धं पक्षतावच्छेदकीभूतस्य साधनस्य साध्याभावरूपं यत्साध्यं तद्वत्पक्षवृत्तित्वं साध्यव्यभिचाररूपं सिद्ध्यतीत्यर्थः । लिङ्गोपहित-

दिव्यक्तेरार्द्रेन्धनत्वादिनोपाधित्वे पुनरवच्छेदकधर्म्म एव साध्यस-मानाधिकरणवृत्तित्वेन विशेषणीयः । तेन जलह्रदत्वाभावाधिक-रणायोगोलकवृत्तित्वस्य धूमव्यभिचारव्याप्यस्य वह्निवृत्तित्वेऽपि जलह्रदत्वादौ नातिप्रसङ्गः, न वा द्रव्यत्वेन तेजस्त्वसाधने शीत-स्पर्शजलत्वाद्यात्मकस्वाभावेन तद्वद्वृत्तित्वेन वा द्रव्ये द्रव्यत्वे वा साध्याभावस्य व्यभिचारस्य वा साधके स्पर्शाभावजात्यभावादौ । द्रव्यत्वादिना तु कम्बुग्रीवादिमत्त्वादौ साध्ये स्वव्यभिचारेण

---

भानमतेनेदम् । अत्र चेति।एतेषु लक्षणेष्वित्यर्थः । अवच्छिन्नो धर्मीति । यद्धर्मवत्त्वमुपाधिलक्षणं तद्धर्मावच्छिन्नसाध्यसमानाधिकरणत्वेन विशेषणीय इत्यर्थः।साध्यासमानाधिकरणस्येति।धूमवान् वन्हेरित्या-दौ धूमाद्यसमानाधिकरणस्येत्यर्थः । अवच्छेदकधर्म एवेति । यद्ध-र्मवत्त्वमुपाधित्वं तद्धर्म एवेत्यर्थः । साध्यसमानाधिकरणवृत्तित्वं साध्याधिकरणयत्किञ्चिन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेद-कत्वं तेन जलत्वविशिष्टसत्तात्वस्य धूमादिसमानाधिकरणवृत्तित्वे-ऽपि धूमादेः साध्यताकाले न ताद्रूप्येण सत्तादेरुपाधित्वम् । वन्हिव्य-भिचारित्वेऽपीति प्रथमव्याख्यानुसारेण । द्वितीयव्याख्यायां मेघायोगोलकवृत्तित्वविशिष्टत्वेन धूमाभावव्याप्यस्य जलह्रद-त्वाद्यभावस्य वन्हिमदयोगोलकवृत्तित्वेऽपीति द्रष्टव्यम् । शु-द्धेन विशिष्टेन वा यदभावत्वं तदभावमात्रवृत्तित्वेन साध्यव्य-भिचारव्याप्यधर्मेण वा साध्याभावव्याप्यत्वं स उपाधि-रित्यभिधानेऽप्यतिव्याप्तिमाह न वेति । स्वाभावेनेति । द्रव्ये साध्याभावस्य साधक इति योजना । तद्वद्वृत्तित्वेन वेति । शीतस्प-र्शाद्यात्मकस्वाभाववद्वृत्तित्वेन वेत्यर्थः ! द्रव्यत्वे साध्यव्यभिचारस्य साधक इति योजना । स्पर्शाभावस्य वन्ह्यादितेजसि उत्पत्तिकाला-वच्छेदेन साध्यसमानाधिकरणतया उपाधित्वादाह जात्यभावादा-विति । नातिप्रसङ्ग इति पूर्वेणान्वयः । कम्बुग्रीवादिमान् द्रव्यत्वादि-त्यादौ घटत्वादिकमेवोपाधिर्न तु तद्गर्भे घटत्वादिव्यभिचारित्वं तद्व्यभिचारेण साध्यव्यभिचाराद्यनुमाने व्यर्थविशेषणत्वादिति

ध्यव्यापकत्वे सति साधनाव्यापकत्वम्। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्य्यवसितं साध्यम्। स च धर्मः क्व चित् साधनमेव क्व चिद्द्रव्यत्वादि क्व चिन्म- हानसत्त्वादि। तथा हि, समव्याप्तस्य विषमव्याप्तस्य

---

त्त्वाभावेन वा हेतौ तद्वति वा व्यभिचारस्य साध्याभावस्य वा साधकं घटत्वादिव्यभिचारित्वमुपाधिरेव। घटत्वादेस्तदभावस्य वा गमकत्वेऽपि धूमप्रागभाववद्वैयर्थ्यम्। न चाभावस्यानुपा- धितापत्तिः प्रतियोगिनस्तद्वद्वृत्तित्वस्यैव वा हेतुत्वादिति वाच्य- म्। तस्याप्रवेशेऽपि वस्तुतो यस्तदभावस्तस्य तद्वद्वृत्तित्वस्य च हेतुत्वानपायात्। तदभावाभाववद्वृत्तित्वेनोपस्थितावपि तद्वद्वृ- त्तित्वेनानुपस्थितेर्व्यभिचारसाधने न वैयर्थ्यमित्यपि वदन्ति। ल- क्षणमाह पर्य्यवसितेत्यादि। पर्य्यवसितपदार्थमाह यद्धर्मेति। यद्ध-

---

केश्चिदुक्तं तन्निरस्यति। द्रव्यत्वेनेति। घटत्वादेरिति। साध्य- व्यभिचारित्वे साध्ये घटत्वादेः साध्याभावे च साध्ये घटत्वाद्य- भावस्य गमकत्वसम्भवेपीत्यर्थः।न चेति। वाच्यमित्यग्रेऽन्वयः। प्रति- योगिन इति।साध्याभावे साध्य इत्यादिः।साध्यव्यभिचारस्य साध्य- तायान्त्वाह तद्वद्वृत्तित्वस्यैव वेति। प्रतियोगिमद्वृत्तित्वस्यैव वेत्य- र्थः। अयोगोलकत्वाभावाभावत्वे तादृशाभाववद्वृत्तित्वापेक्षया लाघ- वेनायोगोलकत्ववत्वायोगोलकवृत्तित्वत्वाविनैव धूमाभावधूमव्यभि- चारादिव्याप्यतावच्छेदादिति भावः। तस्य अयोगोलकत्वाभावाद्यु- पाधेः। तदभावस्तदीयोऽभावोयोगोलकत्वादिरूपः। उक्ताशङ्कायां के- षां चित् समाधानमुपन्यस्यति तदभावेति। अयोगोलकत्वाद्यभावाभा- ववृत्तित्वत्वेनोपस्थितावपीत्यर्थः। तदभावाभावत्वेनोपस्थितौ तत्वे-

र्म्मवतीत्यर्थः । नन्वेवं सद्धेतौ सपक्षैकदेशव्याप्तिधर्मेऽतिप्रसङ्गः । अथ यद्धर्म्मावच्छेदेन साधनवति साध्यं प्रसिद्धं तद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं साध्यसाधनसम्बन्धव्यापकत्वमिति यावत् । विरुद्धमात्रे चोपाधिविरहेऽपि न क्षतिः । लक्ष्यतावच्छेदके च साध्य-

---

नोपस्थितिरावश्यकीति स्वाभावेन साध्याभावसाधने वैयर्थ्यस्य दुर्वारत्वादाह व्यभिचारसाधन इति । महाकालान्यो घटादित्यादौ कालिकसम्बन्धेन हेतौ तत्सम्बन्धावच्छिन्नवृत्तित्वमात्रस्यैव साध्यव्यभिचारव्याप्यतया तत्रोपाधेस्तदभावस्य वा प्रवेशाविरहादुक्तं समाधानं न सम्यगित्यस्वरसो वदन्तीत्युक्त्या सूचितः । मूलस्थलक्षणपदस्य दूषणौपयिकधर्मपरतया मिश्रव्याख्यानमफलमित्यावेदयितुमाह लक्षणमाहेति । यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नस्य पर्य्यवसितसाध्यपदार्थत्वे मित्रातनयत्वाद्यवच्छिन्नमात्रं प्रति शाकपाकजत्वादेरव्यापकत्वादव्याप्तिरत आह पर्य्यवसितपदार्थमिति । तथा च मित्रातनयत्वाद्यवच्छिन्नं प्रत्यव्यापकत्वेऽपि तदवच्छिन्नश्यामत्वादिकं प्रति व्यापकत्वान्न तत्राव्याप्तिरिति भावः । स श्यामो मित्रातनयत्वादित्यादौ साध्यस्य साधनाद्यवच्छेद्यत्वं न स्वरूपसम्बन्धविशेषः प्रमाणाभावात् नाप्यन्यूनवृत्तित्वादि बाधादतो व्याचष्टे यद्धर्मवतीति । एवं यद्धर्मविशिष्टतामात्रस्य प्रवेशे । सपक्षेति । वन्हिमान् धूमादित्यादौ व्यञ्जनवत्त्वाद्युपाधावतिव्याप्तिरित्यर्थः, तस्यापि महानसत्वाद्यवच्छिन्नसाध्यव्यापकत्वादिति भावः । प्रगल्भमतमाशङ्कते अथेति । यद्धर्मावच्छेदेनेति । अत्रावच्छेदकत्वमन्यूनवृत्तित्वं तथा च साधनविशिष्टसाध्यव्यापको यो धर्मस्तदवच्छिन्नसाध्यव्यापकत्वमर्थः । मित्रातनयत्वादेः शुद्धसाध्यव्यापकत्वात् साधनस्य प्रवेशः । सद्धेतुस्थले तु महानसत्वादिकं न धूमादिविशिष्टवन्ह्यादिव्यापकमतो न तत्र व्यञ्जनवत्त्वादावतिप्रसङ्ग इति भावः । साधनविशिष्टसाध्यव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकत्वापेक्षया लाघवादाह साध्यसाधनसम्बन्धेति । सम्बन्धः सामानाधिकरण्यं तस्य च व्याप्यत्वं निरूपकतासंसर्गेण

समानाधिकरणत्वेन साधनं तादृशवृत्तित्वेन वा साधनतावच्छेदकं विशेषणीयम् साधनव्यापकीभूतधर्म्मावच्छिन्नसाध्यव्यापकत्वं वा विवक्षितम् । विरुद्धेऽपि साधनव्यापकेनान्ततोऽन्यतरत्वादिनावच्छिन्नस्य साध्यस्य व्यापकत्वमस्त्येवोपाधीनाम् । प्रमेयत्वादिना च वाय्वादौ प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वादिकं नोपाधिः, लक्ष्यतावच्छेदकवाक्यस्य प्रयोजकत्ववाचितृतीयाबलाद्व्यभिचारस्थले साधनस्य साध्यव्यभिचारित्वानियम इत्यर्थे पर्य्यवसानात् । नैवम् ! जनकत्वेन वन्हौ कार्य्यानुकूलेत्याद्यात्मकशक्तिसाधने ब-

---

बोध्यम् । साध्यसाधनयोः सम्बन्धाप्रसिद्ध्या विरुद्धस्थलीयोपाधावव्याप्तिमलक्ष्यतया निराकुरुते विरुद्धेति । न क्षतिः नाव्याप्तिः । गोत्ववानश्वत्वादित्यादौ सास्नावत्त्वादौ प्रागुक्तलक्ष्यतावच्छेदकधर्मस्यातिव्याप्तिरत आह लक्ष्यतेति । साध्यसमानाधिकरणत्वेनेति । नन्वेवं घटत्ववान् रूपादित्यादौ पृथिवीत्वाद्युपाधौ निरुक्तलक्षतावच्छेदकस्याव्याप्तिर्घटत्वाधिकरणवृत्तिरूपादौ पृथिवीत्वाद्युपाधिव्यभिचारविरहादत आह तादृशेति । साध्यसमानाधिकरणवृत्तित्वेनेत्यर्थः । न चैवमपि घटत्ववान् जलत्वविशिष्टद्रव्यत्वादित्यादौ पृथिवीत्वादावतिप्रसङ्गः स्वावच्छिन्नवद्वृत्तिसाध्यवत्ताकत्वेन साधनतावच्छेदकस्य विशेषणीयत्वादिति भावः । विरुद्धस्थलीयोपाधेर्लक्ष्यत्वमाहृत्याप्याह साधनव्यापकीभूतेति । यद्धर्मावच्छेदेन साध्यं प्रसिद्धमित्यत्र व्युत्पत्त्या मूले केवलसाध्यपदेन साधनस्य लाभादिति भावः । गोत्ववानश्वत्वादित्यादौ तत्सास्नाव्यक्तेरुपाधित्वमुपपादयितुमाह अन्तत इति । अन्यतरत्वादिनेति । अश्वतद्गवान्यतरत्वादिनेत्यर्थः । नन्वेवं वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ उद्भूतरूपादावव्याप्तिः आत्मादौ तस्य निरुक्तसाध्यव्यापकत्वादत आह प्रमेयत्वादिनेति । ननूक्ते हेतावुद्भूतरूपस्यालक्ष्यत्वे तत्र प्रागुक्तलक्ष्यतावच्छेदकस्यातिव्याप्तिरत आह लक्ष्यतेति । यद्व्यभिचारस्थल इति । साधननिष्ठो यद्व्यभिचारो अव-

हिरिन्द्रियाप्रत्यक्षत्वस्योपाधेर्ग्रन्थकृतैवोद्भावयिष्यमाणत्वात् तस्य च गुरुत्वात्मकसाध्यस्य साधनस्य चाधिकरणे घटादाववृत्तेरुक्त-रूपाभावात् , एवंविधबहुलग्रन्थविरोधात् दूषकताबीजस्य तत्रापि सम्भवाच्च । अत्राहुः । यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्म्मा-वच्छिन्नसाधनाव्यापकत्वम् अवच्छेदकत्वञ्च सामानाधिकरण्येन ।

---

च्छेदकत्वेन निरूपकत्वेन वा सम्बन्धेन साध्यव्यभिचारव्याप्य इत्यर्थः । तथा चात्मादौ प्रमेयत्वस्य रूपव्यभिचारसत्त्वेऽपि प्रत्यक्षत्वे व्यभिचारासत्त्वात् न तत्रातिप्रसङ्ग इति भावः । जनकत्वेनेति ।वह्निः कार्यानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी जनकत्वादित्यत्रेत्यर्थः । तस्य बहिरिन्द्रियाप्रत्यक्षत्वोपाधेः । गुरुत्वाद्यात्मकेति । गुरुत्वादेः पतनादिकार्यानुकूलातीन्द्रियधर्मत्वेन साध्यतावच्छेदकाक्रान्तत्वा-दिति भावः । उक्तरूपेति । साधनव्यापकीभूतधर्मावच्छिन्न-साध्यव्यापकत्वाभावादित्यर्थः । गुरुभिन्नत्वावच्छिन्नसाध्यव्यापक-त्वेनैवास्माकं तस्य लक्ष्यत्वात् स्थितिस्थापके प्रमाणाभावात् भावे वा पृथिवीमात्रवृत्तित्वोपगमादिति भावः । ननु तत्र जनकत्वपदस्य दाहजनकत्वरूपविशेषजनतापरत्वात् घटादौ तादृशसाधनवत्त्वा-भावान्नोक्तदोष इत्यत आह एवंविधेति । जलपरमाणुर्जन्यरूपवान् रूपवत्त्वादित्यत्र परमाणुत्वावच्छिन्नसाध्यव्यापकं पृथिवीत्वमुपाधिः इति रूपग्रन्थे गुणप्रकाशकृतोक्तं तस्य साधनव्यापकधर्मावच्छिन्न-साध्यव्यापकत्वेन तद्ग्रन्थविरोधादित्यर्थः । ननु वायुः प्रत्यक्षः प्रमेयत्वादित्यत्रोद्भूतरूपमिवोक्तस्थलेऽपि सास्नोपाधिरत आह दू-षकतेति । तत्रापीति । उद्भूतरूपवत्त्वादावपीत्यर्थः । तथा च तदनु-पाधित्वस्वीकारो निर्युक्तिक इति भावः।यद्धर्मेति । जनकत्वेन कार्या-नुकूलाद्विष्ठातीन्द्रियधर्मावच्छिन्नभाने चात्मवन्ह्यन्यतरत्वावच्छिन्न-साध्यव्यापकस्यैव बहिरिन्द्रियाप्रत्यक्षत्वस्य तादृशान्यतरत्वावच्छिन्न-साधनाव्यापकत्वान्न तत्राव्याप्तिरिति भावः।ननु रूपवान् पृथिवीत्वा-दित्यत्र तद्घटोत्पत्तिकालावच्छिन्नसाध्यव्यापकस्य तद्घटान्यत्त्व-स्य तादृशकालावच्छिन्नसाधनाव्यापकत्वात्तत्रातिव्याप्तिः । न

न च तद्घटोत्पत्तिकालीनत्वसामामानाधिकरण्यविशिष्टरूपवति त-द्घटेऽवर्त्तमानमपि तद्घटान्यत्वं तद्व्यापकं येन पृथिवीत्वेन रूपे साध्ये तद्घटोत्पत्तिकालावच्छिन्नरूपव्यापकतयोपाधिः स्यात् स्वानधिक-रणीभूतसाधनाधिकरणवृत्तिधर्म्मावच्छिन्नसाध्यव्यापकत्वं वा । यद्यपि शुद्धसाध्यव्यापकस्थलेऽवच्छिन्नसाध्यत्वेन न व्याप्यता, तथापि तद्धर्म्माधिकरणीभूतसाध्याधिकरणनिष्ठान्योऽन्याभावप्र-

———

च घटोत्पत्तिकालावच्छिन्नपृथिवीत्वाप्रसिद्ध्या नातिव्याप्तिप्रसङ्गः, पृ-थिवीत्वपदस्य तत्प्रकारकस्मृतिविशेषविशेष्यत्वपरत्वादत आह अवच्छेदकत्वं चेति । तथा च सामानाधिकरण्यसम्बन्धेन यद्विशिष्टसाध्यव्यापकं तादृशसम्बन्धेन तद्विशिष्टसाधनाव्या-पकत्वं फलितार्थः । स चोक्तस्थले तद्घटान्यत्वे नास्तीत्याह न चेति । तद्व्यापकं तद्घटोत्पत्तिकालीनत्वसमानाधिकरणरू-पस्य व्यापकमित्यर्थः । यत्त्वतत्त्वयोरननुगतत्वादेकस्यैवोपा-धेर्धर्मभेदेन लक्षणनानात्वापत्तेरत आह स्वेति । स्वावच्छिन्ना-नधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकताव-च्छेदकधर्मवत्त्वमर्थः । तेन द्रव्यं जातिमत्त्वादित्यादौ गुणान्यत्व-विशिष्टसत्त्वादित्यादौ नाव्याप्तिः । वन्हिमान्धूमादित्यादौ व्यञ्जन-वत्त्वादेरपि साधनाधिकरणवृत्तिमहानसत्वावच्छिन्नसाध्यव्यापक-त्वादतिव्याप्तिरत उद्भूतान्तं साधनाधिकरणस्य विशेषणम् । स्वान-धिकरणवृत्तिजलमहानसान्यतरत्वादिधर्मेणावच्छिन्नसाध्यव्यापकत्वं व्यञ्जनवत्त्वादावस्त्येवेति सामानाधिकरण्यस्य निवेशः । तद्ध-र्मेति । यद्धर्मावच्छिन्नसाध्यव्यापकत्वं निर्वाच्यं तद्धर्माधिकरणीभूते-त्यर्थः । अनवच्छेदकत्वादित्यादिना यद्रूपविशिष्टवत्त्वावच्छिन्नभे-दस्य प्रतियोगितावच्छेदकत्वं निरुक्तसाध्यवन्निष्ठान्योन्याभावप्र-तियोगितावच्छेदकत्वाद्भिन्नं तद्रूपवत्त्वस्योपग्रहः । तेन नानाव्यक्ति-गुणाद्युपाधेश्चालनीन्यायेन साध्यवन्निष्ठान्योन्याभावप्रतियोगिता-वच्छेदकत्वेऽपि न तस्यासंग्रहः । न वा महाकालः प्रमेयत्वादित्यादौ महाकालनिरूपितविशेषणतया घटाद्युपाधौ तादृशसम्बन्धावच्छि-

तियोगितानवच्छेदकत्वादिरूपतद्व्यापकत्वमक्षतमेव । गुणत्वादि-
ना प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वं द्व्यणुकजन्यत्वाद्यवच्छिन्नसा-
ध्यव्यापकं भवत्येवोपाधिः । एवञ्च यत्रैव स्वानधिकरणं साधनस्य
साध्यव्यभिचारो यत्र च स्वाधिकरणे साध्यं तदुभयमात्रवृत्तिर्यो

---

याया: साध्यवन्निष्ठान्योन्याभावप्रतियोगिताया अवच्छेदकत्वाप्र-
सिद्ध्याव्याप्तिः । ननु प्रगल्भमते प्रत्यक्षो गुणत्वादित्यादावुद्भू-
तरूपवत्त्वस्य साधनव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकत्वविर-
हान्नोपाधित्वं तदुक्तनिरुक्तिद्वयस्य तद्द्व्यणुकजन्यत्वाद्यवच्छिन्नसा-
ध्यव्यापकतामादाय तत्रातिव्याप्तिरत आह गुणत्वादिनेति । द्व्यणु-
कजन्यत्वादीत्यादिना त्रुटयणुत्वान्यतरत्वाद्युपग्रहः । भवत्येवेति । प्र-
मेयत्वेनेव गुणत्वेनापि प्रत्यक्षत्वे साध्ये तस्य व्यभिचाराद्युन्नायकत्व-
सम्भवादिति भावः । सर्वत्रैवावच्छिन्नसाध्यव्यापकस्थलेऽनुगतोक्त्या
व्यभिचारानुमापकं हेतुमाह एवं चेति । यत्र स्वाधिकरणे साधनं
तन्मात्रवृत्तिधर्मवत्युपाधिव्यभिचारस्याप्रसिद्धेरत उक्तं यत्र
स्वानधिकरणे साधनस्य साध्यव्यभिचार इति । स्वपदमुपाधिपरम् ।
वायुः प्रत्यक्षो द्रव्यत्वादित्यादौ यत्र स्वाधिकरणे साध्यं यत्र च सा-
धनस्य साध्यव्यभिचारस्तदुभयमात्रवृत्तिधर्मः पार्थिवाणुघटान्यतर-
त्वादिरपीति तद्वृत्तिरूपवत्त्वोपाधिव्यभिचाराप्रसिद्धेः स्वानधिकरण
इत्युक्तम् । यत्र स्वानधिकरणे सत्त्वादेः प्रकृतसाध्यव्यभिचारो यत्र
च स्वाधिकरणे साध्यं तदुभयमात्रवृत्तिधर्मो गुणघटान्यतरत्वादिर-
पीति तद्वति रूपवत्त्वोपाधिव्यभिचारस्य साधनीभूतद्रव्यत्वे स्व-
रूपासिद्धत्वात् साधनीभूतस्येत्युक्तम् । यत्र स्वानधिकरणे साधनं
यत्र च स्वाधिकरणे साध्यं तदुभयमात्रवृत्तिर्जीवघटान्यतरत्वोपाधि-
रपीति तद्वृत्तिरूपवत्त्वोपाधिव्यभिचारस्य साध्यव्यभिचारव्याप्य-
त्वाभावात् साध्यव्यभिचार इत्युक्तम् । यत्र स्वानधिकरणे साधनस्य
साध्यव्यभिचारस्तन्मात्रवृत्तिर्वायुत्वादिरपीति तद्वति रूपवत्त्वो-
पाधिव्यभिचारस्य न साध्यव्यभिचारानुमापकत्वं वायुत्ववति वृत्ति-
मत्त्वादित्यस्यैव सम्यक्त्वे रूपव्यभिचारित्वघटकस्य रूपाभाववद्-

धर्म्मस्तद्वति तद्व्यभिचारेण साधने साध्यव्यभिचारः साधनवति वा तद्धर्म्मवत्त्वे सति तदभाववत्त्वेन साध्याभावः साधनीयः। साध्यासमानाधिकरणस्य साध्यव्यापकाभावस्य वाधिकरणं य-



शस्य व्यर्थत्वादत उक्तं यत्र च स्वाधिकरणे साध्यमिति। यत्र च स्वानधिकरणे साधनस्य साध्यव्यभिचारो यत्र च साध्यं तदुभयमात्रवृत्तिर्गगनजीवान्यतरत्वादिरपीति तद्वति रूपवत्त्वोपाधिव्यभिचारस्य साध्यव्यभिचाराव्याप्यत्वात् स्वाधिकरण इत्युक्तम्। यत्र स्वानधिकरणे साधनस्य साध्यव्यभिचारो यत्र स्वाधिकरणं तदुभयमात्रवृत्तिर्गगनप्राणान्यतरत्वादिरपीति तद्वति रूपव्यभिचारो न प्रत्यक्षत्वव्यभिचारस्यानुमापकस्तादृशान्यतरत्ववति वृत्तिमत्त्वस्यैव सत्त्वप्रकृत्वे रूपाभाववद्दंशस्य वैयर्थ्यादत उक्तं साध्यमिति। तदुभयवृत्तित्वं प्रमेयत्वादेरपीति तद्वति रूपव्यभिचारित्वं न प्रत्यक्षत्वव्यभिचारव्याप्यमतो मात्रपदम्। तथा च तादृशो धर्मः प्रकृते वायुघटान्यतरत्वादिरेव द्रष्टव्य इति भावः। व्यभिचारेणेति। अवच्छिन्नसाध्यव्यापकीभूतोपाधिव्यभिचारेणेत्यर्थः। तदभाववत्त्वेन निरुक्तोपाध्यभाववत्त्वेनाननु स्वत्वस्याननुगतत्वात् स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं नैकविधसाध्यसाधनसकलोपाधिसाधारणमतो लक्षणान्तरमाह साध्यासमानाधिकरणस्येति। अधिकरणं यत् साधनवदित्यग्रेऽन्वयः। तदुपादानं च वह्निमान्धूमादित्यादिसद्धेतौ घटत्वादिना घटत्वादेरुपाधित्ववारणार्थम्। न च साध्यासमानाधिकरणत्ववत्त्वमपेक्ष्य लघुना साध्यवदन्यत्वेनैव साधनवद्विशिष्यतां तावतैव सद्धेतावुपाधिसम्भवादिति वाच्यम्। उपाधिशरीरग्रह एव व्यभिचारभाने पश्चादुपाधिना व्यभिचारानुमित्यनापत्तेः अन्योन्याभावस्य अव्याप्यवृत्तित्वमते कपिसंयोगी एतद्वृक्षत्वादित्यादिसद्धेतौ घटादेरुपाधित्वस्य दुर्वारत्वापत्तेश्चेति भावः। उपाधित्वज्ञानोत्तरमेव साधनवद्धर्मिकसाध्याभाववत्त्वपर्यवसितसाध्यव्यभिचारज्ञानस्य सम्पत्त्यर्थं गुर्वपि विशेषणान्तरं निवेशयन्नाह साध्यव्यापकाभावस्य वेति। प्रकृतसाध्य-

त्साधनवन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तिधर्म्मवत्त्वमुपाधित्वम् । एवञ्च साध्यसमानाधिकरणत्वेनैव साध्यवदवृत्तिवारणसम्भवे पर्य्यवसितसाध्यव्यापकत्वाभिधानन्तु व्यापकाभावेन व्याप्याभावस्यावश्यम्भावप्रदर्शनार्थम् । तत्साध्यकत-



व्यापकतावच्छेदकावच्छिन्नाभावस्यैवेत्यर्थ । धूमवान् वन्हेरित्यादौ निरुक्तसाधनवन्निष्ठस्याभावस्य प्रतियोगितावच्छेदकत्वं वन्हिसंयोगत्वादेरपीति ताद्रूप्येण वन्हिसंयोगादेस्तत्रोपाधित्वापत्तिरत उक्तं प्रतियोगिव्यधिकरणेति । द्रव्यं जातिमत्त्वादित्यादौ विशिष्टसत्तात्वेन सत्त्वस्योपाधित्वसम्पत्तये प्रतियोगितावच्छेदकावच्छिन्नेति । न च निरुक्तसाधनवन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वं यदि स्वावच्छिन्नानधिकरणीभूतनिरुक्तसाधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वं तदा तस्य स्वत्वगर्भत्वान्न सकलोपाधिसाधारण्यमिति वाच्यम् । निरुक्तसाधनवद्यत्किञ्चिद्वृत्त्यधिकरणतानिरूपकतावच्छेदकत्वस्य तन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणाभावप्रतियोगितावच्छेदकत्वेन विवक्षणादिति भावः। सोपाधिस्थल एव साध्यविरुद्धस्य जलत्वादेर्जलत्वत्वादिनोपाधित्ववारणाय साध्यसमानाधिकरणवृत्तीति। साध्यवन्निष्ठाधिकरणतानिरूपकतावच्छेदकार्थकम् तेन धूमवान् वह्नेरित्यादौ जलत्वविशिष्टसत्तात्वादिना सत्तादेरुपाधित्वव्युदासः । साध्यवन्निष्ठस्वावच्छिन्नाधिकरणताकन्तु न तदर्थः, स्वत्वाननुगमतादवस्थ्यापातादिति ध्येयम् ।ननु मूलोक्तसाधनाव्यापकत्वदलस्यैव निरुक्तार्थकत्वे तत्रत्यपर्यवसितसाध्यव्यापकत्वदलं व्यर्थमत आह पर्यवसितेत्यादि । व्यापकाभाव इत्यस्य साधनवतीत्यादिस्तेन सत्प्रतिपक्षोन्नायकत्वमभिप्रेत्य निरुक्तसाधनाव्यापकत्वदलस्य वैयर्थ्यं कैश्चिदुक्तं प्रत्युक्तम्।पूर्वलक्षणत्यागबीजं स्वयमेवाह तत्साध्यकेति। तादृशसाध्यसाधनकैकसम्बन्धावच्छिन्नसकलोपाध्यनुगतमित्यर्थः ।

त्साधनकसकलोपाधिसाधारणञ्चेदं साध्यव्यापकत्वसाधनाव्यापकत्वावच्छेदकरूपानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किञ्चिद्धर्म्मव्यापकतावच्छेदकरूपवत्त्वमुपाधित्वम् । अवच्छिन्नसाध्यव्यापकोपाधौ चान्ततः साध्योपाधिशून्या साधनवती या व्यक्तिस्तद्वृत्तित्वमेव तादृशं रूपमित्यपि वदन्ति । रूपादिसाध्यक-

---

उक्तनिरुक्तौ साध्यव्यापकत्वाद्यप्रवेशेन मूलोदक्षरत्वादाह साध्यव्यापकेत्यादि । सद्धेतुस्थले महानसत्वादेरुपाधित्ववारणार्थमनतिरिक्तवृत्त्यन्तं रूपविशेषणम् । तत्रापि साध्यव्यापकत्वाव्यापकत्वे तदवच्छेदकत्वञ्च दैशिकविशेषणतया ग्राह्यं नातः सम्बन्धभेदेन तान्यादाय दोषः । नन्वेवं द्रव्यजातेरित्यादौ साधनव्यापकसत्तादावति व्याप्तिर्गुणाद्यसत्त्वकत्वदृशधर्मस्य विशेषणतासम्बन्धेनाभाववति सत्त्वादीनामवृत्तेरिति वाच्यम् । तदनतिरिक्तवृत्तिपदेन तदवच्छिन्नाभाववद्वृत्त्यधिकरणतानिरूपकतावच्छेदकत्वस्योक्तत्वात् । न च जातिमान् भावत्वादित्यादौ सत्ताद्युपाधावव्याप्तिः सामान्यादिवृत्तित्वावच्छिन्नाभाववति समवायेनाधिकरणत्वाप्रसिद्धेरिति वाच्यम् । तदभाववद्वृत्त्यधिकरणतासामान्यनिरूपकतावच्छेदकताया उपाधिताघटकसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वीयस्वरूपसम्बन्धेनाभावस्य विवक्षितत्वादिति ध्येयम् । अयोगोलकावृत्तित्वादेर्निरुक्तानतिरिक्तवृत्तिजलत्वविशिष्टार्द्रेन्धनत्वादिनाऽऽर्द्रेन्धनादेरुपाधित्ववारणायाह साध्यसमानाधिकरणेत्यादि । साध्याधिकरणयत्किञ्चिन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं साध्यवन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वं वा तदर्थः । लक्ष्येषु लक्षणं योजयितुमाह अवच्छिन्नसाध्यव्यापकोपाधौ चेति । चकारात् शुद्धसाध्यव्यापकस्योपग्रहः । सर्वत्र साध्यविशिष्टत्वस्य एव तादृशरूपस्य सुलभत्वात् उक्तमन्तत इति । तद्वृत्तित्वमित्यस्य विशेषणतयेत्यादिः । तादृशं रूपमिति । विशेषणतया साध्यव्यापकत्वसाधनाव्यापकतावच्छेदकं रूपमित्यर्थः । ननु रूपवान्द्रव्यत्वादित्यादौ पृथिवीत्वाभावादेर्लक्ष्यत्वे स-

द्रव्यत्वादिहेतौ पृथिवीत्वाभावादेरुपाधितापक्षे तु स्वविशिष्टसाध्यानधिकरणीभूतसाधनाधिकरणवृत्तिधर्म्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वम् । अत्र च पूर्वदलप्रविष्टा या साधनव्यक्तिस्तदव्यापकत्वं बोध्यं तेन रूपादिना गुरुत्वादौ साध्ये पृथिवीत्वाभावादौ नातिप्रसङ्गः । विवेचयिष्यते चेदमुपरिष्टात् । साध्यासमानाधिकरणधर्म्मस्य साध्यव्यापकाभावस्य वा समाना-

---

र्ण्यवोक्तलक्षणानि तत्राव्याप्तानीत्यत आह रूपादीति । शाकपाकजत्वाद्युपग्रहार्थमवच्छिन्नान्तं साध्यविशेषणम् । तत्राप्युपाधिशरीरस्य व्यभिचाराघटितत्वरक्षार्थं स्वविशिष्टपदम् । साध्यतावच्छेदकसम्बन्धगर्भस्य स्ववैशिष्ट्यस्य तत्सम्बन्धेनाधिकरणस्य च प्राप्त्यर्थं साध्यपदम् । स्वविशिष्टसाध्यानधिकरणवृत्तिना महानसजलान्यतरत्वेनावच्छिन्नसाध्यव्यापकव्यञ्जनवत्त्वादाव्याप्तेर्वारणाय साधनाधिकरणपदम् । असद्धेतौ प्रमेयत्वादेर्वारणायाह साधनाव्यापकत्वमिति । रूपवान् द्रव्यत्वादित्यादौ च पृथिवीत्वाद्यभावस्य स्वविशिष्टसाध्यानधिकरणीभूतवायुवृत्तिपृथिव्यन्यत्वावच्छिन्नसाध्यव्यापकत्वात् न तस्यासंग्रह इति भावः । पूर्वदलेति । स्वविशिष्टेत्यादिदलप्रविष्टेत्यर्थः । आदिपदाद्गन्धवद्रसवत्त्वादित्यादौ सौरभान्यत्वाद्युपग्रहः । नन्विदं गुरु रूपादित्यादौ पृथिवीत्वाद्यभाव उपाधिरेव किन्न स्यादत आह विवेचयिष्यते इति । इदं उक्तस्थले पृथिवीत्वाभावस्यानुपाधित्वम् । तद्व्यभिचारिणि पार्थिवरूपे गुरुत्वव्यभिचाराभावेन दूषकताबीजविरहान्नायमुपाधिरिति यद्धेत्यादिमूलस्य सार्वभौमीयव्याख्यायां वक्ष्यमाणत्वादिति भावः । उक्तनिरुक्तेः स्वत्वगर्भत्वेनाननुगतत्वाभावात् पृथिवीत्वाभावादिसंग्राहकमनुगतलक्षणान्तरमाह साध्यासमानाधिकरणधर्मस्येति । साधनाधिकरणं यत्साधनमित्यग्रेऽन्वयः । साधनवति साध्याभावानुमापकधर्ममन्तर्भाव्य उपाधित्वं निरुच्य साधने साध्यव्यभिचारानुमापकधर्मान्तर्भावेण तदाह साध्यव्यापकाभावस्य वेति । धूमवान् वन्हेरित्यादौ वन्हिसंयोगा-

धिकरणं यत्साधनं तद्वन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रति-
योगिव्यधिकरणासन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधि-
करणवृत्तिधर्म्मवत्त्वं वा । एवञ्चावगते साधनवति साधने वा सा-
ध्यासमानाधिकरणधर्म्मादिना तत्सामानाधिकरण्येन वा साध्या-
भावो व्यभिचारो वा शक्यते ज्ञातुमिति तु ध्येयम् । उपाधिशरी-
रभानस्य साधननिष्ठसाध्यव्यभिचारादिविषयत्वसहिष्णुतायान्तु
साध्यव्यभिचारित्वेन साध्याव्याप्यत्वेन वा साधनं विशेषणीय-



देर्वारणाय प्रतियोगिव्यधिकरणपदमत्रापि प्रतियोगितावच्छेदका-
वच्छिन्नपरम्।द्रव्यञ्जातेरित्यादौ विशिष्टसत्त्वस्य उपाधित्वसम्पत्त-
ये, निरुक्तसाधनवति निरवच्छिन्नवृत्तिकाभावस्य प्रतियोगितावच्छे-
दकं निरुक्तसाधनवद्यत्किञ्चिद्व्यक्त्यवृत्त्यधिकरणतानिरूपकताव-
च्छेदकं वा प्रतियोगितावच्छेदकान्तस्यार्थः, तेन प्रतियोगिव्यधिकरण-
त्वस्य स्वस्वगर्भत्वेनाननुगतत्वेऽपि न क्षतिः । साध्यसमानाधि-
करणवृत्तित्वं साध्यवन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वं तेन ग-
न्धवत् द्रव्यत्वादित्यादौ जलत्वविशिष्टत्वादिना सत्तादेर्नोपाधित्व-
मिति ध्येयम्। साधनवति साध्यासमानाधिकरणधर्मादिना साध्या-
भावः शक्यते ज्ञातुमित्यन्वयः।धर्मादिनेत्यादिना साध्यव्यापकाभाव-
स्योपग्रहः।साधने साध्यव्यभिचारस्यानुमापकमाह तदिति।साध्यस-
मानाधिकरणस्य साध्यव्यापकाभावस्य वा समानाधिकरणत्वेने-
त्यर्थः । शक्यते ज्ञातुमिति । उपाधित्वज्ञानस्यैव साध्यव्यभिचाराद्य-
नुमापकहेतुज्ञानत्वादिति भावः । व्यभिचारादीत्यादिना साध्या-
व्याप्यत्वस्योपग्रहः । सहिष्णुतायामिति । उपाधित्वग्रहोत्तरमेव
साध्यव्यभिचारादेर्भानमित्येवं नियमे विद्वेषसहिष्णुता । साध्य-
व्यभिचारित्वेन साध्यवदन्यवृत्तित्वावच्छिन्नवत्ताकधर्मवत्त्वेन यथा-
श्रुते द्रव्यं विशिष्टसत्त्वादित्यादिसङ्कतौ गुणवत्त्वाद्यतिव्याप्तेः
साध्याव्याप्यत्वेन स्वाव्यापकसाध्यकत्वेन वा शाब्दाव्यवस्था-
यामुभयथैव व्याप्तिधियः प्रतिबन्धकत्वासम्भवादिति । विशेषणीय-

म् । मिश्रास्तु यद्व्यभिचारित्वेनेत्याद्येव लक्षणम्, पर्य्यवसितेत्यादिकन्तु व्यभिचारोन्नायकताप्रयोजकरूपप्रदर्शनम्, तत्र पूर्वं प्रतीकं व्याप्तेः, द्वितीयञ्च पक्षधर्म्मतायाः प्रदर्शनार्थम् । एवञ्चायमेतत्साधननिष्ठसाध्यव्यभिचारोन्नायकव्यभिचारप्रतियोगीत्यर्थके अयमत्र हेतावुपाधिरित्युक्ते कथमस्य व्यभिचारोन्नायकत्वमित्याकाङ्क्षायां व्यभिचारोन्नयनमपि साधु सङ्गच्छत इत्याहुः । नवीनास्तु संयोगवदन्यत्वेन द्रव्यत्वाभावस्येव संयोगाभावस्याभावेन संयोगेन द्रव्यत्वाभावाभावस्य द्रव्यत्वस्य साधनसम्भवादेकशेषस्य दुष्करत्वात्तस्याप्युपाधित्वम्, लक्षणन्तु साधनवति साध्याभावोन्नायकव्यतिरेकप्रतियोगितावच्छेदकरूपवत्त्वं प्रतियोगित्वञ्च तदभा-

---

मिति । तथा च साध्यव्यभिचारि यत् साधनं तद्वन्निष्ठाभावप्रतियोगितावच्छेदकेत्यादिरीत्या एवोपाधित्वं निर्वाच्यमिति भावः । लक्षणमुपाधिपदशक्यम् । व्यभिचारोन्नायकेति । व्यभिचारोन्नयनौपयिकेत्यर्थः । मूलस्थलक्षणपदस्य दूषणौपयिकपरत्वादिति भावः । तत्रेति । पूर्वं साध्यव्यापकत्वरूपम् । प्रतीकं भागम् । व्याप्तेः प्रदर्शनार्थमाहुरित्यन्वयः । तेन प्रतीकशब्दस्य नियतपुंस्त्वेऽपि न क्षतिः । द्वितीयं साधनाव्यापकत्वम् । पक्षधर्मताया इति । उपाधेः साधनाव्यापकत्वे साधनस्य तद्व्यभिचारित्वध्रौव्यादिति भावः । एतादिति । एतत्साधनधर्मिकसाध्यव्यभिचारोन्नयनस्वरूपयोग्यस्वव्यभिचारक इत्यर्थः । अस्य एतद्व्यभिचारस्य । आहुरित्यत्र लक्षणपदस्योदक्षरत्वमस्वरसः । संयोगवदन्यत्वेन इत्यस्य सत्त्ववतीत्यादिः । तथा च द्रव्यं सत्त्वादित्यत्र संयोगस्येव द्रव्यत्वाभाववान् सत्त्वादित्यत्रापि संयोगाभावस्य साधनवति स्वाभावेन साध्याभावोन्नायकत्वादुपाधित्वमतस्तत्र प्रागुक्तं सर्वमेव लक्षणमव्याप्तमिति भावः । ननु साध्याभावस्य उन्नायकत्वं तदुन्नयनौपयिकव्याप्त्यादिमत्त्वं तथा च द्रव्यं सत्त्वादित्यादौ संयोगादावव्याप्तिस्तदभावस्य द्रव्यादौ व्यभिचारेण द्रव्यत्वाभावाव्याप्यत्वात् । न च गुणत्वादि-

वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्य-
भिचारः स्फुट एव, व्यापकव्यभिचारिणस्तद्व्याप्य-
व्यभिचारानियमात् । साधनावच्छिन्नपक्षधर्मावच्छिन्न-
साध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभि-
चारित्वमेव । यथा ध्वंसस्याऽनित्यत्वे साध्ये भावत्व-
स्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च। वि-
शेषणाव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशे-
ष्यव्यभिचारित्वनियमात् । अत एव नार्थान्तरम्, वि-
शेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः

———

वत्वं व्युत्पादितश्च प्रतियोगितावच्छेदकस्यैवान्योन्याभावाभावत्वं
शेषं पूर्ववदिति । विशेषणाव्यभिचारित्वेनेत्यादि । सामान्यतो दृ-

———

विशिष्टस्यैव संयोगाभावस्य द्रव्यत्वाभावव्याप्यतयाऽव्याप्तिः ।
साध्यवद्वृत्तिधर्मवैशिष्ट्यानवच्छिन्नो यदभावः साध्याभाव-
व्याप्यस्तत्त्वस्यैव वाच्यत्वादन्यथा धूमवान् वन्हेरित्यादौ वन्हिसं-
योगाद्यावतिव्याप्त्यापत्तेः । तदभावस्यापि अयःपिण्डत्वादिविशिष्टस्य
धूमाभावादिव्याप्यत्वादत आह प्रतियोगित्वं चेति । तथा च द्रव्य-
त्वाभावस्य निरुक्तव्याप्यं यत् संयोगवदन्यत्वं तदभावत्वावच्छेदकं
संयोगत्वमादाय द्रव्यं सत्त्वादित्यत्र संयोगस्योपग्रहइति भावः । न-
न्विदं जलं स्पर्शादित्यत्र घटत्वाद्यात्मकस्वाभावेन साधनवति साध्या-
भावोन्नायकजातिसामान्याभावादायुक्तलक्षणातिव्याप्तिरत आह शे-
षमिति । तथा च साध्यसमानाधिकरणवृत्तित्वादिना निरुक्तप्रति-
योगितावच्छेदकस्य विशेषणीयत्वान्नोक्तदोष इति भावः ।

ष्टमेनैकविशेषबाधे भावयति विशेषान्तरप्रकारिकामनुमितिम्, न चा-

---

अत्र वदन्ति । निरुक्तव्यतिरेकप्रतियोगित्वं यदि तादृशव्यतिरेकाभाववत्त्वं तदा द्रव्यं सत्त्वादित्यत्र संयोगवतस्तादात्म्यसम्बन्धेनोपाधित्वं न स्यात् द्रव्यत्वाभावोन्नायकस्य संयोगवदन्यत्वस्याभावतायाः संयोगवत्त्वसत्त्वात्, किञ्च साध्याभावव्याप्यस्य व्यतिरेकस्याभावत्वावच्छेदकत्वं न स्वरूपसम्बन्धविशेषः प्रमाणाभावान्नाप्यनतिरिक्तवृत्तित्वं द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाद्यभावव्याप्यस्य विशिष्टसत्त्वाभावस्याभावत्वानतिरिक्तवृत्तिसत्तात्त्वादिना सत्तादेरुपाधितापत्तेः। न च साध्याभावव्याप्यव्यतिरेकस्याभावत्वं यद्धर्मावच्छिन्नस्य व्यापकतावच्छेदकं तद्धर्मवत्त्वस्य विवक्षणान्नोक्तदोषः।तथा सति साध्याभावव्याप्यस्य व्यतिरेकस्य स्वरूपसम्बन्धात्मकं यत्प्रतियोगित्वं तदवच्छेदकं यद्धर्मावच्छिन्नस्य व्यापकतावच्छेदकं तद्रूपवत्त्वमित्यस्यैव सम्यक्त्वादभावविरहत्वलक्षणप्रतियोगित्वानुसरणवैयर्थ्यापत्तेः, धूमवान् वन्हेरित्यादौ धूमाभावव्याप्यस्यायःपिण्डीयवन्हिसंयोगस्याभावत्वे संयोगत्वसत्तात्वाद्यवच्छिन्नत्वव्यापकतावच्छेदकतासत्त्वात् संयोगत्वादिना संयोगादेरुपाधितापाताच्च । तस्माद्यद्धर्मावच्छिन्नाभावस्य यद्धर्मावच्छिन्नवदन्यत्वस्य च साध्यवद्वृत्तिधर्मवैशिष्ट्यानवच्छिन्नं साध्याभावव्याप्यत्वं तयोरन्यतरधर्मवत्त्वे ग्रन्थतात्पर्य्यमित्यस्मद्गुरुचरणाः। वस्तुतस्तु साधनवन्निष्ठो यः साध्याभावव्याप्यव्यतिरेकस्तस्य स्वरूपसम्बन्धरूपप्रतियोगितावच्छेदकधर्मवत्त्वमेव उपाधित्वं तच्च द्रव्यं सत्त्वादित्यादौ गुणवृत्तित्वादिविशिष्टस्य संयोगाभावस्य प्रतियोगित्वमादायैव संयोगाद्युपाधौ गतम्। न चैवं धूमवान् वन्हेरित्यादावप्ययोगोलकत्वादिविशिष्टस्य संयोगाद्यभावस्य प्रतियोगित्वमादाय संयोगस्य उपाधितापत्तिरिति वाच्यम् । द्रव्यत्वाभाववान् सत्त्वादित्यादौ संयोगाभावस्यैव तत्रापि साधनव्यापकस्य संयोगस्योपाधितायामिष्टत्वात् तस्यापि साधनवति साध्यव्यतिरेकोन्नायकत्वेनैकशेषस्य दुष्करत्वात्, साधनव्यापकेषु तान्त्रिकाणामुपाधिव्यवहाराभावेन तस्याऽलक्ष्यत्वे द्रव्यत्वशून्य सत्त्वादित्यादौ संयोगाभावस्याप्यलक्ष्यतापत्तेरिति युक्तमुत्पश्यामः।ननु साधनविशिष्ट-

सिद्ध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति पक्ष-धर्मताबलात्, अन्यथा प्रतीतेरपर्य्यवसानात्। न च प-क्षधर्मताबलात् प्रकृतसिद्धावर्थान्तरम्। यद्वा प्रत्यक्षस्प-र्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे

———

तिरिच्यते विशिष्टाभावो विशेषणविशेष्याभावाभ्यामिति मतेनेद-म। स्वमतेनाह यद्वेति। प्रत्यक्षस्पर्शाश्रयत्वमित्यादि प्रत्यक्ष-संख्यापरिमाणवत्त्वाद्युपाध्यभिप्रायेण यथाश्रुतमेव साधु। आ-

———

साध्यव्यभिचारित्वेन व्यापकताग्रहे ताद्रूप्येणैव अनुमितिः स्यात् सा च न शुद्धसाध्यव्याप्तिधीविरोधीनीत्यत आह सामान्यतो दृष्टमिति। नानावृत्तिधर्मावच्छिन्नसाध्यकानुमानमित्यर्थः।अनुमितिमित्यादि मते-नेदमित्यन्तमेको ग्रन्थः।तथा च साधनं शुद्धसाध्याभाववद्वृत्तित्वा-तिरिक्तविशिष्टसाध्याभाववद्वृत्तित्वस्याभाववदित्येकविशेषबाधान-श्रयात् शुद्धसाध्यव्यभिचारात्मकविशिष्टसाध्यव्यभिचारवदित्य-नुमितिर्भवतीति शुद्धसाध्यव्यभिचारसिद्धिरिति भावः। ननु साधनस्य साध्याभाववद्वृत्तित्वं न व्यभिचारः द्रव्यं विशिष्टस-त्त्वादित्यादावतिप्रसङ्गात् किन्तु साधनवतः साध्याभाववत्त्वं तथा च हेतुमान् साधनावच्छिन्नसाध्याभाववान् तादृशसाध्यव्यापकाभावव-त्त्वादित्यत्रैवोक्तानुमानस्य पर्य्यवसानात्तेन साधनवति विशिष्टसा-ध्यस्याभावसिद्धावपि शुद्धसाध्यस्याभावासिद्धेरर्थान्तरं तदवस्थमत आह न चेति। तथा च शुद्धसाध्याभावभिन्नस्य विशिष्टसाध्याभा-वस्य बाधबलादेव तत्रापि विशिष्टसाध्याभावः सिद्ध्यन् शुद्धसा-ध्याभावमादाय पर्य्यवस्यतीति नार्थान्तरमिति भावः। मतेन विशिष्टाभावस्य स्वयं वक्ष्यमाणातिरिक्तत्वमतेन। तत्र विशिष्टाभा-वस्य विशेषणाद्यभाववत्त्वविरहेनैकविशेषबाधासम्भवादिति भावः।

सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वान्महत्त्ववत् तथा

---

त्मकैकत्वादेरपि प्रत्यक्षत्वाङ्गीकारात् । उद्भूतरूपादिपरत्वे च साध्ये हेतौ च प्रत्यक्षपदं बहिरिन्द्रियप्रत्यक्षपरं द्रव्यपदे वा बहिर्द्रव्यपरे महत्त्वपदञ्च जन्यमहत्त्वपरमिति । व्यापकव्यभिचारित्वञ्च व्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वम् । न च द्रव्यपदवैयर्थ्यम् । विशिष्टाभावस्यातिरिक्तत्वात् । द्रव्यत्वाव्यभिचा-

---

उद्भूतरूपस्य द्रव्यप्रत्यक्षत्वाव्यापकत्वात् तदुपाध्यभिप्रायकत्वासम्भवादाह प्रत्यक्षेति । प्रत्यक्षसंख्यावत्त्वप्रत्यक्षपरिमाणवत्त्वाद्युपाध्यभिप्रायेणेत्यर्थः । आदिना प्रत्यक्षैकत्वाद्युपग्रहः । यथाश्रुतं प्रत्यक्षादिपदस्य मुख्यार्थकत्वेन । ननु प्रत्यक्षसंख्यादिमत्त्वमपि न द्रव्यप्रत्यक्षत्वव्यापकमात्मनि व्यभिचारादत आह आत्मैकत्वादेरिति।आदिनाऽऽत्ममहत्त्वस्योपग्रहः। योग्यमात्रवृत्तिगुणस्यैव योग्यताया टीकाकृता स्वीकारात्तदतीन्द्रियत्वोपगमस्यानौचित्यादिति भावः साध्य इति । अन्यथा सुखादौ प्रत्यक्षत्वव्यभिचारस्यासत्त्वेन तत्रैवोक्तसाध्यव्यभिचारापत्तेरिति भावः।हेताविति।अन्यथोद्भूतरूपस्य द्रव्यप्रत्यक्षत्वाव्यापकत्वेन हेतुविशेषणासिद्धेरिति भावः । ननु प्रत्यक्षस्पर्शाश्रयत्वेन वायौ प्रत्यक्षतामात्रस्यानुमाने बहिरिन्द्रियप्रत्यक्षत्वव्यभिचारानुमितेरविरोधित्वादुक्तक्रमेण व्याख्या न युक्तेत्यत आह द्रव्यपदे वेति । तथा च सुखादेर्बहिर्द्रव्यत्वाव्यभिचारित्वविरहान्न तत्र व्यभिचारो न वा द्रव्यप्रत्यक्षत्वव्यापकताया उद्भूतरूपवत्त्वादावसत्त्वेपि हेत्वप्रसिद्धिरिति भावः। आत्मादिमहत्त्वस्य बहिर्द्रव्यत्वव्यभिचारितया दृष्टान्तत्वायोगादाह महत्त्वपदमिति । महत्त्वप्रकारेणैव जन्यमहत्त्वतात्पर्यकमित्यर्थः । द्रव्यप्रत्यक्षत्वादिव्यापकप्रतियोगिकव्यभिचारस्य प्रत्यक्षत्वाव्यभिचारिणि घटत्वादौ व्यभिचारित्वादाह व्यापकेति। द्रव्यप्रत्यक्षस्येत्यादि।द्रव्यपदेति। द्र-

मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारित्वात् अघटत्ववत् । अव्यभिचारश्च तत्समानाधिकर-

---

रित्वे सति उद्भूतरूपादिव्यभिचार एव हेतुः व्यापकत्वोपन्यासस्तु तर्कप्रदर्शनायेति तत्त्वम् । द्रव्यत्वाव्यभिचारो द्रव्यत्वाभाववदवृत्तित्वम् । मित्रातनयत्वमिति । अनुमानमिदमुपाधेः प्रमा-

---

व्यप्रत्यक्षत्वव्यापकव्यभिचारित्वत्वमपेक्ष्य लघोः प्रत्यक्षत्वव्यापकव्यभिचारत्वस्यैव व्याप्यतावच्छेदकत्वादिति भावः। तत्त्यागे च सत्यन्तस्यापि वैयर्थ्यं बोध्यम् । विशेष्यदलविरहादेव सुखादौ व्यभिचारायोगात्।विशिष्टेति। द्रव्यप्रत्यक्षत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य प्रत्यक्षत्ववन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावतो भिन्नत्वादित्यर्थः । तथा च निरुक्तस्य स्वसमानाधिकरणव्याप्यतावच्छेदकान्तराघटितत्वान्न वैयर्थ्यमिति भावः । ननु द्रव्यप्रत्यक्षत्वादिव्यापकतावच्छेदकधर्मसामान्यावच्छिन्नाभाववदवृत्तित्वमप्रसिद्धं सर्वत्रैव तादृशप्रमेयत्वाद्यवच्छिन्नस्य सत्त्वात् प्रसिद्धं वा प्रत्यक्षस्पर्शाश्रयत्वे स्वरूपासिद्धमत आह द्रव्यत्वेति ।बहिर्द्रव्यत्वाव्यभिचारित्वे सतीत्यर्थः।हेतुः, प्रत्यक्षत्वव्यभिचारस्य साध्यतायाम् ।नन्वेवं व्यापकत्वस्योपन्यासो मूलकारस्य विफल इत्यत आह व्यापकत्वेति।तर्केति। व्यापकव्यभिचारिणो व्याप्यव्यभिचारित्वनियमादप्रयोजकत्वशङ्काव्युदासायेत्यर्थः।द्रव्यत्वस्य व्यभिचारो यदि वक्ष्यमाणरीत्या तद्व्यापकत्वं तदा तदभावस्य प्रत्यक्षस्पर्शाश्रयत्वस्वरूपासिद्धिरतो व्याचष्टे द्रव्यत्वाव्यभिचार इति। ननु साधनाव्यापकतया सन्दिह्यमानस्यैव शाकपाकजत्वस्य सन्दिग्धोपाधितयाग्रे मणिकृतैव वक्ष्यमाणत्वात् कथं व्यभिचारानुमापकत्वं हेतौ तद्व्यभिचारस्य सन्दिग्धत्वादत आह अनुमानमिति । प्रमाणान्तरेण आप्तवाक्यादिना व्यतिरेकेण

पान्तरेण साधनाव्यापकतानिर्णयदशायाम् । ननु तदव्यभिचा-
रित्वं तदत्यन्ताभाववदवृत्तित्वं तथा च साधनविकलोऽयं साध्य-
वान् दृष्टान्त इत्यत आह अव्यभिचारश्चेति।नन्वेवं विशेष्यवैयर्थ्यम्।
धूमप्रागभाववद्धर्म्मिभेदादवैयर्थ्यमिति चेत्, तथापि मित्रातनय-
त्वव्यापकत्वविशेषितं वृत्तिमत्त्वमेव गमकमिति चेन्न । यत्किञ्चि-
त्तदधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वस्य फलतः सामानाधिक-
रण्यपर्य्यवसितस्योक्तत्वात् । तथा चायमर्थः । मित्रातनयत्वाधि-
करणयद्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगित्वं तत्र शाकपाकजत्वव्य-
भिचारित्वात् मित्रातनये शाकपाकजव्यभिचारित्वादिति यावत्।
तेन श्यामत्वादौ न व्यभिचारः। अव्यभिचारश्चेति । तथा च

———

दृष्टान्तत्वं निराकर्त्तुमाह साध्यवानिति । शेषस्य विशेष्यदलस्य
वैयर्थ्यम् । मित्रातनयत्वव्यापकत्वेनैव श्यामत्वव्यभिचारस्य साध-
नासम्भवादिति भावः । शङ्कते धूमेति । वृत्तिमत्त्वमेवेति । तथा च
मित्रातनयत्वविशिष्टश्यामत्वव्यापकाभाववदंशवैयर्थ्यमिति भावः ।
यत्किञ्चिदिति । मित्रातनयत्वाधिकरणयत्किञ्चिन्निष्ठेत्यर्थः । लाघवा-
दाह फलत इति। यत्किञ्चिन्मित्रातनयत्वनिष्ठाभावप्रतियोगित्वस्य
मित्रातनयत्वसामानाधिकरण्यनियतत्वादिति भावः। नन्वेवं श्या-
ममित्रातनयकाकयोः संयोगद्वित्वादौ व्यभिचार इत्यत आह
तथा चेति । यद्व्यक्तिनिष्ठाभावाप्रतियोगित्वं यद्व्यक्तिवृत्तित्व-
स्याप्युपलक्षकम्, नातः प्रक्रान्तविरोधः । शाकपाकजत्वेति ।
अत्रापि व्यापकत्वांशस्य तर्कप्रदर्शनार्थैवोक्तत्वादिति भावः ।
तत्रेत्यस्य विशिष्योपादाने मित्रातनयत्वाधिकरणेत्यादेर्वैयर्थ्यादाह
मित्रातनय इति । निरूपितत्वं सप्तम्यर्थः। शाकपाकजत्वाभावव-
न्मित्रातनयवृत्तित्वे वा तात्पर्यम् । श्यामत्वादावित्यतद्गुणबहुव्री-
हिणा प्रागुक्तसंयोगादिपरम् । मित्रातनयत्वस्य तद्व्यापकव्यभि-
चारित्वाभावेन तदन्यश्यामत्वस्य च मित्रातनयत्वासमानाधिकर-

णात्यन्ताभावाप्रतियोगित्वं तच्चाभेदेऽपि । यद्वा यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स उपाधिः ।

---

बहुव्रीहिः । यद्यद्धर्माव्यभिचारित्वे सति तद्धर्मावच्छिन्नयत्साध्य-व्यापकव्यभिचारि यत्तत्साध्यव्यभिचारीति सामान्यव्याप्तेरघटत्वं दृष्टान्त इत्यप्याहुः । मेयत्वादावपि विशेषणवति विशिष्टसाध्य-व्यापकोपाधिव्यभिचारेण शुद्धसाध्यव्यभिचारः साधनीयः । एवं विशिष्टसाध्यव्यापकस्यापि साक्षात् शुद्धसाध्यव्यभिचारोन्नायकत-योपाधित्वं समर्थ्य साक्षात्परम्परासाधारणतदुन्नायकतामात्रेण त-थात्वं व्यवस्थापयति यद्वेत्यादिना । अत्र पूर्ववद्विरुद्धवारणाय साध्यसमानाधिकरणेति बोध्यम् । व्यभिचारोन्नायकत्वञ्च यत्र

---

णत्वेन श्यामरूपे हेतुसत्त्वादेव व्यभिचारायोगादिति ध्येयम् । प्राचां मतं दर्शयितुं पुनर्धत्ते अव्यभिचारश्चेति । तत्समानाधिकरणाभाव-स्य प्रतियोगित्वमिति तत्पुरुषे विशेष्यांशवैयर्थ्यादाह तथा चेति । तन्मित्रातनयत्वं समानाधिकरणाभावाप्रतियोगि यस्येति विग्रहेण स्वसमानाधिकरणाभावाप्रतियोगिमित्रातनयत्वकत्वमित्यर्थः । तथा च मित्रातनयनिष्ठश्यामत्वादौ व्यभिचारवारणार्थमेव विशेष्यदलमि-ति भावः । नन्वेवमघटत्वे दृष्टान्तासिद्धिः तस्य स्वव्यापकमित्रातन-यत्वकत्वाभावादत आह यदिति । तथा च स्वव्याप-कघटभिन्नत्वकत्वे सति घटभिन्नत्वावच्छिन्नत्वश्यामत्वव्यापक-स्य घटावृत्तिश्यामत्वसामग्रीमत्त्वस्य व्यभिचारित्वं श्यामत्वव्य-भिचारित्वं चाघटत्वे वर्त्तत इति न तस्य दृष्टान्तत्वव्याकोप इति भावः । यत्त्वतत्त्वादेः पक्षदृष्टान्तसाधारणस्यासत्त्वान्नेदं युक्त-मित्यस्वरसादाहुरित्युक्तम् । स्वव्याप्यतस्य साध्यव्यभिचारानु-

कुत्र चित्। एवञ्च पृथिवीत्वादिना गुरुत्वादौ साध्ये द्रव्यत्वादौ व्यभिचारोन्नायकस्य रूपवत्त्वादेर्वारणाय साधनव्यभिचारीति बहुव्रीहिः। न चैवमपि गुरुत्वादिसाध्यके रसवत्त्वादिहेतौ द्रव्यत्वं गुरुत्वादिव्यभिचारि जलभिन्ने पृथिवीत्वादिव्यभिचारित्वादिति व्यभिचारोन्नायके पृथिवीत्वादावतिप्रसङ्गः। साधननिष्ठं यद्व्यभिचारित्वं साध्यव्यभिचारोन्नायकं तत्त्वस्योक्तत्वात् उक्ति-



मापकस्य सर्वत्र हेतौ सत्त्वमाविष्करोति प्रमेयत्वादावपीति। अन्यथा स श्यामः प्रमेयत्वादित्यादौ मित्रातनयत्वाव्यभिचारित्वे सति तदवच्छिन्नश्यामत्वव्यापकशाकपाकजत्वव्यभिचारित्वस्यैव मूलोक्तस्य प्रमेयत्वादिहेतावसत्त्वेन तत्र तेन श्यामत्वादिव्यभिचारानुमानानुपपत्तेरिति भावः। तच्च साक्षात् परस्परया चेत्यग्रिममूलानुसारेण यद्वेत्यादिकमवतारयति एवमिति। तथात्वमुपाधित्वम्। पूर्ववदिति। इदन्तेजो द्रव्यत्वादित्यादौ जात्यभावादेर्वारणायेत्यर्थः। साधने साध्यव्यभिचारोन्नायकत्वस्योक्तौ साधनव्यभिचारित्वस्य व्यर्थतापत्तेराह यत्र कुत्र चिदिति। तथा च साध्यव्यभिचारस्योन्नायत्वं तत्स्वरूपयोग्यत्वं तच्च साध्यव्यभिचारव्याप्यस्वाभावाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वसामान्यकत्वमिति भावः। रूपवत्त्वादेरिति। तदभावाधिकरणीभूतवायुवृत्तित्वसामान्यस्य गुरुत्वव्यभिचारव्याप्यत्वात् इति भावः। प्रमेयत्वादिसाधनस्य व्यभिचाराप्रसिद्धेः प्रकृते पृथिवीत्वव्यभिचारस्य रूपवत्त्वे सत्त्वाच्चाह बहुव्रीहिरिति। साधनं व्यभिचारि यस्य स्वव्यभिचारिसाधनक इत्यर्थः। स्नेहादौ व्यभिचारवारणार्थं जलभिन्न इति। साधननिष्ठमिति। तथा च रसवत्त्वनिष्ठपृथिवीत्वव्यभिचारित्वं न गुरुत्वव्यभिचारव्याप्यं माधुर्यादौ व्यभिचारात्तस्तत्र पृथिवीत्वादौ न प्रसङ्गः। नन्वेवं यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमुन्नीयत इति प्रागुक्तेनाभेद इत्यत आह उक्तीति। पूर्वं यद्व्यभिचारः साध्यव्यभिचारव्यापकत्वे सति साधनवृत्तिस्तत्त्वमित्युक्तमिदानीं साधनवृत्तित्वे सति साध्यव्यभिचारित्वव्याप्यो

वैचित्र्याच्च पूर्वस्माद्भेदः । केचित्तु व्यभिचारोन्नायकत्वमिह तद्व्याप्यकोटिप्रविष्टतामात्रेण । इत्थञ्च जलत्वेन करकात्वे साध्ये जलत्वं करकात्वव्यभिचारि स्नेहव्यापकत्वात् घटेन वा घटत्वे साध्ये घटो घटत्वव्यभिचारी जन्यद्रव्यत्वादिति व्यभिचारोन्नयनसमर्थस्य स्नेहस्य द्रव्यत्वस्य च वारणाय साधनव्यभिचारीति । अयं घटः सत्त्वादित्यादौ सत्त्वं घटत्वव्यभिचारि शब्दादिवृत्तित्वादिति व्यभिचारोन्नायकस्य शब्दादेर्वारणाय साध्यसमानाधिकरणेत्यपि वक्तव्यम् । एवञ्च रूपेण गुरुत्वादौ साध्ये रूपं गुरुत्वादिव्यभिचारि जलभिन्ने पृथिवीत्वाभाववद्वृत्तित्वादिति व्यभिचारोन्नायकस्य गुरुत्वव्यभिचारितैजसरूपनिष्ठ-

---

यद्व्यभिचारस्तत्त्वमित्युक्तिवैचित्र्याद्विशेष्यविशेषणभावभेदात् पूर्वतो भेद इत्यर्थः । केचित्तु साध्यसमानाधिकरणत्वं स्वातन्त्र्येण विशेषणं दत्तमिह तु स्वसमानाधिकरणवृत्तिसाध्यतावच्छेदकधर्मावच्छिन्नस्य व्यभिचारोन्नायकत्वं निर्वाशितमित्येवोक्तिवैचित्र्यमत एव प्रागेव विरुद्धवारणाय साध्यसमानाधिकरणेति बोध्यमित्युक्तम्, साध्यांशे स्वसमानाधिकरणेति बोध्यमिति तस्यार्थ इत्याहुः । सार्वभौममतमुपन्यस्यति केचित्त्विति । तद्व्याप्यकोटीति । साव्यभिचारव्यापकतावच्छेदकघटकत्वेनेत्यर्थः । न च वन्हिव्यभिचारव्याप्यस्य महानसाद्यवृत्तितेजस्त्वस्य घटकतया प्रसिद्धानुमाने महानसत्वादेरुपाधितापत्तिः, अग्रे निरस्यत्त्वादिति भावः । स्नेहव्यापकत्वादित्यस्य व्यभिचारोन्नायकस्य स्नेहस्य वारणाय इत्यग्रेन्वयः । साधनस्य व्यभिचारीत्येवं तत्पुरुषेणापि स्नेहस्य वारणसम्भवाद्बहुव्रीह्यनुसरणस्य फलमाह घटेन वेति । जन्यद्रव्यत्वादिति । जन्यपदं गगनादौ द्रव्यत्वपदं च घटीयरूपादौ व्यभिचारस्य वारणाय । शब्दादिना ज्ञानेच्छाद्युपग्रहः । गुरुत्वसाध्यकरूपादिहेतौ पृथिवीत्वाभावादेरलक्ष्यत्वप्रयोजकं रूपमाविष्करोति व्यभिचारोन्नायकेत्यादिना । यत्राधिकरण

तत्त्वञ्च साक्षात् परम्परया वेति नार्थान्तरम् । किञ्च अर्थान्तरस्य पुरुषदोषत्वादाभासान्तरस्य तत्राभावादुपा-

———

व्यभिचाराप्रतियोगिनः पृथिवीत्वाभावस्य वारणाय यत्राधिकरणे साधनाव्यापकत्वं तत्र व्यभिचारोन्नायकत्वं वक्तव्यम् । यथा कथञ्चित्स्वव्यभिचारेण व्यभिचारोन्नायकमात्रस्य तु लक्ष्यत्वे यत्साधनव्यक्त्यव्यापकत्वं तद्व्यक्तौ व्यभिचारोन्नायकं वाच्यमित्याहुः । नन्वस्तु पारिभाषिकमुपाधित्वं तथापि साक्षाद्व्यभिचारानुन्नायकतया दोषत्वाभावेन तदुद्भावने अर्थान्तरं स्यादेवेत्यत आह किञ्चेति । आभासान्तरस्य तदानीं जायमानस्य । तथा च

———

इति । साधनाधिकरणीभूतयद्व्यक्तिनिष्ठाभावप्रतियोगित्वं तद्व्यक्त्यवच्छेद्यस्य साध्यव्यभिचारस्य व्याप्यतावच्छेदकीभूतधर्मनिष्ठत्वं वक्तव्यमित्यर्थः । ननु रूपवान्द्रव्यत्वादित्यादौ पृथिवीत्वाद्यभावाव्याप्तं पृथिव्यवच्छेद्यस्य रूपादिव्यभिचारस्याप्रसिद्धेरत आह यथाकथंचिदिति । साध्यव्यभिचारिसाधननिष्ठव्यभिचारप्रतियोगिमात्रस्येत्यर्थः । तद्व्यक्तौ व्यभिचारोन्नायकमिति । तन्निष्ठायाः साध्यव्यभिचारव्याप्यतावच्छेदकधर्मावच्छिन्नवत्ताया निरूपकतावच्छेदकप्रविष्टमित्यर्थः । आहुरिति । प्रथमे यत्राधिकरणे साधनाव्यापकत्वं तद्व्यक्त्यवच्छिन्नस्य साध्यव्यभिचारस्य द्वितीये च यत् साधनव्यक्त्यव्यापकत्वं तन्निष्ठस्य व्यापकव्यभिचारस्य यथाकथंञ्चित्सम्बन्धित्वमात्रेणैव सामञ्जस्ये व्यापकतावच्छेदककोटिप्रविष्टत्वप्रवेशानौचित्यमत्राऽस्वरसबीजम् । पारिभाषिकमेवेत्येवकारेण स्वनिष्ठव्याप्तिसंक्रामकत्वस्य व्युदासः । तस्य शुद्धसाध्यव्यापकस्य । उद्भावन इत्यर्थः । सोपाधावाभासान्तरस्य व्यभिचारादेरावश्यकत्वात परयति तदानीं जाय-

पाधिरेव भावत्वादिकं दोषः। न चैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वं जलं प्रमेयं रसवत्त्वादित्यत्र

---

तस्यावश्याभ्युपेयदोषभावत्वे तदुद्भावने नार्थान्तरमिति भावः। अत्र वदन्ति। साध्योपन्यासानन्तरं तत्साधकस्यैव साधनोपन्यासानन्तरं तद्दोषस्य व्यभिचारादेराकाङ्क्षितत्वात् तमनुद्भाव्य साक्षात्तत्साधकस्य शुद्धसाध्यव्यापकस्योपाधेरुद्भावन एवाप्राप्तकालत्वम्, कैव कथा परम्परया तत्साधकस्यावच्छिन्नसाध्यव्यापकस्य। अन्यथा तत्साधनपरम्पराया अपि प्रथममुपन्यासे तथात्वं न स्यात्। न च निग्रहस्थानत्वेन विशेषः, प्रतिज्ञाहान्यादितो हेत्वाभासाच्च बहिर्भूतस्य तथात्वायोगात्। न च विभाजकसूत्रस्थले हे-

---

भानस्येति। तदानीं न्यायप्रयोगदशायाम्।तं साध्यव्यभिचारादिकम्। अप्राप्तकालत्वं तदानीमनाकाङ्क्षितस्याभिधानत्वम्। साध्यव्यभिचारोद्भावनोत्तरमाकाङ्क्षितत्वेनार्थान्तरत्वायोगादिति भावः। कैव कथा सुतराम्। अवच्छिन्नसाध्यव्यापकस्येति।उद्भावन इत्यनुषज्यते। अन्यथा तदानीमनाकाङ्क्षितस्यापि उद्भावने। तत्साधकपरम्परायामिति। जन्यत्वादौ साध्यव्यभिचारस्य उन्नायकत्वं यद्भावत्वाद्युपाधिव्यभिचारित्वं तदुन्नायकस्य ध्वंसवृत्तित्वादेरपि प्रथमतः कथायामुपन्यासे तथात्वमप्राप्तकालत्वं न स्यादित्यर्थः। अथाप्राप्तकालनामासाद्यत्रापि प्रथममुपाधिमुपन्यस्यति निग्रहस्थानत्वान्न तदुन्नायकत्वपरम्परेत्यत आह न चेति। प्रतिज्ञाहान्यादिः पुरुषस्य हेत्वाभासस्तु प्रमाणस्यैव निग्राहक इति तयोर्भेदेनोपन्यासः। तथात्वायोगादिति।प्रतिज्ञाहान्यादिद्वाविंशतेरेव मुनिना निग्रहस्थानत्वेनोक्तत्वादिति भावः। विभाजकेति। प्रतिज्ञाहानिः प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरं न्यूनमधिकमर्थान्तरं

पृथिवीत्वमुपाधिः स्यात्, केवलान्वयित्वसाधकप्रमाणेन तत्र साध्यसिद्धेरुपाधेर्विशिष्टाव्यापकत्वात् । न च पक्षे-

———

त्वाभासाश्चेति चकारेणानुक्तसमुच्चयपरेण साक्षात्परम्परया वानुमितिदोषोन्नायकस्य संग्रहः । तथा सति व्यभिचारस्यैवाश्रयासिद्ध्यादेरप्युन्नायकस्य तदुभयोन्नायकपरम्परायाश्च तथात्वापातात् । न चाप्राप्तकालतामासादयन्नपि प्रथममुपाध्युपन्यासः कथकसम्प्रदायानुरोधादेव कर्त्तव्यः, तादृशसम्प्रदायमननुरुन्धानस्य तदुद्भावकं पराभवतः शपथनिवारणीयतापत्तेः । तस्मात्प्रथमं शुद्धसाध्यव्यभिचार एवोद्भाव्यस्तत्र कथन्तायां तद्धेतुत्वेन शुध्यसाध्यव्यापकोपाधिव्यभिचारः विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यापकस्योपाधेर्विशिष्टसाध्यस्य वा व्यभिचारः तत्र च

———

निरर्थकमपार्थकमविज्ञातार्थमप्राप्तकालं पुनरुक्तमनुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्यापेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्ता हेत्वाभासाश्च निग्रहस्थानानीति विभाजकसूत्रस्थलेत्यर्थः । अनुमितिदोषेति सामान्यतोऽभिधानं प्रतिपक्षोन्नायकस्याप्युपग्रहार्थम् । असिद्ध्यादेरित्यस्य स्वरूपेत्यादिः । व्याप्यत्वासिद्ध्युन्नायकोद्भावनस्य मणिकृताप्यग्रे स्वीकर्त्तव्यत्वात् । तदुभयं व्यभिचार स्वरूपासिद्ध्युभयम् । तथात्वापातात् प्रथमनुद्भाव्यत्वापातात् । अत्र दृष्टान्तस्य साधनैक्यस्य दुरुपाधित्वेनैव चकारसमुच्चय इत्युक्तौ नोक्तदोष इति चिन्त्यम् । तदुद्भावकं प्रथममुपाध्युद्भावकम् । कथन्तया हेत्वाकाङ्क्षायाम् । व्यापकोपाधिव्यभिचार उद्भाव्य इति पूर्वेणान्वयः । शुद्धसाध्यव्यापकोपाधिमनुसृत्याह विशेषणेति । उपाधेरिति । व्यभिचार उद्भाव्य इत्यग्रिमपूर्वाभ्यामन्वयः । विशिष्टसाध्यस्य वेति । विशेषणाव्यभिचारित्वे सतीत्यनुषज्यते । विशेष्ये विशिष्टसाध्यव्यभिचारित्वे । ला-

तरे स्वव्याघातकत्वेनानुपाधावतिव्याप्तिः, तत्रानुकूल-
तर्काभावेन साध्यव्यापकत्वानिश्चयात् । सहचारदर्शना-
देस्तेन विना संशायकत्वादित्युक्तम् बाधोन्नीते चानु-

———

विशेष्ये विशिष्टसाध्यव्यापकोपाधिव्यभिचार इति । वक्ष्यते च
व्यभिचारादेरिव तद्व्याप्यवत्त्वादेरपि ज्ञानं व्याप्त्यादिग्रहप्रतिब-
न्धकम् । तथा च साध्यव्यभिचारव्याप्योपाधिव्यभिचारवानयमिति
वोद्भावनीयमिति । साध्यव्यापकत्वानिश्चयात् । उपाधित्वौपयिक-
तदनिश्चयात् । अनुकूलतर्कादिना तादृशव्यापकत्वनिश्चये तु बा-
धोन्नीतवद्भवस्येव निश्चितोपाधिः । न च स्वव्याघातकत्वोन्नायक-
मुपाधेः, तद्धि न सर्वानुमानसाधारण्यम्, अनुकूलतर्कादिनि-
श्चितव्याप्तिके हेतौ तदभावात् । नापि तद्व्यभिचारेण व्यभिचारा-
नुमानेऽपि पक्षेतरान्तरस्योपाधित्वसम्भवः, अनुकूलतर्कादिना त-

———

घवादाह वक्ष्यते चेति।वस्तुतोऽयं हेतुरमुकेन सोपाधिरित्येवोद्भाव्यं
व्यभिचारसम्बन्धेनोपाधिमत्त्वावच्छेदेन साध्यव्यभिचारित्वस्य पू-
र्वगृहीतत्वेन सोपाधित्वेन निश्चयस्यापि व्यावर्त्तकधर्मदर्शनवि-
धया व्याप्तिधीविरोधित्वसम्भवादित्यस्मद्गुरुचरणाः । शाकपाक-
जत्वादेरिव पक्षेतरत्वस्यापि यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक-
त्वसम्भवादाह उपाधित्वौपायकेति । स्वानधिकरणीभूतसाधनाधि-
करणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वानिश्चयादित्यर्थः । अयं पक्षे-
तरः उपाधित्वेन निश्चितः।कथितनिरुक्तेस्तत्रासत्त्वेनोपाधित्वायोगात्।
अत्र स्वपदमनुमानपदस्य व्यभिचारानुमानस्य उपाधित्वस्य वा बोध-
कम्। तत्र नाद्य इत्याह तद्धीति।स्वव्याघातार्थकत्वं हीत्यर्थः।तदभावा-
दिति।पक्षेतरस्य सर्वत्रानुमाने उपाधित्वनिश्चयायोगादित्यर्थः । द्वि-
तीये नापीति। तस्य पक्षेतरत्वस्य। व्यभिचारेणेत्यर्थः। सम्भव इत्यस्य

कूलतर्कोऽस्त्येवेति । एवं पर्वतावयववृत्त्यन्यत्वादेरपि नोपाधित्वं पक्षमात्रव्यावर्त्तकविशेषणवत्त्वात् । अत

---

स्य साध्यव्यापकत्वनिश्चये व्यापकव्यभिचारिणि व्याप्यव्यभिचारावश्यम्भावेन तदयोगात्। अत एव पक्षेतरस्योपाधित्वे सर्वत्रैव तादृशोपाधिसम्भवेनानुमानमात्रविलोपे व्यभिचारानुमापकत्वगर्भस्योपाधित्वस्याव्याघात इति परास्तम् । कथकसम्प्रदायानुरोधात् बाधानुन्नीतः पक्षेतरो नोपाधित्वेन कथायामुद्भाव्य इति तु वदन्ति । पक्षमात्रेति । यद्यपि पर्वतावयवरूपादेरपि व्यावर्त्तकं तत्, तथापि तस्य व्यावृत्तिर्नोपाधितायामुपयुज्यते अपि तु पक्षस्यैवेति तन्मात्रव्यावर्त्तकत्वमुक्तम् । इदञ्चानुपाधितायां न बीजं परिभाषामात्रत्वात् किन्त्वनुकूलतर्काभावेन तादृशसाध्यव्याप-

---

तद्धीति पूर्वेणान्वयः। तस्य पक्षे तरत्वस्य । तदयोगादिति।व्यभिचारानुमाने पक्षेतरान्तस्योपाधित्वनिश्चयायोगादित्यर्थः । अन्ये अत एवेति।तर्कादिनाहेतोः साध्यव्यापकताग्रहदशायामुपाधित्वानिश्चयादेवेत्यर्थः । परास्तमित्यग्रेन्वयः। नन्वेवं साध्यव्यापकस्य वस्त्वन्तरस्येव पक्षेतरस्यापि साध्यव्यापकत्वनिश्चयदशायां कथायामुद्भावनापत्तिरत आह कथकेति । वदन्ति सिद्धान्तिनः । दृष्टान्तादेः साधनवैकल्यादिवत्तदुद्भावनस्यापि निग्रहस्थानान्तरत्वादित्यभिप्रायः । तस्य पर्वतावयवरूपस्य उपाधितायां उपाधिताघटकसाधनाव्यापकतायाम् । नोपयुज्यत इति । तादृशरूपाद्यन्यत्वस्य धूमादिसाधनाव्यापकत्वात् । तथा चोपाधितौपयिकपक्षमात्रवृत्तिगर्भत्वादिति मूलार्थः । इदं पक्षमात्रव्यावर्त्तकविशेषणवत्त्वम् । न बीजमिति । तज्ज्ञानस्योपाधित्वग्रहविरोधित्वादिति भावः । तादृशेति । उपाधित्वौपयिकेत्यर्थः । वस्तुनो मात्रपदव्यर्त्या-

एव धूमे आर्द्रेन्धनप्रभववन्हिमत्त्वं द्रव्यबहिरिन्द्रियप्रत्य-
क्षत्वे उद्भूतरूपवत्त्वं मित्रातनयश्यामत्वे शाकपाकज-

———

कत्वानिश्चय इति द्रष्टव्यम्। अत एव व्यापकताग्राहकप्रमाणसम्भ-
वादेव। आर्द्रेन्धनेति। अथात्र स्वतन्त्रान्वयव्यतिरेकाभ्यामार्द्रेन्ध-
नत्वादिनैव कारणत्वं न पुनरार्द्रेन्धनप्रभववन्हित्वेनेति चेत्, किं
श्वातः, न हि कारणतावच्छेदकमेव व्यापकतावच्छेदकं तादृशा-
भावप्रतियोगितानवच्छेदकस्यैव तत्त्वात्। तदवच्छिन्नप्रतियो-
गिताकाभावस्य चातिरिक्ततया तद्वद्वृत्तित्वेन साध्यव्यभिचारसा-
धने वैयर्थ्याभावात्। सत्यपि चार्द्रेन्धने तत्संयुक्ते च वन्हौ दाहप्र-
तिबन्धकसत्त्वे धूमानुत्पादात् क्लृप्ततत्कारणाभावस्य वन्हेर्विशेषरू-
पेण कारणत्वकल्पनयैवोपपत्तावक्लृप्ततत्कारणभावानां दाहप्रति-

———

सेन पक्षव्यावर्त्तकविशेषणमात्रवत्त्वादित्येवं मूलस्यैव साध्यव्याप-
कत्वानिश्चये तात्पर्यमित्येवं युक्तमुत्पश्यामः। अत्र धूमे। आर्द्रेन्ध-
नत्वादिनेति। अत्रार्द्रेन्धनत्वयोर्विशेषणविशेष्यभावव्यत्यासेन कार-
णताद्वयस्यावश्यकत्वे अवच्छेदकलाघवाज्जलत्वेन्धनत्वाभ्यामेव
रूपाभ्यां हेतुताद्वयं युक्तमित्याशयेनादिपदमुपात्तम्।तादृशेति। तन्नि-
ष्ठेत्यर्थः। क्व चित्तु तथैव पाठः। नन्वार्द्रेन्धनप्रभववन्हिव्यभिचारि-
त्वेन साध्यव्यभिचारस्यानुमाने प्रभवान्तविशेषणस्य व्यर्थत्वान्नाा-
र्द्रेन्धनप्रभववन्हित्वेनोपाधित्वमत आह तदवच्छिन्नेति। [आर्द्रेधन-
प्रभववन्हित्त्वावच्छिन्नाभावस्य वन्हित्त्वावच्छिन्नाभावातिरिक्ततये-
त्यर्थः। तादृशवन्हित्वेन धूमहेतुत्ववादिनां मत आह सत्यपीत्यादिना
धूमानुत्पादादिति। धूमानुत्पादिनि धूमोत्पादप्रसङ्गादित्यर्थः।] आ-
र्द्रेन्धनप्रभववन्हित्वेनैव कारणत्वमित्यग्रेऽन्वयः। ननु दाहप्रतिब-
न्धकाभावानामपि धूमहेतुत्वान्नोक्तदोष इत्यत आह क्लृप्तेति।

त्वं जन्यानित्यत्वे भात्रत्वमुपाधिः, तदुत्कर्षेण साध्योत्क-

---

बन्धकाभावानां तत्कारणत्वकल्पनानौचित्यात् । एकस्यामार्द्रेन्ध-नव्यक्तौ प्रतिबद्धायां तत्रैव व्यक्त्यन्तराद्धूमोत्पादात्तत्तदिन्धनज-न्यधूमं प्रति तत्तदभावानां कारणत्वस्य वाच्यत्वेऽतिगौरवाच्च । महति चार्द्रेन्धने तत्प्रभवे चाणीयसि वन्हौ महति वन्ह्यन्तरे वि-द्यमानेऽप्यार्द्रेन्धनप्रभवमहावन्हेरनुत्पाददशायां प्रकृष्टधूमानुत्पादा-दार्द्रेन्धनप्रभववन्हित्वेन कारणत्वमित्यपि वदन्ति । तदुत्कर्षेणेति ।

---

न वा दाहप्रतिबन्धकाभावस्य धूमहेतुत्वं सम्भवतीत्यत आह एकस्यामिति । एकवन्हिव्यक्त्यन्तर्भावेणार्द्रेन्धनव्यक्तौ मन्त्रादि-ना प्रतिबन्धकतायां सत्यान्तत्रैवार्द्रेन्धनव्यक्तौ वन्हिव्यक्त्यन्तरा-द्धूमोत्पादादित्यर्थः । प्रभवं मा दहत्वित्यभिप्रायेण तार्णवन्हिर्मा दह-त्वित्याशयेनापि मन्त्राभिलापस्य दाहविरोधित्वसम्भवादिति भावः । ननु धूमसामान्यं प्रति न दाहप्रतिबन्धकानां मन्त्रादीनामन्त्रत्वा-द्यवच्छिन्नाभावत्वेन हेतुत्वं येनैकवन्ह्यन्तर्भावेण तदार्द्रेन्धनव्यक्तौ मन्त्रसत्त्वे वन्ह्यन्तरादपि तत्र धूमो न स्यात् तत्तदिन्धनजन्य-धूमं प्रति तत्तदिन्धनदाहप्रागभावत्वेन प्रतिबन्धकत्वं वाच्यमतो वन्ह्यन्तरात्तदिन्धनस्य दाहोत्तरं तत्र धूमोत्पत्तौ बाधकाभाव इत्यत आह तत्तदिन्धनेति । तत्तदभावानां तत्तदिन्धनदाहप्रागभावत्वाव-च्छिन्नाभावानाम् । ननु धूमसामान्यं प्रत्येव दाहोत्पत्त्यार्द्रेन्धन-त्वेन हेतुत्वं वाच्यं न्यायनये अवयविन्यपि पाकेन रूपान्तरपर्य्य-वसितदाहस्योत्पादादतो नोक्तगौरवमित्यत आह महति चेति । प्रकृष्टधूमं प्रत्यार्द्रेन्धनस्य वन्हेर्वा महत्त्वं न प्रयोजकं किन्त्वार्द्रेन्ध-नप्रभववन्हेरेवातो यद्विशेषयोरिति न्यायाद्धूमसामान्यं प्रत्यप्यार्द्रे-न्धनजवन्हित्वेनैव हेतुत्वमित्यर्थः । प्रकृष्टधूमत्वं न जातिप्रभेदो मानाभावात् परन्तु महत्त्ववद्धूमत्वमेव नीलघटत्वादिवदर्थसमा-जग्रस्तत्वान्न जन्यतावच्छेदकमित्याद्यस्वरसो वदन्तीत्युक्त्वा सूचि-

षात् अनन्यथासिद्धान्वयव्यतिरेकतो वैद्यकात् कारण-
तावगमेन घटोन्मज्जनप्रसङ्गेन साध्यव्यापकतानिश्च-

———

आर्द्रेन्धनप्रभववह्निसामान्यं विना धूमसामान्यस्य प्रकृष्टतादृशवह्निं
विना प्रकृष्टधूमस्यानुत्पादनियमादार्द्रेन्धनप्रभववह्नेरेव धूमोपधाय-
कत्वं तत्रार्द्रेन्धनप्रभववह्नित्वं कारणतावच्छेदकमर्थवशसम्पन्नं ना-
न्तरीयकमेव वास्तु फलतो न कश्चिद्विशेष इति भावः । अनन्य-
थेति । तादृशान्वयव्यतिरेकाभ्यामुद्भूतरूपस्य तद्वतो द्रव्यस्यैव वा

———

तः । कारणतावच्छेदकमिति प्राचांमते । स्वमते त्वाह अर्थवशासंम्पन्न-
मिति । वह्नित्वार्द्रेन्धनत्वयोर्धूमकारणतावच्छेदकयोर्दैवात्सम्पन्नं
कारणतानवच्छेदकमित्यर्थः । फलतः फले धूमव्यापकत्वग्रहे । न
कश्चिदिति । उभयथापि व्यापकतावच्छेदकत्वानपायादिति भावः ।
उद्भूतरूपस्येति नव्यमते । प्राचांमते त्वाह ततो द्रव्यस्य वेति । न-
नूक्तमतयोः किं तत्त्वमत आह तत्त्वमिति । सामान्यतः प्रत्यक्षविषय-
त्वेन तत्तद्विशेषविषयकप्रत्यक्षे वा तत्तद्व्यक्तित्वेन विषयस्य हेतुत्वं
नतु बहिर्द्रव्यप्रत्यक्षं प्रत्युद्भूतरूपत्वेन प्रमाणाभावात्, परन्त्वा-
त्मादेश्चाक्षुषादिवारणाय प्रथमकल्पे समवायेनैव उद्भूतरूपत्वेन
तत्रहेतुत्वं रूपत्वापेक्षया तस्य लघुत्वात् द्वितीयकल्पे न तदपि, चा-
क्षुषत्वादिकमन्तर्भाव्य विषयस्य हेतुत्वविरहादेवानति प्रसङ्गा-
दिति भावः । अनुद्भूतरूपे मानाभावात् उद्भूतेति रूपविशेषणं
व्यर्थमत आह तत्त्वं पुनरित्यादि इत्यपि कश्चित् । मूले घटोन्मज्जने-
ति।घटादिध्वंसो यदि विनाश्यभावः स्यात् स्वोत्तरोत्पत्तिकक्षणवृत्ति-
प्रतियोगिकः स्यात् घटप्रागभाववदिति एवं घटाद्युन्मज्जनप्रसङ्गेन ध्वं-
सस्य विनाशित्वनिरासे सति भावत्वोपाधिर्जन्यत्वावच्छिन्नविनाशि-
त्वव्यापकतानिश्चयादित्यर्थः । तत्रोक्ततर्कस्याप्रयोजकत्वमाशङ्क्याह
दीधितिकारो ध्वंसेत्यादि।तथा च ध्वंसानधिकरणत्वे सति घटप्रागभा-

यात्, तत् किं कार्य्यकारणयोरेव व्याप्तिः तथा च बहुधा व्याकुलीस्यादिति चेन्न । तदुपजीव्याऽन्येषामप्यनुकूलतर्केण व्याप्तिग्रहात् । यत्र साध्योपाध्योर्हेतुसाध्ययोर्वा

---

कारणत्वम् उभयथापि व्यापकत्वमुद्भूतरूपत्वेन तत्त्वं पुनरुपवर्णितमेव । घटोन्मज्जनेति । ध्वंसप्रागभावानधिकरणकालस्य प्रतियोग्यधिकरणत्वनियमात् । न च प्रागभावस्य ध्वंसप्रतियोगिध्वंस इव तद्ध्वंसोऽपि प्रतियोगिनो ध्वंस इति वाच्यम् ।अप्रामाणिकध्वंसतत्कारणधाराकल्पनातो ध्वंसानन्तत्वकल्पनाया एवोचितत्वादिति भावः । कार्य्यकारणयोरेव । कार्य्यकारणभावग्राह-

---

भानधिकरणकालत्वमेव घटध्वंसोत्तरक्षणस्य घटवत्तायां त्वन्मते प्रयोजकमिति भावः । अत्र स्वरूपासिद्धिमाशङ्कते न च प्रागभावस्य ध्वंसप्रतियोगिध्वंस इति । तद्ध्वंसोऽपि ध्वंसस्य ध्वंसोपि प्रतियोगिनो ध्वंस इत्यर्थः । तथा च घटध्वंसोत्तरक्षणस्य घटप्रतियोगिकध्वंसानधिकरणत्वमेवासिद्धमिति भावः । अप्रामाणिकेति । ध्वंसो नष्ट इत्याद्यप्रत्ययादप्रामाणिकानां ध्वंसप्रतियोगिकध्वंसानां कल्पनमेवं तेषां क्षणिकत्ववारणाय तत्कारणधारायाः कल्पनमपेक्ष्य लाघवात् ध्वंसस्याविनाशित्वकल्पनाया एवौचित्यादित्यर्थः । यद्यपि ध्वंससामान्यं प्रत्येव जन्यत्वेन प्रतियोगिनां हेतुत्वमेव ध्वंसस्य विनाशित्वे मानं फलमुखगौरवस्यादोषत्वाच्च क्षणिकत्ववारणाय तत्कारणधाराकल्पनं न क्षतिकरं स्वप्रतियोग्यधिकरणतादात्म्यसम्बन्धेन ध्वंसस्य तादृशसम्बन्धावच्छिन्नध्वंसवत्त्वेन प्रतियोगिन एव वा ध्वंससामान्यं प्रति हेतुत्वोपगमे तु क्षणिकत्वं ध्वंसानां तथापि द्रव्यनाशं प्रति हेतुतया क्लृप्तानामसमवायिनाशानां ध्वंसस्थले विरहात् विशेषसामग्रीसहिताया एव च सामान्यसामग्र्याः कार्यजनकत्वाच्च ध्वंसस्य विना-

व्याप्तिग्राहकसाम्यान्नैकत्र व्याप्तिनिश्चयस्तत्र सन्दिग्धोपाधित्वं व्यभिचारसंशयोपधायकत्वात् । यदा च तादृश्यकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितम् । पक्षेतरस्य स्वव्याघातकत्वेन हेतुव्यभिचारसंशायकत्वमतो न सन्दिग्धोपाधिरपि सः । यत्तु पक्षेतरस्य यथा साध्यव्यापकत्वं तथा साध्याभावव्यापकत्वमपि ग्राहकसाम्यात् । तथा चोभयव्यापकनिवृत्त्या सा-

———

कप्रमाणक्रोडीकृतयोरेव । पक्षेतरस्येत्यादि । ननु सन्दिग्धोपाध्यन्तरवत्पक्षेतरोऽपि व्यभिचाशङ्कामादधानः केन वारणीयः, स्वव्याघातकत्वञ्च निराकृतमेव । अथात्र कश्चिदुपाधिर्भविष्यतीति शङ्का शङ्कापिशाचीत्वात् यथा न व्यभिचारशङ्काधायिका तथा पक्षेतरस्योपाधित्वशङ्कापि । तदाहितापि व्यभिचारशङ्का पक्षव्यभिचारशङ्केव न प्रतिबन्धिका । अन्यथा निरुपाधिकसहचारभ-

———

श इति तत्त्वम । शाकपाकजत्वाद्युपाधेः श्यामत्वादावकारणत्वात् किञ्चेत्याशङ्कानुपपत्तेराह कार्येति । तादृशप्रमाणक्रोडीकृतत्वमिह कार्यकारणतत्वतदवच्छेदकानामन्यतमत्वमिति वदन्ति । निराकृतमेवेति । अनुकूलतर्केण हेतोः साध्यव्याप्यताग्रहस्थल एवानुमानानुच्छेदादिति । कश्चिदुपाधिरुपाधिपदार्थः । शङ्कापिशाचीत्वं व्यभिचारशङ्कास्वरूपयोग्यत्वम । शङ्कापीति । न व्यभिचारशङ्काधायिकेति पूर्वेणान्वयः । व्यभिचारे व्याप्यवत्तासंशयत्वेनैव तत्संशयस्वरूपयोग्यत्वादाह तदाहितेति । न प्रतिबन्धिकेति । पक्षीयान्यत्वस्येव पक्षेतरोपाधित्वसंशयजन्यत्वस्यापि प्रतिबन्धकत्वावच्छेदकनिवेश्यत्वा-

ध्यतदभावाभ्यां पक्षे निवर्त्तितव्यम्, न चैवं । तथा च पक्षेतर. साध्याव्यापकतासंशयेन सन्दिग्धः कथं परं दूषयेदिति । तन्न । तथापि हि साध्यव्यापकता पक्षमालम्ब्य हेतुव्यभिचारसंशयाधायकत्वेन दूषणं स्यादेव । ननु यत्रोपाधिस्तत्रानुकूलतर्को यदि नास्ति तदा तदभावेनैव व्याप्तेरग्रहः । अथास्ति, तदा साध्यव्याप्या-व्यापकत्वेनोपाधिः साध्याव्यापकत्वनिश्चयान्नोपाधिरित्यु-

---

ङ्गप्रसङ्गमात्रबलप्रवृत्तानामनुमानानां विलयप्रसङ्गादिति चेन्न । सन्दिग्धोपाध्यन्तरसाधारणव्यभिचारशङ्काधानप्रयोजकरूपवत्ता पक्षेतरेण तदाधानेप्रयोजनक्षतेः प्रतिबन्धकत्वासम्भवात् व्यभिचारज्ञानत्वेन च प्रतिबन्धकतायां कारणविशेषजन्यत्वाजन्यत्वादिकं न निविशते गौरवात् मानाभावाच्च । कथमन्यथा करवन्हिसंयोगः

---

दिति भावः । अन्यथेति । पक्षेतरोपाधित्वशङ्कायाः साध्यव्यभिचारसंशयशोकत्वे तत्संशयाहितव्यभिचारशङ्कायाः साध्यव्याप्तिविरोधित्वेनेत्यर्थः । प्रथमे दूषणमाह सन्दिग्धेत्यादिना । तदाधाने व्यभिचारसंशयस्याधाने कर्त्तव्ये । प्रयोजनक्षतेः उक्तानुमानभङ्गापत्तेः विरोधित्वासम्भवादित्यर्थः । तदुक्तं वृद्धैर्न हि प्रयोजनक्षतिभिया सामग्री कार्य्यं नाजयतीति । द्वितीये दूषणमाह व्यभिचारज्ञानत्वेन चेति।कारणविशेषेति । जन्यत्वान्तं दृष्टान्तार्थम् । तथा च पक्षेतरान्योपाधित्वसंशयजन्यत्वमिव पक्षेतरोपाधित्वसंशयाजन्यत्वं न विरोधितावच्छेदकमित्यर्थः।आदिना पक्षीयान्यत्वस्योपग्रहः।सति प्रमाणे गौरवस्याप्यनास्थेयत्वादाह मानेति । पक्षीयव्यभिचारशङ्कायाः प्रतिबन्धकत्वाभावे बाधकमाह कथमन्यथेति ।कर-

अयथापि नोपाधिर्दूषणम् । न च व्याप्त्यभावव्याप्य-

---

सर्वः संयोगो वा प्रत्यक्षसंयोगधर्म्मातिरिक्तधर्म्मसमवायी समवा-
यित्वादित्यादितो न शक्त्यादिसिद्धिः।निरुपाधित्वेऽपि अप्रयोजक-
त्वादिति चेन्न । निरुपाधित्वस्यैव प्रयोजकत्वात् तथात्वेऽपि चाप्र-
योजकत्वे निरुपाधित्वाभिमतानामितरेषामपि तथात्वात् । अत्र च
कुत्र पक्षातिरिक्ते व्यभिचारशङ्का कश्चायं व्यामोहो यद्व्याप्तिग्राह-
कदृढतरप्रमाणविरहिणां निरुपाधित्वमिति । यतस्तत्र तत्रान्ततः
पक्षसपक्षैकदेशवृत्तिधर्म्मावच्छिन्नसाध्यव्यापकानां सपक्षैकदेशवृ-

---

वन्ह्योः संयोगस्य पक्षत्वे संयोगान्तर एव साध्यव्यभिचारस्य नि-
श्चयः संशयो वा भविष्यतीत्यतः पक्षान्तरमाह सर्वः संयोगो वेति ।
हेतोर्व्यभिचारित्वसम्पत्त्यर्थमातिरिक्तान्तं तत्रापि संयोगधर्माति-
रिक्तधर्मत्वस्य संयोगेषु बाधादप्यप्रयोजकत्वसम्भवात्तदुपादानार्थं
प्रत्यक्षत्वेन संयोगधर्मो विशेषितः । शक्त्यादीत्यादिना रूपादिगता-
नुद्भूतत्वाद्युपग्रहः । शङ्कते निरुपाधित्वेऽपीति। अप्रयोजकत्वान्न श-
क्त्यादिसिद्धिरिति प्रश्नवाक्येनान्वयः । निरुपाधित्वस्यैवेति । पक्ष-
वृत्तिरित्यादिः । तथात्वेऽपि पक्षधर्मस्य निरुपाधित्वेऽपि । इतरेषां
ज्ञेयं प्रमेयं वाच्यत्वादित्यादीनाम् । तथात्वात् तथात्वापातात् । क्व
चित्तथैव पाठः । ननूक्तस्थले पक्षातिरिक्त एव व्यभिचारसंशया-
दप्रयोजकत्वमत आह अत्र चेति । संयोगपक्षकोक्तहेतौ चेत्यर्थः ।
पक्षेतरस्य सन्दिग्धोपाधित्वे निरुपाधिसहचारबलमात्रप्रवृत्तत्व-
मनुमानस्य भज्येतेति यदुक्तं तदसहिष्णुराह कश्चायमिति ।
व्याप्तिग्राहकप्रमाणस्य दृढतरत्वं व्यभिचारशङ्काविरोधिसहकृ-
तत्वम् । अन्ततः पक्षेतरस्य उपाधित्वानुपगमेऽपि । पक्षसपक्षेति ।
पर्वतमहानसान्यतरत्वावच्छिन्नसाध्यव्यापकानां व्यञ्जनवत्त्वादी-
नामुपाधित्वं सन्दिग्धोपाधित्वं सम्भवतीत्यर्थः । नन्वेवं क्षितिः

मुभयमत उपाधिरपि तदभावोन्नयनेन दोष इति वाच्य-म् । उपाधेरात्मलाभार्थमनुकूलतर्काभावोपजीवकत्वेन तस्यैव दोषत्वादिति चेन्न । सोपाधावेकत्र साध्यतदभा-वसम्बन्धस्य विरुद्धत्वादवच्छेदभेदेन तदुभयसम्बन्धो वाच्यः तथा च साधने साध्यसम्बन्धितावच्छेदकरूपम-

---

त्तिधर्म्माणामुपाधित्वं सम्भाव्यते । इत्थञ्च यथा नातिप्रसङ्गस्तथा तत्र तत्र वक्ष्याम इति सत्यम् । कथकसम्प्रदायानुरोधात् कथायां सन्दिग्धोपाधित्वेन पक्षेतरो नोद्भाव्य इत्येवम्परो ग्रन्थ इत्याहुः । सोपाधावेकत्रेत्यादि । उपलक्षणमेतत् । व्यभिचारिण्युपाधेरवश्य-म्भावमात्रे तात्पर्य्यम् । उपजीव्योपजीवकभावो हि न कार्य्य-

---

सकर्तृका कार्य्यत्वादित्यादितो नेश्वरादिसिद्धिः स्यात्तत्रापि क्षिती-तरस्य घटत्वादेरपि सन्दिग्धोपाधित्वसम्भवादत आह इत्थञ्चेति । अतिप्रसङ्गो निरुपाधित्वहेतोः सन्दिग्धोपाधित्वप्रसङ्गः । तत्र तत्रेति।अनुकूलतर्केण हेतोः साध्यव्याप्यत्वग्रहे तद्व्यापकत्वेन घ-टत्वादेः साध्याव्यापकत्वनिश्चयादेव न तत्र सन्दिग्धोपाधित्वमिति भावः । आहुर्न्यायविदः । साध्यतदभावयोरेकत्र विरोधे मानाभावात् साध्यसम्बन्धितावच्छेदकवत्त्वस्यानुमानादूषकत्वेन तादृशोपाधेः प्रकृतानुपयोगादाह उपलक्षणमिति । उपलक्ष्यमाह व्यभिचारिणीति । ननूपाधेरवश्यंभावेऽप्युपजीव्यत्वादनुकूलतर्काभाव एव दोषस्त-दुक्तमुपाधेरेवात्मलाभार्थमित्यादीत्यत आह उपजीव्येति । अस-म्भवादिति । आर्द्रेन्धनाद्युपाधिं प्रत्यनुकूलतर्काभावस्याजनकत्वात् इति भावः । अकिञ्चित्कर उपाधेर्दूषकत्वाखण्डकः । व्यापकत्वे व्याप्यस्यादूषकत्वेऽनुकूलतर्कविरहोऽप्यदूषणं स्यात्तद्व्यापकान्त-

नुकूलतर्कभावोपजीवनमन्तरेणोपाधिरावश्यकस्तथानुकू-
लतर्काभावोऽप्यावश्यक इति उभयोरपि विनिगमकाभा-
वाददूषकत्वम् । अन्ये तु यद्दृच्छावृत्त्या यस्य साधनस्य

———

कारणभावोऽसम्भवात् व्याप्यव्यापकभावस्त्वकिञ्चित्कर एव, वि-
शेषतस्तु ज्ञायमानदूषकतायाम् । एकमविज्ञायाप्यन्यतरज्ञानाच्च न
ज्ञाप्यज्ञापकभावः । न चानुकूलतर्कविरहादेव व्याप्तेरग्रहे कृतमु-
पाधिज्ञानेन, विनाप्यनुकूलतर्कं व्यभिचाराग्रहे व्याप्तिग्रहसम्भवा-
दिति भावः।यद्दृच्छावृत्त्येति । अत्र पक्ष इति पूरणात् पक्षनिष्ठसा-
ध्यव्यावृत्त्युन्नायकव्यावृत्तिप्रतियोगित्वमर्थः । सत्प्रतिपक्षोन्नाय-

———

स्यापि सत्त्वादिति भावः । विशेषतः सुतराम् । बाधाद्व्यापकत्वेऽपि
तस्यैव जायमानस्य बुद्ध्यादिविरोधित्वादिति भावः । एकमिति । उ-
पाधिमज्ञात्वा तर्काभावस्यैव तमज्ञात्वाप्युपाधिज्ञानादित्यर्थः । शङ्क-
ते न चेति। दूषयति विनापीति । व्याप्तिग्रहसम्भवादिति। तथा च त-
दानीमेवोपाधिज्ञानस्य दूषकत्वं वाच्यमिति भावः।यथाश्रुतस्य पर्वतो
वन्हिमान्धूमादित्यादौ साधने साध्यव्यावर्त्तकं वन्हिसामग्र्यादाव-
तिव्याप्त्यापत्तेराह अत्रेति । अत्र लक्षणवाक्ये अर्थ इत्यनेनान्वयः ।
पक्षनिष्ठेति । अत्राप्युन्नायकत्वं तद्योग्यता तथा च स्वाभावनिष्ठसा-
ध्याभावव्याप्यतावच्छेदकधर्मावच्छिन्नवत्पक्षकत्वमर्थः । पक्षताव-
च्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वस्थले निरुक्तधर्मावच्छिन्न-
वत्पक्षसामान्यकत्वं वाच्यमतो द्रव्यत्वादिना सामानाधिकरण्येन
वन्ह्यादेः साध्यतायां तत्सामग्र्यादौ नातिप्रसङ्गः । व्यभिचारोन्ना-
यकस्य लक्ष्यत्वं पर्वतो धूमवान् वन्हेरित्यादौ आर्द्रेन्धनाद्यव्याप्ति-
र्जलं वन्हिमद्धूमादित्यादौ वन्हिसामग्र्यादावतिव्याप्तिश्च स्यादत
आह सदिति । सत्प्रतिपक्षोन्नायकत्वं तदुन्नयनौपयिकरूपवत्त्वं तच्च

साध्यं निवर्त्तते स धर्मस्तत्र हेतावुपाधिः । स च धर्मो यस्याभावात् पक्षे साध्यसाधनसम्बन्धाभावः । यथा आर्द्रेन्धनवत्त्वम् । व्यावर्त्तते हि तद्व्यावृत्त्या धूमवत्त्वम-

---

कत्वञ्चात्र दूषकताबीजं तत्र चाप्रयोजकत्वात् साधनाव्यापकत्वं नोक्तं साधनस्य सोपाधित्वव्युत्पादनायैव केवलं यस्य साधनस्येति । यद्वा साधनस्येत्यनन्तरमधिकरण इति पूरणात् साधनवन्निष्ठसाध्यव्यावृत्त्युन्नायकव्यावृत्तिप्रतियोगित्वमर्थः । तथा च यद्व्यभिचारित्वेनेत्यादेरुपवर्णितार्थनिष्कर्ष एवायम् । शुद्धस्य साधनावच्छिन्नस्य च साध्यस्य व्यापकानामुपाधीनां पक्षे क्वचित् साधनवति वा साध्याभावस्यैकमुन्नयनप्रकारमाह स चेत्यादि । साधन-

---

पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति पक्षावृत्तित्वं दूषकताबीजं नातो लक्ष्यतावच्छेदकलक्षणयोरभेदः । तत्र सत्प्रतिपक्षोन्नयने । अप्रयोजकत्वादित्युपलक्षणम्, ह्रदो वन्हिमान् धूमादित्यादौ वन्हिसामग्र्यादावव्याप्तिकरत्वाच्चेत्यपि द्रष्टव्यम् । नन्वेवं मूले यस्य साधनस्येत्यभिधानं विफलमत आह साधनस्येति । सोपाधित्वं येन केनापि सम्बन्धेन निरुक्तोपाधिमत्त्वं केवलं लक्षणाघटकम् न च साध्यतेऽस्मिन्निति व्युत्पत्त्या साधनपदस्य पक्षपरत्वमेव कुतो नोक्तमिति वाच्यम् । तत्र हेतावित्यग्रिममूलविरोधापत्तेः इति भावः । साधनस्य लक्षणाघटकत्वे तत्सन्देहेन तदुपादानस्य सन्दर्भविरोधापत्तेराह यद्वेति । साधनवन्निष्ठेति । नन्वेतस्य लक्षणत्वे वस्तुतस्त्वित्यादिना पूर्वोक्तस्य यद्व्यभिचारित्वेनेत्यादिलक्ष्यतावच्छेदकवाक्यार्थस्याभेदापत्तिरत आह तथा चेति । उपदर्शितो योऽर्थनिष्कर्षस्तन्मात्रमिदं न तु लक्षणमपि येन लक्ष्यतावच्छेदकाभेदः स्यादिति भावः । साध्यसाधनसम्बन्धाभावस्य लक्षणाघटकत्वात् स

योगोलके । अत एव तत्र साध्यसाधनसम्बन्धाभावः पक्षे । एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः सम्बन्धो निवर्त्तमानः पक्षधर्मताबलादनित्यत्वाभावमादाय सिध्यति । तथा वायावुद्भूतरूपवत्त्वं निवर्त्तमानं

---

वत्त्वेन ज्ञायमाने पक्षे साध्यसाधनसम्बन्धाभावः सिद्ध्यन् पक्षधर्म्मताबलात्साध्याभावमादायैव पर्य्यवस्यति । ननु शुद्धसाध्याभावोन्नायकस्यार्द्रेन्धनवत्त्वादेः कथं साध्यसाधनसम्बन्धाभावोन्नायकत्वमत आह आर्द्रेन्धनेति । अत एवेति । साध्याभावसत्त्वे साध्यसाधनसम्बन्धाभावस्यावश्यकत्वात्तदुन्नायकत्वमक्षतमिति भावः । द्रव्यत्वे इति द्रव्यत्वस्य हेतुत्वाभिप्रायेण । अयञ्च प्रायशः स-

---

चेत्यादेस्तदर्थयोजकत्वासम्भवादाह शुद्धस्येत्यादि । यथार्द्रेन्धनवत्त्वमित्यादिमूलानुरोधात् शुद्धसाध्यं निवेशितम् । प्रथमव्याख्यामनुसृत्याह पक्ष इति । द्वितीयामनुसृत्याह क्वचित् साधनवति वेति । साधनवत्त्वसामानाधिकरण्येन साध्याभावोन्नयनस्य सूचनाय क्वचिदुक्तिस्तावतैव व्यभिचारधियः सम्पत्तेः । एकमनुगतम् ।साध्यविशिष्टसाधनवत्त्वाभावे साध्ये साध्याभावस्य सिद्धिमुपपादयति साधनवत्त्वेनेति। ज्ञायमाने पक्षे निश्चीयमाने। पक्षधर्मतेति। साध्याभावस्य तदुभयसम्बन्धाभावस्य बाधबलादित्यर्थः। साध्याभावमादायेति । तत्प्रकारितानियतानुमितिविधेयभावादित्यर्थः।आर्द्रेन्धनेतीति । इत्थं च मूले यथेत्यादिः पक्ष इत्यन्त एको ग्रन्थः।अत एवेत्यस्य धूमव्यावृत्तिसत्त्वादेवेत्यर्थमनुसृत्याह साध्याभावेति । साध्यसामान्याभावसत्त्व इत्यर्थः। वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र द्रव्यत्वविशिष्टप्रत्यक्षत्वाभावस्य साध्यसाधनाभावभिन्नत्वा दाह द्रव्यत्वेति। बहिर्द्र-

बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत् प्रत्यक्षत्वाभाव-
मादाय सिद्ध्यति । तथा चोभयत्रापि पक्षे साध्याभावसि-

---

म्भवतीत्यभिहितो वस्तुतः प्रकारभेदेऽपि न क्षतिः । तथा च शु-
द्धसाध्यव्यापकोपाधिस्थले शुद्धसाध्याभावः अवच्छिन्नतद्व्याप-
कस्थले त्ववच्छेदकवदवच्छिन्नसाध्याभावोऽवच्छेदकवत्त्वविशेषि-
तेन चोपाधिविरहेण शुद्धसाध्याभावः साधनीयः । अत एव गग-
नादौ स्पर्शवत्त्वेन प्रमेयत्वेन च प्रत्यक्षत्वे साध्ये बहिर्द्रव्यत्वाव-
च्छिन्नसाध्यव्यापकस्योद्भूतरूपस्य तादृशसाध्याभावोन्नयनहेतु-
त्वमिति । पक्षे यद्व्यावृत्त्या यस्य साधनस्य सम्बन्धि यत्साधन-
विशिष्टं साध्यं निवर्त्तते इत्यर्थस्तु यथाश्रुतग्रन्थस्वरसासिद्धः । तत्र
दूषकताबीजं यदि सत्प्रतिपक्षोन्नायकत्वं तदा साधनानुप्रवेशो
व्यर्थः, जलं द्रव्यं गन्धवत्त्वादित्यादौ पृथिवीत्वादावतिव्याप्तिश्च ।

---

व्यत्वार्थकेत्यादिः । ननु घटो गोत्ववान् अश्वत्वात् इत्यादौ साध्यसा-
धनसम्बन्धाप्रसिद्ध्या तद्व्यतिरेकोन्नायकत्वं सास्नाशरीरवत्त्वाद्युपा-
धेरसम्भवीत्यत आह अयं चेति । प्रकार इति शेषः । प्रकारभेदमेव
दर्शयति तथा चेत्यादिना । अवच्छिन्नसाध्याभावः साधनीय इत्यग्रेऽ-
न्वयः । विशिष्टाभावस्यातिरिक्तत्वे पक्षधर्मताबलस्यासम्भवादाह
अवच्छेदकवत्त्वेति । अत एव उक्तप्रकारस्यावश्यकत्वादेव । अन्य-
था गगनं प्रत्यक्षं स्पर्शवत्त्वात् इत्यत्रोद्भूतरूपाभावेन पक्षे साध्यसा-
धनसम्बन्धाभावः सिद्ध्यन्नपि न साध्याभावपर्यवसायी साधनाभा-
वस्यापि पक्षे सत्त्वात् गगनं प्रत्यक्षं प्रमेयत्वादित्यत्र च तादृशरूपाभावे-
न साध्यसाधनसम्बन्धाभावः सिद्ध्यत्येव न सुखादौ व्यभिचारित्वा-
दित्यादिखण्डनार्थः । दूषकताबीजं लक्ष्यताप्रयोजकम् । व्यर्थत्वमुक्त्वा
विरुद्धार्थकत्वमप्याह जलमिति । जलस्य द्रव्यत्वेऽपि गन्धविशिष्टद्र-

द्ध्या साध्यसाधनसम्बन्धाभावोऽस्तीति । अत एव बाधानुन्नीतपक्षेतरस्यानुपाधित्वं स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वादिति । यत्तूपाधिमात्रस्य

---

अथासिद्ध्युन्नायकत्वं तदा साध्यानुप्रवेशो निरर्थकः, जलं गन्धवत् द्रव्यत्वादित्यादौ पृथिवीत्वादावतिप्रसङ्गश्च । अथ यथासम्भवमसिद्धेः सत्प्रतिपक्षस्य चोन्नायकत्वं तदा वायुः स्नेहवान् गन्धवत्त्वादित्यादौ जलत्वादावव्याप्तिः । साधनविशिष्टसाध्यासिद्धेः । साध्यसाधनवत्त्वप्रकारकबोधविरोधिबुद्धिकाभावोन्नायकत्वमर्थः । विरुणद्धि चैकैकाभावबुद्धिरुभयवत्ताबोधम् । विरुद्धस्थले तु भ्रमादिरूपतथाविधबोधप्रसिद्ध्या समन्वय इत्यपि

---

व्यत्त्वाभावसत्त्वादिति भावः । असिद्ध्युन्नायकत्वं स्वरूपासिद्ध्युन्नायकत्वम् । दूषकताबीजमित्यनुषज्यते । व्यर्थ इति । यथासन्निवेशे वैयर्थ्याभावादाह जलमिति । जलस्य हेतुमत्त्वेऽपि साध्यविशिष्टतदसत्त्वादिति भावः । यथासम्भवमिति । साध्यत्वसाधनतान्यतरावच्छेदकधर्मावच्छिन्नाभावोन्नायकत्वमित्यर्थः । पूर्ववदन्वयः । जलत्वादीत्यादिना पृथिवीत्वाद्युपग्रहः । साध्यसाधनसम्बन्धाभावपदस्य प्रकारान्तरेणार्थमुपवर्णयतां मतमाह साध्यसाधनवत्त्वेति । साध्यसाधनवत्त्वबोधस्य विरोधिनी बुद्धिर्यस्य तादृशाभावस्योन्नायकत्वं किञ्चिद्धर्मिकसाध्यसाधनवत्ताबुद्धिसामान्यं प्रति प्रकारता दूषकताबीजमित्यन्वयः । प्रतिबन्धकतावच्छेदकीभूताभावस्योन्नायकत्वमिति यावत् । एतेन साध्यसाधनवत्त्वबुद्धौ प्रकारीभूतस्य वस्त्वन्तरस्याभावोन्नायके नातिप्रसङ्गः । भ्रमादीत्यादिना स्वस्वाश्रयधर्मिकप्रमायाः परिग्रहः । अत्र घटो गुणः प्रमेयत्वादित्यत्र जात्यभावादावतिव्याप्तिः घटत्वाद्यात्मकस्य तदभावस्य पक्षे साध्याभावोन्नायकत्वात्, साध्यसमानाधिकरणत्वविशेषणे च घटो गुणः स्नेहवत्त्वादित्यत्रासिद्ध्यु-

वदन्ति । यत्तु साध्यावृत्तित्वे सति साधनावृत्तिर्यस्तच्छून्यत्वेन साध्यसाधनेऽनुगमस्य तदभावोन्नायकत्वं वाच्यमिति । तन्न । यत्र भिन्नभिन्नसम्बन्धेन साध्यसाधनभावस्तत्र सद्धेतुके हेतुतासम्पादकेन सम्बन्धेन साध्यस्य साध्यतासम्पादकेन च हेतोरन्यत्रापि च यथाकथञ्चित्सम्बन्धेनोभयस्याभावोन्नायकेऽतिव्याप्तेः । किञ्च तादृशधर्मशून्यत्वेन रूपान्तरेण वा तदभावस्योन्नायकत्वम-

———

न्नायके जलत्वादावव्याप्तिस्तस्य साध्यविरुद्धत्वात् । न च स्वाश्रयनिष्ठाधिकरणतानिरूपकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वेन निरुक्तप्रतियोगितावच्छेदकीभूताभावो विशेषणीय इति नोक्तातिव्याप्तिः स्वपदस्य लक्ष्यपरत्वादिति वाच्यम् । कालिकादिसम्बन्धावच्छिन्नाया गुणत्वाद्यधिकरणताया जातित्वेऽपि सत्त्वात्, साध्यताघटकसम्बन्धावच्छिन्नाधिकरणत्वनिवेशे च जलं रूपवत् द्रव्यभिन्नत्वादित्यादावसिद्ध्युन्नायके निर्गुणत्वादावव्याप्तेः समवायेन द्रव्यभेदत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेः, एवं घटत्वाभाववान् घटत्वादित्यादौ साध्यसाधनवत्त्वबोधस्याहार्यतया तद्विरोधित्वाप्रसिद्ध्या तत्रन्योपाधावव्याप्तिरित्याद्यस्वरसो वदन्तीत्युक्त्वा सूचितः।यत्त्विति।अत्र वृत्तिः शून्यत्वं च स्वरूपसम्बन्धेन ग्राह्यम्। शून्यत्वेनेत्युपलक्षणं साध्यसाधनवन्तावित्याकारधीप्रकारत्वेनाप्यनुगमो बोध्यः।निरुक्तधर्मशून्यस्य साध्यताघटकेन हेतुताघटकेन येन केनचिद्वा सम्बन्धेनावच्छिन्नस्याभावस्योन्नायकत्वं निवेशितं सर्वमप्ययुक्तमिति क्रमेणाह यत्रेति । तत्र पर्वतो वन्हिमान्तदीयरूपादित्यादौ । अन्यत्रैकसम्बन्धेन साध्यहेतुस्थले । अपिना विभिन्नसम्बन्धेन हेतुसाध्यस्थलस्य समुच्चयः । ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावान्यत्वे सति साधनताघटकसम्बन्धानवच्छिन्नसाधनाभावान्यत्वेन निरुक्तधर्मशून्याभावस्य विशेषणान्नोक्तदोष इत्यत आह किं चेति । निरुक्ताभावप्रतियोगितावच्छेदकस्य सम्बन्धस्य वितर्केण दोषमुक्त्वा धर्मस्य वितर्केण तमाह किञ्चेतीत्यपि

भिमतम्, नाद्यः, साध्यसाधनान्यतरवति तदसम्भवात्। नान्त्यः, धूमेन पर्वते वन्हौ साध्ये महानसीयवन्हित्वाद्यवच्छिन्नाभावोन्नायकमहानसत्त्वादावतिव्याप्तेः। यच्च पक्षावृत्तित्वे सति ये साधनवद्वृत्तयस्तच्छून्यत्वेन पक्षसाधनवन्नाविति प्रमाविशेष्यत्वेन वा द्वावनुगतीकृत्य तत्र साध्यव्यावर्त्तकत्वमर्थमाहुः। तत्र यदि सत्प्रतिपक्षव्यभिचारयोरन्यतरमात्रोन्नायकत्वं दूषकताबीजं तदा द्वयोरनुगमनमफलम्। अथ यथासम्भवमुभयोन्नायकत्वं तदा अवृत्तिहेतुके सत्प्रतिपक्षोन्नायकेऽव्याप्तिः। यदपि च पक्षतावच्छेदके साधने च न वर्त्तते यत्तच्छून्यस्य पक्षतावच्छेदकसाधने इति प्र-

———

कश्चित्। वन्हित्वादीत्यादिना हेतुतावच्छेदकीभूतधूमत्वस्योपग्रहः। साध्यतावच्छेदकधर्मानवच्छिन्नसाध्याभावान्यत्वे सति साधनतावच्छेदकधर्मानवच्छिन्नसाधनाभावान्यत्वेनापि निरुक्ताभावस्य विशेषणे तु नायमपि दोष इति ध्येयम्। यच्चेति। अत्रापि वृत्तिः शून्यत्वं च विशेषणतया बोध्यम्। लाघवादाह पक्षेति। साधनवत्त्वभ्रमविशेष्ये ह्रदादौ साध्यव्यावर्त्तकस्य वन्हिसामग्र्यादेः प्रसिद्धानुमानवारणाय प्रमानुसरणम्। न चैवं काञ्चनह्रदो वन्हिमान् काञ्चनधूमादित्यादौ वह्निसामग्र्यादावव्याप्तिः प्रकृतपक्षादेः प्रमात्वाप्रसिद्धेरिति वाच्यम्। ह्रदादेरेव पक्षादिपदेन कर्त्तव्यत्वात् शब्दानुगमस्याकिञ्चित्करत्वादिति भावः। द्वयोः पक्षसाधनवतोः। अफलमिति। प्रत्येकान्तर्भावेणैव निरुक्तेः सम्यक्त्वात्। इदं च प्रथमकल्पे, द्वितीयकल्पे तु प्रमायास्तद्व्यक्तित्वेन निवेशान्नैष दोषः। उभयोन्नायकत्वं साधनवत्पक्षोभयधर्मिकसाध्यवत्ताबुद्धिसामान्यविरोध्युन्नायकत्वम्। अव्याप्तिरिति। ह्रदो वन्हिमान् गगनादित्यादौ साधनवतोऽप्रसिद्धेरिति भावः। उक्ताव्याप्तिं निरस्यतां मतमाह यदपीति। विशिष्टसत्तावान् गुणो विशिष्टसत्त्वादित्यादिसद्धेतुस्थले पक्षतावच्छेदकावृत्तिधर्मशून्यस्य सत्त्वस्याधिकरणे गुणादौ साध्यव्यावर्त्तके द्रव्यत्वादावतिव्याप्ते-

तीतिविशेष्यस्य वाश्रये साध्यव्यावर्त्तकत्वमर्थनाहुः । तत्रापि किं येन सम्बन्धेन हेतुता तेन, अथ येन पक्षतावच्छेदकं पक्षे वर्त्तते तेन, उत येन केन चित्ताहृशधर्माश्रये साध्यव्यावर्त्तकत्वमभिमतम् । नाद्यः, जलं वन्हिमद्धूमादित्यादौ जलपक्षकवन्हिसाध्यके संयोगसम्बन्धेन साधने धूमादौ वन्हिसामग्र्यादावव्याप्तेः । पक्षतावच्छेदकस्य संयोगेनावृत्तेः संयोगेन धूमवतश्च वन्हिमत्त्वनियमात् । न द्वितीयः, घटो जातिमान् मेयत्वादित्यादौ समवायित्वादावव्याप्तेः, वन्हिमत्पर्वतपक्षके पर्वतो वन्हिमान् धूमादित्यत्र धूमावयवे वन्हिव्यावर्त्तके वन्हिसामग्र्यादावतिव्याप्तेश्च । अत एव

---

राह पक्षतावच्छेदकसाधनेति । प्रतीतिरत्र प्रमा ग्राह्या तेन पर्वतत्वधूमाविनिर्भ्रमविशेष्यस्य बाष्पाश्रये वन्ह्याद्व्यावर्त्तके तत्सामग्र्यादौ नातिप्रसङ्गः । तेनेति । पक्षतावच्छेदकताघटकेनेति फलितार्थस्तेन कर्म जन्यं पतनत्वादित्यादौ कालिकसम्बन्धेन पक्षनिष्ठस्य कर्मत्वादेस्तत्सम्बन्धेनाश्रये महाकालादौ साध्यव्यावर्त्तकस्यानित्यत्वादेर्नोपाधित्वप्रसङ्गः । नाद्य: कलश । एवमग्रेऽपि । ननु तत्र निरुक्तधर्मस्याश्रये धूमवत्येव वन्हिव्यावर्त्तकत्वान्नाव्याप्तिरत आह संयोगेन धूमवतश्चेति । अव्याप्तेरिति । समवायेन निरुक्तधर्मवतः पक्षस्य जातिमत्त्वनियमादिति भावः । ननु पक्षतावच्छेदकहेतुताघटकसम्बन्धयोरन्यतरेण निरुक्तधर्माश्रयत्वस्य वक्तव्यत्वान्नाव्याप्तिरत आह वन्हिमदिति । निर्वन्हिपर्वतस्य पक्षत्वे वन्हिसामग्र्यादेलक्ष्यतया वन्हिमत्पर्वतानुसरणम् । अत एव उक्तातिव्याप्तेरेव । इतरो यथाकथंचित्सम्बन्धेन ताहृशधर्माश्रयत्वगर्भः । इत्यादीति । साधनवत्त्वपक्षतावच्छेदकवत्त्वयोरन्यतरस्य स्वरूपसम्बन्धेनाश्रये साध्यव्यावर्त्तकत्वात् प्रतिपक्षोन्नायके गगनादिहेतुकोपाधौ अव्याप्तेरिति भावः । ननु यद्व्यभिचारेणेत्यादिना त्वदुक्तस्य व्यभिचारोन्नायकत्वगर्भलक्षणस्य ज्ञानं नानुमानविरोधीत्यनुयोगस्य तुल्यत्वमत

लक्षणं व्यतिरेकिधर्मत्वम् । पक्षेतरोऽपि क्व चि-
दुपाधिः । तत्तदुपाधेस्तु तत्तत्साध्यव्यापकत्वे सति
तत्तत्साधनाव्यापकत्वम् । न च धूमवह्निसम्बन्धो-
पाधिः पक्षेतरत्वं स्यादिति वाच्यम् । आपाद्याप्रसि-
द्धेरिति । तन्न । अनुमितिप्रतिबन्धकज्ञानविषयतावच्छे-
दकमुपाधित्वमिह निरूप्यं तच्च न व्यतिरेकित्वमतिप्रस-
ङ्गात् विशेषलक्षणे वह्निधूमसम्बन्धे पक्षेतरत्वस्योपाधि-

---

नेतरोऽपीत्यादि स्वयमूहनीयमिति कृतं पल्लवितेन । आपाद्या-
प्रसिद्धेः । आपाद्यस्य वन्हिव्यापकत्वे सति धूमाव्यापकत्वस्या-
प्रसिद्धेः । अनुमितीति । अस्मदुक्तं व्यभिचारोन्नायकत्वं तदुन्नयं-
नस्वरूपयोग्यत्वं तद्व्याप्तिपक्षधर्मतारूपं पर्य्यवसितसाध्यव्यापक-
त्वादिकञ्चानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमेवेति भावः ।
ननु सामान्यलक्षणमितरव्यावृत्त्यौपयिकं विशेषलक्षणन्तु दूषक-
तायामुपयुज्यत इत्यत आह विशेषेति । यथाश्रुतेऽवच्छिन्नसाध्य-
व्यापकोपाध्यव्याप्त्या यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वमेव व-
क्तव्यं तथा च वन्हिना धूमस्य धूमेन वन्हेर्वा साधने पक्षेतरस्य
तद्रूपज्ञानादनुमितिप्रतिबन्धापत्तिरित्यर्थः । व्यवहारौपयिकत्वे च

---

आह अस्मादिति । अनुमिति प्रतिबन्धकत्वं तत्प्रतिकूलत्वं तच्च सा-
क्षात्परम्परया वेत्यन्यदेतत्।दूषकतायां व्यभिचारोन्नायकत्वरूपायाम्।
पर्वतेतरत्वादेः शुद्धसाध्यव्यापकत्वायोगादाह यथाश्रुत इति । ननु
पर्वतो धूमवान् वन्हेरित्यत्र पक्षेतरत्वमुपाधिर्भवत्येव परन्तु कथायां न

तत्रोपाधिव्यवहारापत्तिः पर्य्यवसितेत्याद्यभिधाने चास्मन्नयप्रवेश इति भावः । व्यवहारौपयिकं स्वव्यभिचारेण साध्यव्यभिचारोन्नायकत्वम् । लक्षणन्तु तत्तत्साध्यसमानाधिकरणत्वे सति तत्तत्साधनाव्यापकत्वं साध्यसाधनभेदाद्भिन्नमेव । वस्तुतो व्यभिचारिणः साधनस्यैवानुप्रवेशाच्च नातिप्रसङ्गः । न च रूपेण गुरुत्वे साध्ये पृथिवीत्वाभावादेरुपाधितापत्तिः गुरुत्वव्यभिचारिरूपव्यक्तेस्तद्व्याप्यत्वात् तदव्याप्यरूपव्यक्तेश्च गुरुत्वाव्यभिचारादिति । दूषणतौपयिकन्तु यथासम्भवमननुगतमेवेति मतमिदं परे

---

प्रयुज्यते इत्यत आह धूमेन वन्हेर्वेति।तद्रूपेति।किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वज्ञानादित्यर्थः । प्रतिबन्धापत्तिरिति।तथा चोपाधित्वप्रसङ्गाच्चेतिमूलस्यानुमितिविरोधित्वप्रसङ्गादित्यर्थः । ननु विशेषणलक्षणमपि तत्तद्धेतुसाध्यकोपाधिव्यवहारौपयिकमेव वाच्यं न तु दूषणौपयिकमत आह व्यवहारेति । तत्र धूमादिना वन्ह्यादेः साधने उपाधित्वव्यवहारापत्तिः । पक्षेतरत्वस्येत्यनुषज्यते । ननु यद्धर्मावच्छिन्नसाध्यस्य व्यापकत्वं तदवच्छिन्नस्यैव साधनस्याव्यापकत्वं दूषणस्य व्यवहारस्यचौपयिकमुपाधित्वं वाच्यमत आह पर्यवसितेति।पर्य्यवसितेत्यादेरर्थाभिधाने चेत्यर्थः।यत्त्वित्यादिकं परिष्कुर्वतां मतमाह व्यवहारौपयिकमिति । व्यतिरेकिधर्मत्वमात्रग्रहे कथकानामुपाधिव्यवहाराभावादाह स्वेति।व्यभिचारपदे व्यतिरेकपरे । तथा च साधनवति साध्यव्यतिरेकोन्नायकव्यतिरेकप्रतियोगित्वरूपव्यतिरेकिविशेष एव व्यतिरेकिपदस्य तात्पर्य्यमिति भावः । लक्षणमितरभेदकम्।साध्यव्यापकत्वं शाकपाकजत्वादावसम्भवीति तद्दलम्परिष्कृत्याह तत्त साध्यासामानाधिकरणत्व इति । द्रव्यं रूपादित्यादौ घटत्वादेर्वारणायाह वस्तुत इति । वस्तुगत्या साध्यव्यभिचारि यत् साधनं तस्य तद्व्यक्तित्वेन निवेशादित्यर्थः । तद्व्याप्यत्वात् पृथिवीत्वाभावव्याप्यत्वात् । तथा च तद्व्यक्त्यव्यापकत्वं न पृथिवीभावस्येत्यर्थः । अननुगतमेवेति । क्व चित् शुद्ध-

परिष्कुर्वन्ति। तन्न साधीयः। तथा हि, साध्यसाधनव्यक्तिस्व-रूपगर्भं नोपाधित्वमपि तु साध्यतावच्छेदकसाधनतावच्छेदकधर्म-गर्भं तत्तद्गुणत्वेन सकलगुणव्यक्तिषु सोपाधेरपि द्रव्यत्वस्य गु-णत्वेन सकलगुणेष्वेव निरुपाधित्वात्। गुणत्वेन गुणे साध्ये स-त्तात्वेन रूपेण सोपाधेरपि सत्ताया गुणकर्मान्यत्वविशिष्टसत्तात्वेन निरुपाधित्वात्। तथा च तद्रूपावच्छिन्ने साध्ये तद्रूपावच्छिन्ने साधने च क उपाधिरित्यत्र तद्रूपावच्छिन्नसाध्यसमानाधिकरणत्वे सति तद्रूपावच्छिन्नसाधनाव्यापकत्वमनुगतं लक्षणं वाच्यं न तु त-द्रूपावच्छिन्नतत्तत्साधनव्यक्त्यव्यापकत्वमनुगमात्। तथा च गुरु-त्वत्वावच्छिन्नसमानाधिकरणस्य रूपत्वावच्छिन्नाव्यापकस्य पृथि-वीत्वाभावादेरुपाधित्वं दुर्वारं व्यभिचारित्वेन साधनविशेषणन्तूप-

---

साध्यव्यापकत्वे सति साधनाव्यापकत्वं क चिद्धर्मावच्छिन्नसाध्यव्या-पकत्वे सत्यवच्छेदकीभूततद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थः। साध्यसाधनेति। यद्यपि साध्यव्यक्तिस्वरूपगर्भत्वस्यानुक्तत्वात् ख-ण्डनमभुक्तवान्तप्रायम्। तथापि दृष्टान्तोक्तया तदुक्तम्। गुणव्यक्तिषु साध्यासु सत्ताया हेतोः क उपाधिरित्यस्य किमुपाधीतरभेदकमि-त्यर्थः। ननु साध्यसमानाधिकरणत्वे सति तद्व्यभिचारिसाधनाव्या-पकत्वं वाच्यमतो नाननुगम इत्यत आह व्यभिचारित्वेनेति। तथा च तदुक्तावस्मन्मतप्रवेश इति भावः। अत्रेतरभेदानुमापकानाम-ननुगमस्यादोषत्वान्नेदं युक्तं न वाननुगमेऽपि गुरुत्वसाध्यकरूप-हेतुकोपाधिरितरेभ्यो भिद्यते गुरुत्वसमानाधिकरणत्वे सति तैजस-रूपाव्यापकत्वात् इत्येवं क्रमेणानुगतस्यैव तत्तद्रूपाव्यापकत्वस्य इतरभेदानुमापकत्वसम्भवादित्यस्मद्गुरुचरणाः। साधनव्यापकस्य व्यभिचारोन्नायकत्वासम्भवादाह उपाधिलक्षण इति। दूषकतायां प्रतिपक्षोत्थापकत्वरूपायां विफलत्वमुक्त्वा क्षतिकरत्वमप्याह अव्या-प्तीति। इहो वह्निमान् धूमादित्यादौ वह्निसामग्र्यादावव्याप्तिकर-

त्वप्रसङ्गाच्च।के चित्तु साधनव्यापकोऽप्युपाधिः क्व चि-
द्यत्र पक्षावृत्तिर्हेतुः । यथा करका पृथिवी कठिनसंयो-
गात् इत्यत्रानुष्णाशीतस्पर्शवत्त्वम् । न च तत्र स्वरू-
पासिद्धिरेव दोषः, सर्वत्रोपाधेर्दूषणान्तरसङ्करादित्याहुः ।

---

दर्शितमेवेति सङ्क्षेपः । उपाधिलक्षणे साधनाव्यापकत्वं न विशे-
षणं दूषकतायामनुपयोगात् अव्याप्तिपरत्वाच्चेति । सत्प्रतिपक्षो-
न्नायकत्वेनोपाधेर्दूषकतावादिनामभिप्रायं; प्रकाशयति के चि-
त्त्विति । साध्यतावच्छेदकावच्छिन्नं साध्यञ्च नोपाधिः परं प्रत्यु-
द्भाव्यः साध्याविशिष्टत्वात् पक्षे साधनस्य निश्चयेऽनुमानस्य वै-
यर्थ्यात् अनिश्चये च तस्यायोगात् । सन्दिग्धोपाधित्वेनापि न

---

त्वाच्चेत्यर्थः । नव्यास्तु के चिदित्यादिमूलं स्वरूपासिद्ध्युन्नायक-
तावादिनामेव मतप्रकाशकं न चाऽपिकारविरोधस्तेन शुद्धसाधना-
व्यापकस्य समुन्नायनात्तन्मते पक्षावृत्तित्वे सति पक्षधर्मावच्छिन्नसा-
धनाव्यापकत्वस्यैव उपाधित्वादिति प्राहुः । साध्यस्य रूपान्तरेण उ-
पाधितयोद्भावनादाह साध्यतावच्छेदकेति । तादृशरूपावच्छिन्नसा-
ध्येऽप्युपाधिलक्षणसत्त्वादाह परं प्रत्युद्भाव्य इति। [रूपवान् द्रव्यत्वा-
दित्यादौ पृथिवीत्वाभावादेरिव सर्वत्रासङ्गतौ साध्यस्यापि ता-
न्त्रिकाणामुपाधित्वेनाव्यवहार्य्यत्वात्तदपि नोपाधिपदार्थः । तथा च
सर्वत्र लक्षणे धर्मिणि साध्यान्यत्वस्योपाधितावच्छेदके वा साध्य-
तावच्छेदकान्यत्वस्य विशेषणीयत्वादिति तु परमार्थः ।] साध्यावि-
शिष्टत्वस्य दूषकताबीजमाह पक्ष इति । व्यभिचारानुमानस्येत्यादिः ।
साधनस्य व्यभिचारात्मकस्य।अनुमानवैयर्थ्यादिति । तत्कर्त्तव्यस्य
व्यभिचारनिश्चयस्य प्रागेव सत्त्वादिति भावः ।अनिश्चये चेति। सा-
ध्यस्येत्यनुषज्यते। तस्य अनुमानस्य। अयोगादिति ।पक्षधर्मतानिश्च-

साध्यञ्च नोपाधिः, व्यभिचारसाधने साध्याविशिष्टत्वा-त् अनुमितिमात्रोच्छेदप्रसङ्गाच्च ।

स चायं द्विविधः। निश्चितः सन्दिग्धश्च। साध्यव्यापक-त्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधा-यकत्वेन निश्चितोपाधिः। यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम्। यत्र साधनाव्यापकत्वसन्देहः साध्यव्यापकत्वसंशयो वा तदुभयसन्देहो वा तत्र हेतु-व्यभिचारसंशायकत्वेन सन्दिग्धोपाधिः । यथा मित्रात-नयत्वेन श्यामत्वे साध्ये शाकाद्याहारपरिणतिजत्वम् ।

---

तदुद्भावनमित्याह अनुमितीति । हेतौ साध्यव्यभिचारः सन्दिग्ध-श्चेत् कृतं सन्दिग्धोपाधिना असन्दिग्धश्चेत्कथं तस्य सन्दिग्धोपा-धित्वमिति तु तत्त्वम् ।

हेतुव्यभिचारेति । व्याप्यसंशयस्य व्यापकसंशयहेतु-त्वादिति भावः । न च तत्र मानाभावः, कोटिस्मरणादि-त एव तदुपपत्तेः, क्व चित्तदनुविधानस्यापि व्याप्यतदभाव-योर्व्यापकतदभावसाहचर्य्यस्य गृहीतत्वेन तत्स्मरण एवोपक्षीण-त्वात् तदग्रहे तु तत्संशयाद्व्यापकसंशयस्याप्यभावादिति वाच्यम्।

---

यस्य तद्धेतुत्वादिति भावः।तर्कादिना हेतोः साध्यव्याप्यतानिश्चयस्थले अनुमित्युच्छेदायोगादाह हेताविति । तस्य साध्यव्यभिचारसंशया-जनत्वादिति भावः ॥

इत्युपाधिलक्षणनिरूपणम् ।

---

न च तेनैव हेतुना शाकपाकजत्वमपि साध्यम् । तत्र श्यामत्वस्योपाधित्वादुभयस्यापि साधने अर्थान्तरं श्याम-त्वमात्रे विवादो न तूभयत्र । न चैवं धूमाद्वह्न्यनु-मानेऽपि वह्निसामग्र्युपाधिः स्यात्, तत्र वह्निनैव तत्सा-

———

महानसे हुताशनो न जलह्रदे इति स्मरतां पर्वतादिकमपि पश्यतां धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वात् । अत एवोत्कटकोटिकाद्व्याप्यस्य संशयाद्व्यापकस्याप्यु त्कटकोटिकः संशयः, कारणोत्कर्षेणैव कार्य्योत्कर्षात् । समाने-

———

## अथोपाधिविभागः ।

न चेति । वाच्यमित्यग्रेऽन्वयः । तत्र व्याप्यवत्तासन्देहस्य व्यापकसन्देहहेतुत्वे । तत्स्मरण इति । व्यापकतदभाव-योः स्मरण एव हेतुत्वादित्यर्थः । तदग्रहे । उक्तसाहचर्यस्याग्रहे । महानस इत्यादिना कोटिद्वयस्मरणं पर्वतादिकमित्यादिना च धर्मि-ज्ञानतत्सन्निकर्षयोः सत्त्वमावेदितम् । तस्य व्याप्यवत्तासंशयस्य । तद्धेतुत्वात् व्यापकवत्तासन्देहहेतुत्वात् । निरुक्तान्वयव्यतिरेकयो-र्विवादग्रस्तत्वादाह अत एवेति । कारणेति । तथा च यद्विशेष-योरिति न्यायोऽप्यत्र प्रमाणमिति भावः । इदमप्यापाततः, त-त्कोटिसहचरितधर्मवत्तया गृहीतधर्मिकत्वपर्यवसितस्य तत्को-ट्युत्कटत्वस्य कार्यतानवच्छेदकत्वात् अत एव वदन्तीत्यपि वक्ष्यते । नन्वेवं समानेत्यादिविरोधस्तेन भाष्यकृन्मते पञ्चधा टी-काकृन्मते च त्रिधा संशयस्य विभजनादत आह समानेत्यादि । समानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशे-षापेक्षो विमर्शः संशय इति प्रथमाध्याये सूत्रं तत्र विरुद्धकोट्यो-

मग्र्यापि समं धूमस्यानौपाधिकत्वनिश्चयात् । अत्र तु मित्रातनयत्वव्याप्यश्यामसामग्र्या स्थातव्यमित्यत्र कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावात् । अत एव साध्यसामग्र्या सह हेतोरपि यत्र व्याप्तिग्राहकमस्ति तत्र सामग्री नोपाधिः यत्र तु तन्नास्ति तत्र साप्युपाधि-

———

त्यादि सूत्रन्तूपलक्षणपरं तत्रस्थश्चकारो वा अनुक्तसमुच्चयार्थ इति वदन्ति । कोटिद्वयसहचरितधर्म्मवत्तया धर्मिज्ञानं हेतुः, धर्म्मस्य चैकत्वं ज्ञानस्य च निश्चयत्वं नोपयुज्यते, गौरवात् । अवगाहते च लिङ्गसन्देहो लैङ्गिकतदभावसहचरितौ लिङ्गतदभावौ धर्मिणि । तथा च साधारणधर्म एव तस्यान्तर्भाव इति तु नव्याः । लिङ्गतदभावयोः प्रत्येकमेकैककोटिसाधारण्येऽपि मिलितयोरसा-

———

रेव विमर्शः संशय इति लक्षणं स च समानधर्मस्य उपपत्तितोऽनेकधर्मस्योपपत्तितो विप्रतिपत्तेः प्रमात्वसन्देहपर्य्यवसन्नोपलब्ध्यव्यवस्थातो भ्रमत्वसंशयपर्य्यवसितानुपलब्ध्यव्यवस्थातश्च यो विशेषः कोट्युपस्थितिः तदपेक्षतया पञ्चविध इति भाष्यकृतः।पूर्वत्रिकमन्तर्भाव्य संशयस्त्रिविध एव विशेषणस्योपलब्धिर्बाधानुपलब्धिर्विशेषदर्शनरूपव्यवस्थाविरहश्च विशिष्टधीसामान्यहेतुतया संशयस्थलेऽप्यपेक्षणीय इत्येतावन्मात्रबोधनाय उपलब्ध्यादित्रिकस्योपादानमिति तु टीकाकृदादिस्वरससिद्धः संशयसूत्रस्यार्थः । तत्रस्थः समानेत्यादिसूत्रस्थः।सप्तम्याः प्रायेणकृतीत्यलुकि रूपमिदम्।कोटिद्वयेति । तत्सहचरितधर्मवत्ताज्ञानत्वतदभावसहचरितधर्मवत्ताज्ञानत्वाभ्यामेव तत्संशयत्वावच्छिन्नं प्रति हेतुत्वमित्यर्थः।गौरवादिति।तत्तदभावसहचरितैकधर्मवत्तानिश्चयत्वेनापि हेतुतायां तत्तदभावसह-

धारणत्वं सत्प्रतिपक्षस्थले विरुद्धयोरिव हेत्वोरिति टीकाकारानुया-
यिनः । इत्थञ्च साधनाव्यापकत्वसन्देहे साध्यव्यापकव्यभिचार-
सन्देहात् साध्यव्यभिचारसन्देहो हेतौ स्फुट एव साध्यव्यापकत्व-
सन्देहे तु साधनाव्यापकव्याप्यत्वसन्देहात्साध्ये साधनाव्यापक-
कत्वसन्देहो बोध्यः । उपाधेः साध्यव्यापकत्वसन्देहेना-
हितात्साधने साध्यव्यापकव्यभिचारसन्देहात्साध्यव्यभिचारसन्दे-
हः । इत्थमेव च दलद्वये संशयस्थले व्यभिचारसंशयस्यो-

---

चरितत्वयोर्विशेषणविशेष्यभावभेदेन हेतुताद्वयस्यावश्यकत्त्वादिति भावः । लैङ्गिकम्।साध्यम्।लिङ्गतदभावाविति।साध्यसहचरितं लिङ्गं तदभावसहचरितञ्च लिङ्गाभावमित्यर्थः । साधारणेति । साधारण-धर्मवत्ताज्ञान एवेत्यर्थः । सर्वत्र व्याप्यवत्तासंशयस्य व्यापकसहच-रितत्वेन लिङ्गाभावावगाहित्वेऽपि व्यापकाभावसहचरितत्वेन तदभा-वावगाहित्वे प्रमाणाभावात्तदानीं च व्यापकसंशयस्यानुभाविकत्त्वान्नेदं युक्तमित्यस्वरसो नव्या इत्युक्त्या व्यञ्जितः । असाधारण्यं प्रत्येककोटिमद्व्यावृत्तत्वम्।टीकाकारेति।तैः साध्यतदभावव्याप्यवत्तानिश्चययोः साध्यसंशये साधनत्वोपगमादिति भावः।व्याप्यवत्तासंशयेन व्याप्य-तदभावयोर्मिलितत्वेनाग्रहणान्नेदं युक्तमिति ध्येयम्।इत्थं चेति।व्या-प्यसंशयस्य व्यापकसंशयहेतुत्वे चेत्यर्थः । स्फुट एवेति। साध्यव्या-पकव्यभिचारस्य साध्यव्यभिचारव्याप्यत्वादिति भावः । साध्य इति । साधनाव्यापकव्याप्यत्त्वस्य साधनाव्यापकत्वव्याप्यत्वादिति भावः । मिश्रमतमाह उपाधेरिति । भूतले घटस्य निश्चयेऽपि घटो नीलो न वेति संशयोत्तरं भूतलं नीलघटवन्न वेत्याकारकसंशयवत् सा-धनस्योपाधिव्यभिचारित्वनिश्चयेऽप्युपाधिः साध्यव्यापको न वेति संशयोत्तरं हेतुः साध्यव्यापकोपाधिव्यभिचारी न वेत्याकारसंशय-स्य औचित्यावर्जितत्वादिति भावः । इत्थमेवेति । उपाधेःसाधनाव्या-पकत्वसन्देहेनाहितात् साधनाव्यापकव्याप्यत्वसन्देहादेव तत्र साध्ये साधनाव्यापकत्वसन्देहस्य उपेयत्त्वादिति भावः । संशयमा-त्रस्याभावकोटौ विशिष्टवैशिष्ट्यावगाहित्वनियमाङ्गीकारेऽस्या संशय

रित्यभिसन्धाय सामग्री च क्व चिन्नोपाधिर्न तु सर्वत्र इत्युक्तम् । यथा तुल्ययोगक्षेमयोरुपाधेर्व्यापकतासन्देहे ईश्वरानुमाने शरीरजन्यत्वाणुत्वादिः यथा च शाकपाकजत्वस्य साध्यव्यापकतासन्देहे मित्रातनयत्वे । यत्तु उपाधिसन्देहो नोपाधिर्न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोगइति । तन्न । सान्दिग्धानैका-

---

न्तिसम्भव इत्यपि वदन्ति । उभयेति । एकांशेऽपरस्य एकविशिष्टापरसाध्यतायान्तु एकैकस्योपाधित्वमिति तु तत्त्वम् । ईश्वरेति । वस्तुतः सद्धेतावपि तत्त्वाग्रहदशायामुपाधिसन्देहे- न व्यभिचारसन्देह इति भावः । सन्दिग्धेति । न चानैकान्तिकत्वसन्देहः प्रतिबन्धको न तु तज्ज्ञानमिति तदर्थं तदुद्भावनमफलमिति वाच्यम् । अनैकान्तिकत्वसंशयात् मम व्याप्तिग्रहो

---

एवासिद्ध इत्याशयेनाह वदन्तीति। अर्थान्तरस्य पुरुषदोषत्वादनुमानदोषमाह एकांश इति। स श्यामत्ववान् शाकपाकजत्ववांश्च मित्रातनयत्वादित्यनुमाने श्यामत्वांशे शाकपाकजत्वस्य तदंशे च श्यामत्वस्योपाधित्वमित्यर्थः । ननु सः श्यामत्वविशिष्टशाकपाकजत्ववान् मित्रानयत्वादित्यनुमानस्यैकमात्रसाध्यकत्वान्न तत्रैकांशेऽपरस्योपाधित्वसम्भव इत्यत आह एकविशिष्टेति।एकैकस्येति । श्यामत्वस्य शाकपाकजत्वस्य वेत्यर्थः।ननु क्षितिः सकर्तृका कार्य्यत्वादिति ईश्वरानुमानस्य सद्धेतुत्वात् कथं सन्दिग्धोपाधित्वमत आह वस्तुतः सद्धेतावपीति । वस्तुगत्या सद्धेतावपीत्यर्थः । तत्त्वस्य सद्धेतुत्वस्य। अग्रहदशायाम् । तदर्थमिति।अनैकान्तिकत्वसन्देहस्य ज्ञानार्थमित्यर्थः । तस्य अनैकान्तिकत्वसन्देहस्य। उद्भावनमफलमदोषः । मा-

न्तिकवद्व्यभिचारसंशयाधायकत्वेन दूषणत्वादुपाधेरिव व्यभिचारनिश्चयाधायकतया ।

———

मा भूदित्यभिप्रायेण प्राचां हेतुदोषत्वेनासाधकतासाधकतया जिज्ञासादिद्वारा परम्परया सन्देहोपयोगित्वेन च तदुद्भावनस्य साम्प्रदायिकत्वात् ॥

———

भूदिति नास्तीत्यर्थकम्।अभिप्रायेणेति।तदुद्भावनस्य सांप्रदायिकत्वादित्यग्रेऽन्वयः । ननु व्याप्यग्रहज्ञानस्याप्यफलत्वान्नेदं युक्तमत आह प्राचामिति।असाधकतासाधकतया हेतुदोषत्वेनेत्यन्वयः।अथानुमित्यौपयिकधर्मशून्यत्वमसाधकत्वं तत्साधकत्वं च न साध्यव्यभिचारतया सन्दिह्यमानत्वं सद्धेतावपि तत्सत्वात् अत आह जिज्ञासादिद्वारेवेति। अयं हेतुः सन्दिग्धव्यभिचार इत्युद्भावनोत्तरं कुत इति जिज्ञासायां व्यभिचारस्य साधारणधर्मादिकं प्रदर्श्य व्यभिचारसंशयस्य कल्पनादिति भावः । वस्तुतो दृष्टान्तस्य साधनवैकल्यमिव हेत्वाभासभिन्नमपि सन्दिग्धानैकान्तिकत्वं निग्रहस्थानत्वादेवोद्भाव्यते निग्रहसूत्रस्थचकारेण तस्यापि समुच्चितत्वादिति युक्तमुत्पश्यामः। अयं हेतुर्व्यभिचारी न वा सोपाधिर्न वेत्येवमेव सन्दिग्धानैकान्तिकत्वादेरुद्भावनं कार्य्यमयं हेतुर्व्यभिचारीत्यादिकमिव निश्चितव्यभिचारादेः इति तु परमार्थः ॥

इत्युपाधिविभागः ।

———

इदानीमुपाधेर्दूषकताबीजं निरूप्यते ।

नाप्यस्य व्यतिरेकद्वारा सत्प्रतिपक्षत्वेन दूषकत्वम्, तदा हि सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवदुपाधेरुद्भावनं न स्यात् । न च प्रतिपक्षबाहुल्येनाधिकबलार्थमुद्भावनम्, शतमप्यन्धानां न पश्यतीति न्यायात् एकेनापि बहूनां प्रतिबन्धाच्च । व्याप्तिपक्षधर्मतेति बलं तच्च तुल्यमत्र न तु भूयस्त्वमपि, एकस्मादनुमितिदर्शनात् सन्दिग्धोपाधेरदूषकतापाताच्च । तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात् । अपि चैवं बाधोन्नीतपक्षेतरस्योपाधित्वं न

---

उपाधित्वस्य संशये निश्चये च जायमानं यज्ज्ञानमनुमितिं विरुणद्धि तदेवास्य दूषकताबीजमित्यभिप्रायेणाह सन्दिग्धेति । तद्व्यतिरेकस्य क्वचिद्व्याप्यत्वेन क्वचिच्च पक्षधर्मत्वेन सन्दिग्धत्वात् बाधोन्नीतेति । ननु बाधेऽवतीर्णे तत एव हेतोरसाधकत्वात् कृतमुपाधिना, न वासाधारण्यं पक्षस्यैव सपक्षत्वात्, अनवतीर्णे तु

---

अथोपाधिदूषकताबीजचिन्तनम् ।

ननु सत्प्रतिपक्षोन्नायकतयोपाधेर्दूषकत्ववादिनां मते सन्दिग्धोपाधेरदूषकतायामिष्टापत्तिरत आह उपाधित्वस्येति । अनुमितिं पक्षे साध्यस्य हेतौ च साध्यव्याप्यत्वस्यावगाहिनीम् । लिङ्गोपधानमतेन चेदम् । अस्य उपाधेः । न्यूनतापरिहाराय मध्ये पूरयति क्व चिद्व्याप्यत्वेनेति।यत्रोपाधेः साध्यव्यापकत्वसन्देहस्तत्र तदभावस्यापि साध्याभावव्याप्यत्वेन सन्दिग्धत्वादिति

स्यात्, व्यतिरेकेऽसाधारण्यात् । पक्षधर्मश्चोपाधिर्न स्यात् । यथा घटोऽनित्यो द्रव्यत्वादित्यत्र कार्य्यत्वं अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वं तद्व्यतिरेकस्य पक्षावृत्तित्वात् । न च नायमुपाधिः, तल्लक्षणसत्त्वात् । अन्यथा दूषकत्वसम्भवाच्च । किञ्च

———

नोपाधित्वं पक्षेतरान्तरवत् साध्यव्यापकताया एवाग्रहात्, अनुकूलतर्कादिना कथञ्चित्तद्ग्रहे च नासाधारण्यं व्यतिरेकितयान्वयव्याप्त्यग्रहस्य सत्प्रतिपक्षरूपतया च सत्प्रतिपक्षान्तरस्याकिञ्चित्करत्वादित्यरुचेराह पक्षधर्मश्चेति । पक्षे तद्ग्रहदशायां तदभावग्रहासम्भवादिति भावः । व्याप्तिविरहरूपतां निरस्य व्याप्तिज्ञा-

———

भावः । तत एव बाधावतारादेव । कृतमिति।तथा च तदानीमुपाधेर्दूषकत्वेऽपि न क्षतिरिति भावः । वस्तुगतिमनुरुद्ध्याह न वेति । असाधारण्यं पक्षमात्रवृत्तित्वम् । अनवतीर्णे तु बाध इत्यनुषज्यते । पक्षेतरान्तं पर्वतेतरत्वादि । ग्रह इति । साध्यव्यापकताया इत्यनुषज्यते । नासाधारण्यं क्षतिकरमिति शेषः।ननु पक्षेतरत्वाद्यभावस्य पक्षमात्रवृत्तित्वेन तत्र साध्याभावान्वयव्याप्त्यग्रहादुपाधित्वक्षतिरेवेत्यत आह व्यतिरेकितयेति । साध्यव्यापकीभूतस्वव्यतिरेकत्वतया दूषकतायामिति शेषः । अनुकूलेति । उपाध्यभावे साध्याभावान्वयव्याप्त्यग्रहस्याकिञ्चित्करत्वादित्यन्वयः । नन्वेवं साध्यस्येव तदभावस्यापि व्यापकत्वं पक्षेतरस्य ग्राह्यं सहचारादेस्तुल्यत्वात् तथा च साध्यस्येव तदभावस्यापि प्रतिपक्षोन्नायकत्वं तस्य दुर्वारमत आह सत्प्रतिपक्षरूपतया चेति।पक्षवृत्तेरपि तदवृत्तित्वभ्रमदशायां प्रतिपक्षोन्नायकत्वसम्भवादाह पक्ष इति । तद्ग्रहदशायां व्याप्यत्वासिद्धत्वं यदि व्याप्तिविरहत्वं तदा पूर्वमताभेद इत्याशङ्कां निरस्यन्नवतारयति व्याप्तिविरहेति । अनौ-

साध्यव्याप्यव्यापकत्वेनोपाधेः साध्याव्यापकत्वे तद्व्य-
तिरेकेण कथं सत्प्रतिपक्षः, न ह्यव्यापकव्यतिरेकादव्या-
प्यव्यतिरेकः। नापि व्याप्तिविरहरूपतया, असिद्धत्वेना-
नौपाधिकत्वस्य व्याप्तित्वनिरासात्।नाप्यनौपाधिकत्वज्ञा-
नस्य व्याप्तिधीहेतुत्वस्य तत्त्वेन व्याप्तिज्ञानकारणविघट-
कतया व्याप्यत्वासिद्धावन्तर्भावः। न ह्यन्यस्य साध्य-
व्यापकत्वसाधनाव्यापकत्वज्ञानमन्यव्याप्तिज्ञानं प्रति प्र-

———

नाभावद्वारकतां निरस्यति नापीति। अनौपाधिकत्वज्ञानस्य
औपाधिकत्वज्ञानाभावस्य। कारणविघटकतया कारणाभावरू-
पतादृशज्ञानविषयतया। अनौपाधिकत्वज्ञानस्य कारणत्वं नान्व-
यव्यतिरेकसिद्धम् परन्तु सोपाधित्वज्ञानस्य प्रतिबन्धकताया विना
कारणीभूतज्ञानविघटनमसम्भवित्वेन कल्पनीयं सैव त्वसिद्धेति दू-

———

पाधिकत्वज्ञानस्येति मूलं यद्यनौपाधिकत्वज्ञानगोचरपरं तदानी-
मग्रिममूलस्य तन्नास्कन्दकत्वेनासङ्गतिरतो व्याचष्टे अनौपा-
धिकत्वज्ञानस्येति। अत्र च सर्वत्र यथा मूलं सोपाधिकत्वपद-
मुपाधिपरं विनयादिभ्यष्ठगिति स्वार्थे तद्विधानात् तथा सत्येव न
ह्यन्यस्येत्यादिमूलस्य विभिन्नधर्मितापरत्वे प्राप्ते व्याप्तिज्ञाने कारण-
स्य औपाधिकत्वज्ञानाभावस्य विघटकत्वं प्रतिबन्धकधीविषय-
त्वमप्रसिद्धं तादृशज्ञानाभावस्य नित्यत्वेनाप्रतिबद्ध्यत्वादतो व्या-
चष्टे कारणाभावेति।उपाधिज्ञानाभावात्मकं यद्व्याप्तिग्रहकारणं तद-
भावरूपौपाधिकत्वज्ञानविषयतयेत्यर्थः। अनौपाधिकत्वज्ञानस्येति
मूलस्यानौपाधिकत्वज्ञानार्थकत्ववादिनां मत आह अनौपाधि-
कत्वेत्यादिना।सोपाधित्वज्ञानस्येति। उपाधित्वज्ञानस्येति तदुक्तः
पाठः। तथासत्येव भिन्नधर्मिकतामित्यग्रिमग्रन्थसङ्गतेरिति ध्ये-

तिबन्धकमित्युक्तम् । न च साध्यव्यापकाव्याप्यत्वज्ञाने विद्यमाने साधनस्य साध्यव्यापकज्ञानं नोत्पत्तुमर्हतीति वाच्यम् । न हि साध्यव्यापकव्याप्यत्वज्ञानं व्याप्तिज्ञानकारणं येन तत्प्रतिबन्धकं स्यात् । किन्तु साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वज्ञानद्वारा । नापि व्यभिचारोन्नायकत्वेन, यथा हि साध्यव्यापकव्यभिचारितया साधनस्य साध्यव्यभिचारित्वमनुमेयं तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेरप्यनुमेयं व्याप्तिग्राहकसाम्यात् । नापि

---

षणतात्पर्याद्यथाश्रुतमेव साधीय इत्यपि वदन्ति । व्याप्यत्वासिद्धेर्व्याप्यत्वाज्ञानेऽन्तर्भावस्तद्द्वारा दूषकत्वं भिन्नधर्मिकत्वं परिहरन्नाह न चेति । न हीति । विरोधिविषयकत्वाभावेन साक्षात्प्रतिबन्धकत्वासम्भवादिति भावः । साध्यव्याप्यव्यभिचारित्वेन साध्य-

---

यम् । सैव सोपाधित्वज्ञानस्य प्रतिबन्धकतैव । तात्पर्यादित्ति । न हीत्यादिग्रन्थस्येत्यादिः । यथाश्रुतमेव कारणविघटकपदं साधीयः व्याप्तिविरहरूपायामसिद्धावन्तर्भावस्यासम्भवाद्व्याचष्टे व्याप्यत्वासिद्धेरिति । व्याप्यत्वाज्ञानेऽन्तर्भावो यदि निविष्टस्तदोपाधेस्तदसम्भावि प्रकृताननुयोगश्चेति अतः फलितार्थमाह तद्द्वारेति । भिन्नधर्मिकत्वमिति । अन्यस्येत्यादिमूलेन तस्याप्राप्तत्वादिति भावः । ननु साध्यव्याप्यत्वबुद्धेः कारणविघटकमपि साध्यव्यापकव्याप्यत्वज्ञानं साक्षादेव तत्प्रतिबन्धकं भवत्वत आह विरोधीति । साध्यव्याप्यस्य व्यभिचारित्वं साध्येऽपि

साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया, साध्यव्याप्याव्यापकत्वेनोपाधेरेव साध्याव्यापकत्वसाधनात् । तस्मादुपाधिर्हेत्वाभासान्तरमिति ।

उच्यते । आर्द्रेन्धनवत्त्वादेस्तर्कादिना साध्यव्यापकत्वसाधनाव्यापकत्वे निश्चिते दूषकताबीजचिन्तनम् । यदि हि साध्यसाधनसहचारदर्शनेनोपाधौ साध्यव्यापकत्वनिश्चय एव नास्ति, तदोपाधित्वनिश्चयाभावात् दूषकतैव नास्तीति क्व बहिर्भावान्तर्भावचिन्ता । किञ्च सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया स्वातन्त्र्येण वा यदि दोषत्वं सर्वथा साध्यव्यापकतानिश्चयो वाच्यः । तेन विना ते-

व्यभिचारित्वमित्युभयत्रैव बहुव्रीहिः । तस्मादित्यादेरदूषणं वेति शेषः ॥

दूषकताबीजचिन्तनमिति निश्चयदशायामधिकृत्य । पक्षनिश्चयद्वारोपाधित्वनिश्चयस्य दूषकत्वं तत्संशयद्वारा तत्संशयस्यापि

न च तत्र साध्यव्यभिचारित्वं न वोपाधेः साध्यव्यभिचारित्वज्ञानं साध्यव्यापकत्वधीपरिपन्थीत्यत आह साध्यव्याप्येति । तथा च स्वव्यभिचारिसाध्यव्यापकत्वेन स्वव्यभिचारिसाध्यकत्वमनुमेयमित्येव मूलार्थः । तत्राव्यापकस्यापि व्यभिचारपदार्थत्वात्तत्पुरुषेऽपि न क्षतिरिति वदन्ति । उपाधेर्हेत्वभावत्वाविरहाद्धेत्वाभासविशेषद्वयं सम्भवतीत्यत आह तस्मादित्यादेरिति ।

साध्याव्यापकत्वसंशयदशायामप्युपाधेः साध्यव्यभिचारसंशायकत्वं दूषकताबीजमतो व्यापकत्वेन निश्चित इति मूलस्यासङ्गतेराह नि-

षामभावात् । तस्मादुपाधिनिश्चयाद्व्यभिचारनिश्चयः तत्संशयात्तत्संशय इति व्यभिचारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वोपाधेर्दूषकत्वम् ।

---

तथात्वमिति भावः । व्यभिचारज्ञानद्वारेति । मानसे व्यभिचारनिश्चये उपाधिज्ञानं विशेषदर्शनरूपत्वेनोपयुज्यते, व्यभिचारानुमानं पुनरग्रे वक्ष्यति । व्याप्तीति । साध्यसम्बन्धितावच्छेदकरूपविरहः साधनतावच्छेदके साध्यसम्बन्धितानवच्छेदकरूपत्वपर्य्यवसन्नः साध्यवदन्यावृत्तित्वविशिष्टसाध्यवदवृत्तित्वविरहो वोन्नेयः, न तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगिसाध्यकत्वम् ।

---

अयमिति।तत्संशयस्य उपाधित्वसंशयस्य।व्यभिचारज्ञानद्वारेत्यस्य व्यभिचारानुमितिद्वारेत्यर्थे यद्वेत्याद्यग्रिममूलेन पौनरुक्त्यापत्तेराह मानस इति। विशेषदर्शनतया अव्यभिचारधीनिवर्त्तकतया । स्वव्यापकसाध्यसामानाधिकरण्यरूपाया व्याप्तेर्विरहो यदि साध्यते तदा स्वपदस्य प्रकृतहेतुपरत्वे साध्याप्रसिद्धिः हेत्वन्तरपरत्वे च प्रकृतहेतौ तादृशाभावग्रहस्य व्याप्तिग्रहाविरोधित्वादसङ्गतिरत आह साध्यसम्बन्धितेति। सत्तादौ द्रव्यत्वादिसम्बन्धितावच्छेदकस्य विशिष्टसत्तात्वादेः सत्त्वादाह साधनतावच्छेदक इति। साध्यसम्बन्धितायाः अवच्छेदकत्वं यदि स्वरूपसम्बन्धविशेषस्तदेदम्, यदि च साध्यसम्बन्धित्वाभावव्यापकत्वावच्छिन्नसम्बन्धित्वाभावकधर्मत्वं तदा स्वपदस्य प्रकृतसाधनतावच्छेदकपरत्वे पूर्ववत्तद्विरहसाधने अप्रसिद्धिरत आह साध्यवदन्येति । अत्रापि साधनतावच्छेदके साध्यवदन्यवृत्त्यधिकरणतावच्छेदकत्वस्य विरहे तात्पर्य्यम्, यथाश्रुतस्य द्रव्यं विशिष्टसत्त्वादित्यादिसद्धेतुसाधारणत्वादेतद्रूपं रूपत्वादित्यादौ हेतुताघटकसमवायेन साध्यवदन्यावृत्तित्वे सति साध्यवदवृत्तित्वरूपाया व्याप्तेरसिद्धत्वेन तदभावस्य साधयितुमशक्य-

यद्वा साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारि-

---

त्वत्वस्यानुगतस्याभावेन तत्तत्साधनत्वपर्य्यवसाने साध्यप्र-
सिद्धिमात्रेणैव कृतार्थत्वात् । साध्यव्यापकोपाधिव्यभिचारि-
त्वेन हेतौ साध्यव्यभिचारित्वं साधनाव्यापकोपाधिव्याप्यत्वेन
साध्ये साधनाव्यापकत्वमनुमेयमिति तु नव्याः । व्यतिरेकि-
णि साधने व्याप्तिविरहस्य व्यभिचारस्य चोन्नयने उपाधिः सा-
धनाभाववद्वृत्तित्वम् । व्यभिचारास्फुटतादशायामुपाध्यनुसरणा-
द्यत्राधिकरणे हेतोः साध्यव्यभिचारित्वं तदीयधर्मे नास्य साध्या-

---

त्वादिति ध्येयम् । साध्यकत्वमिति । उन्नेयमिति लिङ्गव्यत्ययेन पूर्व-
मनुषज्यते । तत्तदिति।यत्र साधने निरुक्तसाध्याव्याप्यत्वं साधनीयं
तत्साधनपर्य्यवसान इत्यर्थः । साधनान्तरमन्तर्भाव्य तज्ज्ञानस्य
प्रकृतसाधनव्याप्तिग्रहाविरोधित्वादिति भावः । हेतौ साध्यव्यभि-
चारित्वमिति । उपाध्यभाववद्वृत्तितावच्छेदकत्वेन हेतुतावच्छेदके
साध्याभाववद्वृत्तितावच्छेदकत्वं हेतुमति वा उपाध्यभावेन सा-
ध्याभाववत्त्वमनुमेयमिति तत्फलितार्थः । उपाधिव्याप्यत्वेनेति ।
अत्रापि साध्यतावच्छेदके साधनाव्यापकतावच्छेदकत्वं साधना-
व्यापकोपाधिव्याप्यतावच्छेदकत्वेनानुमेयमित्यत्र तात्पर्यम् । धूमवान्
वाच्यत्वादित्यादौ उपाधिना व्यभिचाराद्युन्नयने साधनाभावस्या-
प्रसिद्ध्या तद्वद्वृत्तित्वस्योपाधित्वासम्भवात् पूर्वं पूरयति व्यतिरे-
किणि साधन इति । साध्यव्यभिचारमात्रस्य साध्यत्वेऽवृत्तिगगना-
दावित्याप्रिममूलासङ्गतेराह व्याप्तिविरहस्येति । उपाध्यव्याप्य-
त्वेन साध्याव्याप्यत्वमात्रस्य साधने संयोगादौ हेतौ साधनव्यापक-
त्वादित्यग्रिममूलासङ्गतिः उपाध्यव्याप्यगगनादौ संयोगाभाववद्वृ-
त्तित्वविरहादत आह व्यभिचारस्य चेति।न चार्द्रेन्धनादिव्यभिचारि-
त्वेन वन्ह्यादौ धूमादिव्यभिचारित्वानुमाने साधनीभूतवन्ह्याद्यभाव-
वद्वृत्तित्वं कथमुपाधिःअयःपिण्डत्वादौ व्यभिचारेण साध्यव्यापक-

त्वमुन्नेयम् । न च साधनाभाववद्वृत्तित्वमुपाधिरिति वाच्यम् । उपाधिमात्रोच्छेदप्रसङ्गात् सत्प्रतिपक्षे पूर्व्व-साधनव्यतिरेकवत् अवृत्तिगगनादौ साध्याव्यापकत्वात् संयोगादौ हेतौ साधनव्यापकत्वाच्च ।

---

व्यापकत्वग्रहः । उपाधिमात्रेति । तेनापि व्यभिचारानुमाने तत्रापि तथाविधोपाधिसम्भवादिति भावः । वस्तुतस्तु व्यापकव्यभिचारिणो व्याप्याव्यभिचारित्वे व्याप्यव्यापकभावव्याघातापत्त्या हेतोः साध्यव्याप्यत्वेन साधनाभाववद्वृत्तित्वस्य साध्यव्यापकत्वान्नोपाधित्वमिति तत्त्वम् । अवृत्तीति व्याप्यत्वाभावसाधनाभिप्रायेण । साधनाव्याप्यत्वस्योपाधित्वे च नैष दोषः । साधनेति यथाश्रुताभिप्रायेण । प्रतियोगिव्यधिकरणसाधनाभाववद्वृत्तित्वस्य साधनवदन्यवृत्तित्वस्य चोक्तौ तथात्वासम्भवात् । एवञ्च सत्प्रतिपक्षे निश्चितोपाधिवत्सन्दिग्धोपाधिरुद्धाव्यः । न च तत्कर्त्तव्य-

---

त्वाग्रहादत आह व्यभिचारास्फुटतेति । अस्य साधनाभाववद्वृत्तित्वस्य । तेनापीति । साधनाभाववद्वृत्तित्वेनापि स्वव्यभिचारादिना साध्यव्यभिचारादेर्व्यभिचाराद्युन्नयने साधनव्यभिचारव्यभिचारादेरुपाधित्वसम्भवादित्यर्थः । ननु यत्र निरुपाधिना व्यभिचाराद्युन्नयनस्थले नोपाध्यन्तरकरणं तत्रैव नोपाधिमात्रस्योच्छेद इत्यत आह वस्तुतस्त्विति । हेतोः साध्यव्याप्यत्वेनेति । उपाधिव्यभिचारित्वादिरूपस्य हेतोः साध्याव्यभिचारित्वादिरूपसाध्यव्याप्यत्वनिश्चयेनेत्यर्थः । व्यभिचारस्य साध्यत्वेऽवृत्तौ तदसत्त्वान्न तदवच्छेदेन साध्यव्यापकत्वमत आह व्याप्यत्वाभावेति । एष गगनादौ साध्यव्यापकत्वरूपः । लाघवादाह साधनवदन्येति । तथात्वेति । साधनव्यापकत्वसम्भवादित्यर्थः । प्रसङ्गादाह एवं चेति । व्यभिचारबीजा-

स्य व्यभिचारसन्देहस्य प्रतिहेतुसमाजादेव सिद्धेः किं तेनेति वाच्यम् । परस्परप्रतिबन्धेनैवानुमित्यनुत्पादे तत्र व्यभिचारसन्देहस्यावश्यमुत्पत्तौ मानाभावात् । उपाधिसन्देहाद्विशिष्यैकत्र व्यभिचारसन्देहेन तुल्यबलत्वाभावात् । न चाऽतुल्यबलेन सत्प्रतिपक्षो व्यभिचारादिशङ्काधानं वा, स्वरसतः सन्दिग्धव्यभिचारादिनापि तथात्वप्रसङ्गादिति।अत्र च क्व चिदुपाधेस्तुल्यबलत्वे सत्प्रतिपक्षो-

---

रा दूषकत्वे चेत्यर्थः । प्रतिहेतुसमाजादिति। विरोधिपरामर्शयोर्मिथो हेतुद्वये व्यभिचारसंशये हेतुत्वादन्यथा तत्र साध्यद्वयोरनुमित्यापत्तेरिति भावः । प्रतिपक्षस्थले साध्यद्वयोरनुमित्यनुत्पादस्यान्यथैवोपपत्त्या तत्र हेत्वोः व्यभिचारसंशये मानाभाव इत्याशयेनाह परस्परेति । तत्र प्रतिपक्षस्थले उपनीतव्याप्तिनिश्चयेन प्रतिबन्धावत्यपि द्रष्टव्यम् । नन्वेवमुद्भावितोपाधिसन्देहसमुत्थोऽपि व्यभिचारसन्देहो विफलस्तत्कार्य्यस्यानुमित्युत्पादस्य विरोधिपरामर्शाभ्यामेव सम्पादनादत आह उपाधिसन्देहादिति ।एकत्रेति । तथा च तुल्यबलत्वाभावसम्पत्त्यर्थमेव तत्र सन्दिग्धोपाधिरुद्भाव्य इति भावः । ननु तुल्यबलत्वाभावस्यापि निष्फलत्वात् सम्पत्तिरनुचितेत्याह न चेति । सत्प्रतिपक्ष इति। भ्रमत्वज्ञानाद्यनास्कन्दिताभ्यामिव सोपाधित्वग्रहाभावविशिष्टाभ्यामेव विरोधिपरामर्शाभ्यां मिथोऽनुमितिप्रतिबन्धेन सत्प्रतिपक्षो यथातथाविधाभ्यामेव विरोधिपरामर्शाभ्यां हेत्वोर्व्यभिचारशङ्काधानमित्यर्थः। बलरूपस्य सादृश्यस्य वाचित्वादिति भावः। स्वरसतो लौकिकप्रत्यक्षादिना तथात्वेति । प्रतिपक्षादिप्रसङ्गादित्यर्थः । व्यभिचारिव्याप्यद्वयोः ग्राहकत्वेनैव उपाधेर्दूषकताया मणिकृदुक्तत्वान्मूलस्य न्यूनत्वमपाकर्त्तुमाह अत्र चेति। तुल्यबलत्व इति । साध्यव्याप्यवत्तापरामर्शवत्प्रबलतत्समानकालीनसाध्याभावव्याप्यस्वाभाववत्तापरामर्शविषयत्व इत्यर्थः । सत्प्रतिपक्षेति । साध्यवत्तानुमितिविरोधीत्यर्थः । अधिकबलत्व इति । भ्रमत्वज्ञानास्कन्दितसाध्यपरामर्शकालीननिश्चितप्रामाण्यकादिसाध्याभावव्याप्यस्वाभाववत्तापरामर्श-

अथोपाध्याभासाः । असाधारणविपर्ययो यथान्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतरत्वम् । अप्रसिद्धसाध्यविपर्ययो यथा केवलान्वयिनि साध्ये पक्षेतरत्वादिः ।

---

न्नायकतया तर्कादिसाचिव्यादधिकबलत्वे च बाधोन्नायकतयापि दूषकत्वं व्याप्त्यादिप्रतिसन्धाने तदुन्नयनस्य ततोऽनुमितिप्रतिरोधस्य च दुर्व्वारत्वात्, परन्तु सार्व्वत्रिकत्वं न तस्येति ध्येयम्।

असाधारणविपर्य्यय इति । इदं सत्प्रतिपक्षोन्नायकत्वमभिप्रेत्य । यद्यपि व्यतिरेकिणा सत्प्रतिपक्षत्वे सत्प्रतिपक्षे सत्प्रतिपक्षान्तर-

---

विषयत्व इत्यर्थः । व्याप्त्यादीति । उपाध्यभावे साध्याभावव्याप्त्यादिप्रतिसन्धान इत्यर्थः । आदिना पक्षधर्मत्वोपग्रहः । तदुन्नयनस्य बाधोन्नयनस्य । तत इति । उपाध्यभावे साध्याभावव्याप्त्यादिप्रतिसन्धानत इत्यर्थः । अनुमितीति । साध्यस्येत्यादिः । न सार्वत्रिकत्वमिति । उपाधेः पक्षवृत्तित्वनिश्चयस्थले साध्याव्यापकत्वसन्देहस्थले च तदसम्भवादिति भावः ।

इति दूषकताबीजचिन्तनम् ।

---

## अथोपाध्याभासनिरूपणम् ।

---

इदम् । स्वव्यभिचारेण साध्यव्यभिचारोन्नायकतायामुपाधिव्यतिरेकस्य पक्षमात्रवृत्तित्वम् । अत्र धूमवान् वन्हेरित्यादौ साधनवान् साध्याभाववान् तप्तायःपिण्डान्यत्वाभावादित्येवं क्रमेण व्यभिचारोन्नायकस्याप्ययःपिण्डान्यत्वाभावादेरसाधारणविपर्य्ययत्वसम्भवान्नेदं युक्तमिति चिन्त्यम्। व्यतिरेकिणा साध्यव्यापकीभू-

बाधितसाध्यविपर्ययो यथा वह्निरुष्णस्तेजस्त्वादित्यत्राकृतकत्वम्। पक्षाव्यापकविपर्ययो यथा क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्राणुव्यतिरिक्तत्वम्। अत्राणुव्यतिरेकस्य क्षित्यादेरेकदेशवृत्त्या भागासिद्धेः। पूर्वसाधनव्यतिरेको यथा शर्करारसोऽनित्योऽनित्यवृत्तिगुणत्वात्, रसो नित्यो रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात् रसत्ववदित्यादौ।

———

स्यादोषत्वान्नासाधारण्यं दोषाय, तथापि सत्प्रतिपक्षोन्नयनौपयिकसाध्यव्यापकत्वग्राहकप्रमाणाभावे तात्पर्य्यम्। तदयं निष्कर्षः। यत्र यद्दोषोन्नायकतया दूषणत्वमुपाधेस्तत्र तदुन्नयनौपयिकरूपवैकल्यमेवाभासत्वे प्रयोजकम्। एवञ्च यत्र स्थापनायां पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या तत्र पक्षाव्यापकविपर्य्ययस्याभासत्वं तद्विरहेण पक्षैकदेशे सत्प्रतिपक्षेऽप्येकदेशान्तरे

———

तोपाध्यभाववत्त्वेन प्रतिपक्षान्तरस्येति। साध्याभावव्यापकतया गृहीतोपाध्यभाववत्त्वस्येत्यर्थः। अदोषत्वात् तत्त्वेनानुद्भाव्यत्वात्। नन्वेतस्य व्यभिचारोन्नायकतापक्षेऽप्युपाध्याभासतायामविशिष्टत्वात्तदनुक्त्या मूलस्य न्यूनत्वमत आह तदयमिति। पक्षतावच्छेदकसामानाधिकरण्येनेति। पक्षतावच्छेदकरूपेणैकधर्मणीत्यर्थः। पक्षैकदेश इति। पक्षतावच्छेदकाश्रयैकधर्मिणीत्यर्थः। तदेकदेशान्तरे पक्षतावच्छेदकाश्रयीभूतधर्म्यन्तरे। पक्षतावच्छेदकावच्छेदेनेति। पक्षतावच्छेदकस्याश्रये यावतीत्यर्थः। तथात्वं साध्यसिद्धेरुद्देश्यत्वम्। तादृशस्य पक्षाव्यावर्त्तकविपर्य्ययकस्य। विरोधित्वादिति। सर्वमिदं समानधर्मिकस्यैव तदभावव्याप्यवत्तानिश्चयस्य तद्वत्ताबुद्धिं प्रति विरो-

पूर्वसाधनतायाः प्रयोगानुरोधित्वेनाव्यवस्थितत्वात् कदा चिन्नित्यत्वसाधनव्यतिरेकस्योपाधित्वं कदा चिदनित्यत्व-साधनव्यतिरेकित्वस्येति वस्तुव्यवस्था न स्यात्, उपाधेर्नित्यदोषत्वाच्च। न हि यद्येन सोपाधिसम्बद्धं तत्तेनानुपाधित्व-सम्बद्धं सम्भवति। न तु सत्प्रतिपक्षोच्छेदः पूर्वसाधनव्यतिरेकस्यानुपाधित्वे बीजम्। स्थापनाया यत्राभासत्वं तत्र पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात्। न च पूर्वहेतोस्तत एवासाधकत्वात् सत्प्रतिपक्षवैयर्थ्यं तत्रे-

---

साध्यसिद्धेरप्रत्यूहत्वात्। यत्र तु पक्षतावच्छेदकावच्छेदेन तथा तत्र तादृशस्योपाधित्वमेव,एकदेशे प्रतिपक्षस्यापि तादृशसिद्धिविरोधित्वात्। साध्यविपर्य्ययस्यासत्त्वमनुपाधित्वे प्रयोजकं न त्वज्ञातमज्ञातस्यापि, तस्य व्यापकव्यतिरेकेण सिद्धिसम्भवात्। अथ सिद्धसाध्यविपर्य्ययत्वेन चाभासत्वं व्यभिचारोन्नायकतया दूषकत्वपक्षे विनापि साध्यप्रसिद्धिं प्रत्येकपदार्थप्रसिद्ध्यैव घटो नाभिधेय इत्यादिप्रतिज्ञापत्तेः। व्युत्पादयिष्यते च तत्र प्रतिज्ञाविरहः, व्यापकाभावेनाप्रसिद्ध्यैव व्याप्याभावस्य सिद्ध्यभ्युपगमात्। पूर्वसाधनव्यतिरेकत्वन्तु नोपाधित्वेन नाप्यनुपाधित्वेन नियतम्,

---

धित्वमिति प्राचां मते, नव्यमते तु पक्षैकदेशे सत्प्रतिपक्षेऽपीत्यस्य पक्षतावच्छेदकसामानाधिकरण्येन साध्यव्यापकोपाध्यभाववत्त्वनिश्चयेपीत्यर्थः। तदेकदेशान्तर इत्यस्यापि पक्षतावच्छेदकसामानानाधिकरण्येनेत्यर्थः इति ध्येयम्। अप्रसिद्धसाध्यविपर्यय इत्यत्र सा-

ति वाच्यम्। अगृह्यमाणविशेषदशायां सत्प्रतिपक्षसम्भवात्। पूर्वसाधनव्याप्यव्यतिरेको यथा अकर्तृकत्वानुमाने नित्यत्वादिः। पक्षविपक्षान्यतरान्यो यथा प्रसिद्धानुमाने पर्वतजलह्रदान्यतरान्यत्वम्। पक्षेतरसाध्याभावो यथाऽत्रैव पर्वतेतराग्निमत्त्वम्। न चात्र व्यर्थविशेषणत्वं दू-

---

वन्हिना धूमस्य स्थापनायां प्रतिहेतावार्द्रेन्धनाभावे वन्ह्यभावस्योपाधिताया धूमाभावस्य चार्द्रेन्धनाभावेन स्थापनायां प्रतिहेतौ वन्हावार्द्रेन्धनस्यानुपाधितायाश्च प्रसङ्गात्। परन्तु पूर्वसाधनव्यतिरेकस्य प्रतिहेतावुपाधित्वेनोद्भावने सत्प्रतिपक्षमात्रमुच्छिद्येत सर्वत्रैव तत्सम्भवात्। आभासत्वेऽपि स्थापनाया विशेषाग्रहदशायामेव सत्प्रतिपक्षोपन्यासात्। वस्तुतः साध्याव्यापकस्यापि पूर्वसाधनव्यतिरेकस्य तदानीं तत्त्वेनाग्रहादुपन्याससम्भवात्। अ-

---

व्यविपर्य्ययस्याऽप्रसिद्धत्वसमत्वमेव न स्वज्ञातत्वमित्याह साध्येति। तस्य साध्यविपर्य्ययस्य। व्यापकेति। साध्यव्यापकव्यतिरेकेणेत्यर्थः। साध्यव्यावृत्त्युन्नायकव्यावृत्तिप्रतियोगित्वरूपस्य उपाधित्वस्य आभासत्वादेव तस्योपाध्याभासत्वादिति भावः।नोपाधित्वेनेति दृष्टान्तार्थम्, तदनुपाधित्वस्यैव मूलोक्तत्वेन दूष्यत्वादिति ध्येयम्। प्रथमे हेतुमाह वन्हित्वेनेति। उपाधिताया इति। प्रसङ्गादित्यग्रेन्वयः। द्वितीये हेतुमाह धूमाभावस्य चेति। उच्छिद्येत अदूषकं स्यात्। तत्सम्भवादिति। ननु धूमवान् वन्हेरित्यस्य प्रतिहेतौ निर्धूमः आर्द्रेन्धनाभावादित्यत्रैव पूर्वसाधनव्यतिरेकस्य नोपाधित्वेनोद्भाव्यत्वं तत्रायःपिण्डादौ व्यभिचारेणाभावस्य निर्धूमत्वाव्यापकत्वादत आह आभासत्वेपीति। विशेषाग्रहेति। व्यभिचाराग्रहदशा-

षणम् । तत्त्वेप्युपाधेराभासत्वात् । तत्तुल्यश्च यथात्रैव पर्वतेतरेन्धनवत्त्वम् । एवं वन्हिसामग्र्यादिकमूह्यम् ॥

———

तो बलवत्तरानुकूलतर्कं विना पूर्वसाधनव्यतिरेको नोपाधित्वेनो-द्भाव्य इति कथकसमयवशादेवाऽसावुपाधित्वेन नोपन्यस्यत इति । यथा कर्तृत्वेति । कादाचित्कत्वेन सकर्तृकत्वस्थापनायामजन्यत्वे प्रतिहेताविन्यर्थः ॥

———

याभित्यर्थः । वस्तुनः वस्तुगत्या । तत्त्वेन साध्यव्यापकत्वेन । बलव-त्तरेत्यादिकं कथकसमयस्याकारः । समयो निर्बन्धः । असौ पूर्वसा-धनव्यतिरेकः । पूर्वसाधनव्यतिरेकस्योपाधितायां मूलकृता स्थापना-द्यनुक्तेराह कादाचित्कत्वेनेति । इदं सकर्तृकं कादाचित्कत्वादित्यस्य प्रतिहेताविदं सकर्तृकं जन्यत्वादित्येव पूर्वसाधनकादाचित्कत्वस्य व्याप्यं यदनित्यत्वं तद्व्यतिरेकरूपं नित्यत्वादिकं नोपाधिरित्यर्थः ॥

इति श्रीजगदीशतर्कालङ्काररचितायां दीधितिटीका-यामुपाध्याभासनिरूपणं समाप्तम् ।
उपाधिवादः समाप्तः ॥

## चिन्तामणेः पक्षता।

---

व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते।

तत्र न तावत् सन्दिग्धसाध्यधर्मत्वं पक्षत्वम्। सन्देहो हि न विशेषणम्, परामर्शपूर्वं लिङ्गदर्शनव्याप्तिस्मरणादिना तस्य नाशात्। नोपलक्षणम्, अव्यावर्त्तकतापत्तेः।

---

## दीधित्याः पक्षता।

---

अनुमितिलक्षणैककार्य्यानुकूलतासङ्गत्या पक्षधर्मतां निरूपयितुमाह व्याप्तीति। सन्दिग्धेति। यत्र साध्यस्य यादृशसम्बन्धाव

---

## जागदीश्याः पक्षता।

---

अनुमितिलक्षणेति। अनुमितिस्वरूपेत्यर्थः। व्याप्तिज्ञानजन्याया अनुमितेः किमन्यत्कारणमिति जिज्ञासयैव पक्षतानिरूपणादिति भावः। अत्रानुकूलत्वं जनकजनकतावच्छेदकसाधारणप्रयोजकत्वमात्रं तेन व्याप्तेरनुमित्यहेतुत्वेऽपि न क्षतिः। यत्तु जनकतावच्छेदकत्वमेवात्रानुकूलत्वं व्याप्तिवत्पक्षताया अपि करणव्यापारतया सिद्धहेतुभावस्य परामर्शस्य जनकतायामवच्छेदकत्वादिति मतम्। तत्तुच्छम्। पक्षता न कारणमिति तु भ्रम इत्याद्युत्तरग्रन्थविरोधापत्तेः। पक्षधर्मतामिति पक्षे धर्मत्वं यस्या इति व्युत्पत्त्या पक्षतामित्यर्थः। पक्षस्य धर्मत्वं

धर्मविशेषः पक्षत्वमिति वा देवतादिशब्द इव तलः स्वार्थिकत्वात् । व्याप्तीतीति। न च प्रकृतग्रंथस्वरसंवलितस्यैव पाठस्य धर्तुमुचितत्वाद्व्याप्त्येत्येव धारणं युक्तमिति वाच्यम् । अप्रयोजकत्वात् व्याप्तिनिरूपणानन्तरमित्येवं मूलपाठमनुसृत्य वा तथोपन्यासादिति भावः । ननु सन्दिग्धसाध्यधर्मत्वमितिमूलस्य यदि सन्देहविषयीभूतसाध्यवत्त्वमर्थस्तदा विनष्टवन्ह्यादेर्जलादावनुमितिर्न स्यात्तत्र तादृशसाध्याभावेन पक्षताविरहादतः साध्यसंशयस्यैव पक्षतात्वमाह यत्रेत्यादिना । यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्चयत्वेन यत्संशयं प्रति निवर्त्तकत्वं स सन्देहस्तत्पक्षकतद्विधेयकानुमितौ हेतुभूता पक्षतेत्यर्थः । तेन वन्हिधर्मिकघटादिनिर्णयात्मकस्य पर्वतधर्मिकवन्हिमत्त्वनिश्चयस्य निवर्तनीयोपि वन्हौ घटादिसन्देहो न पर्वतपक्षकवन्ह्यनुमितौ पक्षता तत्र वन्हिमत्त्वनिश्चयत्वेनाप्रतिबन्धकत्वादिति भावः ।अत्र पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्तनीयत्वमात्रं बाधनिश्चयेऽतिव्याप्तमतः संशयपदम् । न च बाधनिश्चयस्य पक्षतात्वे न क्षतिः विशिष्टबुद्धिसामान्यं प्रत्येव बाधनिश्चयस्य विरोधित्वादेव तत्रानुमित्यसम्भवादिति वाच्यम् । सन्दिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकादपि परामर्शादनुमित्यापत्तेः तादृशबाधनिश्चयस्य विशिष्टबुद्ध्यप्रतिबन्धकत्वात्। यद्यपि निर्वन्हिः पर्वतो रूपवान्न वेत्यादिसन्देहात्मकस्य बाधनिश्चयस्य पर्वतधर्मिकवन्हिमत्तानिश्चयनिवर्त्यत्वं संशयत्वं चास्तीति वन्हिसाध्यकपक्षतालक्षणस्य तत्रातिव्याप्तिः, पक्षे साध्यसंशयत्वोक्तौ च नानुगमवार्त्तापि। तथापि संशयत्वमत्र तादृशनिश्चयाप्रतिबन्धकत्वं तथा च पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वे सति तादृशनिश्चयप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वं फलितार्थः । तेन गृहीताप्रामाण्यकबाधनिश्चयस्य पक्षधर्मिकसाध्यवत्त्वज्ञाननिवर्त्तकत्वाभावेपि तन्निवर्त्तकतावच्छेदकविषयिताकत्वादेव व्युदासः । यद्यपि चैवमपि वन्हिव्याप्यसाध्यकानुमितौ वन्हिमान्न वेतिसंशयः पक्षता स्यात्, तस्यापि पक्षधर्मिकवन्हिव्याप्यवत्त्वरूपसाध्यनिर्णयनिवर्त्यत्वात् तादृशनिश्चयाप्रतिबन्धकत्वाच्च । न चेष्टापत्तिः, पर्वतो वन्हिमान्न वेतिसंशयोत्तरं पर्वतो वन्हिव्याप्यवानित्येवं साध्यनिर्णयेपि वन्हिव्याप्यसाध्यकानुमित्यापत्तेः । तथापि प्रकृतपक्षविषयिताबहिर्भूतसाध्यविषयिताघटितध-

र्मावच्छिन्नं यत्प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्तानिश्चयनिवर्त्यत्वं त-
न्निवेशितमित्यदोषः। पर्वतो वन्हिमान्न वेतिसंशयस्य च वन्हिव्या-
प्यवत्तानिश्चयनिवर्त्यत्वेपि तादृशनिवर्त्यतायाः पर्वतधर्मिकवन्ह्यभा-
वप्रकारत्वेनैवावच्छेद्यतया वन्हिव्याप्यवत्त्वरूपसाध्यवत्त्वविषयिता-
नवच्छेद्यत्वात्। न च तथापि बहिर्भूतान्तदलं व्यर्थमिति वाच्यम्।
वन्हिव्याप्यवत्सधर्मा पर्वतो वन्हिमान्न वेति संशयस्य तादृशपर्वत-
त्वावच्छिन्नपक्षकवन्हिव्याप्यसाध्यकानुमितौ पक्षतात्वव्युदासक-
त्वात्। वस्तुतस्तु पक्षविषयताबहिर्भूतेत्याद्यपहाय साध्याभावत्वा-
वच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नमेव साध्यनिश्च-
यनिवर्त्यत्वं वाच्यम्। तेन वन्हौ पक्षे वन्हेः साध्यतायां वन्हिर्वान्हि-
मान्न वेतिसंशयस्य पक्षविषयताबहिर्भावेण साध्यविषयत्वाप्रसि-
द्धावपि न तत्राव्याप्तिः। न चैवं ह्रदादौ वन्ह्यभावस्यानुमाने ह्रदो
वन्हिमान्न वेतिसंशयः पक्षता न स्यात् तन्निष्ठायाः साध्यवत्ता-
निश्चयप्रतिबध्यताया वन्हिमत्ताविषयकत्वेनैवावच्छेद्यतया साध्या-
भावत्वावच्छिन्नप्रकारित्वानवच्छेद्यत्वादिति वाच्यम्। इष्टत्वात् ह्र-
दो वन्ह्यभाववान् न वेत्याकारकसंशयस्यैव पक्षतात्वात्। सा-
ध्यपक्षभेदेन पक्षताया नानात्वाद्व्याप्यवत्तासाध्यकपक्षतालक्षण
एव साध्यविषयित्वघटितधर्मावच्छिन्नप्रतिबद्ध्यतायाः प्रवेश्यत्वादि-
ति वदन्ति। [वन्हिव्याप्ये वन्हिव्याप्यस्य साध्यतायां वन्हिव्याप्यो
वन्हिव्याप्यवान्न वेतिसंशयस्य पक्षतात्वहान्यापत्तेः तादृशनिष्ठाया-
स्तादृशपक्षधर्मिकतादृशसाध्यवत्तानिश्चयनिवर्त्यतायाः पक्षीभूतसा-
ध्यविशेष्यकत्वावच्छेद्यत्वादिति ध्येयम्] केचित्तु संशयत्वमत्र
प्रकृतपक्षविषयतानिरूपितप्रकृतसाध्यनिष्ठविषयताकत्वमतो वन्हि-
व्याप्यसाध्यकानुमितौ वन्हिमत्त्वसंशयस्य निर्वन्हित्वसाध्यकानुमि-
तौ महानसीयवन्हिमत्त्वसंशयस्य न पक्षतात्वं तस्य तादृशसाध्यप-
क्षोभयवैशिष्ट्यावगाहित्वाभावात्। एवं च पक्षधार्मिकसाध्यवत्ता-
निश्चयस्यापि तादृशत्वात्तद्वारणाय निवर्त्यान्त्यमित्याहुः। तन्न। साध्यं
पक्षवृत्ति न वा साध्यं पक्षनिष्ठाभावप्रतियोगि न वेत्यादिसन्देह-
स्यापि लक्ष्यतया तत्राव्याप्तत्वात्। तेषां पक्षसाध्योभयवैशिष्ट्यानव-
गाहित्वात्। पर्वतो वन्हिव्याप्यवानित्येवं साध्यनिश्चयानिवर्त्तनी-
यस्य पर्वतो निर्वन्हिर्वन्हिव्याप्यस्तु पर्वतवान्न वेतिसमूहालम्बनस्य

गाहिनिर्णयनिवर्त्यो यः संशयस्तत्र स तादृशसम्बन्धेन साध्यानुमि-
तौ पक्षतेत्यर्थः।तेन न पक्षसाध्यविशेष्यकसंशयाननुगमो न वा स-
म्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम्, न वा तमःप्रभृ-



वन्हिव्याप्यसाध्यकानुमितौ पक्षतात्वप्रसङ्गाच्च तस्यापि वन्हिव्या-
प्यात्मकसाध्यपक्षोभयवैशिष्ट्यावगाहित्वात्। आधेयत्वसम्बन्धाव-
च्छिन्नसाध्यविषयितायाः प्रवेशे तु पक्षः साध्यवान्न वेत्यादिसंशय-
स्यासंग्रहापत्तेरिति दिक्। यत्तु साध्यवत्तानिश्चयनिवर्त्यसंशयत्व-
मित्यत्र संशयत्वं साध्याभावनिश्चयनिवर्त्यत्वरूपं सर्वत्र ग्राह्यमतो
नोक्तदोषाणामवकाश इति। तत्तुच्छम्। पर्वतत्वावच्छेदेन वन्हेः
साध्यतास्थले वन्ह्यभाववत्पर्वतसधर्मा वन्हिमत्पर्वतो द्रव्यं न वेति
संशयस्य पक्षतात्वापत्तेः तादृशसंशयस्य पर्वतत्वावच्छेदेन व-
न्हिनिश्चयस्य तदवच्छेदेन वन्ह्यभावनिश्चयस्यापि प्रतिबद्ध्यत्वा-
दिति दिक्। इदन्तु चिन्त्यते।अन्यथास्तु यथातथापि वन्हिव्याप्यवति
वन्हेः साध्यतास्थले तद्धर्मिकतादृशसाध्यवत्तानिश्चयप्रतिबद्ध्यसं-
शयस्याप्रसिद्ध्या कुत्र लक्षणं नेयं वन्हिव्याप्यवान्वन्हिमान्न वेत्यादि-
संशयस्याहार्यत्वेनाप्रतिबध्यत्वादिति। ननु पक्षधर्मिकसाध्यसंशय-
त्वं साध्यधर्मिकपक्षवृत्तित्वसंशयत्वादिकं वा लघुलक्षणं कुतः प-
रित्यक्तमत आह तेनेति। यादृशसम्बन्धावगाहित्वस्य फलमाह न
वेति। मूलस्थस्य साध्यधर्मत्वमित्यस्य परित्यागे बीजमाह न वा
तम इत्यादि। सन्दिग्धसाध्यधर्मत्वमितिमूलस्य सन्दिग्धं साध्ये
धर्मत्वं यस्येति व्युत्पत्त्या यद्वृत्तित्वं साध्ये सन्दिग्धमिति यावत्,
किं वा सन्दिग्धः साध्यधर्मो यत्रेति व्युत्पत्त्या यथाश्रुतार्थः, तत्र
प्रथमे पक्षीभूततमःसमवेतत्वस्य द्वितीये च धर्मात्मकगगनसाध्य-
स्याप्रसिद्ध्या इदमपि लक्षणं दुष्टमित्याशयेन तमसः पक्षतया ग-
गनस्य साध्यतयोल्लेखः। अत्र च मते पक्षे साध्यवत्तासंशयोत्तरं
सिद्ध्यात्मकपरामर्शादप्यनुमितिर्भवत्येवेति बोध्यम्। न चोक्त-
लक्षणस्य साध्यसंशयमात्रपरत्वेऽग्रिममूले तस्य विशेषणत्वादिवि-
कल्पस्यासङ्गतिः, तत्र विशेषणोपलक्षणपदयोः साक्षात्परम्परा-

नापि साधकबाधकप्रमाणाभावः। उभयाभावस्य प्रत्येक-सत्त्वेऽपि सत्त्वात्। नाप्यभावद्वयं तथा, बाधकप्रमाणाभावस्य व्यर्थत्वात् ह्रदादेः पक्षत्वेऽपि बाधहेत्वसिद्ध्यादेरावश्यकत्वेनानुमित्यनुत्पादात्। नापि साधकप्रमाणाभावः, श्रोतव्यो मन्तव्य इति श्रुत्या समानविषयकश्रवणानन्तरं मननबोधनात् प्रत्यक्षदृष्टेऽप्यनुमानदर्शनात् एकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च। मन्तव्यश्चोपपत्तिभिरिति स्मरणात्। अथ सिषाधयिषितसाध्यधर्म्मा धर्म्मी पक्षः तथा हि, मुमुक्षोः शब्दादात्मावगमेऽपि मननस्य मोक्षोपायत्वेन सिद्धिविशेषानुमितिच्छयात्मानुमानम्।

---

तिषु समवायेनाकाशादिसाधने तद्वैकल्यम् । संशययोग्यतां निरस्यति नापीति। साधकबाधकमाने सिद्धिबाधौ। केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाधः । ननु तत्रापि पुनर-

---

रणपरत्वात्। सन्दिग्धं साध्यं यत्र तद्धर्मत्वं तत्सम्बन्धित्वमिति व्युत्पत्त्या लब्धं स्वविशेष्यकसाध्यसंशयसम्बन्धित्वरूपं यथाश्रुतार्थमादायैव विशेषणत्वोपलक्षणत्वयोरग्रे विकल्प इत्यप्याहुः । तद्वैकल्यम् पक्षतावैकल्यम्। ननु योग्यतायाश्चानिरूपणादिति ग्रन्थेनाऽग्रेऽनुमित्साया इव संशयस्यापि योग्यताया निरसयितुमुचितत्वात् तन्निरसनानुमूलस्य न्यूनत्वमत आह संशयेति । सिद्धिबाधयोर्जनकस्य व्याप्तिज्ञानमनोयोगादेः सर्वत्रैवानुमितेः पूर्वं सत्त्वाद्व्याचष्टे साधकेत्यादि। तथा च साधकेन बाधकेन जनितं यन्मानमिति मूलेऽन्वयः । ननु पक्षधर्मिकसाध्याभावनिश्चयात्मनो बाधस्य केव-

अत एव प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार इति वाचस्पतिवचनयोरविरोधः, अनुमित्सातद्विरहाभ्यां तदुपपत्तेरिति चेन्न। सन्देहत्वत्परामर्शपूर्वं सिषाधयिषाया अप्यभावात् योग्यताया्श्चानिरूपणात्

---

नुमित्सा ततः परामर्शान्तरं स्मरणात्मकाद्वा परामर्शादनुमितीष्टसाधनताविषयकादनुमित्सा ततोऽनुमितिरिति फलबलात्कल्पनीय-

---

लान्वयिन्यप्रसिद्धिरत आह केवलान्वयिनि चेति। पर्वतो न वाच्यत्ववानित्याकारकः पटाद्यभावे प्रतियोगितासम्बन्धेन वाच्यत्वाद्यवगाह्यपि बाधः खण्डशः प्रसिद्ध्या तत्र सम्भवतीत्यावेदयितुं सुलभ इत्युक्तम्। न चैवं नानाविधानां बाधबुद्धीनामनुगमासम्भवः, प्रातिस्विकरूपेण तेषां निवेशे तु नाप्यभावद्वयमिति मूलासङ्गतिर्बाधाभावस्यानेकत्वादिति वाच्यम्। पक्षधर्मिकसाध्यवत्ताज्ञानविरोधिनिर्णयत्वेन तासामनुगमादिति भावः। मूले प्रत्यक्षपरिकलितमिति।प्रत्यक्षपरिकलितत्वविशिष्टविषयको योऽनुमानजन्यो बोधस्तदिच्छावन्त इत्यर्थः।तेनोपजातप्रत्यक्षविषयत्वदशायामेवानुमितिविषयत्वलाभान्न वचनयोर्विरोधस्यासङ्गतिरिति ध्येयम्। तत्रापि। अनुमित्सानाशस्थलेऽपि। पुनरिति। उत्पन्नपरामर्शानन्तरमित्यर्थः। ननु पुनरनुमित्सार्थमनुमितीष्टसाधनताज्ञानस्य पूर्वमपेक्षणात्तेनैव प्राक्तनपरामर्शनाशात्कुतस्तत्रानुमितिः स्यादत आह ततः परामर्शान्तरमिति। ततोनुमितिरित्यग्रेन्वयः। इष्टसाधनताज्ञानपरामर्शयोः पृथक्कल्पने गौरवादाह स्मरणात्मकेति। विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य साक्षाद्धेतुतया तादृशविशिष्टपरामर्शार्थं विशेषणज्ञानकल्पने गौरवमपि नास्तीत्यावेदयितुं स्मरणात्मकाद्वेत्यु-

सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात् स्वकारणाधीनतृतीयलिङ्गपरामर्शबलेनानपेक्षितानुमानदर्शनाच्चेति ॥

---

मित्यत आह सिषाधयिषेति । न चानुमितिजनिकेच्छैव पक्षता सा च क्वचित्स्वनिष्ठैव सर्वत्रेश्वरनिष्ठैव सुलभेति वाच्यम् । तस्या नित्यत्वेन सिद्धौ सत्यामपि पक्षताप्रसङ्गात् । न च तस्यास्तदानीं न तज्जनकत्वम् । तद्धि न तद्योग्यता, अनपायात् । न च तदुपधानम्, अनुमितेः पूर्व

---

क्षम् । न चोक्तपरामर्शानन्तरमनुमित्सादशायामनुमितिप्रसङ्गः सामग्रीसत्त्वादिति वाच्यम् । सिषाधयिषारूपायाः पक्षतायाः प्रागसत्त्वादिच्छासामग्र्या एव प्रतिबन्धकत्वाच्चेति भावः । कल्पनीयमिति । न चैतावतापि प्रत्यक्षादिभिन्नं वन्हिज्ञानं जायतां वन्ह्यनुमितिर्जायतामित्यादिरूपाणामनुमित्साव्यक्तीनामनुगतरूपविरहात्कारणत्वासम्भव इति वाच्यम् । यद्यदनुमित्सासत्त्व एव यत्पक्षकयत्साध्यकानुमितिस्तत्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेनैव तत्पक्षकतत्साध्यकानुमितावनुमित्साया हेतुत्वसम्भवादिति भावः । यत्तु यत्पक्षकयत्साध्यकानुमितिनिवर्त्यानुमित्सात्वेनैव तत्पक्षकतत्साध्यकानुमितौ हेतुत्वमिति । तन्न । तादृशानुमितित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबद्ध्यत्वस्योक्तावशाब्दज्ञानं जायतामित्याकारानुमित्साया असंग्रहापत्तेः तस्यामशाब्दज्ञानत्वेन प्रतिबन्धकत्वात् । प्रकृतपक्षसाध्यकानुमितिनिष्ठप्रतिबन्धकतामात्रस्योक्तौ च समूहालम्बनतादृशानुमितिप्रतिबद्ध्यतामादाय घटाद्यनुमित्सायामतिव्याप्त्यापत्तेरिति ध्येयम् । मिश्रमतमाशङ्क्य निषेधयति न चेति । वाच्यमित्यन्वयः । अनुमितिजनकेति । तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौ तादृशानुमितिजनिकेच्छैव पक्षतेत्यर्थः । विषयितया धात्वर्थान्वयिन एव सनः समानकर्तृत्वस्य त-

तदभावात्। न च तत्सामग्रीसमवधानम्, कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसङ्गाच्छेषवैयर्थ्यात् तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च॥

---

न्त्रत्वादिति भावः। सुलभेति। तथा च घनगर्जिताद्यनुमितौ न व्यभिचार इति भावः। तस्या ईश्वरेच्छायाः।तदानीं सिद्धिदशायाम्।तज्जनकत्वं न तादृशानुमितिजनकत्वम्। तद्धि तादृशानुमितिजनकत्वं हि। अनपायात् स्वरूपतः सत्त्वात्। न च तत्पुरुषीयतादृशानुमितिं प्रति तत्पुरुषीयतादृशानुमित्यव्यवहितप्राक्क्षणवृत्तित्वविशिष्टेच्छात्वेन हेतुत्वात्तदानीं स्वरूपयोग्यत्वमेव नास्तीति वाच्यम्।कार्याव्यवहितपूर्ववर्त्तित्वादिना हेतुत्वस्याग्रे सार्वभौमनिरुक्तौ निरस्यत्वादिति भावः। तदुपधानं तादृशानुमितिविशिष्टत्वम्।तदभावादिति।तथा च सत्यामपि सिद्धावनुमितिर्न स्यात्प्रत्युतैकानुमित्यनन्तरमेवानुमित्यन्तरं स्यादिति भावः। तत्सामग्रीति। तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितिसामग्रीविशिष्टत्वमेव तादृशानुमितिजनकत्वमित्यर्थः। प्रसङ्गादिति। तथा च परामर्शादिकं हेतुर्न स्यात् अवच्छेदकत्वादिति भावः। इष्टापत्तौ बाधकमाह शेषेति। तादृशानुमितिसामग्रीविशिष्टत्वेनैव हेतुत्वसम्भवादिच्छाभागस्य वैयर्थ्यादित्यर्थः। न चात्र सामग्रीपदेनेच्छेतरकारणस्तोम एव धर्त्तव्यस्तथा च सिद्धिकालीनपरामर्शस्यापि तादृशस्तोमविशिष्टत्वात्ततोनुमितिवारणार्थमेवेच्छाभागः प्रवेशनीयः इति वाच्यम्। सिद्धिदशायामिच्छान्यस्यानुमितिकारणस्तोमस्थासत्त्वात्। अन्यथा तादृशस्तोमविशिष्टाया भगवदिच्छायास्तदानीमपि सत्त्वादिच्छानिवेशेपि तत्रानुमितेर्दुर्वारतापत्तेः। घनगर्जिताद्यनुरोधेन तादृशेच्छायाः सामानाधिकरण्यप्रत्यासत्त्या हेतुत्वासम्भवादिति भावः। नन्वीच्छाभागो न देयः तादृशानुमितिसामग्रीविशिष्टत्वेनैव हेतुत्वं वाच्यं तथैवानुमित्सायाः सर्वत्र हेतुत्वसम्भवादित्यत आह तदानीमिति। सिद्धिदशायां यत्कारणाभावप्रयुक्तः सामग्रीविरहः तत्कारणस्येत्यर्थः। वक्तव्यतापातादिति। तथा चावश्यकत्वात्तस्यैव पक्षता युक्तेति भावः।। इति पक्षतापूर्वपक्षः।

उच्यते । सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति स पक्षः । तेन सिषाधयिषाविरहसहकृतं साधकप्रमाणं यत्रास्ति स न पक्षः । यत्र साधकप्रमाणे सत्यसति वा सिषाधयिषा यत्र वोभयाभावस्तत्र विशिष्टाभावात् पक्षत्वम् । यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वम्, तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम् ॥

---

सिषाधयिषेति । यत्रानुमित्सानन्तरं साध्यतद्व्याप्यवत्त्वविशिष्टपक्षस्मरणम् अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा अनुमित्सापूर्वकालोत्पन्नविशेषणस्म-

---

## अथ पक्षतासिद्धान्तः ।

ननु क्रमोत्पन्नानां सिद्धीच्छापरामर्शानां युगपदसत्त्वातत्सहकृतान्तदलं व्यर्थमत आह यत्रेति । पक्षस्मरणमिति । तदनन्तरं चानुमितिरित्यग्रेऽन्वयः । विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य हेतुत्वात्तदपेक्ष्य गौरवं नास्तीत्याशयेन स्मरणपर्यन्तानुधावनम् । अत्रानुमित्सार्थमनुमितीष्टसाधनताज्ञानान्तरं कल्प्यमतो लाघवादाह अनुमितीत्यादि । तादृशस्मरणादिति । साध्यतद्व्याप्यविशिष्टपक्षस्मरणादित्यर्थः । अनुमित्सेति । तदनन्तरं चानुमितिरित्यग्रेणान्वयः । स्मृत्यात्मकसिद्धौ सहकृतान्तविशेषणस्य प्रयोजनमुक्त्वाऽनुभवात्मकसिद्धौ तदाह पूर्वकालेत्यादिना । ज्ञानेच्छयोरयौगपद्यादनुमित्साजन्मक्षणे विशेषणस्मरणस्यासम्भवादुत्तरक्षणे तत्स्मरणे तु परामर्शदशायामनुमित्सानाशात्तत्र पक्षतैव नोपेयत इत्यत उक्तं पूर्वकालोत्पन्नेति । अनुमित्सापूर्वकालोत्पन्नेत्यर्थः । अनुमित्सायाः पूर्वं प-

रणाद्वा अनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितात्साध्यतद्व्या-
प्यविशिष्टपक्षप्रत्यक्षं तदनन्तरञ्चानुमितिस्तत्र पक्षतासम्पत्तये
सहकृतान्तं साधकमानविशेषणम् । सिषाधयिषा च तत्साध्य-
विशिष्टतत्पक्षविषयकत्वप्रकारिका अनुमितिविषयिणीच्छा।यत्किञ्चि-
द्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वेऽनुमित्यनुत्पादात्

———

क्षसन्निकर्षेऽनुमित्सामवधूय वन्ह्यादिसाध्यकतद्व्याप्यवत्त्वेन पर्वता-
देः प्रत्यक्षमेव स्याद्बहिरर्थलौकिकप्रत्यक्षसामग्र्याः सर्वतो बलव-
त्त्वादनुमित्सानन्तरं सन्निकर्षे च परामर्शदशायां नानुमित्सायाः स-
त्त्वमत उक्तमनुमित्साकालेति । इदमुपलक्षणम् । यत्रानुमितीष्टसाध-
नताविषयकस्य साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षानन्तरमनुमित्सा
तत्रापि पक्षतासम्पत्त्यर्थं सहकृतान्तं बोध्यम् । पक्षतासम्पत्तय इति ।
न चानुमित्सादशायामपि घटाद्यवच्छेदेन तदभावस्यात्मनि सत्त्वा-
त्पक्षताभङ्गप्रसङ्गः, देशानवच्छिन्नविशेषणतयैव सामानाधिकरण्य-
रूपस्यानुमित्साविरहवैशिष्ट्यस्योक्तत्वादिति भावः । ननु सिद्धिगो-
चरेच्छामात्रस्य सिषाधयिषात्वे द्रव्यत्वेन द्रव्यज्ञानं जायतामिती-
च्छायामपि सिद्ध्यात्मकपरामर्शाद्वन्ह्यनुमितिः स्यादत आह सिषा-
धयिषेति । तत्साध्येति । प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविष-
यताकत्वप्रकारिकेत्यर्थः । तेन वन्हिविशिष्टह्रदाद्यप्रसिद्धावपि ह्रदो
वन्हिमानित्याद्यनुमितौ न पक्षताहानिः, न वा पाषाणमयत्वेन पर्वते
तैजसत्वेन वन्ह्यनुमितिर्जायतामितीच्छायामपि सिद्धिदशायां पर्व-
तो वन्हिमानित्यनुमितिः तदिच्छायाः पर्वतत्वावच्छिन्नविशेष्य-
तानिरूपितवन्हित्वावच्छिन्नाधेयताद्यनवगाहित्वादिति भावः । व-
न्हिमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छावारणार्थमाह अनुमिति-
विषयिणीति । यत्किञ्चिदित्यादि । द्रव्यत्वेन द्रव्यगोचरज्ञानं जाय-
तामितीच्छायामपि वन्हेः सिद्ध्यात्मकपरामर्शादनुमित्यनुत्पादादि-
त्यर्थः । तेन ज्ञानं जायतामितीच्छोत्तरं सिद्ध्युत्पादे वक्ष्यमाणस्ववि-
षयासिद्ध्यनुपहितत्वविशेषणादेव तदिच्छावारणं सिद्ध्युत्तरं च ता-
दृशेच्छा न भवत्येव ज्ञानमात्रस्यैव ज्ञानत्वप्रकारकेच्छाविरोधित्वा-

अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्वते वन्हिज्ञानं जायतामितीच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च यादृशयादृशे-च्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदिच्छाभावसमुदायस्य विशेष-

---

दिति प्रत्युक्तम् । नन्वनुमितिविषयत्वेनानुमित्साव्यक्तीनां प्रवेशे गौरवादनुमितित्वप्रकारिकेच्छैव प्रवेश्यतामत आह अनुमितित्वेति । सिद्ध्यात्मकपरामर्शोत्तरं पर्वते वन्हिज्ञानं जायतामितीच्छैव नोत्पद्यते सिद्धिविरोधित्वात् सिद्ध्यात्मकपरामर्शपूर्वकालोत्पन्नायास्तादृशेच्छाया नानुमितावुपयोगः स्वविषयसिद्ध्यनुपहितत्वाभावादतः प्रत्यक्षाद्यतिरिक्तमित्युक्तम् । अनुमित्युत्पादाच्चेति । तथा च व्यभिचाराल्लाघवमकिञ्चित्करमिति भावः । ननु यत्र वन्हिमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छैव प्रत्यक्षत्वेनानुमितिमवगाह्य वृत्ता तत्रापि सिद्धौ सत्यामनुमित्यापत्तिः किं च प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयताकत्वप्रकारकेच्छाया पर्वोत्तेजकत्वे वन्हिभिन्नान्यविधेयकानुमितिर्जायतां प्रत्यक्षादिभिन्नं वन्हिविधेयकं ज्ञानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शादनुमितिर्न स्यात् तथा च तादृशतादृशेच्छानामप्युत्तेजकत्वं वाच्यमित्यननुगम इत्यत आह यादृशेति । सिद्ध्यसमानकालीनानामनुमितिप्राक्क्षणावस्थायिसिषाधयिषाणामुत्तेजकविधया पक्षतायां प्रवेशो व्यर्थः कारणतावच्छेदकगौरवापादकश्च स्यादतः सिद्धौ सत्यामित्युक्तम् । अत्रैकाकारानुमित्साव्यक्तीनामनुगतरूपेणोत्तेजकत्वलाभार्थं यादृशेत्युक्तमिति प्राञ्चः । वस्तुतो यद्यदिच्छाव्यक्तिसत्त्वे इत्येव वक्तव्यम् । अन्यथा यत्र सिद्ध्यात्मको वन्हिमात्रपरामर्शस्तत्रानुमितिर्जायतामितीच्छायामपि वन्ह्यनुमित्युत्पादादनुमितित्वप्रकारकेच्छात्वेनाप्युत्तेजकतया यत्र सिद्ध्यात्मको वन्हिपरामर्श एव सिद्ध्यनात्मकद्रव्यत्वादिसाध्यकः परामर्शस्तत्रानुमितिर्जायतामितीच्छादशायां वन्ह्यनुमित्यापत्तेः, एवं पर्वतमात्रपक्षकात्सिद्ध्यात्मकपरामर्शाद्यत्र वन्ह्यनुमितिर्जायतामितीच्छायां पर्वते वन्ह्यनुमितिस्तत्र वन्ह्यनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे यत्र पर्वते महानसे च वन्हिव्याप्यवत्त्वपरामर्श एव पर्वते सिद्ध्यात्मकः तत्रापि वन्ह्यनुमितिर्जायतामित्याकारकेच्छायां पर्वते

णत्वादिच्छाया अननुगमेऽपि न क्षतिः। धूमेनानुमिनुयामितीच्छा-

———

वन्ह्यनुमित्यापत्तेः। न चेष्टापत्तिः। अनुभवविरोधात्। प्रकारान्तरेण स्वविषयपर्य्यवसानसम्भवेनानुमित्सानामवगतार्थगोचरज्ञानानर्जकत्वात्, अस्माकं तु समूहालम्बनस्थलीयतत्तद्व्यक्तीनामुत्तेजककोटावप्रविष्टत्वान्न दोष इति। परन्तु तत्पक्षकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रत्येव पक्षतायाः कारणत्वमिति कल्पे तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वाद्यवच्छिन्नाभावोऽनुगतरूपेणैव पक्षतायां लाघवान्निवेशनीयो न तु तत्तदिच्छाव्यक्तीनामभावसमुदाय इत्याशयेनैव यादृशयादृशेच्छेत्युक्तमिति ध्येयम्। इच्छाभावसमुदायस्येति। इदमुपलक्षणम्। सिद्धिधर्मिकयद्यदप्रामाण्यज्ञानसत्त्वे सिद्धिदशायामनुमितिस्तत्तदप्रामाण्यज्ञानाभावसमुदायस्यापि सिद्धौ विशेषणत्वं बोध्यम्, अत एव मिश्रैरनुमितिग्रन्थेऽप्रामाण्यज्ञानास्कन्दितायाः सिद्धेरप्रतिबन्धकत्वमुक्तम्। न क्षतिरिति। यद्यपि एवमपि तत्तदिच्छाविरहव्यक्तीनां विशेष्यविशेषणभावे विनिगमनाविरहेणानन्तकार्यकारणभावः। न चैकेच्छाविरहविशिष्टो योऽपरेच्छाविरहस्तद्विशिष्टसिद्धित्वेन प्रतिबन्धकत्वे सामानाधिकरण्यात्मकवैशिष्ट्यस्य द्विधा प्रवेशे गौरवमतस्तावतीनामिच्छाविरहव्यक्तीनामेकत्र द्वयमितिरीत्या युगपदेव सिद्धिविशेषणत्वं लाघवादिति वाच्यम्। सिद्धौ तावदिच्छाविरहवैशिष्ट्येपि सिद्ध्यंशे प्रत्येकं तत्तदभावसामानाधिकरण्यस्य वैशिष्ट्यविधया प्रवेशात्सिद्धौ तावदभाववैशिष्ट्यस्यैव तत्तदेकैकेच्छाभावेऽपराभाववैशिष्ट्यप्रवेशे गौरवानवकाशात्। तथापि सिद्धौ तत्तदभावानां युगपद्विशेषणत्वे वैशिष्ट्यरूपसामानाधिकरण्ये वृत्तित्वांशस्य सकृदेव प्रवेशाल्लाघवं प्रत्येकाभावेऽभावान्तरवैशिष्ट्यस्य सम्बन्धत्वे तु वैशिष्ट्यघटकवृत्तित्वस्य बहुशः प्रवेशे गौरवमतो युगपदेव तावतीनामभावव्यक्तीनां सिद्धिविशेषणत्वं युक्तम्। किं च सिद्धौ तावदभावस्य युगपद्विशेषणत्वे विशेषणतासम्बन्धावच्छिन्नाधिकरणसमवेतत्वमेवानुगतः सम्बन्धः, तन्त्वेकाभावेऽपराभाववैशिष्ट्यं विशेषणताविशेषावच्छिन्नाधिकरणे विशेषणतया वृत्तित्वं सिद्धावभावान्त-

यामालोकपरामर्शादसत्यामपि सिद्धौ यदि नानुमितिस्तदान्यमात्रलिङ्गकानुमितीच्छा कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका,

---

वैशिष्ट्यं तु विशेषणताविशेषावच्छिन्नाधिकरणे समवेतत्वमित्यननुगतवैशिष्ट्यासम्भवादेव नैकाभावविशिष्टापराभावविशिष्टसिद्धित्वेन प्रतिबन्धकत्वं किन्तु तावदभावविशिष्टसिद्धित्वेनैवेति दिक्। स्वतन्त्रास्तु तत्तदिच्छाविरहकूटविशिष्टसिद्धित्वावच्छिन्नाभावस्याखण्डस्य तत्तद्व्यक्तित्वेनैव हेतुत्वं तत्तद्व्यक्तित्वं च तादात्म्येन सैव व्यक्तिरित्यदोषः। चिन्तामणिकृन्मते विशिष्टाभावस्यानितिरिक्तत्वात्। न च कारणतामात्रस्य धर्मावच्छेद्यत्वे मानाभावादेवावच्छेदकं विनैवाखण्डतादृशसिद्ध्यभावव्यक्तेरनुमितिकारणत्वमिति प्रलापो ग्राह्यः, व्यापकतागर्भायाः कारणताया अवच्छेदकस्य नानाव्यक्तिस्थल इवैकव्यक्तिस्थलेऽपि सम्भवेन वारयितुमशक्यत्वात्, पदार्थान्तररूपायास्तु कारणताया अवच्छेदकस्य नानाधिकरणेष्वपि परित्यागप्रसङ्गादित्याहुः। तच्चिन्त्यम् । केचित्तु पक्षधर्मिकसाध्यविधेयकानुमितित्वप्रकारकेच्छात्वेनैवानुगतरूपेणोत्तेजकता लाघवात् इच्छान्तरस्थले च तादृशेच्छोत्पत्त्यैवानुमितिस्तथैव कारणीभूतस्य विशिष्टाभावस्य सम्पत्तेरिति प्राहुः। आलोकपरामर्शादिति । आलोकमात्रपरामर्शादित्यर्थः। तदान्यमात्रेति। धूमेनालोकेन च पर्वते वन्ह्यनुमितिर्जायतामितीच्छायामपि धूमलिङ्गकानुमित्यर्थं मात्रपदम् । तथा च धूमलिङ्गकानुमित्साविरहविशिष्टेवालोकलिङ्गकानुमित्सा धूमलिङ्गकानुमितौ प्रतिबन्धिकेत्यर्थः। अत्र यद्यपि धूमलिङ्गकानुमितित्वप्रकारकेच्छात्वेनैवोत्तेजकत्वे धूमेन द्रव्यत्वस्यालोकेन च वन्हेः पर्वतेनुमितिर्जायतामितीच्छायामपि वन्हिव्याप्यधूममात्रपरामर्शाद्धूमलिङ्गकानुमित्यापत्तेः, धूमलिङ्गकवन्ह्यनुमितित्वप्रकारकेच्छात्वेन तथात्वे तु धूमेन महानसादावालोकेन च पर्वते वन्ह्यनुमितिर्जायतामितीच्छायामपि धूममात्रपरामर्शात्पर्वते वन्ह्यनुमित्यापत्तेः। न च पर्वतपक्षकधूमलिङ्गकवन्ह्यनुमितौ तादृशानुमितित्वप्रकारकेच्छाविरहविशिष्टालोकलिङ्गकेच्छात्वेनैव प्रतिबन्धकत्वम्, धूमेनालोकेन चानुमितिर्जायतामितीच्छायामपि धूममात्रस्य परामर्शाद्धूम-

लिङ्गकानुमित्यभावापत्तेः तदिच्छायाः पर्वतपक्षकवन्ह्यनुमितित्वप्रकारकत्वाभावात्। तथापि यद्यदिच्छाव्यक्तिदशायामालोकलिङ्गकानुमितीच्छाव्यक्तिसत्त्वेपि पर्वतधर्मिकधूमलिङ्गकवन्ह्यनुमितिः प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टालोकलिङ्गकानुमितित्वप्रकारकेच्छात्वेनैव तादृशधूमलिङ्गकानुमितिप्रतिबन्धकत्वं वाच्यमत एवालोकालिङ्गिका सती या धूमलिङ्गिका पर्वते वन्ह्यनुमितिः सा जायतामितीच्छासत्त्वे पर्वतधर्मिकधूममात्रपरामर्शान्न वन्ह्यनुमितिस्तदिच्छाव्यक्तेरुत्तेजकानन्तर्गतत्वात्। न च यत्र धूममात्रपरामर्शोत्तरं धूमालोकोभयलिङ्गकानुमितिर्जायतामितीच्छा ततस्तदुभयलिङ्गकपरामर्शोत्पत्त्यानुमितिस्तत्र तदुभयलिङ्गकपरामर्शोत्पत्तिक्षणे धूमलिङ्गकानुमितिः स्यादग्रिमानुमित्यनुरोधेन तदिच्छाव्यक्तेरुत्तेजकत्वादिति वाच्यम्। तत्र समूहालम्बनपरामर्शव्यक्तिविशिष्टतत्तदिच्छाव्यक्तित्वेनैवोत्तेजककोटौ निवेश्यत्वात्। इत्थं चालोकेन महानसे वन्ह्यनुमितिर्जायतामितीच्छासत्त्वेपि धूमपरामर्शात्पर्वते वन्ह्यनुमितिरप्रत्यूहैव तदिच्छाव्यक्तेरपि स्वस्मिन्नुत्तेजकत्वात्। अत एवालोकेन वन्ह्यनुमितिर्जायतामितीच्छोत्तरं धूमालोकयोः समूहालम्बनपरामर्शात्पर्वते वन्ह्यनुमितिर्न स्यात्तस्या अपि धूमपरामर्शाव्यवहितोत्तरत्वेन धूमलिङ्गकानुमितित्वात्तादृशानुमितिविरोध्यालोकलिङ्गकानुमित्सायाः सत्त्वादिति परास्तम्। तदिच्छाव्यक्तेरप्युत्तेजकत्वात्तत्र धूमलिङ्गकत्वप्रकारकेच्छात्वेनोत्तेजकत्वासम्भवस्यानुपदमुक्तत्वात्। यत्तु पर्वतधर्मिकवन्ह्यनुमितिसामान्यं प्रत्यालोकादिलिङ्गकपरामर्शाभावविशिष्टालोकादिमात्रलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वं वाच्यं न तु धूमादितत्तल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तदन्यलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वम्, कार्यतावच्छेदकगौरवापत्तेः। तथा चोक्तस्थले आलोकलिङ्गकपरामर्शसत्त्वेन तल्लिङ्गकानुमित्सा नानुमितिप्रतिबन्धिका। न च मात्रपदवैयर्थ्यम्, धूमपरामर्शोत्तरमालोकेन धूमेन वा वन्ह्यनुमितिर्जायतामितीच्छादशायामनुमित्यर्थे तदुपादानादिति। तन्न। धूमपरामर्शदशायामालोकेन भस्मना च वन्ह्यनुमितिर्जायतामितीच्छासत्त्वेप्यनुमितिप्रसङ्गात्। आलोकपरामर्शाभावविशिष्टाया अपि तादृशेच्छाया आलोकलिङ्गकत्वमात्रप्रकारकत्वात्। न चालोकलिङ्गकपरामर्शाभावविशिष्टेन

यदि च तत्रानुमितिस्तदा सिद्धिसत्त्वे तत्रानुमितेर्वारणाय तल्लिङ्गकानुमितीच्छा तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छा

---

धूमलिङ्गकत्वाप्रकारकालोकलिङ्गकानुमित्सात्वेन पर्वतधर्मिकवन्ह्यनुमितिसामान्यं प्रति विरोधित्वान्नैष दोष इति वाच्यम्। अस्मलिङ्गकपरामर्शोत्तरमप्यालोकेन धूमेन च वन्ह्यनुमितिर्जायतामितीच्छासत्त्वे वन्ह्यनुमितिप्रसङ्गात्। तादृशेच्छायां धूमलिङ्गकत्वप्रकारकत्वेनाविरोधित्वात् तस्मात्तल्लिङ्गकानुमितित्वावच्छिन्नं प्रति प्रागुक्तक्रमेण तत्तदन्यमात्रलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वमेव सम्यगिति दिक्। यदि च तत्रेति। अन्यसाध्यकानुमित्साया इवान्यलिङ्गकानुमित्साया अपि स्वतः प्रतिबन्धकत्वे मानाभावादिति भावः। तत्रेति। सिद्ध्यात्मकालोकपरामर्शोत्तरं धूमेनानुमिनुयामितीच्छादशायामनुमितिवारणायेत्यर्थः। न च तत्तदनुमित्साव्यक्तीनामुत्तेजककोटौ प्रवेशादेव न तत्रानुमितिरिति वाच्यम्। यत्र सिद्ध्यात्मकालोकपरामर्शोत्तरं धूमलिङ्गकानुमित्सा ततः क्रमेण सिद्ध्यात्मकधूमपरामर्शाद्वन्ह्यनुमितिस्तत्र धूमपरामर्शोत्पत्तिक्षणे वन्ह्यनुमित्यापत्तेः। पर्वतपक्षकवन्ह्यनुमितौ तदिच्छाव्यक्तेरप्युत्तेजकत्वात्। अन्यथा तत्रैव सिद्ध्यात्मकधूमपरामर्शाद्वन्ह्यनुमितिर्न स्यादिति भावः। यद्यपि वक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणेनैव धूमादिलिङ्गकतत्तत्परामर्शविशिष्टाया एव तत्तदिच्छाव्यक्तेरुत्तेजकतायां न कोपि दोषः प्रागुक्तस्थले धूमपरामर्शविशिष्टानुमित्साव्यक्तिविरहसहकृतसिद्धिसत्त्वादेव धूमपरामर्शोत्पत्तिदशायामपि अनुमित्यापत्तेरसम्भवात्। तथापि मिश्रादिसंमतमेकावच्छेदेन पक्षतापरामर्शोभयजन्यत्वमनुमितेः सम्पादयितुमनुमित्सामेवान्यथा निर्वक्ति तल्लिङ्गकानुमित्सेति। वाच्येति परेणान्वयः। ननु तल्लिङ्गकानुमितित्वप्रकारकेच्छाव्यक्तीनामुत्तेजकत्वे वन्ह्यनुमितिर्जायतामितीच्छायां सिद्ध्यात्मकालोकपरामर्शादालोकलिङ्गकानुमितिर्न स्यात्तदिच्छाव्यक्तेरालोकलिङ्गकत्वाप्रकारकत्वादत आह तदन्यमात्रेति। धूमालोकाभ्यां वन्ह्यनुमितिर्जायतामितीच्छादशायां सिद्ध्यात्मकालोकपरामर्शादनुमित्स्यर्थे मा-

या वाच्या । लिङ्गविशेषेणापि च नियन्त्रितं पक्षत्वम् । तल्लिङ्ग-
कानुमितौ सिद्धिकालीना तल्लिङ्गकानुमितीच्छाविरहविशिष्टान्य-

———

अपदम् । तथा च तल्लिङ्गकानुमितित्वाप्रकारकत्वे सति या यत्किञ्चि-
ल्लिङ्गकानुमितित्वप्रकारिकेच्छा तदतिरिक्तानुमित्सा सिषाधयिषाप-
देन वाच्येत्यर्थः । तेन प्रमेयलिङ्गकानुमितिस्थले तदन्यलिङ्गाप्रसि-
द्धावपि न क्षतिः । अत्र तदन्यमात्रलिङ्गकानुमित्सातिरिक्तत्वं न वि-
शेषणं किं तूत्तेजकीभूतत्तदिच्छाव्यक्तीनां परिचायकमिति मन्तव्य-
म् । ननु तल्लिङ्गकानुमित्साविरहविशिष्टसिद्धिसत्त्वेऽप्यन्यलिङ्गकानु-
मित्सान्यलिङ्गकपरामर्शोत्तरं प्रकृतपक्षसाध्यानुमितेरुत्पादेन व्यभि-
चारात्कुतः पक्षताया अनुमितिहेतुत्वमित्यत आह लिङ्गेति । लिङ्ग-
विशेषनियन्त्रितं लिङ्गविशेषावच्छिन्नकार्यताकम् । तथा च यद्यद-
नुमित्साव्यक्तिसत्त्वे सिद्धिदशायां तल्लिङ्गकतत्पक्षकतत्साध्यकानु-
मितिर्जायते तत्तदिच्छाव्यक्तिविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकत-
त्साध्यकानुमितित्वावच्छिन्नं प्रत्येव हेतुरतो न व्यभिचार इति भावः ।
अन्यलिङ्गकानुमित्सायास्तल्लिङ्गकानुमितौ स्वातन्त्र्येण विरोधित्वे प-
क्षताया लिङ्गविशेषानियन्त्रितत्वेपि न क्षतिरित्याह तल्लिङ्गकानुमि-
ताविति । सिद्ध्यभावदशायामन्यलिङ्गकेच्छासत्त्वेपि तल्लिङ्गकानु-
मित्युत्पत्तेराह सिद्धिकालीनेति । सिद्धिविशिष्टेत्यर्थः । तल्लिङ्ग-
कानुमित्सासत्त्वेऽन्यलिङ्गकानुमित्सायास्तल्लिङ्गकानुमित्यप्रतिबन्धक-
त्वादाह तल्लिङ्गकानुमितीच्छाविशेषविरहकूटविशिष्टेति । तल्लिङ्ग-
कानुमितित्वं तल्लिङ्गकपरामर्शाव्यवहितोत्तरानुमितित्वं तथा चा-
लोकलिङ्गकानुमित्सादशायां धूमालोकयोः सिद्ध्यात्मकपरामर्शोत्तरं
पर्वते वन्ह्यनुमितिर्न स्यात् तस्या अपि निरुक्तधूमलिङ्गकत्वेनालोक-
लिङ्गकानुमित्साप्रतिबद्ध्य त्वादतो विशेषपदम् । तेन वस्तुगत्या त-
ल्लिङ्गकानुमितिगोचरयद्यदिच्छाव्यक्तिसत्त्वेन्यलिङ्गकानुमित्साका-
ले तल्लिङ्गकानुमितिर्जायते तत्तदिच्छाविरहकूटविशिष्टान्यलिङ्गका-
नुमित्सात्वेन च तल्लिङ्गकानुमितौ प्रतिबन्धकत्वमुक्तस्थले चालोक-
लिङ्गकानुमित्साव्यक्तेरपि वस्तुगत्या धूमलिङ्गकानुमितिगोचर-
तया तदिच्छाव्यक्तेरुत्तेजककोटौ निविष्टत्वान्न दोषः । विशेषपदा-

लिङ्गकानुमितीच्छैव वा प्रतिबन्धिका। साधकमानं साध्यवत्त्व-निश्चयः। पाषाणमयत्वादिना पर्व्वते तेजस्त्वादिना च वन्हेः सि-

———

सत्त्वपक्षेपि तल्लिङ्गकानुमित्सावििशिष्टत्वस्योक्त एवार्थो ग्राह्यः। अत्रापि वैशिष्ट्यमेकसमयावच्छेदेनैकात्मवृत्तित्वम्। तेन पुरुषान्तरीयतल्लिङ्गकानुमितीच्छामादायान्यलिङ्गकानुमित्सादशायां नानुमितेरुत्पादः। न च तल्लिङ्गकानुमित्साभिन्नतदन्यलिङ्गकानुमित्सैव प्रतिबन्धिकास्तु तल्लिङ्गकानुमित्साविरहविशिष्टत्वप्रवेशे गौरवादिति वाच्यम्। यत्र सिद्ध्यात्मकापेक्षाबुद्ध्यात्मकधूमपरामर्शोत्तरं क्रमेणालोकलिङ्गकानुमितित्वप्रकारेण धूमलिङ्गकानुमितित्वप्रकारेण चेच्छाद्वयी तत्र चतुर्थक्षणे धूमलिङ्गकानुमित्यनुत्पादापत्तेः धूमलिङ्गकानुमित्साभिन्नाया एवालोकलिङ्गकानुमित्सायाः सत्त्वादिति भावः। अन्यलिङ्गकानुमित्सैव वेति वाकारोऽनास्थायाम्। पूर्वकल्पोक्तस्य तल्लिङ्गकानुमित्साविरहविशिष्टसिद्ध्यभावत्वेन तल्लिङ्गकानुमितिहेतुत्वस्य लाघवेन तदपेक्ष्य एतत्कल्पस्य गुरुत्वात्तत्पक्षसाध्यकानुमितौ सामान्यतः सिषाधयिषाविरहविशिष्टसिद्ध्यभावत्वेन कारणान्तरस्याप्यत्र कल्पे वक्तव्यत्वादन्यथा सिद्ध्यात्मकपरामर्शमात्रादनुमित्यापत्तेस्तादवस्थ्यादिति ध्येयम्। ननु साधकमानं सिद्धिजनकं मानं तथा च परामर्शमात्रादप्यनुमितिर्न स्यात्तस्यैव तादृशसाधकमानत्वादतो व्याचष्टे साध्यवत्त्वनिश्चय इति। साध्यवत्त्वसंशयेप्यनुमित्युत्पादान्निश्चय इत्युक्तम्। यद्यपि साध्यवत्त्वनिश्चयत्वं यदि साध्यसामान्याभावाप्रकारकत्वे सति साध्यप्रकारकत्वं तदा पर्वतः कपिलवन्हिमान्न वेति सन्देहदशायां पर्वतो वन्हिमानित्यनुमितिर्न स्यात्तादृशसन्देहस्यापि वन्हिसामान्याभावाप्रकारकत्वे सति वन्हिप्रकारकत्वात्। न च येन रूपेण साध्यता तन्मात्रावच्छिन्नप्रकारकत्वं निश्चयत्वघटकमतः कपिलवन्हित्वावच्छिन्नप्रकारताकसन्देहस्य वन्हित्वमात्रावच्छिन्नप्रकारताकत्वाभावान्न दोष इति वाच्यम्। पर्वतः कपिलवन्हिमानिति निश्चयदशायामपि पर्वतो वन्हिमानित्यनुमित्यापत्तेस्तादृशनिश्चयस्य वन्हित्वमात्रावच्छिन्नप्रकारकत्वाभावात्। न चेष्टापत्तिः, अनुभवविरोधात्। अत एव गवाभिन्नत्व

द्धावपि पर्वतत्वेन तत्र वन्हित्वेन च तस्यानुमितेर्द्धर्म्मित्वसाध्यत्व-
योरवच्छेदकावनुप्रवेशनीयौ । यदि च पर्वतत्वसामानाधिकरण्ये-

———— —

साध्ये सकलगवाश्रितत्वं न हेतुरविशिष्टसाध्यवत्त्वानुमितौ विशि-
ष्टसाध्यवत्ताग्रहस्यापि विरोधितया पक्षधर्मताग्रहदशायां सिद्धसा-
धनादिति शक्तिवादे मिश्रैरप्युक्तम् । यदि च साध्यप्रतियोगिकाभा-
वाप्रकारकत्वे सति साध्यप्रकारकत्वमेव साध्यनिश्चयत्वं तदारुण-
वन्हिशून्यः पर्वतो वन्हिमानित्येवं निश्चयेपि पर्वतो वन्हिमानित्यनु-
मित्यापत्तिः उक्तनिश्चयस्य वन्हिप्रतियोगिकाभावप्रकारकत्वेनावि-
रोधित्वात् । तथापि वन्हित्वावच्छिन्नविधेयकानुमितिं प्रति वन्हि-
सामान्याभावाप्रकारकवन्हित्वावच्छिन्नप्रकारकत्वेन कपिलवन्ह्य-
भावाप्रकारककपिलवन्हित्वावच्छिन्नप्रकारकत्वादिना च प्रत्येकधर्मे-
णैव प्रतिबन्धकत्वात् तत्तत्सिद्ध्यभावकूटस्यैव पक्षतात्वं विरोधि-
साध्यनिश्चयानामनुगतैकधर्माभावात् । वस्तुतस्तु साध्यतावच्छेद-
कावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपितप्रकृतपक्षनिष्ठविशेष्यताक-
ज्ञानत्वमेव साध्यनिश्चयत्वं वाच्यं पर्वतः कपिलवन्हिमान्न वेत्यादि-
संशये तु पर्वतनिष्ठविशेष्यत्वं वन्हित्वावच्छिन्नप्रकारत्वभिन्नेन क-
पिलवन्ह्यभावत्वावच्छिन्नप्रकारत्वेन निरूपितमतस्तद्व्युदासः । संश-
ये विशेष्यतामात्रस्यैव प्रकारताद्वयनिरूपितत्वात् एवं च निर्वह्निर्वह्नि-
मांश्च पर्वत इत्यादिसमुच्चयस्यापि साध्यनिश्चयत्वसम्भवात्तत्सत्त्वेपि
न वन्ह्यनुमितिः । समुच्चयस्थले प्रकारताद्वयनिरूपितविशेष्यताद्वयोप-
गमात् । भूतलं घटवत्पटवच्चेत्यादिस्थले भूतलस्य द्विधा भानवदत्रापि
पर्वतस्य प्रकारताद्वयांशे द्वैविध्येन भानादित्यत्र विस्तरः । तत्र पर्वते ।
तस्य वन्हेः । धर्मित्वेति । न चैवं वन्हिमान् वन्हिमानित्येवमप्यनु-
मितिः स्याद्धर्मितावच्छेदकमनन्तर्भाव्य वन्हिमत्तानिश्चयस्याविरो-
धित्वादिति वाच्यम् । इष्टत्वात् । वन्हिमत्पक्षकवन्हिसाध्यकानुमि-
तिमन्तर्भाव्य पक्षताया हेतुत्वाकल्पनेन तदापत्त्यसम्भवाच्च । अत्र
धर्मितेत्युपलक्षणम् । एकसम्बन्धेन साध्यवत्त्वनिश्चयेपि सम्बन्धा-
न्तरेण साध्यानुमितेरुत्पादात्सम्बन्धविशेषोप्यनुसरणीयः । पर्वतत्व-
स्यावच्छेदकत्वं विपर्यासफलकम् पर्वते साध्यसिद्धावप्यन्यत्र पर्वते

नैकत्र साध्यसिद्धावपि विनानुमित्सामन्यत्र तादृशानुमितिरानुभविकी तदा धर्म्मिविशेषोऽपि निवेश्यो नान्यथा। पक्षतावच्छेद-

---

सर्वदैवानुत्पत्तेः पर्वतत्वसामानाधिकरण्येनेत्युक्तम्। अवच्छेदकत्वमविषयीकृत्य पर्वतत्वप्रकारेणेति तदर्थः। तादृशानुमितिः पर्वतत्वसामानाधिकरण्येन साध्यानुमितिः। धर्मिविशेषोपीति। तथा च पर्वतत्वप्रकारेण तत्पर्वतधर्मिकवन्ह्याद्यनुमितौ पर्वतत्वप्रकारेण तत्पर्वतधर्मिकवन्ह्यादिनिश्चयत्वेनैव प्रतिबन्धकत्वं वाच्यमिति भावः। इदमुपलक्षणम्। साध्यतावच्छेदकरूपेणैकसाध्यव्यक्तेः सिद्धावपि विनानुमित्सामन्यसाध्यव्यक्तेरनुमितेरानुभविकत्वे साध्यविशेषोपीत्यपि द्रष्टव्यम्। नान्यथेति। धर्म्यन्तरेऽनुमित्यनुत्पादे तु धर्मिविशेषोपि न निवेश्य इत्यर्थः। अथ तत्पुरुषीयवन्ह्यादिविधेयकानुमितिं प्रति तदीयानुमित्साविरहविशिष्टतदीयवन्ह्यादिमत्तानिश्चयत्वेनैव समानविशेष्यताप्रत्यासत्त्या प्रतिबन्धकत्वं न तु सामानाधिकरण्यप्रत्यासत्त्या तथात्वम्। तथासति पर्वतत्वादिविशिष्टविशेष्यकवन्ह्यादिप्रकारकानुमितौ पर्वतत्वादिविशिष्टविशेष्यकवन्ह्यादिमत्तानिश्चयत्वेन विरोधित्वे धर्मितावच्छेदकविधया पर्वतत्वमहानसत्वाद्यनेकधर्मान्तर्भावेणाऽनन्तकार्यकारणभावकल्पनापत्तेः। न च तवापि पुरुषभेदेनानन्तकार्यकारणभावः तत्पुरुषस्यापि क्वचित्पक्षतया तद्भेदेन कार्यकारणभावनानात्वस्य त्वयाप्यङ्गीकर्त्तव्यत्वात्। तथा चार्थवशासम्पन्न एवावश्यं धर्मिविशेषस्य निवेश इति चेन्न। पाषाणमयत्वेन पर्वते वन्हिनिश्चयेपि पर्वतत्वेन तत्र वन्ह्यनुमित्युत्पत्तेः समानविशेष्यतया प्रतिबन्धकत्वासम्भवात्। न चैकधर्मावच्छिन्नविशेष्यत्वमेव प्रत्यासत्तिरित्यदोषः, पाषाणमयत्वस्याप्येकधर्मतया तदवच्छिन्नविशेष्यत्वस्याप्यव्यावर्तकत्वात्। तत्तद्धर्मावच्छिन्नविशेष्यतात्वेन प्रत्यासत्तितायां तु तत्तद्धर्मघटितसम्बन्धभेदेन कार्यकारणभावानन्त्यम्, अत्रापि तत्पुरुषस्यावच्छेदकधर्मविधया प्रवेशे गौरवं पुनरधिकं विनिगमनाविरहेण प्रकारताप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावकल्पनापत्तिश्च। वस्तुतः समानविशेष्यतया विरोधित्वे यत्र

कस्य सामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिद-र्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन सि-

---

पर्वतत्वचत्वरत्वाभ्यां पर्वतचत्वरयोरेव साध्यवत्तानिश्चयात्मकः साध्यव्याप्यवत्तापरामर्शस्तदनन्तरं च पर्वतांशे साध्यवत्तनिश्चय-स्याप्रामाण्यज्ञानं पर्वतधर्मिकानुमितिर्जायतामितीच्छा वा तत्रोत्तर-काले पर्वत इव चत्वरेऽपि साध्यानुमितिः स्यात् अ-प्रामाण्यज्ञानाभावविशिष्टस्यानुमित्साविरहविशिष्टस्य च साध्य-निश्चयस्य विशेष्यतासम्बन्धेन चत्वरे विरहात्, तादृशाप्रा-माण्यज्ञानव्यक्तेरनुमित्साव्यक्तेर्वानुत्तेजकत्वे पर्वतेऽप्यनुमित्यनु प-त्तेरिति दिक् । पक्षतत्त्वादि । पक्षतावच्छेदकीभूतपर्वतत्वा-दिधर्मावच्छेद्यत्वमविषयीकृत्य साध्यसिद्धावपीत्यर्थः। तदवच्छेदे-नेति । पक्षतावच्छेदकीभूतपर्वतत्वावच्छेद्यत्वं विषयीकृत्यानुमि-तेर्दर्शनादित्यर्थः।तदवच्छेदेन सिद्धेरिति।पर्वतत्वावच्छेद्यत्वावगाहि-सिद्धेरित्यर्थः। विरोधित्वमित्यग्रेन्वयः।तथा च पर्वतत्वावच्छेद्यत्वाव-गाहिपर्वतधर्मिकवन्हिर्विधेयकानुमितिं प्रति पर्वतत्वावच्छेद्यत्वाव-गाहिपर्वतधर्मिकवन्हिमत्तानिश्चयत्वेन प्रतिबन्धकत्वम् । तत्र च पर्वतविशेष्यकत्वं पर्वतत्वविशिष्टविशेष्यकत्वमात्रं तेन पर्वतत्वाव-च्छेदेन वन्हिनिश्चयेऽपि पर्वतो वन्हिमानित्याकारिकाया इव नीलप-र्वतो वन्हिमानित्याकारिकाया अप्यनुमितेर्नोत्पत्तिः । पर्वतत्वावच्छे-द्यत्वं न स्वरूपसम्बन्धविशेषो मानाभावात् किं तु पर्वतत्वव्यापक-सम्बन्धप्रतियोगित्वं तदपि संसर्गमर्यादयैव भासते पर्वतो वन्हिमा-नित्याकारकानुमितौ पर्वतत्वव्यापकवन्हिसंयोगत्वेनैव संयोगस्य स-म्बन्धविधया भानस्वीकारात् । न च पक्षतावच्छेदकव्यापकत्वमेव तदवच्छेद्यत्वमस्तु साध्यप्रवेशो व्यर्थ इति वाच्यम् । पर्वतत्वाव-च्छेदेन तद्रूपवत्त्वानुमितेः प्रमात्वापत्तेः । समवायस्यैकत्वात् पर्वत-त्वव्यापकसमवायेन पर्वतस्य तद्रूपव्यक्तिमत्त्वात् । न च पर्वतत्व-व्यापकवन्हिसंयोगेन वन्हेः साधनव्यापकत्वाग्रहात् तादृशसम्बन्धेन वन्ह्यनुमित्यसम्भव इति वाच्यम् । एकविशेषबाधसहकाराद्व्याप-कतानवच्छेदकप्रकारेणेव निरुक्तसिद्ध्यभावरूपपक्षतासहकाराद्व्या-

देस्तत्सामानाधिकरण्यमात्रेणानुमितिं प्रति तु सिद्धिमात्रस्य विरो-

———

धकतानवच्छेदकसम्बन्धेनापि साध्यानुमितेः सामान्यपरामर्शादेव सम्भवात् । न च पर्वतधर्मिकवन्ह्यनुमितिमात्रं प्रत्येव पर्वतत्वावच्छेद्यत्वावगाहिनिश्चयस्य विरोधित्वात् प्रतिबध्यकोटौ पर्वतत्वावच्छेद्यत्वप्रवेशो व्यर्थ इति वाच्यम् । पर्वतत्वावच्छेदेन सिद्ध्युत्तरं तदवच्छेदेनानुमित्सया पर्वतत्वावच्छेदेन तत्सामानाधिकरण्येनाप्यनुमित्यापत्तेः । यत्तु पर्वतत्वावच्छेद्यत्वमवच्छेद्यतासम्बन्धेन पर्वतत्वादिकं वा साध्यांशे प्रकारतयैवानुमितौ भासते तथा च पर्वतः पर्वतत्वावच्छेद्यवन्हिमानित्येव पर्वतत्ववद्वन्हिमानित्येव वानुमितिरिति प्राचीनाः । तच्चिन्त्यम् । शिखरावच्छेदेन पर्वतो वन्हिमानित्यनुमितौ तु पक्षतावच्छेदकीभूतशिखरावच्छिन्नत्वं स्वरूपसम्बन्धरूपमेव भासते न तु व्यापकत्वलक्षणमननुभवात्, एवं च तत्र शिखरावच्छेद्यवन्हिसंयोगेन वन्ह्यनुमितौ शिखरावच्छेद्यवन्हिसंयोगेनैव वन्हिनिश्चयो विरोधी न तु संयोगमात्रेणेत्यवधेयम् । सामानाधिकरण्यमात्रेणेति । पक्षतावच्छेदकरूपेण पक्षे साध्यानुमितित्वमेव तत्सामानाधिकरण्येनानुमितित्वं तच्च पक्षतावच्छेदकावच्छेदेनानुमितावप्यस्तीत्यतो मात्रपदम् । सिद्धिमात्रस्येति । तत्र पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितित्वं न तदवच्छेद्यत्वानवगाह्यनुमितित्वं पर्वतत्वावच्छेदेन तत्सामानाधिकरण्येन च परामर्शद्वयात्पर्वतत्वावच्छेद्यत्वावगाहितदनवगाह्यनुमित्योर्युगपदुत्पादप्रसङ्गात् सामग्रीसत्त्वात् । किं तु यद्रूपेण साध्यतावच्छेदकसम्बन्धत्वं तादृशधर्ममात्रावच्छिन्नसंसर्गताकपक्षधर्मिकसाध्यानुमितित्वम् निरुक्तस्थले च संयोगनिष्ठद्विविधसंसर्गताकसमूहालम्बनानुमितिस्वीकारात् । तथा च संयोगत्वमात्रावच्छिन्नसंसर्गताकपर्वतधर्मिकवन्हिविधेयकानुमितिं प्रति संयोगत्वविशिष्टसंसर्गताकपर्वतधर्मिकवन्हिमत्तानिश्चयत्वेनैकरूपेण सिद्धित्वं प्रतिबन्धकं पर्वतत्वावच्छेदेनानुमितौ तु संयोगनिष्ठसंसर्गता न संयोगत्वमात्रावच्छिन्ना किं तु पर्वतत्वावच्छेद्यवन्हिसंयोगत्वावच्छिन्नैवेति पर्वतत्वसामानाधिकरण्येन सिद्धिसत्त्वेपि तदुत्पत्तिः । न चैवं संयोगमात्रेण वन्हिनिश्चयेपि पर्व-

धित्वम् । इत्थञ्च लिङ्गभेदन्यायोऽनुसरणीयः । साध्यविशेष्यक-सिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षवि-शेष्यकैव सिद्धिर्विरोधिनी । एवञ्च पक्षविशेष्यकसिद्ध्यनन्तरमपि साध्यविशेष्यकानुमितिर्जायते, तुल्यन्यायात् समानाकारायाः

---

तीयसंयोगेन वन्ह्यनुमितिः स्यात् न स्याच्च पर्वतीयत्वविशिष्टसंयोगेन वन्हिनिश्चयेपि संयोगमात्रेण पर्वते वन्ह्यनुमितिरिति वाच्यम् । इष्ट-त्वात् । सामान्यघटितविशेषप्रकारेणेव तादृशसम्बन्धेनापि सिद्धेः सामान्यानुमितिविरोधित्वात् । एवमनयैव दिशा अन्यत्रापि प्रतिब-न्धकत्वमूह्यमिति सङ्क्षेपः । इत्थं चेति । पक्षतावच्छेदकावच्छेदेन सिद्ध्युत्तरं तत्सामानाधिकरण्यमात्रेणानुमित्सायामपि तदवच्छेदे-नानुमित्यनुत्पत्तेस्तादृशानुमितौ पक्षतावच्छेदकावच्छेदेनानुमित्सै-वोत्तेजिका वाच्या एवं पक्षतावच्छेदकसामानाधिकरण्यमात्रेण सि-द्ध्युत्तरं तदवच्छेदेनानुमित्सायामपि तत्सामानाधिकरण्येनानुमित्यनु-त्पत्तेस्तादृशानुमितौ पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमित्सै-वोत्तेजिका वाच्येति लिङ्गविशेषनियन्त्रितमिवानुमितिविशेषेणापि नियन्त्रितं पक्षत्वम् । यद्वा तत्पक्षकतत्साध्यकानुमितिं प्रत्येव सा-मान्यतः पक्षता हेतुः पक्षतावच्छेदकावच्छेदेनानुमितौ तु तदवच्छि-न्नसिद्धिकालीना तत्सामानाधिकरण्यमात्रेणानुमित्सा पृथक् प्रति-बन्धिका पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितावपि सामा-नाधिकरण्येन सिद्धिकालीना तदवच्छेदेनानुमित्सा पृथक् प्रतिबन्धि-का वाच्या । यदि चासत्यामपि समानाकारकसिद्धौ पक्षतावच्छेद-कावच्छेद्यत्वावगाह्यनुमित्सायां सत्यां तत्सामानाधिकरण्यावगाह्य-नुमितेर्नोत्पादस्तदा सिद्धिकालीनत्वं प्रतिबन्धकत्वे न प्रवेश्यमिति भावः । साध्यविशेष्यकेति । विनानुमित्सामित्यादिः । तां प्रतीति । पक्षविशेष्यकानुमितिं प्रतीत्यर्थः । समानाकारेति । तथा च संयोग-सम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतनिष्ठप्रकारतानिरूपितवन्हि-त्वावच्छिन्नविधेयताकानुमितिं प्रति तादृशसम्बन्धावच्छिन्नपर्वत-निष्ठप्रकारतानिरूपितवन्हित्वावच्छिन्नविशेष्यताकनिश्चयत्वेन विरो-

सिद्धेः प्रतिबन्धकत्वे पर्य्यवसानात् । तादृशानुमितिं प्रति सिद्धि-मात्रं विरोधि साध्यप्रसिद्धिरेव वा । अत एव प्रसिद्धसाध्यकस्थ-ले पक्षविशेष्यकैवानुमितिरनुभूयत इति । अत्र च व्याप्तिस्मरणा-

---

धित्वं विधेयत्वं तु न प्रकारतानियतं किं तु पर्वते वन्हिः पर्वतो व-न्हिमानित्याद्यनुमितौ पर्वते वन्हिमनुमिनोमि न तु वन्हौ पर्वतमित्य-नुभवसाक्षिको विषयताविशेषः क्वचिद्विशेष्यवृत्तिरपीति नासिद्धिः । अत एव गुणानां गुणत्वमित्यत्र विशेष्यीभूतस्यापि गुणत्वस्य विधे-यत्वमुक्तमुपाध्यायैरिति ध्येयम् । ननु पक्षविशेष्यकसिद्ध्युत्तरं साध्य-विशेष्यकानुमितिर्न क्वाप्यनुभवसिद्धेत्यत आह तादृशेति । पक्षनि-ष्ठप्रकारतानिरूपितसाध्यविशेष्यकानुमितिं प्रतीत्यर्थः । सिद्धिमात्र-मिति । साध्यविशेष्यिका पक्षविशेष्यिका च सिद्धिर्विरोधिनीत्यर्थः । पर्वतो वन्हिमानिति निश्चयोत्तरं वन्हौ पर्वतव्याप्यवत्तापरामर्शाद्व-न्हिः पर्वते इत्यनुमितौ च वन्हेर्न विधेयत्वं किं तु पर्वतस्यैव तथात्वं यद्व्याप्यवत्ताज्ञानजन्यत्वमनुमितेस्तदंश एव विधेयताख्यविषयता-स्वीकारादिति भावः । नन्वेवं प्रसिद्धसाध्यकपरामर्शात्सर्वत्रैव पक्ष-साध्योभयविशेष्यकानुमितिः स्यात् पक्षताद्वयसत्त्वेनोभयधर्मावच्छि-न्नसामग्रीसत्त्वादित्यस्वरसाल्लाघवाच्च साध्यज्ञानत्वेनैव साध्यविशे-ष्यकानुमितिं प्रति विरोधित्वमाह साध्यप्रसिद्धिरेवेति । एवकारेणा-नुमित्साया उत्तेजकत्वस्यापि प्रतिक्षेपः सूचितः । साध्यज्ञानमात्र-स्य विरोधितायामनुभवमपि प्रमाणमाह अत एवेति । साध्यविशे-ष्यकानुमितौ तज्ज्ञानमात्रस्य विरोधित्वादेवेत्यर्थः । इत्थं च धूम-व्यापकवन्ह्यभाववान्ह्रद इत्यादिव्यतिरेकपरामर्शजन्याया ह्रदे धूमा-भाव इत्याद्यभावसाध्यकानुमितेरेव साध्यविशेष्यकत्वात्तत्रैव सा-ध्यज्ञानं विरोधीति मन्तव्यम् । वन्ह्याद्यभावसाध्यकस्थले तु विशेष्य-विधया वन्ह्यादिविधेयकानुमितेरलीकतया तां प्रति साध्यज्ञानत्वेन विरोधित्वासम्भवादिति ध्येयम् । विशेष्यत्वाख्यविधेयतावच्छेदकत्व-सम्बन्धेनानुमितिसामान्यं प्रत्येव वा प्रकारतासंसर्गेण ज्ञानमात्रस्य प्रतिबन्धकत्वं वाच्यम् । न चैवमपि गोत्वाभावो गोत्वव्यापकसास्ना-

दिना पूर्व्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैवानुमितिस्तथैव कारणीभूतस्य विशिष्टाभावस्य सम्पत्तिरित्युपाध्यायाः।अन्ये तु द्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमितिदर्शनात् अनुमित्सायोग्यता वाच्या, सा च न स्वोत्प-

---

शून्य इत्याकारकपरामर्शाद् गोत्वाभावे गोत्वं नेत्येवं पक्षनिष्ठप्रकारतानिरूपितसाध्यविधेयकानुमितिर्न स्यात्परामर्शस्यैव साध्यज्ञानत्वेन विरोधित्वादिति वाच्यम् । इष्टत्वात् । गोत्वभावो न गोत्ववानित्येवं पक्षनिष्ठविशेष्यतानिरूपितसाध्यविधेयकानुमितेरेव तत्रोत्पादात्। साध्यतावच्छेदकधर्मावच्छिन्नपक्षनिष्ठप्रकारतानिरूपितसाध्यविधेयकानुमितित्वेनैव वा प्रतिबध्यत्वं वाच्यमित्यपि कश्चित् । वस्तुतस्तु अप्रसिद्धसाध्यकपरामर्शस्य विशेष्यविधया साध्यविधेयकानुमितित्वावच्छिन्नं प्रत्येव हेतुत्वम्, अन्यथा गोत्वाभावव्याप्यवत्त्वप्रकारकपरामर्शजन्यायां विशेष्यविधया गोत्वाभावविधेयकानुमितौ व्यभिचारापत्तिः। तथा चोक्तस्थले गोत्वाभावो न गोत्ववानित्यपि नानुमितिः विशेषणविधया गोत्वाभावविधेयकानुमितौ गोत्वव्यापकाभाववत्तापरामर्शस्याहेतुत्वात् तथाविधगोत्वाभावानुमितिहेतोर्गोत्वाभावान्वयव्याप्यवत्तापरामर्शस्य विरहेण कारणबाधाच्च । [प्रसिद्धाप्रसिद्धसाध्यकोभयपरामर्शयोः प्रसिद्धाप्रसिद्धसाध्यकोभयानुमित्यनुगतधर्मावच्छिन्नं प्रत्यनुगतरूपेण हेतुत्वस्य दुर्वचत्वात्] इत्यन्यत्र विस्तरः । व्याप्तिस्मरणादिनेति । यत्रानुमित्सोत्तरं व्याप्तिस्मरणं ततः सिद्ध्यात्मकपरामर्शस्तत्रेत्यर्थः । तथैव तथासत्येव । विशिष्टाभावस्येति । अनुमित्साविरहविशिष्टसिद्ध्यभावस्येत्यर्थः । मिश्रमतमाह अन्ये त्विति । अनुमित्सायामिति । सिद्धिदशायामिति शेषः । वाच्येति । सिषाधयिषापदेनेत्यादिः । स्वोत्पत्तेरित्यादि । स्वपदं तत्तदनुमित्सापरम् । तथा च तत्तदनुमित्सोत्पत्त्यनन्तरत्वविशिष्टतत्तदनुमित्साविषयसिद्धिप्रागभावो योग्यतेत्यर्थः।सिद्धिकालीनयद्यदनुमित्साव्यक्तिदशायामुत्तरकालमनुमितिर्भविता तत्तदनुमित्साव्यक्तिविषयीभूतसिद्धिप्रागभावस्य वर्तमानसिद्ध्यन्तरदशायामपि स-

च्यनन्तरं स्वविषयसिद्ध्यनुत्पादः, अनुमित्सानन्तरमन्तराऽनुमित्य-नुत्पादे दिवसादिविलम्बेनेन्द्रियादिना निर्णीतेऽपि साध्ये लिङ्गप-रामर्शादनुमितिप्रसङ्गात्, किं त्वनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण

———

त्वात्तदानीमनुमितेर्वारणाय विशिष्टान्तम् । तत्तदनुमित्सोत्तरत्ववि-शिष्टत्वविवक्षणे तत्तदनुमित्सासमकालेऽनुमितिर्न स्यादतस्तदुत्पत्ती-ति। तत्तदनुमित्सोत्पत्त्यनन्तरत्वं तु न तत्तदनुमित्सोत्पत्तिक्षणध्वंसवि-शिष्टत्वं तथात्वेऽनुमित्सोत्पत्त्यनन्तरक्षणेऽनुमित्यपलापापत्तेः । सि-षाधयिषोत्पत्तिक्षणेऽनुमित्सोत्पत्तिध्वंसविशिष्टस्य तद्विषयसिद्धिप्रा-गभावस्यासत्त्वात् । किं तु तत्तदनुमित्साप्रागभावविरहविशिष्टत्वं वैशिष्ट्यं चैककालावच्छेदेनैकात्मवृत्तित्वमिति नातिप्रसङ्गः । तत्त-दनुमित्साप्रागभावविरहविशिष्टत्वमात्रोक्तावनुमित्सोत्तरमनुमित्यु-त्पादे पुनरनुमित्यापत्तिरतस्तदनुमित्साविषयसिद्धिप्रागभावपर्यन्ता-नुधावनम् । न च सिद्धिकालीनानुमित्सया स्वविषयीभूतैकानुमित्यु-त्पाददशायामपि दिनान्तरभाविस्वविषयीभूतानुमित्यन्तरप्रागभा-वसत्त्वादुत्तरकालमनुमित्यन्तरापत्तिरिति वाच्यम् । तत्तदनुमित्सा-प्रागभावविरहविशिष्टस्य तत्तदनुमित्साविषयीभूतसिद्धिप्रागभाव-कूटस्य विवक्षितत्वात् । उक्तस्थले चोत्पन्नानुमितेरेव प्रागभावस्या-सत्त्वादिति भावः । इन्द्रियादिनेति । अनुमानतः साध्यनिर्णये तु स्वविषयसिद्ध्यनुत्पाद एव न स्यादिति भावः । यद्यपि स्वपदेना-नुमित्युपधायकतत्तदनुमित्साव्यक्तीनामुपग्रहे दिवसान्तरीयानुमि-त्साव्यक्तेर्योग्यतायामप्रवेशान्नैव दोषः, तथापि वन्ह्यनुमितित्वप्रकारे-णातीतानुमितिगोचरेच्छया सिद्धिकाले वन्ह्यनुमितिर्न स्यात्तद्विष-यानुमितिप्रागभावकूटस्य तदानीमसत्त्वात् । तत्तदनुमित्साव्य-क्तिपूर्वक्षणावृत्तित्वेन तत्तदनुमित्साविषयसिद्धीनां तत्तदनुमि-त्साकालीनत्वेन वा तत्तदनुमित्साविषयसिद्धिप्रागभावानां विवक्षया कथं चिदुपपादनेऽप्यनुमितिद्वयं जायतामितीच्छा-यामनुमितिद्वयं न स्यात्तदनुमित्साविषयीभूतानुमितिप्रागभाव-कूटस्य प्रथमानुमित्युत्पत्तिदशायामसत्त्वात् तादृशानुमित्साया अपि

यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः। फलबलेन तथा कल्पनात्। अथ वानुमित्सोत्पत्त्यनन्तरमनुमित्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते तावानेव कालोऽनुमित्सयोपलक्षितः। यदि च सिद्ध्यनन्तरं तन्नाशेऽपि द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादोऽनुभवसिद्धस्तदा सिद्ध्यापि तावानेव समय उपलक्षणीयः।विशिष्य क्षणनियमस्त्ववहितैः करणीय इति वदन्ति।अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्वोक्तन्यायेन

———

मिश्रैरुत्तेजकत्वोपगमादित्यादि दूषणं द्रष्टव्यम्। उत्सर्गतः बाधकं विना।तेनानुमित्सोत्तरं यत्र परामर्शविरोधिज्ञानापसरणक्रमेण चिरकालोत्तरं परामर्शोत्पादस्तत्र सिद्धिदशायां न योग्यता अत एव वक्ष्यति फलबलेनेति। तावानेव काल इति। सेत्यनुषज्यते। नन्वेतादृशकालस्योत्तेजकत्वे किं मानमत आह फलेति। ननु यत्रानुमित्सोत्तरं परामर्शस्तत्रत्यकालानामुपादाने यत्र सिद्ध्यात्मकपरामर्शोत्तरमनुमित्सा तत्रानुमितिर्न स्यात्तत्रत्यकालानामनुत्तेजकत्वादत आह अथ वेति। उपलक्षित इति। तथा चानुमित्सानाशाधिकरणतत्तत्कालोऽनुमित्सा च द्वयमप्युत्तेजकमित्याशयः। तावानेवेति। सिद्धिनाशोत्तरमपि यावत्कालमध्येऽनुमितिर्नोत्पद्यते तावान्काल इत्यर्थः। ननु क्रियात्मकानां यावत्समयानामभावस्य सर्वदैवात्मनि सत्त्वान्नोक्तयोग्यताविवक्षयाप्यनुमित्सानाशोत्तरमनुमितेः सम्भव इत्यत आह विशिष्येति। तथा च जन्यमात्रस्य कालोपाधितया आत्मसमवेतं तत्तज्ज्ञानादिकमेव तादृशसमयो वाच्य इत्यदोषः।अवहितैरिति भावे क्तः। तेनावधानैरित्यर्थः। सकर्मकस्यावपूर्वकस्य धाधातोः पचत्यादेरिव कर्तरि क्तस्याऽव्युत्पन्नत्वादिति ध्येयम्।अनुमित्साव्यक्तीनामिव तन्नाशाधिकरणक्षणानामप्युत्तेजकविधया पक्षतायां निवेशो गौरवं विनाऽनुमित्सामनुमित्युत्पादस्य सन्दिग्धत्वादित्यस्वरसो वदन्तीत्युक्त्या सूचितः। उत्तानास्तु द्वे द्रव्ये इत्यादिलौकिकप्रत्यक्षान्यथानुपपत्त्याऽपेक्षाबुद्धीनामिवानुमित्सानाशोत्तरसिद्धि-

साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा यत्र वा साध्यतद्व्याप्यधर्मताद्दशव्याप्यधर्म्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यवत्त्वानुमित्योरिष्टसाधनतायाश्चैकं स्मरणं ततस्तयोरनुमित्सा ततः साध्यतद्व्याप्यवत्त्वानुमितिस्तत्र तदनन्तरमनुमितिप्रसङ्गः योग्यताविवक्षणे तु सुतरामेवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशे-

---

शोत्पन्नतत्तदनुमित्यन्यथानुपपत्त्या प्रागुत्पन्नसिषाधयिषाव्यक्तीनामेव त्रिचतुःक्षणावस्थायित्वं कल्पयितुमुचितं विरोधिविशेषगुणानां नाश्यनाशकभावस्य विशेषत एव विश्रामात् द्वितीयक्षणे विनाशसामग्र्यनावश्यकत्वादिति प्राहुः। साध्यनिर्णयेति । साध्यनिर्णयत्वप्रकारकेच्छानन्तरमित्यर्थः। पूर्वोक्तन्यायेन अनुमित्साप्रागुत्पन्नविशेषणज्ञानादिक्रमेण। प्रत्यक्षमिति । तत्र तदनन्तरमनुमितिप्रसङ्ग इति परेणान्वयः। तथाविधप्रत्यक्षस्य विशिष्टानुभवतया तज्जनकविशेषणज्ञानादिकल्पने गौरवादाह स्मरणं वेति। ननु यद्यदिच्छासत्त्वे सिद्धिदशायामनुमितिर्जायते तत्तदिच्छाव्यक्तीनामेवोत्तेजकतया पक्षतायामन्तर्भावात्साध्यनिश्चयत्वप्रकारकेच्छायाः क्वापि पक्षतायामनिवेशान्नातिप्रसङ्ग इत्यत आह यत्र वेति। यत्र साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यधर्मव्याप्यवांश्च पक्षः पक्षे साध्यानुमितिस्तद्व्याप्यवत्तानुमितिश्चेष्टसाधनमित्येकं स्मरणमित्यर्थः। अत्रानुमित्सादशायामनुमितेर्वारणार्थं साध्यवत्त्वं निवेशितं मानसत्वावच्छिन्नं प्रत्येवेच्छासामग्र्याः प्रतिबन्धकत्वमते तत्रानुमितेर्वारणासम्भवात्। साध्यव्याप्यवत्त्वस्य तद्व्याप्यधर्मान्तरवत्त्वस्य च निवेशोनुमित्सोत्तरं साध्यतद्व्याप्यवत्त्वयोरनुमित्यर्थम्, अन्यथा परामर्शविरहेणोत्तरकालं साध्यानुमित्यापत्त्यसम्भवात्, इष्टसाधनत्वं पुनरनुमित्सायाः सामग्रीसम्पत्त्यर्थं निवेशितमिति द्रष्टव्यम् । तयोरिति। साध्यतद्व्याप्ययोरित्यर्थः। अनुमितिप्रसङ्गः। तत्तदिच्छाव्यक्तिसत्त्वे सिद्धिदशायामनुमित्युत्पादेन तस्या अप्युत्तेजकत्वादिति भावः । मिश्रमतेप्याह योग्यतेति। सुतरामिति। तत्रानुमितिप्रसङ्ग इत्यन्वयः। अनु-

षणम् । पक्षसाध्यभेदेन च पक्षताया भेदात् पृथक् पृथगेव कार्य्य-
कारणभावः । तथा च यत्र सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता
तत्र सिद्ध्यभावमात्रं कारणं न तु तत्रेच्छानिवेशोऽपि, गौरवात्

———

मित्सानाशेऽप्यनुमितिमङ्गीकर्तुरनुमित्सासम्भवे सुतरां तदापत्तिस-
म्भवादिति भावः । तदिच्छेति । यद्यदिच्छाव्यक्तिरुत्तेजिका स्ववि-
षयसिद्ध्यभावविशिष्टत्वं तद्विशेषणमित्यर्थः । यद्यपि एवमपि यत्रो-
क्तस्थल एव साध्यानुमितिद्वयेष्टसाधनतागोचरस्मरणात्साध्यानुमि-
तिद्वयप्रकारानुमित्सा तत्रैकानुमित्यनन्तरं साध्यानुमित्यन्तरं न स्यात्
प्रथमानुमित्युत्पादनैवानुमित्सायाः स्वविषयसिद्ध्युपहितत्वात् । ता-
दृशेच्छायामुक्तविशेषणाप्रक्षेपेपि यत्र प्रात्यक्षिकसिद्ध्युत्तरं वन्ह्यनु-
मितित्वप्रकारेणैव वन्हिप्रत्यक्षगोचरा विसंवादिनीच्छा तत्र वन्ह्यनु-
मितिर्न स्यात् अनुमित्सायाः स्वविषयीभूतप्रात्यक्षिकसिद्ध्युपहि-
तत्वेन तदनुपहितत्वविशिष्टानुमित्साविरहसहकृतायाः सिद्धेः
सत्त्वात् । न च येन रूपेण सिद्धेस्तादृशेच्छाविषयत्वं तद्रूपावच्छिन्न-
सिद्ध्यभाववैशिष्ट्यं विवक्षितं तथा च वन्ह्यनुमितित्वावच्छिन्नाभा-
ववैशिष्ट्यस्य तदिच्छाव्यक्तौ सत्त्वान्न दोष इति वाच्यम् । यत्र पक्षे
यस्य साध्यस्य प्रत्यक्षं कदा चिदपि न जातं तत्पक्षकतत्साध्यकप्रत्य-
क्षाद्यतिरिक्तं ज्ञानं जायतामितीच्छाया अनुत्तेजकत्वापत्तेः येन
रूपेण यत्रेच्छाविषयत्वं तादृशस्य तत्पक्षकतत्साध्यवत्ताप्रत्यक्ष-
भिन्नज्ञानत्वस्याखण्डस्याप्रसिद्धेः । तथाप्युत्तेजकीभूतयद्यदि-
च्छाव्यक्तौ यादृशयादृशसिद्धिः प्रतिबन्धिका तादृशतादृश-
सिद्ध्यनुपहितत्वं तत्तदिच्छाविशेषणम् । तेन यत्पक्षकयत्साध्यकप्रत्य-
क्षमप्रसिद्धं तत्रापि तादृशप्रत्यक्षभिन्नज्ञानत्वप्रकारकेच्छायां तत्पक्ष-
साध्यकानुमितिरेव प्रतिबन्धिकास्तीति तदनुपहितत्वमेव तदिच्छा-
यां विशेषणमित्यदोषः । ननु यत्पक्षसाध्यकानुमित्सा कस्यापि नो-
त्पन्ना तत्र सिद्ध्यभावत्वमपेक्ष्य निरुक्तसिद्ध्यभावत्वेन हेतुत्वं गौर-
वग्रस्तमत आह पक्षसाध्येत्यादि । यत्रेति । ययोः पक्षसाध्ययोरि-
त्यर्थः । सिद्ध्यभावमात्रमिति । गौरवस्य प्रामाणिकत्वमपाकरोति

प्रयोजनाभावाच्च। तेन यत्पक्षकयत्साध्यकानुमितौ कस्यापीच्छा न जाता तत्रोक्तिसाधारण्यमात्रसम्पादनायेश्वरेच्छानिवेशनायासो नोपादेयः। यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरह-

———

प्रयोजनेति। इदमुपलक्षणम्। यत्र पक्षे साध्यवत्ताज्ञानोत्तरं कदाप्यनुमितिर्नोत्पन्ना तत्र साध्यवत्ताज्ञानाभावमात्रं कारणं निश्चयत्वमपि न निवेशनीयम्। एवं यत्रैकविधानुमित्साया उत्तरमनुमितिस्तत्र तादृशानुमित्सैव पक्षता तथा यत्पक्षसाध्यकपरामर्शकालीनसिद्धिदशायामवश्यमनुमित्सा तत्र पक्षता नानुमितिहेतुरिति द्रष्टव्यम्। यत्तु यत्पक्षसाध्यकानुमितिस्थले परामर्शदशायां नियमतः सिद्ध्यभावस्तत्र सिद्ध्यभावोऽपि न हेतुरिति। तन्मन्दम्। तादृशस्थले मानाभावात्। योगिनामेव परामर्शदशायामवश्यं सिद्धिसंभवेन तदभावस्याहेतुत्वे तेषामेव सर्वदानुमितिप्रसङ्गादिति ध्येयम्। मिश्रमतमाक्षिपन्नाह तेनेति। सर्वत्र पक्षतायामनुमित्सानिवेशस्य निष्प्रयोजनकत्वेनेत्यर्थः। धात्वर्थसमानकर्तृकेच्छायामेव सनो विधानादनुमितिगोचराया अपीश्वरेच्छाया अनुमातृनिष्ठत्वाभावेन सिषाधयिषाशब्देन बोधयितुमशक्यत्वादायास इत्युक्तम्। सिषाधयिषानाशेऽपि द्वित्रिक्षणाभ्यन्तरं सिद्धिसत्त्वेऽनुमितेः सम्पादकं सार्वभौमोक्तप्रकारमुपन्यस्यति यत्त्विति। सिषाधयिषाविरहविशिष्टो यः स्वक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिको यो यस्तद्भिन्ना या सिषाधयिषाविरहविशिष्टा सिद्धिस्तस्या अभावः पक्षता इत्यर्थः। अत्रानुमित्सानाशकालोत्पन्नसिद्ध्यात्मकपरामर्शादनुमित्युत्पत्त्यर्थं भिन्नान्तं सिद्धिविशेषणम्। सिद्धिमात्रस्यैव प्रायशः स्वक्षणोत्तरयत्किञ्चित्क्षणोत्पत्तिकानुमितिकतया तद्भिन्नायाश्चरमसिद्धेरभावस्येदानीं सिद्ध्यात्मकपरामर्शस्थलेऽपि सत्त्वादनुमित्यापत्तिरत उक्तमव्यवहितेति। सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरत्वं च सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे स-

ति तादृशस्वसमयध्वंसाधिकरणत्वम् । तत्र स्वसमयध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तादृशसमयध्वंसाधिकरणत्वमित्युक्तौ यत्र क्रमेणानुमित्सासिद्धिपरामर्शानुमितयस्तत्र सिद्ध्युत्पत्तिकालपर्यन्तस्थायिनमनुमित्सापूर्वकालोत्पन्नस्थूलकालोपाधिमादाय परामर्शक्षणेऽपि पक्षताविरहप्रसङ्गः सिद्ध्यधिकरणतादृशोपाधेरनुमित्सापूर्वकालाद्यवच्छेदेन सिषाधयिषाविरहविशिष्टतयाऽनुमित्साविरहविशिष्टनिरुक्तस्वसमयाव्यवहितोत्तरत्वस्य परामर्शक्षण एव पर्य्यवसानात्तदानीं चानुमित्यनुत्पत्त्या तत्सिद्धेरपि निरुक्तानुमितिकभिन्नतया अनुमितेः प्रतिबन्धकत्वापत्तेः प्रथमक्षणपदम्। तथा च तत्र सिषाधयिषाविरहविशिष्टः स्वक्षणः परामर्शोत्पत्तिक्षण एवेति तदव्यवहितोत्तरोत्पत्तिकानुमितिकत्वान्न सा सिद्धिर्विरोधिनीत्यदोषः। सत्यन्तमात्रोक्तौ च सिद्धिमात्रस्यैव प्रायशः स्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणीभूतस्वपूर्वकालोत्पत्तिकानुमितिकतया तद्भिन्नसिद्धेरप्रसिद्धिः स्यादतः स्वसमयध्वंसाधिकरणत्वदलम् । यत्र क्रमेण सिद्धिपरामर्शौ तत्रानुमितिप्रसङ्गः परामर्शपर्यन्तस्थायिनः प्रहरादिरूपस्थूलकालोपाधेर्निरुक्तस्वक्षणाव्यवहितोत्तरतया सिद्धिपूर्वदण्डाद्यवच्छेदेनानुमित्युत्पत्तिमत्तया च सिद्धेः स्वक्षणाव्यवहितोत्तरकालोत्पत्तिकानुमितिकत्वेनाविरोधित्वादतो द्वितीयक्षणपदम् । न च स्थूलकालोपाधेरेव स्ववृत्तियावद्ध्वंसविशिष्टतादशायां क्षणत्वादुक्तदोपतादवस्थ्यम् । यदुपाध्यवच्छिन्नस्याव्यवहितोत्तरक्षणत्वं तदवच्छेदेनानुमित्युत्पत्तिमत्त्वस्य विवक्षितत्वात् क्षणिकान्त्यशब्दानामतिरिक्तपदार्थस्य वा क्षणत्वमते यथाश्रुतार्थस्यैव सम्यक्त्वाच्च । उत्पत्तिपदानुक्तौ एकानुमित्युत्पत्त्यनन्तरमनुमित्यन्तरापत्तिः पूर्वानुमितेः स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वेन तदन्यसिद्धेरभावादतस्तदुपात्तम्। न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्वमेव प्रवेश्यतामुत्पत्तेः स्वेतरत्वापेक्षया गुरुत्वादिति वाच्यम् । यत्र साध्यस्यानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मिका एकानुमितिः ततः साध्यानुमित्यन्तरं तत्र साध्यानुमित्यन्तरप्रसङ्गात् । अनुमितिस्तु स्वसमानाधिकरणप्रकृतपक्षसाध्यविषयिणी ग्राह्या । नातः पुरुषान्तरीयानुमित्यादिकमादायातिप्रसङ्गः । स्वक्ष-

विशिष्टायास्तस्या अभावः पक्षता । अथ तृतीयक्षणव्यवधायक-द्वितीयक्षण एवाव्यवहितत्वपर्य्यवसानाद्यत्राविरलक्रमेण सिद्धिसि-षाधयिषानुमितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयसिषाध-यिषाविरहो विशेषणमस्तु सिद्धेः, प्राथमिकस्तु स्वक्षणस्य किम-र्थमिति चेत् । यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानु-मितयस्तत्र तृतीयक्षणे पक्षतासम्पत्त्यर्थमिति। तन्न । यत्रानुमित्सा-

———

णाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नस्य प्रागुत्पन्नस्य व्याप्ति-स्मरणादेः परामर्शमात्रस्थले सत्त्वात्तत्र पक्षतासम्पत्त्यर्थं सिद्धिपद-मिति भावः । ग्रन्थलाघवार्थमन्तिमस्य सिषाधयिषाविरहपदस्य व्यावृत्तिमभिदधान एव प्रथमस्य प्रयोजनं पृच्छति अथेति । तृतीय-क्षणेति । तृतीयक्षणस्य व्यवधायकेत्यर्थः । सिद्धीति । परामर्शात्म-कसिद्धीत्यर्थः । सम्पत्तय इति।अन्यथा स्वक्षणाव्यवहितोत्तरक्षणोत्प-त्तिकानुमितिकभिन्नसिद्धेः सत्त्वात्तत्र पक्षता न स्यादिति भावः । द्वितीयो द्वितीयसिषाधयिषापदेन प्रत्याय्यः । सिषाधयिषाविरहस्यै-कत्वेन द्वितीयत्वायोगात्।एवमग्रेपि।प्राथमिकस्त्विति ।सिषाधयिषा-विरह इत्यनुषज्यते।स्वक्षणस्येति।विशेषणमित्यनुषज्यते । यद्यपि सि-षाधयिषाविरहविशिष्टं यत्स्वं तदधिकरणक्षणाव्यवहितोत्तरेत्यादि-क्रमेण स्वस्यापि विशेषणत्वमनुमित्साविरहस्य सम्भवति, तथापि स्वस्मिन् सिषाधयिषाविरहवैशिष्ट्यस्य सामानाधिकरण्यरूपस्य प्रवेशे गौरवात् इत्याशयेन स्वक्षणस्येत्युक्तम् । यत्रेत्यादि।सिषाधयि-षासिद्ध्योर्व्युत्क्रमेणानुमितिप्राक्काले सिद्धिसामान्याभाव एव सम्भ-वत्यतः क्रमेणेत्युक्तम् । सिद्धेरनुमित्यात्मकत्वेऽनुमित्सायाः स्वविष-यसिद्ध्युत्पादेन चरितार्थतयोत्तरकालमनुमितिर्न कस्यापि संमता इति व्यर्थं तत्र पक्षतासम्पादनमतः प्रात्यक्षिकपदं पक्षतासम्पत्त्यर्थ-मिति ।अन्यथा तत्र स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकाभिन्नायाः सि-षाधयिषाविरहविशिष्टसिद्धेः सत्त्वादनुमितिर्न स्यादिति । इत्थं च तत्र सिद्धेः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्प-

नाशकाले भासक्षिकी सिद्धिरथ च परामर्शानुमिती तत्र पक्षताविरहप्रङ्गात् । अथ प्रथमक्षणमपेक्ष्य द्वितीयस्येव द्वितीयमपेक्ष्य तृतीयस्याप्यव्यवहितोत्तरत्वं स्वध्वंसाधिकरणकालध्वंसानधिकर-

———

सिकानुमितिकत्वात्तदन्यसिद्ध्यभावस्य सत्त्वान्न पक्षताहानिः । न च सिषाधयिषाविशिष्टस्यापि सिद्धिक्षणस्य घटाद्यवच्छेदेन सिषाधयिषाविरहवत्त्वादुक्तदोषतादवस्थ्यम् । स्वावच्छेदकशरीरावच्छेदेन स्वक्षणे सिषाधयिषाविरहवैशिष्ट्यस्य विवक्षितत्वादिति भावः । यत्र सिषाधयिषाघटादीच्छासिद्ध्यात्मकपरामर्शानुमितयः क्रमेण जाताः तत्रेच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नायाः सिषाधयिषाविशिष्टायाः सिद्धेः सत्त्वात् अनुमितिर्न स्यादत इच्छामपहाय सिषाधयिषापर्यन्तमनुश्रुतम् । एवं घटेच्छासिद्ध्यात्मकपरामर्शानुमितिवारणाय द्वितीयसिषाधयिषायाः प्रवेश इति भावः । प्रसङ्गादिति । द्वित्रिक्षणाद्यन्तरितानुमित्सास्थलेप्यनुमितिस्वीकारेण इष्टापत्त्यसम्भवादिति भावः । उक्तदोषं निरसितुमाशङ्कते अथेति । प्रथममित्यादि । तथा च स्वसमयध्वंसाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वसमयध्वंसाधिकरणत्वमेवाव्यवहितोत्तरत्वं वाच्यं तच्च तृतीयक्षणेऽनुमित्युत्पादेऽप्यस्तीति न पक्षताहानिः । स्वक्षणेत्यत्र क्षणपदं समयमात्रपरं क्षणत्वपर्यन्तस्य निष्फलत्वादिति भावः । लाघवादाह स्वध्वंसेत्यादि । स्वोत्तरप्रहराद्युत्पन्नानुमितिकासिद्धिदशायां पक्षतावारणाय सत्यन्तदलम् । सिद्धिद्वितीयक्षणस्यापि विषयितासम्बन्धेन सिद्धिध्वंसाधिकरणीभूतातीतज्ञानादेर्ध्वंसाधिकरणत्वात् कालपदम् । स्वपूर्वप्रहराद्युत्पन्नानुमितिकसिद्धिदशायां तद्वारणाय स्वाधिकरणेत्यादिविशेष्यदलम् । कालपदोपादानात्कालिकसम्बधेनाधिकरणत्वलाभस्तेन सिद्धेः पूर्वप्रहरादेर्विषयितया सिद्ध्यधिकरणीभूतस्यातीतज्ञानादेर्ध्वंसाधिकरणत्वेपि नोक्तदोषः । स्वाधिकरणत्वमात्रोक्तौ सिद्धिप्राक्कालवारणसम्भवेप्यनुमित्युत्तरमनुमितेर्वारणार्थं स्वाधिकरणकालध्वंसाधिकरणत्वपर्यन्तोपन्यासः, अन्यथाऽनुमित्यात्मकसिद्धेः

णत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वं वा तादृशाव्यवहितोत्तरत्वं वाच्यं तथा च यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र प्रथमे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टान्तं द्वितीयन्तु सिद्धेस्तत्रैव द्वितीयक्षणे पक्षतासम्पत्तये, यदि पुन-

———

स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणीभूतो यः स्वोत्पादक्षणस्तदुत्पत्तिकानुमितिकत्वेन तद्भिन्नसिद्ध्यभावस्य सत्त्वादनुमित्यन्तरापत्तेः । एवं स्वाधिकरणत्वमात्रस्य विशेष्यत्वे यत्रानुमित्सानाशक्षणे इत्याद्युक्तदोषनिरासोपि न स्यादिति ध्येयम् । नन्वेवं प्रागुक्तसिद्धिद्वयस्य द्वित्रिक्षणसाधारणनिरुक्तस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया तदन्यसिद्ध्यभावस्वरूपायाः पक्षतायाः सहजत एव सत्त्वात् सिषाधयिषाविरहद्वयोपादानं व्यर्थमत आह तथा चेति । वारणायेति । तत्रत्यसिद्धेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकनुमितिकत्वेपि सिषाधयिषाविरहविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणस्तदुत्पत्तिकानुमितिकासिद्ध्यन्तरभिन्नतया विरोधित्वादिति भावः । स्वक्षणस्य विशेषणत्वे तद्दोषतादवस्थ्यादाह उत्तरक्षणस्येति।अनुमित्युत्तरक्षणपर्य्यन्तस्थायिस्थूलकालोपाधेरपि निरुक्तस्वाव्यवहितोत्तरकालत्वादेकानुमित्यनन्तरमन्यानुमितेर्वारणार्थं द्वितीयक्षणपदस्यावश्यकत्वादुत्तरकालस्येति नोक्तम्। द्वितीयं त्विति । विशिष्टान्तमित्यनुषज्यते । सिद्धेरिति । विशेषणमित्यनुषज्यते । सम्पत्तये इति । अन्यथानुमित्साशून्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नसिद्धेः सत्त्वात्तृतीयक्षणेऽनुमितिर्न स्यादिति भावः । न चैवं यत्र परामर्शात्मकसिद्धेरव्यवहितक्षणे तद्धर्मिकसाध्यवत्त्वांशेऽप्रामाण्यग्रहानन्तरं चानुमितिः तत्र तादृशाप्रामाण्यग्रहोत्पत्तिक्षणेऽनुमित्यापत्तेः तत्र सिद्धिव्यक्तेः सिषाधयिषाविरहविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणः तदुत्पत्तित्वेन तदन्यसिद्धेः प्रागसत्त्वादिति वाच्यम् । अप्रामाण्यग्रहाभावविशिष्टतत्तत्सिद्धिव्यक्तित्वेनापि पक्षताबहिर्भावेणानुमितिविरोधित्वान्तरस्य वक्तव्यत्वादिति भावः । यद्यपि तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे स्वाव्यव-

रिच्छाजनिका सामग्री प्रतिबन्धास्यनुमिति तदानुमित्यव्यवहितपू-
र्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षतेति चेत् । तादृशसिद्धीनां

---

हितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नाभावस्यैव सम्यक्त्वात्सिद्धिपदं
व्यर्थं परामर्शहेतुभूतस्य व्याप्तिस्मरणादेर्निरुक्ताव्यवहितोत्तरक्षणोत्प-
त्तिकानुमितितयैवाप्रतिबन्धकत्वात्, एवं च सिषाधयिषाविरहद्वयो-
पादानमप्यफलं यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्रानुमित्सा-
जनकस्य फलेच्छादेरेव स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्न-
स्य सत्त्वादनुमित्सोत्पत्तिक्षणेऽनुमित्यसम्भवात्। न च जातिध्वंसाद्य-
प्रसिद्ध्या निरुक्तस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नस्यात्म-
त्वादेः सत्त्वात्परामर्शमात्रादप्यनुमितिर्न स्यादतः सिद्धिपदमिति
वाच्यम् । एतावतापि तादृशानुमितिकभिन्नसविषयकाभावस्यैव स-
म्यक्त्वे साध्यवत्त्वनिश्चयात्मिकायाः सिद्धेः प्रवेशानौचित्यात् तथा-
पि स्वत्वस्याननुगतत्वात्तादृशानुमितिकव्यक्तीनां तत्तद्व्यक्तित्वेन
भेदा निवेश्याः तत्र स्वपदेन सिद्धिव्यक्तय एव धर्तव्या न तु व्यक्त्य-
न्तराणि तावद्भेदप्रवेशे गौरवात् तथा च स्वाव्यवहितोत्तरक्षणोत्प-
त्तिकानुमितिकसिद्धिभिन्नस्य परामर्शादेः सत्त्वेऽप्यनुमितिर्न स्याद-
तः सिद्धिपदम् । न चैवं कार्य्योत्पादस्य कारणतावच्छेदकाघटक-
त्वेन वा कार्य्योत्पादादिकं कारणतावच्छेदककोटौ निविशते इत्य-
ग्रिमग्रन्थस्याऽभुक्तवान्तत्वापत्तिः, तत्रत्यादिपदेन स्वक्षणाव्यवहि-
तोत्तरक्षणोत्पत्तिकानुमितिकतत्तद्व्यक्तिप्रतियोगिकभेदकूटस्याप्युप-
ग्रहात् । तथा च क्रमिकसिद्धिसिषाधयिषानुमितिस्थले प्रथमक्षणे
पक्षतावारणार्थं विशिष्टान्तस्योत्तरक्षणविशेषणत्वध्रौव्ये द्वितीयमपि
विशिष्टान्तं तत्रैव द्वितीयक्षणे पक्षतारक्षणार्थमावश्यकमित्यस्मद्गु-
रुचरणाः। यत्तु स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसविषय-
काभावस्य पक्षतात्वे परामर्शादेरनुमितिहेतुता न स्यादित्येककार-
णपरिशेषापत्तिभिया सिद्धिपदमिति । तन्मन्दम् । यत्र जागरणाद्य-
क्षणे स्मरणात्मकपरामर्शादनुमितिस्तत्र परामर्शोत्पत्तिदशायामेव त-
दापत्तिप्रसङ्गेन परामर्शादनुमितिहेतुत्वस्यावश्यकत्वात् तत्रत्यप-

रामर्शपूर्ववर्त्तिनां निखिलसविषयकानां स्वाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेनाविरोधित्वादिति। केचित्तु अपेक्षाबुद्ध्यात्मकपरामर्शचतुर्थक्षणेऽनुमित्यर्थे सिद्धिपदमन्यथा तादृशपरामर्शस्यैव निरुक्तानुमितिकभिन्नसविषयकत्वेनाप्रतिबन्धकत्वापत्तेरित्याहुः। तन्मन्दम्। चतुर्थक्षणे द्वित्वादिप्रत्यक्षस्यानुत्पादेन तादृशपरामर्शस्यापेक्षाबुद्धित्वे मानाभावात्। अन्यथानुमित्सोत्तरं सिद्ध्यात्मकस्यैवापेक्षाबुद्ध्यात्मकपरामर्शस्य चतुर्थक्षणे सिद्धिनिवेशेऽप्यनुमित्यभावप्रसङ्गात्। ननु यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र प्रथमक्षणे पक्षतासत्त्वेपीच्छासामग्र्याः प्रतिबन्धकत्वादेवानुत्पत्तिसम्भवात्प्रथमविशिष्टान्तदलं व्यर्थमत एव द्वितीयमपि तथेत्यत आह यदि पुनरिति। सर्वत्रेच्छाजनकीभूतज्ञानस्येच्छोत्पत्तिदशायां साक्षात्कारप्रसङ्गेन मानसत्वावच्छिन्नं प्रत्यक्षसामान्यं वा प्रतीच्छासामग्र्याः प्रतिबन्धकत्वेऽप्यनुमितिं प्रति तस्यास्तथात्वे मानाभावात्। न चेच्छासामग्रीदशायां स्मृतिशाब्दबोधाद्यनुदयाल्लाघवेन जन्यज्ञानत्वावच्छिन्नं प्रत्येव तस्याः प्रतिबन्धकत्वमतस्तत्सत्त्वेऽनुमित्यसम्भव इति वाच्यम्। सत्यामपीच्छासामग्र्यां पश्येयं स्पर्शेयं शृणुयां शाब्दयामीत्यादीच्छादशायां जन्यज्ञानोत्पादेन चाक्षुषत्वस्पार्शनत्वश्रावणत्वशाब्दत्वादिप्रकारकेच्छाविरहाविशिष्टेच्छासामग्रीत्वेन चाक्षुषत्वस्पार्शनत्वशाब्दत्वादिप्रत्येकधर्मावच्छिन्नं प्रत्येव प्रतिबन्धकतयाऽनुमितिमन्तर्भाव्येच्छासामग्र्याः प्रतिबन्धकत्वाकल्पनात्। जन्यज्ञानत्वावच्छिन्नं प्रति तत्तदिच्छाविरहकूटविशिष्टेच्छासामग्रीत्वेन विरोधितायामिच्छासामग्रीसत्त्वेपि पश्येयमितीच्छातश्चाक्षुषस्येव स्पार्शनस्य शाब्दबोधादेर्वा प्रसङ्गात् जन्यज्ञानत्वस्याविशिष्टत्वात्। तथा चानुमिताविच्छासामग्र्या इवेच्छायामप्यनुमितिसामग्र्या विरोधित्वं सुवचं विनिगमकाभावेनैकशेषस्य दुष्करत्वादित्याशयेन यदीत्युक्तम्। [यत्तु अनुमितिसामग्र्यपेक्षयेच्छासामग्री लघुरिति सैवानुमितौ प्रतिबन्धिका न त्विच्छायामनुमितिसामग्री गुरुत्वादिति। तत्तुच्छम्। तथासत्यनुमित्साविरहविशिष्टाया एवेच्छासामग्र्या अनुमितिविरोधित्वं वाच्यमन्यथाऽनुमित्साकालीनायामपीच्छासामग्र्यामनुमित्यभावापत्तेः। एवं चानुमित्साकालीनानुमितिसामग्रीदशायामिच्छानुत्पत्त्यर्थमिच्छासामान्यं प्रति त्वयानुमित्साकालीनानु-

मितिसामग्रीत्वेनावश्यं विरोधित्वं वाच्यमित्यनुमितिसामग्र्या गु-रुत्वस्याकिञ्चित्करत्वादिति ध्येयम् ।] यद्यपि स्वाव्यवहितोत्तरक्षणो-त्पत्तिकानुमितिकसिद्धिभिन्नसिद्ध्यभावस्यैव प्रक्रान्तत्वात्तदुपादा-तुमुचितं गौरवस्य वक्ष्यमाणलक्षणेऽपि अविशिष्टत्वात्, तथापि का-र्योत्पादस्यैव कार्याव्यवहितपूर्वत्वस्यापि कारणतावच्छेदकत्वं नि-रसितुं तदन्तर्भावेण पक्षतां निर्वक्ति अनुमित्यव्यवहितेति । प्रकृतप-क्षसाध्यकस्वसमानाधिकरणतत्तदनुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभि-न्नसिद्ध्यभावः प्रकृतसाध्यकानुमितौ पक्षतेत्यर्थः । प्रकृतपक्षसा-ध्यकानुमितिप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वघटितस्य सामान्यतस्तादृशानुमित्यव्यवहितपूर्वत्वस्याप्रसिद्धत्वात्तत्तदिति । न च प्रकृतपक्षसाध्यकानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वरूपं सामान्यतस्तादृशानुमित्यव्यवहितपूर्वत्वं सुवचमिति वाच्यम् । त-स्याप्युत्पत्त्यन्तर्गतस्वत्वघटितत्वेन विशेषतो विश्रामात्।इत्थं च स्वस-मानाधिकरणतत्तदनुमित्यव्यवहितपूर्ववर्त्तित्वावच्छिन्नभेदकूटस्य घ-टकतया तत्र स्वपूर्ववर्त्तिसिद्धिकालीनानुमितिव्यक्तीनां निवेशः का-र्यो न तु सिद्ध्यसमानकालीनानुमितिव्यक्तयोऽपि निवेश्याः प्रयोज-नाभावाद्गौरवाच्चेत्यावेदयितुं प्रथमं सिद्धिपदम् । यत्तु प्रकृतपक्ष-साध्यकस्वसमानाधिकरणानुमितिसामान्याव्यवहितपूर्ववर्त्तित्वस्या-प्रसिद्ध्या तन्निवेशासम्भवात् वस्तुगत्या तादृशानुमित्यव्यवहितपू-र्ववर्ति यद्यत्स्वं तत्तद्भेदकूटस्यैव निवेश्यतया तत्र च सिद्धिभिन्नस्य मनःसंयोगादेः प्रतियोगिविधया प्रवेशे गौरवादतः सिद्धिपदमिति मतम् । तत्तुच्छम् । तथा सति कार्याव्यवहितपूर्वत्वस्यानिविष्टतया-ऽग्रे तत्कारणतावच्छेदकत्वखण्डनस्योन्मत्तप्रलपितत्वापत्तेः । द्वितीयं तु सिद्धिपदं तादृशसिद्धिभिन्नस्य परामर्शमात्रस्य सत्त्वेऽप्यनुमिते-रुत्पत्त्यर्थमन्यथा तस्यैव प्रतिबन्धकत्वापत्तेरिति भावः । प्रथमकल्पं दूषयति तादृशेत्यादि । तत्तद्व्यक्तित्वेनेत्यस्य सिषाधयिषाविरहवि-शिष्टेत्यादिः । तथा च सिषाधयिषाविरहविशिष्टतत्तत्सिद्धित्वाव-च्छिन्नाभावेत्यर्थः । यथाश्रुते यत्र क्रमेण सिद्ध्यात्मकपरामर्श-सिषाधयिषानुमितयस्तत्र सिषाधयिषाविरहविशिष्टो यः स्वक्षणा-व्यवहितोत्तरक्षणस्तदुत्पत्तिकानुमितिकभिन्नसिद्धेः सिषाधयिषा-दशायां सत्त्वादनुमित्यनापत्तेः इत्थं च सकलसिद्धाविव्याप्य-

तत्तद्व्यक्तित्वेन वाभावः कारणं निरुक्तरूपविशिष्टत्वेन वा। नाद्यः, अनन्तकार्य्यकारणभावप्रसङ्गात् तादृशसकलसिद्धौ अनुमित्साविरहविशेषणदानस्य वैयर्थ्यात् तत्तत्समयसम्बन्धव्यक्तीनां तत्तत्समयावच्छिन्नतत्तन्मनोयोगादीनां वा प्रतिबन्धकत्वप्रसङ्गाच्च। ना-

---

ग्रिमग्रन्थोपि सङ्गच्छत इति ध्येयम्। निरुक्तरूपेति। सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिषाधयिषाविरहविशिष्टसिद्धित्वेनैवेत्यर्थः। अनन्तेति। अवच्छेदकभेदेनैव कारणत्वस्य नानात्वात्। न च तत्तत्सिद्ध्यभावकूटत्वेनैकरूपेणैव हेतुत्वम्, अपेक्षाबुद्धिविशेषविषयत्वरूपस्य कूटत्वस्यापेक्षाबुद्धिव्यक्तीनां भेदेन नानात्वसम्भवादिति भावः। ननु प्रामाणिकानन्त्यं न दोषायेत्यत आह तादृशेति। परामर्शदशायां यस्यां सिद्धौ नानुमित्साविशिष्टत्वं तत्तत्सिद्धिव्यक्त्यनुमित्साविरहविशेषणस्य व्यर्थत्वादित्यर्थः। परामर्शसमानकालीनसिद्धिव्यक्तीनामभावस्य हेतुत्वे मानाभावाच्चेत्यपि द्रष्टव्यम्। ननु सर्वस्यां सिद्धौ न देयमेव तद्विशेषणमत आह तत्तत्समयेति। सिद्ध्यधिकरणतत्तत्क्षणेन समं सम्बन्धव्यक्तीनामित्यर्थः। ननु तत्तत्समयसम्बन्धस्य विरोधित्वे सिद्धिमत इव पुरुषान्तरस्याप्यनुमितिर्न स्यात्तादृशसम्बन्धस्याविशिष्टत्वादत आह तत्तत्समयावच्छिन्नेति। सिद्धिकालीनतत्तन्मनोयोगव्यक्तीनां स्थिरतया सिद्धिविगमेप्यनुमितिर्न स्यादतोऽवच्छिन्नान्तम्। सिद्धिमत इव जनान्तरस्यापि तत्तत्समयावच्छिन्नमनोयोगसत्त्वात्तस्याप्यनुमितिर्न स्यादतस्तदिति मनोयोगस्य विशेषणम्। मनोविशेषणत्वे तु तत्तत्समयावच्छिन्नतन्मनःप्रतियोगिकसंयोगस्यापि पुरुषान्तरे सम्भवात् सिद्धिमत इव तस्याप्यनुमित्यनापत्तेरिति भाव। न च तत्तत्सिद्धित्वेन प्रतिबन्धकत्वमपेक्ष्य तत्तत्समयावच्छिन्नतन्मनोयोगत्वेन प्रतिबन्धकत्वं गौरवादेव परित्याज्यमिति वाच्यम्। त्वया सकलसिद्धावनुमित्साविरहवैशिष्ट्यस्येव मयापि सर्वस्मिन्मनोयोगे तत्तत्समयावच्छिन्नत्वस्यानुपादेयतयोभयत्रापि दूषणस-

न्त्यः, सत्यपि परामर्शादौ कस्याश्चित्सिद्धेरनन्तरमनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात्। न वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्य्योत्पादादिकं कारणतावच्छेदककोटौ निविशते, तथा सति उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितो-

———

मांधानयोश्च साम्यादिति भावः। कस्याश्चिन्नेति। सिद्धेरनन्तरमनुमितिरित्यनुषज्यते। नियामकाभावादिति। नियामकालाभादित्यर्थः। विशिष्टाभावस्य विशेष्याद्यभावरूपतया निरुक्ताभावस्य विशेष्यीभूतसिषाधयिषाविरहविशिष्टसिद्धेरभावस्वरूपत्वे तादृशसिद्धिसत्त्वे कदाप्यनुमितिर्न स्यात्, स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वरूपविशेषणाभावरूपत्वे तु विवक्षितविवेकेनानुमित्युत्पादस्यैवानुमित्युत्पादप्रयोजकत्वे पर्य्यवसानादात्माश्रयादिति भावः। ननु मणिकारमते विशिष्टाभावस्यातिरिक्ततया तस्य सत्त्वासत्त्वमेवानुमितेरुत्पादानुत्पादनियामकं वाच्यमत आह न चेति। कारणसमाजाधीनं तत्तद्धर्मावच्छिन्नकार्यस्योत्पादादिकं तत्तद्धर्मावच्छिन्नकार्यस्य कारणतावच्छेदककोटौ न निविशते गुरुधर्मेणेव तादृप्येणापि जनकतायामन्यथासिद्धत्वादित्यर्थः। तेन ज्ञानोत्पत्त्यादिविशिष्टबुद्धौ ज्ञानोत्पत्त्यादिज्ञानत्वेन हेतुतायां कार्योत्पादस्यावच्छेदकत्त्वेपि ज्ञानोत्पत्तिविशिष्टबुद्ध्युत्पत्तित्वेनाऽप्रवेशान्न दोषः। आदिपदात्कार्याव्यवहितपूर्वत्वादेः स्वक्षणाव्यवहितोत्तरक्षणानुत्पन्नकार्यकान्यत्वस्य च परिग्रहः। कार्योत्पादादिघटितधर्मेण हेतुत्वे प्रतिबन्दिमाह तथासतीति। स्वक्षणाव्यहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिर्यस्य तादृशसविषयकत्वेनेत्यर्थः। कारणत्वं स्यादित्यग्रेणान्वयः। स्वक्षणाव्यवहितोत्तरतादृशानुमितिकस्य परामर्शस्यैव सत्त्वादनुमित्युत्तरमनुमितेर्वारणाय उत्पत्तिकालावच्छिन्नेति। स्वोत्पत्तिक्षणावच्छिन्नेति तदर्थः। उत्पत्त्यवच्छिन्नस्य घटादिज्ञानस्योत्तरमप्यनुमितिः स्यादतः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकेति। स्वक्षणेत्यत्र क्षणः समयमात्रं न तु क्षणत्वं निवेश्यं वैय्य-

त्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयत्वेन, स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयत्वेन, स्वक्षणाव्य-

---

र्थ्यात् । अनुमितेरपि स्वसमयाव्यवहितोत्तरीभूतस्वस्थितिक्षणपर्यन्तस्थायिप्रहराद्युत्पत्तिकानुमितिकतया ततोऽप्यनुमित्यन्तरापत्तिरतो द्वितीयं क्षणपदम् । अनुमितेरपि स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वात्तदुत्तरमनुमित्यन्तरस्य वारणाय उत्पत्तिपदम् ।न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्वमेव तदर्थं उच्यतामिति वाच्यम् । यत्र साध्यानुमितिद्वयं जायतामितीच्छया साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमित्युत्तरं साध्यमात्रस्यानुमितिस्तत्र साध्यस्यानुमित्यन्तरप्रसङ्गात् पूर्वानुमितेः त्रिक्षणस्थायित्वात्, तत्रोत्पत्तिः आद्यक्षणसम्बन्धः आद्यक्षणसम्बन्धत्वं च स्वाधिकरणसमयध्वंसानधिकरणत्वमात्रं न तु स्वाधिकरणत्वमपि प्रवेश्यं वैयर्थ्यादिति द्रष्टव्यम् । स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकपुरुषान्तरानुमितिकाद्घटादिज्ञानादनुमितेर्वारणाय स्वसमानाधिकरणेति । एकत्र पुंसि तादृशानुमितिकस्य द्वित्वस्य पुरुषान्तरेऽपि सत्त्वात्तत्रानुमितेर्वारणाय सविषयकेति । सिद्ध्यात्मकपरामर्शानुमित्सानुमितीनां क्रमिकत्वस्थले तादृशज्ञानासम्भवात् ज्ञानत्वापेक्षया गुर्वपि सविषयकत्वं निवेशितम् ।न चैतस्य स्वत्वद्वयघटितत्वादुक्तरूपेण हेतुतायां गौरवमिति वाच्यम् । स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिसामानाधिकरण्ये तात्पर्यादिति भावः । कार्योत्पादस्य कारणतावच्छेदकत्वे प्रतिबन्दिमुक्त्वा कार्याव्यवहितपूर्वत्वस्य तथात्वे प्रतिबन्दिमाह स्वसमानेत्यादि । अत्र तादृशानुमित्यव्यवहितपूर्वत्वं न तादृशानुमितिप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति तादृशानुमितिप्रागभावाधिकरणत्वरूपमप्रसिद्धत्वात् किं तु तादृशानुमितिक्षणोत्पन्नध्वंसप्रतियोगित्वं तथा च सिद्धिमात्रादनुमित्यापत्तिस्तस्यापि स्वसमानाधिकरणानुमित्युत्पत्तिक्षणोत्पन्नध्वंसप्रतियोगिप्रहरादिकालोत्पन्नत्वादतः क्षणपदम् । यत्र परामर्शेन स्वनाशक्षणेऽन-

वहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषय-
त्वेन वा, किं वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्त्तित्व-

———

मितिर्जन्यते तत्र द्वितीयक्षणेऽप्यनुमित्यापत्तिः परामर्शस्यैव स्वसमा-
नाधिकरणानुमित्यव्यवहितप्राक्क्षणावृत्तेरुत्पत्त्यवच्छिन्नस्य सत्त्वादु-
क्तमुत्पन्नेति। न च स्वत्वस्याननुगतत्वादुक्तरूपेण हेतुत्वमसम्भवी-
ति वाच्यम्। यत्त्वतत्त्वादेरिव स्वत्वस्याप्यनुगतत्वमङ्गीकृत्यैव दूष-
णोपक्रमात्। अन्यथा तद्व्यक्तित्वेन स्वपदार्थस्य प्रवेशे कार्योत्पा-
दादेर्गुरुत्वादेव कारणतायामप्रवेशसम्भवेनान्यथासिद्धिमुद्रया तदी-
यावच्छेदकत्वखण्डनस्योन्मत्तप्रलपितत्वापत्तेरिति भावः। आदि-
पदलभ्यस्य स्वक्षणाव्यवहितोत्तरक्षणानुत्पन्नकार्यकान्यत्वस्य कार-
णतावच्छेदकत्वप्रवेशे बाधकमाह स्वक्षणेत्यादि। स्वक्षणाव्यवहि-
तोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिर्येषां तदन्यसविषय-
कत्वेनेत्यर्थः। अत्राप्युत्पत्त्यवच्छिन्नत्वविशेषणं प्रवेशनीयमिति ना-
तिप्रसङ्गः। केचित्तु प्रागुक्तस्योत्पत्तिघटकस्वत्वघटितत्वेनानुगत-
त्वाभावादुक्तं स्वक्षणेत्यादि। न चैकानुमित्युत्तरमनुमित्यन्तरस्य
वारणार्थमस्यापि स्वोत्पत्तिकालावच्छिन्नत्वेन विशेषणीयत्वादननु-
गमतादवस्थ्यम्। स्वोत्पत्तिकालावच्छिन्नत्वेन स्वानुत्पत्तिक्षणाव-
च्छेद्यत्वाभावकूटवत्त्वस्य विवक्षितत्वादित्याहुः। तत्तुच्छम्। अनु-
गतस्वत्वमङ्गीकृत्यैव दोषोपक्रमात्। अन्यथा कार्योत्पत्त्याद्युपलक्षि-
तायास्तद्व्यक्तेरेव कारणतावच्छेदकत्वे कार्योत्पादादेरवच्छेदकत्व-
खण्डनस्यासङ्गतत्वापत्तेः पश्चाद्वक्ष्यमाणस्यापि स्वत्वगर्भत्वेन स-
न्दर्भविरोधापत्तेश्चेति दिक्। ननु सविषयकमात्रस्यैव प्रायशः स्वक्ष-
णाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणयत्किञ्चिदनुमिति-
व्यक्तिकतया तदन्यसविषयकस्य संसारिण्यभावात् परामर्शमात्रा-
दप्यनुमितिर्न स्यात्। तादृशक्षणानुत्पत्तिकस्वसमानाधिकरणानुमि-
तिसामान्यकभिन्नसविषयत्वेन कारणत्वे महागौरवमत आह किं
वेति। यत्तूक्तरूपेण हेतुतायामनुमितिसामान्योपधायकत्वं परामर्श-
स्य न स्याद्विनश्यदवस्थपरामर्शादनुमितिस्थले कथितरूपावच्छिन्नस्य

विशिष्टज्ञानत्वादिना कारणत्वं स्यात् । अव्यवहितोत्तरश्च द्वितीय एव क्षण इति नातिप्रसङ्गः । न चादिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादिविनाशस्तत्रोत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्यातथात्वादिति वाच्यम् । अनुमितिसामग्र्या विरोधिन्या विरहेण तदानीमुत्पन्नादनुव्यवसायादेरन्ततः संस्काराद्वा तत्सम्भवात्।

---

तस्यासत्त्वादत आह किं वेत्यादिकमिति । तन्न । स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन हेतुत्वोक्त्या पूर्वमेव परामर्शस्यानुमित्युपधायकतानियमस्य त्यक्तत्वात् तदाशङ्कने सन्दर्भविरोधापत्तेः । अत्रानुमितिपूर्ववर्त्तिनो ज्ञानस्यानुमितिदशायामपि सत्त्वादुत्तरकालमनुमितेर्वारणाय तादृशपूर्ववर्त्तित्वविशिष्टेत्युक्तं तथा च तदवच्छिन्नस्य प्रागसत्त्वान्न दोषः । ज्ञानत्वादिनेत्यादिना सविषयत्वभावनात्वादेः परिग्रहः । ननु प्रथमकल्पे तृतीयक्षणसाधारणस्य प्रागुक्ताव्यवहितोत्तरत्वस्य प्रवेशे व्याप्तिज्ञानमात्रादनुमितिः स्यात्तस्यापि परामर्शसम्पत्त्या स्वाव्यवहिततृतीयक्षणोत्पत्तिकानुमितिकत्वादत आह स्वाव्यवहितोत्तरश्चेति । तथा च स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वगर्भमेवाव्यवहितोत्तरत्वं निवेश्यमिति भावः । न चेति । वाच्यमित्यन्वयः । पूर्वोत्पन्नस्यैव परामर्शस्य स्थितिक्षणेनुमित्यव्यवहितपूर्वत्वविशिष्टस्य सम्भवात् किं वेत्यादिकल्पे दोषासम्भवादादिमेषु त्रिष्वित्युक्तम् । अतथात्वादिति । स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात् स्वसमानाधिकरणाव्यवहितपूर्वक्षणोत्पन्नत्वाभावात् स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकाभिन्नसविषयकत्वाभावाच्चेत्यर्थः । तदानीं विरोधिसिद्ध्यादेर्नाशदशायाम् । अनुव्यवसायादेरित्यस्य पंचम्यन्तस्य सम्भवादित्यनेन योजना । अनुव्यवसायादितोऽनुमितिसंभवादित्यर्थः। आदिना बाह्यप्रत्यक्षान्तराद्युपसंग्रहः । ननु यत्र परामर्शाविषयिण्या कामिनीजिज्ञासया परामर्शमात्रमुत्पाद्य नष्टं परामर्शोत्तरक्षणे तया प्रतिबन्धात् ज्ञानमात्रस्यैवानुत्पत्त्या पश्चादनुमितिर्न स्यादत आह अन्ततः संस्कारेति । अ-

संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव निरासात् । स्याद्वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणवृत्तित्वविशिष्टत्वेन वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृ-

---

न्ततो जीवनयोनिकृतेरसत्त्वेन च यत्र सर्वांश एवोपेक्षात्मक उक्तपरामर्शस्तत्र संस्कारस्यासम्भवस्तादृशस्थले मानाभावात् । अनुमित्यात्मककार्येणानुमितसंस्कारस्यान्यथानुपपत्त्याऽनुपेक्षात्मकस्यैव तत्र कल्पनादिनोऽप्यस्वरसाद्वा किं वेत्यादिकल्पस्यादृतत्वादिति भावः । ननु तादृशानुमितेः संस्कारजन्यत्वे स्मृतित्वापत्तिरत आह संस्कारजन्येति । जन्यत्वं समवायेन ग्राह्यं नातः संस्कारध्वंसे व्यभिचारः । प्रागेवशब्दः सुतरामर्थे निपातितः । निरासादिति । प्रत्यभिज्ञायां व्यभिचारादप्रयोजकत्वाच्च संस्कारजन्यत्वे स्मृतित्वानियमादिति भावः । ननूक्तप्रतिबंदिभयाद्भावनिष्ठकारणताया अवच्छेदकविधया कार्योत्पादादिकमनिवेश्यतामभावरूपायाः पक्षतायाः कारणतायां तन्निवेशे न किंचिदपि बाधकमतस्तत्रापि प्रतिबंदिमाह स्याद्वेति । तथासतीत्यनुषज्यते । ज्ञानमात्रस्यैव प्रायशो व्यधिकरणानुमित्यव्यवहितपूर्ववृत्तित्वात्तदन्यस्य प्रलयादेरभावः परामर्शविधुरेप्यात्मन्यस्तीति तत्रानुमितेर्वारणाय स्वसमानाधिकरणान्तम् । अनुमितिश्च पक्षसाध्यादिविशेषनियन्त्रिता ग्राह्या, तेनैकसाध्यानुमितिदशायां सिद्ध्यादिसत्त्वेपि नान्यसाध्यकानुमितेरुत्पादः । तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वलक्षणस्य वक्ष्यमाणाव्यवहितपूर्वत्वस्यानुमितिस्थूलकालेपि सत्त्वात्तद्वृत्तिसिद्धिसत्त्वेप्यनुमित्यापत्तेरतः क्षणेति । ननु यत्र सामग्रीवशात् साध्यतद्व्याप्ययोरनुमित्यात्मकपरामर्शः ततः साध्यस्यानुमित्यन्तरञ्जायतामितीच्छा ततोऽनुमित्यन्तरं तत्रानुमित्साकालेप्यनुमित्यापत्तिः पूर्वोत्पन्नानां सर्वेषामेव तदात्मगुणानां तादृशानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वेनाविरोधित्वादत आह स्वसमानेति । तथा चोक्तस्थले प्रथमानुमितिक्षणस्यैव तादृशाव्यवहितपूर्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टस्य परामर्शादेरेव विरोधिनः सत्त्वान्न दोष इति भावः । अनुमित्युत्पत्तिपर्य्यन्तस्यायिस्थूलकालो-

त्तित्वविशिष्टत्वेन वा प्रतिबन्धकत्वम्। तदव्यवहितपूर्वत्वञ्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्। न चात्र प्रथमे यत्र

———

पाधेरपि तादृशानुमित्यव्यवहितपूर्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टस्य परामर्शमात्रस्य सर्वेष्यनुमितिर्न स्यादतः क्षणपदम्। ननु तादृशानुमित्यव्यवहितपूर्वत्वं तादृशानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपमेवाग्रे वक्ष्यते न तु तादृशानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वरूपं तथासति सर्वेषामेव क्षणानां तादृशानुमित्युत्पत्त्यधिकरणीभूतस्थूलकालोत्पन्नध्वंसप्रतियोगितया निरुक्ताव्यवहितपूर्वत्वानाधिकरणत्वस्यैव दुर्लभत्वापत्तेः।एवं च तादृशानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमपेक्ष्य तादृशानुमित्युत्पत्त्यनधिकरणसमयोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टत्वेन विरोधित्वं युक्तं क्षणद्वयाप्रवेशेन पूर्वतो लाघवादित्याशयेनाह स्वसमानेति। अत्र तादृशसमयाव्यवहितपूर्वत्वं तादृशसमयोत्पत्तिकध्वंसप्रतियोगित्वमात्रं न तु तादृशसमयोत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वमाद्योत्पत्तेर्वैयर्थ्यान्निष्फलत्वाच्च। समयपदं त्वव्यवहितपूर्वत्वघटकोत्पत्तेः कालिकसम्बन्धेन वृत्तित्वलाभार्थमन्यथानुमितिपूर्वक्षणस्यापि तादृशानुमित्युत्पत्त्यनधिकरणबुद्ध्यादौ विषयित्वादिसम्बन्धेन वर्तमानोत्पत्तिको यो ध्वंसस्तत्प्रतियोगित्वेन तत्क्षणवृत्तित्वविशिष्टस्य परामर्शादेः प्रतिबन्धकतया स्वकालेप्यनुमित्यनापत्तेरिति ध्येयम्। नन्वनुमित्यव्यवहितपूर्वत्वं तदुत्पत्तिकध्वंसप्रतियोगित्वं तथा चातिपूर्वक्षणस्यापि अनुमित्युत्पत्त्यनधिकरणस्थूलकालोत्पत्तिकध्वंसप्रतियोगित्वात्तद्वृत्तित्वविशिष्टस्यापि सिद्ध्यादेरप्रतिबन्धकत्वापत्तिरत आह तदव्यवहितेति। तादृशानुमित्यव्यवहितपूर्वत्वं चेत्यर्थः। शेषकल्पे निरुक्ताव्यवहितपूर्वत्वस्याप्रविष्टतया सामान्यतोऽव्यवहितपूर्वत्वस्य निरूपणानौचित्यादिति ध्येयम्। न च जन्याभावत्वलक्षणध्वंसत्वस्य प्रवेशे वैयर्थ्यमभावान्तराणामुत्पत्तिविरहेणैव निरासादिति वाच्यम्। ध्वंसत्वनिरूपकप्रतियोगित्वलाभार्थं तदुपादानात्। अन्यथा सर्वेषामेव क्षणानामनुमित्यु-

सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले तत्पुरुषीयस्य कस्यापि धर्म्मस्य न विनाशोऽनन्तरं पुनरनुमितिः तत्र तदुत्पत्तिसमयेऽपि सा स्यात् तत्पूर्वकालीनानां सर्वेषां तादृश-

---

त्पत्तिक्षणोत्पत्तिकस्वभेदात्मकध्वंसान्तरप्रतियोगितयातिप्रसंगापत्तेः ध्वंसत्वस्याखण्डत्वमते वैयर्थ्याशंकानुत्पादाच्चेति भावः । न चेति।वा-क्यमित्यन्वयः । अत्र उक्तेषु मध्ये।प्रथम इति । अन्त्ययोस्तु कल्पयोस्तादृशानामित्यव्यवहितपूर्वत्वानधिकरणवृत्तित्वविशिष्टेन स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टेन च परामर्शेनैव प्रतिबन्धादनुमित्सोत्पादकालेऽनुमितेर्न सम्भव इति भावः । सिद्धेरसत्त्वेऽनुमित्सामवधूयानुमितिरेवोत्पद्यते परामर्शपूर्वं सिद्धिसत्त्वे च सैव तादृशाव्यवहितपूर्ववर्त्तिभिन्ना विरोधिनी भविता इत्यतः सिद्ध्यात्मकेत्युक्तम् । प्रतिक्षणमवश्यं कस्यचिद्विनाशोपगमात् तत्पुरुषीयस्येत्युक्तम् । तदुत्पादसमयेऽनुमित्सोत्पादसमये।सा अनुमितिः । तादृशपूर्ववर्त्तित्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वेन । यद्यप्यनुमित्साया अप्युपायेच्छात्वात्तत्कारणीभूतफलेच्छाया एवानुमितिप्रागवृत्तिभिन्नायास्सत्त्वादनुमित्सोत्पत्तिकालेनुमितेरसम्भवः । तथापि सुखात्मिकानुमितिर्जायतामित्याकारिकेवात्र सिषाधयिषा बोध्या सा च फलेच्छात्वादेव न फलेच्छान्तरमपेक्ष्यते इत्यदोषः । परामर्शोप्यत्र स्मरणात्मको ग्राह्यः । अन्यथा विशिष्टानुभवत्वे तदर्थमपेक्षणीयस्य विशेषणज्ञानादेस्तादृशपूर्ववर्त्तिभिन्नत्वेन विरोधित्वसम्भवात् । न च स्मरणात्मकपरामर्शहेतोः संस्कारस्यैव फलनाश्यस्य तादृशपूर्ववर्त्तिभिन्नत्वसम्भवः, समूहालम्बनसंस्कारजन्यपरामर्शस्य चरमफलत्वाभावेन संस्कारनाशकत्वादिति वदन्ति । यत्तु सिद्ध्यात्मकपरामर्शोऽत्रानुमितिरूप एव ग्राह्यस्तथा च फलेच्छादेरपि स्वसमानाधिकरणानुमित्यव्यवहितपूर्ववर्त्तित्वादेव प्रतिबन्धकत्वासम्भवात् । अत एव च पुनरनुमितिरित्यत्र पुनःपदेन सिद्ध्यात्मकपरामर्शस्यानुमितित्वं ग्रन्थकृतैव व्यंजितम् । न च सिद्ध्यात्मकानुमितिस-

पूर्ववर्त्तित्वेनाविरोधित्वादिति वाच्यम् । अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणुचेतनसंयोगसन्तानान्तःपातिव्यक्तीनामविरतमेवोपरमात् फलानुत्पादबलेनापि तादृशकल्पनासम्भवात् कारणान्तरकल्पने गौरवाच्च । अन्वयव्यभिचारसन्देहस्य च कारणत्वग्रहाविरोधित्वात् । उपादीयन्तां वा तत्तदात्ममनयविशेषस-

---

स्वेऽनुमित्सैव दुर्घटा, अनुमित्यन्तरत्वप्रकारेण तत्संभवादिति मतम् । तत्तुच्छम् । अनवरतेत्याद्युत्तरग्रन्थासंगतेः क्षणिकपदार्थानभ्युपगमेन संयोगादीनामपि तादृशपूर्ववृत्तित्वेन प्रतिबन्धकत्वायोगादिति । यद्यपि स्वावच्छिन्नसमानाधिकरणानुमित्यव्यवहितपूर्ववर्तितानवच्छेदकधर्मविशिष्टत्वेन प्रतिबन्धकत्वविवक्षयाप्युक्तास्मिन्नाधायिषोत्पत्तिकालेऽनुमितेर्वारणं सम्भवतीति स्वोत्पत्तिक्षणावच्छिन्नतत्तत्सिद्धिव्यक्तित्वस्यैव तादृशपूर्ववर्त्तितानवच्छेदकतया तद्विशिष्टायाः सिद्धेः अनुमित्सापूर्वं सत्त्वात्, तथापि यथाश्रुतमेव समाधिसांकर्यादाह अनवरतेति । अनवरतम् अनुक्षणम् । परिस्पन्दमाना येऽपरिमिताः पवनादिपरमाणवस्तैः सार्द्धं यः चेतनसंयोगसन्तानस्तदन्तर्गतसंयोगव्यक्तीनामनुक्षणमेव नाशादित्यर्थः । तथा च परामर्शपर्यन्तस्थायिन्यः परमाणुतत्तत्संयोगव्यक्तय एव तत्रानुमितिप्रतिबंधिका इति भावः । ननु तत्र कारणाभावप्रयुक्तः फलानुत्पादः कारणान्तरमेवाक्षिपेदित्यत आह कारणान्तरेति।ननूक्तक्रमेण कारणतानिश्चये सति तादृशसंयोगोपरमः कल्पनीयः कारणतानिश्चय एव तत्प्राक् न सम्भवत्यन्वयव्यभिचारसंदेहेन प्रतिबन्धादत आह अन्वयेति । संदेहस्येति प्रकृताभिप्रायेण । अविरोधित्वादिति । ग्राह्याभावानवगाहित्वादिति भावः । ननु यत्र पक्षः साध्यवान् साध्यव्याप्यवान् साध्यानुमित्यन्तरं चेष्टसाधनमित्याकारकानुमितेः पश्चात्साध्यानुमित्सा ततः साध्यानुमित्यन्तरं तत्रानुमित्साकालेऽनुमित्यनुत्पादेनान्वयव्यभिचारनिश्चयात्कारणान्तरमवश्यं कल्पनीयं क्षणिकपदार्थानभ्युपगमादनुमित्सापूर्ववर्त्तिनां सर्वेषामेव स्वसमानाधिकरणप्रथमानुमित्यव्यवहितप्राक्क्षणवृत्तित्वेन तद्भिन्नत्वाभावा-

म्बन्धा एव तादृशपूर्ववर्त्तिभिन्नाः, भवेद्वा तत्तत्पुरुषीयानुमितिं प्रति तत्तदीयानुमित्यव्यवहितपूर्वक्षणत्वादिना तादृशक्षणवर्त्तित्ववि-शिष्टत्वादिना वा कारणत्वं तथा चोपमानादेः प्रमाणान्तरत्वं भज्येत सर्वत्रानुमितिसामग्रीसम्भवात्, विलीयेत च परामर्शत्वादि-

---

दित्यस्वरसादाह उपादीयन्तामिति। प्रतिबन्धकतयेति शेषः। तथा च प्रथमानुमित्युत्पत्तिक्षणसम्बन्धा एव अनुमित्यव्यवहितपूर्वक्षण-वर्त्तिभिन्नत्वेनानुमितिप्रतिबन्धका इति भावः। तत्तदात्मसमयसम्बन्धानामतिरिक्तत्वमतेनेदम्। ननु स्याद्वेत्याद्युक्तप्रकारत्रयमपि स्वत्वगर्भत्वादननुगतमतस्तादृप्येण प्रतिबन्धकतायां नैककारणपरि-शेषापत्तिरत आह भवेद्वेति। अत्र च तत्पुरुषीयानुमित्यव्यवहितपूर्वक्षणत्वं स्वप्रागभावविशिष्टकालिकसम्बन्धेन तादृशानुमित्याश्रय-शब्दत्वं वाच्यमतो नाननुगमाद्यवकाशः। न च तादृशशब्दस्यानु-मितिक्षणेऽपि सत्त्वात् पुनरनुमित्यापत्तिः, कार्यसहभावेनैव तस्य हेतु-त्वात्तादृशशब्दविशिष्टत्वं वा वक्तव्यं वैशिष्ट्यं च स्ववृत्तित्वस्ववृत्ति-ध्वंसप्रतियोगित्वोभयसम्बन्धेन ग्राह्यम्। शब्दस्य चतुःक्षणस्थायि-त्वमते तमपहाय सुखदुःखादीनां त्रिक्षणस्थायिगुणानामन्यतममेव निवेशनीयमित्यभिनवः पन्थाः। पूर्वक्षणत्वादिनेत्यादिना तादृशपूर्व-त्वानधिकरणक्षणाभावत्वादेरुपग्रहः। परामर्शादेः कारणत्वरक्षाम-नुसृत्याह तादृशेति। अत्र तत्तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषीया-नुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन हेतुतायां कालिकमेव व्याप-कत्वं प्रविष्टमतः पुरुषान्तरे तत्पुरुषीयानुमितिर्नोपादनीया। विशि-ष्टत्वादिनेत्यादिपदेन तादृशपूर्वत्वानधिकरणवृत्तित्वविशिष्टाभावत्वा-देः परिग्रहः। ननूक्तरूपेण कारणतायामिष्टापत्तौ को दोष इत्यत आह तथा चेति। उपमानादेरित्यादिना शब्दस्य परिग्रहः। सर्वत्रे-ति। उक्तक्रमेणेत्यादिः। व्याप्त्याद्यप्रतिसन्धानदशायामुत्पन्नयोरुप-मितिशाब्दयोः कारणबाधेनानुमितित्वासम्भवादेव तत्कारणयोरुप-मानशब्दयोः प्रमाणान्तरत्वमिष्यते प्रागुक्तरूपैरनुमितिहेतुत्वे कारण-

ना कारणत्वं बाधकत्वादिना च प्रतिबन्धकत्वम् । अनयैव रीत्या कार्य्यान्तरेष्वपि क्लृप्तानां कारणानां प्रतिबन्धकानाञ्चातथात्व-मक्लृप्तानाञ्च तथात्वं प्रसज्येत । अत एव न द्वितीयोऽपि प्रकारः,

———

बाधासम्भवात्तयोरप्यनुमान एवान्तर्भावः । ननु यत्रोपमित्यादिस्थले नानुमिनोमि किं तूपमिनोमीत्यादिरेवानुव्यवसायस्तत्रैवोपमित्यव्यव-हितपूर्वक्षणस्यानुमित्यव्यवहितपूर्वत्वाभावात्कथं सर्वत्रोक्तानुमिति-सामग्री अन्यथोपमित्यादिकं प्रत्युपमित्यव्यवहितपूर्वक्षणत्वादिना हेतुत्वकल्पनात्सर्वत्रैवोपमितिसामग्रीसम्भवादनुमानस्य प्रमाणान्त-रत्वं भग्नमित्येव किं न रोचयेदित्यत आह विलीयेत चेति । पराम-र्शत्वादिनेति । व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वेन व्याप्यव-त्पक्षनिश्चयत्वेन वानुमितौ हेतुत्वं न स्यादित्यर्थः । प्रागुक्तसविषय-कत्वादिनैव परामर्शस्य तथात्वनिर्वाहादिति भावः । बाधत्वादिने-त्यादिपदेन सत्प्रतिपक्षोपसंग्रहः । प्रागुक्ताव्यवहितपूर्ववर्त्तिभिन्न-त्वेनैव बाधादेः प्रतिबन्धकत्वसम्भवादिति भावः । न च बाधादे-र्विशिष्टबुद्धिसामान्यं प्रत्येव विरोधित्वादनुमितित्वावच्छिन्नं प्रति बाधत्वादिना प्रतिबन्धकत्वं प्रसक्तमेव नेति वाच्यम् । सति बाधे विशिष्टबोधेच्छायां साक्षात्कारिण्या इवानुमित्यादिरूपाया अपि वि-शिष्टबुद्धेरुत्पत्तिभियानुमितित्वावच्छिन्नं प्रत्येव बाधत्वादिना पृथक् विरोधित्वस्यावश्यकत्वादिति भावः । कार्यान्तरेषु शाब्दबोधदाहा-दिषु । अतथात्वमकारणत्वमप्रतिबन्धकत्वं च । प्रसज्यत इत्यन्वयः । एवं तथात्वमित्यत्रापि । तथा च शाब्दबोधत्वावच्छिन्नं प्रति स्वस-मानाधिकरणशाब्दाव्यवहितप्राक्क्षणोत्पन्नसविषयकत्वेन हेतुत्वे विनश्यदवस्थस्य पदार्थोपस्थित्यादेः शाब्दधीहेतुत्वं न स्यात् प्रत्युत शाब्दधीप्राक्क्षणोत्पन्नसंस्कारादेरपि तत्र हेतुता स्यात् । एवं स्वस-मानाधिकरणदाहाव्यवहितप्राक्क्षणवृत्तिभिन्नत्वेनैव मण्यौषधादेर्दा-हप्रतिबन्धकत्वे कदा चिदुपहितदाहानां मण्यादीनां दाहप्रतिबन्ध-कत्वं न स्यात् प्रत्युत तादृूप्येणोदासीनस्यापि घटादेर्दाहविरोधित्वं स्यादित्यर्थः । अत एव कार्याव्यवहितपूर्वत्वादेः कारणतावच्छे-

वैयर्थ्याच्च सिद्धेः। सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमानाति-रिक्तसाधकमानयोरन्यतरस्याभावः कारणमिति तु केचित्। तन्न। साधकमानं हि सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा। नाद्यः, चक्षुरादिमत्त्वे विनानुमितीच्छामनुमित्यभावप्रसङ्गा-त्। न द्वितीयः, सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽ-

———

दकत्वादेव। द्वितीय इति। तादृशानुमित्यव्यवहितपूर्ववर्त्तिसि-द्धिभिन्नसिद्ध्यभावमात्रं पक्षतेतिग्रन्थोक्तकल्प इत्यर्थः। द्वितीयप्रकारे दोषान्तरमप्याह वैयर्थ्याच्चेति। स्वसमानाधिकरणतत्तदनुमित्यव्य-वहितपूर्ववर्त्तित्वविशिष्टप्रतियोगिकभेदकूटस्य प्रवेशे गौरवात् स्व-प्रागभाववन्निष्ठस्वसामानाधिकरण्यसम्बन्धेन प्रकृतसाध्यकानुमिति-विशिष्टत्वलक्षणमेव तादृशानुमित्यव्यवहितपूर्ववर्त्तित्वं द्वितीयप्रकारे लाघवान्निवेश्यं तथा च तदवच्छिन्नभिन्नसिद्ध्यभावस्यैव सम्यक्त्वेन प्रथमं सिद्धिपदं विफलम्, अखण्डाभावघटकत्वेऽपि तादृरूप्येण हेतुता-यां गौरवादिति भावः। यज्ञपत्युपाध्यायमतं दर्शयति सिषाधयि-षेत्यादि। केवलपरामर्शसत्त्वेऽप्यनुमितिर्न स्यात् तस्यैवानुमित्साविर-हविशिष्टसाधकमानस्य सत्त्वादतोऽनुमानातिरिक्तपदम्। अत्र प्र-त्यक्षमानमेव निवेशयितुं युक्तं न त्वनुमितिभिन्नसिद्धिजनकमानं स-मानविषये शाब्दादिसामग्रीसम्भवेऽनुमितेरेवोत्पादादत एव एकप-दार्थस्यापरपदार्थसंसर्गव्याप्यधर्मवत्त्वस्य योग्यतात्वे संसर्गस्यानु-मितिरेव स्यात् न तु शाब्दधीरिति योग्यताग्रन्थे मणिकारैरप्युक्त-मिति वदन्ति। अन्यतरस्येति। इत्थं च साधकं सिद्धिमानं च सि-द्ध्यात्मकमिति जनकं प्रमाणमित्युभयमेव मूलस्थसाधकमानशब्दस्या-र्थ इति भावः। उपहितमिति। तया सिद्ध्या उपहितं विशिष्टं पक्ष-तावच्छेदकसामानाधिकरण्येन सिद्धिविशिष्टं सत्तादृशसिद्धिजन-कमिति यावत्। तत्सामग्री अनुमित्यन्यसिद्धेः सामग्री। चक्षुरा-दीत्यादिना पदज्ञानादेरुपग्रहः। ननु सिद्ध्यनुपधानदशायां सिद्धि-जनकस्य प्रत्यक्षसामग्र्यादेः पृथगेवानुमितिविरोधित्वं वाच्यं स्वज-न्यैकसिद्ध्युपहितप्रत्यक्षसामग्र्या सिद्ध्यन्तरजननदशायामनुमिते-

ऽप्यनुमित्यापत्तेः अनुमानातिरिक्तेत्यस्य वैयर्थ्याच्च। न तृतीयः, अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वम् अनुमित्सविरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेन चानुमितिकारणत्वमित्यन्योन्याश्रयात्। स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रतियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तदभावानुमित्यापत्तेरित्यपि कश्चित्। वस्तुतस्तु स्वतन्त्रान्वयव्यतिरेकशा-

———

वारणार्थमेव निरुक्तसाधकमानस्य पक्षतायां प्रवेश्यत्वादत आह अनुमानेति। वैयर्थ्येति। साधकमानस्य परामर्शादेरनुमितेः पूर्वं तद्वैशिष्ट्याभावादेव विरोधित्वासम्भवादिति भावः। अनुमितिभिन्नसिद्धिप्राक्क्षणावच्छिन्नत्वमेव तादृशसिद्ध्युपहितत्वमित्युक्तौ नातिप्रसङ्गः न वा वैयर्थ्यमिति ध्येयम्। अनुमितिसामग्र्यभावत्वेनेति। अन्यथा वन्ह्यादेः सन्निकर्षदशायामनुमित्सयाप्यनुमितिर्न स्यादिति भावः। प्रत्यक्षसामग्र्यभावत्वेनेति। अन्यथा समानविषये सत्यामपि प्रत्यक्षसामग्र्यामनुमित्युत्पादप्रसङ्गादिति भावः। अन्योन्याश्रयादिति। अनुमितिसामग्र्यभावत्वेन प्रत्यक्षहेतुताग्रहोत्तरमेव प्रत्यक्षसामग्रीमवगत्य तदभावत्वेनानुमितिहेतुत्वं ग्राह्यमनुमितिसामग्रीज्ञानं चानुमितिं प्रति प्रत्यक्षसामग्र्यभावत्वेन हेतुताग्रहं विना नेत्यन्योन्याश्रयादुक्तरूपेण कार्यकारणभावग्रहासम्भवादित्यर्थः। अथानुमितिसामग्र्यभावातिरिक्तं प्रत्यक्षहेतुस्तोममेव प्रत्यक्षसामग्रीपदेनोपादाय सिद्धितदन्यतरत्वावच्छिन्नाभावस्य पक्षताविधयानुमितिहेतुत्वमतो नान्योन्याश्रय इत्यत आह स्थाणुत्वेति। आरोपक्षणेति। अनुमितिमात्रस्यैवानुत्पत्तिभिया सिद्धिप्रत्यक्षसामग्र्यन्यतराभावस्य कार्यसहवर्त्तित्वेन हेतुत्वासम्भवादिति भावः। प्रतियोग्यारोपातिरिक्तस्य प्रत्यक्षकारणस्तोमस्यैव प्रत्यक्षसामग्रीपदेनाभिधानात्प्रतियोग्यारोपस्याभावप्रत्यक्षं प्रति हेतुत्वे मानाभावाच्चेदं न युक्तमित्यस्वरसेन कश्चिदित्युक्तम्। स्वयं दूषणमाह वस्तुतस्त्विति। ननु स्वातन्त्र्यमन्यथासिद्धत्वं तच्च प्रत्येकाभावस्यान्वय-

लित्वान्नियमेन प्रथममुपस्थितत्वाल्लाघवाच्च प्रत्येकमेव तथात्वम-न्यथा बाधादेरप्यत्रैवान्तर्भावप्रसङ्गात्। न चानुमित्साविरहस्य प्रत्येकं विशेषणत्वे गौरवम्। शाब्दसिद्धौ सत्यामशाब्दं ज्ञानं जा-

---

व्यतिरेकयोर्विवादग्रस्तमत आह नियमेनेति। अन्यतरत्वेन प्रतियोगि-ज्ञानात्पूर्वं प्रत्येकप्रतियोगिज्ञानध्रौव्येन प्रत्येकाभावस्यैव प्रथमोपस्थि-तत्वादित्यर्थः। ननु प्रत्येकाभावाग्रहेऽपि शाब्दादिनान्यतरत्वावच्छि-न्नाभावस्य ग्रहसम्भवान्नेदं युक्तमत आह लाघवादिति। प्रत्येकाभा-वत्वेन हेतुतायामवच्छेदकलाघवादित्यर्थः। प्रत्येकमनुमित्साविरह-विशिष्टसिद्ध्यभावत्वेन तथाविधप्रत्यक्षसामग्र्यभावत्वेन च। तथा-त्वम्। अनुमितिहेतुत्वमित्यर्थः। ननु प्रत्येकाभावत्वेन हेतुताद्वयम-पेक्ष्यान्यतराभावत्वेन गुरुणाप्येकमेव हेतुत्वं कल्पनार्हमत आह अ-न्यथेति।अत्र पक्षतायाम्। बाधादेरित्यादिना सत्प्रतिपक्षसंग्रहः। तथा चानुमित्साविरहविशिष्टसिद्धेस्तथाविधप्रत्यक्षसामग्र्या बाधसत्प्रति-पक्षादेश्चान्यतमत्वावच्छिन्नाभावत्वेनैवानुमितिहेतुता स्याद्बाधाद्य-भावस्य पृथक्कारणत्वे गौरवादित्यर्थः। न च विशिष्ट-बुद्धिसामान्यं प्रत्येव बाधसत्प्रतिपक्षयोर्विरोधित्वात् पक्षता-कुक्षौ तन्निवेशानौचित्यमिति वाच्यम्। सति बाधादिनि-र्णये बुभुत्सादशायां विशिष्टप्रत्यक्षवत्ताद्दशानुमित्यादिप्रसङ्गे-न विशिष्टानुमितित्वावच्छिन्नं प्रत्यपि बाधादेर्विरोधित्वस्याव-श्यकत्वात्। वस्तुतोऽत्रान्तर्भावप्रसंगादिति ग्रंथस्यान्यतरत्वेन प्रतिबन्धकतायामन्तर्भावप्रसंगादित्यर्थः। तथा च विशिष्टबुद्धिसा-मान्ये विशिष्टानुमितित्वाद्यवच्छिन्ने वा बाधसत्प्रतिपक्षान्यतर-त्वावच्छिन्नाभावत्वेन हेतुताप्रसंग एव ग्रन्थतात्पर्यमन्यथा तद्वि-धेयकानुमितित्वावच्छिन्नं प्रत्येव सिद्धिप्रत्यक्षसामग्र्योस्तत्प्रका-कानुमितित्वावच्छिन्नं प्रत्येव बाधसत्प्रतिपक्षयोर्विरोधित्वात्ताव-दन्यतमत्वावच्छिन्नाभावत्वेन पक्षतायामनुगतानुमितिहेतुत्वासम्भ-वादिति ध्येयम्। यद्वा बाधस्य विशिष्टधीसामान्यविरोधित-या साध्यविधेयकानुमितिं प्रति पक्षताया हेतुतायां तदन्तर्भावे-

षतामितीच्छायामनुमितेरुत्पादात् सिद्धावनुमितिविषयेच्छाविर-
हस्य प्रत्यक्षसामग्रीसत्त्वे च तादृशेच्छायामनुमित्यनुत्पादात् साध-
कमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषणता-

---

ण गौरवमाशंक्यैव दीधितिकृता बाधादेरित्यत्रादिपदमुपात्तम् ।
तेन तत्तल्लिङ्गकपरामर्शाभावकालीनतत्तल्लिङ्गकानुमित्साव्यक्तीनां
परामर्शधर्मिकतत्तदप्रामाण्यज्ञानव्यक्तीनां चोपग्रहः । पक्षधर्मिक-
साध्यविधेयकानुमितित्वावच्छिन्नं प्रत्येव सिद्धिप्रत्यक्षसामग्री-
निरुक्ततत्तल्लिङ्गकपरामर्शधर्मिकतत्तदप्रामाण्यज्ञानव्यक्तीनां चा-
न्यतमाभावत्वेन पक्षतायाः कारणत्वे बाधकाभावादिति भावः।
अथ वा ननु सिद्धिप्रत्यक्षसामग्र्योरन्यतरत्वावच्छिन्नाभाव-
स्याखण्डस्य तत्तद्व्यक्तित्वेनैव साध्यविधेयकानुमितिहेतुत्वं
वाच्यमतः प्रत्येकाभावत्वेन हेतुतायां न लाघवावकाश इत्य-
तस्तत्प्रतिबन्दिमाह अन्यथेति । यद्यखण्डाभावस्य तत्तद्व्य-
क्तित्वेन हेतुत्वं तदा बाधादेरपि पक्षतायामन्तर्भावः स्यात् सिद्धि-
प्रत्यक्षसामग्रीबाधादीनामन्यतमत्वावच्छिन्नाभावस्याखण्डस्य तत्त-
द्व्यक्तित्वेन साध्यविधेयकानुमितित्वावच्छिन्नं प्रति हेतुत्वे बाधका-
भावात्प्रतियोग्यविशेषितरूपेणाभावस्य हेतुतायामन्यथासिद्ध्या त-
त्परित्यागस्तु सिद्धिप्रत्यक्षसामग्र्योरन्यतरत्वावच्छिन्नाभावस्याख-
ण्डस्यापि हेतुतायां समान इत्यपि मादृशामपरः पन्थाः। अथा-
भावद्वयस्य हेतुत्वेऽनुमित्साविरहस्य द्विर्निवेशाद्गौरवमन्यतराभा-
वस्य हेतुतायां तु सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वेनानुमित्साविरह-
स्य सकृदेव तस्य विशेषणत्वाल्लाघवमित्याशङ्क्य निषेधति न चे-
ति । अन्यतराभावस्य हेतुत्वपक्षेऽप्यनुमित्साविरहो द्विर्निवेश्य
इत्याह शाब्दसिद्धावित्यादिना । शाब्दान्यसिद्धिदशायामशाब्दज्ञा-
नत्वप्रकारिकेच्छैव नोत्पद्यत इत्यतः शाब्दसिद्धावित्युक्तम्। विर-
हस्येति। पृथग्विशेषणताया इत्यग्रेऽन्वयः।अनुत्पादादिति । अनुषङ्ग-
वशादनुमितेरनुत्पादादित्यर्थः । प्रकारान्तरेणासम्भवात्स्वविषयसि-
द्धिकाया एव सिषाधयिषाया अनुमितेर्निर्वाहकत्वादिति भावः । अ-

यास्त्वयापि वाच्यत्वात् स्वानिवर्त्तकप्रत्यक्षादिसामग्रीसमवहितान्य-
त्वादिना च तादृशेच्छयोरनुगमेऽतीव गौरवम् । अन्यतरत्वघटक-
योरन्योन्याभावयोर्मिथो विशेषणविशेष्यभावे विनिगमकाभावश्च ।

———

नुमितित्वादीत्यादिपदं प्रत्यक्षातिरिक्तज्ञानत्वादिप्रकारकेच्छासंग्रहा-
र्थम् । पृथगिति । न च यद्यदिच्छासत्त्वे सिद्धिप्रत्यक्षसामग्र्यो-
रन्यतरदशायामनुमितिः तत्तदिच्छाव्यक्त्यभावकूटविशिष्टस्य सि-
द्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षता तथा च प्रत्यक्षसाम-
ग्रीकालीनाया अशाब्दज्ञानं जायतामितीच्छाव्यक्तेरुत्तेजककोटावप्र-
वेशादेव तदानीमनुमित्युत्पादासम्भवादनुमित्सायाः सकृदेव वि-
शेषणत्वं सम्भवतीति वाच्यम् । सिद्धिप्रत्यक्षसामग्र्यन्यतरस्थ-
लीयतत्तदिच्छाव्यक्तीनामभावसमुदायस्यैकत्र निवेशे तेषां वि-
शेषणविशेष्यभावे विनिगमनाविरहेण महागौरवात्तदपेक्षया सि-
द्धिस्थलीयतत्तदिच्छाविरहविशिष्टसिद्ध्यभावत्वेनैव लाघवेन हेतुत्व-
स्यौचित्यादिति भावः । स्वानिवर्तकेति । स्वानिवर्तकं यत्प्रत्य-
क्षादि तत्सामग्रीसमवहिता येच्छा तदन्यत्वेनेत्यर्थः । तथा च प्रत्य-
क्षसामग्रीकालीनाया अशाब्दज्ञानं जायतामितीच्छायाः स्वनिव-
र्तकप्रत्यक्षसामग्रीसमवहितत्वान्नोत्तेजकत्वमिति स्वानिवर्तकानुमिति-
सामग्रीसमवहिताया अनुमित्साया उत्तेजकत्वरक्षार्थं प्रत्यक्षादीत्यु-
क्तम् । आदिना च शाब्दोपमित्यादेः सङ्ग्रहः । अन्यत्वादिनेत्या-
दिपदेन सिद्धिप्रत्यक्षसामग्र्यन्यतरदशायां यद्यदिच्छाव्यक्ति-
सत्त्वे चानुमितिस्तावदन्यतमत्वरूपस्येच्छानुगमकधर्मस्योपग्रहः ।
ननु प्रत्येकाभावयोः कारणताद्वयमपेक्ष्यातिगुरुणाप्युक्तान्यत-
राभावत्वेनैकमेव कारणत्वं युक्तं बाधसत्प्रतिपक्षान्यतराभावत्वेन
हेतुतास्वीकारेऽपि क्षतिविरहादत आह अन्यतरत्वघटकयोरिति ।
सिद्धिभेदविशिष्टं यत्प्रत्यक्षसामग्रीभिन्नं तदन्यत्वं प्रत्यक्षसाम-
ग्रीभेदविशिष्टं यत्सिद्धिभिन्नं तदन्यत्वं वा सिद्धिप्रत्यक्षसाम-
ग्र्यन्यतरत्वमित्यत्र विनिगमकाभावस्तथा चानुमित्साविरहविशि-
ष्टतादृशप्रत्येकावच्छिन्नाभावत्वेन हेतुतायामवच्छेदकभेदेन कारण-

आत्मनिष्ठश्च समवायेन सिद्धेरभावः । भिन्नभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायास्तत्सामग्र्याः मणिविशिष्टस्य वन्हेरिवेतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात् । तथा च क-

———

ताद्वयं युक्तमिति भावः । ननु प्रतियोगिविनाकृतैव सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वरूपाखण्डभेदव्यक्तिः पक्षतायां निविष्टा तत्र च विशेषणविशेष्यभावव्यत्यासशंकापि नास्ति। न च प्रतियोगिविनाकृताखण्डभेदव्यक्तिमुपादाय पक्षतानिर्वचने प्रतियोग्यविशेषितेनापि सिद्धिप्रत्यक्षसामग्रीगगनाद्यन्यतमत्वेन सिद्धिप्रत्यक्षसामग्र्यनुमितिपूर्ववर्तिभिन्नतत्तज्ज्ञानादिघटितान्यतमत्वेन तावदवच्छिन्नाभावा अप्यनुमितौ हेतवः स्युः । तथा च परामर्शत्वादिनानुमितौ हेतुत्वं न स्यादित्युक्तप्रायमिति वाच्यम् । सिद्धिमात्राभावस्य पक्षतात्वेपि तादृशाभावानां हेतुताप्रसङ्गस्यान्यथासिद्ध्या निरसनीयत्वात् त्वन्मते गुरुधर्मावच्छिन्नाभावत्वेनेव मन्मतेपि गुरुधर्मावच्छिन्नप्रतियोगिताकस्याप्यखण्डाभावस्य तत्तद्व्यक्तित्वेन हेतुतायामन्यथासिद्धिसम्भवादत आह आत्मनिष्ठेति।भिन्नभिन्नेनेति।स्वजनकादृष्टवत्त्वादिना कालिकादिस्वरूपेण वेत्यर्थः । कालादिघटितसामग्र्याः प्रतिबन्धकत्वे गौरवादाह तत्तदसाधारणेति । चक्षुःसंयोगाद्यात्मिकायाः प्रत्यक्षसामग्र्या इत्यर्थः । अभावः कारणमिति प्राक्तनेनान्वयः । ननु प्रत्यक्षासाधारणकारणसमवहितमनोयोगसिद्ध्यन्यतरयोः समवायसम्बन्धावच्छिन्नाभाव एव हेतुरुचित इत्यत आह मणिविशिष्टस्येति । मनोयोगादेरित्यादिना ज्ञानाद्युपग्रहः । अयोगादिति । एकत्र जनकत्वप्रतिबन्धकत्वयोर्विरोधादिति भावः । यद्यप्यात्ममनोयोगत्वेनानुमितिजनकस्यापि निरुक्तान्यतरत्वेन तत्प्रतिबन्धकत्वेपि न क्षतिः एकरूपेणैव तयोर्विरोधात् मणित्वापेक्षया गुरुत्वेनैव मणिविशिष्टवन्हित्वेन दाहप्रतिबन्धकत्वाकल्पनात्, तथापि विशिष्टाभावस्य विशेषणाद्यभावानतिरिक्तत्वादखण्डतत्तद्व्यक्तित्वेन हेतुत्वासम्भवात् उक्तान्यतरत्वावच्छिन्नाभावत्वेन च हेतुत्वेऽन्यतरत्वांशे विशेषणविशेष्यभावव्यत्यासेन गुरुतरकार्यकारणभावद्वयापत्तेः सिद्धि-

थमनुगतरूपेण तयोरभावः कारणम् । एवं सिद्धेः सिषाधयिषा-
विरहेण वैशिष्ट्यमेककालावच्छेदेनैकात्मवृत्तित्वं प्रत्यक्षादिकारण-
चक्षुःसंयोगादेस्त्वन्यादृशमिति सामग्रीविशेषाभावस्य हेतुत्वेपि

---

प्रत्यक्षसामग्र्योः प्रत्येकाभावत्वेनैव हेतुत्वमित्येव मूलं युक्तमिति
ध्येयम् । तथा चेति । प्रतिबन्धकतावच्छेदकसम्बन्धाननुगमे चेत्य-
र्थः । तयोः सिद्धिप्रत्यक्षसामग्र्योः । प्रतियोगितावच्छेदकसम्बन्ध-
भेदादिवत्तदवच्छेदकताघटकसम्बन्धभेदादप्यनुगतरूपेण हेतुत्वास-
म्भवं दर्शयितुमाह एवमिति।एकप्रहराद्यवच्छेदेनैकात्मनि सिषाधयि-
षाविरहविशिष्टसिद्धेस्सत्त्वेप्यनुमित्सादशायां पक्षतासम्पत्त्यर्थमेक-
कालेति कालपदं क्षणपरमिति।यद्यपि पूर्वक्षणाद्यवच्छेदेनैवानुमित्सा-
विरहविशिष्टायाः सिद्धेरनुमित्सादशायामपि सत्त्वात्तदानीं पक्षता
न स्यात् । न चानुमित्साविरहेणोपलक्षितायाः सिद्धेः सिषाधयिषा-
दशायां सत्त्वेपि न तद्विरहवैशिष्ट्यावच्छिन्नासिद्धेः सत्त्वं तदानीं
विशेषणाभावादिति वाच्यम् । तथासत्येकक्षणावच्छेदेनेत्यस्य वैय्य-
र्थ्यापत्तेः,तथापि सामयिकात्यन्ताभावानां तत्तत्समयावच्छिन्नमेवा-
धिकरणत्वं स्वरूपाख्यसम्बन्धो न त्वधिकरणत्वमात्रं तथासति प्र-
तियोगिसत्त्वदशायामपि तदधिकरणे तदभावापत्तेः तदीयसम्बन्ध-
प्रयुक्तत्वात्तद्वत्त्वस्येत्याशयेनैकक्षणावच्छेदेनेत्युक्तम् । अत एव रूपव-
त्तानियामकसम्बन्धो न शुद्धसमवायः वाय्वादेरपि रूपवत्तापत्तेः
किं तु तत्तद्व्यक्तिनिरूपितसमवाय एवेति सिद्धान्तः । यदि चाभा-
वस्य स्वयमेव स्वरूपसम्बन्धः स च प्रतियोगिसत्त्वदशायामधिक-
रणे न वर्त्तते प्रतियोगिन एव विरोधित्वात् वृत्तिमत इव वृत्तेरप्यव्या-
प्यवृत्तित्वात् सामयिकत्वमभावस्य न समयघटितस्वरूपसम्बन्धेन
वृत्तिमत्त्वं परं तु समयविशेषावच्छेदेन स्वरूपसम्बन्धेन वृत्तिमत्त्वं
गोत्वाद्यभावानां तु वृत्तिर्न समयावच्छिन्ना मानाभावात् भावाभाव-
योरेकधर्मिणि सत्तायामेव विरोधभञ्जनार्थमवच्छेदकस्वीकारात् इ-
दानीमश्वे गोत्वं नास्तीत्यादिप्रतीतौ चाधिकरणत्वेनैव समयस्य भा-
नादिति विभाव्यते, तदैकात्मवृत्तित्वलक्षणस्य वैशिष्ट्यस्य साम-

लाघवात् सिद्‌ध्यभाव एव पक्षव्यवहारनिमित्तम् । एतदेवाभिस-न्धाय प्रवृत्तिनिमित्तमुक्तमिति वक्ष्यति । फलानुपहितसिद्धीच्छा-विरहविशिष्टसिद्‌ध्यभावापेक्षया बाधाभावस्य लघुत्वेऽपि सिद्धसा-

---

ध्यिकत्वप्रदर्शनार्थमेवैकक्षणावच्छेदेनेत्युक्तं न तु वैशिष्ट्येपि तद-न्तर्भाव इत्यस्मद्गुरुचरणाः । अन्यादृशं स्वाश्रयनिष्ठादृष्टजन्यत्वादि-रूपम् न चानुमित्साविरहविशिष्टसिद्धेरनुमित्साविरहविशिष्टप्रत्यक्ष-सामग्र्याश्चान्यतरत्वावच्छिन्नाभावत्वेन हेतुत्वादुक्तविधस्य वैशिष्ट्य-स्य प्रवेशोपि नाननुगम इति वाच्यम्। प्राक्क्षणावच्छेदेन सिषाधयि-षाविरहविशिष्टा या सिद्धिः प्रत्यक्षसामग्री वा तस्याः सिषाधयि-षाविशिष्टतादशायामपि निरुक्तान्यतरत्वेन प्रतिबन्धकत्वा-दुत्तरक्षणेऽनुमित्यनापत्तेः । न च सिषाधयिषाविशिष्टतादशायां सिद्धेः सिषाधयिषाविरहविशिष्टान्यत्वमेव भेदस्याव्याप्यवृत्तित्वात् तथा च तदानीं निरुक्तान्यतरत्वावच्छिन्नं नास्त्येवेति वाच्यम् । तथासत्युक्तान्यतराभावत्वेन हेतुत्वे गुरुतरकार्यकारणभावद्वयापत्ति-तादवस्थ्यात् विशिष्टाभावस्याखण्डस्य प्रमाणाभावेन निरस्तत्वा-दिति भावः । ननु यद्यनुमित्साविरहविशिष्टप्रत्यक्षादिसामग्र्यभा-वोपि पृथगनुमितिहेतुस्तदा मूलस्थसाधकमानपदेनापि सामग्रीविशेष एवाभिधीयतां यथाश्रुतानुरोधान्न तु साध्यवत्तानिश्चय इत्यत आह सामग्रीविशेषेति। लाघवादिति।अनुमानातिरिक्तसिद्धिसामग्रीमपेक्ष्य सिद्धेः प्रवेशे लाघवादित्यर्थः।तथा च पक्षपदप्रवृत्तिनिमित्तनिर्वचना-नुरोधादेव साधकमानपदेन साध्यनिश्चयो व्याख्यात इति भावः।प्रवृ-त्तिनिमित्तनिर्वचने मूलस्वरसमाह एतदेवेति।अन्यथाऽनुमितिकरण-मिदमित्येव ब्रूयात्तावतापि यद्यपीत्याद्युक्तशङ्काव्युदाससम्भवादि-ति भावः । नन्वेवमुत्तेजकाप्रवेशेनातिलाघवाद्बाधनिश्चयाभाव एव पक्षपदप्रवृत्तिनिमित्तमस्त्वित्यत आह फलानुपहितेति । स्वविष-यसिद्ध्यनुपहिततत्तदनुमित्साविरहविशिष्टेत्यर्थः।विशिष्टबुद्धिसामान्यं प्रत्येव बुभुत्साविरहविशिष्टबाधनिश्चयाभावत्वेन हेतुत्वमतेपि लाघ-

धनस्थले पक्षव्यवहारविरहेण तादृशसिद्ध्यभावस्यावश्यकत्वे बाधाभावो न निविशते गौरवात् विशिष्टसिद्ध्यभावस्य चात्मनिष्ठस्यैवानुमितिहेतुत्वेऽपि तस्य परम्परासम्बन्धादेव पर्वतादौ पक्षव्यवहार इति ध्येयम् । एकस्य पुंसोऽनुमित्सासत्त्वेऽपि अन्यस्य तद्विरहिणः प्रत्यक्षादिसामग्रीसत्त्वेऽनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषीयानुमित्साविरहकालीनतत्तत्पुरुषीयसि-



द्धमाविष्कर्तुमनुगहितान्तानुसरणम् । न निविशत इत्यस्य पक्षपदशक्यतायामित्यादिः । ननु सिद्ध्यभावस्य पक्षतात्वेऽपि सिद्धिदशायां पर्वतादौ पक्षव्यवहारो दुर्वारः समवायावच्छिन्नसिद्ध्यभावस्य विशेषणतायाः पर्वते सत्त्वात् । न च तदीयसिद्धिविशेष्यत्वाभाव एव तं प्रति पक्षव्यवहारनिमित्तम्, तस्यानुमित्यहेतुत्वात् अनुमितिहेतोरेव पक्षतायाः प्रवृत्तिनिमित्तत्वात् पक्षतानुमितिहेतुरित्यादिव्यवहारादित्यत आह विशिष्टेति।अनुमित्साविरहविशिष्टेत्यर्थः । परम्परासम्बन्धादिति । तथा च यदा यत्र पुंसि निरुक्तसिद्ध्यभावस्तत्कालावच्छेदेन तत्पुरुषीयस्वप्रतियोगिविशेष्यत्वाभावरूपपरम्परासम्बन्धेन निरुक्तसिद्ध्यभाववत्त्वं तत्कालावच्छेदेन तत्पुरुषं प्रति पक्षव्यवहारनिमित्तमिति भावः । ननु सिषाधयिषाविरहविशिष्टप्रत्यक्षादिसामग्र्यभावस्य पृथगपि हेतुत्वं दुर्घटं पुमन्तरावच्छेदेनानुमित्साविरहविशिष्टायाः प्रत्यक्षसामग्र्याः सत्त्वदशायामनुमित्सासत्त्वेऽनुमित्यपलापापत्तेः । न चानुमित्साकालीनान्यत्वमेव सामग्रीविशेषणम् । तथासति पुमन्तरेऽनुमित्सादशायां तद्विधुरस्यापि पुंसः प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तेः अतः पुरुषविशेषान्तर्भावेण सामग्र्यभावहेतुत्वं निर्वक्ति एकस्येत्यादिना । तद्विरहिणः अनुमित्साविरहिणः । तत्पुरुषीयेत्यादि । अत्र तत्पुरुषीयत्वं तत्पुरुषावच्छिन्नत्वं तदप्यनुमित्साविरहस्यैव विशेषणं तेन तत्पुरुषावच्छेदेनानुमित्साविरहकालीनो यस्तत्पुरुषीयप्रत्यक्षसामग्रीविशेषस्तद्विरहः पर्यवस्यति । यथाश्रुते तत्पुरुषीयत्वस्यानुमित्साविशेषण-

द्धिसामग्रीविशेषविरहोऽनन्यगतिकत्वेन हेतुरूपतव्य इति वदन्ति ।

---

त्थं तत्पुरुषीयानुमित्सादशायामपि घटावच्छेदेन तदभावसत्त्वात्त-
दानीन्तनप्रत्यक्षसामग्र्या अपि तदीयानुमितिप्रतिबन्धकत्वापत्तेः ।
पक्षतायामिवाऽत्राप्यनुमित्साव्यक्तयो विशिष्य निवेश्याः । तेन व-
स्त्वन्तरस्यापि परामर्शदशायामनुमितित्वादिप्रकारकेच्छासत्त्वेपि
संन्निकृष्टस्य वन्ह्यादेर्नानुमितिर्न वा वन्हेरनुमित्साप्रत्यक्षेच्छयोः स-
त्त्वदशायामुभयसामग्रीसमवधानेऽनुमितिस्तत्रानुमित्साव्यक्तेरुत्तेज-
ककोटावप्रवेशात् । प्रत्यक्षबुभुत्साविरहविशिष्टाया एवानुमित्साया
उत्तेजकत्वाददोष इत्यपि वदन्ति । सिद्धिसामग्रीमात्रस्याप्रतिब-
न्धकत्वादुक्तं विशेषेति । तेन प्रत्यक्षात्मकसिद्धिसामग्रीलाभः ।
यद्यपि सिद्ध्यात्मकप्रत्यक्षस्यापि सामग्रीमात्रं न प्रतिबन्धकं प्रसि-
द्धसाध्यकस्थले सर्वत्रैव साध्यवत्त्वोपनीतभानसामग्रीसम्भवात् ।
नापि लौकिकप्रत्यक्षसामग्री तथा, वंशे सर्पत्वव्याप्यवत्तानिश्चयदशा-
यां मण्डूकवसाञ्जनादिबलात् सर्पत्वाद्यलौकिकप्रत्यक्षानुत्पत्तिप्र-
सङ्गात्।तथापि साक्षात्कारत्वनिरूपितसाध्यनिष्ठप्रकारताकप्रत्यक्षसा-
मग्री प्रवेश्या । तादृशी च प्रकारता लौकिक इव दोषविशेषजन्येपि
साध्यस्य प्रत्यक्षे वर्त्तत एव उभयत्रैव सर्पं साक्षात्करोमीत्यनु-
भवादित्यन्यत्र विस्तृतम् । न चैवं साध्यस्य निर्विकल्पकसामग्र्याः
प्रतिबन्धकत्वं न स्यात्, इष्टत्वात् तस्याः पृथक् प्रतिबन्धकत्वोपग-
मेपि क्षत्यभावाच्च । अनन्यगतिकत्वेनेति । न चैवं तत्पक्षसाध्यका-
नुमितिं प्रत्यनुमित्साविरहविशिष्टतेन तद्धर्मिकसाक्षात्कारत्वनिरू-
पिततत्प्रकारताकत्वेनैव विरोधित्वं तथा च तदभावस्य कार्य-
सहभावेन हेतुत्वादेव न तद्वत्ताप्रत्यक्षोत्पत्तिकाले तादृशानुमिति-
रित्यन्यथा गतिरस्त्येवेति वाच्यम् । यत्र पर्वतत्वसामानाधिकर-
ण्येन वन्हिमत्ताप्रत्यक्षोत्पादः तत्रोत्तरकाले पर्वतत्वावच्छेदेनापि
वन्ह्यनुमितेरनुत्पादप्रसङ्गात् । न च पर्वतत्वावच्छेदेन वन्ह्यादिसा-
क्षात्कारत्वेनैव विरोधित्वमिति वाच्यम् । तथासति पर्वतत्वसा-
मानाधिकरण्येन साध्यवत्ताप्रत्यक्षसामग्रीसत्त्वेप्यनुमित्यापत्तेः । व-

अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु। न चैवं मण्यादि-
स्थलीयदाहं प्रत्युत्तेजकस्य हेतुत्वापत्तिः, उत्तेजकानामननुगत-
त्वात्। तावदभावविशिष्टमण्याद्यभावस्य चानुगतत्वादिति चेत्।
इहापि दर्शितोऽननुगमः। सिषाधयिषायाः सिद्ध्युत्तरानुमितित्व-
श्चानुगतानतिप्रसक्तं दुर्वचम्, सिद्धिस्थितिकालीनां स्वेतरसिद्धि-

———

स्तुतो यत्रानुमित्सानन्तरं साध्यतद्व्याप्यवत्त्वयोः प्रात्यक्षिकपक्ष-
धर्मिकनिश्चयादनुमितिस्तत्र कार्योत्पत्तिकाले अनुमित्साविरहवि-
शिष्टसाध्यवत्ताप्रत्यक्षाभावस्यासत्त्वात्तत्कार्यसहभावेन तदभावस्य
हेतुत्वं दुर्घटमेवेति ध्येयम्। अननुगतत्वादिति। मणिमन्त्रौषधीनामुत्ते-
जकत्वस्यैकस्याभावादिति भावः। इहापि अनुमितिस्थलेऽपि। दर्शित
इति। अनुमिनुयां प्रत्यक्षादिभिन्नं ज्ञानं जायतामित्यादिनानाविधेच्छा-
या उत्तेजकत्वस्य प्रदर्शितत्वादिति भावः। ननु यत्पक्षकयत्साध्य-
कानुमितिस्थले सिद्धिदशायामेकविधैवानुमित्सा तत्र तस्यास्ता-
द्रूप्येण हेतुतायामनुगम एव सिद्धिदशायां यद्यदनुमित्सा-
सत्त्वेऽनुमितिस्तत्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेनैवानुगत-
रूपेण वा सिद्ध्युत्तरानुमितिसामान्ये हेतुत्वं वाच्यमत आह सि-
द्ध्युत्तरेति। सिद्धिसामान्याव्यवहितोत्तरत्वमप्रसिद्धं तत्तत्सिद्ध्यु-
त्तरानुमितित्वमननुगतं सिद्ध्युत्तरत्वमात्रं चातिप्रसक्तमिति भावः।
सिद्धिस्थितिकालीनामिति। स्ववृत्तिप्रागभावप्रतियोगित्वकालिको-
भयसम्बन्धेन सिद्धिविशिष्टामित्यर्थः। प्रागभावासत्त्वमतेऽप्याह स्वे-
तरेति। स्ववृत्तिभेदप्रतियोगित्वकालिकोभयसम्बन्धेन सिद्धिविशि-
ष्टामित्यर्थः। तेन स्वत्वाननुगमेऽप्यदोषः। विनापीति। सिद्धिनाश-
कालोत्पन्नानुमितीनां सिद्धिस्थितिकालीनत्वाभावेनानुमित्सायास्त-
त्राप्रयोजकत्वादिति भावः। ननु तदानीमपि कस्य चित्सिद्धिसत्त्वे-
न सिद्धिनाशकालोत्पन्नानुमितेरपि स्वेतरसिद्धिकालोत्पत्तिकत्वमे-
वेत्यनुमित्सां विना तस्याः कथमुत्पादः स्यादत आह एकस्येति।
अनुत्पादेति। तदनुमितेरप्यन्यदीयसिद्ध्युत्तरोत्पत्तिकत्वेनानुमि-

कालीनां वानुमितिं प्रति हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकालेऽनुमित्युत्पादो दुर्वारः। एकस्य च पुंसः सिद्धिसत्त्वेऽन्यस्य सिषाधयिषाशून्यस्यानुमित्यनुत्पादप्रसङ्गः तत्तत्पुरुषीयतादृशानुमितिं प्रति सिषाधयिषाया हेतुत्वेऽनन्तकार्य्यकारणभावप्रसङ्गः। अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गात्। न हीदृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति, न चान्यत्रापि तद्विशेषसामग्र्यन्तरमस्तीति। तत्कल्पने चातिगौरव-

———

त्वसाप्रयोज्यत्वादिति भावः। अनन्तेति। तत्पुरुषीयस्वेतरसिद्धिकालीनतत्पुरुषीयानुमितिं प्रति तत्पुरुषीयानुमित्साया इव तत्पुरुषीयानुमितिसामान्यं प्रत्यपि विनश्यदवस्थिततदीयतत्तत्सिद्ध्यभावत्वरूपेण हेतुत्वस्यावश्यकतया पृथक्पुरुषीयानुमितिस्थल एवानन्तहेतुहेतुमद्भावप्रसङ्ग इत्यर्थः। तेन सिद्धिनाशदशायामपि तस्यानुमित्युत्पादस्यानुद्धारान्न्यूनत्वमित्यपास्तम्। ननु सिद्ध्यव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रत्येव सिषाधयिषायाः कारणत्वं वाच्यं तदव्यवहितोत्तरत्वं च स्ववृत्तिप्रागभावप्रतियोगित्वसामानाधिकरण्योभयसम्बन्धेन सिद्धिविशिष्टायाः कृतेः सामानाधिकरण्यरूपं ग्राह्यमतो नोक्तदोषावकाश इत्यत आह अपि चेति। सामान्यसामग्रीत इति। सिद्ध्यभावस्थलीयानुमितौ क्लृप्तहेतुताकपरामर्शाद्यात्मककारणस्तोमादित्यर्थः। ननु विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्यजनकत्वात् प्रकृते चानुमित्सा[परामर्शमात्रादप्यनुमित्युदयात् तथा चोक्तनियमाभावात्सिद्ध्या] त्मकविशेषसामग्रीविरहात्कुतोनुमित्यापत्तिरत आह न हीति। ईदृशेति। अनुमित्साघटितेत्यर्थः। नास्तीति। विनानुमित्सां परामर्शमात्रादप्यनुमित्युदयात्। तथा चोक्तनियमाभावात् सिद्ध्यभावस्येव सिद्धिस्थलेऽपि विशेषसामग्रीं विनैव सामान्यसामग्रीमात्रादनुमितिः स्यादेवेति भावः। अन्यत्र सिद्ध्यनुत्तरानुमितौ। ननु सिद्ध्युत्तरात्-

म्। इह जायमाना सा सिद्ध्युत्तरैव स्यात् सा च न जायते कारणाभावादिति चेत्। समाजनिष्ठानुमितिसामान्यन्तु स्यादेव,

---

मितावनुमित्साया इव तदनुत्तरानुमितावपि सिद्धिसामान्याभावस्य हेतुत्वं वाच्यं तथा च परामर्शादिसामान्यसामग्रीसत्त्वेपि सिद्धिदशायां निरुक्तविशेषसामग्रीविरहादेव नानुमितिरत आह त-दिति। सिद्ध्यनुत्तरानुमितौ सिद्ध्यभावरूपसामग्र्यन्तरकल्पने चे-त्यर्थः। अतिगौरवमिति। विशेषसामग्रीद्वयकल्पनामपेक्ष्यानुमिति-सामान्ये एकस्यैव विशिष्टसिद्ध्यभावस्य हेतुत्वे लाघवादिति भावः। न च सिद्ध्यनुत्तरवर्त्तितत्तदनुमितिव्यक्तिष्वप्यवश्यं तत्तत्परामर्शा-दिव्यक्तेर्विशिष्य हेतुत्वमुपेयम् अन्यथा परामर्शादेः सामान्यकारण-स्याविशिष्टत्वात्तत्रैकानुमित्युत्पत्तिदशायां भाव्यनुमित्यन्तरापत्तेः। तथा च तत्तत्परामर्शाद्यात्मकविशेषसामग्रीविरहादेव सिद्धिदशा-यामनुमित्यापत्त्यसम्भव इति वाच्यम्। यत्र क्रमेण सिद्धिपरामर्शौ-सिद्धिनाशानुमितयस्तत्रत्याया एवानुमितिव्यक्तेः सिद्धिनाशोत्पा-ददशायामापादनीयत्वात्तद्व्यक्तिहेतोः परामर्शस्य प्रागपि सत्त्वा-त्। न च तथाविधानुमितिव्यक्तिषु तत्तत्सिद्धिनाशक्षणस्य तत्क्षणो-त्पन्नज्ञानादेर्वा विशिष्य हेतुत्वकल्पनात्तदभावादेव न तादृशानुमि-तिरिति वाच्यम्। क्षणादीनां विशिष्य हेतुतायामन्यथासिद्धत्वात्। अन्यथा सर्वत्रैव तत्तत्क्षणसम्बन्धानां विशिष्य हेतुतयैव सामञ्जस्ये विशेषतः कारणान्तरस्य क्वापि कल्पनं न स्यात् अनन्ततत्तत्क्षणव्यक्ती-नां तत्तदुत्पन्नज्ञानादीनां वा विशेषतो हेतुत्वकल्पनामपेक्ष्य विशिष्टसि-द्ध्यभावस्यैकस्यैवानुमितिसामान्यहेतुत्वकल्पनाया एव लाघवे-नौचित्यादिति भावः। नव्यास्तु तत्तदनुमित्साविरहविशिष्टसिद्ध्य-भावत्वेन हेतुतायां तत्तदनुमित्साविरहाणां विशेष्यविशेषणभावेन गुरुत्वादनन्तत्वाच्च तदपेक्षया यादृशयादृशेच्छासत्त्वे सिद्धिसत्त्वेऽ-नुमितिस्तादृशतादृशेच्छात्वेन सिद्ध्यनुत्तरानुमितिं प्रति च सिद्धिसा-मान्याभावत्वेन कारणत्वकल्पनैव लघीयसीति प्राहुः। तच्चिन्त्यम्। शङ्कते इहेति। सिद्धिस्थल इत्यर्थः। सा अनुमितिः। तत्कारणस्येत्य-

कार्य्योत्पादविरहस्य विना कारणाभावमसम्भवात् करणव्यापारत्वेनावश्यककारणभावस्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः प्रतिबन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात् । अन्यथा यथासम्भवं निमित्तकारणस्य समवा-

———

ष्यानुमित्सात्मकेत्यादिः । सा सिद्ध्युत्तरत्वावच्छिन्नानुमितिः । प्रगल्भमतं निरस्यति कारणेत्यादिना । ननु पक्षताविशिष्टपरामर्शत्वेन परामर्शविशिष्टपक्षतात्वेनापि विनिगमकाभावेन हेतुत्वापत्त्या द्वयोरेव लाघवात्स्वातन्त्र्येण हेतुत्वमत उक्तं कारणेति । तथा चानुमितिकारणस्य व्याप्तिधियः सव्यापारत्वनियमाद्व्यापारविधयैव परामर्शस्य हेतुत्वमावश्यकं पक्षतायास्तु व्यापारत्वासम्भवात्तदनुरोधेनापि न हेतुत्वमित्येव स्फुटं विनिगमकमिति भावः । न च स्वमते मनस एवानुमितिकरणत्वात्तत्संयोग एव जन्यमात्रे व्यापार इत्यनुमितौ पक्षताविशिष्टपरामर्शस्येव परामर्शविशिष्टनिरुक्तसिद्ध्यभावत्वेन पक्षताया अपि हेतुतायां विनिगमकाभाव एवेति वाच्यम् । परामर्शविशिष्टपक्षताया हेतुत्वस्य दुर्वचत्वात् । तत्र हि परामर्शो न सिद्धिविशेषणं तथासति परामर्शविशिष्टाया निरुक्तसिद्धेरभावत्वेन हेतुत्वे परामर्शशून्यस्यापि पुंसोऽनुमित्यापत्तेः । तस्यापि परामर्शविशिष्टसिद्धेरभाववत्त्वात् । न च परामर्शविशिष्टो यो निरुक्तसिद्ध्यभावस्तत्त्वेन हेतुत्वं मिथो वैशिष्ट्यापन्नयोः सिद्धिपरामर्शयोरभावांशे विशेषणीभूयावच्छेदकत्वाभावाद्व्यासज्यवृत्त्यवच्छेदकत्वानङ्गीकारात् । अन्यथा निरुक्तसिद्ध्यभावत्वपरामर्शयोरेव व्यासज्यवृत्त्यवच्छेदकत्वेन सामञ्जस्ये तयोर्विशेष्यविशेषणभावे विनिगमनाविरहोद्भावनस्योन्मत्तप्रलपितत्वापत्तेः । पक्षताविशिष्टपरामर्शस्य तु वैशिष्ट्यापन्नस्य वावच्छेदकतया तादृूप्येण हेतुतायां बाधकाभावादिति ध्येयम् । प्रतिबन्धकान्तरं बाधनिश्चयादि । ननु कारणतावच्छेदकविशिष्टसत्त्वस्यैव कार्योत्पत्तिनियामकत्वात् तत्रैवान्वयव्यतिरेकावुपक्षीणावत आह अन्यथेति । अन्वयादिसत्त्वेऽप्यहेतुत्वे इत्यर्थः । ध्वंसादिकार्यस्य समवायिकारणत्वाप्रसिद्ध्या तन्निमित्तकारणस्य तदन-

यिकारणत्वाद्यवच्छेदकत्वप्रसङ्गात्। अथानुमितिसाधारणसिद्धेः प्रतिबन्धकत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन कार्य्यकालवृत्तेरेव हेतुत्वात् अनुमितिकाले च तदसम्भवात् सा नोत्पद्यतेति चेन्न। यस्य मण्याद्यभावादेः कार्य्यसमकालतयान्वयव्य-

———

च्छेदकत्वासम्भवादाह यथासम्भवमिति। समवायिकारणादीत्यादिनाऽसमवायिकारणत्वस्योपग्रहः। तथा च घटादिकार्यस्य प्रतिनियतदेशत्वरक्षार्थं तत्तत्कपालद्वयसंयोगादेर्घटहेतुत्वमावश्यकमिति तत्रैव दण्डत्वादिकमवच्छेदकं स्यादित्यर्थः। कारणत्वे बाधकसत्त्वात्कारणतावच्छेदिकैव पक्षतेत्यभिप्रायेण साध्यसन्देहः सिषाधयिषैव वा पक्षतेत्याशयेनाशङ्कते अथेति। कार्यकालवृत्तेरेवेति। अन्यथा पूर्वकाले मण्याद्यभावसत्त्वान्मण्युत्पत्तिकालेऽपि दाहापत्तिरिति भावः। प्राचां मतेन इदम्। स्वमते तु मण्याद्युत्पत्तिदशायां मणिसामग्र्याः प्रतिबन्धकत्वादेव न दाहः। अन्यथा संयोगेन मण्यभावस्य मण्युत्पत्तिदशायामपि सत्त्वात्तस्य कार्यसहभावेन हेतुत्वोपगमेऽप्यप्रतीकारादिति ध्येयम्। न च कार्यसहवर्त्तित्वस्य कारणतावच्छेदकत्वे तदवच्छिन्नस्य चेत्प्रतिबन्धकाभावस्य पूर्वसत्त्वमपेक्षितं तदा सत्यपि मण्यभावे दाहादिकार्यं न स्यात् पूर्वकाले दाहाद्युपहितस्य तस्याभावात् कार्यसहवर्त्तित्वोपलक्षितस्य पूर्वसत्त्वापेक्षणे मण्याद्युत्पत्तिदशायामपि दाहादिकार्यप्रसङ्गः कदाचिद्दाहादिसहवर्त्तित्व एव मण्याद्यभावस्य मण्याद्युत्पत्तेः पूर्वं सत्त्वादिति वाच्यम्। कार्यसहवर्त्तित्वस्य कारणतानवच्छेदकत्वात्। मण्याद्यभावत्वेनैव हेतुत्वात् प्रतिबन्धकाद्यभावविशेषितेन स्वाव्यवहितोत्तरक्षणत्वादिसम्बन्धेनैव सामग्र्याः कार्योत्पत्तिव्याप्यत्वान्न प्रतिबन्धकोत्पत्तिकाले कार्योत्पत्तिप्रसङ्गः। समवायिकारणस्यापीत्थमेव कार्यसहभावेन हेतुत्वं विवेचनीयमिति दिक्। तत्तद्देशीयतत्तद्दाहादिकं प्रति तत्तद्दाहाद्युत्पत्तिकालावच्छेदेन तत्तद्देशवर्त्तिमण्याद्यभावत्वेन हेतुत्वं कारणतावच्छेदकस्य पूर्वसत्त्वानपेक्षणाच्च तत्तद्दाहोत्पत्तेरसत्त्वेऽपि न क्षतिरित्यनयैव दिशा स-

तिरेकित्वं तस्यैव तथात्वेन हेतुत्वं न तु सर्वस्य गौरवात् । अन्यथा समवायिकारणस्य कार्य्यसहभूतस्यैव हेतुत्वात् कारणमात्रस्य तथात्वप्रसक्तौ प्राभाकरा एव विजयेरन्निति । प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमितिप्रवाहस्याविरलग्नस्यानुभविकत्वात् कालभेदकल्पनायाश्च मानाभावात् मानाभावाच्च पक्षता नानुमितिहेतुः परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः ॥



मवायादिकारणस्यापि हेतुत्वं निरूपणीयमित्यपि वदन्ति । तदसम्भवादिति । निरुक्तसिद्ध्यभावस्यासम्भवादित्यर्थ । सा अनुमितिः । तथात्वेन कार्यकालवृत्तित्वेन । सर्वस्येति । तथात्वेन हेतुत्वमित्यन्वयः । ननु प्रतिबन्धकाभावस्य तादृप्येण हेतुताऽयाप्यत्वाद्गौरवं प्रामाणिकमत आह अन्यथेति । सहभूतस्यैवेति । अन्यथा घटादेर्नाशोत्पत्तिदशायामप्यन्यदीयकर्मणा तत्र संयोगाद्युत्पत्तौ क्षणिककार्यस्वीकारापत्तिरिति भावः । तथात्वप्रसक्तौ कार्यसहभावेन हेतुत्वप्रसक्तौ । विजयेरन्निति । प्राभाकरैः कारणमात्रस्यैव कार्यसहभावेन हेतुत्वस्वीकारात् । अन्यथा कार्यकाले सतोपि प्रतियोगिनः पूर्ववर्त्तित्वमात्रेणैव हेतुत्वसम्भवात्तेषामप्यतिरिक्तध्वंसकल्पनापत्तेरिति भावः । एकपरामर्शादनुमितिद्वयोत्पादेपि प्रवाहासम्भवादाह क्वचिदिति । तथा च यत्र पूर्वपूर्वानुमितिदशायां परामर्शान्तरस्य सामग्रीसम्भवस्तत्रैव परामर्शानुमित्योः प्रवाहसम्भव इति भावः । आनुभविकत्वादिति । पक्षता नानुमितिहेतुरित्यग्रेन्वयः । ननूक्तस्थले क्रमिको नानुमितिप्रवाहः किं त्वेकानुमितिनाशोत्तरमपरानुमित्युत्पत्त्यैव स इत्यत आह कालभेदेति । ननु यत्र विषये क्रमेणानुमितिप्रवाहो नानुभवसिद्धस्तत्साध्यकानुमितावेव पक्षता हेतुरस्त्वित्यत आह मानाभावाच्चेति । ननु सिद्धेरनुमित्यविरोधित्वे परार्थानुमानस्थले तदुद्भावनं न स्यात् प्रमाणादोषत्वादत आह परार्थेति । अर्थान्तरेति । तथा च निश्चिते वस्तुनि जिज्ञासाविरहादनाकाङ्क्षिताभिधानेन पुरुषदोषतयैव तदुद्भावनं न तु प्रमाणदोषतयेति भावः ।

अत्रेदमालोचनीयम् । समानविषयकप्रत्यक्षसामग्रीदशायामनुमित्यनुत्पादाद्वन्ह्यादिप्रत्यक्षजनकतत्तदसाधारणकारणव्यक्तीनामेव वन्ह्याद्यनुमितिविरोधित्वं वाच्यं कालादिसाधारणसामग्र्यास्तथात्वे गौरवात् तथा च वन्हिचक्षुःसंयोगादिव्यक्तीनामिव वन्ह्याद्यात्मकविशेषणाद्यवगाहितया वह्निमत्ताप्रत्यक्षहेतूनां पर्वतो वह्निमानित्यादिसिद्धिव्यक्तीनामपि तादृशानुमितिविरोधित्वमावश्यकं विनिगमकाभावात् एवं च तत्रैव पर्वतो वन्हिमानित्याकारकनिश्चयत्वेनैवानुगतरूपेण तत्तत्सिद्धिव्यक्तीनां तादृशानुमितिविरोधित्वं कल्प्यते लाघवात् न तु तत्तत्सिद्धिव्यक्तित्वेन, गौरवादित्यवश्यं पक्षतानुमितिहेतुः। न चैवमतिलाघवेन साध्यनिश्चयत्वमपेक्ष्य साध्यवत्ताज्ञानत्वेन विरोधित्वमस्तु पक्षे साध्यसन्देहानन्तरं तत्र साध्यवत्तानुमितेरानुभाविकतया निश्चयत्वप्रवेशस्य प्रामाणिकत्वे तु सिद्धिसत्त्वे प्रत्यक्षसामग्रीदशायामनुमित्यनुत्पत्तेरनुभवसिद्धतया प्रत्यक्षसामग्र्यन्तर्गततत्तत्सिद्धिव्यक्तित्वेनैव गुर्वपि प्रतिबन्धकत्वं प्रामाणिकमिति वाच्यम् । साध्यवत्तया पक्षज्ञानत्वेन संशयसाधारणधर्मेण प्रतिबन्धकत्वे भ्रमत्वनिश्चयत्वस्योत्तेजकत्वापत्तिगौरवात्तदपेक्ष्य भ्रमत्वज्ञानानास्कन्दितसाध्यवत्तानिश्चयत्वेन प्रतिबन्धकतायामेव विपरीतलाघवात् । किं च सिद्धिकालीनेषु साध्यव्याप्यवत्तापरामर्शसहस्रेषु व्याप्यत्वाद्यंशे भ्रमत्वादिज्ञानदशायां न साध्यानुमितिस्तत्र तादृशानुमितिं प्रति विशेषतस्तत्तद्भ्रमत्वज्ञानत्वेनानन्तप्रतिबन्धकत्वकल्पने गौरवात् पक्षधर्मिकसाध्यवत्तानिश्चयत्वेनैवानुगतरूपेण तत्तत्सिद्धिव्यक्तीनां विरोधित्वं कल्प्यते लाघवात् भ्रमत्वज्ञानानामनुगतरूपेण विरोधित्वासम्भवस्य बहुशोन्यत्र प्रतिपादितत्वात् । एवं च सत्यामनुमित्सायां सिद्धिसत्त्वेप्यनुमित्युत्पादस्य परेषामप्यानुभविकत्वादनुमित्सायास्तत्रोत्तेजकत्वमपीत्यवश्यं पक्षतानुमितिहेतुः । न च वह्नेः सिद्ध्यात्मकपरामर्शसहस्रमेव यत्र दण्डो रक्त इत्यादिविशेषणतावच्छेदकप्रकारकं रक्तत्वांशे भ्रमत्वज्ञानास्कंदितं वृत्तं तत्रोत्तरकालं रक्तत्वादिविशिष्टवैशिष्ट्यस्य प्रत्यक्षादेर्वारणार्थं तत्तद्भ्रमत्वज्ञानव्यक्तीनां तादृशविशिष्टवैशिष्ट्यावगाहिज्ञानप्रतिबन्धकत्वकल्पनायां तत्रापि गौरवमस्माकं तु सिद्धेरविरोधित्वात्तत्र वन्ह्यनुमितेरेवोत्पादेनान्यत्र क्लृप्तेन भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वेनैव तत्र

रक्तत्वविशिष्टवैशिष्ट्यप्रत्यक्षमिति वाच्यम् । यत्साध्यकसिद्धिपरामर्शदशायां न वस्त्वन्तरेऽपि कदापि भ्रमत्वाद्यासञ्जनं तत्रैवोक्तक्रमेण पक्षताया हेतुत्वव्यवस्थापनादित्याहुः। यत्तु पक्षताया अनुमित्यहेतुत्वे सिद्ध्यात्मकपरामर्शदशायां भिन्नविषयकप्रत्यक्षबुभुत्सासत्त्वेऽनुमितेर्वारणाय तत्तद्बुभुत्सायामनुमिति विरोधित्वकल्पने गौरवं स्यादतः पक्षता हेतुरिति । तत्तुच्छम् । पक्षतायाः कारणत्वे तत्तदनुमित्साविरहकूटविशिष्टसिद्धित्वेन प्रतिबन्धकतायामेव तत्तदनुमित्साविरहव्यक्तीनां विशेष्यविशेषणभावव्यत्यासेनानन्तविरोधित्वकल्पनाया विपरीतगौरवात् । अत एव पक्षताया अनुमित्यहेतुत्वे कथितस्थल एव भिन्नविषयकप्रत्यक्षादेरुत्पत्तये तत्तद्बुभुत्साविरहविशिष्टानुमितिसामग्रीत्वेनैव तादृशप्रत्यक्षादौ प्रतिबन्धकत्वं कल्प्यमिति तत्र बुभुत्साव्यक्तीनामुत्तेजकत्वकल्पने गौरवं स्यादित्यपि प्रत्युक्तम् । भिन्नविषयकप्रत्यक्षादिकं प्रति तत्तद्बुभुत्साविरहविशिष्टपरामर्शत्वेन विरोधित्वमपेक्ष्य निरुक्तपक्षताविशिष्टपरामर्शत्वपर्यवसितेनानुमितिसामग्रीत्वेन विरोधित्वकल्पनायामेव गौरवात् । यदपि सिद्धेरनुमित्यविरोधित्वे पर्वतो वन्हिव्याप्यवानित्यनुमितेः साक्षात्कारो न स्यात् तस्या एव भिन्नविषयकानुमितिसामग्रीत्वेन प्रत्यक्षविरोधित्वादिति । तदपि तुच्छम् । पर्वतो वन्हिमान् वन्हिव्याप्यवांश्चेत्याद्यनुमितेरिवोक्तानुमितेरप्यसाक्षात्कारेऽपीष्टापत्तौ क्षतिविरहादित्यास्तां विस्तरः ॥

इति श्रीजगदीशतर्कालङ्कारविरचिता
पक्षतासिद्धान्तटीका
समाप्ता ।
समाप्तः पक्षताग्रन्थः ।

